# श्रीमद्भागवतम्

## ॥ अष्टमस्कन्धः ॥

### प्रथमोऽध्यायः ।

ओं नमः श्रीकृष्णाय ।

राजोवाच ।

स्वायम्भुवस्येह (१)गुरो वंशोऽयं विस्तराच्छ्रुतः ।
* (यत्र धर्माश्च विविधाश्चातुर्वर्ण्याश्रिताश्शुभाः ।)
यत्र विश्वसृजां सर्गो मनूनन्यान्वदस्व नः ॥ १ ॥
(२)यत्र यत्र हरेर्जन्म कर्माणि च महीयसः ।
गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥ २ ॥
यद्यस्मिन्नन्तरे ब्रह्मन् ! भगवान्विश्वभावनः ।
कृतवान्कुरुते कर्ता ह्यतीते ऽनागतेऽद्य वा ॥ ३ ॥

ऋषिरुवाच ।

मनवोऽस्मिन् व्यतीताः षट् कल्पे स्वायम्भुवादयः ।
आद्यस्ते कथितो यत्र देवादीनाञ्च सम्भवः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

॥ श्रीगणेशाय नमः ॥

नमः श्रीमत्परमहंसास्वादितचरणकमलचिन्मकरन्दाय ।
भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥
अथाष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम् ।
तत्सुतेन्द्रर्षिदेवेन्द्रैर्मूर्तिभिश्च हरेः सह ॥ १ ॥
प्रतिमन्वन्तरं चैव मन्वाद्याः षट् पृथक् पृथक् ।
प्रवर्तयन्ति सद्धर्मान् पालयन्त्याचरन्ति च ॥ २ ॥

अतो [illegible] ॥ [illegible] ।
येन [illegible] ॥ ३ ॥
तत्र [illegible] ।
[illegible] ॥ ४ ॥
[illegible] ।
[illegible] तिमद् ॥ ५ ॥
[illegible] मन्वादीनां
[illegible] ॥ ६ ॥

* इत्यधिकः पठ्यते विरराघ० (१) गुरोर्वंशः इति पाठान्तरम् [illegible] मन्वन्तरे
[illegible] कर्माणि च महीयसः ॥ इति पाठः विज० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

महीयसो हरेः अत्र कश्चित्पाठान्तरमस्ति तदुपेक्षितमस्माभिः ॥ २ ॥

यस्मिन्नतीते यत्कृतवान् अस्मिन्ननागते यत्कर्त्ता करिष्यति अद्य वा वर्तमाने यत्कुरुते तद्वदेत्यन्वयः ॥ ३॥

अस्मिन् कल्पे षण्मनवो व्यतीताः ॥

श्रीमद्वीरराघवा[illegible] भागवतचन्द्रचन्द्रिका ।

॥ श्री[illegible] रामानुजाय नमः ॥

तृतीये "स्वायंभुवस्य च मनोर्वंशः परमसम्मतः" इति पृष्टं तद्वंशकथनं प्रक्रम्य तावत्तत्र तदुद्दुहितृर्देवहूत्या वंशः कथितः चतुर्थे त्वाकूतिदेवहूत्योस्तद्दुहित्रोर्देवहूतितदुहितृणां वंशमभिधाय स्वा[illegible]भुवपुत्रवंशमुपक्रम्य तावदुत्तानपादसंतातिं सावशेषामभिधायान्तरागामिग्रन्थायेन प्रसङ्गात् प्रियव्रतस्य वंशः पञ्चमे कथितः षष्ठे तु पुनः प्रसक्तानुप्रसक्तकथनानन्तरमुत्तानपाद एव वंशोऽवशिष्टः कथितः सप्तमे तु तदनुप्रसक्तमुक्तं तदेवं स्वायंभुवमनुवंशकथनव्याजेन बहुधा भगवतो जन्मकर्मगुणादिषु वर्णितेषु पुनस्तानेव शुश्रूषुस्तदन्यासादन्येष्वपि मनुवंशेषु कथ्यमानेषु हरेर्जन्मादिकथनमर्थात्प्रसक्तमेव भविष्यतीत्यालोच्य प्राधान्येनान्यान्मनून् सवंशान् पृच्छति राजा-स्वायंभुवस्येति त्रिभिः । तत्रोक्तमनुवदति पादत्रयेण. हे गुरो ! गुरोरिति पाठे गुरोस्त्वत्तः इह वृत्ते ग्रन्थे स्वायम्भुवस्य मनोर्वंशो विस्तरात्कृत्स्नः वंशं विशिनष्टि यत्र वंशे विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्रपौत्रादिरूपः सर्गः अथ नोऽस्मभ्यम् अन्यान्मनून्वदस्व सचरित्रान् सवंशान् कथयेत्यर्थः ॥ १ ॥

यत्रयत्र मन्वन्तरे महीयसः निरस्तसाम्यातिशयस्य हरेः जन्मानि अवतारकृपाणि कर्माणि चेष्टितानि च कवयो विद्वांसः गायन्ति तान्यपि चरित्राणि श्रद्दधतां श्रोतुं प्रवृत्तानां नः अस्माकं वद कथय ॥ २ ॥

हे ब्रह्मन् ! यस्मिन्मन्वन्तरे मनोरन्तरमवस्थानदशा तस्मिन् विश्वभावनः विश्वपालको भगवान् कृतवान् यस्मिन्नतीते यत् यस्मिन्ननागते[illegible] करिष्यति यस्मिन्नद्य वर्तमाने यत्करोति तद्वदेत्यन्वयः ॥[illegible] ॥

एवमापृष्टो मुनिराह-[illegible] अस्मिन् कल्पे स्वायम्भुवादयः षण्मनवो व्यतीताः[illegible] भुवः मनुः तत्र कथितः सचरित्रः यत्र देवादी[illegible] सम्भवश्च कथितः ॥ ४ ॥

श्रीमद्विज[illegible]जतीर्थकृतपदरत्नावली ।

[illegible]कृष्णाय नमः ॥

अस्तावि मुनिभि[illegible] तर्केन मनुना स्वायंभुव[illegible]पि यो—
येनारा[illegible] भिः ॥

येनामोचि गजाधिपः क्रकचवत्क्रूरैर्यदा नक्रामनात्—
क्षीराम्भोधिरमन्थि येन धृतभूः सोऽयं हरिः पातु नः ॥१॥
येनाधारि गिरिः पपे च विबुधैर्येनामृतं प्रेरितैः—
येनातापि सुरद्विषां च हृदयं शर्वोऽप्यमोहि स्त्रिया ॥
येनामायि जगत्त्रयं बलिरपि च बद्धियेनात्यदायि श्रुतिः—
धात्रे येन निहत्य मत्स्यवपुषा दैत्यं तमीडे हरिम् ॥२॥
सप्तमस्कन्धवाराशौ निमज्ज्योन्मज्ज्य शुद्धधीः।
अष्टमस्कन्धसद्व्याख्यामृतं पातुमुपक्रमे ॥ ३ ॥

अत्रापि हरिभक्तिरेव भगवन्मनःकर्षणनिपुणेति विधातुमनन्तोपनिषदर्थभूतस्य हरेर्जगद्रक्षणादिमाहात्म्यं निरूप्यते, तत्रापि विमलतरमुक्तमपनदुरितहरचरितामृतपानात्याचितप्राणो विस्मृताऽशनक्लेशः परीक्षित्शुकमच्युतकथानुवादपूर्वकाभिलषितात्यन्तश्रोतव्यकथां प्रार्थयते-राजेति। अन्यान् स्वायम्भुव्यतिरिक्तान् ॥१ ॥

तत्रापि तत्प्रसङ्गे विशेषकथापि वक्तव्येत्याह—यत्रेति। महीयसः महत्तमस्य हरेः ॥ २—३ ॥

अस्मिन्वैवस्वतान्तरे स्वायम्भुवप्रभृतिवैवस्वतान्ताः सप्त मनवो व्यतीतप्राया उच्यन्ते अत्र सप्तसु आद्यः कथित इत्यन्वयः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ श्री श्री राधाकृष्णाभ्यां नमः ॥

श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक ।
गोपाल रघुनाथाप्त व्रजजीवक पाहि माम् ॥
अथाष्टमस्कन्धस्य क्रमसन्दर्भः ॥
स्वामिपादेन यद्व्यक्तम् तद्व्यक्तम् चास्फुटम् क्वचित्
तत्र तत्रैव सिद्धेयः सन्दर्भः क्रमसंज्ञकः ॥
वैष्णवा परितोषः स्याद्यत्र यत्र ततस्ततः ।
लेख्यं वैष्णवसिद्धान्तं वाक्त्रियो नैव किञ्चन ॥ १—४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

॥ श्रीमद्गोवर्धनधराय नमः ॥

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥ १ ॥
गोपरामाजनप्राणप्रेयसेऽतिप्रभुष्णवे ।
तदीयप्रियदास्याय मां मदीयमहं ददे ॥ २ ॥
॥ श्रीगोकुलानन्द ! जय जय ॥
मन्वन्तरस्य सप्तमे इति सप्तमीरितम् ।
तस्य प्रवर्तकाः किन्तु मन्वाद्याः षट् पृथक् पृथक् ॥ ३ ॥
प्रतिमन्वन्तरं तस्माच्चतुर्विंशतिसंज्ञकैः ।
अध्यायैरष्टमस्कन्धे ते वर्ण्यन्ते यथोचितम् ॥ ४ ॥

आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ।
धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ॥ ५ ॥
कृतं पुरा भगवतः कपिलस्याऽनुवर्णितम् ।
आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह ! ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अध्यायेनोक्तमेकेन मन्वन्तरचतुष्टयम् ।
त्रिभिर्गजेन्द्रोपाख्यानमथोक्तः पञ्चमो मनुः ॥ ५ ॥
षष्ठश्चाग्रांबुधेर्मन्थश्चामृताख्यानमष्टभिः ।
एकेन सप्तमादीनां मनूनामनुकीर्तनम् ॥ ६ ॥
एकेन तेषां कर्माणि नवभिर्वामनेहितम् ।
मत्स्यावतार एकेनेत्येवं स्कन्धोऽष्टमो मतः ॥ ७ ॥
अथात्र प्रथमे स्वायम्भुवस्तोत्रं प्रकीर्त्यते ।
मन्वन्तरीयमन्वादिषट्कानाञ्च चतुष्टयम् ॥ ८ ॥

तदेवं चतुर्थादिस्कन्धेषु स्वायम्भुवमनुवंशकथाप्रासङ्गिकमरीच्यादिवंश्यप्रह्लादाद्युपाख्यानाऽमृतपानप्रमुदितो राजा सर्वमन्वादिकथां जिज्ञासमानः पृच्छति—स्वायम्भुवस्येति ॥ १ ॥

महीयसो हरेः ॥ २ ॥

यदिति तद्वदेत्यध्याहृतेनान्वयः । अन्तरे मन्वन्तरे अद्य वर्त्तमाने ॥ ३ ॥

तेषु मध्ये आद्यः स्वायम्भुवः ॥ ४ ॥

——

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीमते मङ्गलमूर्तये भगवन्निम्बार्काय नमः ।
सर्वेश्वरं नमस्कृत्य गुरुं तद्भक्तिदं प्रभुम् ।
निम्बार्कं देशिकं नत्वा प्रदीपोऽयं विरच्यते ॥
अष्टमे यत्र सद्धर्मलक्षणां वर्ण्यते क्रमात् ।
मन्वन्तरं हि मन्वादिरचितं भुक्तिमुक्तिदम् ॥

तृतीयादिषु स्कन्धेषु स्वायम्भुवमनुदुहितृदौहित्रपुत्रपौत्रादिसर्गो वर्णितस्य भगवदवतारानां तद्दासानां च परमाद्भुतचरितामृतस्य पानेन प्रमुदितो राजर्षिः सर्वमन्वन्तरगतभगवदवतारतद्दासादिचेष्टितं जिज्ञासुः पृच्छति—स्वायंभुवस्येति, त्रिभिः । हे गुरो ! स्वायम्भुवस्य वंशः यत्र विश्वसृजां मरीच्यादीनां सर्गः पुत्रादिसृष्टिः सोऽयं विस्तराच्छ्रुतः अधुना तोऽस्मश्यमन्यान् मनून् वद ॥ १ ॥

यत्र यत्र यस्मिन् यस्मिन् मन्वन्तरे महीयसो हरेः ॥ २ ॥

हे ब्रह्मन् ! विश्वभावनः सर्वहेतुः अन्तरे मन्वन्तरे यस्मिन् अतीते यत्कृतवान् यस्मिन् अनागते यत्कर्ता करिष्यति अथवा वर्तमाने यत्कुरुते तत्तद्वदेति पदयोजना ॥ ३ ॥

अस्मिन् श्वेतवाराहाख्ये षण्मनवो व्यतीताः यन्मध्ये आद्यः स्वायम्भुवः ते तुभ्यं कथितस्तृतीये स्कन्धे । चतुर्थस्कन्धोपक्रमे च ॥ ४ ॥

——

भाषा टीका ।

श्रीश्रीरुक्मिणीरमणो जयति ।

नत्वा भागवताचार्यौ रुक्मिणीशपदाम्बुजे ॥
शुकशास्त्राष्टमस्कन्ध-भाषाटीकां तनोति हि ॥ १ ॥

राजोवाच ॥

परीक्षित महाराज बोले, कि हे श्रीशुकदेवजी महाराज ! पूर्वकथा में आपके मुखारविन्द से मैंने यह स्वायंभुव मनुका वंश बड़े विस्तार से सुना, कि-जिसमें मरीच्यादि प्रजापतियों का मनुकन्याओं में पुत्र पौत्रादि रूप सर्ग हुआ है अब आप अन्य मनुओं के चरित्र को कहिये ॥ १ ॥

जिन जिन मन्वन्तरो में अति महान् श्रीहरि के जो जो जन्म और कर्म है और जिनको ज्ञानी लोग गान करते हैं, हे ब्रह्मन् ! श्रवण की इच्छा वाले ऐसे हम लोगों के आगे आप उनका वर्णन कीजिये ॥ २ ॥

हे ब्रह्मन् ! विश्व के पालन करने वाले भगवान् जिन २ भूतभविष्यत् मन्वन्तरों में जो कुछ कि[illegible] करते हैं [illegible] करेंगे सो भी आप वर्णन करिये ॥ ३ ॥

ऋषिरुवाच ॥

श्रीशुकदेवजी बोले कि -हे [illegible] स्वायंभुवादिक छै मनु [illegible] स्वायंभूमनु का चरित्र [illegible] इत्यादिकों की उत्पत्ति है ॥ ४ ॥

——

[illegible]कृतभाष[illegible] ।

[illegible] कपिल[illegible] गतः प्राप्तः

विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ।
विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥
सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ।
तप्यमानस्तपो घोरमिदमन्वाह भारत ! ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

घोरं दुष्करं तपस्तप्यमानः समाधावनुभूतमिदं वक्ष्यमाणं नद्रितोच्छ्वसितवद्विस्मित इवोपदिशन्निवानुवदन्निव चाष्टभिः श्लोकैरन्वाह ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य स्वायम्भुवस्य मनोर्दुहित्रोराकूत्यां देवहूत्यां च भगवान्महेश्वरः सर्वेश्वरो मूर्तिभ्यां कपिलयज्ञरूपाभ्यां मूर्तिभ्यां पुत्रत्वं प्राप्तः ॥ ५ ॥

तत्र भगवतः कपिलस्य तृतीयस्कन्धे इति शेषः अनुवर्णितं चरित्रं त्वया हे भरतर्षभ ! श्रुतमेव अधुना यज्ञाख्यो भगवान्यच्चकार तच्चेष्टितं हे कुरूद्वह ! आख्यास्ये कथयिष्यामि यद्यपि मन्वन्तरान्तरकथनमेव प्रतिज्ञातव्यं तेषामेव प्राधान्येन पृष्टत्वात् तथापि भावज्ञो मुनिः भगवद्गुणकर्मजन्मादिशुश्रूषयैवापृष्टमित्यालोच्याद्य मन्वन्तरस्थस्य यज्ञाख्यस्य भगवतश्चरित्रस्याकथितत्वात्तदेव कथयितुं प्रतिजानीते अर्थात्तत्कथनेन मन्वन्तरकथनमपि प्रसक्तमेव भविष्यतीति मुनेरभिप्रायः ॥ ६ ॥

तत्र यज्ञस्य भगवतः चरित्रं विवक्षुस्तदुपोद्घातेन स्वायंभुवस्य मनोर्वृत्तान्तमाह-विरक्त इत्यादिना । यद्यपि कपिलोपि तन्मन्वन्तरावताररूप एव तथापि तस्य जगत्पालनानधिकृतत्वात्केवलं ज्ञानयोगप्रवर्तनाधिकृतत्वात्तच्चरित्रस्य कथितत्वप्रदर्शनाय यज्ञो यच्चकार तदाख्यास्य इत्युक्तं शतरूपायाः पतिः भर्ता विभुः स्वायम्भुवो मनुः काम्यन्त इति कामाः शब्दादयो विषयास्तेषां भोगेषु विरक्तः राज्यं विसृज्य तपसे तपःकर्तुं सभार्यो वनं आविशत् ॥ ७ ॥

सुनन्दायां सुनन्दातीरे पदैकेनैव भुवं स्पृशन् वर्षशतं घोरं दुष्करं तपस्तप्यमानः कुर्वाणो हे भारत । इदं वक्ष्यमाणमन्वाह जजाप ॥ ८ ॥

---

### श्रीमद्वि[illegible]ध्वजतीर्थकृतपदरत्नावली ।

अत्रापि शतरूपा[illegible]ालनादिविषयमनुवदितुं यज्ञमूर्तिचरितं वक्तुमाह—आकूत्यामिति ॥ ५ ॥

कपिलस्य पुरे[illegible] [illegible]रा तृतीयस्कन्धे ॥ ६-७ ॥

सुनन्दायां त्रिधा भिन्नायां विष्णुप्रियां एतस्याम् अन्वाहस्तुतिरूपामुपनिषदमाह ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आकूत्यामिति कयोः तत्राह—दुहित्रोरिति ॥ ५—८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दुहित्रोः कयोरित्यपेक्षायामाह—आकूत्यां देवहूत्याञ्च ॥ ५-७ ॥
अन्वाह जजाप ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य मनोः आकूत्यां देवहूत्यां चेति दुहित्रोः कपिलयज्ञमूर्तिभ्यां पुत्रतां भगवान् गतः ॥ ५ ॥

भगवतः कपिलस्य कृतं कर्म वर्णितं मयेति शेषः हे कुरूद्वह ! यज्ञो यच्चकार तदाऽऽख्यास्ये अस्मिन्नध्याये कथयिष्यामि ॥ ६ ॥

यद्यपि स्वायम्भुवस्य चरितं वर्णितं तथापि तन्मन्वन्तरेऽन्येभ्यो मन्वतरेभ्यः किञ्चिद्विशेषं दर्शयिष्यन् तद्गुणविशेषानाह—विरक्त इत्यादिना ॥ ७ ॥

सुनन्दायां तत्तीरे इदमष्टभिः श्लोकैर्वक्ष्यमाणमन्वाह जजाप ॥ ८ ॥

---

### भाषा टीका ।

जिन स्वायंभुवमनु की आकृति और देवहूति नामक कन्याओं में धर्म और ज्ञान के उपदेश के लिये साक्षात् भगवान् यज्ञ और कपिल रूप से पुत्र होकर प्रकट हुए ॥५॥
प्रथम हमने भगवान श्रीकपिल देव का चरित तुम्हारे आगे वर्णन किया, हे कुरूद्वह ! अब यज्ञ भगवान् ने चरित किया, उसका आख्यान ( वर्णन ) करेंगे ॥ ६ ॥

मनुरुवाच ।

* येन चेतयते विश्वं विश्वं चेतयते न यम् ।
यो जागर्त्ति शयाने ऽस्मिन्नायं तं वेद वेद सः ॥ ९ ॥
आत्मावास्यमिदं (१) विश्वं (२) यत्किञ्चिज्जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधःकस्यस्विद्धनम् ॥ १० ॥
यन्न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति ।
तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥
(३) न यस्याद्यन्तौ मध्यश्च स्वः परो नान्तरं बहिः ।
विश्वस्यामूनि यद्यस्माद्विश्वश्च तदृतं महत् ॥ १२ ॥
स विश्वकायः पुरुहूत ईशः (४) सत्यः स्वयञ्ज्योतिरजः पुराणः ।
धत्ते ऽस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥
अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे ।
ईहमानो हि पुरुषः प्रायो ऽनीहां प्रपद्यते ॥ १४ ॥
ईहते भगवानीशो न हि तत्र विषज्जते ।
आत्मलाभेन पूर्णार्थो नावसीदन्ति ये ऽनु तम् ॥ १५ ॥
तमीहमानं निरहङ्कृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ।
(५) नॄन् शिक्षयन्तं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्म्मभावनम् ॥ १६ ॥

---

भाषाटीका ।

परम समर्थ शतरूपापति स्वायंभुव मनु काम भोगों से विरक्त होकर राज्य को छोडकर भार्या सहित तपके अर्थ वन में प्रवेश करते हुए ॥ ७ ॥

हे भारत ! वन में जाकर सुनंदा गंगा के तीर पर सौ वर्ष तक एक पग से पृथिवी पर खडे होकर घोर तप तपते हुए इस प्रकार कथन करने लगे ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

येन चिदात्मना विश्वं चेतयते चेतनीभवति विश्वं तु यं न चेतयते न चेतनीकरोति स्वत एव चिद्रूपत्वात् तत्र हेतुः अस्मिन् शयाने स्वपिति यो जागर्ति साक्षितया वर्तते अहो चित्रं नायं जनस्तं वेद स तु इमं वेद ॥ ९ ॥

तस्यैश्वरत्वं दर्शयन् लोकस्य हितमुपदिशति–आत्मना ईश्वरेणावास्यं सत्ताचैतन्याभ्यां संव्याप्तं विश्वं॰ सर्वं जगत्यां लोके यत्किञ्चिज्जगद्भूतजातमतस्तेनैवेश्वरेण यत्किञ्चित्त्यक्तं दत्तं धनं तेनैव भुञ्जीथाः भोगान् भुङ्क्ष्व यद्वा तेन हेतुना त्यक्तेनेश्वरार्पणेन भुञ्जीथा न स्वार्थं कस्य स्वित्कस्यचिदपि धनं मा गृधो माभिकाङ्क्षीः यद्वा कस्यस्विदिति कस्यान्यस्य धनमस्ति यतो धनाकाङ्क्षा क्रियेतेत्यर्थः।तथाच श्रुतिः "ईशावास्यम्" इति यथाश्लोकमेव ॥ १० ॥

ननु, यदि सर्वं व्याप्नोति तर्हि चक्षुरादिभिः किं न प्रतीयते तत्राऽऽह—यम्पश्यन्तं जनश्चक्षुर्वा न पश्यति चक्षुराद्यविषयत्वात् न हि प्रमातारं प्रमाणं विषयीकरोति [illegible] श्रुतिः "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्"इत्यादि [illegible] देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिवेश्वरः [illegible] तद्विषयं ज्ञानं नश्येत्तत्राऽऽह–यस्य तु पश्यतश्च [illegible] विषय [illegible] नश्यति नत्तदाकारेणोत्पन्नाया वृत्तेरेव [illegible] ज्ञानस्य न हि सवितृप्रकाशः प्रकाश्यनाशे न [illegible] भूतानि निलयो यस्य तं सर्वान्तर्यामिणं तथा [illegible] सुपर्णमसङ्गमुपधावत भजध्वम् ॥ ११ ॥

तस्य स्वरूपस्य नित्यत्वमेवो [illegible] न यस्येति । अमून्याद्यन्तादीनि विश्वस्य यस्माद्भवन्ति [illegible] यदुपमत एवाव्यभिचारित्वात्सत्यं महत्परि [illegible] १२ ॥

---

* वासुदेवो वसत्येष सर्वदेहेष्वनन्यदृक् ।येनायं तपते विश्वं निश्ववीर्यं यतस्तपः ॥ इति पाठान्तर [illegible] सर्वमि [illegible] पाठः वीर० (२)यज्जगत्यां जगन्मनः इति विज० ॥ (३) न यस्याद्यन्तमध्यानीति पाठः वीर० ॥ (४) सर्वस्य गोप्ता [illegible] पाठः वीर० (५) स्वानिति पाठः वीर० तच्छिक्षयन्तं [illegible]

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, विश्वं चेत्तद्रूपं तर्हि तस्य कुतो जन्माद्यभावः स्वप्रकाशत्वं वा कथं वा जगज्जन्मादिकर्तृत्वेन विकारिणः सत्यत्वं पूर्णत्वं च ? तत्राऽऽह—स ईशोऽजः सत्यश्च स्वप्रकाशश्च पुराणश्च निर्विकारो विश्व कायो यस्य पुराणि हूतानि नामानि यस्य तथाविधोऽपि यतोऽस्य विश्वस्य जन्मादि स्वशक्त्या मायया धत्ते तां च नित्यसिद्धया विद्ययोदस्य हित्वा निष्क्रिय एवाऽऽस्ते ॥ १३ ॥

यस्मादेवमीश्वरः कर्म कृत्वा सन्त्यज्य नैष्कर्म्येणाऽऽस्ते अथातोऽन्ये ऋषयोऽप्यग्रे आदौ कर्माणि कुर्वन्ति किमर्थमकर्मेहतवे मोक्षार्थम्पाठान्तरे कर्मनाशाय हि यस्मात् ॥ १४ ॥

नन्वीहमानः कर्मभिरवगुण्ठितः कोशकार इव बध्येतैव तत्राऽऽह, ईहत इति । अनस्तमनुवर्त्तमाना ये ते नाऽऽत्मीदृग्ति न विषज्जन्ते ॥ १५ ॥

तदेवं लोकाऽनुग्रहाय विश्वसृष्ट्यादि यः करोति श्रीरामकृष्णाद्यवतारैश्च वेदोक्तमप्याचरति तं शरणं प्रजामीत्याह—तमिति । निजं वर्त्म नरावताराऽनुरूपं मार्गमनुप्रसरयत्कथितमत ईहमानं कर्माचरन्तम् तथाहि जीवन्तेलक्षणमाह—निरहङ्कृतं निराशिषमनन्यधोदिर्नामिति च निरहङ्कारत्वे हेतुः बुधं निराशीष्ट्वे हेतुः पूर्णम् अनन्यनियुक्तत्वेहेतुः प्रभुं तथाऽपि कर्माऽनुष्ठाने हेतुः नृन्स्वाचारेण शिक्षयन्तं तत्किमर्थं तत्राऽऽह—अखिलान् धर्मान्भावयति प्रवर्तयतीति तथा तम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तज्ञपिता मन्त्रोपनिषदोवाह—येनेति । विश्वं जगद्येन परमात्मना चेतयते प्रवृत्तिक्षमं भवति सत्तादिमतिप्रवृत्तिमद्भवतीत्यर्थः । यं परमात्मानं विश्वं कर्तृ न चेतयते तत्राभयत्र हेतुमाह—य इति । अस्मिंल्लोके शयाने सति स्वात्मपरमात्मयाथात्म्यज्ञानाभावेन मायापारवश्येन देहात्मभ्रमादिना च शयानतुल्ये सति यो जागर्ति सर्वं युगपत्साक्षात्करोति अयं लोकस्तं परमात्मानं न वेद सतु परमात्मा [illegible] वेद अत्र विश्वशब्दो जीववर्गपरः अचेतनवर्गस्य परमात्मना [illegible] चेतनीकर्तुमशक्यत्वात्तस्य ज्ञातृत्वप्रसक्त्यभावेन [illegible] वेदेति [illegible] यथा अचेतनं न वेद तद्वत् चेतनोऽपि न तं वेद वेत्ति [illegible] चिदचिदात्मकजगत्परो वा चेतयते इत्यत्र "चितीसंज्ञाने" इति . यद्यन्तस्मिञ्च [illegible] कर्णात्मनेपदं तत्र [illegible] शब्दादिविषयसाक्षात्कारात्मकं ज्ञानं प्रकृत्यर्थः तदाश्रयो जीववर्गस्तत्र कर्ता तदनुकूलव्यापारोऽन्तःप्रविश्य नियमनादिरूपो ण्यन्तार्थः तत्र कर्ता येनेति निर्दिष्टः परमात्मा [illegible] च यदेतत्सर्वशब्दादिविषयसाक्षात्कारात्मकं ज्ञानं तदनुकूलम् [illegible] अन्तःप्रविश्य नियन्तुः परमात्मन अधीनमिति फलितार्थः । [illegible] प्रवृत्तिस्तदधीनेत्युक्तम् अन्तःप्र[illegible] नियन्तृस्वरूपप्रयोजककर्तृत्वकथनेनैव जीववर्गस्य तत्प्रति [illegible] त्वप्रतीत्या शरीरस्य आत्मायत्तसत्तास्थितित्ववत् [illegible] कृत्स्नं तत्स्वाधीनसत्तास्थितिप्रवृत्तिमदित्युक्तं भवति यतो यदधीनसत्तादिमज्जगदत एव यं न चेतयते, ननु, स्वात्मायत्तसत्तादिमन्तं करोतीति विश्वं चेतयते न यं इत्यस्यार्थः परमात्मनश्चेतयितृत्वं विश्वस्य तदभावं च नित्यं प्रकृत्यपारवश्येन युगपत्सर्वसाक्षात्कर्तृत्वं हेतुतयोच्यते यो जागर्ति शयानेऽस्मिंल्लोके यतो जागर्ति अत एव तं न शयानो वेद किन्तु जाग्रत्स एव तद्विश्वं वेदेत्यर्थः । येन चेतयत इति । श्लोकस्य स्थाने क्वचित् पुस्तकेषु—

> *वासुदेवो वसत्येष सर्वदेहेष्वनन्यदृक् ।
> येनायं तपते विश्वं विश्ववीर्यं यतस्तपः ॥

इति श्लोकः पठ्यते तत्रायमर्थः अनन्यदृगन्यानपेक्षः युगपत्सर्वसाक्षात्कर्ता सर्वेषु चिदचिदात्मकेषु देहेषु वसति यतस्तत एव वासुदेवः वासुदेवशब्दप्रवृत्तिनिमित्ताभयत्रानन्यदृगित्यनेन देवशब्दार्थः उक्तः । अन्यानपेक्षस्वतेजसा दीप्यमानत्वं हि देवशब्दार्थः वसत्येष सर्वदेहेष्वित्यनेन वासुशब्दार्थ उक्तः इदमधिकरणव्युत्पत्तेरप्युपलक्षणं वसतीति वासुः वसत्यस्मिन्निति वासुरिति द्वेधा व्युत्पत्तेस्तत्रतत्र प्रदर्शितत्वात् अनन्यदृशं विशिनष्टि—येनान्यदर्शनेनायं वासुदेवो विश्वं स तपते पर्यालोचयति विश्वस्य सृष्टिस्थित्यादिकमालोचयतीत्यर्थः । यत एवंभूतमनन्यदर्शनं ततस्तपः विश्वपर्यालोचनात्मकत्वमापन्नम् अनन्यदर्शनं विश्ववीर्यं कृत्स्नस्य चिदचिदात्मकविश्वस्य कारणभूतमिति येन चेतयत इत्यनेनान्तःप्रविश्य नियन्तृत्वरूपं प्रयोजयितृत्वं सूचितम् ॥ ९ ॥

तदेव व्यञ्जयन् लोकं शिक्षयमाणम् "ईशावास्यमिदं सर्वम्" इति मन्त्रमेव श्लोकरूपेण दर्शयति—आत्मेति । ईशशब्दस्थाने आत्मशब्दपाठ एव विशेषः जगत्यां यज्जगत् चेतनाचेतनात्मकं सर्वमिदं वस्तु आत्मना परमात्मनाऽन्तःप्रविश्य नियमनपूर्वकं भर्त्रा आवास्यम् अधिष्ठेयं यतः सर्वमात्मावास्यमतस्तेन परमात्मना त्यक्तेनाऽधिष्ठितेऽब्रह्मात्मके स्वतन्त्रे वस्तुनि न भुञ्जीथाः नानुभवेः अब्रह्मात्मकं स्वतन्त्रं वस्तु न मन्यस्वेत्यर्थः । कर्मणा एवानुभोगविषयत्वविवक्षया त्यक्त इति सप्तमी प्रयुक्ता मागृधः तच्छेषभूतं सर्वं देहतदनुबन्ध्यादिकं स्वात्मशेषत्वेन माकाङ्क्षीरित्यर्थः कृत्स्नस्य तच्छेषत्वमेव काक्वा दर्शयति—कस्यस्विद्धनमिति । कृत्स्नमात्मात्मीयादिकं कस्यस्विद्धनं न कस्याऽपि स्वं किन्तु तस्यैव तनिगावः ॥ १० ॥

यो जागर्तीति सर्वसाक्षात्कर्तृत्वं सूचितम् तदेवव्यञ्जयन् तमेव भजनीयं भजत हे लोकाः ! इत्याह—यमिति । यस्य चक्षुर्ज्ञानं न रिष्यति न क्षयमेष्यति जीवस्येव न सङ्कोचं यास्यतीत्यर्थः । अत एव नित्यमसङ्कुचितापरिच्छिन्नज्ञानेन युगपत्सर्वं पश्यन्तं साक्षात्कुर्वन्तं यं न पश्यति कर्मणा सङ्कुचितज्ञानो लोकः न साक्षात्करोति तं सर्वेष्टप्रापणाऽनिष्टनिवर्तनक्षमं देवं स्वतेजसा दीप्यमानं भूतानां निवसमाभवं धारकमिति यावत् सुपर्णं "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति सुपर्णत्वेन रूपितम् अनेन जीवविभाभावेन तदन्तरात्मतया तद्धितकारितयाचाऽवस्थितमिति लभ्यते उपधावत भजत इति ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेन त्यक्तेन भुञ्जीथा इति सर्वस्य तदात्मकत्वेन तद्व्यतिरिक्तं स्वनिष्ठं वस्तु नास्तीत्युक्तम् अथ सर्वस्य तत्कारणकत्वाच्च तद्रूपमित्याह—नेति । तस्य सर्वकारणत्वं यदुक्तं तस्यापि कारणान्तरशङ्कां व्युदस्यति—न यस्याद्यन्तौ मध्यञ्चेति । कार्यमेव वस्तुत्वाद्यन्तादिमध्यवत्स्वयमाद्यादि विरहात्सर्वकारणमित्यर्थः । कारणत्वञ्च निमित्तत्वरूपमुपादानत्वरूपं चोभयमप्यभिप्रेतं तत्र निमित्तत्वप्रयुक्तं वैषम्यं परिहरति—स्वः परश्च यस्य नास्तीति देवमनुष्यादिवैचित्र्यस्य तत्तज्जीवकर्ममूलकत्वात्तस्याऽनुग्राह्यो निग्राह्यश्च कोऽपि नास्तीति भावः । "अनेन जीवेनात्मनानुप्रविश्य" इत्यादिश्रुत्यवगतं सृष्टेरनुप्रवेशपूर्वकत्वं सूचयन् जीवानुप्रवेशयोग्यतामाह—यस्य नान्तरं बहिरिति तेषु तैजसस्येव व्योम्नोऽपि नाव्याप्तिः किन्तु बहिरन्तः साधारणेन यस्य जीवादिषु व्याप्तिरित्यर्थः । यस्मादेवंभूतात्परमात्मनः विश्वस्याऽमूनि आद्यन्तमध्यानि सृष्टिलयरक्षणानि भवन्ति तस्मादिति इत्यर्थः । यतो हेतुभूतादुपादानात् विश्वस्यादि लयः यतो यस्मिन् हेतुभूतेऽधिकरणे विश्वस्य यत्र यता येन हेतुभूतेन कर्त्रा विश्वस्य रक्षणं भवतीत्यर्थः । यत् यत एवं विश्वोपादानभूतं तस्माद्विश्वमपि तदेव तदन्यदेव जगदाकारेण परिणतः सं स्वाऽवतिष्ठत इति ततोऽनन्य देव जगदित्यर्थः उपादानत्वप्रयुक्तविकारित्वं परिहरति—ऋतमिति । ऋतं सत्यं स्वरूपतः स्वभावतश्च विकाररहितमित्यर्थः । विकाराणां स्वशरीरभूतचिदचिद्गतत्वात्स्वतो निर्विकारमेव कारणत्वोपयुक्तसर्वज्ञत्वसर्वशक्तित्वादिगुणयोगमाह—महदिति । गुणैर्महान्निरतिशयबृहदित्यर्थः ॥ १२ ॥

श्लोकचतुष्टयप्रतिपादितविशेषणसामर्थ्यलब्धगुणविशेषैः संयुक्तं विशिनष्टि—स इति । सः श्लोकचतुष्टयगतयच्छब्दैर्निर्दिष्टस्य प्रतिनिर्देशपरः तच्छब्दः विश्वं कायः शरीरं यस्य विश्वकायः अत एव पुरुभिर्देवमनुष्यादिनामभिः शरीरवाचिभिरात्मपर्यन्तबोधकैः शब्दैर्हूयते ऽभिधीयते इति पुरुहूतः सत्यः निर्विकारः विश्वकायोऽपि विश्वगतविकारैरस्पृष्ट इत्यर्थः । ईशः सर्वान्तःस्थचेतनाचेतनयोर्नियन्ता स्वयंज्योतिः स्वप्रकाशः अनन्यापेक्षप्रकाश इत्यर्थः । अजः जीववत्कर्मायत्तोत्पत्तिरहितः पुराणः जगत्कारणभूतः पुराणि नवो वा अस्य विश्वस्य जन्मादिकमात्मनः स्वस्य शक्त्या अंशभूतया अजया प्रकृत्या करोति तां च अजां विद्यया नित्याविर्भूतापरिच्छिन्नस्वयाथात्म्यविषयकज्ञानेनोदस्य परिहृत्य तदपरवशीभूत्वा निरीहः जीववदीहारहितः स्वानन्दानुभवपूर्त्या अवाप्तसमस्तकामोऽनावृतकामः "सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति श्रुतेः, आस्ते सर्वान्तरात्मतयावतिष्ठतीत्यर्थः ॥ १३ ॥

निरीह आस्त इत्येतदेव व्यञ्जयितुं तावज्जीवस्य तदभावमाह—अथेति । अथ तस्याग्रे प्रथममृषयो जीवा इष्टत्वात्कर्मईहते कर्मकर्तुर्यस्य तस्मै कर्मसाध्यसुखरूपफलार्थं कर्माणीहन्ते फलसाधनतया कुर्वन्तीत्यर्थः । अनेन जीवस्यापरिपूर्णत्वं [illegible] कर्मानुसारिबुद्ध्यायत्तप्रवृत्तिमज्जीवप्रेरयितृत्वाच्च [illegible] प्रथमं जीवस्यैव प्रवृत्तेरग्रे ऋषयः कर्माणीहन्ते इत्युक्तम् एवमीहमानोऽपि पुरुषो जीवः प्रायशोऽनीहां प्रपद्यते स्वविहितकर्मसाध्ये फले निस्पृहां प्रायः प्रपद्यते सुखार्थतया कृतैः कर्मभिः दुःखप्राप्तौ तत्र निस्पृहामेव प्रायशः प्रतिपद्यत इत्यर्थः । सुखार्थतया विहितानां कर्मणां प्रायशो दुःखजनकत्वदर्शनात् "प्रायोऽनीहां प्रपद्यते" इत्युक्तम् ॥ १४ ॥

भगवान् षाड्गुण्यपरिपूर्णः ईशः परमात्मा तु ईहते जीवकर्मानुगुणमन्तरात्मतया यद्यपि प्रेरयति तथापि न हि तत्र विषज्जते स्वप्रेर्यजीवकर्मसाध्ये फले रक्तो न भवति तत्र हेतुं वदन् तं विशिनष्टि, आत्मलाभेन नित्यं स्वानन्दानुभवलाभेनैव पूर्णः समग्रः अर्थः पुरुषार्थो यस्य तादृशः अतो न विषज्जत इत्यर्थः । न केवलं स एव न विषज्जतेऽपितु तमनु ये तमनुवर्त्तमाना ये जनास्तेपि तावत्संदन्ति कर्मफलेषु सक्ता न खिद्यन्ति परमात्मन आत्मलाभपरिपूर्णार्थत्वेन कामानासक्तोक्त्या जीवस्यापूर्णत्वमेव सेहने हेतुरित्युक्तं भवति ईहमानोऽप्यनीहां प्रपद्यत इत्यनेन जीवस्य सुखे स्पृहा दुःखे तु निस्पृहेत्युक्तम् ॥ १५ ॥

उक्तविशेषणसामर्थ्यलब्धगुणविशेषैर्विशिंषन् शरणं व्रजतितमिति । तम् उक्तविधम् ईहमानं जीवकर्मानुगुणं प्रेरयन्तं निरहङ्कृतम् अहङ्काररहितं बुधं सर्वज्ञं निराशिषं निरीहं पूर्णात्मलाभेनैव पूर्णम् अनन्यचोदितमनन्यप्रेर्यं स्वान् स्वानुवर्तिनो भक्तजनान् शिक्षयन्तं स्वसमानानापादयन्तं निजवर्त्मसंस्थितं स्वस्वभावे स्थितं प्रभुं सर्वशक्तिम् अखिलान् धर्मान् भावयति पालयतीति तमहं प्रपद्ये शरणं व्रजामि ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कीदृशीत्यतोऽनन्तनामुपलक्षयति—*येनेति । अयमादित्यो येन हरिणा प्रेरितो विश्वं तपते प्रकाशयति विश्वस्य वीर्यं वीर्यप्रदं तपो यतो भवति अस्मिन् सूर्ये शयाने निद्रामाचरति सति यो हरिर्जागर्ति अयं सूर्यस्तं हरिं न वेद स हरिस्तमादित्यं वेदेत्यन्वयः "भयात्तपति सूर्यः" "भीषोदेति सूर्यः" इति श्रुतेः यो न वेद इति वेदेति च अनेन "आप्राद्यावापृथिवी अन्तरिक्षम्" इत्यादि श्रुतिप्रतीतसर्वाधिपत्यादित्यस्य श्रीहर्यधीनत्ववर्णनेन निरतिशयमाहात्म्यं युक्तं हरेरिति ज्ञायते अयं जीवो [illegible] नियतो विश्वं सुखदुःखादिकं तपते अनु [illegible] इति धातुः आलोचनं ज्ञानं स एवानु [illegible] नान्यो अभिचाकशीति" इति श्रुतेः । हरि [illegible] ? कुत इति तत्राह विश्ववीर्यमिति । विश्वस्य [illegible] यस्माद्भवति "एष ह्येवानन्दयाति" इति [illegible] सुखयति जीवमिति शेषः तस्मादित्यर्थः [illegible] सति "सत्सोम्य" इति श्रुतेः यो [illegible] नैव च स्वप्नं तुर्यं पश्यन्ति निश्चिताः" इति [illegible] स्वपित्याचक्षत" [illegible] वाक् [illegible] ः ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वा गच्छति न मनो "न विद्म, न विजानीम" इति श्रुतेः स हरिः सर्वं वेद, "यः सर्वज्ञः" इति श्रुतेः इति वा ॥ ९ ॥

न राजादिवत्सूर्यप्रेरकत्वं हरेः किन्तु तदन्तःस्थितत्वेनापीत्यभिप्रेत्याह—आत्मेति । इदं सूर्यादि विश्वं आत्मन ईशस्यावास्यम् आवासयोग्यं स्वसृष्टत्वात् इदमित्यनेन कियत्कवलीक्रियत इति तत्राह—यज्जगत्यामिति । जगत्यां प्रकृतौ यज्जगत्स्थावरजंगमलक्षणं प्रकृतावित्युक्तोत्पन्नमनुत्पन्नं च यत्सर्वं स्वव्यतिरिक्तं कवलीक्रियते प्रकृतिरावासयोग्येति कैमुत्यन्यायेन सिद्धा "प्रकृतिं पुरुषं च" इति वचनाच्च प्रकृत्यावासयोग्यत्वं ततः किं तत्राह—तेन इति हे मनः यत इदमीशस्य विद्यमानं तेन कारणेन तेनेशेन त्यक्तेन दत्तेन धनेन भुञ्जीथाः स्वीकुरु शरीरयात्रामिति शेषः । यतस्त्वं तदधीनसत्ताकः अत एवं न कुर्वित्याह—मागृध इति । कस्यपरमानन्दरूपस्य हरेश्चिदानन्दस्वरूपज्ञानलक्षणं धनं मागृधः तेनैकमाप्नुयामीत्याकाङ्क्षां न कुर्वतोऽनर्थहेतुत्वादित्यर्थः भगवता दत्तं (१) कस्यचिद्धनं मदीयमिति श्रद्धां न कुर्विति वा "ईशावास्यम्" इति श्रुतिः ॥ १० ॥

ननु, किमस्य लक्षणं येन तत्सद्भावेनेदं तदावास्यं स्यादिति तत्राह—यदिति । स्वप्रसादमन्तरेणाज्ञेयत्वं सर्वज्ञत्वं नित्याविलुप्तचक्षुष्ट्वं च तस्यैव लक्षणं मुख्यं "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठां विन्दते" "यच्चक्षुर्न पश्यति येन चक्षूंषि पश्यति" इति श्रुतेः । न रिष्यति न नश्यति सुपर्णं पूर्णानन्दम् उपधावत भजत ॥ ११ ॥

लक्षणान्तरमाह—यस्येति । पर इत्युपलक्षणं अपरोऽपि परोऽपि च अत्र परापरवस्तुनोः स्वातन्त्र्यं निषिध्यते न तु शून्यत्वं तदृतं महद् ब्रह्मेत्यर्थः । "तदेवर्तं तदु सत्यमाहुः" इति श्रुतिः ॥ १२ ॥

इदं च ब्रह्मलक्षणमित्याह—सविश्वेति । आत्मशक्त्या आत्ममायया प्रकृत्यास्य जगतां जन्मादि धत्ते यश्च तां प्रकृतिं विद्ययोदस्य निरस्य निरीहः सृष्ट्यादिशून्य आस्ते स ब्रह्मनामा परमात्मेत्यन्वयः प्रलये विश्वकायः उदरान्तर्गतप्रपञ्च इत्यर्थः । सृष्ट्वा विश्वमेव कायः शरीरं यस्य स तथा प्रतिमास्थानीयप्रपञ्च इत्यर्थः । अतः पुरुहूतः पुरूणि बहूनि हूतानि नामानि यस्य स तथा "सर्वनामा सर्वकर्मा" इति श्रुतिः । सर्वनामवाच्यत्वे हेतुरीश इति, तत्तच्छब्दप्रवृत्तिनिमित्तसामर्थ्योपेत इत्यर्थः नैतदौपचारिकमित्यभिप्रेत्याह—सत्यमिति । तत्तन्नामवाच्य तत्तत्साधुगुणसद्भावे साक्ष्यमिदमस्तीति वक्तुमुचितं स एव कथमित्यतो वाह—सत्यमिति । साधुगुणपूर्णं इदं च लक्षणान्तरं परंज्योतिरिति "परंज्योतिरूपं सम्पद्यते" इति श्रुत्या मुक्तप्राप्यत्वमुच्यते तदेवात्रोच्यते इति परंज्योतिः सूर्याद्यन्यतमः किं न स्यादित्यतोऽस्तः पुराण इति ॥ १३ ॥

एवं सिद्धे वस्तुनि तत्साधनज्ञाने साधनमाह—अथेति । यतो ज्ञानप्रतिबन्धके दुष्कर्मणि सति सर्वं दुःसाधनं स्यादिति अथ लोकसङ्ग्रहार्थं ऋषयोऽपि * कर्महन्तये दुष्कर्मपरिहाराय यागादि कर्माणीहन्ते कुर्वन्तीति विज्ञाय ज्ञानार्थी पुरुष ईहमानः कर्म कुर्वाणो विधूतदुष्कर्माऽनीहां निवृत्तिपदवीं प्राप्य प्रायो बहुलं ज्ञानं प्रपद्यत इत्यन्वयः । कश्चित्फलार्थी अन्यथाऽपि भवतीति प्राय इत्युक्तम् । अनेन "कुर्वन्नेवेह कर्माणि" इति श्रुतिर्गृहीता "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण समावृत्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषम्" इति श्रुतिर्हिशब्देन गृहीता ॥ १४ ॥

न केवलमृषय एव लोकसंग्रहार्थं कर्माण्याचरन्ति अपितु श्रीहरिरपीति भावेन आह—ईहते इति । कर्मानभिषक्ते कमुत्यन्यायमाह—नावसीदन्तीति । ये तमनुवर्त्तन्ते तेऽपि नावसीदन्तीति किमुत श्रीहरिरित्यन्वयः ॥ १५ ॥

पुरुषेण फलानीच्छता कर्म कर्तव्यमात्मविदेति भावेन स्तौतीत्याह—तमीहमानमिति । बुधैरीहमानं निजधर्ममूढांस्तत्कर्म शिक्षयंतं प्रभुं प्रपद्य इत्यन्वयः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इदं येनेत्यादिकं तदीहमानमित्याद्यन्तमन्वाह—योजगति प्रपद्यत इति पदर्यवसानक्रियायां स्वनात्पर्यात् ॥ येनेति य इत्यर्थः सुपां सुलोभवन्तीति छान्दसवार्त्तिकात् नायमिति जाग्रद्दशायां तज्ज्ञानच्छाययैव विश्वस्य ज्ञानात् सुषुप्तदशायाम् तस्या अपि तिरोधानात् तस्य तु स्वतःसिद्धसर्वव्यापकज्ञानत्वादयुक्तमेवैतदिति भावः ॥ ९ ॥ १० ॥

चक्षुः स्वरूपभूता ज्ञानशक्तिः "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः । शेषं सुगमम् ॥ ११ ॥

तदेवं ज्ञानशक्तेर्नित्यत्वमुक्त्वा तत्स्थापनाय स्वरूपस्य नित्यत्वमाह न यस्येति ॥ १२ ॥

तदेवोपपादयति—स इति । विश्वस्य व्यापकः कायो यस्य विश्वे अनन्ताः काया वा यस्य सः अत एव पुरु बहुधा हूतो वेदैर्गीतः तत्र हेतुः ईशोऽचिन्त्यशक्तिः यतः सत्यः सर्वः सत्ताहेतुस्वरूपः यतः स्वयंज्योतिः स्वप्रकाशः अतश्चाजः पुराणोऽपि नवत्वादिविकारान्तरशून्यश्च तदेवं परमपूर्णोऽपि अस्य प्रपञ्चस्यापि अजया मायाख्ययात्माधीनशक्त्या जन्मादि विधत्ते करोति तां च मायां विद्यया उदस्य तस्यां सकार्यायामनासज्यैवास्ते अत एव निरीह एवास्त इत्यर्थः । तदेतदचिन्त्यस्वभावमयं लीलामात्रमेवेति भावः ॥ १३ ॥

सैषाच लीलाशिक्षया भक्तसुखपर्यवसानैवेत्याह—अथेति । यस्मादेवमसौ कर्मकृत्वाप्यनासज्य नैष्कर्म्येनास्ते अथास्मादेते ऋषयोऽप्यमी अथमावस्यश्चे कर्माणि कुर्वन्ति तेऽनासक्ता भवन्तीत्यर्थः । किमर्थं अकर्महेतवे तन्निरीहत्वे प्राप्ये तर्हि कर्म पूर्वमेव निरीहा न स्युः तत्राह—हि यस्मादीहमान एव पुरुषः

(१) कस्यचिद्धनम् ॥ * कर्महन्तये इति च मूलपाठः ॥

। श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रायोऽभ्यासके सति अनीहां प्रपद्यते क्रमात् प्राप्नोति न तु हठाद्-ईहमान एवेत्यर्थः । तदुक्तम् "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते । कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते" इति ॥ १४ ॥

विषयोक्तस्य निरीह आस्त इति यदुक्तं तदेव ऋषयोऽनुमं सरन्ति तदेव विशदयति—ईहत इति । स्वरूपसुखस्फूर्तिरूपविद्यया पूर्णत्वेन भगवतः कार्यान्तरे क्रियमाणेऽप्यनासक्तिः ऋषीणामपि तदनुगत्येत्यर्थः ॥ १५ ॥

एतानि निजोक्तान्यनूद्य फलितमाह—तमीहमानमिति । अत्र सविश्वकाय इत्यादि त्रयस्यानुवादः स्पष्ट एव । किञ्च बुधमिति येन चेतयत इत्यस्य यं न पश्यतीत्यस्य च प्रभुमित्यात्मावास्यमित्यस्य पूर्णमिति न यस्येत्यस्य ज्ञेयः । अर्थश्चायम् तं प्रपद्ये तत्र हेतवः ईहमानम् जगत्सृष्ट्यादिकं कुर्वन्तमपि निरहङ्कृतम् तदासक्तिशून्यं यतो बुधम् स्वानन्दानुभवशीलम् । यतः पूर्णं निराशिषञ्च तर्हि किमर्थं करोति तत्राह—नृणामिति । ननु, नराणामपि बहिरावेश एव, तत्राह—निजाभक्तास्तेषां वर्त्मनि सम्यक् स्थितम् तदनुकूलतयैव सर्वं कुर्वन्तमित्यर्थः । अत एव सर्वधर्ममूलस्य तेषां धर्मस्य भावनेनाऽखिलधर्मभावनमपीति तमेव प्रपद्ये ॥ १६—२३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

येनं य इत्यर्थः । चेतयते विश्वं चेतनीकरोति विश्वं कर्तृ यं न चेतयते अस्मिन् विश्वस्मिन् शयाने सुप्तिसुप्तिप्रलयगतेऽपि सति यो जागर्ति यस्मिंश्च योगनिद्रां गते तु नेदं विश्वं जागर्तीति प्रक्रमाक्षेपवाक्यं तस्मादयं विश्ववर्ती जनस्तं न वेद स च हरिरिमं वेद ॥ ९ ॥

तस्येश्वरत्वं दर्शयन् स्वपुत्रपौत्रादिकमुद्दिश्य हितमुपदिशति आत्मेति । जगत्यां त्रिभुवने यत् किञ्चिज्जगत्स्थानं स्वीयदेहेन्द्रियादिकमपि तत्सर्वं आत्मनो भगवत एव आवास्यम् आवासविषयीभूतं कर्माणि यतत् सम्यग्यासाहमिति वा तेनैव स्वक्रीडास्पदत्वेन सृष्टत्वादिति भावः । अतस्तत्र तत्र स्थाने भगवन्मन्दिरं तदर्चाञ्च संस्थाप्य तदनुज्ञां सम्प्रार्थ्यैव स्ववासगृहं ततो निकृष्टमेव सेवकबुद्ध्या निर्मीयतां न तु तत्र स्वस्यैव स्वत्वमारोप्य तन्मन्दिरमनिर्मायैवेत्यादिको ध्वनिः । एवं बहुधनसद्भावेऽपि तेन परमेश्वरेण यत्यक्तं कर्मकारेभ्यो वेतनमिव यद्दत्तं धनं तेनैव भुञ्जीथाः भोगान् भुङ्क्ष्व मा गृधः अधिकमदत्तं वा माभिकाङ्क्षीः तत्सेवाय तद्भक्तसेवायां च बहुधनं तेनैव भुञ्जीथाः भोगान् भुङ्क्ष्व मा गृधः अधिकमदत्तं वा माभिकाङ्क्षीः तत्सेवायां तद्भक्तसेवायां च बहुधनं पर्याप्तीकृत्य तच्छेषेणैव पुत्रमित्रकलत्रादीनां स्वस्य चोदरभरणं कुर्वितिभावः । ननु, ते पुत्रकलत्रादयो नात्र व्यवस्थायां सम्मन्येरन्



तत्र स्वतर्जनमाह—स्वित् अहने अरे कस्य धनं स्वगृहे कियन्मपि धनं परमेश्वरं विना कस्य न कस्यापीत्यर्थः । "यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् । अधिकं यो भिमन्येत स स्तेनो दण्डमर्हति" इति नारदोक्तेः । यद्वा कस्यचिदन्यस्यापि धनं मा गृधः तथा च श्रुतिः "ईशावास्यमिदं सर्वम्" इति यथाश्रुतमेव ॥ १० ॥

ननु, यदि जगदिदं तस्यैवाऽऽवास्यं तर्हि कथं स क्वापि न दृश्यते तत्राह, यमिति । ननु, तर्हि घटनाशे देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिव दृश्यस्य जगतो नाशे परमेश्वरस्यापि तद्विषयं ज्ञानं नश्येत् तत्राह । चक्षुः स्वरूपभूता ज्ञानशक्तिर्न नश्यति "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः । नहि सवितृप्रकाशः प्रकाश्यनाशे नश्यतीति भावः । भूतनिलयं सर्वान्तर्यामिणां देवं दिव्यं तमसङ्गं सुपर्णं जीवात्मसखं "द्वा सुपर्णा सयुजा" इति श्रुतेः । उपधावत सेवध्वम् ॥ ११ ॥

सर्वव्यापकत्वमाह—न यस्येति । अमूनि आद्यन्तादीनि विश्वस्य यस्माद्भवन्ति विश्वं च यत् यद्रूपम् अत एवाऽव्यभिचारित्वात् तत् ऋतं सत्यं महत् परिपूर्णं ब्रह्मेति तत्स्वरूपस्य नित्यत्वमुक्तम् ॥ १२ ॥

सर्वात्मत्वमाह—स इति । पुरूणि बहूनि नामानि यस्य सः यत्र "विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयीभवति" इति गोपालतापनीश्रुतेः । विद्याशब्देन स्वरूपभूता चिच्छक्तिरभिधीयते तयैव सुभगया पट्टमहिष्येव अजां दुर्भगां निरस्येत्यर्थः । तदुक्तम् "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति ॥ १३ ॥

एवं तस्य यौगपद्येनैवेहमानत्वमनीहत्वं धर्तुमशक्नुवन्तो मुनयः कालभेदेनाऽपि तत् स्वस्मिन् सम्पादयितुं यतन्त इत्याह—अथ अत एव अकर्महेतवे नैष्कर्म्यार्थं इहन्ते इति पाठे कर्महननार्थम् ॥ १४ ॥

तन्वीहमानः कर्मभिरवगुण्ठितः कोषकारवद्बध्येतैवेत्यत आह—ईहत इति अतस्तमनुवर्तमाना ये ते नावसीदन्तीति तद्भक्तिरुपदिष्टा ॥ १५ ॥

ननु, त्वमेवमस्मानुपदिशसि स्वयं तावत् साम्प्रतं किं करोषीति तत्राह—तमिति । अहं तु प्रभुं [illegible] नामविशेषानुक्तेनाऽपि प्रभुं ये न चेतयते विश्वमिति [illegible]क्रमोक्तमेतन्यं प्रभुं भगवन्तं प्रपद्ये । कीदृशं तं प्रसिद्धं [illegible]मेश्वरमात्मानमेव ईहमानं कामयमानं यथान्ये मु[illegible] [illegible]नापि स्वमीहते आत्मारामत्वादिति भावः । [illegible] [illegible] वर इत्यहङ्कारशून्यम् अनन्यचोदितं स्वेने[illegible] [illegible] स्वप्राप्तिसाधनं संस्थितं चिरकालव्यवधाना[illegible] [illegible] जन् शिक्षयन्तं स्वाचरणादिनेति शेषः । [illegible] [illegible]भक्तियोगं भावयत्याविर्भावयति प्रवर्तयति वा तम[illegible]

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

येन विश्वं चेतयते चेतनीभवति स्वकार्यक्षमं भवतीत्यर्थः । विश्वं तु यं चेतयते अन्यनिरपेक्षसामर्थ्ययुक्तत्वात् "यदब्रमादयोऽप्यङ्गमसृजन् यदनुगृहीताः" इति वक्ष्यमाणप्रकाराऽनुसन्धेयम् अस्मिन् प्रसिद्धे जने शयाने मायामोहितत्वेन विनष्टात्मपरमात्मविवेके सति यो जागर्ति सर्वं पश्यति अत एव तं सर्वज्ञम् अयं न वेद स तु वेद यद्वाऽस्मिन् विश्वस्मिन् शयाने प्रलीने सति यो जागर्ति तं भज इति शेषः ॥ ९ ॥

एवं सर्वप्रेरकत्वसर्वज्ञत्वादिगुणवर्णनेन भगवतो भजनीयत्वं स्वस्य तद्भक्तत्वमुक्त्वाऽथ बुभुक्षुंप्रति परमेश्वरदत्तेन जीवमानो मा परधनाऽऽकाङ्क्षां मा कुर्वित्याह—आत्मेति । आत्मना परमेश्वरेण इदं विश्वं समष्टिप्राकृतः प्रपञ्चः जगत्यां यत्किञ्चिज्जगत् व्यष्टिपदार्थश्च तत्सर्वम् आवास्यं कारणतया व्याप्यम् पृथिव्यादौ ओषध्यादिकमिव तेन परमेश्वरेण स्वकर्मानुरूपं त्यक्तं दत्तं यत्तेन भुञ्जीथाः भोगान्भुंक्ष्व कस्यचिदपि धनं मागृधः माकाङ्क्षीः ॥ १० ॥

मुमुक्षून्प्रत्याह—यमिति । यं पश्यन्तं न पश्यति जन इति शेषः । यस्य च चक्षुर्नैव रिष्यति नैव नश्यति नित्यत्वात् तं भूतानां निलयं भूतानि वा निलयं यस्य तं शोभनं भक्तहिताय पर्णं पतनं यस्य तमुपधावत भजत ॥ ११ ॥

यस्य ब्रह्मणः आद्यन्तादि न विद्यते हेतोः यस्माद्विश्वस्यामूनि आद्यन्तादीनि सन्ति तदेव विश्वं कार्यस्य कारणानन्यत्वात् तदेव ऋतं सत्यं तदितरस्याधिकस्य समस्यचाऽसत्वात् अत एव तदेव महत् निरतिशयम् ॥ १२ ॥

एतद्वोपपादयन् शक्तिपरिणामं स्वीकृत्य स्वरूपतो निर्विकारत्वं भगवत आह—स इति । अजया नित्यया आत्मशक्त्या प्रकृत्या "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेः अस्य विश्वस्य जन्मादि यो धत्ते करोति स एव विश्वं कायं प्रवेशस्थानं यस्य सः सर्वविकारविलक्षणः यत ईशः पुरुभिर्नामभिर्हूयतेऽभिधीयते इति तथा निरीहः स्वतोऽवाप्तसमस्तकामः तां कार्यकारणरूपामुदस्य तदपेक्षामकृत्वा आस्ते ॥ १३ ॥

तदेवं भगवान् विश्वरचनादिकर्माणि जीवहिताय करोति स्वयं तु तन्निरपेक्ष एव तिष्ठतीत्युक्तम् । अथोपास्यभूताद्भगवतः सकाशादुपासकानां वैलक्षण्यं द्योतयितुं मुनयस्तु तत्प्राप्त्यर्थं कर्माणि कुर्वन्तीत्याह—अथाग्र इति । नास्ति कर्म हेतुः साधनं यस्य "नास्त्यकृतः कृतेन" इत्यादि "ह्येतेऽदृढा यज्ञरूपाः" इति श्रुतेः । भगवदाराधनव्यतिरिक्तकर्मोऽस्त्यस्य भगवत्प्राप्तये कर्माणि तदाराधनरूपाणि ईहन्ते कुर्वन्ति । "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।" इति श्रीमुखोक्तेः । ईहमानः यत्नं कुर्वाणः पुरुषः अनीहां यत्नसिद्धिस्रोत्यं प्रायः प्रपद्यते निर्यत्नस्य यत्नसिद्धिसौख्यं कुत इति प्रायोग्रहणेन सूच्यते ॥ १४ ॥

भगवत्स्वभावानुवर्तिनः सुखिनो भवन्तीत्याह—ईहत इति । ये तमनुवर्तमानाः कर्मफले अभिषज्जमानास्ते न बध्यन्ते न क्लिश्यन्ति परमं फलं प्राप्य सुखिनो भवन्तीत्यर्थः ॥ १५ ॥

भगवद्गुणान् संक्षेपतो वर्णयन् तं शरणं प्रजाभि-रक्षितुम् ईहमानं विश्वसृष्ट्यादिलीलां कुर्वाणं तथापि निरहंकृतं बुधं सर्वज्ञं निराशिषं क्रियासाध्यसुखनिरपेक्षं यतः पूर्णं अनन्यचोदितं स्वाधीनं निजवर्त्मनि वेदोक्तमार्गे सम्यक् स्थितं तत्र हेतुगर्भं विशेषणं नॄन् शिक्षयन्तमिति अखिलधर्मभावनम् अखिलानां बुभुक्षूणां मुमुक्षूणां च धर्मान् भावयति प्रवर्तयतीति तथा ॥ १६ ॥

---

भाषा टीका ।

मनुरुवाच ।

स्वायम्भुवमनुबोले, कि जो कोई विश्व अर्थात् चेतनवर्ग को, करणकलेवरादि प्रदान कर ज्ञान देता है, और विश्व-जिसको चेतन नहीं कर सका है, और जो नित्यसर्वज्ञ, इसको अज्ञान की निद्रामें सोनेपर भी जागता है, और यह जीव वर्ग जिसको नहीं जानता और वह इस को सदा जानता है ॥ ९ ॥

इस जगती ( लोक ) में जो विश्व ( सर्ववस्तु ) है वह केवल ईश की सत्ता और चैतन्य से व्याप्त हो रहा है, और जो तुम लोग कुछ भोग भोगो सो ईश्वर को समर्पण कर कर भोगो, और किसी के धन की आकांक्षा मत करो ॥ १० ॥

यह जीव वर्ग आपको देखते हुए जिस ईशको नहीं देख-सका है, और जिसका ज्ञान कभी नष्ट नहीं होता, ऐसे उस सर्वप्राणियों के निवासस्थानरूप अथवा सर्वान्तर्यामी सुपर्ण ( सुन्दर पक्षवाला पक्षी ) को आप सब लोग भजो ॥ ११ ॥

जिसका आदि, अन्त, मध्य, अपना, पराया, भीतर, बाहर, कुछ भी नहीं और इस विश्व के आद्यन्तादिक जिस से होते हैं, और जो आप विश्वरूप है, वही स्वरूप से नित्य और निरतिशय बृहत् पूर्ण ब्रह्म है ॥ १२ ॥

फिर वह ब्रह्म कैसा है, कि—सर्व विश्व काय अर्थात् शरीर है जिसका, और बहुत से नाम वाला नियन्ता है, स्वयं ज्योति अर्थात् स्वयं सिद्धज्ञान वाला है, अज है, अनादि है, और अजा नामवाली अपनी मायाशक्ति से इस विश्व के जन्मादि को धारण करता है और अपनी विद्या शक्ति से माया का निरास कर निश्चेष्ट होकर विराजता है ॥ १३ ॥

पहिले ऋषि लोगोंने निवृत्ति के लिये कर्म किये हैं क्योंकि ? पुरुष प्राय करके कर्मों को करता २ आपही कर्मों से निवृत्ति को प्राप्त होजाता है ॥ १४ ॥

आत्म लाभ के लाभ से पूर्णार्थ अर्थात् अवाप्तसमस्तकाम होकर भगवान् भी कर्म करते हैं परन्तु उस में आसक्त कभी नहीं होते, ऐसे ही परमात्मा के जो लोग अनुगामी हैं वो भी कभी संसार के क्लेशों से दुःखित नहीं होते हैं ॥ १५ ॥

श्रीशुक उवाच ।

इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ।
दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा ॥ १७ ॥
तांस्तथाऽवसितान्वीक्ष्य यज्ञः सर्वगतो हरिः ।
यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥ १८ ॥
स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ।
द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥
तत्रेन्द्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ।
(१)ऊर्जस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥
ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ।
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥
अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ।
अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥ २२ ॥
तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
(२)पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ! ॥ २३ ॥
वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।
सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥ २४ ॥

भाषा टीका ।

चेष्टाकर भी निरहङ्कार और बुद्धि सागर, कामनाओं से रहित, सदा परिपूर्ण, किसी से कभी प्रेरित न हो, मनुष्यों को शिक्षा देने वाला, अपने मार्ग में स्थित, और अखिल धर्मों का प्रवर्त्तक ऐसे प्रभु के मैं शरण हूं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

समाहितमपि सन्तं मन्त्रोपनिषदं व्याहरन्तं दृष्ट्वा सुप्तोच्छ्वसितवाक्यमिव मन्वाना असुरा यातुधानाश्च क्षुधा निमित्तेन जग्धुमत्तुमभ्यद्रवन्नभिदुद्रुवुः ॥ १७ ॥

यामैः स्वपुत्रैः त्रिविष्टपं स्वर्गमपालयत्स्वयमेवेन्द्रो बभूवेत्यर्थः तत्र प्रतिमन्वन्तरं मन्वादयः षडन्येऽन्ये भवन्ति. तथाहि सूतो द्वादशे वक्ष्यति—

"मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ।
ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥"—

इति तत्राऽद्ये स्वायम्भुवो मनुः प्रियव्रतोत्तानपादौ मनुपुत्रौ यामाद्यो देवाः मरीचिप्रमुखाः सप्त ऋषयः यज्ञो हरेरवतारः इन्द्रश्च स एवेति तन्मन्वतरं षड्विधमेव तत्तुर्यस्कन्धोपक्रमे निरूपितम् ॥ १८ ॥

द्वितीयादिषु त्रिषु मन्वन्तरेषु मन्वादिषट्कमाह-स्वारोचिषो द्वितीयस्त्विति यावद्गजेन्द्रमोक्षप्रश्नम् ॥ १९ ॥ २० ॥ २१ ॥

विभोरसाधारणं चरितमाह-अष्टाशीतिसहस्राणीति, ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृत[illegible]का ।

इति इत्थं मन्त्रात्मिकामुपनिष[illegible] समाहितचित्तं स्वायम्भुवं मनुं दृष्ट्वा असुरा[illegible] निमित्तेन जग्धुमत्तुमभ्यद्रवन् ॥ १७ ॥

तथावसितान् मनुं हन्[illegible]रान्यातुधानांश्च दृष्ट्वा सर्वगतः सर्वान्तरात्मा [illegible]: यामैर्युगपत्

(१) औजंस्तम्भा इति वीर० । (२) सवन इति—वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रसूनैः स्वपुत्रैर्देवैः परिवृतस्तान् हत्वा त्रिविष्टपं स्वर्गमध्यासन् अपालयत् स्वयमेवेन्द्रो बभूवेत्यर्थः । तत्र प्रतिमन्वन्तरं मन्वादयः षडन्ये अन्ये भवन्ति तथाहि सूतो द्वादशे वक्ष्यति–

"मन्वन्तरं मनुर्देवाः मनुपुत्राः सुरेश्वरः ।
ऋषयोऽंशावताराश्च हरेः षड्विधमुच्यते" ॥ इति

तत्राद्यः स्वायम्भुवो मनुः प्रियव्रतोत्तानपादौ मनुपुत्रौ तोष-प्रतोषसंतोषभद्रशान्तिइडस्पतीध्मकविविभुस्वह्नसुदेवरोचनाख्या द्वादश यज्ञस्य पुत्रा एतत्प्रभृतयो देवाः मरीचिप्रमुखाः सप्त-र्षयः यज्ञो हरेरवतार इन्द्रश्च स एव यद्यपि पृथगिन्द्राभा-वात्षाड्विध्यं नास्ति तथापि अत्र मन्वन्तरे यज्ञो भगवानेव इन्द्रा-धिपत्ये जगद्रक्षणेऽधिकृतवानिति तदधिकारद्वयमपेक्ष्य षाड्विध्य-मुपपादनीयम् ॥ १८ ॥

द्वितीयादिषु त्रिषु मन्वन्तरेषु मन्वादिकमाह—स्वारोचिष इति यावद्गजेन्द्रमोक्षप्रश्नं । अग्नेः सुतः स्वारोचिषाख्यः मनुर्द्वितीयोऽभवत् द्युमदादयस्तस्यात्मजाः ॥ १९ ॥

तत्र द्वितीये मन्वन्तरे रोचनो भगवतो यज्ञस्य पुत्र एवेन्द्रो बभूव देवास्तु तद्व्यतिरिक्तास्तुषितसंज्ञास्तोषादय एकादश आदिशब्दादन्ये चाभवन् ऊर्जस्तम्भादयः सप्त ब्रह्मवादिनो ऋषयो बभूवुः एवं मन्वादयः पञ्चोक्ताः ॥ २० ॥

अथावतारमाह—ऋषेरिति । वेदशिरस ऋषेस्तुषितेति प्रसिद्धा भार्या बभूव तस्यां तुषितायां भगवान्देवैः प्रार्थित इति शेषः । विभुरिति प्रसिद्धो जज्ञे ॥ २१ ॥

विभोर्भगवतोऽसाधारणं चरित्रमाह—अष्टाशीतीति । तस्य कौमारब्रह्मचारिणः तस्य विभ्वाख्यस्य भगवतो व्रतमाचारमन्व-शिक्षन्ननुसृतवन्तः ॥ २२ ॥

प्रियव्रतस्य सुत उत्तमाख्यस्तृतीयो मनुः तस्योत्तमस्य मनोः सुताः पवनादय अभवन् ॥ २३ ॥

प्रमदादयः वसिष्ठस्य सुताः प्रमदादयः सप्तर्षयः सत्या-दिसंज्ञका देवगणाः इन्द्रस्तु सत्यजिदादयः ॥ २४ ॥

---

...यध्वजतीर्थकृतपदरत्नावली ।

मन्त्रवर्णेन युक्तोपनिषदम् ॥ १७ ॥ १८ ॥

तस्य स्वारोचिषस्य ॥ १९ ॥

नाम्ना रोचनः ॥ २० ॥

नाम्ना विभुः ॥ २१ ॥

तस्य विभोः ॥ २२–२५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वसिष्ठेति इन्द्रमध्योयं वसिष्ठ ऋषि प्रजापतिगृहीतवा-स्त्वेति श्रुतेः ॥ २४—३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समाहितं समाधिस्थमपि सन्तं मन्त्रोपनिषदं व्याहरन्त दृष्ट्वा सुतोऽच्छ्रुसितवद्विषामिव मन्वानाः क्षुधा बुभुक्षया जग्धुम-त्तुमभ्यद्रवन् ॥ १७ ॥

यामैर्यामसंज्ञकैः ॥ १८ ॥

मन्वन्तरं हि मन्वादिषट्कयुक्तं भवति । यदुक्तम् "मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः । ऋषयोंऽशावताराश्च हरेः षड्विधमु-च्यते" तत्राद्ये स्वायम्भुवमन्वन्तरे स्वायंभुवो मनुः प्रियव्रतो-त्तानपादौ मनुपुत्रौ यामादयो देवाः मरीचिप्रमुखाः सप्तर्षयः यज्ञो हरेरवतारः स एवेन्द्रश्चेति षट्कं चतुर्थस्कन्धोपक्रमे निरूपितं द्वितीयादिषु त्रिषु मन्वादिषट्कान्याह–स्वारोचिष इति, द्वादशभिः ॥ १९–२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्षुधा बुभुक्षया निमित्तभूतया जग्धुमत्तुमभ्यद्रवन् ॥ १७ ॥

अवसितान् कृतनिश्चयान् वीक्ष्य यज्ञो हरिः यामैः यामसं-ज्ञकैः स्वसुतैः परिवृतः त्रिविष्टपं स्वर्गमपालयत् स्वयमिन्द्रो ऽप्यभूदित्यर्थः । स्वायंभुवो मनुः प्रियव्रतोत्तानपादौ तत्तनयौ यामाद्या देवाः मरीच्याद्याः सप्तर्षयः यज्ञो हरेरवतारः स एवेन्द्र-श्चेत्याद्यं मन्वन्तरं पञ्चविधमिति भावः । अन्यानि तु मन्वन्तरा-णि षड्विधानि "मन्वन्तरं मनुर्देवाः मनुपुत्राः सुरेश्वरः । ऋष-योंऽशावताराश्च हरेः षड्विधमुच्यते" इति वक्ष्यमाणत्वात् ॥ १८—१९—२०—२१ ॥

तस्य विभोः ॥ २२—२७ ॥

---

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुक देवजी बोले, कि— स्वायम्भुवमनु समाहित होकर इस प्रकार के मन्त्रोपनिषद् को उच्चारण करते रहे इतने में असुर यातुधान अर्थात् राक्षसलोग क्षुधा से मनु को भक्षण करने को दौड़े ॥ १७ ॥

सर्व व्यापी श्रीहरि ने उस समय उन यातुधानों को इस प्रकार के दुरभिप्राय वाले देखकर उन असुरों को मार कर इन्द्र होकर याम नामक देवताओं सहित स्वर्ग का पालन किया ॥ १८ ॥

धर्म्मस्य सूनृतायान्तु भगवान्पुरुषोत्तमः ।
सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥
सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ।
भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः ॥ २६ ॥
चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः ।
[1]पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥
सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ।
ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे ॥ २८ ॥
देवा वैधृतयो नाम विधृतेस्तनया नृप ! ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥
तत्राऽपि जज्ञे भगवान् हरिण्यां हरिमेधसः ।
हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥ ३० ॥

भाषा टीका ।

द्वितीय मनु अग्निके पुत्र स्वारोचिष नाम के हुए और द्युमत, सुषेण, रोचिष्मत, इत्यादिक उन के पुत्र हुए ॥ १९ ॥

उस मन्वन्तर में रोचन नाम वाले इन्द्र हुए, और तुषिता देवता हुए, और ऊर्जस्तंभादिक ब्रह्मवादी लोग सप्त ऋषि हुए ॥ २० ॥

वेदशिरा ऋषि की तुषिता नाम वाली पत्नी हुई, तिसमें वेदशिरा ऋषि से विभु इस नाम से प्रख्यात एक देव उत्पन्न हुए ॥ २१ ॥

कुमार अवस्था से ब्रह्मचारी ऐसे उन विभु के व्रत ( आचार ) को धृतव्रत अट्ठासी हजार ऋषिओंने सीखा ॥ २२ ॥

हे राजन् ! तिसमें मनु प्रिय व्रत के पुत्र उत्तम हुए और पवन, सृञ्जय, यज्ञ होत्रादिक उनके पुत्र हुए ॥ २३ ॥

और वसिष्ठ के पुत्र प्रमादादिक सप्त ऋषि हुए और सत्य, वेदश्रुत, भद्र, इत्यादिक देव हुए, सत्य जित नामक इन्द्र हुए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्यजित इन्द्रस्य सखा सन् ॥ २६ ॥

उत्तमस्तृतीयो मनुस्तस्य भ्राता तामसश्चतुर्थो मनुः ॥ २७ ॥

त्रिशिख ईश्वर इन्द्रः ॥ २८ ॥

अन्यानपि विशिष्टपराक्रमान्देवानाह—देवा वैधृतय इति ॥२९॥

हरिरित्याहृतो व्याहृतः ग्रहात् ग्राहात् ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवतारमाह—धर्मस्य सूनृताख्यायां भार्यायां भगवान्पुरुषोत्तमः सत्यसेनाख्यो जातः स सत्यव्रताभिर्भिः देवैः सहितः सत्यजितः इन्द्रस्य सखा भूत्वा यक्षराक्षसानवधीत् ॥ २५ ॥

तान् विशिनष्टि-स इति । अनृतमेव व्रतं येषां ते दुष्टं शीलं येषां ते दुःशीलाः तेच ते तान् असतः दुरात्मनः भूतानि द्रुह्यन्ति तथा तान् ॥ २६ ॥

चतुर्थस्तु मनुरुत्तमस्य भ्राता प्रियव्रतसुतः स च नाम्ना तामस इति प्रसिद्धः पृथ्वादयो दश तथाऽस्य तामसस्य मनोः सुताः ॥ २७ ॥

सत्यकादिसंज्ञा देवगणाः त्रिशिख ईश्वर इन्द्रः ॥ २८ ॥

अन्यानपि, विशिष्टपराक्रमान्सुरानाह—देवा इति । हे नृप ! विधृतेस्तनया वैधृतय इति प्रसिद्धाःस्तामसमन्वन्तरे देवाः बभूवुः तान्विशिनष्टि—यैर्धृताभिः स्वेन तेजसा स्वबुद्धिबलेन वेदा विधृताः कथम्भूताः कालेन नष्टा विस्मृता पश्येतृपरम्परा-घमावादिति भावः । एवं मन्वा[illegible] ॥ २९ ॥

अवतारमाह-तत्रापीति । [illegible] हरिमेधसो मनु-हरिण्यां भार्यायां भगवान् [illegible] पुत्रः हर्याख्यो जज्ञे ग्रहनामकं ग्रयकच्छन् तं [illegible] हरिनाम्ना भगवता ग्रहात्मकरात् गजेन्द्रो मोचित[illegible]

---

(१) पृथुख्यातिरिपाठः वीर० विजय० ॥

राजोवाच ।

बादरायण ! एतत्ते श्रोतुमिच्छामहे वयम् ।
हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥
तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ।
यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥ ३२ ॥

सूत उवाच ।

परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ।
उवाच विप्राः ! प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्

वैयासिक्यामष्टमस्कन्धे मन्वन्तराऽनुचरिते

प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्यजितेन्द्रेण स्तुतः ॥ २६—२९ ॥

आहुतः आहूतः ॥ ३०—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवा वैधृतय इत्यत्र मन्वन्तरे द्विविधा देवा अभवन्निति दर्शितम् ॥ २९ ॥

आहुतो व्याहृतः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिशिखाऽभिधः ईश्वर इन्द्रः ॥ २८ ॥

अन्यानपि देवानाह—देवा वैधृतय इति ॥ २९ ॥

आहुतो व्याहृतः महात् ग्राहात् ॥ ३० ॥

---

भाषा टीका ।

और धर्म्म की सूनृता नामकी भार्या में भगवान् श्रीपुरु-षोत्तम, सत्यसेन इस नाम से विख्यात होते हुए, सत्यव्रतों के सहित उत्पन्न हुए ॥ २५ ॥

और मत्यवादी, दुःशील, प्राणियों से द्रोह करने वाले खोटे यक्ष राक्षसों को, इन्द्र के सखा होकर मारडाले ॥ २६ ॥

चतुर्थ मनु उत्तम के भ्राता तामस नाम वाले हुए, उन के पृथु, ख्याति, नर, केतु, इत्यादिक दश पुत्र हुए ॥ २७ ॥

सत्यक, हरि, वीर, इत्यादिक देवता हुए, त्रिशिख नाम-वाले इन्द्र हुए और उसी तामस मन्वन्तर में ज्योतिर्धमादिक सप्त ऋषि हुए ॥ २८ ॥

हे राजन् ! तथा विधृति के पुत्र वैधृति नाम वाले देवता हुए, जिन्होंने काल के प्रभाव से नष्ट होने वाले वेदों का अपने तेज के बल से उद्धार किया ॥ २९ ॥

तहां पर भी भगवान् हरिणी माता में हरिमेधा नामके पिता से उत्पन्न हुए, जिन्होंने " हरिः " ऐसे उच्चारण करने पर गजेन्द्र को ग्राह के सङ्कट से छुड़ाया ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमूमुचत् मोचयामास ॥ ३१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनयोरुक्तार्थं हेतुः तत्कथासु तासु कथासु सा कथव वा सुमहत्पुण्यम पुण्यस्य विशेषणं धन्यमित्यादि ॥ ३२ ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम

प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पृच्छावसरः पृच्छति राजा—बादरायण इति । हे बादरायणे ! वयमेतच्छ्रोतुमिच्छामहे किन्तद्यथाख्यो भगवान् यथा प्राह-ग्रस्तं गजेन्द्रममूमुचत् मोचयामासेत्येतत् ॥ ३१ ॥

अनयोरुक्तार्थं हेतुं वदन् पृष्टं विशिनष्टि—तदिति । तन्मया पृष्टं गजेन्द्रमोक्षणरूपं हरेश्चरित्रं कथासु मध्ये महत्पुण्यं यद्वा तत्कथा गजप्रमोक्षणरूपा मया पृष्टा कथा सुमहत्पुण्यं महापुण्यावहं महच्छब्दस्याऽऽत्वाभाव आर्षः सामान्याऽभिप्रायेण प्रतिनिर्देशे नपुंसकनिर्देशः धन्यं धनावहं कृतार्थत्वावहं वा स्वस्त्ययनं शुभावहमन एव * महद्गुणवत्तमं पुण्यत्वादिकं श्रवणपठनद्वारेत्यवगन्तव्यं पुण्यत्वादौ हेतुमाह—यत्रेति । यासु यासु कथासु हरिराश्रिताघहरो भगवान् गीयते सा सा कथा पुण्यादिगुणयुक्ताहीत्यर्थः । यद्वा यत्र यत्र कथायां हरिर्गीयते सा सा पुण्यादिगुणयुक्ताऽतो गजेन्द्रमोक्षकथायामपि हरिगायन एवेति साऽपि पुण्यावहा तस्तामपि शुश्रूषितां कथयेत्यर्थः ॥ ३२ ॥

एवमापृष्टगजेन्द्रमोक्षकथः श्रीशुकस्तां कथायामासेत्याह, सूतः—परीक्षितेति । हे विप्राः ! प्रायोपविष्टेन परीक्षिता राज्ञा कथासु हरिकथाकथने चोदितः प्रवर्तितः स बादरायणिर्व्यासपुत्रः एवमित्थं पार्थिवं पृष्टवानिति शेषः परीक्षितं प्रतिनन्द्याऽहो साधुपृष्टमित्यभिनंद्य सदसि सभायां मुनीनां शृण्वतां स तामुवाच पृष्टां कथामिति शेषः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम

प्रथमोऽध्यायः ॥ १ ॥

* महत इति मूलपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे विप्राः ! इति सूतः शौनकादीन् सम्बोधयति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम

प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अमूमुचत् गजेन्द्रं मोचयामास ॥ ३१ ॥

अनयोरुक्तार्थंहेतुः तत्कथासु तासु कथासु साकथैव वा सुमहत्पुण्यं पुण्यस्य विशेषणं धन्यमित्यादि ॥ ३२ ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

अष्टमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा अमूमुचत् मोचयामास एतत्ते त्वत्तः श्रोतुमिच्छामहे ॥ ३१—३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्र

प्रथमोऽध्याया

भाषा टीका ।

क्यों कि ? श्रीहरिकथाओं में यह गजेन्द्र मोक्षका आख्यान बड़ा पुण्य रूप है, और जहां जहां भगवान श्रीहरि गाये जायँ वह सब ही धन्य और कल्याण का घर और शुभ है, ॥ ३२ ॥

सूत उवाच ।

सूतजी बोले, कि—हे शौनकादि हो ! हे विप्रो ! गंगा तट पर प्रायोपवेश लेने वाले महाराज परीक्षित ने जब श्रीव्यास नन्दन से ऐसा प्रश्न किया, तब तो उस सभा में मुनिलोगों के सुनते २ श्रीशुकदेवजी राजा को अभिनन्दन करके बोल भये ॥ ३३ ॥

इति श्रीमद्भागवत महापुराण अष्टम स्कन्ध में

प्रथम अध्याय की भागवताचार्य कृत

भाषा टीका समाप्त ॥ १ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## ॥ द्वितीयोऽध्यायः ॥

श्रीशुक उवाच ।

आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः ।
क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः ॥ १ ॥
तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ।
दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥
अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ।
नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥
स चावनिज्यमानाङ्घ्रिः समन्तात्पय ऊर्मिभिः ।
करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ॥ ४ ॥
सिद्धचारणगन्धर्वविद्याधरमहोरगैः ।
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्ट(१)कन्दरः ॥ ५ ॥
यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ।
अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥
नानाऽरण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः ।
चित्रद्रुमसुरोद्यानकलकण्ठ विहङ्गमः ॥ ७ ॥
सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ।
देवस्त्रीमज्जनामोदसौरभाम्ब्वनिलैर्युतः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम् ।
द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥ १ ॥
द्वितीये तु गजेन्द्रस्य गजीभिः क्रीडतो जले ।
दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥ २ ॥

आसीदिति ॥ १ ॥

तावता योजनाऽयुतेन पर्यक् परितः त्रिकूटसमाख्याबीजमाह त्रिभिः—शृङ्गैर्मुख्यैः ॥ २ ॥

अन्यैश्च शृङ्गैर्निर्झराम्भसां निर्घोषैश्च ककुभः सर्वा रोचयन्नास्त इति पूर्वेणान्वयः । कथम्भूतैः शृङ्गैः रत्नैर्धातुभिश्च विचित्रितैर्नानाविधानां द्रुमलतानां गुल्मा येषु तैः ॥ ३ ॥

पयस ऊर्मिभिः समन्तादवनिज्यमाना अङ्घ्रयो मूलप्रान्ता यस्य हरिद्भिः पलाशवर्णैः ॥ ४ ॥ ५ ॥

किन्नरादीनां सङ्गीतसन्नादैर्नदन्त्यो गुहा यस्मिन्प्रदेशे तमभिगर्जन्ति हरयः सिंहाः अमर्षया असहनेन ॥ ६ ॥

नाना ये आरण्याः पशवस्तेषां व्रातैः सङ्कुलाभिर्द्रोणीभिरलङ्कृत आस्ते किञ्च चित्रा द्रुमा येषु तेषु सुरोद्यानेषु कलकण्ठाः मधुरस्वना विहङ्गमा यस्मिन् ॥ ७ ॥

किञ्च अच्छोदकैः सरित्सरोभिर्युतः [illegible] इव वालुका येषु तैः पुलिनैश्च युतः देवस्त्रीणां म[illegible]मोदस्तेन सौरभयुक्ताम्बवम्बुन्यनिलाश्च तैश्च युत आस्ते ॥ ८ ॥

(१) द्रोण्यश्च इति पाठः वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह—आसीदित्यादिनाऽध्यायत्रयेण । ग्राहग्रहणात्प्रा-क्तनीं गजेन्द्रस्यावस्थां वक्तुं तावत्तदावासस्थानं त्रिकूटाचलं वर्णयति-आसीदिति । हे राजन् ! त्रिकूट इति प्रसिद्धः कश्चित् गिरिश्रेष्ठः आसीत् स च क्षीरसमुद्रेणावृतः क्षीराब्धिद्वीपस्थ इत्यर्थः । श्रीमान् शोभावान् रत्नादिसमृद्धिमान्वा योजनायुतो-च्छ्रितः ॥ १ ॥

परितस्तावता योजनायुतेन विस्तृतश्च त्रिकूटसमाख्याबीजमाह—रौप्यायसहिरण्मयैस्त्रिभिः शृङ्गैर्मुख्यैः पयोनिधिं दिशश्च रोचयन्नास्ते ॥ २ ॥

तथा रत्नैर्धातुभिर्गैरिकादिभिश्च विचित्रैरन्यैश्च शृङ्गैः ककुभो दिशः रोचयन्नास्त इति पूर्वेणान्वयः नानाविधैर्द्रुमैर्लतानां गुल्मैः लताभिः गुल्मैश्चेति वा निर्झराम्भसां गिरिनदीजलानां घोषैश्च रोचयन्नास्त इति पूर्वेणैवान्वयः ॥ ३ ॥

स च त्रिकूटः पयोधेः क्षीराब्धेरूर्मिभिः परितः आवनि-ज्यमाना विशोध्यमाना अङ्घ्रयः प्रत्यन्तपर्वता यस्य । सदेति पाठे सदा नित्यमवनिज्यमानाङ्घ्रिरित्यर्थः । हरिद्भिः पलाशवर्णैर्मरकता-श्मकैरश्मभिः पाषाणैः श्यामलां भूमिं करोति विभर्तीत्यर्थः ॥ ४ ॥

कीदृग्भिः सिद्धादिभिः जुष्टा द्रोणयः यस्य कन्दरेति पाठा-न्तरं तदा सिद्धादिभिः जुष्टा सेविता कन्दरा शिखरमूलभूमि-र्यस्येत्यर्थः । किन्नरादीनां सङ्गीतसन्नादैर्नदन्त्यो गुहा यस्मिन् प्रदेशे तमभिगर्जन्ति प्रतिगर्जन्ति हरयः सिंहाः कथम्भूताः परशा-ङ्कया सिंहान्तरागमनशङ्कया निमित्तभूतया अमर्षया असहनेन श्लाघिनः स्ववीर्यश्लाघायुक्ताः ॥ ५ ॥ ६ ॥

नानाविधा ये आरण्याः अरण्यप्रभवाः पशवो महिषादयस्तेषां व्रातैः सङ्घैः सङ्कुलाभिः व्याप्ताभिर्द्रोणीभिरलङ्कृतोऽस्ति किञ्च चित्रा द्रुमा येषु तेषु देवोद्यानेषु कलकण्ठा मधुरस्वराः विहङ्गमा यस्मिन् ॥ ७ ॥

किञ्च सरितश्च सरांसि च तैरच्छोदैः निर्मलोदकयुक्तैर्मणय एव वालुका येषु तैः पुलिनैश्च देवस्त्रीणां मज्जनेन य आमोद-स्तेन सौरभेण युक्तान्यम्बून्यनिलाश्च तैश्च युक्तः आस्ते ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र अर्थेषु शश्वदप्रतिहतश्वरयः श्रीभगवानेवेति दर्श-नाय गजेन्द्रविषय इतिहासः कथ्यते । क्षीरोदेन क्षीरसमुद्रेण पर्यक् परिवृतः ॥ १ ॥

रौप्यायसहिरण्मयैः रजतायोहेममयैस्त्रिभिः शृङ्गैः पयोनिधिं दिशश्च रोचयन् विद्योतयन् ॥ २ ॥

अन्यैर्नानाधातुमयैः शृङ्गैश्च रोचयन्निति शेषः ॥ ३ ॥

निर्णिज्यमानाङ्घ्रिः प्रक्षाल्यमानप्रत्यन्तपर्वतः शुभैरश्मा-श्मनाविशेषैर्मरकताश्मभिरिन्द्रनीलरत्नैर्भूमिं श्यामलां नीलां करोतीति ॥ ४ ॥

यश्च सिद्धादिभिर्निषेवितगुहः ॥ ५ ॥

किन्नरादिसङ्गीतसन्नादैः नदद्गुहं प्रतिध्वनितगुहं स्वयमस्युहि प्रतिगर्जशङ्कयाऽमर्षया असह्यमानबुद्ध्या श्लाघिनः प्रशस्याः हरयः सिंहा गर्जन्ति ॥ ६ ॥

चित्रा द्रुमा येषु तथा तानि च सुराणामुद्यानानि चित्र-द्रुमसुरोद्यानानि तेषु कलकण्ठाख्याः विहङ्गमा यत्र स तथा ॥ ७ ॥

अच्छोदैर्निर्मलजलैर्मणिसदृशानि वालुकानि येषु तानि तथा तैः देवस्त्रीणां मज्जनादुत्पन्नो य आमोदः तस्मादुत्थितं यत्सौरभं परिमललक्षणं तेनाक्ता भाविता अनिला येस्ते "आमोदो परिमलः" इत्यमरः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिकूटतद्रम्योद्यानसरोवर्णनविश्रुतेः ।

द्वितीये ऽत्र गजेन्द्रेण ग्राहार्तेन हरिः स्मृतः ॥

आसीत् अस्ति ॥ १ ॥

पर्यक् परितः तावता योजनायुतेनैव त्रिकूटसमाख्यायां बीज-माह—त्रिभिः । मुख्यैःशृङ्गैः दिशः ऊर्ध्वगता एव अन्यैः शृङ्गैः ककुभः सर्वाः अणावेव पर्यक् दिशो रोचयन्नास्त इति पूर्वे-णान्वयः निर्घोषैर्दिशां रोचना तासु प्रतिध्वनिसमर्पणादिति ज्ञेयम् ॥ २ ॥

पयस ऊर्मिभिः समन्तादवनिज्यमाना अङ्घ्रयो मूलप्रान्ता यस्य सः हरित्सु अष्टदिक्षु क्षिप्तैर्मरकताश्मभिर्मध्यवर्तिनीं भूमिं दूर्वादलश्यामलां करोति ॥ ३—४ ॥

किन्नरादीनां सङ्गीतसन्नादैर्नदन्त्यो गुहा यस्मिन् तं प्रदेशं अभिलक्षीकृत्य अमर्षया असहनेन परशङ्कया सिंहान्तरशङ्कया गर्जन्ति श्लाघिनः कत्थमानाः ॥५—६ ॥

चित्रा द्रुमा येषु सुरोद्यानेषु कलकण्ठा विहङ्गमा यत्र स आस्ते ॥ ७ ॥

देवस्त्रीणां मज्जनेन च आमोदस्तेन सौरभयुक्तान्यम्बूनि अनिलाश्च तैर्युतः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तृतीयादिभिस्त्रिभिर्गजेन्द्रमोक्षणमुच्यते, तत्र द्वितीये ग्राहगृही-तस्य गजेन्द्रस्य 'हरिः स्मृतिर्जातेत्युच्यते विश्रुतो विख्यातः आसीत् ॥ १ ॥

तावता योजनायुतेन पर्यक् परितो विस्तृतः रौप्यायस-हिरण्मयैः रजतायस्सुवर्णप्रचुरैः त्रिभिः त्रिकूटसमाख्यापादकैः मुख्यैः शृङ्गैः दिशः सर्वा रोचयन्नास्ते ॥ २ ॥

तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः।
उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥
सर्वतोऽलङ्कृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः।
मन्दारैः पारिजातैश्च पाटलाऽशोकचम्पकैः ॥ १० ॥
चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि।
क्रमुकैर्नालिकेलैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्यैश्च शृङ्गैः निर्झराम्भसां निर्घोषैश्च सर्वाः ककुभः रोचयन् आस्ते इति पूर्वेण सम्बन्धः। कीदृशैः रत्नैः धातुभिश्च विचित्रितैः नानाविधानां द्रुमलतानां गुल्मा येषु तैः ॥ ३ ॥

पय ऊर्मिभिः क्षीरतरङ्गैः समन्तादवनिज्यमानाः प्रक्षाल्यमानाः अङ्घ्रयो यस्य सः हरिद्भिः पलाशवर्णैः मरकताश्मभिः मरकतनामकपाषाणैः भूमिं श्यामलां करोति ॥ ४ ॥

क्रीडद्भिः सिद्धादिभिः जुष्टा सेविता कन्दरा यस्य सः ॥ ५ ॥

यत्र त्रिकूटे किन्नराणां सङ्गीतसन्नादैर्नदन्त्यो गुहा यत्र तं प्रदेशं अभिश्लाघिनः स्वबलश्लाघकाः परशङ्कया सिंहान्तरप्रवेशशङ्कया अत एवामर्षेण असहनेन हरयो गर्जन्ति ॥ ६ ॥

नानाविधानामारण्यानां व्रातैः यूथैः संकुलाभिर्द्रोणीभिरलङ्कृतः चित्रद्रुमेषु सुरोद्यानेषु कलकण्ठाः मधुरस्वनकण्ठाः विहङ्गमा यत्र स आस्ते ॥ ७ ॥

अच्छोदैर्निर्मलजलयुक्तैः सरितश्च सरांसि च तैः मणयः एव वालुकाः येषु तैः पुलिनैश्च देवस्त्रीमज्जनेन च आमोदस्तस्सौरभयुक्तान्यम्बूनि यानिलाश्च तैश्च युक्त आस्ते ॥ ८ ॥

---

भाषा टीका।

श्रीरुक्मिणीमधुसूदनाभ्यां नमः।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि-हे राजन्! एक त्रिकूट इस नाम से विख्यात पर्वतों में श्रेष्ठ पर्वत है, और वह चारों तरफ से क्षीरोद (दुग्ध के समुद्र) से घिरा हुआ, और बड़ा शोभा वाला तथा दश हजार योजन ऊंचा है ॥ १ ॥

और उतने ही प्रमाण का चारोंतरफ से विस्तार वाला है, और चांदी, लोहा, और सोने के ऐसे तीन शिखरों से समुद्र दिशाएं और आकाश को प्रकाशित कर रहा है ॥२॥

और रत्न धातुओं से चित्र विचित्र ऐसे अन्य शिखरों से भी दिशाओं को दीप्त करता हुआ है, और उन शिखरों में भी नाना प्रकार के लता, गुल्म, शोभा दे रहे हैं, और झरणाओं के जलों के निर्घोष (शब्द) हो रहे हैं ॥ ३ ॥

फिर वह पर्वत चारों तरफ के जल के तरङ्गों की टकरों से अपने चरणों को धुला रहा है, और हरित वर्ण के ऐसे मरकत मणिओं के खण्डों से भूमि को श्याम कर रहा है ॥ ४ ॥

और बड़े २ सिद्ध लोग, चारण, गन्धर्व, विद्याधर, महोरग, किन्नर, और अप्सरा लोग जिस की कन्दराओं का सेवन करते हैं, अर्थात् वहां रहते हैं ॥ ५ ॥

और जहां पर सङ्गीतों के नादों से गुहाओं में प्रतिध्वनि होनेपर बड़े बड़े श्लाघावाले सिंह लोग, शत्रुकी शङ्का से चारों तरफ से गर्जते हैं ॥ ६ ॥

और नाना प्रकार के आरण्य (जङ्गली) पशुओं के झुंडों से व्याप्त ऐसी गुहाओं से अलंकृत होरहा है, और चित्र विचित्र द्रुम जिनों में ऐसे देवताओं के बाग बगीचा जिसमें लगेरहे हैं, जिन बागबगीचाओं में मधुर और सुरीले कण्ठवाले पक्षिगण बोल रहे हैं ॥ ७ ॥

जिस में नाना प्रकार की स्वच्छ जल वाली नदियें और तालाब शोभा दे रहे हैं, कि जिनके पुलिनों में मणिओं की वालुका है। और देवस्त्रियों के स्नान से अति सुगन्धित जल के गन्ध को लिये हुए जहां पवन चल रहा है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य द्रोण्यां वरुणस्योद्यानमास्ते ॥ ९ ॥

गिरिवर्णनादिसर्वं व्यक्तमिति वक्ष्यन्तो गिरिमुद्वर्ण्यं वनं वर्णयति—सर्वतोऽलङ्कृतमिति । [illegible] वर्णयन् [illegible]दारैरिति चतुर्भिः,। मन्दारादिभिः वृत[illegible] ॥ १३ ॥

मधूकैः तालतालैश्च तमालैरसनार्जुनैः ।
अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ १२ ॥
पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ।
द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥
बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ।
तस्मिन्सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥ १४ ॥
कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितम् ।
मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥ १५ ॥
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।
जलकुक्कुटकोयष्टिदात्यूह(१)कुलकूजितम् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन् गिरौ सर आस्ते तद्वर्णयति । सुविपुलमित्यादि सार्धैः पञ्चभिः । लसन्ति काञ्चनपङ्कजानि यस्मिन् ॥ १४ ॥

कुमुदादीनां श्रिया ऊर्जितं कलः स्वनो येषां तैः शकुन्तैश्च निर्घुष्टम् ॥ १५ ॥

चक्राह्वैः सारसैरप्याकीर्णम् जलकुक्कुटादीनां कुलैः कूजितम् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

“ये मां त्वां च सरश्चेदम्”इत्यादिना गिर्यादिवर्णनं सर्वस्थैर्यमिति वक्ष्यति भगवानतो गिरिमुपवर्ण्य वनं वर्णयति–तस्योक्तविधस्य त्रिकूटस्य द्रोण्यां महात्मनो वरुणस्य ऋतुमदाख्यम् उद्यानवनमस्ति कल्पभूतं सुरयोषितामाक्रीडं विहारस्थानम् ॥ ९ ॥

नित्यं फलानि पुष्पाणि च येषां तैर्द्रुमैः परितोऽलङ्कृतं द्रुमानेव कांश्चिद्दर्शयति-मन्दारैरिति । मन्दारादिभिर्वृतः वनप्रदेशापेक्षया पुंल्लिङ्गनिर्देशः । तस्मिन्नुद्याने सरोऽस्ति कथम्भूतं सुविपुलं विस्तृतं लसन्ति काञ्चनमयानि पद्मानि यस्मिन् ॥ १०—१४ ॥

कुमुदादीनां श्रियोर्जितं समृद्धं मत्तैर्मधुपानमत्तैः षट्पदैः भृङ्गैः कलो मधुरः स्वनो येषां तैः शकुन्तैः पक्षिभिश्च निर्घुष्टं ध्वनितम् ॥ १५ ॥

हंसैः कारण्डवैश्चाकीर्णं सङ्कुलं चक्रवाकैः सारसैरप्याकीर्णं समस्तेनाप्याकीर्णपदेन प्रधानत्वात्सापेक्षत्वाच्चान्वयः जलकुक्कुटादीनां कुलैः कूजितं कलेति पाठान्तरं तत्र कलं मधुरं भवति यथा तथा कूजितम् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आक्रीडं क्रीडारङ्गम् ॥ ९ ॥

चूतोऽङ्कनाप्रियः प्रियालः स्फुटोनाम वृक्षः द्रुमिलदेशभवः चूतो वा आम्रः पिकोद्दरो माकन्दनामा स चूतः आम्रातकः आम्रवृक्षः सालः सर्जविशेषः अरिष्टो वृहत्पत्रः पिचुमन्दविशेषः किंशुकः पलाशः ॥ १०—१२ ॥

पिचुमन्दः सूक्ष्मपत्रः रोमशनामा वा सरलः क्षीरवृक्षः गुग्गुलुर्वा ॥ १३—१७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऋतुमन्नाम उद्यानमास्ते ॥ ९ ॥

मन्दारादिभिर्वृत इति पुंल्लिङ्गनिर्देशेन गिरिवर्णने व्याख्यायमाने तस्मिन् सर इत्यत्र तत्पदेन प्रक्रान्ते गिरावेवोच्यमाने तत्रत्यसरसि गजेन्द्रावगाहनादिकथायां सत्याम् ऋतुमन्नाम्नो वरुणोद्यानस्य वर्णनमप्रस्तुतत्वाद्व्यर्थं स्यात्तस्मात् वृत इत्यार्षत्वादावृतमित्युद्यानविशेषणमेव व्याख्येयम् ॥ १०—१६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

“ये मां त्वाञ्च सरश्चेदम्”इत्यादिना गिरिवनादिकं सर्वं विधेयमिति वनमास्ते ॥ ९ ॥

पुनर्गिरं वर्णयति—मन्दारैरिति, चतुर्भिः । मन्दारादिभिर्वृत इति चतुर्णामन्वयः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

(१) कलमिति पाठान्तरम् ।

मत्स्यकच्छपसञ्चारचलत्पद्मरजः पयः ।
कदम्बवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥
कुन्दैः कुरवकाशोकैः शिरीषैः कुटजेङ्गुदैः ।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥
मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ।
शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलन्द्रुमैः ॥ १९ ॥
तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ।
*सकण्टकान्कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन्वनस्पतीन् ॥ २० ॥
यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ।
महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन्सरो वर्णयति—तस्मिन्निति, सार्द्धैः पञ्चभिः । तस्मिन् गिरौ सुविपुलं सर आसीद् वसन्ति काञ्चनपद्मानि यस्मिन् ॥ १४ ॥

कुमुदानां श्रिया शोभया ऊर्जितं समुन्नम मत्तैः षट्पदैः भ्रमरैः कलो मधुरः स्वनो येषां तैः शकुन्तैश्च निर्घुष्टं नादितम् ॥ १५ ॥

हंसैः कारण्डवैराकीर्णं चक्राह्वैः सारसैरप्याकीर्णम् जलकुक्कुटादीनां कुलैः समूहैः कूजितम् ॥ १६ ॥

---

भाषा टीका ।

उस पर्वत की गुहा में महात्मा भगवान् वरुण का भी एक ऋतुमान् नामवाला बगीचा है, वह भी एक देवस्त्रियोंके खेलने का स्थान है ॥ ९ ॥

और सदा दिव्य पुष्प फल वाले द्रुमों से अलंकृत रहता है वे द्रुम कौन से हैं, कि—मंदार, पारिजात, पाटल, अशोक, चंपक, ॥ १० ॥

चूत, (यह एक आम की जाति है) प्रियाल, पनस, आम्र, आम्रातक, क्रमुक, नारिकेल, खर्जूर, बीजपूर, ॥ ११ ॥

मधुक, साल, ताल, तमाल, असन, अर्जुन, अरिष्ट, उदुम्बर, प्लक्ष, वट, किंशुक, चन्दन, ॥ १२ ॥

पिचुमन्द, कोविदार, सरल, सुरदारु द्राक्षा, इक्षु, रंभा, जम्बु, बदरी, अक्षामय, आमलक, ॥ १३ ॥

विल्व, कपित्थ, जंबीर, भल्लातक, इत्यादि द्रुमों से व्याप्त हो रहा है उस पर्वत, के विषै एक बड़ा विशाल सरोवर है, जिस में कांचन के कमल खिले हुए हैं, ॥ १४ ॥

और कुमुद, उत्पल, कल्हार, शतपत्र, इत्यादि जाति के कमलों की शोभा से सुशोभित हो रहा है और मत्त भ्रमरों की गुञ्जार से तथा मधुर स्वर पक्षियों के कूजने से व्याप्त हो रहा है ॥ १५ ॥

तथा हंस, कारंडव, चक्राह्व, और सारस पक्षियों से भी व्याप्त हो रहा है, और जल कुक्कुट, कोयष्टि, दात्यूह, इन पक्षियों के समूहों से कूज रहा है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मत्स्यानां कच्छपानां च सञ्चारेण चलतां पद्मानां रजसा युक्तं पयो यस्मिंस्तत् ॥ १७—१८ ॥

नित्यमृतवः फलपुष्पादिसंपत्तिहेतवो येषां तैरलं शोभितम् ॥ १९ ॥

तत्रैवं सत्येकदा तद्गिरिकाननाश्रयो वारणयूथपः करेणुभिश्चरंस्तृषार्दितेन स्वयूथेन वृतः सरोवरस्य कस्याञ्चित् समीपमगमदिति पञ्चमेनान्वयः, किंकुर्वन् कीचकवेणुवेत्रवन्तं विशालं गुल्मं लतादिसन्दर्भं वनस्पतींश्च प्ररुजन्प्रभञ्जन् ॥ २० ॥

कथम्भूतः यस्य गन्धमात्राद्धरयः सिंहा गजेन्द्रादयश्च भयाद्द्रवन्ति पलायन्ते ॥ २१ ॥

* सकचदकमिति, वीर० विज० ।

वृकावराहामहिषर्क्षशल्या गोपुच्छसालावृकमर्कटाश्च ।
अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥
स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥
सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः ।
वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद्द्रुतम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृकादयः क्षुद्रा अल्पाः प्राणिनोऽन्यत्र तद्दृष्टिपथं त्यक्त्वा चरन्ति ॥ २२ ॥

पुनः कीदृशः घर्मतप्तः मदच्युन्मदस्रावी मदमश्नन्तीति तथा तैः ॥ २३ ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मत्स्यानां कच्छपानां च सञ्चारेण च चलतां चलानां पद्मानां रजसा युक्तं पयो जलं यस्मिन्कदम्बादिभिर्युतम् ॥ १७ ॥

कुन्दादिभिः शोभितम् इत्युत्तरेणान्वयः ॥ १८ ॥

नित्यमृतवः फलपुष्पादिसम्पत्तिहेतवो येषां तैरन्यैश्च तीरजैः द्रुमैरलमलङ्कृतमलमत्यर्थं शोभितमितिवाऽन्वयः ॥ १९ ॥

तत्रैवं स्थिते एकदा तद्गिरिकाननाश्रयः वारणयूथपः गजेन्द्रः करेणुभिर्गजीभिः चरन् तृषार्दितेन स्वयूथेन वृतस्तस्य सरोवरस्याभ्याशं समीपमगमदिति पञ्चमेनान्वयः । किंकुर्वन् कण्टकैः सहितं कीचकवेणुवेत्रवन्तं विशालं गुल्मं लतादिसन्दर्भं वनस्पतींश्च प्ररुजन्प्रभञ्जन् ॥ २० ॥

तमेव विशिनष्टि—यस्य गजेन्द्रस्य गन्धमात्राद्वायुप्रसारमात्रात् सिंहप्रभृतयः मृगाः प्रतिपक्षिणो गजाश्च भयात् पलायन्ते ॥ २१ ॥

अन्ये क्षुद्रा हरिणादयो मृगास्तु यस्य गजेन्द्रस्यानुग्रहेणानुध्यानेनाऽभीता निर्भयाश्चरन्ति चेरुः ॥ २२ ॥

स गजेन्द्रः घर्मेणातपेन तप्तः मदस्राविकरिभिः करेणुभिः कलभैश्चानुद्रुतः मदस्राविभिः कलभैश्चानुद्रुत इति वा गरिम्णा स्थौल्येन गिरिं प्रकम्पयन् मदमश्नन्तीति तथा तैरलिकुलैर्निषेव्यमाणः ॥ २३ ॥

सरसः सम्बन्धिनमनिलं वायुं पङ्कजरेणुभिरूषितं व्याप्तं विदूरादेव जिघ्रन्मदेन विह्वले चलिते ईक्षणे यस्य तृषा पिपासयाऽर्दितेन पीडितेन स्वयूथेन वृतः तत्सरोवराभ्याशं द्रुतं सत्वरमगात् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अशोकः सितरक्तपुष्पभेदेन द्विविधः कुरवकः कुटजः कुब्जकं भ्रमरीपुष्पं स्वर्णकृतमाषः कमलात्पृथक् ॥ १८ ॥

शतपत्रं ज्ञालकं मत्कुणिका लता "अलन्द्रुमः स विज्ञेयो नित्यपुष्पफलो द्रुमः" इत्यभिधानम्. तस्मिन्नुद्याने सरोवरोऽस्तीत्यन्वयः । तत्रोद्याने तत्सरोवराभ्याशमागादित्यन्वयः ॥ १९ ॥

सकण्टकं विशालगुल्मं वनस्पतींश्च प्ररुजन् ॥ २० ॥

हरिप्रभृतिमर्कटान्ताः यस्य गन्धमात्रात् अद्भुतभयात् द्रवन्तीत्यन्वयः । खड्गो मृगविशेषः व्याघ्रमृगः सर्पाकारो मृगः उक्तेभ्योऽन्ये ह्रस्वक्षुद्रा हरिणादयो मृगविशेषा यदनुग्रहेणाऽभीताश्चरन्ति सिंहादिभयराहित्यात् ॥ २१—२३ ॥

सरःसम्बन्धिवायुम् ॥ २४—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रैकदेति पञ्चकम् ॥ २०—३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मिन्नुद्याने सर आस्ते तद्वर्णयति—सार्द्धैः पञ्चभिः । शकुन्तैः पक्षिभिः सहितम् मत्स्यानां कच्छपानां च सञ्चारेण चलतां पद्मानां रजसा युक्तं पयो यस्मिंस्तत् नित्यमृतवः फलपुष्पादिसम्पादनार्थं येषु तैः ॥ १७—१९ ॥

तत्रैकदा वारणयूथपः अगमदिति पञ्चमेनान्वयः । किङ्कुर्वन् करेणुभिश्चरन् स्वभक्ष्यं भुञ्जानः कीचकवेत्रवन्तं विशालं गुल्मं प्ररुजन् प्रभञ्जन् ॥ २० ॥

हरयः सिंहाः ॥ २१ ॥

यदनुग्रहेण तु वृकाद्याः क्षुद्रा अपि चरन्ति किन्त्वन्यत्र दृष्टिपथं त्यक्त्वा ॥ २२-२४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्स्यकच्छपसञ्चारेण चलतां पद्मानां रजसा युक्तं पयो यत्र तत् कदम्बादिभिर्वृतमावेष्टितम् ॥ १७ ॥

कुन्दादिभिरलं शोभितमित्युत्तरेण सम्बन्धः ॥ १८ ॥

विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृतं ह्यात्मानमद्भिः स्नपयन्गतक्लमः ॥ २५ ॥
स्वपुष्करेणोद्धृतशीकराम्बुभिर्निपाययन् संस्नपयन्यथा गृही ।
*घृणी करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥
तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ।
यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥
तथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥
नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन्महीपते ! सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नित्यमृतुः फलपुष्पादिसम्पत्तिसमयो येषां तैः ॥ १९ ॥

यत्रैवं स्थिते एकदा वारणयूथपः सरोवराभ्याशमगमत् इति पञ्चमेनान्वयः । किं कुर्वन् करेणुभिर्गजीभिश्चरन् कीचकवेणुवेत्रवन्तं विशालं विपुलं गुल्मं लतादिसमूहं सकण्टकान् वनस्पतींश्च प्ररुजन् प्रभञ्जन् ॥ २० ॥

कीदृशः यस्य गन्धमात्रात् हरिप्रभृतयः भयाद्द्रवन्ति पलायन्ते तत्र व्यालाः दुष्टगजाः दुष्टसर्पाश्च "व्यालो दुष्टगजे सर्पे" इति मेदिनीकारकोशात् ॥ २१ ॥

क्षुद्राः अल्पप्राणिनो वृकादयः अस्यत्र गजपातिकूल्यासन्ध्यादके प्रदेशे यस्यानुग्रहेण अन्येभ्यो भीताश्चरन्ति ॥ २२ ॥

घर्मेणातपेन तप्तः मदच्युत् मदस्रावी मदमश्नन्तीति तथा तैर्गन्धिना स्थौल्येन ॥ २३ ॥

पङ्कजरेणुभिः रूषितं व्याप्तं सरसोऽनिलं दूरात् जिघ्रन् सरोवरस्य अभ्याशं निकटम् ॥ २४ ॥

भाषा टीका ।

और मच्छ कच्छों को संचार ( चलने ) से चलायमान हो रहा है कमल रज वाला जल जिस में, और फिर वह तड़ाक चारों तरफ से वेतस, नल, नीप, और वंजुलक के वृक्षों से घिर रहा है ॥ १७ ॥

और कुन्द, कुरवक, अशोक, शिरीष, कुटज, इंगुद, कुब्जक, स्वर्णयूथी,(पीत चमेली)नाग, पुन्नाग,जाति, इन वृक्षोंसे॥१८

तथा मल्लिका और शतपत्र अर्थात् शतदल कमलों से शोभित हो रहा है, और माधवी लताओं के जालों से तथा तीर पर उत्पन्न होने वाले और सदा फल पुष्पों की संपत्ति वाले ऐसे अन्य वृक्षों से भी अति शोभित है ॥ १९ ॥

ऐसे उस तड़ाक पर उस गिरि के कानन में रहने वाला हाथियों का यूथपति, हथिनियों सहित और तृषा से व्याकुल ऐसे अपने यूथ सहित उसी सरोवर के किनारे पर शीघ्र आया, और क्या करता हुआ आया, कि कंटकों सहित कीचक वेणु, वेत्र, और विशाल गुल्म लतादिकों को भंगकरता ( तोड़ता खींचता ) हुआ आया ॥ २० ॥

फिर वह हस्ति यूथपति कैसा है, कि—जिसके गन्धमात्र से बड़े २ सिंह बड़े २ गजेन्द्र और व्याघ्रादिक भयंकर जन्तु मारे भय के भाग जाते हैं, तथा व्याल, मृग, खड्ग, महोरग, तथा गौर कृष्ण रंग वाले शरभ और चमरी ( सुरागाय ) ये भी जिसके गन्धमात्र से भय भीत होकर भाग जाते हैं ॥ २१ ॥

तथा वृक, वराह, महिष, ऋक्ष, शल्य, गोपुच्छ, शालावृक, और मर्कट, ये सब भी जिसके भय से भाग जाते हैं, और जो छोटे२ क्षुद्र जन्तु हैं हरिण, शश, आदिक सो जिसके अनुग्रह से निर्भय चरते हैं ॥ २२ ॥

वही गजेन्द्र घर्म से तप्त होकर अपने यूथ के हाथी और हथनियों के सहित, मद जिसके चुचाता हुआ है, पीछे से छोटे २ बच्चे जिसके दौड़े हुए आ रहे हैं, अपने भारी बोझ से चारों तरफ से पर्वत को कम्पाता हुआ, और मदके भोजी भ्रमरों के झुण्ड से व्याप्त हो रहा ॥ २३ ॥

कमल के पराग वाले तड़ाक के पवन को दूरसे ही सूंघता हुआ, और मद से विह्वल नेत्र वाला, ऐसा वह गजेन्द्र अपने यूथ सहित उस सरोवर पर पहुँचा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निजेन पुष्करेण करायेणोद्धृतम् गतक्लमस्सन्निकामं पपौ ॥ २५ ॥ २६ ॥ २७ ॥

* घृणाम्, इति पाठः ॥ २० ॥

ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः ॥ ३० ॥
इत्थं गजेन्द्रः स यदाप सङ्कटं प्राणस्य देही विवशो यदृच्छया ।
अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥
न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ।
ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३२ ॥
यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे पारमहंस्यां संहितायाम्
वैयासिक्यां मन्वन्तरानुवर्णने गजेन्द्रोपाख्याने
द्वितीयोऽध्यायः ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दीनधियः करेणवस्तं केवलं विचुक्रुशुः ॥ २८ ॥ २९ ॥

मन उत्साहशक्तिर्बलं शारीरमोज ऐन्द्रियं तेषाम् सकलं बलादिविपर्ययो विपरीतमधिकम् जलौकसो ग्राहस्य ॥ ३० ॥

स इत्थं यदा प्राणस्य सङ्कटमाप यतो देही ॥ ३१ ॥

बुद्धिमेवाऽऽह—नमामिति । अहं न च प्रभवामि यतो ग्राहरूपेण केवलं विधातुः पाशेनावृतस्तथापि तं परं परमेश्वरं परेषां ब्रह्मादीनामयनमाश्रयभूतं शरणं यामि ॥ ३२ ॥

कोऽसौ? यं शरणं यासि तत्राऽऽह—यः कश्चनेति । अन्तक एवोरगस्तस्मात् तं शरणमीमहि व्रजेम यद्भयादित्यत्र श्रुतिः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मिन् सरसि विगाह्य प्रवेशपूर्वकं विलोक्य कल्हारादीनां रेणुभिर्वासितं परिमलितं निर्मलममृताम्बु स्वपुष्करेण तुण्डाग्रेणोद्धृतं कामं यथेष्टं पपौ अपिबत् आप्लुतः सरोजलेनात्मानं स्नपयन् गतश्रमो बभूव गतक्लमः पपाविति वान्वयः ॥२५॥

स्वपुष्करेणोद्धृतैः शीकराम्बुभिर्जलबिन्दुभिः सुमेधान् कलभान् करिपोतकान् करेणूश्च यथा गृही गृहाधिकस्तथा कृपावान् निपाययन् संस्नपयंश्च गृणाम्बृंहितं कुर्वन् अजमायया भगवन्मायया यदागते कृच्छ्रं दुःखं तन्नाचष्ट नालोचितवानित्यर्थः ॥ २६ ॥

कृच्छ्रमेव दर्शयन्नाह—स इति । हे नृप ! तत्र सरसि दैवेन प्रारब्धकर्मानुगुणं प्रवृत्तेनेश्वरेण चोदितः कश्चिद्बलीयान् ग्राहो मकरः तं गजेन्द्रं चरणे पादे रुषा क्रोधेनाऽग्रहीज्जग्राह यदृच्छया दैवात्प्राप्तं व्यसनं दुःखं गतः प्राप्तः सोऽतिबलः गजेन्द्रो यथाबलं विचक्रमे त्याजयितुं पराक्रममकरोत् ॥ २७ ॥

तदा बलीयसा ग्राहेण तरसा बलेन विकृष्यमाणमत एवातुरं दुःखितं गजेन्द्रंप्रति दीनधियः करेणवो विचुक्रुशुः रुरुदुः पार्ष्णिग्राहाः पृष्ठत उपोद्बलका अन्ये गजास्तारयितुं दुःखात्तारयितुं मोचयितुं नाशक्नुवन् ॥ २८ ॥

हे महीपते ! इत्थं गजेन्द्रग्राहयोर्मिथोऽन्तरतो बहिश्च विकर्षतोस्सतोः सहस्रं समाः संवत्सराः व्यगमन्नतिक्रान्ताः बभूवुः सप्राणयोः तयोः समानबलयोः तद्विकर्षणरूपं कर्म तदा सुराः चित्रं विचित्रं मेनिरे ॥ २९ ॥

ततः सहस्रसमानन्तरं दीर्घेण भूयसा कालेन जले विकृष्यमाणस्याऽत एवाऽवसीदतः खिद्यतः गजेन्द्रस्य मनआदीनां व्ययः क्षयोऽभूत्, तत्र मनः उत्साहशक्तिः बलं शारीरमोज ऐन्द्रियं अवमोक आश्रमो यस्य तस्य ग्राहस्य तु इदं हेतुगर्भं सकलं मन आदिकं विपर्ययोऽभूदधिकमभूदित्यर्थः ॥ ३० ॥

स गजेन्द्र इत्थं प्राणस्य सङ्कटं संशयं यदा प्राप, यतः सोऽपि देही देहभृत्तदा विवश आत्मनः स्वस्य मोक्षणे ऽपारयन्नसमर्थस्सन् चिरं दध्यौ चिन्तितवान् अथ चिन्तानन्तरम् इमां वक्ष्यमाणां बुद्धिमभ्यपद्यत कृतवान् ॥ ३१ ॥

तामेवाह—नेति । आतुरं पीडितं मामिमे ज्ञातयो गजा एव मोचितुं न प्रभवन्त्यहं तु प्रभुरेव न कुतः करिण्यः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रभवेयुः ? अतो विधातुर्दैवस्य पाशरूपेण ग्राहेणाऽऽवृतोऽहं तमेव विधातारं केवलं परम उत्कृष्टमयनं शरणं रक्षणोपायं याऽप्यन्यवस्यामीत्यर्थः । वत्सकुलपाल्मवायं ग्राहग्रहस्तमेव शरणं व्रजामीत्यर्थः ॥ ३२ ॥

कोऽसौ शरण्यः ? विधातेत्यत्राह—य इति । बलिनोऽन्तं करोतीत्यन्तकः "अन्येष्वपि दृश्यते" इति डः अन्तको मृत्युः स एव उरगः महासर्पः तस्मात् प्रचण्डवेगात् दुस्सहवेगादभिधावतो निमित्ताद्भृशं नितरां भीतं प्रपन्नं च यः कश्चन योऽयमीशः परिपाति यस्य भयान्मृत्युरपि प्रधावति तदाज्ञिप्तस्वव्यापारे प्रवर्तते तमरणं शरणम् ईमहि प्राप्नुयाम यद्वा यः कश्चनेशः अवश्यं यः कश्चित् ईश्वरो भविता कोऽसौ योऽन्तकोरगाद्भीतं प्रपन्नं परिपाति यस्य भयान्मृत्युः प्रधावति तं शरणं व्रजेमेत्यर्थः । ईश इति सप्तम्यन्तपाठोऽपि दृश्यते तदा यस्येशे ईशने यः कश्चिन्नास्ति "न तस्येशे कश्चन" इतिश्रुतेः यश्च मृत्युभयाद्भीतं प्रपन्नं परिपाति यस्य च भयान्मृत्युः प्रधावति "मृत्युर्धावति पञ्चमः" इति श्रुतेः तमरणमीमहीत्यर्थः । इति बुद्धिमङ्ग्यपद्यतेत्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे नृप ! पादाक्रान्तिनिमित्तरूपा यथाबलं यथाशक्ति विचक्रमे विक्रमं कृतवान् ॥ २७–२९ ॥

इन्द्रियादीनामवसादनप्राप्तावुत्तम्भनशक्तिः सहः प्राणशक्तिः बलं शरीरसामर्थ्यमोजः ॥ ३० ॥

अपारयन्पारङ्गन्तुमशक्तः ॥ ३१ ॥

कर्मबन्धपाशेन ग्राहेण रुद्धः उपद्रवं प्राप्तः विधातुर्दैवान्मोक्षितुम् ॥ ३२ ॥

कश्चन लोकविलक्षणः य ईशः बलिनोऽन्तकाख्यसर्पाद्भीतं प्रपन्नं प्रपाति यस्य भयान्मृत्युरन्तको दुर्गा वा प्रधावति "मृत्युर्धावति पञ्चमः" इति श्रुतेः । तमीशमरणं शरणमीमहि प्राप्नुम इत्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मिन्नेव सरोवरे अभ्यासो यस्य तद्ग्राहस्यास्तथेति तत्राऽवगाहनादौ निहताकृतत्वं व्यञ्जितं निजेन पुष्करेण कराग्रेण ॥ २५ ॥

करेणुः स्त्रीः कलभान् सुतांश्च स्नपयन् ॥ २६–२७ ॥

ग्राहेण विकृष्यमाणं तं दीनधियः करेणवः केवलं चिचुक्रुशुरेव, पार्ष्णिग्रहास्तदुद्धरणे साहाय्यवन्तः ॥ २८ ॥

अलौकिको ग्राहस्य निपर्ययः बलादीनां व्ययस्याभावः प्रत्युताधिक्यमित्यर्थः । सकलं सर्वं यथा स्यात्तथाऽभूत् विपर्ययस्योत्पत्तिः सम्पूर्णेनैव न त्वंशेनेत्यर्थः ॥ २९–३० ॥

दध्यौ किमिदं मे कर्मेति यदा परामर्शं तदा इमां बुद्धिं सहसैव प्राप ॥ ३१ ॥

बुद्धिमेवाह—न मामिमे गजा अपि मोक्षितुं मोचयितुं प्रभवन्ति करिण्यः कुतः, यतो ग्राहरूपेण विधातुः पाशेनाऽऽवृतः तदपि परं परमेश्वरं परायणं परममाश्रयं शरणं यामि । अहं चेति, यद्यप्यहं पशुत्वादज्ञस्तदपीत्यर्थः ॥ ३२ ॥

कोऽसौ यं शरणं यासीति तत्राह—य इति । यद्भयादित्यत्र श्रुतिः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमस्य द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् आत्मानमद्भिः स्नपयन् विगाह्य विलोक्य गतक्लमः श्वसन् निजपुष्करेण कराग्रेणोद्धृतममृताम्बु अमृतवत्स्वादु जलं निकामं यथेष्टं पपौ ॥ २५ ॥

गृही दयावान् स्वपुष्करेणोद्धृतैः शीकराम्बुभिः करेणूः स्वभार्याः कलभान् पुत्रांश्च संस्नपयन् निपाययन् कृच्छ्रं यथा गृही न पश्यति मायया, यतोऽसमायया कृपणो दुर्मदश्च ॥ २६ ॥

तदेव कृच्छ्रं दर्शयति—तमिति ॥ २७ ॥

आतुरं प्रति दीनधियः करेणवः केवलं विचुक्रुशुः रुरुदुः अपरे गजाः पार्ष्णिग्रहाः साहाय्यकर्तारस्तारयितुं नाशक्नुवन् ॥ २८ ॥

एवं नियुध्यतोः समप्राणयोः समबलयोः अन्तरतः बहिश्च मिथो विकर्षतः सहस्रं समाः संवत्सराः व्यगमन् ॥ २९ ॥

ततस्तदनन्तरं दीर्घेण कालेन जले विकृष्यमाणस्याऽप्रधानसादितो गजेन्द्रस्य मनःप्रभृतीनां व्ययोऽभूत् । तत्र मनः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्तःकरणसामर्थ्यं बलं देहसामर्थ्यम् ओज इन्द्रियसामर्थ्यम् जलौकसः ग्राहस्य तु सकलं मन आधिकप्राप्त विपर्ययः व्ययाभावोऽभूत ॥ ३० ॥

स इत्थं प्राणस्य सङ्कटं मरणभयं यदाऽवाप तदा विवशः आत्मनो विमोक्षणे अपारयन् असमर्थस्सन् चिरं दध्यौ अथानन्तरमिमां बुद्धिमभ्यपद्यतेत्यन्वयः ॥ ३१ ॥

तां बुद्धिं दर्शयति-नेति । आतुरं माम् इमे ज्ञातयो विमोचितुं न प्रभवन्ति अहञ्च न प्रभवामि करिण्यः कुतः प्रभवन्ति अतो यस्य विधातुः कर्मफलदस्य पाशेनावृतस्तं परं परमेश्वरं परेषां ब्रह्मादीनामयनमाश्रयं शरणं यामि ॥ ३२ ॥

कः सः यं शरणं यासीत्याकाङ्क्षायामाह-अन्तं करोतीत्यन्तको मृत्युः स एव उरगस्तस्मात् उरगात् ग्राहात् प्रचण्डो भयङ्करो वेगो यस्य तस्मात् भीतमत एव प्रपन्नं शरणापन्नं कश्चनेशो दुर्जयप्रभावः परिपाति तमरणं शरणमीमहि व्रजेम यस्य भयान्मृत्युः प्रधावति, तथाच श्रुतिः " भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम " इति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाऽध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका ।

और पहुँचते ही उस तटाक में घुसकर अच्छेप्रकार अवगाहन ( झकोर ) कर अमृत सदृश स्वादु और हेमारविन्द के पराग से वासित उस निर्मल जल को अपनी शुण्डा से भर२ कर स्नान करता हुआ पीने लगा, इसीसे उसकी सम्पूर्ण ग्लानि दूर हुई ॥ २५ ॥

गृहस्थ जैसे हो तिसप्रकार अपनी शुण्डा भर२ कर अपनी हथिनियों को और छोटे२ बच्चों को जल पिवाता हुआ और स्नान कराता हुआ वह दुर्मद जल क्रीडा में लग गया, और उस कृपणने अज ( ईश ) की माया से प्राप्त हुए सङ्कट को नहीं देखा ॥ २६ ॥

हे नृप ! उस गजेन्द्र को उस तडाक में दैव प्रेरित किसी एक बडे बलिष्ठ ग्राहने रोष से चरण में पकड लिया, तब वह गज भी यदृच्छा से ही बडे व्यसन ( कष्ट ) को प्राप्त हुआ, और उस अति बलिष्ठ गजने अपने बलके अनुसार पराक्रम किया ॥ २७ ॥

पर जब उस गजयूथपति को बलिष्ठ ग्राह वेगसे खींचने लगा, और गज अति आतुर हुआ, तब विचारी दीन मन्दबुद्धिवाली हथिनियें आक्रोशकरने (चिंघाडने) लगीं और जो बडे२ गज लोग रहे वोभी सब गजेन्द्र को पकड कर बाहर को खींचने लगे परञ्च तारने ( तीरपर खींचलेने को ) समर्थ नहीं हुए ॥ २८ ॥

इस प्रकार गजेन्द्र और नक्र ( ग्राह ) को युद्ध करते२ तथा दोनों को परस्पर बाहर और भीतर को खींचते२ । हे महीपते ! एक हजार वर्ष व्यतीत हो गये, परञ्च तथापि दोनो के प्राण बने रहे इस बातको देखकर देवताओं ने बडा आश्चर्य माना ॥ २९ ॥

तब तो जल में खिंचने से दुःख पाते हुए गजेन्द्र का भी उत्साह और शरीर का बल तथा इन्द्रियों का बल अति दीर्घ काल व्यतीत होने से सब नष्ट हो गया, और जलचर होने से ग्राह का बलादिक सब अधिक ही होता गया ॥ ३० ॥

इस प्रकार वह गजेन्द्र, देहधारी होने से जब सङ्कट को प्राप्त भया और विवश होने से अपने मोचन ( छुडाने ) को जब समर्थ न हुआ, तब चिन्ता करने लगा, और फिर उसको ऐसी बुद्धि आई ॥ ३१ ॥

कि जब ये मेरे ज्ञाति के गज लोग, आतुर ऐसे मेरे लिये छुडाने को समर्थ नहीं हैं, फिर विचारी हथिनियें कहां से समर्थ होंगी, अब मैं इस ग्राह रूप विधाता के पाश बंधा हुआ भी उसी ब्रह्मादिकों के परम आश्रय के शरण आऊं ॥ ३२ ॥

जो कोई ईश, बडे बलिष्ठ प्रचंड वेग वाले, तथा अत्यन्त ही चारों ओर दौडने वाले, काल सर्प से भयभीत शरणागत की रक्षा करता है, और जिसके भय से मृत्यु दौडता है, मैं भी उसी श्रीनारायण के शरण को प्राप्त होता हूं ॥ ३३ ॥

इति श्री मद्भागवत अष्टम स्कन्ध में द्वितीयाऽध्याय की,
भागवताचार्यकृत भाषाटीका समाप्त ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

—:*:—

## ॥ तृतीयोऽध्यायः ॥

श्रीशुक उवाच ।

एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥

गजेन्द्र उवाच ।

ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायादिबीजाय परेशायाभिधीमहि ॥ २ ॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥
यः स्वात्मनीदं निजमाययाऽर्पितं क्वचिद्विभातं क्व च तत्तिरोहितम् ।
अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये तु गजेन्द्रेण स्तुतो हरिरुपेत्य तम् ।
समुद्दधार तं ग्राहाद् ग्राहं देवलशापतः ॥ १ ॥

जाप्यं जप्यं स्तोत्रम् प्राग्जन्मनि इन्द्रद्युम्नसंज्ञे ॥ १ ॥

तस्मै नमो नमनमभिधीमहि अभिध्यायेम केवलम् प्राह्यगृहीतत्वेन कायप्रणतेरशक्यत्वात् अस्य तज्ज्ञानं सम्भावयितुं विशिनष्टि, यत्प्रसादेनेदं शरीरादिचिदात्मकं चेतनं भवति तदुक्तं "येन चेतयते विश्वम्" इति. तत्र हेतुः, पुरुषाय पूर्षु कारणत्वेन प्रविष्टाय ननु प्रकृतिपुरुषौ कारणमिति प्रसिद्धं तत्राऽऽह आदिः प्रकृतिः बीजं पुरुषस्तद्रूपाय प्रविष्टत्वेऽपि जीववत्पारतन्त्र्यं वारयति परेशायेति ॥ २ ॥

परमैश्वर्यं विवृण्वन्नाऽऽह यस्मिन्नाधिष्ठाने यत उपादानोद्यत कर्त्रा च स्वयमेवेदं विश्वं भवति यस्मात्कार्यात्परस्मात्कारणाच्च यः परस्तं स्वयम्भुवं स्वतःसिद्धं प्रपद्ये शरणं व्रजामि ॥ ३ ॥

विश्वहेतुत्वं स्वतःसिद्धत्वं चोक्तमिदानीं विश्वप्रकाशकत्वं स्वप्रकाशकत्वं च वर्णयन्प्रार्थयते-यः स्वात्मनीति। विभातमभिव्यक्तं क्वचित्प्रलये तिरोहितं लीनं सत् तदुभयं कार्यं कारणं च साक्षी सन्नीक्षते साक्षित्वे हेतुः अविद्धदृगलुप्तदृष्टिः आत्ममूलः स्वयं प्रकाशः कुतः परात्प्रकाशकाच्चक्षुरादेरपि परस्तस्यापि प्रकाशक इत्यर्थः। "चक्षुषश्चक्षुः" इत्यादिश्रुतेः ॥ ४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

"तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ! ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" ।

इति भगवदुक्तरीत्या पूर्वजन्माभ्यस्तं गजेन्द्रः पूर्वजन्माभ्यस्तं जजापेत्याह मुनिः-एवमिति । एवं नमामीत्यादिश्लोकद्वयोक्तरीत्या व्यवसितः निश्चितमनाः मनो हृदि समाधाय हृदयस्थं कृत्वा विषयान्तरेभ्यः प्रत्याहृत्य प्राग्जन्मनि इन्द्रद्युम्नाख्यजन्मन्यनुशिक्षितमभ्यस्तं परमं जप्यं स्तोत्रं जजाप ॥ १ ॥

जप्यमेवाह—ॐ इत्यादिना । तावत् "कारणं तु ध्येयम्" इति श्रुत्युक्तविधया जगत्सृष्ट्यादिकारणं प्रकृतिपुरुषविलक्षणं नमस्कृत्य शरणं व्रजति—ओमिति । "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्युक्तरीत्या ब्रह्मणो निर्देशपरः ओंकारः ब्रह्मण इत्यर्थः । ओंकाराभिप्रेतब्रह्मशब्दप्रवृत्तिनिमित्तगुणबृहत्त्वं भगवत इत्यनेन पूर्णषाड्गुण्यवाचिना स्पष्टीकृतम्. एवं कारणत्वोपयुक्तगुणयोग उक्तः एवंविधाय तस्मै भगवते नमस्कारो भगवान्स्यं नमस्करोमि इत्यत्र तं लक्षयंस्तज्ज्ञानं प्रतिजानीते—यतो भगवत एतच्चिदात्मकं चिन्मयं गुणकत्वेन तन्मात्मकं चिदचिदात्मकमिति यावत् यत एवमत आदिबीजाय परमकारणायात एव परेषां ब्रह्मादीनामपीशाय परमपुरुषायाभिधीमहि अभिध्यायेम ध्यायतेर्लिङर्थे छान्दसत्वादात्मनेपदे विकरणाभावे सम्प्रसारणे च रूपं "क्रियायामभिप्रैति सोऽपि सम्प्रदानम्" इति वचनेन यस्य शेत इत्यादाविव ध्यान-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्रियायाः सम्बन्धसामान्यविवक्षयैवा सम्प्रदानसंज्ञायां पुरुषायेति चतुर्थी. सत्यं परं धीमहीत्यादौ तु भाव्यमानत्वविवक्षया कर्मसंज्ञायां द्वितीया यत इति हेत्वर्थे पञ्चमी हेतुत्वं चाधिकरणोपादानकर्त्रादिसाधारणं ततश्च यस्मिन् यतः येनेति विवक्षितं तदन्वयानुगुणानि नीतजातरक्षितानि विपदान्यध्याजिहीर्षितानि ॥ २ ॥

तदेतत्सर्वमभिप्रेत्य विशदयन् शरणं व्रजति—यस्मिन्निति। इदं चिदचिदात्मकं जगद्यस्मिन् प्रलीनं सृष्टेरुपयपूर्वकत्वात् तदाधिकरणत्वसूचनाय तावद्यस्मिन्नित्युक्तं यत उपादानभूतात् सूक्ष्मचिदचिद्विशिष्टादेतत्स्थूलचिदचिद्विशिष्टात्मकं जगज्जातं येन कर्त्रा सृष्टं रचितं च येनेति तन्त्रेण सपृष्टं रचितृत्वं चोभयमपि विवक्षितं तथा यस्मिन्नित्यनेन सृज्यमानचिदचिदधिकरणत्वमपि विवक्षितं यत इदमित्यनेन जगद्ब्रह्मणोरुपादानोपादेयभाव उक्तः तत्कृतं तयोरितोऽनन्यत्वमाह—य इदं स्वयमिति। इदं सर्वं यदात्मकमित्यर्थः। उपादानत्वप्रयुक्तं विकारित्वं परिहरति, योऽस्मात्परस्माच्च पर इति. अस्मात्स्वरूपान्यथाभावमापद्यमानादचेतनजातात्परो विलक्षणः यः स्वभावान्यथाभावमापद्यमानो जीवः तस्माच्च परो विलक्षणः स्वरूपेण स्वभावेन च विकाररहितः चिदचिद्द्वारकत्वादिविकाराणामिति भावः। तमेवंभूतं स्वयम्भुवं स्वायत्तसत्तादिमन्तं न तु जीववदन्यायत्तसत्तादिमन्तमित्यर्थः प्रपद्ये शरणं गतोऽस्मीत्यर्थः। यद्यप्यत्र गत्यर्थेन पदिना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथापि प्रमाणानुसाराच्छरणमित्यत्र धीमहीति पूर्वत्र शरणशब्दपर्यायस्य रक्षणशब्दस्य प्रयोगाच्च प्रार्थनान्वितरक्षाभरन्यासं करोतीत्युच्यते तथा चोच्यते "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः" इति रक्षाप्रार्थनं तु समनन्तरश्लोकस्थवक्ष्यमाणपरात्परइत्यादिषु स्फुटम् इयं च गजेन्द्रेण विहिता प्रपत्तिर्मुक्त्यर्थैव न तु प्राणसंरक्षणार्था—

"गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः" ॥

इति तत्फलतया मुक्तेरेव वक्ष्यमाणत्वादिति भावः ॥ ३ ॥

यस्मिन्निदमित्यनेनाभिप्रेतं सृष्टिसंहारविषयचेतनाचेतनात्मकजगदधिकरणत्वं विवृण्वन् सृष्ट्याद्युपयुक्तसार्वज्ञ्यादिगुणयुक्तं रक्षायै प्रार्थयते—यइति। आत्मनि स्वस्मिन्नेव यः क्वचित्कदाचित् निजमायया स्वसङ्कल्पेन विभातं प्रकाशितं देवादिनामरूपविभागत्वेन प्रकाशितं क्वचिच्च तिरोहितं नामरूपविभागत्यागेन सूक्ष्मरूपतया प्रलीनमित्यर्थः। इदमुभयं कार्यावस्थं कारणावस्थं च चिदचिदात्मकं जगत् [illegible] निरयं सङ्कोचविकासादिरहितापरिच्छिन्नधर्मभूतज्ञानाश्रयः साक्षी सर्वज्ञश्च सर्वाक्षते स आत्ममूलः अनन्यकारणः परात्[illegible]प्रधानात्पराज्जीवात्परो विलक्षणः मामवतु परस्माच्च पर इत्य[illegible]उपादानत्वप्रयुक्तविकारप्रसङ्गपरिजिहीर्षयोक्तम् अत्र तु जीवा[illegible]रस्यापि स्वसरणत्वे स्वरक्षणास्वामर्थ्यसूचनायोक्तम् अवतु[illegible]प्रार्थिता रक्षाऽत्र यावदनिष्टपरिहारपूर्वकेष्टप्रापणरूपा सा च मुक्तिरेव ब्रह्मादिरो गजेन्द्रस्य

केवलप्राणमात्ररक्षाप्रार्थनानुपपत्तेः "जिजीविषे नाहमिह" इति "मादृक्प्रपन्नपशुपाशविमोक्षणाय" इति स्पष्टमुक्तेश्च अत एव सर्वज्ञो भगवान् तदभिप्रायमालोच्य मुक्तिमेवादादिति भावनीयम् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ध्यानपूर्वकस्तुत्याप्रसन्नाद्धरेर्गजेन्द्रस्य महापदो मोक्षो यथाऽभूत्तथा संसारमहापदपि मोक्षो भगवत्प्रसादेन स्यादिति प्रदर्शनाय तन्मोक्षप्रकारो निरूप्यतेऽस्मिन्नध्याये, किंप्रकारो गजेन्द्रः शरणमयासीदिति तं प्रकारं दर्शयितुमाह—एवमिति। जाप्यं मन्त्रं तिर्यग्योनेरनधिकारिणा एतदसम्भावितमिति तत्राह, प्रागिति ॥ १ ॥

एतच्चिदानन्दात्मकं चेतनजातं यतो यस्मादेवाभीष्टं तस्मै इति हिशब्देन पुरुषादिविशेषणानां "परात्परं पुरुषमुपैति दिव्यं"/"परात्परं पुरुषयं पुरुषमीक्षते" इतिश्रुतिसिद्धं दर्शयति ॥ २ ॥

मन्त्रोक्तविशेषणविवरणपूर्वकं ध्यानमाह—यस्मिन्निति। इदं जगद्यस्मिन्हरौ प्रतीयते "यत्प्रयन्ति" इति श्रुतेः। इदं यतो यस्मादेव जायते "यतो वा इमानि भूतानि" इति श्रुतेः। चशब्देनान्यस्मादुत्पादं निवारयति, इदं येन ब्रह्मणा प्रवर्तते "येन जातानि जीवन्ति" इति श्रुतेः। इदं विश्वं यः स्वयं प्राप्तसत्ताधिकः "सर्वं खल्विदं ब्रह्म" इति श्रुतेः। ननु यः स्वयमित्यनेन तादात्म्यं किं न स्यादिति तत्राह, अस्मादिति. अस्मात्प्रत्यक्षप्रपञ्चात्परस्मात्परोक्षान्मुक्तप्रपञ्चाच्च पर उत्तमो यस्तं स्वयम्भुवं स्वत एव प्राप्तसत्ताकं शरणं प्रपद्य इत्यन्वयः—

"उत्पन्नस्यापि यत्सत्ता हरेस्तत्स इतीर्यते ।
हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभुः" ॥

इतिवचनाच्च तादात्म्यमप्रोच्यते किमु ततः प्राप्तसत्ताकं जगदिति ॥ ३ ॥

पूर्वोक्तार्थं भेदस्पष्टीकरणाय विवृणोति—यः स्वात्मनीति। यो भवान् क्वचिज्जाग्रति विभातं क्व च सुषुप्तौ तिरोहितम् अप्रकाशितं तदुभयं तदिदं जगत् निजमायया स्वेच्छया स्वात्मनि स्वोदरे अर्पितमीक्षते? इत्यन्वयः। ननु, शरीरे स्थित्वा ईक्षते चेज्जीववल्लुप्तज्ञानत्वेनेक्षणायोगः स्यादिति तत्राह, अविद्धदृगिति. तर्हि कथमीक्षत इति तत्राह, साक्षीति. समामवतिदित्यन्वयः आत्मा स्वयमेव मूलं कारणं प्रतिष्ठा च सत्तावांस्तथा अनेन स्वयंभूशब्दो विवृतः "स्वे महिम्नि" इति श्रुतेः। "अक्षरात्परतः परः" इति च. क्वचिज्जन्तुमुखादौ विभातं क्वचास्मदादौ तिरोहितम् इति वा ॥ ४ ॥

---

**कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु[1] पालेषु च सर्वहेतुषु ।**
**तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥**

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नमो भगवत इत्यस्य टीकायां प्राक्गृहीतेत्यादि । यद्यपि प्राग्जन्मजप्यमस्य न सम्भवति । तथापि प्रस्तावबलादनेनात्र तथा भावितमिति ज्ञेयम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तृतीये मन्त्रतो विष्णुं जप्त्वाकृत्य हस्तिनम् ।
ग्राहं चक्रेण संछिद्य तं तच्छापात् कृपाम्बुधिः ॥
एवं व्यवसितं निश्चयो यस्य ॥ ॥ १ ॥

नमस्कुर्मः धीमहि ध्यायामश्च यतो यस्मात् नमस्करणात् ध्यानाच्च एतत् मायात्मकमपि जगत् स्थूलसूक्ष्मदेहमयं चिदात्मकं भवति पुरुषाय पुरुषाकाराय आदिबीजाय पुरुषाकारस्वेनैवादिकारणाय अतः परेशाय परमेश्वराय ॥ २ ॥

परमेश्वरस्य जगदुपादानादिकारणकलापत्वमाह—यस्मिन् इदं जगत् गृहे घटादिकमिव यतश्च कुम्भकारादिव येन चक्रदण्डादिनेव यः मृत्पिण्ड इव एवं चाऽस्य विश्वस्य स्वयमेव सर्वाणि कारणानि भवतीत्यर्थः । इदमित्यस्य पुनः पुनरुक्तिस्तदन्वयानुसारेणार्था वस्तु अस्मात् विश्वस्मात् परस्मात् विश्वकारणकलापाच्च परस्तं स्वयम्भुवं कृष्णरामादिरूपेण यः स्वयमेव भवतीत्यर्थः ॥ ३ ॥

किञ्चेदं कार्यकारणात्मकं जगद्दृष्टवानपि नः सत्यमेवास्तीति वदन् स्वपरप्रकाशकत्वमाह–य इति । निजमायया यदिच्छावशात् सृष्ट्वा सृष्ट्वा अर्पितं स्वात्मन्येव कदाचित्कल्पादौ विभातं क्व कदाचित् कल्पान्ते तिरोहितम् अविद्धदृक् अलुप्तदृष्टिरेव साक्षी सन्नीक्षते उभयं विभातं तिरोहितं च आत्ममूलः आत्मा स्वयमेव मूलं यस्य सः स्वप्रकाशः परात् प्रकाशकादपि परः "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इति श्रुतेः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गजेन्द्रस्तुतेन हरिणा ग्राहाद्गजेन्द्रस्य देवलशापाद्ग्राहस्य च विमोचनं कृतमित्याह–एवमिति तृतीयेन । एवं व्यवसितं व्यवसायो यस्य सः जाप्यं जप्यं स्तवम् प्राग्जन्मनीन्द्रद्युम्नभवे ॥ १ ॥

यतः कारणात् एतत् चिदात्मकं चिदचिदात्मकं चिदचिद्रूपं विश्वमुत्पद्यते तस्मै नमो नमनमभिधीमहि अभिध्यायेम केवलं न तु शरीरेण प्रणमामि परवशत्वात् । ननु, "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुषः" इति चिन्त्यमित्यनेकानि कारणानि श्रूयन्ते इत्यत आह——पुरुषायादिबीजायेति । आदीनां सर्वेषां कालादीनां कारणानां बीजाय परमकारणाय पुरुषाय अत एव परेशाय ॥ २ ॥

यस्मिन्धारके यत उपादानात् येन निमित्तेन य एवस्वयमिदं सर्वजन्मादिहेतुत्वात् "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति श्रुतेः । अस्मात् स्थूलात्प्रपञ्चात् परस्मात्सूक्ष्मरूपात् परो विलक्षणस्वरूपः स्वयम्भुवम् अनन्यसिद्धम् प्रपद्ये शरणं गच्छामि ॥ ३ ॥

यः अविद्धदृक् अनावृतज्ञानः अत एव साक्षी साक्षाद्द्रष्टा तदुभयमीक्षते इति क्वचित्सृष्टिसमये अभिव्यक्तनामरूपतया विभातं क्व क्वचित्प्रलयसमये अनभिव्यक्तनामरूपतया तिरोहितं यदिदं स्थूलसूक्ष्मरूपं विश्वम् । निजमायया स्वमयुनाऽऽत्मकेन सङ्कल्पेन स्वात्मनि धारके अर्पितम् तदुभयमीक्षते परात् देहेन्द्रियादिविलक्षणान्मम स्वरूपादुपासकात्परः समाभवतु ॥ ४ ॥

---

भाषा टीका ।

श्रीरुक्मिणीदेवीसमेतश्रीदेवकीनन्दनाय नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—हे राजन् ! गजेन्द्र ने ऐसा व्यवसाय ( निश्चय ) कर, बुद्धि से हृदय में मन का समाधान कर जो पहिले जन्म में सीखा था उसी परम जाप्य का जप करने लगा ॥ १ ॥

गजेन्द्र बोला, कि–उस भगवान् (षड्गुणसंपन्न) को नमस्कार है कि—जिससे यह चिदात्मक जगत् उत्पन्न हुआ है, पुरुष रूप, और इस जगत के आदि बीजरूप, और ब्रह्म रुद्रादि के भी नियन्ता, ऐसे भगवान का मैं ध्यान करता हूं ॥ २ ॥

जिस अधिष्ठान में यह जगत है, और जिस उपादान से यह जगत हुआ है, और जिस कर्त्ता ने इस जगतको बनाया है, और जो स्वयं आपही इस जगत् रूप है, और जो कार्य कारण दोनों से पर है, उस स्वयम्भू परमात्मा के मैं शरण प्राप्त हूं ॥ ३ ॥

अपने शरीर में अपनी माया से अर्पित कभी प्रादुर्भूत ( प्रकट ) कभी तिरोहित ऐसे विश्व को, और कार्य कारण को, निस्पृही अलुप्तदृष्टि वाला जो साक्षी होकर सदा देखता है, वह स्वयंप्रकाश परात्पर हमारी रक्षा करो ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तिरोहितमीक्षते इत्येतत्प्रपञ्चपूर्वकं दुर्ज्ञेयत्वं वदन् प्रार्थयते—कालेनेति द्वाभ्याम् । पञ्चत्वमितेषु नाशं प्राप्तेषु गहनं दुरवगाहम्

(१) लोकेषु इति विजय० पाठः ।

न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥
दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने*भूतात्मभूताः सुहृदः स मे गतिः ॥ ७ ॥
न विद्यते यस्य च जन्म कर्म वा न नामरूपे[1] गुणदोष एव वा ।
तथापि लोकाप्ययसम्भवाय यः स्वमायया तान्यनु[2]कालमृच्छति ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गभीरमनन्तम् तस्य तमसः "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ५ ॥

अत एव देवादयो यस्य स्वरूपं न विदुः जन्तुरर्वाचीनः कोऽपि गन्तुं ज्ञातुमीरितुं वक्तुं वा दुरत्ययं दुर्गममनुक्रमणं चरितं कथनं वा यस्य सः मा माम् ॥ ६ ॥

कथं तर्हि "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिः इत्याशङ्क्य तज्ज्ञानोपायं कथयन्नाऽऽह—दिदृक्षव इति । अलोकव्रतं ब्रह्मचर्यादि अव्रणमच्छिद्रम् भूतानामात्मभूता भूतेष्वात्मदृष्टयः सन्तः स मे गतिरस्तु ॥ ७ ॥

दुरत्ययानुक्रमणत्वं प्रपञ्चयन्प्रणमति—न विद्यत इत्यादिना । लोकानामप्ययः प्रलयः सम्भवो जन्म तयोर्द्वन्द्वैकवचनम् तदर्थं यस्तानि जन्मादीनि स्वीकरोति तस्मै नम इत्युत्तरेणान्वयः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कश्चित्तिरोहितमिदमीक्षते इत्युक्तं तज्जगत्तिरोभूय कां दशामापद्यते स च तद्दशायां कथम्भूतोऽवस्थित ईक्षते ? इत्यपेक्षायां तद्दर्शयति—कालेनेति । कालेन द्विपरार्धावसानरूपेण कालेन निमित्तेन सर्वस्य जगतो हेतुषु सर्वेषु हेतुषु वा पृथिव्यादितत्त्वेषु तत्कार्येषु लोकेषु तत्पालकेषु ब्रह्मादिषु च पञ्चत्वं लयमितेषु प्राप्तेषु सत्सु गहनमतिसूक्ष्मत्वात् दुरवबोधं गभीरं परिच्छेत्तुमशक्यम् अनन्तत्वान्नाऽपि परिच्छेत्तुमशक्यं निरतिशयसूक्ष्मदशापन्नत्वाहृतिभावः । एवंविधं तम आसीत् "नासदासीन्नो सदासीत्तदानीं तम आसीत्" इति श्रुतेः तमःशब्दो निरतिशयसूक्ष्मदशापन्नाचिद्द्रव्यवाची "अक्षरं तमसि लीयते तमः परे देव एकीभवति" इतिश्रुतेः । तदेवंभूतस्य तमसःपारे योऽभिविराजते पारोऽत्र पालनं नियमनं वा "पृ पालनपूरणयोः" इतिधात्वर्थानुरोधात् उक्तविधतमोनियमने कार्योन्मुखत्वापादनरूपे स्थित इति शेषः विराजते प्रकाशते न तु जीववत्संकुचितज्ञानो भवतीत्यर्थः ॥ ५ ॥

कश्चित् विभातमीक्षत इत्युक्तं कीदृशं तस्येक्षणम् ? इत्यपेक्षायां तत्तद्देवमनुष्याद्यवस्थाभिः सम्बन्धिनानाविधविचित्रकर्माऽनुगुणनियमनरूपत्वादित्थं तया दुरवबोधमिति वक्तुं तावत्तत्स्वरूपस्य दुर्ज्ञेयत्वात्तदीक्षणमपि दुरवबोधमेवेति दर्शयितुं स्वरूपस्य दुर्ज्ञेयत्वं वदन् तं स्वरक्षायै प्रार्थयते—न यस्येति । देवाः सत्त्वप्रचुराः "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" इत्यतीन्द्रियार्थदर्शनयोग्यत्वं सूच्यते ऋषयो योगिनः अनेनाऽपि तदेव सूच्यते एत एव यस्य पदं पद्यत इति पदं स्वरूपं न विदुरन्योऽर्वाचीनो जन्तुः प्राणी तत्पदं गन्तुं यथावद्बोद्धुम् ईरितुं वक्तुं च कः पुनरर्हति ? तत्र दृष्टान्तः, यथा आकृतिभिर्वेषैर्विचेष्टतो नटस्यायमसौ इति तत्स्वरूपमनज्ञाः न विदुस्तथेत्यर्थः । स एवं दुरवबोधस्वरूपोऽत एव दुरत्ययाऽनुक्रमणः दुर्गमव्यापारः इत्थं तया दुरवबोधनियमनरूपव्यापारयुक्तो मामवतु, यद्वा नटस्येवाकृतिभिर्देवादिविचित्रशरीरैर्विचेष्टतो जीवद्वारा विचेष्टनं यस्येति वाऽन्वयः आकृतिभिरवतारविशेषैः विचेष्टतो यस्येति वाऽर्थः ॥ ६ ॥

दुरवगमत्वोक्तिमसहमानमनुपास्यत्वशङ्कां निराचिकीर्षुस्तस्य नटस्येति दृष्टान्तसाधर्म्यलब्धं कैश्चित्सुबोधत्वं वदन् तस्यैव स्वरक्षोपायत्वमध्यवस्यति—दिदृक्षव इति । सुमङ्गलं नित्यसुखरूपं यस्य स्वरूपं दिदृक्षवः साक्षात्कर्तुमिच्छवो मुनयः विमुक्तः सङ्गो दारागारादिषु शब्दादिविषयेषु वा यैस्ते सुसाधवः अन्यैरपि साधूनां धर्मैर्युक्ताः भूतेषु उच्चावचेष्वात्मभूता आत्मतुल्यतां प्राप्ताः स्वात्मसमदर्शिनः सन्तो वनेऽरण्ये ऽव्रणमच्छिद्रमलोकव्रतमितरैर्जनैः कर्तुमशक्यं व्रतमुपासनात्मकं चरन्ति उपासनात्मकव्रतपरिशुद्धमनसा तत्पदं साक्षात्कुर्वन्त्येवेति भावः । तथा च श्रुतिः "हृदा मनीषा मनसाभिक्लृप्तः, दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति "तं दुर्दर्शं गूढमनुप्रविष्टं, यत्तदद्रेश्यमग्राह्यम्" "न मांसचक्षुरभिवीक्षते तम, न चक्षुषा पश्यति कश्चनैनम्" इत्याद्यदृश्यत्वश्रुतयस्तु योगापरिशुद्धमतिभिरग्राह्यत्वं वदन्तीति भावः । स एवंभूतो मे गतिः रक्षोपाय इत्यर्थः ॥ ७ ॥

एवं दृश्यत्वादृश्यत्वश्रुतीनां विषयविभागोऽर्थात् प्रदर्शितः अथ तुल्यन्यायतया "अजायमानः" "निष्कलं निष्क्रियं, 'तदरूपमनामकम्'" इत्यादिजन्मादिप्रतिषेधपराणां "बहुधा विजायते" 'यस्य चैतत्कर्म स वै वेदितव्यः' 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' 'हिरण्मयः पुरुषो दृश्यते" इत्यादीनां जन्मादिप्रतिपादनपराणां च श्रुतीनां विषयविभागं दर्शयन्नौति—नेति । यद्यपि यस्य जन्मादयो न

---

* सर्वात्मभूता इति विज० पा० । (१) गुणदोषमुतव चक्र० पा० । (२) कूलमिति विज० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सन्ति जीवस्येव कर्माधीनानि न सन्तीति भावः । तथापि लोकानां दुष्कृतामप्ययो विनाशः सम्भवः साधूनां परित्राणं तयोः समाहारस्तस्मै तदर्थं तानि जन्मादीन्यनुकाले "यदा यदा हि धर्मस्य ग्लानिर्भवति" इत्याद्युक्तकालेषु इत्यर्थः । स्वमायया ऽऽत्मीयसङ्कल्पेन ऋच्छति प्राप्नोति स्वीकरोति अकर्माधीनानि जन्मादीनि स्वेच्छयैवोपादत्त इत्यर्थः । तत्र दोषो विकारः इममेव विषयविभागमभिप्रेत्य वरदगुरुभिरयं श्लोकोऽभिहितः—

यद्ब्रह्मणो गुणशरीरविकारभेद—
कर्मादिगोचरविधिप्रतिषेधवाचः ॥
अन्योन्यभिन्नविषयानविरोधगन्ध—
मर्हन्ति तन्नविमयः प्रतिषेधबाध्याः" इति ॥

यस्तानि ऋच्छति स मे गतिरिति पूर्वेणान्वयः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परात्परत्वं स्पष्टयन् दुर्ज्ञेयत्वमाह—कालेनेत्यादिश्लोकत्रयेण । लोकेषु पृथिव्यादिभूतकार्येषु साकल्येन पञ्चत्वं पृथिव्यादिपञ्चभूतात्मतामितेषु सर्वहेतुषु पृथिव्यादिसर्वकारणेषु चशब्दात् महदादिषु लीनेषु स्वस्वकारणतामाप्तेषु सत्सु यत्तद्गहनं दुर्ज्ञेयं गभीरम् अत एवागाधं तम आसीत् यो विभुः तस्य तमसःपारे तमःसम्पर्करहितदेशेऽभिविराजते स्वतो नेत्याह, कालेनेति. कालनाम्ना हरिणा ॥ ५ ॥

देवादयो यस्य पदं न विदुरिति वदतः पुनः को जन्तुः तत्पदं गन्तुम् ईरितुं वक्तुमर्हतीत्यन्वयः हनुमदाद्याकृतिभिः तत्तदाकारानुसारेण विचेष्टमानस्य नटस्य स्वरूपं यथा न ज्ञायते तथेति स दुरत्ययानुक्रमणो दुर्ज्ञेयपरिक्रमणो हरिर्मामवत्वित्यन्वयः ॥ ६ ॥

हरेरेवंविधस्वरूपसद्भावे मानमाह—दिदृक्षव इति । असङ्गामसङ्गतम् अलोकव्रतं लोकैः कर्तुमशक्यं सृष्ट्यादिव्रतं यस्य स तथा तम् ॥ ७ ॥

देवदत्तवज्जन्माद्यभावाद्दुर्ज्ञेयत्वं युक्तमित्यभिप्रेत्याह—न विद्यत इति । आमधर्मादिदयामादिगुणवत्सर्वगुणो नास्ति दोषः कुत एव शब्देन "निरञ्जनो निरवद्यः" इति श्रुतिं सूचयति, सत्त्वादिनिमित्तदोषश्च नास्तीति वा दोषो नास्त्येव गुणयुतदोषश्च नास्तीति वा यद्यपि देवदत्तस्येव हरेर्जन्मादिकं नास्ति तथापि स्वमायया स्वमहिम्ना स्वेच्छया वा लोकस्य तदाश्रयप्राणिनां च सम्भवाय सुखादिप्राप्तिलक्षणजननाय तानि जन्मादीनि सर्जनादिकालमनुसृत्य ऋच्छति प्राप्नोतीत्यन्वयः लोकत्रय सम्भवायेति केचित्पठन्ति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालेनेति त्रिकम् । तस्य पारे महावैकुण्ठे ॥ ५ ॥

यथा नटस्येति तस्य तद्यथा साधारणैर्दुर्गमं तथेत्यर्थः ॥ ६ ॥

असङ्गमलोकव्रतं लोकातीतभागवतव्रतम् अत एवाव्रणम् "भावग्निमीढय वा नेत्र" इत्यादेः ॥ ७ ॥

नाविद्यत इति युग्मकम् । अयमर्थः अवस्थान्तरप्राप्तिर्विकारः । तत्र प्रथमो विकारो जन्मेति अपूर्वस्य निजपूर्वार्थचेष्टा कर्मेति मनोग्राह्यस्य वस्तुनो व्यवहारार्थं केनापि सङ्केतितः शब्दो नामेति । चक्षुषा ग्राह्यो गुणो रूपमिति सत्त्वादिप्राकृतगुणनिदानो द्रव्यस्योत्कर्षहेतुधर्मविशेषो गुण इति प्रकृतिजे लोके दृश्यते यस्य तु सर्वदा स्वरूपस्थत्वात् पुरोस्थाम्नतोऽप्यगोचरत्वात् स्व प्रकाशत्वात् प्रकृत्यतीतत्वात् तानि न विद्यन्ते तथापि यस्तानि ऋच्छति प्राप्नोति । तस्मै नम इत्युत्तरश्लोकद्वयेनान्वयः । अत एव श्रुत्यापि "निष्कलं निष्क्रियं शान्तम्" इत्यादौ अशब्दमस्पर्शमरूपादौ च तत्तन्निषिध्यापि "सर्वकामः सर्वगन्धः सर्वरसः" इत्यादौ विधीयते । गुणा दोष इति परमार्थत्वात् गुणा एव दोष इत्यर्थः । ततो रूढदोषस्तु सर्वथा न सम्भवत्येवेति व्यज्यते । तथा च कौर्मे "ऐश्वर्ययोगाद्भगवान् विरुद्धार्थोऽभिधीयते । तथापि दोषा परमे नैवाहार्याः कथञ्चन ॥ गुणा विरुद्धा अपि तु समाहार्याश्च सर्वतः" इति । "अयमात्माऽपहतपाप्मा" इत्याद्याः श्रुतिश्च । ननु कथं तेषां जन्मादीनां भावाभावयोर्विरोध इत्याशङ्क्य तदविरोधे हेतुमाह—मायया इति । अन्यथानुपपत्तिप्रमिता दुस्तर्कस्वरूपशक्तिरेव. तत्र हेतुः अत एव च स्वरूप भूतत्वेन तेऽपः प्राकृतेभ्यो विलक्षणत्वात्तान्यपि न विद्यन्त इत्यपि वक्तुं नशक्येत इति भावः । अत एव विष्णुपुराणे । "गुणांश्च दोषांश्च मुने व्यतीतः" इत्युक्त्वा "समस्तकल्याणगुणात्मको हि" इति । तथा "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति च । पाद्मोत्तरखण्डे— "योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैः गुणैर्हीनत्वमुच्यते" इति । तत्र स माययेत्यस्यार्थोऽयं मन्तव्यः । "स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवन्तमीमहि" इति । "धाम्ना स्वेन सदा निरस्तकुहकम्" इति "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इत्यादि वचनेभ्यः "स्वसुखनिभृतचेताः" इत्यादि भक्तहृदयावरोधाश्च, अतः स्वामिभिरपि योगमायाशब्देन चिच्छक्तिः व्याख्याता । ननु, प्राप्नोतीत्युक्ते कादाचित्कत्वमवगम्यते, तत्राह—अनुकालं नित्यमेव प्राप्नोति कदाचिदपि न त्यजतीत्यर्थः । स्वरूपशक्तिप्रकाशितत्वस्य नित्यत्वस्य च मिथो हेतुहेतुमत्ता ज्ञेया । ननु, कथं जन्मकर्मणोर्नित्यत्वं नेहि क्रियैक्रियात्वञ्च प्रतिनिजांशावतरणादप्यारम्भपरिसमाप्तिभ्यामेव सिद्ध्यतीति । ते विना स्वरूपहान्यापत्तिः नैष दोषः श्रीभगवति सदैवाकारानन्त्यात् । प्रकाशानन्त्यात् जन्मकर्मकृतलीलानन्त्यात्, अनन्तप्रपञ्चानन्तवैकुण्ठगततत्तल्लीलास्पदमततत्तल्लीलापरिकरेणाणां व्यक्तिप्रकाशयेद्यत्

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

दाम्पत्याच्च । एतदेवोक्तं श्रीब्रह्मणा "को वेत्ति भूमन्! भगवन्! परात्मन्! योगेश्वरोतीर्भवतस्त्रिलोक्याम् । क्वाहो कथं वा कति वा कदेति विस्तारयन् क्रीडसि योगमायाम्" इति । अत एव सत्यांरपि तत्तदाकारप्रकाशगतयोरन्वारब्धसमाप्त्यो रेकत्रैव ते जन्मकर्मणोरंशा यावत् समाप्यन्ते न समाप्यन्ते वा तावदेवान्यत्रारब्धा भवन्तीत्येवं श्रीभगवति विच्छेदाभावात् नित्ये एव ते जन्मकर्मणी वर्त्तेते तत्र ते कश्चिच्चित्रवैगुण्येनारभ्येते कश्चिदेकरूपेण चेति ज्ञेयम् । विशेषण भेदात् विशेष्योक्याच्च । एक एवाकारः प्रकाशभेदेन पृथक् क्रियास्पदं भवतीति । "चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्" इत्यादौ प्रतिपादितम् । ततः क्रियाभेदात् तत्तत्क्रियात्मकेषु प्रकाशभेदेषु अभिमानभेदश्चावगम्यते । स च श्रीनारदेन योगमायावैभवदर्शने द्वारकायां प्रसिद्धः तथा सत्येकत्रैकत्र लीलाक्रमजनितरसोद्बोधश्च जायते । ननु, कथं ते एव जन्म कर्मणी वर्त्तेते । पृथगारब्धत्वादन्ये एव ते उच्यते कालभेदेनोदितानामपि समानरूपाणां क्रियाणामेकत्वं यथा श्रीशङ्करशारीरके "द्विर्गोशब्दोयमुच्चरितो न तु द्वौ गोशब्दौ" इतिप्रतीति निर्णीतं शब्दैकत्वम् । तथैव द्विः पाकः कृतोऽनेन द्विधा पाकः कृतोऽनेनेति प्रतीत्या भविष्यति । ततो जन्मकर्मणोरपि नित्यता युक्तैव । अतएवागमादावपि भूतपूर्वलीलोपासनविधानं युक्तं । तथाचोक्तं मध्वभाष्ये । "परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमादिष्वप्युपसंहार्यश्च युज्यते" इति । अनुमतश्चैतच्छ्रुत्या "यद्गतं भवच्च भविष्यच्च" इत्यनयैव उपसंहार्यत्वम् । उपासनायामुपादेयत्वमित्यर्थः । इत्थमेवाभिप्रेतम् । श्रीगीतोपनिषद्भिः "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इति । नागपत्नीभिरपि "अव्याकृतविहाराय" इति । अतएव श्रीशुकादीनामपि तल्लीलाश्रवणे रागतः प्रवृत्तिर्युज्यते । यथोक्तम् "अजितरुचिरलीलाकृष्टसारः" इत्यादि आत्मारामाश्चेत्यादि । ननु भगवत्स्वरूपभूतान्येव जन्मादीनि तथापि स्वरूपस्यैव पूर्णत्वात् तत्प्राप्तौ किं प्रयोजनम् ? तत्राह—लोकाप्ययसम्भवाय लोको भक्तजनः तस्याप्ययं संसारध्वंसः तत्पूर्वकः सम्भवो भक्तिसुखप्राप्तिः भूयान्नो तदर्थम् एतदप्यनुभववृणाम । नित्यपार्षदानामपि भक्तिसुखोत्कर्षार्थश्च । तदुक्तं प्रथमे "तथायं चावतारस्ते भुवो भारजिहीर्षया । स्वानाञ्चानन्यभावानामनुध्यानाय चासकृत्" इति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वकालाविराजमानत्वमाह—कालेनेति । तमः प्रकृत्यकालोऽमूर्त्तं तस्य पार इति "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ५ ॥

सर्वदुर्लभत्वमाह—न यस्येति । एवं स्वरूपं जन्तुरर्वाचीनः तस्याऽनभिज्ञः गन्तुं ज्ञातुम् ईरितुं वक्तुं वा यथा नटस्य गीतपदार्थानां जन्तुकमलादीनां आकृतिभिरभिनयैर्नानाभिर्विविध भेदमात्मनः स्वरूपं मूलेऽपाययन्तु गुणादिवैलक्षण्या किमाकृतिमयं दर्शयतीति नर्त्तनाद्यनवस्थानभिज्ञः ज्ञातुं वक्तुञ्च नार्हति, तथा दुरत्ययाऽनुक्रमणः दुर्ज्ञेयचरित्रः ॥ ६ ॥

सर्वात्मत्वेनाहृदयत्वेऽपि भागवतव्रतहृदयत्वमाह—दिदृक्षव इति । एवं चरणकमलं विमुक्तसङ्गास्त्यक्तसङ्गा मुक्तेभ्योऽपि विशिष्टा ये भक्तास्तत्पदकमलं प्राप्तव्रतं लोकाः यथाश्रमाचारवन्तस्तदतीतं भागवतं व्रतमित्यर्थः । अत एव अव्रणं भ्रंशशंकारहितम् "धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" इत्यादेः ॥ ७ ॥

प्राकृतजन्मकर्माद्यभावेऽपि प्राकृतजन्मकर्मादिमत्त्वमाह—नेति । गुणदोषमिति समाहारद्वन्द्वः गुणदोष एवेति पाठे सर्वो द्वन्द्वो विभाषैकवद्भवतीतीतरेतरयोगेऽप्येकत्वं "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इतिवत् तदपि लोकानामप्ययः प्रलयः सम्भवः सृष्टिस्तयोर्द्वन्द्वैक्यं तदर्थं स्वमायया मायिकतमोरजोगुणाभ्यां तानि तद्रूपेण प्रभुरूपेण च जन्मकर्मादीनि अनुकालं प्रतिप्रलयसृष्टिसमये ऋच्छति प्राप्नोति अत्र ध्रुवं किं चिदित्यर्थे विष्णुजन्मादीनि न निर्दिष्टानि तेषां मायिकत्वाभावात् मायिकजन्मकर्मादीनि तु नानेन निषिध्यन्ते तानि, देवकयादिजन्म गोवर्द्धनधारणादिकर्म कृष्णरामादिनाम रूपाणि स्वरूपभूतान्येव न निषेद्धुं शक्यते श्रुत्यापि "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं अशब्दमस्पर्शमरूपमव्ययम्" इत्यादौ मायिकं निषिद्ध्य "स सर्वकर्मा सर्वगन्धः सर्वरसः सर्वकामः" इत्यमायिकं कर्मादि विधीयते अत एव श्रीविष्णुपुराणे "गुणांश्च दोषांश्च मुने! व्यतीतः" इत्युक्त्वा पुनराह "समस्तकल्याणगुणात्मको हि" इति तथा—

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥ इति

पाद्मोत्तरखण्डे च—

"योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः ।
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते" इति

हेयसंयुक्तैर्हेयत्वयुक्तैरित्यर्थः । प्राकृता गुणा हि हेया भवन्त्येव इति भावः । नाम्नाञ्चाप्रत्ययत्वं श्रुतिराह यथा "ओं आस्य जानन्तो नामचिद्विविक्तन महस्ते विष्णो सुमतिं भजामहे ओंतत्सत्" इति अस्या अयमर्थः । हे विष्णो! ते तव नामचित् चित्स्वरूपम् अत एव महः स्वप्रकाशरूपं तस्मादस्य नाम्न आ ईषदेव जानन्तो वयं न तु सम्यक् उच्चारणमाहात्म्यादि पुरस्कारेणेत्यर्थः । तथापि विविक्तन् ब्रुवाणाः केवलं तदभ्यासमात्रं कुर्वाणाः सुमतिं तोमन्तां त्वद्विषयां बुद्धिं भजामहे प्राप्नुमः यतस्तदेव नाम ओं प्रणवः सत् स्वतःसिद्धमिति अरूपाय प्राकृतरूपरहिताय उरुपाय अप्राकृतचिद्घनरामकृष्णादिवपुरूपाय ॥ ८ ॥ ९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालेन स्वशक्तिभूतेन लोकेषु स्थूलरूपविश्वावयवेषु पञ्चत्वमितेषु गतेषु सूक्ष्मपञ्चभूतद्वारा प्रकृतौ प्रावेशेषु गहनं दुरवगाहं गम्भीरं विपुलं तमः प्रकृतिरूपदासीत् तस्य पारे स्थूल-

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥
नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥
सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥
नमः शान्ताय घोराय*मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मूलप्रकृतिपर्यन्तविलक्षणो निजधाम्नि योऽभिविराजते स मामवतु इत्यनुषङ्गः ॥ ५ ॥

यस्य पदं स्वरूपं देवादयो न विदुः ज्ञानाभावे सुतरां तत्पदं वक्तुमनर्हा इति भावः । एवं सति जन्तुरर्वाचीनोऽस्मदादिः प्राणी कः पुनस्तत्पदं गन्तुं ज्ञातुम् ईरितुं वक्तुं च अर्हति न कोऽपीत्यर्थः । यथा नटस्याऽऽकृतिभिर्वेषैर्विचेष्टतोऽयमसाविति तत्स्वरूपमतज्ज्ञा न विदुस्तद्वत् स तथाभूतः दुरत्ययं दुर्गममनुक्रमणमनुवर्णनं यस्य स मामवतु ॥ ६ ॥

ननु, "तमेव विदित्वाऽतिमृत्युमेति" "ज्ञात्वा मां शान्तिमृच्छति" इत्यादिश्रुतिस्मृतिभिस्तत्त्वज्ञानान्मुक्तिरुक्ता सा कुतः स्यात्-आह—दिदृक्षव इति । भूतानि आत्मभूतानि स्वतुल्यानि येषां ते सर्वभूतेषु दयावन्त इत्यर्थः । अत एव सुहृदः सुसाधवः स्वधर्मशीलाः मुनयो हेयोपादेयमननपराः अत एव विमुक्तसङ्गाः सन्तः यस्य पदं दिदृक्षवः अलोकव्रतं सामान्यलोकदुस्सम्पादकं ब्रह्मचर्यतीर्थवाससद्गुरुचरणसेवादिकमव्रणं निर्दोषं चरन्ति ते त्वदनुग्रहेण त्वां विदुरिति भावः । स मे गतिर्भवतु ॥ ७ ॥

यद्यपि तथापि अनुकालं स्वमायया "माया च वयुनं ज्ञानम्" इति निघण्टुपाठात् स्ववयुनात्मकेन सङ्कल्पेन तानि स्वाऽनुरूपाणि "जन्म कर्म च मे दिव्यम्" इत्यादिशास्त्रप्रसिद्धानि ऋच्छति स्वीकरोति तस्मै नमः इत्युत्तरेणान्वयः । तत्र जन्म वसुदेवादिगेहे, कर्म गोवर्द्धनोद्धरणादि, नाम वासुदेवादि, रूपं चतुर्भुजत्वद्विभुजत्वादि, गुणाः सन्ताद्यात्पावनादि, दोषः दधिभाण्डभञ्जनादि, कस्मै प्रयोजनाय ऋच्छति लोकाप्ययसम्भवाय लोकानामसाधूनामप्ययाय विनाशाय साधूनां च सम्भवाय परित्राणाय तथोक्तं श्रीमन्मुखेन "यदा यदा हि, धर्मस्य ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्, परित्राणाय साधूनां विनाशाय च दुष्कृताम् । संस्थापनाय धर्मस्य सम्भवामि युगेयुगे" इति ॥ ८ ॥

### भाषा टीका ।

कालशक्ति से सर्वहेतुओं के, तथा समग्र लोकपालों सहित लोकों के नष्ट होने पर, जब केवल गम्भीर गहन तम, अर्थात् मूलप्रकृतिमात्र अवशिष्ट रही, और उस प्रकृति के भी पार में जो विभु विराजमान हैं, ऐसे ॥ ५ ॥

और देव तथा ऋषि लोग भी जिसके पद ( स्थान ) को नहीं जानते हैं, फिर और प्राणी कौन ऐसा है, कि—जो जानने को और कहने को समर्थ होगा, जैसे नाना वेष धारण कर चेष्टा करने वाले नट के चरितों को सब नहीं जानसक्ते हैं ऐसे ही दुर्गम चरित्र वाला वह परमात्मा हमारी रक्षा करे ॥ ६ ॥

जिसके सुमङ्गल पद के दर्शन की इच्छा वाले, और प्राणि मात्रों में आत्म सदृश दृष्टि वाले, सर्व सुहृद मुक्तसङ्ग मननशील साधुजन वन में निर्दोष ब्रह्मचर्य आदि व्रत का आचरण करते हैं वह हमारी गति होवे, अर्थात् रक्षा करे ॥ ७ ॥

जिसके प्राकृत जन्म, कर्म, नाम, रूप, गुण, दोष, कुछ नहीं हैं । तथापि निर्हेतुक कृपा से जगत के उत्पत्ति ( स्थिति ) संहार के लिये समय २ पर जन्म कर्मादि को जो धारण करता है उसको मेरा नमस्कार होवे ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मणे अरूपाय अनन्तशक्तये उरुरूपाय अत आश्चर्याणि कर्माणि यस्य तस्मै परेशाय नमः ॥ ९ ॥

आत्मप्रदीपाय प्रकाशान्तरस्याविषयाय कुतः साक्षिणे प्रकाशकाय परमात्मने जीवनियन्त्रे अत एव गिरां विदूरायाप्राप्याय चेतसां चित्तवृत्तीनां तथा च श्रुतिः "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति ॥ १० ॥

एवमपि विपश्चिता निपुणेन नैष्कर्म्येण सन्न्यासेन सत्त्वेन शुद्धेन "सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः" इति श्रुतेः । प्रतिलभ्याय प्रत्यक्त्वेन प्राप्याय निर्वाणसुखसंविदे मोक्षानन्दानुभूतये ॥ ११ ॥

---

* गूढाय इति पाठः वीर० ।

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥
सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
(१)असता च्छाययोक्ताय सदाभासाय ते नमः ॥ १४ ॥
नमो नमस्तेऽखिलकारणाय (२) निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नाय महार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥
गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ।
(३)नैष्कर्म्यभावेन (४)विवर्जितागमस्वयम्प्रकाशाय नमस्करोमि ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणधर्मिणे सत्त्वादिधर्माऽनुकारिणे ज्ञानघनायेति निर्विशेषत्वेऽपि प्रधानवैलक्षण्यमुक्तम् ॥ १२ ॥

साक्षिण इति सर्वाध्यक्षत्वेऽपि निर्विकारत्वमुक्तम् आत्मनां क्षेत्रज्ञानां मूलाय मूलस्य प्रधानस्यापि प्रकृतये उद्भवहेतवे तत्र हेतुः पुरुषाय पूर्वमेव सते तथा च श्रुतिः "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति पुरिशेते वा ॥ १३ ॥

सर्वेन्द्रियाणां ये गुणा विषयास्तेषां द्रष्ट्रे सर्वे प्रत्यया इन्द्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै तथैवाऽह, असताऽहङ्कारादिप्रपञ्चेन च्छाययाऽसद्रूपया उक्ताय प्रतिबिम्बेन बिम्बमिव सूचिताय तत्र हेतुः सद्रूपो विषयेष्वाभासो यस्य तस्मै तदुक्तं तृतीये "यथा जलस्थ आभासः" इत्यादिना पाठान्तरे असत्यस्य च्छायया ऽभ्यासेनोक्ताय युक्ताय तदधिष्ठानायेत्यर्थः ॥ १४ ॥

अखिलकारणाय सर्वकारणरूपाय अत एव स्वयं निष्कारणाय कारणत्वेऽपि मृदादिवद्विकारं वारयति-अद्भुतकारणायेति। एवम्भूतत्वे प्रमाणमाह—सर्वे आगमाः पञ्चरात्रादय आम्नायाश्च वेदास्तेषां महार्णवाय स्रोतसामिव पर्यवसानस्थानाय अपवर्गाय मोक्षरूपाय अतः परायणायोत्तमानामाश्रयाय ॥ १५ ॥

गुणा एवारणिस्तया छन्नश्चिदूष्मा ज्ञानाग्निस्तस्मै तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं बहिर्वृत्तिकं मानसं यस्य "सोऽकामयत बहुस्याम्" इति श्रुतेः। नैष्कर्म्यमात्मतत्त्वं तस्य भावेन भावनया विवर्जिता आगमा विधिनिषेधलक्षणा यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं शरणवरणोपयुक्तगुणकथनपूर्वकं स्वरक्षायै शरणमुपगम्याथ पात्रपरिवेषितबहुव्यञ्जनोपेतान्नादिभोजनप्रवृत्तन्यायेन भक्ष्यमाणत्विधूतचूर्णविफलादानप्रवृत्त...न्यायेन च पौनरुक्त्यक्रमावनादृत्य उक्तैरनुक्तैश्च गुणैर्यथामत्युपस्थितैः शरणवरणोपयुक्तैः स्तुवन् प्रणमति—नम इति । परेषां ब्रह्मादीनामपि ईशाय अनन्ताः शक्तयः सृष्ट्यादिशक्तयो यस्य न विद्यते रूपं कर्मायत्तं शरीरं यस्य उरूणि बहूनि रूपाणि अकर्मायत्तानि स्वेच्छोपात्तान्यप्राकृतानि रूपाणि यस्याश्चर्यं लोकविसजातीयत्वेनाद्भुतं कर्म जगद्व्यापारात्मकं यस्य ॥ ९ ॥

आत्मनैव दीप्यत इत्यात्मदीपः तस्मै स्वयंप्रकाशाय साक्षिणे सर्वस्य युगपत्साक्षाद्द्रष्ट्रे परमात्मने लोकत्रयमाविश्य प्रशासनेन भर्त्रे गिरां मनसश्चेतसामविदूरायाविषयाय वाङ्मनसाऽपरिच्छेद्यस्वरूपस्वभावाय चित्तात्मकस्य मनसः सत्त्वप्रचुरत्वेनाधिकार्थविषयीकरणयोग्यत्वसूचनाय मनसः पृथक् चेतसामपीत्युक्तम् ॥ १० ॥

विपश्चिता ज्ञानिना कर्त्रा सत्त्वेन विशुद्धेनानन्यप्रयोजनेन नैष्कर्म्येण उपासनात्मकनिवृत्तिधर्मेणोपलक्ष्याय कैवल्यं प्रकृतिसम्बन्धराहित्यं मोक्ष इति यावत् तस्याधिपतये निर्वाणसुखसंविदे निःसीमानन्दज्ञानस्वरूपाय ॥ ११ ॥

शान्ताय अशनायापिपासाशोकमोहजरामृत्युरूपषडूर्मिरहिताय यद्वा साधूनां शान्ताय प्रसन्नाय घोराय खलानामुग्राय गूढाय संसारिणां प्रच्छन्नाय गुणधर्मिणे सत्त्वादिगुणानामाश्रयाय निर्विशेषाय हेयगुणरहिताय सत्त्वादिगुणाश्रयत्वेऽपि तदवद्यायेत्यर्थः । साम्याय वैषम्यादिरहिताय ज्ञानघनाय कचिदपि जाड्यरहिताय, यद्वा शान्ताय अतिसौम्यमाधुर्यसौशील्यादिगुणगणलाञ्छनमधुरमूर्तये घोराय अतिभयानकात्युग्रश्रीनृसिंहरूपाय गूढाय अन्तर्यामिरूपायोत्पादिकाप्रकटितरूपायेत्यर्थः । मूढायेति पाठे केष्वपि स्वस्वरूपादन्यत्र केष्वप्यवहितचित्ताय सर्वत्रानासक्ताय स्वात्मारामाय सदाऽऽनन्दतुष्टायेत्यर्थः ॥ १२ ॥

क्षेत्रज्ञशरीरकाय सर्वाध्यक्षाय सर्वभूताधिपतये साक्षिणे सर्वद्रष्ट्रे पुरुषायान्तःप्रविश्य नियन्त्रे आत्ममूलाय स्वयं कारणान्तररहिताय मूलप्रकृतये सर्वोपादानभूताय ॥ १३ ॥

सर्वेषामिन्द्रियाणां तद्गुणानां शब्दादिविषयाणां च युगपत्सदाद्रष्ट्रे सर्वप्रत्ययहेतवे संशयविपर्ययादिसर्वधर्मप्रत्ययहेतवे असता सततपरिणामिन्या छायया छायावदपृथक्सिद्धया० मायया

(१) असत्याच्छायमुक्ताय इति विजय० । (२)नारायणायार्ति विनाशनाय इति विजय० । (३)नैष्कर्म्यभावाय इति वीर० युक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय इति विजय० । (४) निवर्तितागमेति वीर० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्ताय सूचिताय जडत्वेन स्वयं प्रवृत्तिशून्यया मायया प्रवर्त्तयितृत्वेन सूचितायेत्यर्थः । अकायेति पाठान्तरं तदा युक्तायेत्यर्थः । यद्वा गूढाय गुणधर्मिणे निर्विशेषाय साम्याय ज्ञानघनायेत्यनेन समष्टिशरीरकत्वमुक्तम् तत्र गूढाय तमोमयाय गर्भगामिणे सत्त्वादिगुणानामाश्रयाय निर्विशेषाय पृथिव्यादिविशेषरहिताय "महदाद्याविशेषान्ताः" इति प्रयोगात् साम्याय गुणसाम्यावस्थाय अज्ञानघनायेति वा केवलं तदा जाड्यस्वभावायेत्यर्थः । गूढत्वादिकं च "काठिन्यवान्यो बिभर्ति" इतिवत्प्रकृतिद्वारकं विशेषणं क्षेत्रज्ञाय सर्वाध्यक्षाय साक्षिणे पुरुषायेति समष्टिजीवशरीरकत्वमुच्यते क्षेत्रज्ञाय "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः" इत्युक्तविधक्षेत्रज्ञाय सर्वाध्यक्षाय करणाधिपतये साक्षिणे बुद्धीन्द्रियादीनां साक्षाद्द्रष्टे पुरुषाय सर्वशरीरान्तर्वर्तिने एतान्यपि सद्वारकाण्येव विशेषणानि ज्ञेयानि सर्वेन्द्रियगुणद्रष्टे इति श्लोके तु व्यष्टिजीवशरीरकनमस्कारः तत्रामताऽनित्यता। छायया छायावत्सानुबन्धया मायया अकाय कथितायोक्तायेति पाठे सूचितायाश्रयमन्तरेण मायया अनुपपत्तेः तया सूचितायेति भावः स्वप्रकाशाय इमान्यपि सद्वारकाण्येव विशेषणानि इतराणि त्वद्वारकाणीति विवेकः ॥ १४ ॥

अखिलकारणाय सर्वकारकशरीरकाय निष्कारणाय स्वयंकारकान्तराभावात् अद्भुतकारणाय मृदादिवत्स्वरूपपरिणामरहितकारणस्वरूपाय सर्वे आगमाः पाञ्चरात्रादयः आम्नाया ऋगादयो वेदाश्च तेषां महार्णवाय स्रोतसामिव पर्यवसानभूमये अपवर्गाय मोक्षहेतुभूताय परायणाय परमाश्रयाय परमप्राप्याय ते तुभ्यं नमः ॥ १५ ॥

गुणारणिच्छन्नचिदूष्मपाय सत्त्वादिगुणात्मिकाप्रकृतिरेवारणिः तत्संछन्नं जीवसमष्टिरूपमूष्माणमग्निं पिबति संहारकाले स्वस्मिन्नुपसंहृत्य यो निदधाति स तथोक्तस्तस्मै तत्क्षोभविस्फूर्जितमानसाय मानसशब्दो मनःकार्यसङ्कल्पपरः तत्क्षोभे चिदचितोर्विक्षोभकाले सृष्टिकाले स्फुरितसङ्कल्पाय नैष्कर्म्यं मोक्षः स येन भाव्यते तस्मै निवर्त्तितागमस्वयंप्रकाशाय "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्युक्तप्रकारेण वाङ्मनसाऽपरिच्छेद्यज्ञानस्वरूपायेत्यर्थः । नैष्कर्म्यभावेतिपाठे नैष्कर्म्यभावेन मोक्षलाभेन निवर्त्तितः आगमः शास्त्रं यैः तेषां स्वयमेव प्रकाशमानाय मुक्तिपर्यन्ता हि शास्त्रवश्यता मुक्तानां तु निवर्त्तितागमानामकर्मवश्यानां तत्फलतया प्रकाशमानायेत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तरातीतश्लोकोक्तार्थविवरणपूर्वकं यच्छब्दविशिष्टं तच्छब्दावच्छिन्नं च नमति, तस्मा इति ॥ ९ ॥

अरूपायेत्युक्तं विवृणोति-नम आत्मेति। आत्मप्रदीपाय स्वतःप्रकाशाय आत्मनः जीवस्य स्वरूपज्ञापनप्रकाशाय वा ॥ १० ॥

(१) अरूपप्राप्तिसाधनज्ञानं तस्याभावे ज्ञानिप्राप्यत्वलक्षणां मानमित्यभिप्रायेण नमति—सत्त्वेनेति । विपश्चितां सत्त्वेन ज्ञानेन प्रतिलक्ष्याय प्राप्याय "बलज्ञानसमाहारः सत्त्वं केवलमेव च" इत्यभिधानम्. नैष्कर्म्येण निवृत्तिधर्मलक्षणेन ॥ ११ ॥

उरुरूपायेत्युक्तरूपविशिष्टं तात्पर्यादरूपविशिष्टं च नमति, शान्तायेत्यनेन सत्त्वप्रवर्तकवासुदेवादिरूपं लक्षयति, घोरायेत्यनेन रजःप्रवर्तकजामदग्न्यादिरूपम्. मूढायेत्यनेन तमःप्रवर्त्तकवराहादिरूपम्. गुणकर्मणइत्यनेन तत्तद्योनिविशिष्टगुणकर्मवते ज्ञानघनायेत्यनेनाऽरूपस्य शून्यत्वं निवारयति सत्त्वेनेत्याद्युक्तविशेषणसमुच्चायकश्चकारः ॥ १२ ॥

रूपद्वयापित्वेन निरूप्यमाणस्य हरेर्मिथो न कोऽपि विशेषोऽस्तीति ज्ञापयितुमुभययोरविशेषणविशिष्टत्वेन नमति-क्षेत्रज्ञायेति । सर्वाध्यक्षाय सर्वस्वामिने आत्मैव मूलं यस्य तथा तस्मै आत्मनां मूलाय वा ॥ १३ ॥

साक्षिशब्दविवरणपूर्वकमस्मदादिज्ञाने हेतुत्वेनाऽस्मदादिप्रपञ्चाद्भिन्नं नमति—सर्वेति । असत्याद्यनन्तात्प्रपञ्चाद्विमुक्ताय सन्निदर्शिने आभासो देहो यस्य स तथा तस्मै "सत् देहः सुखगन्धश्च" इत्यादेः अनेन प्राकृतरूपं नास्तीत्युक्तं भवति सन्ना भासः प्रकाशो यस्य स तथा तस्मा इति वा "परंज्योतिरुपसम्पद्यते" इति श्रुतेः ॥ १४ ॥

अखिलकारणत्वादिविशिष्टत्वेनोक्तः क इत्याशंक्य श्रीनारायण एव नान्य इति तन्नामनिर्देशपूर्वकं पूर्वोक्ताऽनुक्तविशेषणविशिष्टत्वेन नमति—नमो नम इति । सर्वागमैः पञ्चरात्रादिभिः आम्नायैर्ऋगादिभिर्वेदैश्च समुद्राय ॥ १५ ॥

सर्वप्रत्ययहेतव इत्येतद्विशेषणं विवृण्वन्नाह-गुणेति। गुणारणिच्छन्नं सत्त्वादिगुणलक्षणकाष्ठच्छन्नं चिदूष्म ज्ञानाख्यं ज्योतिर्यस्तत्पाति रक्षतीति स तस्मै "बलमानन्द ओजश्च" इत्यादेः अन्यथा तद्ग्रहणकथनं व्यर्थं स्यात् शान्ताय इत्यादिना यद्गुणालुब्धत्वं तदुपिडम्बनमात्रमित्यभिप्रेत्याह—तत्क्षोभेति । तत्क्षोभे गुणविक्षोभेऽपि विस्फूर्जितं समुच्छ्वसितं मानसं यस्य स तथा तस्मै गुणशक्त्युद्रेकावस्थायामपि मनोविकाररहितायेत्यर्थः । स्वतन्त्रोऽपि भक्तवश्यो भवतीत्याह—युक्तात्मभिरिति । वशीकृतमनआदीन्द्रियैः पुरुषैः ज्ञानघनायेत्यनेन ज्ञानं किं स्वरूपमुत भिन्नमुच्यते ? इति विकल्पावकाशो नास्तीत्याह—ज्ञानेति । न केवलं ज्ञानं गुणोऽस्य अन्येऽपि सन्तीत्याशयेनाह—भगवत इति । गुणानां गुणिनो भेदे "विज्ञानमानन्दं ब्रह्म" इति व्यवहारानुपपत्तिरित्याशंक्याभूयोपिव्यवहारघटकत्वशक्तियोगोऽस्यास्तीत्याशयेनाह, ईश्वरायेति ॥ १६—१८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, तर्हि भक्तसौख्यप्रयोजनं जातमिति । स्वरूपस्य पूर्णत्वं कथमुपपद्येत ? उच्यते । भक्तसुखप्रयोजनकत्वं नाम स्वरूपानन्दविलासपरतेति दिक् । तत्र विशेषजिज्ञासायाम्

(१) भगवान्

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवत्परमात्मसन्दर्भौ दृश्यौ । अरूपाय प्राकृतरूपरहिताय उरुरूपाय अप्राकृतानन्तरूपाय ॥ ९ ॥ १० ॥

सत्त्वेन शुद्धसत्त्वात्मकेन नैष्कर्म्येण भक्तियोगेन हेतुना । विपश्चिता कर्त्रा "तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः" इति प्रथमोक्तेः । कैवल्यस्य शुद्धप्रेम्णो नाथाय दानादानयोः प्रभवे "कैवल्यमस्मत्पथस्त्वथ भक्तियोगः" इति "कैवल्यैकप्रयोजनम्" इति च. तच्छब्देन तत्—प्रसिद्धेः । निर्वाणसुखस्यापि संविदनुभवो यस्मात्तस्मै "मदीयं महिमानञ्च" इत्यादि-श्रीमत्स्यदेवोक्तेः । उभयमपि "ब्रह्मणो हि प्रतिष्ठाऽहममृतस्य" इत्यादि श्रीगीतोपनिषद्भ्यः ॥ ११ ॥

शान्तायेति पदयुग्मत्रयं प्रतिस्वं मिथोविरोधित्वेन निर्दिश्य कारणकार्ययोस्तादात्म्यात् तदभिन्नतया तथा चाऽङ्गीकृतस्य तस्य मिथो विरोधिशक्त्याश्रयत्वं दर्शितम् । उक्तञ्च "सर्वाश्रयस्वरूपायानन्दज्ञानघनाय" इति । सच्चिदानन्दस्वरूपायेत्यर्थः । तत्र गुणा ज्ञानादयो धर्माः स्वभावास्ते विद्यन्ते यस्य तस्मै । साम्याय विशेषेष्वनुगतायेत्यर्थः ॥ १२—१३ ॥

छायया निजाभासरूपयेत्यर्थः । पाठान्तरे असति स्वपुष्पादौ या सच्छाया स्फूर्त्त्यभावः तद्युक्ताय सदाभासाय सति तु वस्तुनि स्फुरते ॥ १४ ॥

अद्भुतकारणायेति "श्रुतेस्तु शब्दमूलत्वात् २।१।२७" इति न्यायं दृढीकरोति युक्तिरनवरतेऽद्भुतत्वायोगात् गुणारणीत्यादि त्रयं तृतीयान्यपदार्थो बहुव्रीहिः । तत्र च चिन्मानसे जीवस्येति शेषम् । विस्फूर्जितत्वम् बहिर्वर्त्तित्वम् । नैष्कर्म्येण योभावो भक्तिज्ञानात्मकस्तेन ॥ १५—१६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जीवात्मवाङ्मनस्तद्वृत्तिभिरगम्यत्वमाह—आत्मप्रदीपाय । जीवात्मप्रकाशकाय प्रकाशकस्य तत्त्वं प्रकाश्यो न जानातीति भावः—

"सर्वं पुमान् वेद गुणांश्च तज्ज्ञो-
न वेद सर्वज्ञमनन्तमीडे ॥

इति हंसगुह्योक्तेः विदूराय अगम्याय चेतसां चित्तवृत्तीनाम् ॥१०॥

कथं तर्हि स गम्यो भवतीत्यत आह—सत्त्वेन साधुत्वेन सन् साधुः सतो भावः सत्त्वं वैष्णवत्वं तेन प्रतिलभ्याय वचनप्रतिवचनबलाभप्रतिलाभोऽयं भक्तभगवतोर्द्वयोः भक्तिरस्य भजनं "तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यम्" इति गोपालतापनीश्रुतेः । सत्त्वेन यन्नैष्कर्म्यं तेन विपश्चिता प्रतिलभ्यायेत्यन्वयः ॥ ११ ॥

ज्ञानिलभ्यनिर्गुणरूपत्वमाह—नम इति । शान्ताय सात्त्विकलोकरूपाय तत्रापि ज्ञानिवेद्यब्रह्मरूपत्वमाह-निर्विशेषायेति ॥ १२ ॥

योगिवेद्यान्तर्यामिरूपत्वमाह—क्षेत्रज्ञेति, चतुर्भिः । क्षेत्रं देहं यं तत्त्वेन जानातीति क्षेत्रज्ञोऽन्तर्यामी तस्मै "क्षेत्रज्ञञ्चापि मां विद्धि" इतिगीतोक्तेः । आत्मनां जीवानां मूलायापि प्रकृतेरपि मूलं मूलप्रकृतिस्तस्मै राजदन्तादित्वात् परनिपातः ॥ १३ ॥

सर्वाणीन्द्रियाणि गुणा विषयाश्च तेषां द्रष्टे सर्वप्रत्ययाः इन्द्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै "गुणप्रकाशैरनुमीयते भवान्" इत्युक्तेः । असता असर्वकालस्थायिना छायया "छायेव यस्य भुवनानि बिभर्त्ति दुर्गा" इति ब्रह्मसंहितोक्तेः । छायातुल्यमायाकार्येण विश्वेन उक्ताय ज्ञापिताय कार्येण कारणानुमानादिति भावः । कुम्भकारशक्त्या जनितेन घटेन यथा कुम्भकारोऽनुमीयते तद्वदित्यर्थः । असत्यच्छाययाक्तायेति पाठे असति असाधौ जने अच्छायया अक्ताय युक्ताय स्वचरणच्छायामदात्र इत्यर्थः । यद्वा अच्छाया ज्वाला तद्युक्ताय "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः । अनातपवाचकः छायाशब्दः तद्वितरत्रासह-मातपरूपां ज्वालां बोधयति, यद्वा अच्छाया अकान्तिरस्फूर्तिरिति यावत् तद्युक्ताय सत्सु साधुषु आभासः स्फूर्तिर्यस्य तस्मै ॥१४॥

अद्भुतकारणाय उपादानकारणत्वेऽप्यद्भुतत्वं निर्विकारत्वात्त्वेति भावः । यदुक्तं देवैः "आत्मन्नेवाविक्रियमाणेन सगुणस्सृजसि" इति स्वामिचरणैरप्यव्याख्यातमिति कारणत्वे च मृदादिवद्विकारं वारयति-अद्भुतकारणायेति । एवंभूतत्वे प्रमाणमाह-सर्वे आगमाः पञ्चरात्रादयः आम्नाया वेदाश्च तेषां महार्णवाय तरङ्गाणामिव पर्य्यवसानस्थानयेति अपवर्गरूपाय परायणाय उत्तमानामाश्रयाय ॥ १५ ॥

गुणा एवारणिस्तया छन्नो यश्चित्तुष्मपो ज्ञानाग्निस्तस्मै तेषां गुणानां क्षोभविस्फूर्जिते क्षोभोत्कर्षे मानसमिच्छा यस्य "सोऽकामयत बहुस्याम्" इतिश्रुतेः । नैष्कर्म्यमात्मतत्त्वं तस्य भावेन भावनया विवर्जिता आगमा विधिनिषेधलक्षणा यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अरूपाय प्राकृतरूपरहिताय उरुरूपाय अप्राकृतबहुरूपयुक्ताय सुर्वाधारत्वेपि नृसिंहादिरूपेण स्तम्भादितो गमनादीनि आश्चर्याणि कर्माणि यस्य तस्मै ॥ ९ ॥

आत्मप्रदीपाय स्वप्रकाशाय साक्षिणे सर्वप्रकाशाय गिरां विदूराय इयत्तावच्छिन्नतया वेदैरवर्णिताय मनसश्चेतसां चित्तवृत्तीनाञ्च विदूराय "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । वेदैर्यथाशक्ति प्रतिपाद्य एव तदनुगृहीतैर्मनसा द्रष्टव्य एव "सर्वे वेदा यत्पदमामनन्ति, मनसैवानुद्रष्टव्यः" इत्यादि श्रुतेः ॥ १० ॥

विपश्चिता विवेकिनोपासकेन कर्त्रा सत्त्वेन शुद्धेन मनसकरणेन नैष्कर्म्येण निवृत्तिमार्गेणोपायेन प्रतिलभ्याय कैवल्यं कार्यकारणप्रकृति विलक्षणं मोक्षस्थानं तस्य नाथाय

मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय[1] नमोऽलयाय ।
स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥
आत्मात्मजाऽऽप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्गताः बाणाः विघातकाः सर्वे उपद्रवाः यस्मात्तस्मै सुखसंविद्रूपाय नमः ॥ ११ ॥

शान्ताय धार्मिकजनसुखदात्रे घोराय अधार्मिकजनदण्डदात्रे मूढाय दुर्बुद्धिभिर्दुर्बोधाय गुणाः कल्याणरूपा ज्ञानशक्त्यादय-स्त एव धर्माः संत्यस्येति गुणधर्माः तस्मै नित्यगुणयुक्तायेत्यर्थः । निर्विशेषाय हेयगुणवर्जिताय साम्याय वैषम्यादिरहिताय ज्ञानघनाय ज्ञानपुञ्जाय निरातिशयज्ञानस्वरूपायेत्यर्थः ॥ १२ ॥

क्षेत्रं कृत्स्नं विश्वं जानातीति तथा तस्मै सर्वाध्यक्षाय तथापि साक्षिणे निर्विकाराय आत्मनां स्वांशभूतानां मूलाय स्थितिप्रवृत्त्यादिप्रदाय मूलस्य महदाद्युपादानस्य स्वशक्तिभूतस्य प्रधानस्य प्रकृतये स्थितिप्रवृत्त्यादिप्रदाय पुरुषाय पूर्णाय नमः ॥ १३ ॥

सर्वेषामिन्द्रियाणां गुणानां विषयाणां च द्रष्ट्रे सर्वेषां प्रत्ययानां प्रत्यायकानां हेतूनां हेतवे कारणाय "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इति कोशात्सच्छब्दः प्रशस्तवाचकः नास्ति सत्प्रशस्तं प्रमाणमन्यद्यस्मात्तेनाऽसता परमेण प्रमाणेन वेदाख्येन "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इति कोशाच्छायाशब्दः कान्तिवाचकः तथा च छायया कान्तिवद्वेदाऽनुवर्तिन्या स्मृत्या च उक्ताय श्रुतिस्मृतिवर्णितायेत्यर्थः । सति प्रशस्ते उपासकचित्ते आभासः स्फूर्तिर्यस्य तस्मै नमः ॥ १४ ॥

अखिलानां सकलानां कारणाय मूलाय निष्कारणायाऽनन्यभूताय अखिलकारणत्वेऽपि निर्विकारस्वरूपत्वादद्भुतकारणाय शक्तिपरिणामाङ्गीकारात् सर्वेषामागमानां पञ्चरात्रादीनामाम्नायानां वेदानां च महार्णवाय समन्वयस्थानाय अपवर्गाय मुक्तोपलभ्याय अत एव परायणाय परे मोक्षाधिकारिणस्तेषामाश्रयाय ब्रह्मोत्कृष्टलयस्थानाय ॥ १५ ॥

गुणानां ज्ञानवैराग्यादीनामरणिरूपैस्का भक्तिस्तयाच्छन्नं व्याप्तं चिद्रूपाणां ज्ञानज्योतिर्भूतं जीवं ज्ञानन्यभक्तं पातीति तथा तस्मै तत्क्षोभेन समस्तविषयकस्नेहेन विस्फूर्जितं प्रमुदितं मानसं यस्य तस्मै नैष्कर्म्ये भगवत्तत्त्वं तस्मिन् भावेन भक्त्या विवर्जिता आगमा भक्तिविरुद्धा विधिनिषेधरूपलक्षणा वेदास्तेषु स्वयमेव परमानन्दमूर्त्याविष्कारेण प्रकाशो यस्य तस्मै नमस्करोमि ॥ १६ ॥

भाषा टीका ।

ब्रह्मादिकों के ऐसा प्राकृत रूप से रहित दिव्यकल्याण अनन्त रूपवाले आश्चर्यकर्मा अनन्तशक्ति ऐसे परब्रह्म को नमस्कार हो ॥ ९ ॥

आत्मप्रदीप, अर्थात् दीप के तरह प्रकाशक साक्षी और मन चित्त वाणी के अप्राप्य, ऐसे परमात्मा को नमस्कार हो ॥ १० ॥

मनीषी पुरुष को सत्त्व और नैष्कर्म्य से प्रतिलभ्य, और कैवल्य के नाथ, तथा मोक्ष सम्बन्धि सुख और ज्ञानके देने वाले ऐसे प्रभुको नमस्कार हो ॥ ११ ॥

शांत घोर तथा मूढ रूप को धारण करने वाले, तथा सत्त्वादिगुणों के अनुकरण करने वाले, तथा निर्विशेष ( साम्याधिक्यरहित ) अर्थात् जिसके सम और जिससे अधिक कोई नहीं, अथवा पृथिव्यादि विशेष रहित और साम्यस्वरूप अर्थात् वैषम्यरहित, तथा ज्ञानघन नाम जाड्यांश रहित ऐसे हरि को नमः हो ॥ १२ ॥

सर्वाध्यक्ष होकर सर्व साक्षी ऐसे क्षेत्रज्ञ रूप आपको नम हो। तथा पुरुष रूप और आत्मा के मूल रूप ऐसे तथा मूलप्रकृति स्वरूप आपको नमः हो ॥ १३ ॥

सर्व इन्द्रियों के विषयों के द्रष्टा, और सर्वज्ञान के हेतु, और सततपरिणामवाली छाया ( परिछांहीं ) के तुल्य अपृथक्सिद्ध ऐसी माया से सूचित, अर्थात् माया को जड होने से उसके प्रवर्त्तकपने से सूचित होने वाले, तथा स्वयंप्रकाश नित्य यथार्थज्ञान वाले प्रभु को नमः ॥ १४ ॥

अखिल जगत् के कारण, और जिनका कोई कारण नहीं, और कारण भी लोक विलक्षण, जैसा कि जगत में घटादि का कुलाल निमित्त कारण होता है, मृत्तिका उपादान कारण अलग होती है वैसे नहीं, किंतु आप अभिन्ननिमित्तोपादान कारण हैं, अर्थात् एकही आप निमित्तकारण भी और उपादान कारण भी हैं, तथा पञ्चरात्रादि सर्व आगम और समग्र वेद के महार्णव रूप हैं, तथा अपवर्ग अर्थात् मोक्षरूप और परमगति हैं, ऐसे आप को नमः हो ॥ १५ ॥

तथा गुणरूप अरणि ( काष्ठ ) से ढका हुआ चैतन्यरूप अग्नि जिनका, और समय पर गुणों के क्षोभ करने को समर्थ है मानस सङ्कल्प जिनका, और स्वतः नैष्कर्म्यभाव से विधिनिषेध रूप शास्त्र से वर्जित और स्वयंप्रकाश ऐसे श्रीहरि को मैं नमस्कार करता हूँ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मादृक् मद्विधश्चासौ प्रपन्नः पशुस्तस्य पाशोऽविद्या तस्य विशेषेण मोक्षणं येन तस्य योग्यतामाह, मुक्ताय मोचने हेतुः भूरिः करुणा यस्य अतस्तत्रापि ऽलयायानलसाय स्वांशेनान्तर्यामि-

(1) मनोलयाय इति वीर० ॥

यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १९ ॥
एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ २० ॥
तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ २१ ॥
यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २२ ॥
यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ।
तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीर(१) सर्गाः ॥ २३ ॥
स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः ।
नाऽयं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपेण सर्वेषां तनुभृतां मनसि प्रतीता प्रख्याता या प्रत्यक् दृक् तस्मै तथा च श्रुतिः "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इति भगवते सर्वेषां तनुभृतां नियमने समर्थाय तेषां मनःस्थितत्वेऽपि बृहते ऽपरिच्छिन्नाय ॥ १७ ॥

मनःस्थत्वेऽपि देहादिष्वासक्तैर्दुष्प्रापणायाऽऽप्तुमशक्याय तत्र हेतुः गुणसङ्गेन विवर्जिताय अत एव मुक्तात्मभिर्देहादिष्वनासक्तैश्चिन्तिताय तैः परिभावितं रूपमाह—ज्ञानात्मन इत्यादि ॥ १८ ॥

इष्टां गतिं कामितं धर्मादिफलं प्राप्नुवन्त्येव न तु तावदेव किं तु यान्तैरकामिता अन्या अप्याशिषो राति देहमप्यव्ययं राति एवं योऽदभ्रदयः स मे विमोक्षणमेव केवलं करोतु नाधिकं प्रार्थये ॥ १९ ॥

एतावदप्यहं भक्तिसुखानभिज्ञत्वेन वाञ्छामि यस्यैकान्तभक्ता न कञ्चिदर्थं वाञ्छन्ति तं परेशं परमेश्वरमीडे स्तौमीत्युत्तरेणाऽन्वयः तेषां निष्कामत्वे हेतुः ये वै भगवतः सर्वेषाम्मुक्तान्प्रपन्नाः सेवितवन्तः ॥ २० ॥

अत्यद्भुतसुमङ्गलत्वप्रदर्शनार्थमक्षरस्वादीनि विशेषणानि ॥ २१ ॥

परिपूर्णत्वं प्रदर्शयन्नाह—त्रिभिः । यस्य फल्ग्व्या च स्वल्पयैव कलयांऽशेन कृताः स जयतादिति तृतीयेनाऽन्वयः ॥ २२ ॥

कथं कृता इत्यपेक्षायां दृष्टान्तौ—यथाऽर्चिषोऽग्नेरिति । प्रवाहे दृष्टान्तः सवितुर्गभस्तय इत्यानन्त्ये. निर्यान्त्युद्गच्छन्ति संयान्ति लीयन्ते गुणसम्प्रवाहमेवाऽऽह, बुद्धिर्मन इति । खानि करणानि शरीरसर्गाः कार्यदेहप्रवाहाश्च यतो भवन्ति सः ॥ २३ ॥

अत एव देवादीनां मध्ये कोऽपि न भवति न जन्तुर्लिङ्गत्रयशून्यं प्राणिमात्रमपि किन्तु सर्वस्य निषेधेऽवधित्वेनावशिष्यत इति निषेधशेषोऽशेषात्मकश्च जयताम्मद्विमोक्षणायाऽऽविर्भवतु ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मादृशो यः प्रपन्नः पशुश्च तस्य यः पाशः कर्मबन्धस्तस्य विमोक्षणं यस्मात्तस्मै तन्मोक्षयतीति वा सः तस्मै मुक्ताय स्वयं प्रकृतिपारवश्यरहिताय भूरिकरुणाय दयासमुद्राय मनोलयाय मनसो लयः शब्दादिविषयेभ्यो वैमुख्यं यत्प्रापणयात् तस्मै, नमो लयायेति पाठेऽलयायेति छेदः । न विद्यते लयो नाशो यज्जनादिस्तस्मै "न मे भक्तः प्रणश्यति" इति भगवदुक्तेः । योगदशायां जीवशरीरकतया पुरुषमाणत्वमाह—स्वांशेनेति । प्रत्यक्शब्दोऽहंबुद्धिबोध्यजीवविषयः स्वांशेनेति भावप्रधानो निर्देशः । स्वांशेन विशिष्टवस्त्वैकदेशत्वेनाकारेण सर्वयोगिनां मनसि प्रतीतो यः प्रत्यगहंबुद्धिबोध्यो जीवस्तस्य दृक् तद्विषयकं ज्ञानं यस्य तस्मै स्वांशभूतजीवान्तरात्मत्वेन तद्रूपतया प्रतीयमानायेत्यर्थः ॥ १७ ॥

देहपुत्रमित्रादिषु सक्तैर्दुःखेनाऽपि प्राप्तुमशक्याय गुणाः शब्दादयो विषयास्तेषु सङ्गस्तेन विवर्जितस्तस्मै शब्दादिविषयसङ्गरहितायेत्यर्थः । मुक्तात्मभिः रागादिनिर्मुक्तमनोभिः स्वहृदये परिभाविताय मुहुर्मुहुरनुध्यताय ज्ञानस्वरूपायेश्वराय सर्वनियन्त्रे ॥ १८ ॥

धर्मादिचतुर्विधपुरुषार्थान् कामयमाना यं भजन्तः इष्टां स्वाभिप्रेतां गतिं धर्मादिफलं प्राप्नुवन्त्येव न तु तावदेव किन्तु यस्तैरकामिता अन्या अप्याशिषो राति ददात्यव्ययमक्षरं च देहं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

राति स्वदेहतुल्यं देहं च ददाति (१) मुक्तिञ्चेति यावत् सोऽदभ्रदयोऽपारकरुणो मम विमोक्षणं करोतु मुक्तिं ददातु इत्यर्थः ॥ १९ ॥

मुमुक्षुत्वादहं मुक्तिं प्रार्थये एकान्तिनस्तु तामपि न प्रार्थयन्ते इत्याह-एकान्तिन इति । एकान्तिनोऽनन्यप्रयोजना भगवत्प्रपन्नाः यस्मात्कञ्चनार्थं मुक्तिमपि न वाञ्छन्ति वै, अनिच्छायां हेतुं वदंस्तान्विशिनष्टि—अत्यद्भुतं सुमङ्गलं च यस्य चरित्रं गायन्तस्तद्गुणाऽनुभवानन्दसमुद्रमग्नाः ॥ २० ॥

तमक्षरं नित्यं परं ब्रह्म परेशं ईशानामपीशमव्यक्तं चक्षुराद्यगम्यम् आध्यात्मिकयोगेन भक्तियोगेनैव गम्यमत एवातीन्द्रियं इन्द्रियाऽविषयं सूक्ष्ममणोरप्यणीयांसम् । इव शब्देन महतो महीयांसमिति लक्ष्यते । अतिदूरम् उपायान्तराऽगम्यत्वात् यद्वा सूक्ष्मम् अतिदूरं च यद्वस्तु तदेवातीन्द्रियं त्रिविधपरिच्छेदरहितमादौ भवमाद्यम् परिपूर्णमन्तर्बहिश्च व्याप्य वर्तमानमवाप्तसमस्तकामं वा स्तौमि ॥ २१ ॥

चतुर्मुखप्रभृतयो देवाश्चराचराऽऽत्मका लोकाः वेदाश्च नामरूपविभागेन यस्य फल्गव्या कलया कृताः "कस्याऽयुताऽयुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम्" इत्युक्तविधया निर्माय धृता इत्यर्थः । यस्येत्यस्य स वै इत्युपरिष्टादन्वयः ॥ २२

कथं कृता इत्यपेक्षायां दृष्टान्तौ तत्राद्यः प्रवाहे द्वितीयस्त्वानन्त्ये दृष्टान्तः यथाग्नेरर्चिषः यथा च सवितुर्गभस्तयो मरीचयोऽसकृन्निर्यान्ति: उद्भवन्ति संयान्ति पुनस्तत्रैव लीयन्ते स्वरोचिषः स्वांशभूता रोचिषः हेतुगर्भमिदं स्वरोचिषः निर्यान्ति संयान्ति चेत्यर्थः तथा बुद्धिर्मनः खानि इन्द्रियाणि शरीरसर्गाः देवादिशरीरसङ्घातश्चायं गुणसंप्रवाहः गुणपरिणामरूपः प्रपञ्चो यतो निर्याति यत्र संयाति यदंशत्वादिति भावः ॥ २३ ॥

य एवंभूतः स वै न देवादीनां मध्ये कतमोऽपि देवत्वादिजातिरहित इत्यर्थः । तथा स्त्रीत्वादिलिङ्गरहितः न जन्तुर्नापि प्राणी गुणाः कर्म चाऽयं न भवति गुणैः कर्मभिश्च रहित इत्यर्थः । अत एव न सन् न जीववर्गान्तर्भूतः न चाऽसन्नाप्यचेतनवर्गान्तर्भूतः चिदचितोरेव जात्याद्याश्रयत्वादिति भावः । जात्यादिरूपो न भवतीति वार्थः । किन्तु निषेधशेषः जात्यादिषु "ॐ नमो भगवते" इत्याद्युक्तकल्याणगुणाश्रयत्वे ऽप्रतिषिद्धे सति यस्तद्गुणाश्रयतयाऽवशिष्यते यश्चाशेषः अशेषाश्रयः साक्षात्परंपरान्यतरसम्बन्धेन जात्यादीनामाश्रयः तत्र चिदचितोः साक्षादाश्रयः जात्यादीनां तु चिदचिद्द्वारेति विवेकः । एवंभूतः स जयतात् सर्वोत्कृष्टत्वं प्राप्नोतु । यद्वा "जि अभिभवे" इति धातुर्वेदः तदा जयतादभिभवतात् मम स्वप्राप्तिविरोधिवर्गं निरस्यत्वित्यर्थः ॥२४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मोक्षादिसर्वपुरुषार्थावाप्तिरस्मादेव स्यात्तदर्थमन्यसेवा न कार्येत्याशयेनाह—यमिति । यं भजन्ते तत्प्रसादादिष्टां गतिमाप्नुवन्तीत्यन्वयः । नन्वर्थान्तरपुत्राद्याशाप्राप्तयेऽन्यसेवापेक्षितेति तत्राह—किं चेति । पुत्राद्याशिषोऽपि प्राप्नुवन्तीति शेषः । मोक्षं ददातीति न निराकारलक्षणं किन्त्वनाद्यन्तकालीनं साकारं ददातीतीत्याह—रातीति । राति ददाति मयोक्तास्त्वाशीः अव्ययमेवाशीः प्रार्थयत इत्याह, करोत्विति ॥ १९ ॥

आशीःप्रार्थनम् अल्पभक्तलक्षणं यत एकान्तभक्तैस्तन्न क्रियत इत्याह—एकान्तिन इति । ये एकान्तिनस्ते यस्य सकाशात्कञ्चन पदार्थं न वाञ्छन्ति तं परेशं ईडे इत्यन्वयः । एकान्तिन इत्यस्य विवरणं भगवत्प्रधाना इति अनाकाङ्क्षणे निमित्तमाह—यच्चरितमिति ॥ २० ॥

अक्षरात्परं भवतीह—विश्वं "एतस्य वा अक्षरस्य" "ब्रह्मविदाप्नोति परम्" "परात्परं परमः परार्ध्यः" "अव्यक्तमचलं शान्तम्" "अध्यात्मयोगेन सुनिष्ठितेन मत्वा देवं शोकमोहौ जहाति" "विमेकयाणि पश्यतः सूक्ष्मात् सूक्ष्मतरं प्रपद्ये तद्दूरे तद्वन्तिके" इत्याद्युपनिषत्प्रतिपाद्यं मया स्तूयत इति द्योतनायाक्षरादिशब्दप्रयोग इत्यनेन न पुनरुक्तिः पदानामिति ज्ञायते. न क्षरन्तीत्यक्षरं जीवव्यावृत्यर्थं परं ब्रह्मेति. ब्रह्मणो मुक्तव्यावृत्यर्थं परेशमिति. आराधनेऽप्यनुग्रहमन्तरेण न व्यज्यत इति अव्यक्तं प्रसादे सति ज्ञायत इत्यध्यात्मयोगगम्यमिति. वागादीन्द्रियमतीत्य वर्तमानत्वादतीन्द्रियं "यतो वाचो निवर्तन्ते" इति श्रुतेः । यथा सूक्ष्मं तथा महान्तमिति सूचनाय इवशब्दः "अणोरणीयान्" इति श्रुतेः आनन्त्यघटनाय परिपूर्णमिति ॥ २१ ॥

ब्रह्मादिस्थावरान्तं जगद्यस्य भिन्नांशो न तु स्वरूपांश इति ज्ञानं मुक्तिसाधनं नान्यदित्याशयेनाह—यस्येति । यस्य कलया जल्प्या वचसा वाचेति पाठोऽप्ययमेवार्थः "गीर्वाग्वाणी भारती च ब्राह्मी भाषा गौः सरस्वती" इत्यभिधानम् ॥ २२ ॥

गुणसंप्रवाह इत्यस्य विवरणं बुद्धिरित्यादि, अनेन जगत्प्रवाहस्य नित्यत्वं ज्ञापितमिति ज्ञातव्यम् ॥ २३ ॥

अधुना श्रीनारायणस्वरूपमात्रे प्रमाणदर्शनपूर्वकं स्तौति—स इति । यस्माद्गुणसंप्रवाहः स देवासुरमर्त्यतिर्यक्जातिर्न वै यस्मादित्यन्वयः । यतो बहुव्यक्त्यभावात् विशेषतो निषेधति, न स्त्रीति । नियतस्त्रियाद्याकाराभावाच्च जन्तुः कृमिलक्षणः अमूर्ताकारोऽपि नास्तीत्याह—नायमिति । देवादिशरीरकारणपृथिव्याद्यन्यतमोऽपि न स्यादित्याह—नसन्निति । इति मूर्तामूर्तनिषेधेन शेषो यस्य स निषेधशेषः ततो विलक्षणत्वेन परिशेषप्रमाणसिद्धः स जयतात् ममानर्थभूतसंसारमभिभूय वर्ततामित्यन्वयः । तत्स्वरूपमाह—अशेष इति । परिपूर्णत्वेन सिद्धः निषेधशेषशब्दस्तुच्छत्वस्यागयोग्य इत्यतो वाह अशेष इति परिपूर्णत्वेन सिद्धः "स एष आत्मा नेतिनेति" इत्यादि श्रुतेः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ओं नम इति । परात्मरूपाय भगवते महावैकुण्ठेश्वराय बृहते विभवे ॥ १७ ॥

---

(१) गजेन्द्रो भगवत्स्पर्शात् विमुक्तोऽज्ञानबन्धनात् । प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ इति स्वदेह तुल्यदेह दानस्य वक्ष्यमाणत्वात् ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्ञानात्मने प्रणयं ईश्वराय परमात्मने ॥ १८ ॥

आशिषः सामीप्याद्याः अव्ययमनश्वरं देहं पार्षदादि-रूपम् ॥ १९ ॥

एकान्तिन इति युग्मकम् । आध्यात्मिकयोगगम्यमित्यात्मानं तमेवाधिकृत्य यो योगो भक्त्याख्यस्तन्मात्रगम्यम् ॥ २०-२१ ॥

यस्येति त्रिकम् । संयान्ति भूतसूक्ष्मरूपे तत्र तत्रेति ज्ञेयम् । स वै इति । तत्तदन्तर्यामित्वात् तत्तच्छरीरप्रविष्टेऽपि तत्तज्जीववत् । तत्तदभिमानाभावात्तत्तन्निषेधशेषः । तदन्तर्यामित्वात्तेनैव तत्तद्रूपयोर्मिथ्यात्वादशेषरूपश्च जयतात् । कश्चित्तत्सादृश्येन तत्र स्वरूपशक्त्याविर्भावित्वाच्चेत्यर्थः । अत एव मन्निधर्मोपलब्धिविभावत्वादिति तत्रैव तात्पर्य टीकायां दर्शितम् ॥ २२ ॥ २३ ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तवेद्यभगवत्स्वरूपमाह—मादृगिति, यावत्स्तुति । पाशो ग्राहरूपः संसाररूपश्च मुक्ताय अर्थान्मादृगिभिरेतावत्कालं परित्यक्ताय असेवितायेत्यर्थः । तदपि मादृग्भ्यो न कुप्यते प्रत्युत भूरिकरुणाय यतोऽमलाय प्रकृतानामिव ईर्ष्यामालिन्याभावादिति भावः । अलयायेति पाठे तत्र करुणायां न विद्यते लयः क्वापि आलस्यं यस्य तस्मै न च त्वयि दुःखज्ञापनापेक्षेत्याह—स्वांशेनेति । "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति श्रीमुखोक्तेः प्रतीतो वः प्रत्यग्दृक् अन्तर्यामी तस्मै बृहते श्रीकृष्णाय ॥ ॥ १७ ॥

मर्त्यलोके क्रीडापरत्वेऽपि प्राकृतगुणसङ्गशून्याय मुक्तात्मभिर्मुक्तजीवैः आत्मारामैर्भावितायं ध्याताय यद्वा मुक्तात्मभिः आत्मघातिभिरित्यर्थः । परिभाविताय मायिकविग्रहः परमेश्वरोऽयमिति दृष्ट्यातिरस्कृताय वस्तुतस्तु ज्ञानात्मने ज्ञानपूर्णा चिदेव आत्मा वपुर्यस्य तस्मै यद्वा तं तदपराधं जानते अचिरात्तदुचितफलदायिमिति भावः ॥ १८ ॥

सकामभक्तसेव्यत्वमाह—यं धर्मादिकामनया भजन्तोऽपि इष्टां मेनितामाराध्यामिति यावत् गतिं प्रेमलक्षणां "सत्यं दिशत्यर्थितमर्थितो नृणाम" इत्यादेः । किन्तु आशिषः कामितान् अर्थान् राती ददाति अव्ययमप्राकृतं देहं च ध्रुवादिभ्य इव ददाति अतः स अदभ्रदयः अनल्पकृपाराशिः विमोक्षणं ग्राहात्संसाराच्च करोतु नित्यसिद्धदेहञ्च प्रेमभक्तिञ्च ददात्विति ॥ १९ ॥

ऐकान्तिकभक्तस्वभावं तु मादृशः पशुः कथं प्राप्स्यतीति द्योतयन् निष्कामभक्तसेव्यत्वमाह—एकान्तिनो यस्य भक्ता न कञ्चनाप्यर्थं वाञ्छन्ति तमीड इत्युत्तरेणान्वयः । कुतो न वाञ्छन्ति भगवत्प्रपन्नाः भगवत्प्राप्तिमहासम्पत्त्यैव परिपूर्णा इत्यर्थः । तेषां सुखं सर्वतोऽप्यधिकमित्याह—अत्यद्भुतमित्यादि ॥ २० ॥

ननु, तं केचिन्मायाशबलब्रह्मेति केचिच्च प्रभूतपुण्यकजीव इत्याचक्षते सत्यं ते नारकिणा एव । स तु साक्षात् पूर्णं परंब्रह्मैवेत्याह, तमिति । आध्यात्मिकयोगगम्यं यद्ब्रह्म तदेव परेशं परमेश्वरं तमीडे यद्वा आत्मानं तमेवाधिकृत्य यो योगो भक्त्याख्यस्तेन गम्यं "भक्त्याहमेकयाग्राह्यः" इति तदुक्तेः । सूक्ष्मं परमाणुमिव अतीन्द्रियं सर्वेन्द्रियागम्यम् ॥ २१ ॥

परिपूर्णत्वमाह—त्रिभिर्यस्येति, फल्गव्या चेति । तस्य कला द्विविधा फल्गुरफल्गुश्च आद्या ब्रह्मेन्द्रचन्द्रादिजीवरूपा द्वितीया मत्स्यकूर्मादीश्वररूपा चेति स एव सर्व इत्यर्थः । वेदाः वेदोक्ताः कर्मादयः भगवन्निःश्वासभूतत्वेन वेदानामफल्गुत्वात् ॥ २२ ॥

उक्तमर्थं दृष्टान्तेन साधयति—यथेति । तथा च श्रुतिः "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" इति तथा तेनैव प्रकारेण जीवानामुपाधयोऽपि अपरया ऽफल्गव्या कलया कृता इत्याह—यत इति । गुणप्रवाहमेवाह—बुद्धिरित्यादि । समष्टिव्यष्टिशरीरस्य सर्गः सर्गहेतवः ॥ २३ ॥

अत एव सर्वकारणत्वात् स देवादीनां मध्ये न कतमोऽपीत्याह, स इति । जन्तुः लिङ्गत्रयशून्यप्राणिविशेषः किन्तु सर्वस्य निषेधे अवधित्वेन शिष्यत इति निषेधशेषः । अशेषः स्वशक्तिकार्यत्वादशेषश्च ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मादृक् यः प्रपन्नः पशुस्तत्पाशस्य कर्मबन्धस्य मोचनं यस्तस्मै मुक्ताय सर्वदोषरहिताय न विद्यते लयो यस्य तस्मै स्वांशेन "अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ! विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति निजमुखोक्तेन सर्वतनुभृन्मनसि प्रतीता प्रत्यक् दृक् जीवचेष्टा येन तस्मै ते नमः ॥ १७ ॥

आत्मा देहस्तदादिषु शक्तैर्दुष्प्रापणाय प्राप्तुमशक्याय गुणसङ्गविवर्जिताय प्राकृतगुणमयदेहेन्द्रियरहिताय मुक्तः रागद्वेषादिदोषविनिर्मुक्तः आत्मा मनो येषां ते तथा तैः स्वहृदये परिभाविताय चिन्त्याय नमः ॥ १८ ॥

यं धर्मादिकामा भजन्तः इष्टां गतिं कामितं धर्मादिरूपं फलं प्राप्नुवन्ति । किन्तुशब्देन निष्कामा विवक्षिताः तेभ्यः सर्वा आशिषोऽव्ययं देहं स्वप्रियहतुल्यं देहं च राति एवंभूतोऽदभ्रदयो मे विमोक्षणं करोतु ॥ १९ ॥

निष्कामान्भगवत्प्रपन्नान् स्तौति—एकान्तिन इति । ये एकान्तिनो भगवत्प्रपन्नाः ते यस्य यस्मात् कञ्चनार्थं न वाञ्छन्ति तत्र हेतुः अत्यद्भुतं सुमङ्गलं तस्य चरितं गायन्तः आनन्दसमुद्रे तत्स्वरूपरूपगुणाऽनुभवानन्दसिन्धौ मग्नाः तमीडे इत्युत्तरेणान्वयः ॥ २० ॥

तच्चरितस्यात्यद्भुतत्वे हेतुप्रदर्शनार्थं तस्याऽक्षरत्वबृहत्त्वपूर्णत्वादीन् गुणानाह, तमित्यादिना ॥ २१ ॥

फल्गव्या अत्यल्पया कलाप्रकारेणैव संरक्षिताः स जयतादिति तृतीयेनाऽन्वयः ॥ २२ ॥

जिजीविषे नाऽहमिहामुया किमन्तर्बहिश्चाऽऽवृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य*मोक्षम् ॥ २५ ॥
सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २६ ॥
योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥ २७ ॥
नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाऽखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तार्थं दृष्टान्ताभ्यां साधयति—यथेति । अर्चिषोऽग्नेरिति प्रवाहे अविनुर्गभस्तय इत्यानन्त्ये च दृष्टान्त । निर्यान्त्युद्गच्छन्ति संयान्ति तत्रैव लीयन्ते तथा स्वरोचिषः स्वप्रकाशातो यतो गुणासम्प्रवाहः गुणविकारः संसारः तमेवाह, बुद्धिर्मनः खानीन्द्रियाणि शरीरसर्गः समष्टिव्यष्टिदेहसङ्घातो भवति ॥ २३ ॥

य एवंविधः स देवादीनां मध्ये कतमोऽपि न भवति न स्त्री न षण्ढः न पुमान् न जन्तुः प्राणिमात्रमपि न भवति न गुणः न च कर्म न सत् साधुः क्षेत्रज्ञः नासत् असाधुरूपं क्षेत्रं च किन्तु निषेधशेषः सर्वस्य देहादिकस्य चेतनाचेतनस्य परमात्मस्वरूपत्वानङ्गीकाररूपे निषेधे योऽवशिष्यते सः अनेन स्तोत्रेण वर्णितस्वरूपगुणशक्तिः अशेषः सर्वरूपः सर्वभिन्नत्वे सति सर्वोऽभिन्नः सर्वात्मत्वादित्यर्थः । एवंभूतो जयतान्मिमोचनेन स्वोत्कर्षमाविःकरोतु ॥ २४ ॥

भाषा टीका ।

मेरे सदृश शरणागत पशु के भी पाश को छुड़ाने वाले, और स्वयं सदा मुक्त, परमदयालु, अत एव स्वभक्तकार्य में किञ्चित् भी जिनको आलस्य नहीं ऐसे, और अपने अंश से सर्व देहधारियों के मन में प्रतीत जो प्रत्यक् (आन्तरज्ञान) अर्थात् अन्तर्यामि रूप से विराजने वाले, षड्गुणसम्पन्न निरतिशय बृहत् ऐसे परमात्मा को नमः ॥ १७ ॥

देह, पुत्र, बन्धु, गृह, द्रव्य, स्वजन आदि में आसक्त पुरुषों को दुष्प्राप्य और गुण संग से विवर्जित, तथा मुक्त जन भी अपने हृदय में जिनका सदा ध्यान करें ऐसे, ज्ञानस्वरूप अखिल जगत् के नियामक भगवान् को नमः ॥ १८ ॥

अर्थ, धर्म, काम, मोक्ष, इन चारों पुरुषार्थों की इच्छा वाले जिसको भजते हुए अपनी २ अभीष्ट गति को प्राप्त होते हैं, इतना मात्र नहीं। किन्तु जो बिना मांगे और भी वांछितों देता है तथा अव्यय [अप्राकृत] देहादिको जो देता है, [जैसे ध्रुव आदि को] वह अपारकरुणागुणसागर मेरा विमोक्षण करे ॥१९॥

जो परमैकान्ती भगवान के प्रपन्नजन हैं वो लोग जिन से कुछ भी अर्थ की चाहना नहीं करते हैं, किन्तु जिनके अति अद्भुत परममांगलिक चरित्रों को आनन्दसागर में डूबे हुए सदा गान करते हैं ॥ २० ॥

अक्षर, ब्रह्मादिक के स्वामी, अव्यक्त और आध्यात्मिक योग से गम्य, अतीन्द्रिय, सूक्ष्म के नाईं अति दूर, अनंत, आद्य, और परिपूर्ण, ऐसे उन पर ब्रह्म की मैं स्तुति करता हूं ॥ २१ ॥

ब्रह्मादिक देवता, वेद, और चराऽचर सम्पूर्ण लोक, नाम रूप विभाग पूर्वक जिसकी छोटी सी कला के किये हुए हैं ॥ २२ ॥

अग्नि से जैसे ज्वाला का प्रवाह निकलता है, सूर्य से जैसे अनंत किरणें निकलती हैं तथा वारंवार प्रकाशादि फिर जैसे उसी में लीन होते हैं, वैसे ही यह गुणों का प्रवाह जिस से है, और बुद्धि, मन, इन्द्रियें, तथा शरीरों की सृष्टि की परंपरा जिससे है ॥ २३ ॥

वह न देव न असुर न मनुष्य न तिर्यक् न स्त्री न नपुंसक न पुरुष न जन्तु न गुण न कर्म न सत् न असत् किन्तु निषेध का जो शेष अर्थात् जिसका अचिन्त्य ऐश्वर्य होने से वर्णन न हो सके और अशेष जगत् स्वरूपभी आप ऐसा परमेश्वर सर्वोत्कृष्ट होकर वर्ते है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न च ग्राहाच्छरीरस्य मोक्षणेनाऽहं जीवितुमिच्छामि तत्र हेतुः अमुया अन्तर्बहिश्चाविवेकरूपयाऽनया गजजात्या किं प्रयोजनम् आत्मलोकस्याऽऽत्मप्रकाशस्य यदावरणमज्ञानं तस्यैव तु मोक्षमिच्छामि यस्य मोक्षस्य कालेन नाशो नास्ति यथा देहस्य बन्धो देहनाशे नश्येदेव किन्तु मोक्षप्रार्थनेन आत्मलोकावरणस्य तु कालेन विप्लवो नास्ति ज्ञानैकनिवर्त्यत्वात् अतस्तस्यैव मोक्षमिच्छामीत्यर्थः ॥ २५ ॥

* मोक्षणमिति वीर० ।

नायं वेद स्वमात्मानं यच्छक्त्याऽहन्धिया [1] ततम्।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥ २९ ॥

श्रीशुक उवाच।

एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाऽभिमानाः।
नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥ ३० ॥
तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः।
छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥ ३१ ॥
सोऽन्तःसरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाऽखिलगुरो! भगवन्नमस्ते ॥ ३२ ॥
तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार।
ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुच [2] दुच्छ्रियाणाम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां गजेन्द्रमोक्षणे
तृतीयोऽध्यायः ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सोऽहं मुमुक्षुः विश्वं विश्वरूपम् अविश्वं विश्वव्यतिरिक्तं च विश्वं वेदो धनमुपकरणं यस्य तं विश्वस्याऽऽत्मानञ्च केवलं प्रणतोऽस्मि न तु तं जानामि ॥ २६ ॥

योगं विना दुर्ज्ञेयत्वादित्याह—योगेन भगवद्धर्मेण रन्धितानि दग्धानि कर्माणि येषां ते यं प्रपश्यन्ति ॥ २७ ॥

नहि सर्वेऽपि योगमेव किं नाश्रिता इत्यत आह—नम इति द्वाभ्याम्। असह्यो वेगो रागादिलक्षणो यस्य तथाभूतं शक्तित्रयं यस्य तस्मै बहिश्चाखिलधियां सर्वेन्द्रियाणां गुणाय शब्दादिरूपेण प्रतीयमानाय अतः कदिन्द्रियाणां कुत्सितानीन्द्रियाणि येषां तेषामनवाप्यं वर्त्म यस्य ॥ २८ ॥

यच्छक्त्या यस्य मायया या अहन्धीस्तया हतमावृतमयं जनो न वेद दुरत्ययं माहात्म्यं यस्य तमितः प्राश्रितोऽस्मि ॥ २९ ॥

उपवर्णितं निर्विशेषं मूर्तिभेदं विना परं तत्त्वं येन तं विविधा आत्मनो लिङ्गभिदा मूर्तिभेदस्तस्यामभिमानो येषां ते अत एते यदा नोपजग्मुः तत्र तदा अखिलामरमयः सर्वदेवमयमूर्तिः ॥ ३० ॥

दिविजैर्देवैः सह छन्दोमयेनेति वेदमयेनोक्तम् ॥ ३१ ॥

तं दृष्ट्वा उपात्तमुद्यतं चक्रं येन ॥ ३२ ॥

गरुडोऽपि मन्दगतिरिति ततः सहसाऽवतीर्यारिणा चक्रेण विपाटितं मुखं यस्य उच्छ्रियाणां देवानाम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्वाभिप्रायमाविष्करोति—जिजीविषे इति। नाहं जीवितुमिच्छामि तत्र हेतुरमुयान्तर्बहिश्चावृतयाऽहङ्कारममकारास्पदभूतयेत्यर्थः। इभयोन्या गजजन्मना किम्? न कोऽपि पुरुषार्थ इत्यर्थः। किन्त्वात्मलोकावरणस्य मोक्षणम् इच्छामि लोक्यत इति लोकः आत्मावलोकस्यावरणरूपात्कर्मणो मोक्षणम् इच्छामि यद्वा आत्मनो लोकः धर्मभूतज्ञानं तदावारकात्कर्मणो मोक्षम् इच्छामि यस्य मोक्षणस्य कालेन निमित्तेन न विप्लवो न पुनरावृत्तिस्तं मोक्षमिच्छामीत्यन्वयः ॥ २५ ॥

सोऽहमात्मलोकावरणस्य मोक्षमिच्छुरहं विश्वस्य स्रष्टारं विश्वं विश्वशरीरकम् अविश्वं विश्वविलक्षणं विश्ववेदं सर्वविद् विश्ववेदसमिति पाठे विश्वस्य वेदसं धनं पुरुषार्थरूपम् इत्यर्थः।

---

(१) हतः इति वीर०  (२) उच्छ्रयाणामिति वीर० विज०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्वा विश्वं वेद्यो धनं शेषभूतं यस्य तम् इत्यर्थः । विश्वस्यान्तः प्रविश्य भर्तारम् अजं कर्मवश्यात्मत्वादिरहितं गुणपूर्णं परमप्राप्यं नतोऽस्मि परमप्राप्यं परं केवलं नतोऽस्मीति वा प्रणाममन्तरेण तत्प्रसादनोपायं न जानामीति भावः ॥ २६ ॥

योगेनोपासनात्मकेन रन्धितानि दग्धानि कर्माणि दर्शनविरोधीनि पुण्यपापात्मकानि येषां ते योगिनः योगेन विभाविते विशोधिते हृदि यं प्रपश्यन्ति साक्षात्कुर्वन्ति तं योगिनाम् ईशमहं नतोऽस्मि शक्तास्त्वेवं योगविशुद्धमनसा साक्षात्कुर्वन्ति तत्कर्तुमशक्तोऽहं तु केवलं नतोऽस्मीति भावः ॥ २७ ॥

असह्योऽप्रतिहतो वेगो व्यापारो यस्य तच्छक्तीनां सृष्ट्यादिशक्तीनां त्रयं यस्य तस्मै शक्तिक्रियायेति पाठान्तरं तदा अप्रतिहता शक्तिरघटितघटनात्मिका क्रिया जगत्सृष्ट्यादिरूपा च यस्य तस्मै अखिलाः धीगुणाः धीगतसंशयविपर्ययाद्यवस्थाः यस्मात्सः तथोक्तस्तस्मै प्रपन्नानां पालाय रक्षित्रे दुरन्ता अपारा शक्तिर्यस्य कदिन्द्रियाणामजितेन्द्रियाणामनवाप्यं दुरवगमं वर्त्म याथात्म्यं यस्य तस्मै तुभ्यं नमो नमः ॥ २८ ॥

अयं जनो यस्य शक्त्या मायया हेतुभूतया अहन्धिया देहात्माभिमानेन यन्मायामूलकदेहात्माभिमानेन हतं हतप्रायं स्वमात्मानं न वेद तं दुरत्ययमाहात्म्यमनतिक्रमणीयमहिमानं भगवन्तमहं * नतोऽस्मि, इतोऽस्मीति पाठान्तरम् । तदा प्रपन्नोऽस्मीत्यर्थः ॥ २९ ॥

एवमित्थमुपवर्णितं निर्विशेषं हेयगुणवर्जितभगवत्स्वरूपं येन तं यद्वा ब्रह्मादिषु कस्यचिदसाधारणशब्दविशेषरहितत्वं येन वर्णितं स तथोक्तस्तं गजेन्द्रमत एवैते ब्रह्मादयो यदा नोपसस्रुपुर्नोपजग्मुः कथम्भूतास्सन्तः लिङ्गं शरीरं नानाविधनामरूपाभिमानवन्तः यद्वा लिङ्गं चिन्हं चतुर्मुखत्वहंसवाहनत्वादिरूपं तस्य भिदा ऽयत्त्वत्वबृषभवाहनत्वशूलपाणित्वादेर्यावृत्तस्तत्स्यामभिमानो येषां ते परस्परान्यावृत्तचतुर्मुखत्व हंसवाहनत्व ऽयत्त्वत्वबृषभवाहनत्वसहस्राक्षत्वैरावतवाहनत्वादिलिङ्गाभिमानयुक्ताः गजेन्द्रोपवर्णितचिन्हेषु अस्मदसाधारणानि लिङ्गानि न कानिचिदपि सन्तीत्यभिमानयुक्तास्सन्त इति फलितोर्थः । तत्र तदा हरिः इत्यौचयो भगवानखिलात्मकः अखिलदेवप्रचुरः "स आत्माऽङ्गान्यन्या देवताः" इति श्रुतेः । निखिलात्मकत्वात् निखिलानां गजेन्द्रोपवर्णितानां गुणानामात्मकत्वादाश्रयत्वात्तेः राविराशीदाविर्बभूव स्तोत्रे ब्रह्मादिगुणिवाचि शब्दरहितेऽप्युक्तविशेषणानां ब्रह्मादिष्वसम्भवात्ते समागताः वस्तुतामनर्थपुरुषोत्तम एव विशेषणानामन्वितत्वात् स एवागत इति भगवतो वास्तवाऽनवच्छिन्नमाहात्म्ययोगो दर्शितः ॥ ३० ॥

आविर्भावप्रकारमाह—तमिति । तद्वत्तथा आर्त्तं ग्राहेण पीडितं गजेन्द्रमुपलभ्य ज्ञात्वा दृष्ट्वा तत्कृतं स्तोत्रं च निशम्य श्रुत्वा कुतः यतोऽयं जगन्निवासः जगति कृत्स्ने अन्तरात्मतया वसतीति तथा अभ्युपलभ्य निशम्य च छन्दोमयेन त्रिवृद्गायत्र्यादिछन्दोरूपस्तोमोपास्यमानमिश्रप्रचुरावयवत्वाच्छन्दःप्रचुरस्तेन गरुडेन

* नतोस्मि इति मूलपाठः ।

समुह्यमानः अनेन शीघ्रयानातिशयः सूचितः चक्रं सुदर्शनमायुधं यस्य तादृशः संस्तुवद्भिर्देवैः सह यत्र गजेन्द्रः तत्राशु अभ्यगमदभिजगाम ॥ ३१ ॥

अन्तःसरस्युरुबलं यस्य तेन ग्राहेण गृहीतो अत एवार्तः स गजेन्द्रो गरुत्मति गरुडे स्थितमिति शेषः । उपात्तं धृतं चक्रं येन तं हरिं खेऽन्तरिक्षे दृष्ट्वा साम्बुजकरं शुण्डामुत्कृष्य "रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्" इत्युक्तन्यायेन गृहीताम्बुजकरम् उत्कृष्येत्यर्थः । कृच्छ्रात्कार्श्याद्गिरमाह, गिरमेवदर्शयति—नारायणायेत्यादि ॥ ३२ ॥

ततः पीडितं गजेन्द्रं वीक्ष्याऽजो हरिः कृपया सहसा झाश्ववतीर्य गरुडोऽपि मन्दगतिरिति ततोऽवरुह्याशु त्वरया सग्राहं गजेन्द्रं सरस उज्जहारोद्धृत्य बहिर्निष्कासितवान् ततोऽरिणा चक्रेण विपाटितं भिन्नं मुखं यस्य तस्माद्ग्राहाद्गजेन्द्रं उस्रियाणां देवानां पश्यतां सताममूमुचन्मोचयामास ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानसाधनमन्तरेणानेन शरीरेण चिरं रक्षितेन किं प्रयोजनमित्याशयेनाह-जिजीविष इति । अहं शरीरेऽन्तर्बहिश्चावृतयामुयेभयोन्या प्रकृत्या किं न किमपि इति यस्मात्तस्मादिह ताम्रमिते शरीरनाश एव प्रार्थ्यत इत्याह-इच्छामीति । तस्यात्मलोकावरणस्य स्वज्ञानावरकस्य लिङ्गशरीरस्य मोक्षणं नाशमिच्छामीत्यन्वयः । अस्यापि कालेन नाशः किं न स्यादत्राह-कालेनेति । विप्लवो नाशः अनेनात्मज्ञानमन्तरेण लिङ्गशरीरस्य नाशो नास्ति सति तस्मिन् तस्स्यादित्युक्तं भवति "तस्मिन्दृष्टे परावरे" इति श्रुतेः ॥ २५ ॥

ननु, गुणोपसंहारलक्षणोपासना वेदान्तज्ञानेन सम्भवेत्तिर्यग्योनित्वेन तदनधिकारादात्मज्ञानासम्भवाल्लिङ्गशरीरनाशे आशामात्रं तव स्यादित्याशङ्क्यात्मज्ञानविहितप्रणामेनापि प्रसन्नेश्वरप्रसादादुत्पन्नज्ञानेन तस्स्यादित्यतस्तमाचरति-सोऽहमिति । योहं लिङ्गशरीरमोक्षमाकांक्षे सोहं परमपदं प्राप्तव्योत्तमं प्रणतोस्मीत्यन्वयः । सर्वस्मादस्योत्तमत्वं कुत इत्यतस्तदुपपादकविशेषणैः सिद्धमित्याह—विश्वसृजमित्यादिना । विश्वसृजत्वाद्विश्वं तर्हि मृद्घटवत्तदात्मकत्वमापन्नमिति नेत्याह अविश्वमिति. जगतो विलक्षणं स्वसृष्टपदार्थप्रविष्टत्वाद्विश्वं बहिष्ट्वादविश्वमिति वा दुर्भगशरीरस्थत्वेऽपि ज्ञानलोपो नेत्याह-विश्ववेदसमिति । विश्वं वेत्तीति सर्वज्ञमित्यर्थः । सर्वज्ञत्वं चास्यैव सुलभमित्याह-विश्वेति । विश्वं व्याप्य वर्तमानं विश्वम् आहुः इति वा विश्वस्य स्वामीति वा विश्वात्मानं जगच्छरीरस्य जगदाकारेण परिणामः किम नेत्याह, अजमिति । अहङ्कारात्मा रुद्रोऽप्युच्यत इति नेत्याह—ब्रह्मेति । स एव नेत्याह परमिति मुक्तो नेत्याह परमिति ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानप्रत्ययसूमीश्वरसद्भावे प्रमाणमित्याशयेन नमति—योगेति । योगेन रन्धितानि दग्धानि कर्माणि येषां ते तथा ॥ २७ ॥

ननु, तत्तच्छक्तिमतस्तत्तत्कर्मदं हरेस्तु सुखपाविकमं कथम्? इत्याशङ्क्य तत्तच्छक्तिविशिष्टत्वेन तं नमति—नम इति । असह्यो वेगो यासां ताः तथा तादृशीनां शक्तीनां उत्पत्तिस्थितिसंहारविषयाणां उत्साहमन्त्रप्रभुविषयाणां वा त्रयं यस्य स तथा तस्मै उत्पत्त्यादिशक्तयश्च ज्ञानवत एव युक्ता इत्याह—मखिलेति । न चैताः शक्तयो देवदत्तशक्तिवत्परिमिता इत्याशयवानाह—दुरंतेति । परिच्छिन्नत्वमनुमानेन साध्यत इति चेत्तत्राह—दुर्गेति । हेतोराश्रयासिद्धत्वेनानुमानानुदयात् ॥ २८ ॥

हरेः स्तुतिफलं दर्शयति—नायमिति । यः स्वमात्मानं न वेद न जानाति पूर्वमिति शेषः ॥ २९ ॥

अनन्तरं किमिधुवन्नाह—एवमिति । उपवर्णितं निर्विशेषं सभं ब्रह्म येन स तथा तं पृथिव्यादिविलक्षणं ब्रह्म येन स तथा नमिति वा अवतारमूलरूपयोर्विशेषो नास्तीति वा निर्विशेषं नदति वा "पूर्णमदः पूर्णमिदम्" इति श्रुतेः । विविधानि लिङ्गानि पद्मवज्रादीनि वा हंसवृषभादीनि वा एवं लिङ्गया भेदेन जातोऽभिमानोऽहं पद्मपाणिरहं वज्रपाणिरित्यादि यस्या येषां तथा स्पष्टसंहर्तृत्वादिलक्षणो वा ये ब्रह्मादय एते यदा गजेन्द्रं नोपससृपुः तदा सकलदेवनाथो हरिः यत्र गजेन्द्रस्त-त्राविरासीत् तस्य एव तत्र प्रत्यक्षीभूतो न तु दूरागत्य कुत इति तत्राह—निखिलेति सर्वव्यापकत्वात् यद्वा ब्रह्मादीनामनागमे निमित्तमाह निखिलेति हरेः सर्वस्वामित्वाद्धरेः पूर्वमागमने प्रयोजनाऽसिद्धेरित्यर्थः ॥ ३० ॥

तद्दुःखाद्दर्शनकृपोदेति तथा तम् ॥ ३१ ॥

अखिलगुरो न हि परिच्छिन्नस्य सर्वगुरुत्वं घटत इति नाराय-णेत्यादि हेतुगर्भविशेषणम् ॥ ३२ ॥

ततः फलितमाह—तं वीक्ष्येति । उच्छ्रियाणां देवानां "उच्छ्रिया विजया देवा आदित्या अमराः सुराः" इत्यभिधानम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं प्राग्जन्मन्यनुशिक्षितं विज्ञापयति—जिजीविष इत्यादिना । आत्मलोको भगवदाविर्भावः ॥ २५ ॥

परपदं परमाश्रयम् ॥ २६ ॥ २७ ॥

अमलेति अन्तःकरणेन दुर्बोधत्वम् अखिलानां ब्रह्मादीनां धियो येभ्यः तादृशा गुणा यस्य तस्मा इति अतोऽपि दुर्बोधत्वम् । तथापि प्रपन्नपालायेति प्रपत्तिमात्रेण सुबोधत्वम् । शक्त्यन्तरेण तु सुखभावं निषेधयति—दुरन्तशक्तय इति । अत एव कदिन्द्रियाणामिति अतो नमो नमः ॥ २८ ॥ २९ ॥

स वै न देवेति पद्यार्द्धं विवादयंस्तद्विवादितं साक्षाद्दर्शयति, एवमिति । उपवर्णितं निर्विशेषं श्रीहरेर्देवत्वादिप्राकृतविशेषराहित्यं येन तम् अखिला अखिलसंपादकशक्तयस्तत्प्राप्त्यमरादस्तत्-सम्पादकशक्तयोऽपि———प्राचुर्येण विद्यन्ते यस्मिन् तत्र हेतुः निखिलाऽऽत्मकत्वादिति स्वार्थे कन् । कं सुखं स्वरूपो वा ॥ ३० ॥ ३१ ॥

कृष्छ्रात् प्रेम्णैवद्यात् ॥ ३२—३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वेतावत्या स्तुत्या ग्राहात्स्वशरीरमोक्षणमिच्छसि तत्राह—जिजीविषेनेति—तत्र हेतुः अन्तर्बहिश्च अविद्यया आवृतया इभ-योन्या किं प्रयोजनम्, नहि किमिच्छसि इति तत्राह—यस्य कालेन विप्लवो नाशो नास्ति तस्य आत्मलोकावरणस्य मदादिजीवानामविद्यया भगवद्विस्मारिकायाः मोक्षं यद्वा आत्मनस्तव लोको वैकुण्ठस्तदावरणस्य तद्द्वारकपाटस्य मोचनं मत्प्रिया-यास्तत्प्राप्त्ययोग्यतायाः नाशमित्यर्थः ॥ २५ ॥

नहि भक्तिः क्रियतामिति चेद्भक्तिमप्यहं कर्तुं पशुत्वात् विपद्ग्रस्तत्वाच्च न जानामि तस्मात् यत्किञ्चित् स्वचक्षुरादिभिरिदं विश्वं जानामि तस्य यः कर्ता भवेत्तं केवलं मन-सैव नमामीत्याह—सोऽहं प्रसिद्धः पशुः विश्वं विश्वरूपम् अविश्वं स्वरूपसत्त्या विश्वव्यतिरिक्तं विश्ववेदसं विश्वज्ञातारं विश्व-स्यात्मानम् ॥ २६ ॥

न च तत्प्राप्त्युपायो मयि वर्तत इत्याह—योगेति । योगिनो न तु मादृशाः पशवः योगेन भगवद्भक्त्यैव दग्धकर्माणः ॥ २७ ॥

इदि तद्भावनानां प्रतिबन्धकमाह—असह्यवेगं शक्तित्रयं गुणत्रयं यस्य तस्मै तत्कृपया प्रतिबन्धकाभावे तु अखिलानां सर्वेषामपि धियो यत्र तथाभूता गुणाः सौन्दर्यादयो यस्य तस्मै । किञ्च प्रपन्नमात्रमपि पालयति तस्मै, तत्र हेतुः दुरन्तशक्तये दुर्बोधकृपाशक्तये कृपां विना तु बहिर्मुखेन्द्रियाणां दुष्प्रापवर्त्मने ॥ २८ ॥

अयं मदीयो जीवः यस्य शक्तिर्माया तया या अहन्धीः तया हतं तं न वेद ॥ २९ ॥

उपवर्णितं निर्विशेषं निष्प्राकृतस्वरूपं येन तं ब्रह्मादयः आधिकारिकाः शिवरक्षणादौ भगवन्नियुक्ता अपि तद्रक्षणे स्वसामर्थ्याभावेनैव नोपससृपुः किन्तु विविधलिङ्गभिदायां हंस-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हुतत्वैरावतवाहनत्वादौ स्वपृथङ्महेन्द्रत्वादावेव अभिमानो येषां गजेन्द्रेण वयं नत्वीषदपि स्तुताः प्रत्युत—

"यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः" ॥ इति

फल्ग्व्येति पदेन तुच्छीकृता एवाऽतो यमेव स्तौति स एव भगवान् रक्षतु स तु शीघ्रं न प्रत्यक्षीभविष्यति दुराराध्यस्य तस्य स्वभावं वयं जानीम एवातो ग्राहग्रस्तो मरिष्यत्येवं दुरभिमानिनौदासीन्यं यदा व्यञ्जयामासुरिति भावः तदा तत्क्षण एव तत्र हरिः निखिलात्मकत्वात् हेतोरखिलामरमय इति तरुमूलसेचने पल्लवाद्याः सिक्ता इव विष्णुस्तुत्यैव सर्वे स्तुता इति ते तत्त्वमविद्वांस इति भावः त्रिदिवजैर्ब्रह्मादिदेवैः सहितः एव संस्तुवद्भिरिति स्वापराधक्षमापनार्थमेवेति भावः छन्दोमयेन इच्छामयेन इच्छानुरूपवेगेनेत्यर्थः । यतो यत्र ॥ ३० ॥ ३१ ॥

आर्त्तस्तत्पीडाऽभिभूतोऽपि खे आकाशे अतिदूरेऽपि दृष्ट्वा साम्बुजोर्त्ति तत्रत्यान्यम्बुजानि सद्य एव शुण्डेनैवावचित्य चरणयोरर्पयितुमित्यर्थः ॥ ३२ ॥

गरुडोऽपि मन्दगतिरिति तत्पृष्ठादवतीर्य वामकरेण शुण्डं धृत्वा सरसः सकाशात्तटे उज्जहार ततश्च दक्षिणकरेण अरिणा चक्रेण विपाटितं मुखं यस्य तस्मात् उत्कण्ठयाणां देवानां सम्पश्यतां सम्यक्तया पश्यतोऽपि तानानादृत्य ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमस्य तृतीयोऽयं सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहं न जिजीविषे जीवितुं नेच्छामि यतः अन्तर्बहिश्च आवृतया अविवेकेनेति शेषः । अनुया इभयोन्या गजोत्पन्नया तन्वा किम् ? आत्मानौ जीवेशौ लोक्यते अनेनेत्यात्मलोकः उपास्योपासकस्वरूपज्ञानं तस्याऽऽवरणमज्ञानम् "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति श्रीमुखवचनात् तस्य मोक्षमिच्छामि यस्य मोक्षणस्य अज्ञाननिवृत्तेः कालेन विप्लवो नास्ति ॥ २५ ॥

सोऽहं मुमुक्षुः परं पूर्णं पदं मुमुक्षुगम्यं स्वरूपं विश्वसृजं विश्वकर्त्तारं नतोऽस्मि कीदृशमविश्वं विश्वभिन्नं विश्वं तदभिन्नं च विश्वभिन्नाभिन्नमित्यर्थः । नन्विदमयुक्तं नहि घटकर्त्ता भिन्नाभिन्नो दृश्यते इत्यत आह—विश्वात्मानमिति । विश्वस्य आत्मा आश्रयः यथा औषधीनां पृथिवी अतो विश्वभिन्नाभिन्नो भगवान् नतु घटादेः कुलालोऽत्यन्तभिन्नस्तद्वदत्यन्ततो विश्वभिन्न इति भावः । तत्र च श्रुतिः "यथा पृथिव्याः ओषधयः सम्भवन्ति यथा पुरुषात्केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्" इति विश्वं वेदो ज्ञानं वा लोकोपकरणं यस्य तम् ॥ २६ ॥

योगेन भगवति चित्तसमाधानेन रन्धितानि कर्माणि येषां ते योगेन विभाविते विशोधिते हृदि यं प्रपश्यन्ति ध्यायन्ति तं नतोऽस्मि ॥ २७ ॥

असह्यो दुर्द्धरो वेगो यस्य तथाभूत हे अनिवार्य्यगते ! यत् शक्तीनां ग्राहादिगतानां तमआदिमायागुणानां अयं तमसाऽनेन गृहीतो रजसा बन्धुभिस्त्यक्तः सत्त्वेन त्वां प्रार्थयामि इत्येतत्सर्वं यस्मात्तस्मै ग्राहादिप्रवर्त्तकायेत्यर्थः । अखिलः समग्रो धीः गुणो बुद्धियोगो यस्मात्तस्मै यद्वेन बुद्धियोगेन यं शरणं गतोऽस्मि तस्मै इत्यर्थः "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रीमुखोक्तेः दुरन्ताः अनन्ताः शक्तयो यस्य तस्मै कदिन्द्रियाणामनवाप्यं वर्त्म प्राप्तिमार्गो यस्य तस्मै प्रपन्नपालाय नमो नमः ॥ २८ ॥

अयं जीवः अहन्धिया देहात्मबुद्ध्या हतं विस्मृतम् आत्मनो विस्मरणमेव हननम् स्वमात्मानं यस्य शक्त्या त्रिगुणया मायया न वेद तं दुरत्ययमाहात्म्यमनन्तमाहात्म्यम् इतोऽस्मि शरणं गतोऽस्मि ॥ २९ ॥

उपवर्णितः निर्विशेषः सर्वात्मत्वाद्देवादिविशेषरहितो भगवान् येन तं गजेन्द्रं विविधा चासौ लिङ्गभिदा देवादिमूर्त्तिविशेषभेदस्तस्यामभिमानो येषां तस्माद्वेते यदा नोपसस्रुपुः नोपजग्मुस्तत्र तस्मिन् समये निखिलात्मकत्वात्सर्वाश्रयत्वात् अखिलामरमयः शर्वब्रह्मादिदेवेषु प्रधानो हरिः स्वभक्तक्लेशहरः आविरासीत् । अयं भावः यद्यपि "नमो भगवते तस्मै यत एतच्चिदात्मकम्" इति जगत्कारणत्वेनैव जगत्कारणमानिनां तेषामप्यागमनमुचितं तथापि तेषां विभिन्नावच्छिन्नाभिमानानामितरेतरसातिशयत्वशङ्कयानागमनं निरतिशयस्य श्रीमद्धरेरागमनं च सुयुक्तमिति ॥ ३० ॥

आविर्भावप्रकारं वर्णयति—तमिति । तं गजेन्द्रं तद्दुःखकरीत्यात्तमुपलभ्य ज्ञात्वा तत्कृतं स्तोत्रमभिशम्य श्रुत्वा जगन्ति निवसन्ति यस्मिन् जगत्सु निवसतीति वा छन्दोमयेन छन्दःप्रचुरेण शीघ्रवेगेन गरुडेन सम्प्रगृह्यमाणः संस्तुवद्भिर्विविजैर्ब्रह्मादिभिः सह यत्र गजेन्द्रस्तत्राऽभ्यगमत् अयमभिप्रायः सगुणमा सह तेषां गमनासम्भवात् गरुडप्लुतवानेन तेऽपीश्वरत्वाभिमानिनस्तत्तल्लोकादाकृष्टाः नतु तत्तल्लोकाः आकृष्टा जगन्निवास रक्षितारावादिति अन्यथा नैते ससुपुरित्यनेन विरोधः स्यात् ॥ ३१ ॥

गजेन्द्रस्तु हरिं दृष्ट्वा साम्बुजकरं भगवदर्पणार्थं गृहीतपद्मं करमुत्क्षिप्योन्नतं कृत्वा भगवन्नम इति गिरं कृच्छ्रादाह ॥ ३२ ॥

अजो हरिस्तं तं पीडितं दृष्ट्वा अति शीघ्रवेगेन रक्षार्थं गरुडादपि अवतीर्य सग्राहं कृपयोज्जहार तदनन्तरमुत्कण्ठयाणाम् उन्नतेश्वरत्वाभिमानद्योतका श्रीर्येषां तेषां देवानां सम्पश्यतां अरिणा चक्रेण विपाटितमुखात् ग्राहात् अमूमुचत् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषाटीका ।

हे महाराज ! मैं जीने की इच्छा नहीं करता हूँ क्योंकि बाहर भीतर आवृत हो रही जो यह हस्ती की योनि इससे कुछ प्रयोजन नहीं है । किन्तु जिसका काल से नाश नहीं उस आत्मा के आवरण करने वाले केवल अज्ञान मात्र के बन्धन से मोक्षण ( छूटना ) चाहता हूँ ॥ २५ ॥

वह मैं विश्व की सृष्टि करने वाले, स्वयंविश्वरूप, और विश्व से व्यतिरिक्त, तथा विश्व उपकरण वाले, विश्व के आत्मा, अज, और मुमुक्षुजनों के प्राप्य, ऐसे पर ब्रह्म को केवल प्रणाम करता हूँ ॥ २६ ॥

भगवद्धर्मों से दग्ध हुए कर्म जिनों के ऐसे योगीजन, योग से भावित ऐसे अपने हृदय में जिनका दर्शन करते हैं उन योगेश श्रीहरि को मैं प्रणत हूं ॥ २७ ॥

असह्यवेग जिनका ऐसी तीन शक्तियों से विशिष्ट, और अखिल चेतनों की बुद्धि के गुण जो संशय विपर्यय इत्यादि अवस्था वो जिनसे होवैं ऐसे, तथा प्रपन्न जनों के पालन करने वाले, दुरन्त शक्ति वाले, और अजितेन्द्रिय पुरुषों को न प्राप्त हो मार्ग जिनका ऐसे आपको वारंवार नमः हो ॥ २८ ॥

जिसकी माया की करी हुई देहादि में जो अहंबुद्धि तिससे, नष्ट प्राय अपने आत्मा को यह जीव नहीं जानता, उस दुरत्यय माहात्म्य वाले भगवान का मैंने आश्रय लिया है ॥२९॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—गजेन्द्रने जब इस प्रकारअपनी स्तुति में किसी देवताओं के विशेष चिन्होंको न पुरस्कारकर केवलपरतत्त्व, का वर्णन किया और जब चतुर्मुखत्व हंसवाहनत्व, ऽयम्बकत्व वृषभवाहनत्व आदि चिन्हों के भेद के अभिमान वाले, ब्रह्मा महादेव आदि देवता समीप नहीं आये, तब निखिलात्मक होने से सर्वदेव स्वरूप आप साक्षात् श्रीहरि प्रकट हुए ॥ ३० ॥

जगन्निवास हरि ने गजेन्द्र को ऐसा आर्त्तजानकर, गजेन्द्र की स्तुति को सुनकर, स्तोत्रकरनेवाले स्वर्गके देवताओं के सहित, जिनके पङ्खोंसे सामगान स्वयं होवै ऐसे छन्दो मय गरुड के ऊपर विराजमान होकर, श्रीसुदर्शनचक्रको हस्तमें लेकर अति शीघ्र वहां आपहुंचे जहां गजेन्द्र रहा ॥ ३१ ॥

सरोवर के भीतर अति बलिष्ठ ग्राह से ग्रसित, ऐसे गजेन्द्रने, आकाश में गरुड के ऊपर विराजमान हाथ में चक्र लिये हुए श्रीहरि को देखकर, अपनी शुण्डा से कमल लेकर भगवान की ओर को शुण्डा उठाकर बड़े कष्ट से इतनी वाणी को बोला, कि—हे नारायण ! हे अखिल गुरो हे भगवन् ! आपको नमस्कार हो ॥ ३२ ॥

कर्म कृत जन्म रहित श्री हरिने भी ग्राह को अति पीड़ित देखकर, बड़े शीघ्र गरुड से उतर कर, कृपा देवी के परवश होकर ग्राह सहित गजेन्द्र को बाहर निकाल कर, देवताओं के देखते २ ( चक्रराज ) श्रीसुदर्शन से ग्राह का मुख फाड़कर, गजेन्द्र को छुड़ाया, ( यहां कृपा का यही अधिक फल है, कि—ग्राह को भी श्री सुदर्शन का स्पर्श होने से उत्तम गति की प्राप्ति होगी ॥ ३३ ॥

श्री गजेन्द्र मोक्षणो हरिर्जयति ॥

इति श्रीमद्भागवत सप्तम स्कन्ध में, तृतीय अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्त ॥ ३ ॥

———

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

———

## ॥ चतुर्थोऽध्यायः ॥

---

श्रीशुक उवाच ।

तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ।
मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥
नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ।
ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥
योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥
प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ।
अगायत यशोधामकीर्तन्यगुणसत्कथम् ॥ ४ ॥
सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ।
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥
गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥
स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥
स एकदाऽऽराधनकाल आत्मवान्गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः ।
गजं सपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ १ ॥

१—२ ॥

हूहूसंज्ञो गन्धर्वसत्तमः असौ देवलस्य शापेन ग्राहो जातः स वै स तु ततः सद्यो मुक्तस्सन्नुत्तमश्लोकमगायतेत्यन्वयः । एवं हीतिहासोऽत्र मे कथा, सरसि स्त्रीभिः क्रीडन्नसौ स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष स च कुपितो ग्राहो भवेति शशाप तेन च प्रसादितस्सन्नुवाच एवमेव गजेन्द्रं गृहीत्वा ततश्च गजेन्द्रमुद्धरन्हरिस्त्वामपि मोचयिष्यतीति ॥ ३ ॥

कथम्भूतं, यशसो धाम आश्रयम् अतः कीर्तन्या कीर्तनीया गुणाः सती कथा च यस्य तम् ॥ ४ ॥

स्वं लोकं गन्धर्वलोकम् ॥ ५ ॥ ६ ॥ ७ ॥

कुलाचले मलयाख्ये आश्रमो यस्य ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा किमभूत्तदाह—तदा गजेन्द्रमोक्षणदशायां ब्रह्मरुद्रमुख्या देवादयस्तत् गजेन्द्रमोक्षणरूपं हरेः कर्म अद्भुतं शंसन्तः प्रशंसन्तः कुसुमवर्षं मुमुचुः ॥ १ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा विद्या वृन्दुभयः तैरः गन्धर्वाः ननृतुर्जगुश्च ऋषिप्रभृतयः पुरुषोत्तमं हरिं तुष्टुवुः ॥ २ ॥

योऽसौ ग्राहः सपूर्वस्मिन् जन्मनि हूहूर्नाम गन्धर्वश्रेष्ठः स देवलस्य शापेन निमित्तेन ग्राहो जातः सर्वग्राहो देवलस्य शापेन मुक्तः सद्यः परमाश्चर्यरूपधृत् प्राक्तनाद्भूततमगन्धर्वरूपधृत् ॥ ३ ॥

उत्तमश्लोकमव्ययं यशसांधाम आश्रयम् अतः कीर्तन्याः कीर्तनीयाः गुणाः सत्कथाश्च यस्य तमधीशं हरिं शिरसा प्रणम्यागायतेत्यन्वयः ॥ ४ ॥

एवमतिहासोत्तमे कथा सरसि स्त्रीभिः सह क्रीडमानो हूहूः स्नातुं प्रविष्टं देवलं प्रगृह्य विचकर्ष सच प्रकुपितो ग्राहो भवेति शशाप स च प्रसादितस्सन्नुवाच एवमेव गजेन्द्रं गृहीत्वा ततश्च गजेन्द्रमुद्धरन् हरिः त्वामपि मोचयिष्यतीति ईशेन हरिणा गाम-श्रीमता कृतिनः अनुकम्पाविषयीकृतः स गन्धर्वस्तमीशं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्य च लोकस्य ब्रह्मादिजनस्य पश्यतः सतः मुक्तं किल्बिषं देवलशापरूपं यस्य तादृशस्सन् स्वलोकमगात् ॥ ५ ॥

गजेन्द्रस्तु भगवतो हरेः स्पर्शाद्विनोरज्ञानेबन्धनात्कर्मबन्धनाद्विमुक्तः भगवतः रूपं प्राप्तः भगवतः सारूप्यं प्राप्तः तदेव दर्शयति पीतं पिशङ्गं वासो वस्त्रं यस्य चत्वारो भुजा यस्य सः ॥ ६ ॥

गजेन्द्रपूर्वजन्मवृत्तान्तमाह—सवा इति । स वै गजेन्द्रः पूर्वस्मिन् जन्मनि पाण्ड्यदेशपतिः द्रविडेषु श्रेष्ठः इन्द्रद्युम्नाख्यः राजा बभूव स च विष्णुव्रतपरायणः विष्णुव्रतं श्रीविष्णुपूजनात्मकं तदेव परमुत्कृष्टमयनमनुष्ठेयं यस्य तादृशः आसीत् ॥ ७ ॥

एवं स्थितं जटा बिभर्तीति तथा तापसः तपोनिष्ठः कुलाचले मलयाद्रावाश्रम आश्रयो यस्य तादृशः स इन्द्रद्युम्नः एकदा भगवदाराधनकाले समाहितचित्तस्सन् गृहीतं मौनात्मकं व्रतं येन तादृश ईश्वरं हरिं समर्चयामास ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रणाघवृरितस्य हरौ निरतिशयभक्तिः स्यादिति तेषाशासाधनादि निरूप्यते स्मिन्नध्याये तत्र प्रथमं देवादीनां पुष्पवर्षादिकं भगवत्प्रीतिसाधनमाह—तदेति । यदा गजेन्द्रम् अमूमुचत्तदा ॥ १—२ ॥

स पश्चात्पूर्वचीर्णपुण्योदयेनाविर्भूतज्ञानो हरिं स्तुत्वा तत्प्रसादेन देवलशापेन धृताया पशुस्थितेर्तस्माच्छापान्मुक्तः परमाश्चर्यरूपधृक् हरिं शिरसा प्रणम्य यशोधामागायतेत्यन्वयः कीर्तनीया गुणारूपाः सत्यः कथा यस्य स तथा तं यस्मिन्नन्येति वा अनेन हरिगुणकीर्तनरूपं गानं गायकशापादिमोक्षसमर्थमित्युक्तं भवति ॥ ३—५ ॥

ननु, किमनेनान्यगुणकीर्तनेन इदानीं गजेन्द्रस्य भगवत्स्तुत्या किमभूदित्याशङ्क्य स्तुत्या प्रसन्नस्य हरेर्दर्शनेन मुक्तकिल्बिषस्य तत्सारूप्यं फलमभूदित्याह—गजेन्द्र इति ॥ ६ ॥

हरेर्नाममात्रतो ऽस्मासाविष्णुप्रसादः पूर्वं क इति तत्राह—स वा इति ॥ ७ ॥

गजेन्द्रयोनिप्राप्तिनिमित्तं वक्तुमुपोद्घातं रचयति—स एकदेति ॥ ८——१२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१——५ ॥

विमुक्त इति तत्सारूप्यस्य मायातीतत्वमुक्तम् ॥ ६—८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पार्षदत्वं गजेन्द्रस्य गन्धर्वत्वं च यादसः ।
चतुर्थे भगवद्वाक्यं हितमुक्तं मरिष्यताम् ॥ १ ॥

१——२ ॥

देवलशापेनेत्येवमत्र कथा सरसि स्त्रीभिः क्रीडमानो स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष स च कुपितो ग्राहो भवेति शशाप तेन च प्रसादितस्सन्नुवाच एवमेव गजेन्द्रं गृहीतवन्तं त्वां हरिर्मोचयिष्यतीति अधीशं कीदृशं यशसां धाम आश्रयम् ॥ ३—५ ॥

भगवत्स्पर्शात् तत्र मनोवाचोऽर्थां स्पर्शात् अज्ञानबन्धनो मुक्तः स्थूलदेहेन स्पर्शात् स्पर्शमणिन्यायेन भगवतो रूपं प्राप्तो ध्रुव इवेति ज्ञेयम्. रूपं सारूप्यं देहमव्ययं करोत्विति पूर्वप्रार्थनात् ॥ ६—७ ॥

कुलाचले मलयाद्रावाश्रमो यस्य सः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चतुर्थे ग्राहो गन्धर्वो गजेन्द्रश्च हरिपार्षदोऽभूदित्युच्यते ।
गजेन्द्रमोक्षादि स्मरणफलञ्च वर्ण्यते ॥ १ ॥

तदा गजेन्द्रमोचनवेलायाम् ॥ १ ॥ २ ॥

योऽसौ ग्राहः स पुरा हूहूनाम गन्धर्वसत्तमः स देवलशापतो ग्राहोऽभूत् स देवलशापेन मुक्तः सन्सद्यः परमाश्चर्यरूपधृक् गन्धर्वरूपधृत् उत्तमश्लोकमगायतेत्यन्वयः इत्यमितिहासोत्तमे कथा कदाचित् सरसि स्त्रीभिः क्रीडमानो स्नानार्थं प्रविष्टं देवलं पादे गृहीत्वा विचकर्ष स कुपितो ग्राहो भवेति शशाप तेन प्रसादितः सन्नुवाचैवमेवं गजेन्द्रं गृहीतवन्तं त्वां हरिर्मोचयिष्यतीति ॥ ३ ॥

उत्तमश्लोकमुत्तमयशसम्———यशसो धाम आश्रयम् कीर्तन्याः गुणाः सती कथा च यस्य तम् ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥

यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥
तस्मा इमं शापमदादसाधुरयं दुरात्मा ऽकृतबुद्धिरद्य।
विप्रावमन्ता विशतां तमोऽन्धं यथा गजस्तब्धमतिः स एव ॥ १० ॥

श्रीशुक उवाच।

एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः।
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥
आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशनीम्।
हर्यर्चनानुभावेन यद्गजत्वे ऽप्यनुस्मृतिः ॥ १२ ॥

एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन युक्तः।
गन्धर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥
एतन्महाराज ! तवेरितो मया कृष्णानुभावो गजराजमोक्षणम्।
स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य ! शृण्वताम् ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कुलाचले मलयाद्रावाश्रमो यस्य सः आप्लुतः स्नातः आराधनकाले गृहीतं मौनव्रतं येन स हरिमाराधयामास ॥ ८ ॥ ९ ॥

---

भाषा टीका।

श्रीरुक्मिणीवल्लभो जयति ॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—जब इस प्रकार श्रीहरिने गजेन्द्र को ग्राह से छुड़ाया उस समय देव, ऋषि, गन्धर्व, ब्रह्मा, महादेव प्रभृति सब देवता लोग, श्रीहरि के उस कर्म की प्रशंसा करते हुए पुष्पों की वर्षा करने लगे ॥ १ ॥

आकाश में देवताओं की दुंदुभी बाजने लगीं गन्धर्व लोग नाचने लगे, गाने लगे ऋषि, चारण और सिद्ध लोग श्रीपुरुषोत्तम की स्तुति करने लगे ॥ २ ॥

और जो वह ग्राह रहा वह भी, देवल ऋषि के शाप से छूटकर, तत्काल परम आश्चर्य रूप को धारण कर, गन्धर्वों में उत्तम, प्रथम के सदृश हूहू नामक गन्धर्व होगया ॥ ३ ॥

तब ती उत्तम श्लोक अव्यय अधीश श्रीहरि को प्रणामकर यश के धाम और कीर्तन करने योग्य है सुन्दर गुण और कथायें हैं जिनकी ऐसे प्रभुका गान करता भया ॥ ४ ॥

वह भी ईश्वर से अनुकम्पित होकर, श्रीहरि को प्रणाम कर, मुक्तकिल्बिष होकर सब लोगों के देखते २ अपने लोक को गया ॥ ५ ॥

और गजेन्द्र भी भगवान के स्पर्श होने से अज्ञान बन्धन से छूटकर भगवान के सारूप्य को प्राप्त होकर पीताम्बरधारी और चतुर्भुज ( चार भुजा वाला ) होगया ॥ ६ ॥

वह भी पूर्व जन्म में विष्णु व्रत परायण द्रविड़ देशान्तर्गत पाण्ड्यदेश का राजा इन्द्रद्युम्न इस नाम से विख्यात रहा ॥ ७ ॥

वह एक समय आराधन काल में आत्मज्ञानी मौनव्रत को धारण कर सकल जगत के नियन्ता श्रीहरि का कुलाचल पर्वत के ऊपर आश्रम में बैठकर पूजा करता रहा, इतने में एक जटाधारी तपस्वी आकर प्राप्त हुआ ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तूष्णीं रहस्युपासीनं वीक्ष्य ॥ ९ ॥

शापमेवाऽऽह—असाधुरित्यादि। अकृता ऽशिक्षिता बुद्धिर्यस्य. गजो यथा स्तब्धमतिस्तथैवायमतः स एव गज एव भवत्विति शेषः ॥ १० ॥

दिष्टं दैवार्पितं तदुपधारयन्नालोचयन् ॥ ११ ॥

कौञ्जरीं योनिमापन्नः तर्हि पश्चात्कथं स्मृतिर्जाता तत्राऽऽह हरेरर्चनस्याऽनुभावेनेति ॥ १२ ॥

यथाऽनुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥ १५ ॥
इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम!।
शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अद्भुतं स्वभवनमगात् ॥ १३ ॥

एतद्गजराजमोक्षणं नाम कृष्णानुभाववस्तवेरितः कथम्भूतं तत्राऽऽह स्वर्ग्यमित्यादि दुःस्वप्नं नाशयतीति तथा ॥ १४ ॥

अतः श्रेयस्कामा ये एतद्यथावदनुकीर्तयन्ति ॥ १५ ॥

अनेन श्रेयो भवतीति कुतो ज्ञातम्? साक्षाद्भगवद्वचनादेवे-त्याह-इदमाहेत्यादि यावत्समाप्ति ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदा शिष्यगणैः परिवृतो महाशया मुनिरगस्त्यो यदृच्छया तत्र इन्द्रद्युम्नाश्रमे समागतः तमिन्द्रद्युम्नं तूष्णीमवस्थितमकृतमस्सम-र्पितमर्घ्यादिकं येन तं रहसि एकान्ते उपासीनमुपविष्टं वीक्ष्य ऋषिरगस्त्यश्चुकोप हेति कष्टे ईदृशस्यापि महाविप्रहविषयता बभूवेति खिद्यति मुनिः ॥ ९ ॥

तस्मै इन्द्रद्युम्नाय शापमदादित्यनुषङ्गः, शापमेवाह—असाधुरिति। अयम् इन्द्रद्युम्नोऽसाधुर्दुरात्मा अकृता अशिक्षिता बुद्धिर्यस्य तादृशोऽसाधुना विप्रावमन्ता विप्रानस्मानवमन्यते परि-भवतीति तथा अतो हेतोस्तामिस्रगतामं त्रिशतां प्राप्नोतु, यथा गजः स्तब्धमतिस्तथैवायमज्ञो भवतु स एव गज एव भवत्विति शेषः ॥ १० ॥

हे नृप! इत्थं शप्त्वा भगवानगस्त्यः सानुगः सशिष्यो गतः ययौ तत इन्द्रद्युम्नोऽपि राजर्षिस्तदगस्त्यशापात्मकं दिष्टं प्रारब्धमेव उपधारयन्निश्चिन्वन्नात्मनः परमात्मनः स्मृतिविना-शिनीं कौञ्जरीं योनिमापन्नः प्राप्तः तर्हि पश्चात्कथं स्मृतिर्जाता तत्राह—गजत्वेऽप्यनुस्मृतिरिति यत्तदर्यार्चनानुभावेन पूर्वजन्मनि भगवदाराधनप्रभावेनाभूदित्यर्थः ॥ ११ ॥ १२ ॥

एवमित्थं गजयूथपं गजेन्द्रं विमोक्ष्य पार्षदत्वं प्रापितेन तेनापि गजेन्द्राख्यजीवेनापि अपिशब्दात्स्वपार्षदैश्च युक्तोऽब्जनाभो हरिर्गन्धर्वादिभिरुपगीयमानं कर्म यस्य गरुड आसनं वाहनं यस्य सः अद्भुतं स्वभवनं ययौ इत्यर्थः ॥ १३ ॥

यत्पूर्वं "बादरायण एतत्ते" इत्यादिना तस्योत्तरमुक्तम् उपसं-हरन् गजेन्द्रमोक्षकथाश्रवणफलमाह-एतादिति। हे महाराज! एत-द्गजेन्द्रमोक्षणरूपः कृष्णानुभावः हरिप्रभावः तव तुभ्यं मयेरितः कथितः इदं गजेन्द्रमोक्षणं शृण्वतां जनानां स्वर्ग्यं स्वर्गसाधनं यशस्करं कलिकल्मषापहं कलौ युगे यत्कल्मषं पापं तदपहन्तीति तथा कलिः कलहः तन्निमित्तं पापं हरतीति वा। हे कुरुवर्य! दुःस्वप्ननाशं दुःस्वप्नं नाशयतीति तथा ॥ १४ ॥

अतः श्रेयस्कामा द्विजातयस्त्रैवर्णिकाः प्रातरुत्थाय शुचयः शुचिभूताः दुःस्वप्नाद्युपशान्तये एतद्यथावदनुकीर्तयन्ति ॥ १५ ॥

अनेन कीर्तितेन दुःस्वप्नाद्युपशान्तिर्भवति इति कुतो ज्ञायते? इत्यपेक्षायां भगवद्वचनादेवेत्याह—इदमिति। हे कुरुसत्तम! सर्वभूतानां शृण्वतां सर्वभूतप्रभुरो विभुर्हरिः प्रीतो गजेन्द्रं प्रति इदं वक्ष्यमाणमाह ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपगीयमानानि कर्माणि यस्य स तथा भगाल्लोकदृष्ट्या तु तत्रैवान्तर्दधे इत्यर्थः ॥ १३ ॥

दुःस्वप्नस्य नाशो यस्माद्गजेन्द्रमोक्षणात्तत्तथा तम् ॥ १४-२३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

चुकोपह इति न स्वाभमानेन किन्तु विध्यतिक्रमेण। अत एव विप्रावमन्तेति वक्ष्यति। अनेन च पूर्वपूर्वविप्रेष्वप्यज्ञानं कृतवानिति बोध्यते. तत्र हेतुः। स्तब्धमतिरित्यनेन दर्शितः। कोपविधानं चेदं तदपराधजन्यमहादुःखभोगान्तरशान्तये अभूदिति कृपामयमेव ज्ञेयम् ॥ ९ ॥

एवमित्यर्थकम्। अत एवागस्त्यो भगवद्भिमाति दयालुत्व-सर्वज्ञत्वादिनैव तं शशापेति भावः। तत्रान्यथास्यान्यत्रापि महदवज्ञापराधात्तत्फलदुर्भोगाश्च समुत्पत्स्यन्ते। स्तब्धत्वे सति शिक्षामात्रेण चिकित्स्यत्वात्। ततश्चास्य कदाचित्तन्नि-स्तारः स्यादिति तदभिप्रायो ज्ञेयः ॥ १० ॥ ११ ॥

हर्षेणेति। गजत्वेऽप्यनुस्मृतिर्यद्भूतत्तु हर्यर्चनाऽनुभावेनेत्यर्थः ॥ १२—१६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मुनिरगस्त्यः ॥ ९ ॥

अकृतबुद्धिः अशिक्षितधीः स एव गज एव भवत्विति शेषः ॥ १० ॥

श्रीभगवानुवाच ।

ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ।
वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥
शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ।
क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दिष्टं दुरदृष्टम् उपधारयन् जानन् ॥ ११ ॥
यस्य गजत्वे अनुजत्वे ॥ १२ ॥
विमोक्ष्यतेति प्राह।दिति शेषः ॥ १३ ॥ १४ ॥
यथा यथावत् ॥ १५-१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मै इमं शापमदात् शापमेवाह—असाधुरित्यादि । अकृता अनियोजिता पञ्चयज्ञलक्षणा अतिथिपूजने धर्मे बुद्धिर्येन सः अत एव दुरात्मा दुष्टबुद्धिः स्तब्धमतिः अयं यथा गजस्तथा तमोऽन्धमज्ञानं स एव गज एव सन् विशताम् स च धर्मः इक्तो महाभारते "चक्षुर्दद्यान्मनो दद्यात्वाचं दद्यात्सुसूनृताम् । उत्थाय चासनं दद्यात्स यज्ञः पञ्चदक्षिणः" इति ॥ १० ॥

तच्छापरूपेण परिणतं दिष्टं प्राचीनं कर्मोपधारयन् ॥११॥

यत् यस्य हर्यर्चनाऽनुभावेन गजत्वेऽप्यनुस्मृतिः हरिस्मरणम् ॥ १२ ॥

गन्धर्वादिभिरुपगीयमानानि कर्माणि यस्य स अद्भुतमलौकिकं स्वभवनमगात् ॥ १३ ॥

दुःस्वप्नं नाशयतीति तथा शृण्वतामित्युपलक्षणं श्रावयितॄणामपि ॥ १४ ॥

अतं एव श्रेयस्कामाः धर्मार्थकाममोक्षाख्यश्रेयस्कामाः दुःस्वप्नाद्युपशान्तये च यथा यदनुकीर्त्तयन्ते ॥ १५ ॥

गैजेन्द्रमोक्षस्मरणफलवर्णनप्रसङ्गादन्यदपि भगवद्विभूतिस्मरणफलमपि भगवदुक्तिद्वारा वर्णयति——इदमाह हरिरित्यादिना ॥ १६ ॥

---

भाषा टीका ।

जब उस जगह पर हरीच्छा से अपने शिष्यों सहित महा यशा मुनि ( अगस्त्य जी ) आये और राजा उन ऋषि को देखकर भी पूजा सत्कार कुछ न करके चुप बैठा रहा तब ऋषि ने एकान्त में ऐसे बैठे हुए को देखकर कोप किया ॥ ९ ॥

और उस राजा को यह शाप दिया कि यह दुरात्मा असाधु अशिक्षित बुद्धि विप्र का अपमान [ तिरस्कार ] करने वाला अब अन्धतम को अर्थात् तामसी योनि को प्राप्त हो जैसे गज के नाई स्तब्ध मति होकर बैठा रहा इसी प्रकार वही गज हो ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले कि-हे नृप ! इस प्रकार अगस्त्य भगवान् शाप देकर अपने अनुचरों सहित चले गये और राज ऋषि इन्द्रद्युम्न भी अपनी उस प्रारब्ध को धारण करत हुआ ॥ ११ ॥

आत्म स्मृति के विनाश करने वाली कुञ्जर की योनि को प्राप्त हुआ, तौ भी श्रीहरि की परिचर्या ( पूजा ) के प्रभाव से गज योनि प्राप्त होने पर भी स्मृति नष्ट नहीं भई ॥ १२ ॥

कमल नाभ श्रीहरि गज यूथ पति को इस प्रकार छुड़ा कर, पार्षद गति को प्राप्त होने वाले उस गजेन्द्र के सहित गरुडाशन [ गरुड पर बैठने वाले ] अपने अद्भुत भवन को पधारे, उस समय गंधर्व सिद्ध, और देवता लोग भगवान् के कर्म को गान करते हुए ॥ १३ ॥

शुकदेवजी बोले, कि हे महाराज ! यह हमने तुमारे आगे श्रीकृष्ण का प्रभाव, कहा और हे कुरुवर्य ! स्वर्ग के देने वाला, यश के देने वाला, और श्रवण करने वालों के कलिकल्मषों को दूर करने वाला, यह गजराज का मोक्षण भी कहा ॥ १४ ॥

और इस गजेन्द्र मोक्ष को श्रेय की कामना वाले शुचि द्विजाति लोग, प्रातःकाल उठकर, दुःस्वप्नादि की शान्ति की लिये कीर्तन करते हैं ॥ १५ ॥

हे कुरु सत्तम ! सर्व भूत मय समर्थ श्रीहरि गजेन्द्र का मोक्षण कर सब लोगों के सुनते २ गजेन्द्र के ऊपर प्रसन्न होकर यों बोले ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसङ्गादन्यस्यापि स्मरणे फलमुच्यते सर्वेषां द्वितीयान्तानां स्मरन्तीत्यनेनान्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ।
सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥
शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ।
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥
मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ।
कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥ २१ ॥
प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययम् ।
दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥
गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ।
ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान् ॥ २३ ॥
उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ।
स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसोऽखिलात् ॥ २४ ॥
ये मां स्तुवन्त्यनेनाङ्ग! प्रतिबुध्य निशात्यये ।
तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ २५ ॥

श्रीशुक उवाच ।

इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ।
हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्याम् अष्टमस्कन्धे गजेन्द्रमोक्षणं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अव्यक्तं मायाम् अव्ययं धर्मं भक्तिलक्षणं, सोमकश्यपयोरपि पत्नीर्दाक्षायणीः ॥ २२ ॥

सितवारणमैरावतम् ॥ २३ ॥

सुसमाहिता एकाग्रचित्ताः मम रूपाणि मद्विभूतीः ॥२४॥२५॥

जलजोत्तमं शङ्खवरं प्रध्माय वादयित्वा ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवदुक्तिमेव दर्शयति—य इत्यादिना विमलां मतिमित्यन्तेन । ये जनाः त्वां मां च एतत्सरोवरादींश्चापररात्रान्ते प्रभाते उत्थाय स्मरन्ति तेऽखिलांहसो मुच्यन्त इत्युत्तरत्रान्वयः । गिर्यादीनां समाहारद्वन्द्वः वेत्रादीनाम् इतरेतरयोगद्वन्द्वः तेषां गुल्मानि सन्दर्भविशेषात्मकानि सुरपादपान्मन्दारादीन् ॥ १७ ॥

इमानि त्रिकूटस्य शृङ्गाणि प्रसङ्गादन्येषामपि प्रातः स्मर्तव्यतामाह—ब्रह्मणश्चतुर्मुखस्य मे हरेः शिवस्य च धिष्ण्यानि स्थानानि यान्यपि त्रिकूटगिरिशृङ्गाणि ब्रह्मादिस्थानाभिमानेन वा इमानीत्युक्तं क्षीरोदं क्षीरसागरं मम प्रियं स्थानं भास्वरं श्वेतद्वीपञ्च ॥ १८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा मम श्रीवत्सादीन् तत्र मालां वनमालां कौमोदकीनाम्नीं गदां पतगेश्वरं पतगानां पक्षिणामीश्वरं सुपर्णं गरुडम् ॥ १९ ॥

शेषमनन्तं कथम्भूतं मत्कलां सूक्ष्मां दुःप्रतर्क्यमत्कलाभूतमित्यर्थः। मदेकाश्रयां यस्यास्ताम् देवीं श्रियं महालक्ष्मीं ब्रह्माणं चतुर्मुखमृषिं नारदं भव रुद्रम् ॥ २० ॥

मम मत्स्याद्यवतारैः कृतान्यनन्तपुण्यानि शृण्वतामितरेषः यानि कर्माणि चरितानि तानिच सोमञ्चन्द्रं हुताशनमग्निम् ॥ २१ ॥

प्रणवमोङ्कारं सत्यं भूतहितरूपं धर्ममव्यक्तं प्रधानमव्ययं धर्मं भगवद्भक्तियोगलक्षणं दाक्षायणीः दक्षदुहितॄः धर्मस्य पत्नीः सोमकश्यपयोरपि पत्नीः ॥ २२ ॥

गङ्गामलकनन्दां कालिन्दीं यमुनां सितवारणाम् ऐरावतं ध्रुवमीशानपादिं मम ब्रह्मकुर्वन्पुण्येन श्लोकयन्ते कथयन्त इति पुण्यश्लोकास्तान्धार्मिकान्मानवांश्च ॥ २३ ॥

प्रातरुत्थाय ये स्मरन्ति कथम्भूताः प्रयताः सुसमाहिताश्च निर्गमनान्तर्बहिरिन्द्रियाः कथम्भूतानि सत्वादीनि मम रूपाणि मच्छरीरभूतानि ते स्मृताऽखिलादंहसः पापान्मुच्यन्ते दुःस्वप्नादिनिमित्तेभ्यः सर्वपापेभ्यो मुच्यन्त इत्यर्थः ॥ २४ ॥

ये च जनाः निशात्यये निशापगमे प्रभाते प्रतिबुद्धाः अनेन स्तोत्रेण मां स्तुवन्ति तेषां प्राणात्यये प्रयाणकाले विमलां मद्विषयां मतिमहं ददामि ॥ २५ ॥

इतीत्थमादिश्याश्राव्य हृषीकेशो हरिः जलजोत्तमं शङ्खश्रेष्ठं प्राध्माय• ध्वनयित्वा ब्रह्मादिदेवतावर्गं हर्षयन् खगाधिपं गरुडमारुरोह आरुह्य स्वभवनमगादित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपररात्रान्ते अरुणोदयप्रारम्भे उत्थाय त्वां मां चेत्यादिकं स्मरन्ति ते सर्वस्मादंहसो मुच्यन्त इत्यन्वयः ॥ २४ ॥

नन्वस्तु पापक्षयोऽस्मात्किंप्रयोजनं तस्मात्किमिति तत्साधनमाह—ये मामिति। प्राणात्यये देहोत्क्रमणे ॥ २५ ॥

जलजोत्तमं शङ्खोत्तमम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ये मामित्यष्टकम्। ये मामित्यादिना स्वभक्तोद्धारजातपरमानन्दः श्रीभगवानाशिषो ददाति य एतत् प्रसङ्गसङ्गिनस्तेषां स्मरणानुवादेन तत्र तु शेषादिनामयोगममं ज्ञेयम्। द्विविजैः सहमंस्तुवद्भिरित्युक्तेः। प्रह्लादोऽपि नित्यपार्षदः अक्रूरेण ब्रह्महदं दृष्टत्वात्। मत्स्याद्यवतारकृतानि तदानीं गन्धर्वादिभिर्गीयमानानि। प्रणवादिकमपि तत् प्रसङ्गे कीर्त्यमानं गङ्गाद्यास्तदधिष्ठातृदेवाः। पुण्यश्लोकाश्च तल्लीलाभिः कीर्त्यमानाः तत्पार्षदादिना प्राप्तत्वेन तत् सहिता एव ज्ञेयाः ॥ १७—२६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मां त्वांचेत्यादिद्वितीयान्तानां स्मरन्तीत्यष्टमेनान्वयः ॥१७-२१॥

अव्यक्तं मायाम् अव्ययं धर्मं भक्तिं सोमकश्यपयोरपि पत्नीः ॥ २२ ॥

सितवारणमैरावतम् ॥ २३—२६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
अष्टमे चतुर्थोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ये मामित्यादीनां स्मरन्तीत्यष्टमेनान्वयः ॥ १७—२१ ॥

सत्यं व्यक्तं कार्यजातम् अव्यक्तं प्रधानम् अव्ययं धर्मं मदीयभक्तियोगम् मोक्षदत्वात् सोमकश्यपयोरपि पत्नीः । २२ ॥

सितवारणमैरावतम् पुण्यश्लोकान् पवित्रकीर्तीन् । २३ ॥

मम रूपाणि मद्विभूतीः ॥ २४ ॥ ॥ २५ ॥ ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

———

भाषा टीका ।

श्री भगवान उवाच ।

श्री भगवान बोले कि हे गजेन्द्र ! जो लोग, हमारा तुमारा इस सरोवर का गिरिकन्दरा और कानन का तथा वेत कीचक और वेणुओं के गुल्मों का तथा देव वृक्षों का स्मरण करते हैं ॥ १७ ॥

तथा इन तीनों शृङ्गों का, ब्रह्मा हम और महादेव ये तीनों के धामों का तथा हमारा भास्वर श्वेत द्वीपका ॥१८॥

भाषा टीका ।

तथा श्रीवत्स, कौस्तुभ, वनमाला, और हमारी प्रिय गदा कौमोदकी, सुदर्शन पाञ्चजन्य तथा पतगेश्वर सुपर्ण गरुड़जी॥१९॥

तथा हमारी सूक्ष्मकला श्री शेषजी, और लक्ष्मीनारायण श्री देवी, तथा ब्रह्मा, नारद ऋषि, महादेव, प्रह्लाद ॥ २० ॥

और मत्स्य कूर्मादि अवतारों को धारणकर जो हमने अनन्त और पुण्यरूप चरित्र किये उनको तथा सोम सूर्य और अग्नि को ॥ २१ ॥

तथा प्रणव ( ॐकार ) सत्य, अव्यक्त, गौ, ब्राह्मण, तथा अव्यय धर्म, तथा दक्ष की पुत्री धर्म की पत्नी तथा सोम और कश्यप की भी पत्नियें ॥ २२ ॥

तथा गंगा, सरस्वती, अलकनन्दा, कालिन्दी, सितवारण, ( ऐरावत, ) तथा ध्रुव और सप्त ऋषि, तथा और पुण्य श्लोक मनुष्य ॥ २३ ॥

हमारी विभूति रूप इन सबों को पिछली रात्रि अर्थात् ब्राह्म मुहूर्त में उठ कर प्रयत्न पूर्वक समाहित होकर जो लोग स्मरण करते हैं वे लोग सम्पूर्ण पापों से छूट जाते हैं ॥ २४ ॥

हे गजेन्द्र ! जो लोग बड़े प्रातःकाल जाग कर इस स्तोत्र से हमारी स्तुति करते हैं उन लोगों को प्राण वियोग काल में मैं ही विमल मति को देता हूं ॥ २५ ॥

श्रीशुक उवाच ॥

श्रीशुकदेव जी बोले, कि—हृषीकेश श्रीहरि, इस प्रकार आदेश कर, पाञ्चजन्य को बजा कर देवताओं की सेना को हर्ष देते हुए, खगाधिप श्री गरुड़जी पर सवार होकर पधारे ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टम स्कन्ध में
चतुर्थ अध्याय की श्री बृ० भागवताचार्यकृत
भाषा टीका समाप्त ॥ ४ ॥

———

श्रीहरये नमः

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

———०:*:०———

## ॥ पञ्चमोऽध्यायः ॥

श्रीशुक उवाच ।

राजन्नुदितमेतत्ते हरेः कर्माऽघनाशनम् ।
गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥
पञ्चमो रैवतो नाम मनुस्तामससोदरः ।
बलिविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥
विभुरिन्द्रः सुरगणा राजन् (१) भूतरयादयः ।
हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥
पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ।
तयोः स्वकलया जज्ञे वैकुण्ठो भगवान्स्वयम् ॥ ४ ॥
वैकुण्ठः कल्पितो येन (२) लोको लोकनमस्कृतः ।
रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥
तस्यानुभावः कथितो गुणाश्च परमोदयाः ।
भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ॥ ६ ॥
षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ।
(३) पुरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥
इन्द्रो (४) मन्त्रद्रुमस्तत्र देवा आप्यादयो गणाः ।
मुनयस्तत्र वै राजन् हविष्मद्वीरकादयः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ।
स्वभक्तपक्षपातेन यत्र पोषायितं प्रभोः ॥ १ ॥
पञ्चमे पञ्चमं चाथ षष्ठं चाकथयन्मनुम् ।
विप्रशापाच्च निःश्रीकैः कृतां देवैर्हरेः स्तुतिम् ॥ २ ॥

॥ १ ॥

तामसश्चतुर्थो मनुस्तस्य सोदरो भ्राता ॥ २—५ ॥

तस्य वैकुण्ठसंज्ञस्य हरेरनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां जयविजयाभ्यां वराहादिरूपेण युद्धादिलक्षणः गुणाश्च प्रख्यातादयः 'परमोदयाश्च महर्षयः' कथिताः तृतीयस्कन्धादिषु ॥ ६—१० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तामसमन्वन्तरकथनप्रसङ्गानुप्रसक्तं गजेन्द्रमोक्षोपवर्णनमनुवदन् 'पञ्चममन्वन्तरं श्रोतुं चोदयति मुनिः——राजन्निति । हे राजन् ! एतत्पुण्यतमं गजेन्द्रमोक्षणात्मकं कर्म हरेः अघनाशनं दुरितनिवर्तकं मे मया तुभ्यं कथितमथ पञ्चमं रैवतं मन्वन्तरं शृणु ॥ १ ॥

---

(१) भूतरयादयः इति वीर० (२) लोकालोक इति वीर० (३) पुत्राः इति विज० (४) मन्द्र इति विज० वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र पञ्चमो मनुः रैवत इति प्रसिद्धः स च तामसस्य प्रियव्रतात्मजस्य सोदरः तस्य रैवतस्य मनोः सुताः पुत्रास्तु बलिविन्ध्यादयः तेष्वार्जुनः पूर्वो मुख्यो येषां तादृशाः ॥ २ ॥

इन्द्रस्तु विभुरिति प्रसिद्धः हे राजन् ! भूतरयादयः भूतरयप्रभृतयः देवाः हिरण्यरोमादयः सप्तर्षयः ॥ ३ ॥

एवं मन्वादयः पञ्चोक्ताः अथावतारमाह—पत्नीति । शुभ्रस्य भर्तुः विकुण्ठाख्यायां पत्न्यां तयोर्विकुण्ठाशुभ्रयोर्भगवान् कलया अंशेन वैकुण्ठ इति प्रसिद्धोऽन्यैश्च वैकुण्ठाख्यैः सुरसत्तमैः सह जज्ञेऽवतीर्णः ॥ ४ ॥

वैकुण्ठाख्यं भगवन्तं विशिनष्टि—वैकुण्ठ इति । येन रमया लक्ष्म्या प्रार्थ्यमानेन येन वैकुण्ठेन भगवता तस्या लक्ष्म्याः प्रियं कर्तुमिच्छया वैकुण्ठः वैकुण्ठाख्यो लोकः कश्चिद्ब्रह्माण्डान्तर्वर्ती कल्पितः स च लोकालोकपर्वतस्यैव ज्ञानैः नमस्कृतः लोकालोकपर्वतोपरि निर्मित इति भावः ॥ ५ ॥

तस्य वैकुण्ठस्य भगवतोऽनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां जयविजयाभ्यां वराहादिरूपेण युद्धादिलक्षणः प्रभावो गुणाश्च ब्रह्मण्यतादयः परमोदयाः महत्त्वञ्च कथिताः तृतीयसप्तमस्कन्धादिषु कथिताः संग्रहेण कथिताः कार्त्स्न्येनाधुना कथयेत्यत्राह—भौमानिति । यः पुमान् विष्णोर्गुणान्वर्णयन् साकल्येनेति शेषः । स भौमान् भूसम्बन्धान् रेणून् विममे गणयेत् भौमानां रेणूनां गणनवद्विष्णोर्गुणानां साकल्येन वर्णनमशक्यमित्यर्थः । यद्यपि वराहावतारः स्वायम्भुवमन्वन्तरारम्भकालिकः तृतीयस्कन्ध उक्तः जयविजययोः सनकादिशापेन दैत्यताप्राप्तिस्तु रैवतमन्वन्तर इति तस्याऽनुभावः कथित इत्येतदसङ्गतं तथापि दंष्ट्रया भूमिमुद्धृत्य यावद्विरण्याक्षसमागमस्तावत्समुद्रे विहरति सति वाराहेऽस्मिन्मन्वन्तरे दैत्यतां प्राप्तो जयस्तेन हत इत्यवगन्तव्यं नचैवमपि तद्भवस्य वराहावताराऽनुभावत्वाद्वैकुण्ठावतारानुभावत्वकथनमसङ्गतम् इति वाच्यम् अवताराणां भिन्नत्वेऽप्यवतारिणो भगवत एकत्वात्पार्षदयोर्दैत्यत्वप्राप्तेर्वैकुण्ठावतारसमकालिकत्वात्तद्वतनस्याप्येतत्सङ्कल्पमूलकत्वाच्चेति—विभावनीयम् ॥ ६ ॥

षष्ठं मन्वन्तरमाह—षष्ठश्चेति । षष्ठस्तु मनुश्चाक्षुषः पुत्रश्चाक्षुष इति प्रसिद्धः पूर्वादयश्चाक्षुषस्य मनोरात्मजाः ॥ ७ ॥

इन्द्रस्तु मन्त्रद्रुम इति प्रसिद्धः तत्र मन्वन्तरे आप्यादयो गणा देवगणाः हे राजन् ! तत्र मन्वन्तरे हविष्मदादयः सप्तर्षयः एवं मन्वादयः पञ्चोक्ताः ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्या स्तुवतः पुरुषस्यापि प्रसन्नो भवति हरिरित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये, तत्रादौ क्रमप्राप्तमन्वन्तराधिपकथां प्रसञ्जयति—राजन्निति । रेवतस्य विद्यमानं रैवतम् ॥ १ ॥

बलिविन्ध्यादयो येषां ते तथा अर्जुनः पूर्वः प्रधानो येषां ते तथा ॥ २ ॥

विभुर्विभुनामा हरिः द्विजाः सप्तर्षयः ॥ ३ ॥

विकुण्ठायाः तयोर्विकुण्ठाशुभ्रयोः कलयांशेन ॥ ४—५ ॥

भौमान् रेणून् पृथ्वीरजांसि विममे मानं संख्यां करोति ॥ ६ ॥

पुत्रा उच्यन्ते इति शेषः । चाक्षुषात्मजाः पुरुषादय इत्यन्वयः ॥ ७ ॥

मन्त्रादिशब्दार्थो ग्रन्थान्तरादवगन्तव्यः ॥ ८—९—१० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १-३ ॥

पत्नीति द्वयम् । यथा भगवत आविर्भावमात्रं जन्मेति मन्यते तथैव वैकुण्ठस्यापि कल्पनमाविर्भावनमेव नतु प्राकृतवत् कृत्रिमत्वम् । उभयत्रापि नित्यत्वादित्यभिप्रायेण तत्साम्येनाह—जज्ञ इति । श्रीविकुण्ठासुतस्यैवेदं वैकुण्ठं मूलवैकुण्ठन्तु सृष्टेः प्राक् श्रीब्रह्मणा दृष्टमिति द्वितीयस्कन्धे प्रसिद्धमेव । स तस्मिन्केतं परिसृत्य शून्यमपश्यमानः कुपितोऽगाद्धचेति निर्दिष्टं तत् स्थानं तु सर्गादिगतमेव ज्ञेयम् ॥ ४—१४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षष्ठे मन्वन्तरे श्रीमदजितस्य कथामनु ।
दुर्वासश्शापनिःश्रीकाः पञ्चमे तुष्टुवुः सुराः ॥

॥ १—३ ॥

शुभ्रस्य पत्नी विकुण्ठा आसीदिति शेषः तयोर्भगवान् वैकुण्ठः सह जज्ञे ॥ ४ ॥

यथा भगवत आविर्भावमात्रं जन्मेति मन्यते; तथैव वैकुण्ठस्य कल्पनमाविर्भावनमेव न तु प्राकृतवत्कृत्रिमत्वम् उभयत्रापि नित्यत्वादित्यभिप्रायेण तत्साम्येनाह—जज्ञ इति । श्रीविकुण्ठासुतस्यैवेदं वैकुण्ठं मूलवैकुण्ठं तु अप्राकृतगपारे विरजसृष्टेः प्राक्ब्रह्मणा दृष्टमिति द्वितीयस्कन्धे प्रसिद्धमिति सन्दर्भः ५ ॥

कथितस्तृतीयस्कन्धे गुणा ब्रह्मण्यत्वादयः ॥ ९—१० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चमादिभिरष्टभिरध्यायैः पयोब्धिमन्थनं वर्ण्यते—तत्र पञ्चमं षष्ठं च मनुदुर्वासःशापाग्निःश्रीकैर्देवैः कृतं भगवत्स्तोत्रं चाह राजन्निति पञ्चमेनाध्यायेन ॥ १ ॥

तामसस्य चतुर्थस्य मनोः सोदरो भ्राता ॥ २ ॥ ३ ॥

सुरसत्तमैः प्रार्थित इति शेषः ॥ ४ ॥

लोकनमस्कृतो वैकुण्ठः कल्पितः ब्रह्माण्डमध्ये आविष्कृतः स च नित्य एवेति पूर्वत्रोपपादितम् ॥ ५ ॥

तस्य भगवतो वैकुण्ठस्याऽनुभावः प्रभुत्वं कथितः गुणाश्च कथिताः तृतीयादौ ॥ ९—१० ॥

———

तत्रापि देवः सम्भूत्यां वैराजस्याभवत्सुतः ।
अजितो नाम भगवानंशेन जगतः पतिः ॥ ९ ॥
पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ।
भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥

राजोवाच ।

यथा भगवता ब्रह्मन् ! मथितः क्षीरसागरः ।
यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥
यथाऽमृतं सुरैः प्राप्तं किञ्चान्यदभवत्ततः ।
एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥
त्वया सङ्कथ्यमानेन महिम्ना सात्वतां पतेः ।
नाऽतितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥

सूत उवाच ।

(१)सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ! ।
अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥

श्रीशुक उवाच ।

यदा युद्धे ऽसुरैर्देवा बाध्यमानाः शितायुधैः ।
गतासवो निपतिता नोत्तिष्ठेर(२)न्स्म भूयशः ॥ १५ ॥

भाषा टीका ।

श्रीरुक्मिणीरमणो विजयताम् ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि–हे राजन् ! यह संपूर्ण पापों को नाशक, और बडा पुण्य रूप, श्रीहरिका गजेन्द्र से मोक्षणरूप चारित्रं तुमारे आगे वर्णन किया, अब रैवत मन्वन्तर को श्रवण करो ॥१॥

पंचम मनुरैवत नाम वाले तामस मनु के भ्राता हुए। और अर्जुन है पूर्व जिनके ऐसे बलि, विन्ध्य, से आदि लेकर मनु के पुत्र हुए॥२॥

हे राजन् ! उस समय साक्षात् विभु ( श्रीहरि ) आपही इन्द्र हुए, और हिरण्यरोमा, वेदशिरा, तथा ऊर्ध्वबाहु से आदि लेकर सप्त ऋषि हुए ॥ ३ ॥

शुभ्र की पत्नी विकुंठा मई इन दोनों से साक्षात् स्वयं भगवान् अपनी कला से वैकुण्ठवासी देवताओं सहित वैकुंठ नाम वाले प्रभु उत्पन्न हुए ॥ ४ ॥

जिन वैकुंठ नाम वाले श्रीहरि ने, आप(प्रभु)के प्रिय की चाहना वाली श्रीरमा देवी [ लक्ष्मीजी ] की प्रार्थना से सर्व लोक नमस्कृत वैकुंठ लोक रचा ॥ ५ ॥

उन श्रीहरि का सनकादिके शाप से दैत्य होने वाले स्वपार्षदों के साथ युद्धादिरूप प्रभाव और परमउदार ब्रह्मण्यतादिगुणों का हमने वर्णन किया, जो विष्णु के गुणों का वर्णन करसके, वह समझो कि–पृथिवी के रेणुओं की भी गणना करसकेगा॥६॥

और छठमे चक्षु के पुत्र चाक्षुष नाम मनु हुए, तथा पुरु, पुरुष, और सुद्युम्न आदिक मनु के पुत्र हुए, ॥ ७ ॥

और उस समय में मंत्रद्रुम नामक इन्द्र हुए, और आप्यादिक देव हुए, हे राजन् ! उस मन्वन्तर में हविष्मान् वीरकादिक सप्तऋषि हुए ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतो हेतोः अम्बुचरात्मना कूर्मरूपेण ॥ ११ ॥

सुराणां साधिता सुधेत्युक्त्वा युद्धादपि सुचिन्नमतः पृच्छति, किञ्चान्यादिति ॥ १२—१४ ॥

नोत्तिष्ठेरन् पुनर्जीवन्ति स्मेत्यर्थः ॥ १५ ॥

---

(१) विष्णुरातेन संपृष्टो भगवान् बादरायणिः । इति वीर० ।

(२) पुनश्च ते इति वीर० ॥

यदा दुर्वाससः शापात्सेन्द्रा लोकास्त्रयो नृप ! ।
निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिन्द्रं दृष्ट्वा स्वकण्ठस्था माला तस्मै दत्ता तेन च श्रीमदेनाऽनादरेणैरावतस्य कुम्भयोर्निक्षिप्ता स च गजो मत्तः पद्भ्यां तां मालां चूर्णीचकार ततः कुपितो दुर्वासास्तं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति, तदेतदाह, यदा दुर्वाससः शापादिति । इज्यादयो यागाद्याः ॥ १६—१८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवतारमाह—तत्रापीति । तत्रापि षष्ठे मन्वन्तरे वैराजस्य भर्तुः संभूत्याख्यायां भार्यायां जगतीपतिर्भगवानंशेनाजित इति प्रसिद्धोऽभवत् ॥ ९ ॥

अवतारप्रश्नावसरं प्रयच्छन्नजितं विशिनष्टि—पयोधिमिति । येनाऽजितेन पयोधिं क्षीराब्धिं निर्मथ्य सुराणां सुधाऽमृतं साधिता संपादिता येन च कूर्मरूपेणाम्भसि भ्रममाणो मन्दरोऽद्रिः पृष्ठे धृतः ॥ १० ॥

लब्धावसरः पृच्छति राजा—यथेति, त्रिभिः । हे ब्रह्मन् ! भगवता ऽजितेन यथा क्षीरसागरो मथितः यया रीत्या मथितः यदर्थं येषां प्रयोजनार्थं मथितः यतश्च हेतोरम्बुचरात्मना कूर्मरूपेणाद्रिं मन्दरं दधार ॥ ११ ॥

येन च प्रकारेण देवैरमृतं लब्धं ततो मथनादन्यदमृताद्व्यतिरिक्तमपि वस्तु किं किमभवत् एतत्पयोदधिमथनात्मकं भगवतोऽद्भुतं कर्म वदस्व ॥ १२ ॥

स्वस्वशुश्रूषां व्यनक्ति—त्वयेति । त्वया सम्यक्कीर्त्यमानेन सात्वतां पतेर्भगवतो महिम्ना मे चित्तं नैव तृप्यति. अतृप्तौ हेतुं वदं-श्चित्तं विशिनष्टि—सुचिरं बहुकालं तापेनाऽध्यात्मकादितापत्रयेण तापितं दुःखितम् ॥ १३ ॥

एवमापृष्टो भगवान्बादरायणिः प्रश्नमभिनन्द्य कथयामासेत्याह सूतः—संपृष्ट इति । हे द्विजाः ! इत्थं संपृष्टो भगवान् द्वैपायनसुतो द्विजः शुकः राज्ञः प्रश्नमभिनन्द्य हरेर्वीर्यं माहात्म्यम् अभ्याचष्टुं कथयितुं प्रचक्रमे आरेभे ॥ १४ ॥

तदेवाह—यदेत्यादिषड्भिरध्यायैः । पयोदधिनिर्मथनात्मकं भगवतश्चरित्रं वक्तुं तावत्तदुपोद्घातं प्रपञ्चयत्यध्यायद्वाभ्यां यदाऽसुरैः कर्तृभिः निशितायुधैः साधनैर्युध्यमाना देवाः गतप्राणाः निपातिताः बहुशः पुनर्नोत्तिष्ठेरन्नोज्जीवन्नुरुम ॥ १५ ॥

यदा च दुर्वाससो मुनेः शापेनेन्द्रेण सहितास्त्रयो लोकाः निःश्रीकाः निर्लक्ष्मीकाः निःसम्पदो ऽभवन् दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिन्द्रं दृष्ट्वा स्वकण्ठमाला कृपया तस्मै दत्ता तेन चेन्द्रेण श्रीमदेनाऽनादृत्य सा चैरावतस्य कुम्भे निक्षिप्ता स च मत्तः पद्भ्यां मालां चूर्णीचकार ततः कुपितो दुर्वासास्तं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति तदेतदुक्तं यदा दुर्वाससः शापेनेति तत्र तदा इज्यादयो यागादयः क्रिया नेशुर्न समर्थाः श्रियं वर्धयितुं नाशकनुवन्नित्यर्थः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा कथं यतः कुतः अम्बुचरात्मना कूर्मरूपेण ॥११-१२॥

तापैराध्यात्मिकादिदुःखैः तापितं क्लेशितम् ॥ १३ ॥

सूतः शौनकादिसम्वादाविस्मरणार्थं राज्ञा पृष्टः श्रीशुकस्तस्य चोद्यं परिहर्तुमुपक्रमत इत्याह, सूत इति ॥ १४ ॥

कथमुपक्रान्तवानिति तत्राह—यदेति । गतासवः प्राणविरहिताः यदा च नोत्तिष्ठेरन् यदा च निःश्रीका अभवन् तत्र तदा इज्यादयः क्रियाः नेशुरित्यन्वयः ॥ १५-१६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदा युद्ध इति युग्मकम् । सेन्द्रा इन्द्रानुगता एत एव नरसुरा इत्यर्थः ॥ १५—१८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अम्बुचरः कूर्मस्तदात्मना ॥ ११—१४ ॥

नोत्तिष्ठेरन् नपुनर्जीवन्तिस्मेति देवानां पराभव उक्तस्तत्र कारणमाह—दुर्वाससश्शापेनेति । दुर्वासा हि कदाचित् मार्गे गच्छन्तमिन्द्रं दृष्ट्वा स्वकण्ठस्थ माला तस्मै दत्ता तेन श्रीमदेनाऽनादरेणैरावतस्य कुम्भयोर्निक्षिप्ता स च पशुत्वान्मत्तः पतितां तां मालां पद्भ्यां चूर्णीचकार तद्दृष्ट्वा कुपितो दुर्वासास्त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति शशाप ॥१५—१८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा येन प्रकारेण यदर्थं यत्प्रयोजनार्थं क्षीरसागरो मथितः यतो हेतोः अम्बुचरात्मना कूर्मरूपेणाद्रिं भगवान् दधार ॥ ११ ॥

यथा येन प्रकारेण देवैरमृतं लब्धं ततः क्षीरसागरात् अन्यदमृतव्यतिरिक्तं किमभवत् एतत् भगवतः कर्म वदस्व ॥१२॥

निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः ।
नाध्यगच्छन्स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥
ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ।
सर्वं विज्ञापयाञ्चक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥
स विलोक्येन्द्रवाय्वादीन्निःसत्त्वान्विगतप्रभान् ।
लोकानमङ्गलप्रायानसुरानयथा विभुः ॥ १९ ॥
समाहितेन मनसा संस्मरन्पुरुषं परम् ।
उवाचोत्फुल्लवदनो देवान्स भगवान्परः ॥ २० ॥
अहं भवो यूयमथो ऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः ।
तस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सङ्कथ्यमानेनापि नातितृप्यति अत्यन्ततस्तल्लुब्धाय विस्तारतो ब्रूहीति भावः ॥ १३ ॥

अभिनन्द्य राज्ञः प्रश्नमिति शेषः । हरेर्वीर्यमध्याचष्टुं वक्तुं प्रचक्रमे आरेभे ॥ १४ ॥

नोत्तिष्ठरन् तत्र हेतुः गतासवः गतप्रायाः ॥ १५ ॥

एवंविधे देवानां पराभवे हेतुं वदन् कश्चिद् दुर्वाससा स्वकण्ठस्था माला गजेन व्रजते इन्द्राय दत्ता तेन श्रीमदाविष्टेन स्वाऽनादृत्य गजकुम्भयोर्निक्षिप्ता गजेन तु सा पद्भ्यां चूर्णीकृता ततः कुपितो दुर्वासाः त्रिभिर्लोकैः सह त्वं निःश्रीको भवेतीन्द्रं शशापेत्याह–यदा दुर्वाससः शापेनेति । इज्यादयो यागादयः क्रियाः तेषुः श्रियं वर्द्धयितुं नाशक्नुवन् ॥ १६ ॥

———

भाषाटीका ।

उस मन्वन्तर में श्री जगतपति भगवान् अपने अंश से सम्भूति देवी में वैराज के पुत्र अजित नाम से प्रकट हुए ॥ ९ ॥

जिनों ने समुद्र मथन करके देवताओं को अमृत पिवाया, और मथने समय में जिनने कूर्मरूप को धारण कर भ्रमते हुए मन्दराचल को धारण किया ॥ १० ॥

राजोवाच

राजा परीक्षित बोले, कि–हे ब्रह्मन् ! जैसे भगवान ने क्षीर सागर का मंथन किया और जिस प्रयोजन को मथा, और जिस हेतु से आपने जलचर [ कूर्म ] रूप को धारण कर पर्वत को धारण किया ॥ ११ ॥

और जैसे देवताओं को अमृत प्राप्त हुआ, और जो जो कुछ चरित्र वहां पर हुआ हो, वह सब परमाद्भुत श्रीहरिका पराक्रम आप कहो ॥ १२ ॥

हे महाराज ! आप भक्तों के पति श्रीहरि की महिमा को जैसे २ कथन करते हो, वह सब सुनता हूं तो भी बहुत काल से संसार के तापों से तप्त मेरा चित्त अत्यंत तृप्त नहीं होता है ॥ १३ ॥

सूत उवाच ॥

सूतजी बोले, कि–हे शौनकादिको ! द्वैपायन महर्षि श्रीवेदव्यास जी के पुत्र भगवान् श्रीशुकदेवजी से राजा ने जब इस प्रकार प्रश्न किया तब श्रीशुकदेवजी भी राजा के प्रश्न का अभिनन्दन करके श्रीहरि के वीर्य [पराक्रम] के कथन करने का प्रारम्भ करते हुए ॥ १४ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–जब संग्राम में देवताओं को तीक्ष्ण आयुधों से असुरों ने ताडित किये और देवता लोग भी गत प्राण वाले होकर पृथिवी पर गिर कर फिर बहुत से नहीं उठे ॥ १५ ॥

हे नृप ! और जब दुर्वासा के शाप से इन्द्र सहित तीनों लोक बिना श्री के होगये, और इज्या [ यज्ञ ] आदि क्रिया करने को जब समर्थ न हुए, ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

असुरान् अयथा देववैलक्षण्येन बलपुष्ट्यादियुक्तान्विलोक्येत्यर्थः ॥ १९ ॥

हरिं शरणं गतास्सन्तो यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य ॥ २० ॥

मनुष्यादयो जरायुजाण्डजोद्भिज्जस्वेदजाः यस्यावतारः पुरुषस्तस्यांशो ब्रह्मा तस्य कला मरीच्यादयस्ताभिर्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः ॥ २१ ॥

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं धत्ते रजस्सत्त्वतमांसि काले ॥ २२ ॥
अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम् ।
तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥

श्रीशुक उवाच ।

इत्याभाष्य सुरान्वेधाः सह देवैररिन्दम ! ।
अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, तर्हि सर्वेष्वसौ समः स्यात्किं तच्छरणाश्रयेण सत्यम्, यद्यप्येवं तथाऽप्यस्मत्पक्षपाती भविष्यतीत्याशयेनाऽऽह—न यस्येति द्वाभ्याम् ॥ २२ ॥

स्थितिपालनस्य क्षणः कालः अतः सुरप्रियस्स स्वीयानां नः शं सुखं करिष्यति ॥ २३ ॥

यत्र क्षीराब्धौ हरेर्वासस्तदेव तमसः परं स्थानम् यद्वा लोकालोकात्परतो यत्तमस्ततः परं स्थानं जगाम ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

तदा सुरगणाः इन्द्रादिदेवगणाः एतत्त्रैलोक्यस्य निःश्रीकत्वं पतितानां देवानामनुत्थानञ्च निशाम्य दृष्ट्वा स्वयं मंत्रैर्मन्त्रयन्तोऽप्यालोचयन्तोऽपि विनिश्चयं सश्रीकत्वापादकोपायनिश्चयं नाध्यगच्छन् न प्रापुरित्यर्थः ॥ १७ ॥

ततो निश्चयानधिगमनानन्तरं मेरोर्मूर्द्धनि स्थितां ब्रह्मणः चतुर्मुखस्य सभां सर्वशः सर्वे जग्मुः तत्र गत्वा सर्वे प्रणताः कृतप्रणामाः परमेष्ठिने ब्रह्मणे विज्ञापयाञ्चक्रुर्विज्ञापनञ्चक्रुरित्यर्थः ॥ १८ ॥

ततः श्रुत्वा ब्रह्मा किमकरोदित्यत आह—स इति । ततः स परमेष्ठी विगतप्रभान् निस्तेजस्कान्निस्सत्त्वान् बलहीनानिन्द्रवाय्वादीन् देवगणान् तथाऽमङ्गलप्रायान् मङ्गलरहितानिव स्थितांस्त्रीन् लोकांश्च विलोक्य तथाऽसुरान्देवगणाद्विलक्षणान् तेजोबलादियुक्तांश्च विलोक्य सुरानाहेत्युत्तरेणान्वयः विभुर्ब्रह्मा ॥ १९ ॥

समाहितेनैकाग्रेण मनसा परमपुरुषं संस्मरन् परपुरुषशरणावरणेन यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य स भगवान् ब्रह्मा हरीनिन्द्रमुखान्सुरान् देवानाहोवाच ॥ २० ॥

तदेवाह—अहमिति त्रिभिः । अहमादयः सर्वे यस्य भगवतो अवतारः सृष्ट्यधिकृतोऽनिरुद्धः तस्यांशकलया अंशांशेन ज्ञानशक्त्यादिगुणलेशेन विसर्जिताः उत्पादिता तमेवाव्ययं भगवन्तं शरणं व्रजाम गच्छेम यः स्रष्टा स एवास्माकं रक्षिता अतस्तमेव शरणं व्रजाम इतोऽन्यो न कश्चिदुपायोऽस्तीति भावः तत्राहं ब्रह्मा भवो रुद्रः यूयं देवाः द्रुमाः वृक्षाः धर्मजातयः स्वेदजोद्भिज्जादयः ॥ २१ ॥

ननु, तेन यथा वयं सृष्टास्तथाऽसुरा अपि, अतस्तान्निगृह्य वैषम्यादिप्राकृतगुणरहितः कथमस्मान् रक्षिष्यतीत्याशङ्कां निराह—न यस्येति द्वाभ्याम् तत्राद्येनाक्षेपः सार्द्धेन तु परिहारः यद्यप्यस्य वैषम्यनैर्घृण्यादिप्राकृतगुणरहितस्य वध्यादिपक्षो नास्ति तथापि जगतः सृष्ट्याद्यर्थं काले सृष्ट्याद्युपयुक्तकाले रजस्सत्त्वतमांसि धत्ते बिभर्ति त्रिगुणोन्मेषनिमित्तकर्मानुगुणं प्रवर्तत इत्यर्थः ॥ २२ ॥

तर्हि रज आदिधत्तां नाम तथापि प्रकृते किमायातमिति चेत्तत्राह—अयञ्चेति । देहिनां भवाय सत्तायै स्थितये इत्यर्थः सत्त्वं जुषाणस्य सत्त्वगुणोन्मेषनिमित्तकर्मानुगुणं प्रवृत्तस्य तस्य भगवतोऽयं स्थितिपालनक्षणः स्थित्यात्मकपालनस्य कालः सत्त्वप्रधानदेवादिपालनकालोऽयमिति भावः । यत एवं तस्मात्सर्वे वयं जगद्धितकारिणं शरणं व्रजामः रक्षणोपायत्वेनाध्यवस्यामः स्वानां, शरणप्रजनमात्रेण स्वीयत्वेन परिगृहीतानामस्माकं शं सुखं धास्यति दास्यति यतोऽयं भगवान् स्वत एव सुराः प्रियाः यस्य तादृशः ॥ २३ ॥

एवं ब्रह्मा सुरान्प्रत्युक्त्वाऽजितस्य भगवतः स्थानं तैस्सुरैः सह जगामेत्याह, भगवान् बादरायणिः—इतीति । हे अरिन्दम ! कामक्रोधादिदमन ! राजन् ! इतीत्थं सुरान्देवानाभाष्य वेधाः सर्वं जगद्विदधाति सृजतीति तथा तादृशः चतुर्मुखः देवैः सह लोकालोकपरमलोकाख्यं तमस्तस्मात्तमसः परम् अजितस्य भगवतः पदं स्थानं जगाम ययौ ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदा देवा निश्चयं नाध्यगच्छन् ततस्तदा ब्रह्मसभां जग्मुरित्यन्वयः ॥ १७—१९ ॥

परं पूरकं सुखयेति शेषः ॥ २० ॥

धर्मजातयः स्वेदजाः ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य वध्यादयो न सन्ति ॥ २२ ॥

तस्य हरेरयं कालः स्थितिपालनावसरः धास्यति ददाति सुखम् ॥ २३ ॥

अजितस्य हरेः ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सविलोक्येति युग्मकम् । असुरान् यथेति ज्ञानदृश्यैव दृष्टम् तेषामज्ञानागमनात् । उत्फुल्लवदन इति समाधौ हरेः प्रसादानुभवात् ॥ १९ ॥ २० ॥

यस्यावतारकपा ये अंशाः कलाश्च पुरुष त्रिदेव्यादयो मरीच्यादयश्च ताभिर्विसर्जिताः । तत्र मूलावतारियः पुरुषश्च "तत्र द्वितीयात् पुरुषात् त्रिदेवी तत्र ब्रह्मणो मरीच्यादयः। तेऽयोऽन्येऽन्य इति विवेचनीयम् तदेतदवतारिदृश्यो-क्तम् ॥ २१॥

न यस्येत्यादौ सर्गादयो "लोकवत्तु लीला कैवल्यम् २।१।३३" इति न्यायेनैवेति भावः । तदुक्तम् "सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानन्दाद्यथा मत्तस्य नर्त्तनम्" इत्यादि ॥ २२ ॥

ननु, सर्गादिकालाऽनुसारी चेदसौ तर्हि कालान्तरेऽस्मद्विपक्षीभावात्ताऽतिविश्वसनीयस्तत्राह—स्वानामिति । ननु, तर्हि स्वीयत्वमप्यस्मासु न घटते तत्राह-सुरप्रियः । सुरेषु प्रियास्तद्भक्ताः श्रीनारदादयो यस्य स इति सुरेष्वेव तद्भक्तानां स्थितिप्रादुर्भावादस्मास्वेवास्याऽनुग्रहः पर्यवस्यतीति भावः ॥ २३ ॥

अजितस्य पदं विकुण्ठासुतस्यैव तेनैव प्रकाशितं वैकुण्ठविशेषं, तमसः परम् । प्रपञ्चमध्याविर्भूतत्वेऽपि श्रीभगवद्विग्रहवदेव प्रकृत्या न स्पृष्टं यज्जगाम तत्समीपदेशं प्रापेत्यर्थः ॥ २४—२५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

स परमेष्ठी असुरांस्तु अयथावत्पुरुषादियुक्तान् ॥ १९—२० ॥

धर्मजातयः स्वेदजाः यस्याऽवतारः पुरुषस्तेनाऽहं भवश्च विसर्जितौ विविधां सृष्टिं कारितौ पुरुषांशेन मया च मरीच्यादयः मत्कलाभिर्मरीच्यादिभिः पुत्रपौत्रद्वारा असुरादयो विसर्जिताः ॥ २१ ॥

न वध्य वध्या इति। तस्य सर्वत्र साम्यादिति भावः। ननु, तर्हि यज्ञादयः कथं जगति वर्त्तन्ते तत्राह-धत्ते इति। गुणानां तच्छक्तित्वात् सृष्ट्यार्थं स एव रज आदि धत्त इत्युच्यते तैरेवसत्त्वरजोभिर्गुणैरेव अधरश्चापेक्षणानि क्रियन्ते तत्र परमेश्वरे केवलमुपचार इति भावः ॥ २२ ॥

किन्तु सम्प्रति तमःकार्यवधकालो नेत्याह—अयं स्थितिमर्य्यादा तस्याः पालनस्य यः समयः सत्त्वं जुषाणस्येति सम्प्रति सत्त्वं स्वीकुर्वन् सुरप्रिय एव भवितुमर्हतीति भावः ॥ २३ ॥

पदं क्षीरोदधिस्थश्वेतद्वीपं तमसः प्रकृतेः परम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एतच्छापेन निःश्रीकाणम् ॥ १७ ॥ १८ ॥

निःसत्त्वान् बलहीनान् विगतप्रभान् निस्तेजस्कान् असुरान् अयथावच्छ्रादियुक्तान् विलोक्य उवाचेत्युत्तरेणान्वयः ॥१९॥

परं पुरुषं वासुदेवं देवकार्यसाधकं स्मरन् अत उत्फुल्लवदनः परो देवश्रेष्ठः देवान् प्रत्युवाच ॥ २० ॥

मनुष्याश्च तिर्यञ्चश्च द्रुमाश्च धर्मजातयः स्वेदजाश्च यस्यावतारः पुरुषः तदंशांशो यस्तस्य कलया लेशमात्रेण अस्मदादिस्वेदजान्ताः विसर्जिताः उत्पादिताः ॥ २१ ॥

ननु, सः असुरेषु निग्रहं सुरेष्वनुग्रहं कथं करिष्यतीत्यत्राह—नेति, द्वाभ्याम् । काले सर्गस्थितिसंयमसमये रजःसत्त्वतमांसि धत्ते बिभर्ति स्वशक्तिगुणान्प्रवर्त्तयतीत्यर्थः ॥ २२ ॥

सत्त्वं जुषाणस्य प्रवर्त्तकतया सेवमानस्य ॥ २३ ॥

तमसःपरं पदं तमोवर्जितं भगवत्स्थानविशेषं यत्र देवैः सहितस्य ब्रह्मणो गतिः सम्भवति तत्र क्षीराब्धिस्थमित्यर्थः ॥ २४ ॥

भाषा टीका ।

तब महेन्द्र वरुण आदि देवता ऐसा देखकर नाना प्रकार के विचार करके सलाह करते हुए भी निश्चय न कर सके ॥ १७ ॥

तब तो सब देवगण मेरु पर्वत के ऊपर ब्रह्माजी की सभा को गये, और परमेष्ठी [ श्रीब्रह्माजी ] को प्रणाम कर विज्ञापन किया ॥ १८ ॥

तब विभु ब्रह्माजी ने इन्द्रवायु आदि देवों को निर्बल और बिनाकांति के देखकर और सम्पूर्ण लोकों को और देवताओं को भी अमंगल प्राय अयथावत देखकर ॥ १९ ॥

ब्रह्माजी अपने मन को समाधान युक्तकर, परम पुरुष श्रीमन्नारायण का स्मरण करते हुए, देवों से उत्कृष्ट ऐसे भगवान् श्रीब्रह्माजी प्रफुल्ल मुख होकर देवताओं से बोले ॥ २० ॥

श्रीब्रह्माजी बोले, कि-मैं और महादेव तथा तुम सब देवता लोग और मनुष्य, तिर्यक्, और जरायुज, अंडज स्वेदज, उद्भिज, सब जीवजात जिसके अवतार के अंश के कलाओं से, अर्थात

तत्रादृष्टस्वरूपाय श्रुतपूर्वाय[1] वै विभो ।
[2] स्तुतिमब्रूत दैवीभिर्गीर्भि*स्त्ववहितेन्द्रियः ॥ २५ ॥

ब्रह्मोवाच ।

अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ।
मनोऽग्रयानं वचसा निरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥
विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ।
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥
अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ।
त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥
[3] य एकवर्णं तमसः परं तदलोकमव्यक्तमनन्तपारम् ।
आसाञ्चकारोपसुपर्णमेनमुपासते योगरथेन धीराः ॥ २९ ॥
न यस्य कश्चाति[4]तितर्ति मायां यया जनो मुह्यति वेद नार्थम् ।
तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरन्तम् ॥ ३० ॥

भाषा टीका ।

पुरुष के अंश ब्रह्मा मरीच्यादि कों के पुत्र पौत्रादि द्वारा, रचे हुए हैं ॥ वे हम सब उसी अव्यय परमात्मा के ही शरण जावें ॥ २१ ॥

न जिसके कोई मारने के योग्य है और न पालन करने के योग्य है, और न कोई उपेक्षा करने योग्य न कोई आदर करने के योग्य है, तौ भी जगत् की सृष्टि, पालन, और संहार के लिये सत्त्व रज और तमोगुण को धारण करता है ॥ २२ ॥

और यह तौ उस सत्त्व को धारण करने वाले परमात्मा का जीवों की वृद्धि के लिये पृथिवी के पालन का काल है, तस्मात् हम लोग उस जगद्गुरु के शरण को प्राप्त होवें, क्योंकि हम उसीके है, तौ फिर वह देवताओं पर प्रीति करने वाला हमारे लोगों का अवश्य ही मंगल करेगा ॥ २३ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि- हे अरिन्दम, हे शत्रुओं के दमन करने वाले ! राजन् ! ब्रह्माजी ने देवताओं से ऐसे कहकर, और देवताओं को साथ लेकर प्रकृति से पर जो साक्षात् आपका धाम क्षीरसागर है तहां पर गये ॥ यहां इतनी बात जानने के योग्य है, कि-जैसे आप स्वयं प्रभु नित्य हैं और प्रकृति से पर हैं इसी प्रकार आपके धाम वैकुंठ गोलोक साकेत प्रभृति भी नित्य और अप्राकृत हैं । परंच जैसे भक्तों के कार्य के लिये आप समय २ पर आविर्भाव तिरोभाव को प्राप्त होते हैं, वैसे ही आपके निजभक्त ब्रह्मादिकों की प्रार्थना [ विनती ] सुनने के लिये क्षीरसागर में अपने धाम को प्रगट करके शेषजी के ऊपर योग निद्रा करते हैं । अर्थात् एकांत में पोढे हुए भक्त जनों के हित का चिंतन करते हैं ॥ और क्षीर सागर के तुल्य, लोकालोक पर्वत पर जो रमा वैकुंठ है, तथा जहां वृकासुर से शंकर की रक्षा करी, वह श्वेतद्वीप, और जो ध्रुव को प्रकट कर के दिया वह ध्रुवलोक, इत्यादिक और जो आपके धाम हैं वे भी सब नित्य और अप्राकृत ही है । परंच इनका आविर्भाव तिरोभाव तौ है, जैसे कि-आपके दिव्य मंगल विग्रह का ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैवीभिर्लोकेऽप्रसिद्धाभिर्वैदिकीभिर्गीर्भिः स्तुतिमकरोत् ॥ २५ ॥

देववरं त्वां नमामहे हे देव ! वरं त्वां नमामीति वा वरत्वे हेतुः सत्यम्, कुतः अविक्रियम्, तत्कुतः अनन्तमाद्यं चाऽनादिम् आद्यन्तवन्तो हि वृद्ध्यादिविक्रियायुक्ता भवन्ति किञ्च गुहाशयं सर्वान्तरं कुतः निष्कलं निरुपाधिम्, तत्कुतः अप्रतर्क्यं तत्कुतः मनोऽग्रयानं मनसोऽपि जविष्ठम् मनःप्राप्ये स्थाने ततः प्रागेव विद्यमानत्वात् तथा च श्रुतिः—"अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् । तद्धावतोऽन्यानत्येति तिष्ठत्"॥

---

(१) चाभिभोः । (२) स्तुतम् । (३) * स्तवहितेन्द्रियः । यदेकवर्णम्. इति च वीर० पाठाः । (४) पिपर्ति इति वीज० ।

इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्तराविः ।
गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ॥ ३१ ॥
पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ।
स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वचसा अनिरुक्तम् अविषयत्वात् "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते" इति श्रुतेः मनोवचसोरगोचरत्वादप्रतर्क्यम् यथेदं वा सर्वेषां हेतुहेतुमद्भावः ॥ २६ ॥

किञ्च प्राणादीनां विपश्चितं ज्ञातारम् आत्माऽहङ्कारो देहो वा न तु तद्व्यतिरिक्तं ज्ञेयमस्तीत्याह-अर्थो विषयः इन्द्रियाणि तद्ग्राहकाणि तदुभयरूपेणाभासत इति तथा तम् । तथाऽप्यनिद्रं सर्वेन्द्रियवृत्तिज्ञानरहितम्. कुतः अशरीरमदेहम् अत एवाक्षरं खमिव व्यापिनं च सर्वत्र हेतुः यत्र यस्मिन्गृध्रपक्षौ जीवपक्षपातिनौ छायातपावविद्या च तन्निवर्तिका विद्या च नास्ति तं त्रियुगं त्रिषु युगेष्वाविर्भवन्तं शरणं व्रजाम ॥ २७ ॥

तदेवमविक्रियत्वादिभिश्च सत्यत्वं वरेण्यत्वं चोक्तं संसारचक्राधारत्वेनापि तदेव वर्णयन्नाह—अजस्य जीवस्य चक्रं चक्रवदावर्तमानं देहादि अजया मायया प्रेर्यमाणं यत् योऽध्यक्षो यस्य यदधिष्ठानमाहुस्तमृतं सत्यं प्रपद्ये कथम्भूतं चक्रं मनोमयं मनःप्रधानं दशेन्द्रियाणि पञ्चप्राणाश्चेत्येवं पञ्चदश अरा यस्य आशु शीघ्रगमं त्रयो गुणा नाभिरिव मध्ये यस्य विद्युदिव चलम् अष्टौ प्रकृतयो नेमय इवाऽऽवरणानि यस्य ॥ २८ ॥

सर्वजीवनियन्तृत्वादिना च वरिष्ठत्वमाह-य इति । य उपसुपर्णो जीवसमीपे तन्नियन्तृत्वेनाऽऽसाञ्चकाराऽऽस्ते स्म "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति श्रुतेः । यद्वा भक्तरक्षार्थं गरुडस्योपरि स उपविष्ट इत्यर्थः । तर्हि देहस्थत्वाद्भक्तरक्षणादिक्रियावेशाज्जीवसाम्यं स्यात्तत्राऽऽह-एकवर्णो ज्ञानैकस्वरूप तमसः प्रकृतेः परमलोकमदृश्यमव्यक्तं निर्विकल्पमनन्तपारं कालतो देशतश्चापरिच्छिन्नं तद्धैव यः अप्रच्युतस्वरूपत्वान्न जीवसाम्यं "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति विशेषश्रवणादित्यर्थः । अत एव यमेनं धीरा योगेन रथेन प्राप्तिसाधनेनोपासते भजन्ते तमहमीमहीत्युत्तरेणान्वयः ॥ २९ ॥

मायानियन्तृत्वेनापि जीवसाम्यं परिहरन्वरिष्ठत्वमाह—यस्य मायां कश्च कश्चिदपि नातितितर्ति नातिक्रामति कथंभूताम्, ? जनो यथा मुह्यति अर्थमात्मस्वरूपं न तु वेद निर्जितात्मा आत्मशक्तिर्माया च तद्गुणाश्च येन तम् ॥ ३० ॥

अर्थं न वेदेति यदुक्तं तत्प्रपञ्चयन्नाह-इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा सत्त्वेनैव सृष्टा अपि बहिरन्तश्च सत्ताप्रकाशाभ्यामाविःप्रकटामपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्मः इतरप्रधानाः रजस्तमोमयाः कुतो विदुः तं नमामेति पूर्वेणान्वयः ॥ ३१ ॥

इदानीं वैराजरूपेण स्तुवन्प्रार्थयते । पादौ महीति द्वादशभिः यत्र मह्यां जरायुजादिभूतसर्गः सा मही यस्य पादौ स नः प्रसीदतु आत्मतन्त्रः पादादिमत्त्वेऽपि न तत्परतन्त्रः कुतः ब्रह्म अप्रच्युतरूपः तत्कुतः महती विभूतिरैश्वर्यं यस्य सः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र पदे अदृष्टस्वरूपाय "न मांसचक्षुरभिवीक्षते तम्" इत्याद्युक्तरीत्या स्वस्य दुर्दर्शनत्वं ज्ञापयितुमदृष्टं ब्रह्मादिभिः कदापि न दृष्टं स्वरूपं यस्य तस्मै श्रुतपूर्वाय पूर्वं श्रुतः वेदशास्त्रादिभिः इति श्रुतपूर्वः तस्मै. अजिताख्यो भगवान् अवतीर्णः इत्येतावन्मात्रं ब्रह्मादिभिः श्रुतं न तु दृष्ट इति भावः । एवंविधाय तस्मै प्रणमेयेति शेषः स्तवहितेन्द्रियः स्तवाय हितेन्द्रियः स्तोतुं समाहितेन्द्रियो ब्रह्मा दैवीभिरौपनिषदर्थानुकारिणीभिर्गीर्भिरभिमाः स्वयमनभिभूतः इतरानभिभवति जयतीत्यभिभूरजितस्तस्य स्तुतं भावेकः स्तुतिमब्रूत उवाचाकरोदित्यर्थः ॥२५॥

स्तुतमेवाह-अविक्रियमित्यादिना । तावत्प्रकृतिपुरुषविलक्षणं तत्तदुपनिषत्प्रतिपाद्यं परमात्मस्वरूपं विशोध्य नमस्कृत्य शरणं व्रजाति-अविक्रियमिति द्वाभ्याम् । हे देव ! त्वां नमामः नमस्कुर्मः बहुवचनमिन्द्रादिदेवताभिप्रायकं कथम्भूतं वरं श्रेष्ठं निस्समाऽभ्यधिकमत एव वरणीयं वरमित्यनेन "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्यर्थः सूचितः । देववरेण्यशब्दाभ्यां गायत्र्यर्थः, वरत्वे हेतुः मनोऽप्रयानं वचसा निरुक्तं मनसोऽपि अविषयत्वेन योऽतिवर्तत इति तथा वचसा निर्वक्तुमशक्यं वाङ्मनसाविषयमित्यर्थः । सर्वं हि चेतनाचेतनात्मकं जगद्वाङ्मनसयोर्विषयमत एवावरं परमात्मा तु तदविषयत्वाद्वर इत्यर्थः यद्यपि परमात्मापि योगपरिशुद्धमनोविषयो वेदजनवाग्विषयश्च तथापि वित्तयाऽमाभ्यामपि परिच्छेत्तुमशक्यो ऽनन्तस्वरूपस्वभावत्वादिति भावः । वाङ्मनसाविषयत्वे हेतुरप्रतर्क्यमिति प्रकृतिपुरुषसजातीयत्वेन तर्कितुमशक्यं यदप्रतर्क्यं तदेव वाङ्मनसाविषयम् इति भावः । अप्रतर्क्यत्वे हेतुः निष्कलमिति कला अवयवाः । निरवयवं कर्मायत्तप्राकृतशरीररहितमित्यर्थः । यत्सकलं तदेव प्रतर्क्यमिति भावः । आकाशादिकमपि सकलमेवेति तात्पर्यं तर्हि ईदृशः कुत्रास्त इत्यत आह-गुहाशयम् अस्मदादिहृदयगुहाशयमेव । शयानं वसन्तमित्यर्थः । स तर्हि किं जीवः "हृदि ह्ययमात्मा प्रतिष्ठितः" इति श्रवणादित्याह-आद्यम् आदौ भवमाद्य हृदयावस्थजीवानामपि उपादानकारणतया आदौ वर्तमानं गुहाशयत्वप्रयुक्तं परिच्छिन्नत्वं वारयति—अनन्तमिति । उपासकाऽनुग्रहायान्तरात्म-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तथा नियमन्यत्र च हृदयावच्छिन्नत्वेपि स्वरूपतो देशकाल—वस्तुपरिच्छेदरहितम् आद्यत्वप्रयुक्तं स्वरूपतः स्वभावतश्च प्रकृतिपुरुषयोरिव प्राप्तं विकारं वारयति—अविक्रियं सत्यमिति । अविक्रियं प्रकृतिरिव स्वरूपाऽन्यथाभावरूपविकाररहितं सत्यं पुरुष इव स्वभावान्यथाभावरूपविकाररहितं सद्वारकत्वाद्विकारस्याद्यत्वेऽपि स्वरूपतः स्वभावतश्च निर्विकारमेवेति भावः। अत्र प्रतापदं "सत्यं ज्ञानमनन्तम्" "निष्क्रियं निष्कलं शान्तं निरवद्यम्" "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्" "अनेजदेकं मनसोजवीयो नैनद्देवा आप्नुवन्" "यश्चायमनश्युदितम्" इत्यादिश्रुत्यर्थोऽनुसन्धेयः ॥ २६ ॥

अन्यैरपि प्रकृतिपुरुषयोरसंभावितैर्गुणैरेवं विशिंषन् शरणं व्रजति—विपश्चितमिति । प्राणादीनां विपश्चितं साक्षात्कर्तारं तत्रात्मानो जीवाः न हि सर्वप्रकृतिविकारजीवयुगपत्साक्षात्कर्तृत्वमेकस्य जीवस्य सम्भावितमिति भावः। अर्थाः शब्दादयो विषयास्तद्ग्राहकाणि श्रोत्रादीन्द्रियाणि च तेषामाभासं प्रकाशकं जीवानामर्थेन्द्रियप्रकाशकमित्यर्थः। अनिद्रं निद्राग्रहणं जाग्रदाद्यवस्थात्रयोपलक्षणमवस्थात्रयरहितायेत्यर्थः । तत्र हेतुः अवपुं कर्माधीनशरीररहितं तत्रापि हेतुः छायातपौ अज्ञानं तन्मिश्रं ज्ञानं च गृध्रपक्षौ "गृधु अभिकांक्षायाम्" रागादिमत्पुरुषाश्रयौ यत्र यस्मिन् न स्तः तादृशमक्षरम् अश्नोतेरक्षरप्रत्ययः सर्वव्यापकं तत्र दृष्टान्तः खमाकाशमिव व्याप्तमित्यर्थः। त्रियुगं पूर्णषाड्गुण्यं कृतादियुगत्रयाविर्भाववन्तं वा व्रजामहे शरणमिति शेषः ॥ २७ ॥

पुनरन्यसाधारणेन धर्मान्तरेण विशिंषन् शरणं व्रजति—प्रजयेति। मनोमयं चक्रं यदर्थं यः परमात्मा अक्षो यस्य तत्तथोक्तम् बहुव्रीहेरस्य प्रतिनिर्देशस्तमिति तं परमात्मानम् ऋतं सत्यं प्रपद्ये शरणं व्रजामीत्यन्वयः । मनोव्यापारमूलकं संसाररूपं चक्रम् अजस्य भगवतो अजया मायया ईर्यमाणं प्रवर्त्यमानं पञ्चदशारं दशेन्द्रियपञ्चवृत्तिप्राणारम् आशुगामि त्रिणाभि त्रयः सत्त्वादयो गुणा ९२नाभिर्यस्य तत् अनुकूलप्रतिकूलोदासीनवृत्त्युपेतं वा अष्टनेमि "भूमिरापो नलो वायुः खं मनो बुद्धिरेव च अहङ्कारः" इत्यष्ट प्रकृतय एव नेमिर्यस्य विद्युदिव चलं यः परमात्मा अक्षमाश्रयो यस्य तत् यत्सङ्कल्पमूलकमित्यर्थः। आशु शीघ्रं गच्छतीति तथा ॥ २८॥

एवं बन्धकत्वरूपोऽनितरसाधारणधर्म उक्तः अथमुक्तिदत्वं सुबन्धमुक्तगम्यं लोकं विशिनष्टि—यदेकमिति। यदेकवर्णमेकप्रकारं केवलं शुद्धसत्त्वमयं इत्यर्थः। तमसः प्रकृतिमण्डलात्परं परस्ताच्छ्रियमाणं"अयं तमस्यरजसः पराके"आदित्यवर्णं तमसः परस्तात्" इतिश्रुतेः। स्थानमिति शेषः अलोकं संसारिभिर्द्रष्टुमशक्यम अव्यक्तं रागादिदोषैर्विशेषेणाव्यक्तं न भवतीत्यव्यक्तम् उपसुपर्णा "यत्र पूर्वे साध्याः सन्ति देवाः"इत्युक्तनित्यसिद्धात्मकाः सुपर्णाः हंसाः तेषां समीपं सन्निकृष्टं तदधिष्ठितमित्यर्थः । अनन्तपारं निरवधि "त्रिपादस्यामृतं दिवि" इति श्रुतेः । एवम्भूतं पदं य आसाञ्चकार उपविवेशाऽधिष्ठितवानित्यर्थः । यत्र धीराः योगरथेन योगमार्गेण उक्तविधपदप्राप्तये उपासते बहुव्रीहेरस्य तमित्युत्तरत्राऽन्वयः । तमृतमिति पूर्वेण वा उपसुपर्णमिति पाठे उपेत्यस्याञ्चकारेत्यनेन सम्बन्धः उपसर्गस्य व्यवहितत्वेन प्रयोग आर्षः । सुपर्णोपलक्षणचतुर्थं पदं य उपासाञ्चकार उपविष्टवानित्यर्थः ॥ २९ ॥

एवं मुमुक्षुभिरुपास्यत्वं मुक्तप्राप्यत्वं नित्यविभूत्यधिपतित्वञ्चानितरसाधारणमुक्तम् अनेन मुक्तिदत्वमप्यनितरसाधारणं सूचितं तदेव व्यञ्जयन् नमस्करोति—नेति। कश्चिदप्ययं जनो मनुप्रभृतिजनो यस्य भगवतो मायां नातितितर्ति नातिक्रामति

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" ॥—

इति भगवदुक्तार्थोऽत्रानुसन्धेयः नातितितर्ति किन्तु तया मुह्यति अत एव भूतेषु समं सह चरन्तम् अन्तरात्मतया नियमयन्तम् अर्थं परमपुरुषार्थस्वरूपं यं परमात्मानं न वेद न जानाति यत्प्रसादात्स्वतिततर्ति न मुह्यति वेदचेति भावः। तं भूतेषु समं चरन्तमपि निर्जितात्मात्मगुणम् एक आत्मशब्दो देहपरः अपरस्तु जीवपरः विदाचिद्दोषास्पृष्टमित्यर्थः। अत एव परेषामस्माकमपीशं नमामः ॥ ३० ॥

कश्चाप्यस्य मायां नातितितर्ति इत्यनेनास्य दुरवगमत्वोदितत्वं सूचितं तदेव व्यक्तीकरोति—इम इति । इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा शरीरभूतेन सत्त्वेन सृष्टा अपि "तत्र सत्त्वं निर्मलत्वात्प्रकाशकम्"इत्युक्तविधसत्त्वगुणप्रधाना अपीति भावः। अत एव बहिरन्तरश्च आविः आविर्भूतज्ञाना अपि यस्य भगवतो गतिं चेष्टां सूक्ष्मां दुर्विभाव्यां न विद्महे उक्तविधा वयमेव न विद्मोऽहं कुत इतरप्रधानाः रजस्तमःप्रधाना असुराद्या जानीयुः ॥ ३१ ॥

यदेकवर्णमिति । नित्यविभूत्यधिपतित्वमुक्तमथ लीलाविभूत्यधिपतित्वमनितरसाधारणं वक्तुं कृत्स्नजगदन्तर्गतानां पृथिव्यादीनां तदवयवत्वेन तच्छरीरत्वं तत्प्रभवत्वञ्च वदंस्तं पुरुषसूक्तप्रतिपाद्यविराड्रूपमुभयविभूत्यधिपतित्वरूपमहाविभूत्यात्मकाऽनितरसाधारणधर्मयुक्तं वारंवारमनुस्मरंस्तत्प्रसादं प्रार्थयते—पादौ इत्यादिद्वादशभिः। इयं मही यस्य स्वकृतैव स्रोतेन सृष्टेव "पद्भ्यां भूमिः"इति श्रुतेः। पादौ स महाविभूतिर्ब्रह्मशब्दवाच्यो नः प्रसीदतामित्यन्वयः। मही विशिनष्टि, यत्र मह्यां चतुर्विधः जरायुजाण्डजस्वेदजोद्भिज्जरूपो भूतसर्गो भवति"पुमान्न देवो न नरो न पशुर्न च पादपः"इत्युक्तचतुर्विधो वा स भगवानात्मतन्त्रः स्वतन्त्रः महापुरुषः परमपुरुषो वैराजपुरुषो वा नोऽस्माकं प्रसन्नो भवतु ॥३२॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नित्यत्वेनाश्रुताभिः देवस्य हरेः विद्यमानाभिर्हरिगुणगणाभिप्रतिपादिकाभिः नन्वाहरणीयपक्षो नास्तीति कथं सङ्गच्छते ? "परा पूर्वेषाम्" इति श्रुतेः। देवानां भगवत्पक्षत्वावगमाद्भापिदेवार्थममृतमदादिति चेन्न, भक्तिवशः पुरुषः "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः। देवानामनुग्राह्यत्वात्तत्पक्षत्वं कार्यं नेति विवेकार्थ "अनुग्राह्यतया पक्षा देवानात्मार्थतो हरेः" इति वचनात् ॥ २५ ॥

वेदाशिरो विचारदानामस्मिन्स्तोत्रेऽधिकार इति ज्ञापयन् ब्रह्मा

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वेदान्तोक्तविशेषणविशिष्टत्वेन स्तौतीत्याह—ब्रह्मेति। "निष्कलं निष्क्रियं शान्तम्" "सत्यं ज्ञानमनन्तम्" "आत्मा वा इदमेक एवाग्र आसीत्" "हृदय आहितं नैषा तर्केण मतिरापनेया, नहि सुज्ञेयमणुरेषधर्मः" "महतूभूतस्य निःश्वसितमेतदृग्वेदः" "विद्यानां प्रथमो वक्ता" "ब्रह्मावाऽनभ्युदितम्" "यो देवानां नामधा एक एव" "तत्सवितुर्वरेण्यम्" इत्यादिश्रुतयः। प्रतीकत्वा ग्राह्याः क्षुद्रश्रुतिसंग्रहरूपत्वात्पूर्वोत्तरसंबन्धोऽत्र नान्वेषणीयः॥ २६॥

प्राणमनोधियात्मनां विपश्चितं वेदितारम् "यः प्राणे तिष्ठन्, प्राणस्य प्राणमुत चक्षुषश्चक्षुः" इत्यादयः "आत्मनि तिष्ठन्" इत्यादि अर्थानीन्द्रियाणि चाभासयति दीपयतीत्यर्थेन्द्रियाभासः अर्थेन्द्रियाणां सन्निकर्षमुत्पाद्य तद्विषयं ज्ञानं जनयतीत्यर्थः। "यस्य भासा सर्वमिदं विभाति" यस्ततो भयाविच्छेदः एवमस्यामेतं विधि अनिद्रं अस्वप्नमव्रणम् अकायं लिङ्गशरीररहितम् अक्षतं वा यत्र यस्मिन् हरौ गृध्रस्य सर्वकांक्षमाणस्य जीवस्य पक्षौ पतत्रवद्वर्तमानौ पृथक् अधोर्ध्वमार्गहेतू छायातपौ अविद्या शास्त्रजन्यविद्यालक्षणौ न स्तः—

"छाया त्वविद्या संप्रोक्ता जन्यविद्या तपः स्मृतम्।
जीवगृध्रस्य तौ पक्षावध ऊर्ध्वपयोःपृथक्॥
तौ विष्णोस्तु न विद्येते नित्यविद्यास्वरूपिणः"—

इति वचनादुक्त एवार्थ इति तं त्रियुगं व्रजामह इत्यन्वयः त्रीणि युगानि यस्य स तथा तं तेष्ववतारादिति "स्वयंभूस्त्रियुगः कृष्णः शार्ङ्गी दामोदरस्तथा" इत्यभिधानम्. "अक्षरात्संभवतीह विश्वम्" "एतद्ध्येवाक्षरं ब्रह्म" खं सुखरूपं ज्ञानरूपं वा "कं ब्रह्म खं ब्रह्म"॥ २७॥

अजस्य विष्णोरधीनं चक्रं पुनः प्रवाहरूपेण परिवर्तमानत्वाच्चक्रसंज्ञं जगत् यः केशवोऽक्षमक्षस्थानीयो यस्य तत् यदक्षमाहुः, तमूनं प्रपद्य इत्यन्वयः। चक्रं नवृत्तं तदेवर्तमित्यादि चक्रं चेत्केन विक्षिर्यमाणं परिवर्तते। अस्य किं प्रेरकमित्यत उक्तम् अजयेति "कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" इति अस्य वैलक्षण्यमाह—मनोमयमिति। कान्यस्याराणीत्यत्राह—पञ्चदशारमिति। श्रोत्रादीनि दश शब्दादयः पञ्च पृथिव्यादीनि वा प्राणादयो वा पञ्च एत एवाराणि दलानि यस्य तत्तथा तत् आशु शीघ्रभ्रमं व्याप्तं वा त्रिणाभिः त्रयो गुणाः सत्त्वादयो नाभिर्यस्य तत्तथा यदक्षमित्यनेनोक्तं केशवाधारत्वं स्पष्टयति—*विद्युद्बलमित्यादिना. विद्युद्विशेषेण द्योतमानत्वात् ब्रह्म बलमाधारो यस्य तत्तथा "विद्युद्ब्रह्मेत्युपासीत" "जगच्चक्रस्याक्षभूतो बलरूपश्च केशवः" इति च देवासुरमनुष्यादयोऽष्टौ नेमिर्यस्य तत्तथा तत्॥ २८॥

इदानीं तुरीयमूर्तिं नमति—यदिति। एको वर्णो यस्य तदेकवर्णं स्वरव्यञ्जनविभागविवक्षामन्तरेण व्यक्तैरेकत्वम् अन्यथा षोडशस्वरा इति संख्यानुपपत्तिः ओमित्येतदक्षरमिदं सर्वं "प्रणवं हीश्वरं विद्यात्सर्वस्य हृदयेस्थितम्। सर्वव्यापिनमोंकारम्" तमसो ज्ञानात्परं तद्रहितमित्यर्थः। तुरीयं तत्सर्वदृक् सदा प्रकृतेः परं वा "अक्षरात्परतः परः" कूटस्थो क्षर उच्यते" उत्तमपुरुषः" सत्सत्यं ज्ञानम् अवसादयति नाशयतीत्यज्ञानं "न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः" निर्दोषज्ञानं वा ऐकात्म्यप्रत्ययसारं "षट्लिङ्गतो" इति धातुः अलोकं लोकव्यवहाराविषयम् अदृष्टमव्यवहार्यमलक्षणम् अचिन्त्यमव्यपदेश्यम् अत एवाव्यक्तम् अनन्तपारम् अन्तपारवर्जितम् पारं पूरणं समुदायो मात्राणामिति शेषः। अनन्तमात्रमित्यर्थः इति वा अमात्रोऽनन्तमात्रश्च धीरा योगरथेन भक्तिपूर्वकध्यानलक्षणरथेन यदुपासते भजन्ति "ओंकारं मात्मैव संविशत्यात्मनात्मानं य एवं वेद" यश्चोपसुपर्णपत्रं सुपर्णपक्षसमीपे जीवाख्यवाहनपृष्ठे आसाञ्चकार उपविवेश "सर्वस्य हृदये स्थितः" "य आत्मनि तिष्ठन्" "द्वा सुपर्णा सयुजा"॥ २६॥

जनो यया मायया वेदनार्थं ज्ञानविषयं हरिप्रति ज्ञानाख्यपुरुषार्थं वा मुह्यति "अनीशया शोचति मुह्यमानः" कश्चन तामसप्रकृतिर्यस्य तां मायां नाऽभिपपर्ति नातिक्रामति अत्येतुं समर्थो न भवति सात्त्विकभेदस्य प्रसादेन जानाति "अनादि मायया सुप्तो यदा जीवः प्रबुध्यते" 'यमेवैष वृणुते" तं नमामीत्यन्वयः। नितरां जित आत्मा आत्मगुणाश्च येन स तथा तं "निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः" एको देवः सर्वदेवेषु गूढः" "स एष सर्वेश्वरः एष सर्वं एषोन्तर्याम्येष योनिः सर्वस्य"॥ ३०॥

सात्त्विकानामपि भगवत्कटाक्षवीक्षामन्तरेण तज्ज्ञानं दुरापमित्यर्थादुक्तं तत्स्पष्टमाह—इमहेति। विभो यत्कृपयैव येन सत्त्वेन गुणेन सृष्टा येन बहिरन्तरश्च सृष्टाश्चेमे वयं यस्य तव सूक्ष्मां गतिं विश्वव्यापिनीं सच्चिदानन्दाकृतिं न विद्मः यदनुग्रहमन्तरेणेति शेषः। न च ज्ञानाभावात्तज्ज्ञानाभाव इत्याह—ऋषयश्च ज्ञानिनोऽपि अन्यथा ब्रह्मादीनाम् अप्राधान्यं स्यात्किमुत्यन्यायमाह—कुत इति हेतुगर्भविशेषणमाह, इतरेति. इतरस्तमो गुणः प्रधानो येषां ते तथा॥ ३१॥

स्वकृतेयं मही यस्य पादाविव न स्वरूपपादौ यत्र यस्यां मह्यां जरायुजादिश्चतुर्विधो भूतसर्गः सर्वे स एव प्रसीदतामित्यन्वयः। महापुरुषः पुरुषोत्तमः महद्विविधं भवनं यस्य स तथा, त्रिविधभवनमेकस्य कथमुपपद्यते? इति तत्राह—ब्रह्म अपरिच्छिन्नगुणपूर्णत्वात् अथ कस्मादुच्यते ब्रह्मेति "बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः पादावित्यनेन "पादोऽस्य विश्वा भूतानि" इति श्रुत्युक्तार्थः "पातालमेतस्य हि पादमूलम्" इति स्मृत्युक्तार्थश्चेत्युभयं वक्ष्यत इति ज्ञातव्यम॥ ३२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ब्रह्मत्वेन स्तौति—अधिक्रियमिति॥ २६॥

परमात्मत्वेन स्तौति—विपश्चितमिति द्वाभ्याम्। तत्तदवतारूपेण त्रियुगम्॥ २७॥

यदक्षमाहुरित्यस्य टीकायां गुणीभूतप्रथमान्तपदच्छेदेनैव तमित्यस्यान्वयः कृतः। अष्टौ प्रकृतय इति "भूमिरापोऽनलो वायुः" इत्यादिगीतोक्ताः॥ २८॥

---

* विद्युद्बलमिति मूलपाठः।

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

भगवत्स्वेन स्तौति—य इति युग्मकेन। यस्तमसः परं स्वधाम आसाञ्चकार अनाहृत एवाऽध्यास्ते तमेनं योगरूपप्राप्तिसाधनेन धीरा उपासते। तत्रोपसुपर्णं यथाध्यास्तेति। गरुडमप्यनुगम्योपासत इत्यर्थः। इति वाक्यं दर्शितम्। तद्धाम विशिनष्टि—एकवर्णं शुद्धसत्त्वैकस्वरूपम् यतस्तमसः प्रकृतेः परम् यत एवालोकम् लोकातीतम्। यत एवानन्तपारमव्ययम् प्राकृतागोचरमिति ॥ २९ ॥

अधीराणान्तु दुर्गमत्वमाह—न यस्येति। अर्थं परमार्थं यं न वेद तं परमेशं भगवन्तं नमामि कीदृशं निर्जिता वशीकृता आत्मानः स्वांशभूताः महापुरुषादयः आत्मभूता गुणा ऐश्वर्यादयश्च येन तम् एवंभूतैश्वर्यत्वेऽपि न तुच्छावज्ञा दृष्टिरित्याह, भूतेष्विति ॥ ३० ॥

दुर्गमत्वमेव दर्शयति—इमे वयमिति ॥ ३१ ॥

तथापि ब्रह्मणोऽपि प्रतिष्ठारूपं तमवाग्दृश्यैव भजेमहीत्याह—पादौ महीति द्वादशभिः। ब्रह्म च महाविभूतिर्यस्य अतो महाविभूतिस्तत्रापि महती ब्रह्म वस्तुषु विभूतिर्यस्य स इत्येव एकादशे विभूतिकथनप्रसङ्गे विस्तरेण दर्शयिष्यते ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अदृष्टस्वरूपायेति तत्र वर्त्तमानत्वेऽपि तदिच्छां विना द्रष्टुमशक्तेः अमून् अकरोत् दैवीभिः पुरुषसूक्तादिभिः वैदिकीभिः ॥ २५ ॥

हे देव ! त्वां वयं नमाम एव न तु ध्यातुं स्तोतुं च प्रभवाम इत्याहुः मनसोऽग्रे यानं यस्य तं तथाच श्रुतिः “अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत् तद्धावतो ऽन्यानत्येति तिष्ठत्” इति वचसापि अनिरुक्तं “यद्वाचाऽनभ्युदितं येन वागभ्युद्यते” इति श्रुतेः अस्मन्मनोवचसोर्मायिकत्वात् तव तु मायातीतत्वादिति भावः। मायातीतत्वे लिङ्गमाह, अविक्रियं गुणानामेव विकारधर्मत्वादिति भावः। न च मनआद्यगम्यत्वेपि तवावस्तुत्वमित्याह—सत्यं, ननु, किं घटपटादिकमिव? नेत्याह—अनन्तं कालदेशापरिच्छेदरहितं यत् आद्यं सर्वजगत्कारणम् अत एव सर्वेषामगम्यत्वाद्गुहायामिव शेते इति तं यता निष्कलं निरुपाधि यद्वा अप्रमेयत्वान्निष्कलं “कलो ना कालमानयोः” इति मेदिनी। तत्र हेतुः अप्रतर्क्यम् ॥ २६ ॥

अतस्तस्य सर्वज्ञत्वं चाह—विपश्चित् प्राणावितं प्राणादिनां ज्ञातारम् आत्मा अहङ्कारो देहो जीवो वा अर्था विषयाः इन्द्रियाणि तद्ग्राहकाणि तैर्न भासते इति तं विषयनिष्ठेन्द्रियागोचरमित्यर्थः। अनिद्रं द्रष्टारं तदपि अचरणं जीवदुःखदर्शनेऽप्यदुःखितं सर्वत्र हेतुः यत्र यस्मिन् गृहपतौ जीवपक्षतुल्यौ छायातपौ अविद्याविद्ये न स्तः अत एवाचरं त्वं नित्यसुखरूपमित्यर्थः “स्वामिन्द्रिये सुखे स्वर्गे” इति कोशः नित्यसुखमेव गणयन्ति त्रियुगं त्रीणि युगानि यत्र तं षडैश्वर्यवन्तमित्यर्थः। प्रजामहे शरणं व्रजामः ॥ २७ ॥

एवंभूतः स एव जीवैरुपास्यो यतो जीवाविद्या तदाश्रयेनेत्याह—अजस्य जीवस्य चक्रं संसारचक्रम् अजया मायया प्रेर्यमाणं चालयमानं मनोमयं मनःप्रधानं दशेन्द्रियाणि पञ्च प्राणाश्चेत्येवं पञ्चदश अरा यस्य आशु शीघ्रं त्रयो गुणा नाभिरिव मध्ये यस्य विद्युदिव चपलम् अष्टौ प्रकृतयो नेमय इवाऽऽवरणानि यस्य तत् यदक्षं यः परमेश्वर एवाक्षो यस्य तत् यदधिष्ठानमाहुरित्यर्थः। तम् ऋतं प्रपद्ये ॥ २८ ॥

प्रपत्तिप्रकारमभिव्यञ्जयति—य इति। एकवर्णमेकाक्षरं प्रणवरूपं सुपर्णं गरुडं यः उपश्राविकयेन उपरि वा आसाञ्चकार अध्यास्तेत्यम कीदृशं तमसः प्रकृतेः परं तत् तं प्रसिद्धम् अलोकं लोकातीतम् अत एव अव्यक्तं लोकागम्यं तत्र हेतुः अनन्तपारं सर्ववेदरूपत्वादर्थतः शब्दतश्च एतावत्तया निश्चेतुमशक्यम् एवंभूतं प्रणवसुपर्णमारूढम् एनं परमेश्वरं योग एव रथस्तेन योगरूपं रथमारुह्येत्यर्थः। उपासते उत्साहस्थायिना वीररसेन युद्ध्यमान इवेत्यर्थः। तस्मान्मोक्षानन्दाजिघृक्षयेति भावः। धीरा युद्धादनपसरन्तः तं नमामीत्युत्तरेणान्वयः ॥ २९ ॥

अमोघिष्णुतामाह—न यस्येति। कश्च कोऽपि प्रपत्तिं विनेति शेषः। निर्जिता वशीकृता आत्मानो जीवा आत्मशक्तिर्माया तद्गुणाश्च येन तम् ॥ ३० ॥

अर्थं न वेदेति यदुक्तं तत् प्रपञ्चयति—इमे इति। बहिः कालरूपेण अन्तरन्तर्यामिरूपेण आविः प्रकटामपि गतिं चरित्रम् ऋषयस्सन्तो न विद्मः इतरप्रधाना रजस्तमोमयाः कुतो विदुस्तं नमामेति पूर्वेणान्वयः ॥ ३१ ॥

अतो वयं तव स्थूलं दृश्यं वैराजरूपं जानीम इति व्यञ्जयन् प्रार्थयते—पादौ महीति, द्वादशभिः। महत्यः पृथ्वीजलाद्याः विभूतयो यस्य सः प्रसीदतां प्रसीदतु ब्रह्ममूर्तित्वाद्ब्रह्म “पृथिवी वायुराकाश आपो ज्योतिरहं महान्। विकारः पुरुषो ऽव्यक्तं रजः सत्त्वं तमः परम्” इति विभूतिगणनाध्याये परमित्यस्य ब्रह्मेति व्याख्यानात् “परात् परं ब्रह्म च ते विभूतयः” इति श्रीयामुनाचार्यकृतस्तोत्राच्च ब्रह्मापि महाविभूतिर्यस्येति सन्दर्भः ततश्च प्राकृते लोके प्राकृत्यः पृथिव्यादयः क्षुद्रा एव विभूतय इति ता एव निर्दिशति—पादाविति। चिन्मयमूर्त्तेस्तस्य पादयोर्विभूतित्वात् पादौ इयं मही स्वकृता स्वेनैव सृष्टा यत्र मह्यां जरायुजादिश्चतुर्विधः स वै स तु महापुरुष इति वैराजो ऽयं तु प्राकृतः पुरुष इति भावः। आत्मतन्त्रः वैराजो ऽयं कालपरतन्त्र इति भावः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे विभो राजन् ! अवाहितेन्द्रियः संयतान्तःकरणः ब्रह्मा अश्रुतपूर्वाय भगवते नमस्करोतीति शेषः दैवीभिः देवनिश्वासरूपैः वैदिकोक्तिभिः स्तुतिमकरोत् ॥ २५ ॥

अविक्रियं निर्विकारस्वरूपत्वात् सत्यं यथार्थमनन्तं विभुम् आद्यं सर्वकारणं गुहाशयं अन्तर्यामित्वात् निष्कलं हेयकला-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रहितत्वात् अप्रतर्क्यं तर्कैरप्रतिपाद्यं वेदैकवेद्यत्वात् मनोग्र-याणां शीघ्रगत्वात् वचसा अनिरुक्तम् इयत्तागुण्यत्वात् वरं श्रेष्ठं वरेण्यं वरणीयम् एवंविधं त्वां हे देव नमाम ॥ २६ ॥

प्राणादीनां विपश्चितं द्रष्टारम् तन्नात्मानो जीवाः अर्थे-न्द्रियाणि विषयात्मकानीन्द्रियाणि तेन भासते इति तथा तं यद्वा अर्थानां विषयाणामिन्द्रियाणां च आभासं प्रकाशकम् अनिद्रं निद्रोपलक्षितदोषरहिताप्राकृतेन्द्रिययुक्तम् अव्रणं व्रणो-पलक्षितप्राकृतदेहदोषरहिताप्राकृतदेहयुक्तम् स्वरूपतस्तु अनि-द्रत्वमव्रणत्वं च जीवस्यापि किमुतपरमात्मनः गृध्रपक्षौ गृध्रस्य भुक्तिमुक्त्याकांक्षावतो जीवस्य पक्षौ संसारविष्णुपदप्रापकौ छायातपौ अविद्या विद्ये यत्र न स्तः तमक्षरमविकारिस्वरूपं अ-सक्तं त्रीणि युगानि षड्गुणा यस्मिन् तथाभूतं भजामहे शरणं व्रजाम ॥ २७ ॥

अजस्य जीवस्य चक्रं संसारलक्षणम् अजया भगव-च्छक्त्या ईर्यमाणम् मनोमयं मनःप्रधानं यतः संसारभ्रमणं मनोमूलम् दशेन्द्रियाणि पञ्च प्राणाश्चेति पञ्चदश अरा यस्य तम् आशु शीघ्रगम् त्रयो गुणाः नाभिरिव मध्ये यस्य तत् विद्युदिव चलं चपलम् "भूमिरापो नलो वायुः खं मनो बुद्धि-रेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" इति अष्टौ प्रकृ-तयो नेमय इवावरणानि यस्य तत् यः परमात्मा अक्षमा-श्रयं यस्य तदक्षमाहुः तमृतं सत्यं परमात्मानं प्रपद्ये ॥२८॥

य एकवर्णो कार्याकारानेकरूपरहितं नित्यमित्यर्थः। तमसः प्रकृतेः परं "अयं तमस्य रजसः पराके, आदित्यवर्णो तमसः पर-स्तात्" इत्यादिश्रुतेः अनन्तपारं व्यापकं तथाऽप्यव्यक्तं सर्वैः सर्वत्र द्रष्टुमशक्यम् एवंभूतमलोकमकारार्थस्य स्वस्य वासुदेवस्य लोकं परवैकुण्ठं यद्वा अलोकं प्रसिद्धलोकभिन्नम् आसाञ्चकार अधिष्ठितवान् एनं धीरा मुमुक्षवः योगरथेन ध्यान-साधनेन उपसुपर्णं सुपर्णस्य कर्मफलभोगे शोभनं पर्णं पतनं यस्य तस्य जीवस्य समीपे उपासते अन्तर्यामिणं ध्यायन्ती-त्यर्थः। तं नमामेत्युत्तरेणान्वयः अस्य श्लोकस्य निर्णयः श्रुत्यंत सुपद्मादिषु ग्रन्थेषु द्रष्टव्यः ॥ २९ ॥

यस्य भगवतः मायां यया जनो मुह्यति अत एव अर्थं आत्मानात्मपरमात्मस्वरूपं न वेद तां कश्च भगवत्प्रपन्नेतरः नाति-तितर्ति "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति श्रीमुखवचनात् तं नमाम कथंभूतं निर्जितौ आत्मानौ प्रकृतिजीवौ आत्मनोऽस्तर्यां गुणाश्च सर्वनिय-न्तृत्वात् एनं तं परेशमीश्वराणामपीश्वरम् अत एव भूतेषु समं चरन्तम् ॥ ३० ॥

इमे लोकनाथत्वाद्यभिमानयुक्ता वयं देवा ऋषयश्च यस्य प्रियया तन्वा तनुवत्प्रियरूपेण "सत्त्वं यद्ब्रह्मदर्शनम्" इति वच-नात् ब्रह्मदर्शनस्थानेन सत्त्वेन सृष्टाः अपीत्यर्थः। अन्तर्भगव-त्स्वरूपगुणमननादौ बहिस्तत्स्वरूपगुणश्रवणादावप्यावि-राभिमुखा अपि अस्य भगवतः सूक्ष्मां दुर्दर्शां गतिं पदवीं न विद्मः इतरप्रधानाः रजस्तमःप्रधानाः कुतो विदुस्तं नमामेति पूर्वेण सम्बन्धः ॥ ३१ ॥

अथ सर्वभूतेषु स्पर्द्धादिकं हित्वा भगवान्भजनीय इति सूचयितुं वैराजरूपेण स्तुवन् प्रार्थयते-पादाविति द्वादशभिः। यत्र महाञ्जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधो भूतसर्गो भवति महती विभूतिरैश्वर्यं यस्य सः नो ऽस्माकं प्रसीदतां प्रसन्नो भवतु ॥ ३२ ॥

---

भाषा टीका।

शुक देवजी कहने लगे कि—हे प्रभो ! सर्व देवताओंके सहित ब्रह्माजी वहां जाकर, नहीं देखा स्वरूप जिनका और पूर्व में सुनेमात्र ऐसे श्री हरि की समाहित इन्द्रियहोकर वैदिक वाणी से स्तुति करने लगे ॥ २५ ॥

ब्रह्मो वाच।

ब्रह्माजी बोले, कि—सर्व देवों में श्रेष्ठ ऐसे आपको मैं नमस्कार करताहुं आप कैसे हैं, कि—विकाररहित, सत्य-स्वरूप, अनन्त, आद्य, अन्तर्यामि, और अप्रमेय, किसी तर्क में न आने वाले, और मन से अग्र गमन करने वाले, तथा वाणी से जिनका वैभव न कहा जाय, ऐसे अति कम-नीय हैं ॥ २६ ॥

और जो प्राण, मन, बुद्धि, और आत्मा के ज्ञाता हैं, तथा विषयों में आसक्त इन्द्रियों से जो न भासमान होवें सदा प्रबुद्ध, व्रणादि विशिष्ट कर्मजन्य से रहित, और जि-समें जीव के तरह विद्या और अविद्या नहीं ऐसे अक्षर नित्य स्वस्वरूप तीन युगल गुण वाले, अर्थात् ज्ञानशक्ति बल ऐश्वर्य, वीर्य तेज, इस प्रकार षट् गुण परिपूर्ण, ऐसे प्रभु के हम शरण गत हैं ॥ २७ ॥

इस जीव का यह चक्र रूप देह माया से प्रेरित मन जिसमें प्रधान, और दश इन्द्रिय पञ्च प्राण ऐसे पञ्चदश आरा जिसमें, शीघ्र गति वाला, और तीन गुण नाभि के सदृश मध्य में वर्त्तमान जिसके, तथा विद्युत ( बिजली ) के सदृश चञ्चल, और अष्ट प्रकृति हैं नेमि के तरह आवरण जिस के, ऐसे चक्र के अक्ष के तुल्य आधारभूत जिसको कहते हैं, उस सत्य स्वरूप गोविन्द के मैं शरण को प्राप्त हूँ ॥ २८ ॥

जो एक वर्ण और तमसे परे अलोक अव्यक्त अनन्तपार वाला होकर भी जो जीव का अन्तर्यामि होकर नियमन करने वाला है, और जिसको धीरजन योगरूप रथसे उपा-सना करते हैं ॥ २९ ॥

और जिस की माया को कोई नहीं तर सका है, जिस माया से जन मोहित हो रहा है, और वास्तव अर्थ को नहीं जान सका है, और जिसने आत्मा को और माया के गुणों को अपने वश किया है, और सर्व भूत प्राणियों में समान रीति से विराज मान ऐसे परेश को नमस्कार करते हैं ॥ ३० ॥

ये हम सब ऋषि और देव लोग जिसकी प्रियतनु

अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः।
लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्ममहाविभूतिः ॥ ३३ ॥
सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः।
ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥
अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा।
अन्तःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतां नः स महाविभूतिः ३५ ॥
यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम्।
द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥
प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः।
अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥
श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः।
प्राणेन्द्रियात्मासुशरीरकेतम्प्रसीदतां न स महाविभूतिः ॥ ३८ ॥
बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशो धिषणाद्विरिञ्चः।
खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥
श्रीर्वक्षसः पितरश्छायायाऽऽसन्धर्मः स्तनादितरः पृष्ठतोऽभूत्।
द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्रसीदतां नः स महाविभूतिः ॥ ४० ॥

भाषाटीका।

अर्थात् सत्त्वगुण से सृष्ट हैं तो भी बाहर भीतर प्रकट सूक्ष्म गति को नहीं जान सक्ते हैं फिर जो तमोगुण प्रधान असुरादिक हैं वे कैसे जानेंगे ॥ ३१ ॥

सङ्कल्प मात्र से रची हुई पृथिवी को जिसके चरण कहते हैं जिस पृथिवी में जरायुज आदि भेद से चार प्रकार की प्राणियों की सृष्टि वर्त्तमान है। वह महा विभूति (संपत्ति) वाला परम स्वतन्त्र महापुरुष हमारे ऊपर प्रसन्न हो ॥ ५२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

उदारं वीर्यं शक्तिर्यस्य तदम्भो यस्य रेतः स नः प्रसीदतु उदारवीर्यतामाह–यतोऽम्भसो लोकादयः सिध्यन्ति जायन्ते ॥ ३३ ॥

यः सोमो देवानामन्धोऽन्नम् अत एव बलमायुश्च नगानां वृक्षाणां प्रकर्षेण जनयति वर्धयतीति प्रजनः तं यस्य मनः समामनन्ति स नः प्रसीदतु ॥ ३४ ॥

अग्निर्यस्य तु मुखं जातः कथम्भूतः जातं वेदो धनं यस्मात् क्रियाकाण्डं तत्प्रतिपाद्यं कर्म तन्निमित्तं जन्म यस्य अन्तःसमुद्रे उदरमध्ये स्वधातून्पाकाहाँनेवान्नादीननुपचन् प्रसिद्धसमुद्रेऽपि वाडवरूपेणोदकान्येवानुपचन्नग्निः ॥ ३५ ॥

एष तरणिर्यस्य चक्षुरासीत् कथम्भूतः देवयानमर्चिरादिमार्गदेवता "त्रयीमयः सैषा त्रय्येव विद्या तपति" इति श्रुतेः ब्रह्मणो धिष्ण्यमुपासनास्थानम् "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इति श्रुतेः मुक्तेर्द्वारं देवयानत्वात् अमृतं च पुण्यलोकत्वात् मृत्युश्च कालात्मकत्वात् एवम्भूतस्तरणिर्यस्य चक्षुः स प्रसीदतु ॥ ३६ ॥

कथम्भूतो वायुश्चराणां सह आदिधर्मवान्प्राणाः यं प्राणं वयं बुद्ध्याद्यधिष्ठातारो देवाः सम्राजं भृत्या इवान्वास्मानुसृत्य स्थिताः एवम्भूतो वायुर्यस्य प्राणादभूत्सः ॥ ३७ ॥

खानि देहगतानि छिद्राणि प्राणः पञ्चवृत्तिः इन्द्रियाणि च आत्मा मनश्च असवो नागकूर्मादयः शरीरं च तेषां केतमाश्रयभूतं खं यस्य पुरुषस्य नाभ्याः प्रजज्ञे सः ॥ ३८ ॥

यस्य बलान्महेन्द्रो जज्ञे छन्दांसि ऋषयश्च खेभ्यः कः प्रजापतिः ॥ ३९ ॥

इतरोऽधर्मः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा अम्भो जलं यद्रेतः तत्कार्यभूतं त्रयो लोकाः लोकपालाश्च सिद्ध्यन्ति । इति शेषः यस्मादुत्पद्यन्ते जीवन्ति येनेति शेषः वर्द्धमानाः यत्रेति शेषः स ब्रह्मशब्दवाच्यो महाविभूतिर्नः प्रसीदताम् ॥ ३३ ॥

सोमं चन्द्रमसं यस्य मनो वदन्ति "चन्द्रमा मनसो जातः" इति श्रुतेः । सोमं विशिनष्टि, यः सोमो दिवौकसां देवानाम् अन्धः अन्नम् अमृतकरत्वादिति भावः अतएव बलमायुश्च नगानां वृक्षाणां प्रजानां चराणां च प्रकर्षेण जनयति वर्द्धयतीति प्रजनः अतएव तेषामीशो यः सोमस्तं यस्य मनो वदन्ति मनसो जातं विराड्-रूपस्य मनःस्थानीयं च वदन्ति स ब्रह्म महाविभूतिर्नः प्रसीदतां बलादीनि परमात्मविशेषणानि वा देवादीनां बलं बलादि हेतुः स ईशो ब्रह्म महाविभूतिरित्यन्वयः ॥ ३४ ॥

तथा यस्याग्निर्मुखमुच्यते 'मुखादिन्द्रश्चाग्निश्च' इत्यादिश्रुतिभि र्यस्य मुखस्थानीयो मुखाज्जातश्चाग्निः स ब्रह्ममहाविभूतिः प्रसीदतामित्यन्वयः यस्य मुखम् अग्निर्जात इति वान्वयः अग्निं विशिनष्टि, जातवेदाः जातं स्वस्मिन्निहितं चरुपुरोडाशादिकम् इन्द्रादिभ्यो वेदयति "विद्लृ लाभे" प्रापयतीति जातवेदाः तथा क्रियाकाण्डनिमित्तजन्मा क्रियाकाण्डनिमित्तं——— यज्ञादिक्रियाकलापात्मकवेदपूर्वभागार्थानुष्ठाननिमित्तं ——— जन्म यस्य सः अन्तस्समुद्रे समुद्रो देहम "द्यात्मकत्वात्तु भूयस्त्वात्" इति न्यायेन जलांशप्रचुरत्वात् अन्तस्समुद्रे देहमध्ये जाठररूपेण स्वधातून् स्वाधिष्ठितदेहस्थान् धातून् शुक्रशोणितादि सप्तधातून् पचन्परिणामयन् एवम्भूतोऽग्निर्यस्य मुखं सः प्रसीदताम् ॥ ३५ ॥

तथा तरणिरादित्यो यस्य चक्षुरासीत् "चक्षोस्सूर्योऽजायत" इतिश्रुतेः स महाविभूतिर्नोऽस्माकं प्रसीदतां तरणिं विशिनष्टि— देवयानमर्चिरादिमार्गभूतः त्रयीमयः ऋग्यजुस्सामप्रचुरः स एव तरणिर्ब्रह्मणः परस्य धिष्ण्यं स्थानं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति श्रुतेः ब्रह्मण उपासनस्थानमित्यर्थः । मुक्तेर्द्वारं देवयानत्वादिति भावः अमृतं चामृतसाधनं पुण्यानुष्ठानकालज्ञापकत्वादिति भावः मृत्युरुदयास्तमयाभ्यामायुःक्षय— करत्वात् एवम्भूतस्तरणिर्यस्य चक्षुः स महाविभूतिः प्रसीदताम् ॥ ३६ ॥

तथा यस्य प्राणाद्वायुरभूत् "प्राणाद्वायुरजायत" इतिश्रुतेः स महाविभूतिः प्रसीदतां कथम्भूतो वायुश्चराचराणां भूतानां सह प्राणैः जनयिता तथा सहो मनसो बलं दैहिकम् ओजः इन्द्रियाणां बलं प्राणः पञ्चवृत्तिमान् यं पञ्चवृत्तिं प्राणं वयं बुद्ध्याद्यधिष्ठातृदेवताः सम्राजं सार्वभौमं भृत्या इवान्वास्मानुवर्तिनः स एवंभूतो वायुर्यस्य प्राणादभूत् सः प्रसीदताम् ॥ ३७ ॥

तथा यस्य श्रोत्राद्दिशो जज्ञिरे "दिशः श्रोत्रात्" इति पुरुषसूक्ते श्रवणात् खानि देहगतच्छिद्राणि हृदा जज्ञिरे हृदयात् पुरुषभूतः पुरुषस्य वैराजस्य नाभ्याः खमन्तरिक्षं जज्ञे "नाभ्या आसीदन्तरिक्षम्" इति श्रुतेः प्राणशब्दः कर्मेन्द्रियपरः इन्द्रियशब्दो ज्ञानेन्द्रियपरः आत्मा मनः असुशब्दः पञ्चवृत्तिप्राणवायुपरः शरीरश्चेत्येतेषां केतनम् आश्रयं खं यस्य नाभ्या जज्ञे सः प्रसीदताम् ॥ ३८ ॥

यस्य बलान्महेन्द्रो जज्ञे प्रसादात् त्रिदशा जज्ञिरे मन्योः क्रोधात् गिरिशो रुद्रः हर्षाद्विरिञ्चो ब्रह्मा खेभ्यः छन्दांसि गायत्र्यादीनि "छन्दांसि जज्ञिरे तस्मात्" इतिश्रुतेः ऋषयश्च खेभ्यः जज्ञिरे मेढ्रात्कः प्रजापतिर्मेढ्राधिष्ठाता सः प्रसीदताम् ॥ ३९ ॥

तथा यस्य वक्षसः श्रीः सम्पजज्ञे छायया छायातः पितरः आसन् स्तनात् धर्मः पृष्ठतः इतरोऽधर्मः शीर्ष्णः शिरसः द्यौः "शीर्ष्णो द्यौस्समवर्तत" इतिश्रुतेः विहारादप्सरसः आसन् सः प्रसीदताम् ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतश्चैकं महाविभूतित्वं हरेर्युक्तमित्याह—अम्भ इति । त्रयो लोका अथाखिललोकपालाश्चोदारवीर्यम् उत्कृष्टबलं यदम्भो यस्य रेतो भवति तेन वर्धमानाः सिद्ध्यन्ति सिद्धा अवाप्तफला भवन्ति जीवन्त्युत अन्तरमपि तृप्तिलक्षणं जीवनमाप्नुवन्त्यपि सोऽयं परं तस्यापैत आपो जायन्त "आपो नारा इति प्रोक्ता आपो वै नरसूनवः" "यद्यत्प्रथमममृतं तद्वसव उपजीवन्ति" इत्यादिसूर्यसोममहेन्द्रादीन्वा विनान्येऽखिललोकपाला अद्भिर्जीवन्ति किञ्चापां सोमस्य च जीवनप्रदा इन्द्राद्या इतीमं विशेषं तुशब्दो ज्ञापयति इममेवविशेषं तुशब्दो ज्ञापयतीति कुतः अन्यथा किं न स्यादितीयं शङ्का—

"सूर्यसोमयमेन्द्रादीनृतेऽन्ये लोकपा अपि ।
अद्भिर्जीवन्ति सोमाच्च महेन्द्रादीनृतेऽखिलाः ॥
अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदाः"—

इत्यनया परिहृतेति ज्ञायते महती विभूतिः सूर्यसोमादिविविधविशेषकल्पकैश्वर्यलक्षणा यस्य स तथा एवंविधः क इति तत्राह— ब्रह्मेति ॥ ३३ ॥

यो दिवौकसां बलमन्ध आयुर्वं बलाद्यभिवृद्धिहेतुः यश्च नगानां वृक्षाणाम् अङ्कुरजननसामर्थ्यप्रदत्वेनेशः यश्च प्रजानां प्रजनः सुरतानन्दगर्भलक्षणहेतुस्तं सोमं यस्य मनः समामनन्तीत्यन्वयः तं देवानामन्नमिन्द्रादीन् ऋतइति शेषः । अथ यच्चतुर्थममृतं तन्मरुतः उपजीवन्ति सोमेन मुखेन इति । सोमं यस्य मनः समामनन्ति यो देवानां बलादिहेतुः यश्च नगानामीशो यश्च प्रजानां प्रजनः स हरिः प्रसीदताम् इति वा सोमेन देवादिबलप्रदत्वेन महाविभूतिः "सोमो दद्गन्धर्वाय सोमः प्रथमः" "ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्" अथवा देवादिबलप्रद- महाविभूतिः ॥ ३४ ॥

अग्निर्यस्य मुखं मुखाज्जातः सप्तसु प्रथमेति, पञ्चम्यर्थे प्रथमा मुखमाश्रित्य वर्तते च अग्रणीत्वादग्निरित्यग्निशब्दस्यान्यत्र प्रवृत्तिसम्भवात्कथं निर्णयः स्यादिति तत्राह—जातवेदा इति । "अग्नि-र्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मि" इति. जातं सर्वं वेत्तीति जातवेदश्शब्दस्यापि साधकाशत्वेन पूर्वोक्तसंशयानिस्तारः स्यादिति तत्राह—क्रियेति । क्रियाकाण्डमेव निमित्तं तत् तथा तेन जन्म यस्य स तथा "अग्निर्वै देवानां मुखं हृदयतमः" इति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतेः अग्निमुखेनेन्द्रादिदेवानां स्वहविर्भागप्राप्त्यर्थमग्निहोत्रादौ मथनादिना अग्नेः प्रसिद्धस्य जन्मोपपत्तेरिति तद्वदेव उपजीवन्ति अग्निनैव मुखेनेति च अग्नेः पाचकत्वशक्तिरपि श्रीहरिनियतेत्यभिप्रायेणाह, अन्तस्समुद्रे उदरान्तः स्थित्वा अन्नात् खादितानि चतुर्विधान्यन्नानि पचतः जरयतः " अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन इति पचात्यन्नं चतुर्विधम्" इति सर्वोपकारकाग्निजनकत्वलक्षणमहाविभूतिः तथा वाचापि हरेर्मुखं क्षेत्रमिति सूचयति "वाचो वह्नेर्मुखं क्षेत्रम्" इतिश्लोकेः ॥ ३५ ॥

तरणिः सूर्यः यस्य चक्षुषः आसीदित्यन्वयः " चक्षोः सूर्यो अजायत" तरन्त्यनेन संसारं पुरुषाः, इति तरणिरिति नामसूचितमर्थं स्पष्टमाह—देवेति । देवानां संसारं मुक्त्वा गतानां यानं मार्गउत्तरायणमार्गदेवतेत्यर्थः । अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायते अत्यामीयत इति त्रयीमयः वेदप्रतिपाद्येषु प्रधानं वा त्रयीमयाच त्रिगुणात्मधारिणो एव तरणिर्ब्रह्मणः परमात्मनो धिष्ण्यमभिव्यक्तिस्थानं " य आसावादित्ये " " ध्येयः सदा सवितृमण्डलमध्यवर्ती " मृत्योः संसारान्मुक्तेर्द्वारं द्वयोः मुक्त्योः कस्याः इति । तत्राह—अमृतस्येति. विदुषां विषयस्येत्यर्थः । स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषां इत्यमृतस्य मुक्तेर्मृत्योश्च प्राप्तिहेतुरिति वा एवं विधमाहात्म्योपेतसूर्यजनकमहाविभूतिः ॥ ३६ ॥

चराचराणां सहो बलोजो हेतुः स्वयं च तादृग्गुणः आधिभौतिकं वायुरध्यात्मं प्राणो यस्य हरेः प्राणात्सह आदिगुणवदात्मनोऽभूत् "आत्मन एष प्राणो जायते तान्वरिष्ठप्राण उवाच मामोहमापद्यथ अहमेवैतत्पञ्चधात्मानं विभज्यैतद् बाणमवष्टभ्य विधारयामि" इति ते प्रीताः प्राणं स्तुवन्त्येषोऽग्निस्तपत्येष सूर्यः प्राणैक ऋषिरत्र विश्वस्य सत्पतिः वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः वयं यं च संम्राजमन्वास्म वयं प्राणनामानं चक्रवर्तिनमनुवर्तिनमनुवर्तिमाहवस्य प्राणश्चतुर्मुखप्रेरकत्वादिदेवत्यमत्रावधारणार्थं यथा सम्राडेवाधिकृतान्वियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथगेव सन्निधत्ते । पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठत इति शेषः सम्राजं यं भगवन्तमन्वास्मेवेति वा सर्वोत्तमप्राणजनकमहाविभूतिः "प्राणस्य प्राणमुत चक्षुषश्चक्षुः" ॥ ३७ ॥

यस्य श्रोत्राद्दिशो यस्य हृदयाच्च खानीन्द्रियाणि यस्य पुरुषस्य नाभेश्च नभआकाश इत्येते प्रजज्ञिरे इत्यन्वयः अत्र " चन्द्रमा मनसो जातः " इत्यारभ्य "दिशः श्रोत्रात्" इत्यन्तं वाक्यं प्रमाणं दर्शयति. तैजसाऽहंकारगुणव्यञ्जकहृदयादीन्द्रियाणीत्यर्थः । तैजसानीन्द्रियाणीत्युक्तेः । सहस्र शीर्षापुरुषः " प्रसक्तो भवतीत्यन्वयः । "प्राणेन्द्रियाणि स्थाप्य तिष्ठतीति प्राणेन्द्रियात्मा ब्रह्मणो वा एतानि करणानि,"एत त्सर्वं परे आत्मनि संप्रतिष्ठते पृथिवी च इत्यारभ्य "प्राणश्च विधारयितव्य" इत्यन्तेन काठकोपनिषद्गतेन वाक्येन सविस्तर उच्यते स्वशरीरभूतायाः पृथिव्या बन्धुः " यस्य पृथिवी शरीरम्" इत्युक्तामदेवतादिसर्जनप्रतीतमहाविभूतिः ॥ ३८ ॥

गुणगुणिनोरभेदाभिप्रायेणाह—बलादिति । बलादिगुणेभ्य इन्द्रादीनामुद्भवः निर्दोषत्वेन मन्युरहितस्य न मन्युस्वभावस्तादृक्स्वभावरूपीतिसर्जनाभिप्रायाद्दर्शितं "कारणगुणाः कार्येषु समवैति" इति न्यायरक्षणार्थञ्च भरणा(१)स्वाधिष्ठानाद्रुद्रो भूमौ पृथिव्याद्यधिष्ठानाभावात् स्वमहिम्न एनत्यर्थः । किञ्चिदासीदधिष्ठानमारम्भणो स्वे महिम्नि धिषणादिति केचित्पठंति सप्तेन्द्रियैः सप्त छन्दांसि ऋषयः प्रजापतयः कस्तस्य मेढ्रादित्युक्तेः विरिञ्च्यादिदेवजनकमहाविभूतिः ॥ ३९—४०—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लोकास्य इति पाठः सर्वत्र लोका यत इति स्वामिसम्मतः शाखाकाबन्धश्च ॥ ३३—४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उदारवीर्यं महाशक्तिकं यतोऽम्भसः लोकाद्यः सिद्ध्यन्ति जायन्ते ॥ ३३ ॥

यः सोमो देवानामन्धः अन्नम् अत एव बलमायुश्च नराणां वृषाणां प्रकर्षेण जनयतीति प्रजनः शुक्रस्य सोमात्मकत्वात् ॥ ३४ ॥

जातं वेदो धनं यस्मात् सः अन्तस्समुद्रे उदरमध्ये अन्नादीन् पाकार्हानेवान्नादीन् पचन् प्रसिद्धसमुद्रेऽपि वाडवरूपेण जलानि ॥ ३५ ॥

तरणिः सूर्यः देवयानम् अर्चिरादिमार्गदेवता त्रयीमयः "सैषा त्रय्येव विद्या तपति" इति श्रुतेः । ब्रह्मणो धिष्ण्यमुपासनास्थानं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इति श्रुतेः मुक्तेर्द्वारं देवयानत्वात् अमृतञ्च पुण्यलोकत्वात् मृत्युश्च कालात्मकत्वात् ॥ ३६ ॥

यस्य प्राणाद्वायुरित्यन्वयः । यो वायुः चराचराणां सह आदिधर्मवान् प्राणः यं प्राणं वयं बुद्ध्याद्यधिष्ठातारो देवाः सम्राजं भृत्या इव अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥

दिशः यस्य हृदयाकाशात् खानि देहगतच्छिद्राणि नाभ्याः सकाशात् खं कीदृशं प्राणः पञ्चवृत्तिश्च इन्द्रियाणि च आत्मा मनश्च असवो नागकूर्मादयः शरीरञ्च तेषां केतनमाश्रयभूतम् ॥ ३८ ॥

धिषणायाः बुद्धेः सकाशात् केभ्यः देहच्छिद्रेभ्यः ॥ ३९ ॥
इतरोऽधर्मः ॥ ४० ॥

---

(१) भकारो वासुदेवस्यादित्युक्तेः ।

विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ।
ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥
लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यतोऽम्भसः लोकादयः सिद्धयन्ति जायन्ते वर्द्धमानाः भवन्ति जीवन्ति च तदम्भ उदारवीर्यं तीव्रशक्तिर्यस्य वीर्यं रेतः स नः प्रसीदताम् ॥ ३३ ॥

यो दिवौकसामन्धोऽन्नं तदादिः नगानां वृक्षाणामीशः प्रजानां प्रकर्षेण जनयतीति प्रजनस्तं सोमं यस्य मनः समामनन्ति स नः प्रसीदताम् ॥ ३४ ॥

जातं वेदो धनं यस्मात् क्रियाकाण्डनिमित्तं जन्म यस्य अन्तस्समुद्रे जठरमध्ये स्वधातून् अन्नादीन् अनुपचरन् अग्निः यस्य मुखं जातः स नः प्रसीदताम् ॥ ३५ ॥

देवयानमर्चिरादिमार्गदेवता त्रयीमयः "सैव त्रय्येव विद्या तपति" इति श्रुतेः ब्रह्मणो धिष्ण्यमुपासनास्थानम् "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति श्रुतेः मुक्तेर्द्वारं देवयानत्वात् ब्रह्मोपासनाधिष्ण्यत्वाच्च अमृतं मोक्षद्वारकत्वात् मृत्युरायुर्व्ययकरत्वात् एवंभूतस्तरणिर्यस्य "चक्षोस्सूर्यो अजायत" इति श्रुतेः स नः प्रसीदताम् ॥ ३६ ॥

यस्य भगवतः प्राणाद्वायुरभूत् स नः प्रसीदतामित्यन्वयः यो वायुः चराचराणां जङ्गमानां स्थावराणां च सह आदिः धर्मवान् प्राणः वयं बुद्ध्याद्यधिष्ठातारो देवाः सम्राजमनुगा इव अन्वास्म ॥ ३७ ॥

यस्य श्रोत्राद्दिशः हृदः हृदयाकाशात: खानि देहगतच्छिद्राणि च प्रजज्ञिरे प्राणः पञ्चवृत्तिवायुः इन्द्रियाणि च आत्मा मनश्च असवो नागकूर्मादयो वायवः शरीरं च तेषां केतमाश्रयभुतं खं च नाभ्याः प्रजज्ञे स नः प्रसीदताम् ॥ ३८ ॥

यस्य बलान्महेन्द्रो जज्ञे प्रसादात् प्रसन्नतायाः त्रिदशाः जज्ञिरे मन्योः क्रोधात् गिरीशः धिषणात् बुद्धेः खेभ्यः विराट् शरीरच्छिद्रेभ्यः छन्दांसि ऋषयश्च जज्ञिरे कः प्रजापतिः जज्ञे स नः प्रसीदताम् ॥ ३९ ॥

इतरो ऽधर्मः विहाराच्च क्रीडात् ॥ ४० ॥

---

भाषा टीका ।

जिस जल से समस्त लोक और लोकपाल उत्पन्न होते हैं जीवते हैं और वृद्धिको प्राप्त होते हैं वह उदार शक्ति वाला जल जिसका ( रेतस् ] वीर्य है वह निरातिशय वृहत् महाविभुति वाला श्रीहरि हमारे ऊपर प्रसन्न हों ॥ ३३ ॥

जिस चन्द्रमा को स्वर्गवासियों का अन्न बल, और वायु कहते हैं और औषधियों का ईश है तथा प्रजाओं की वृद्धि करने वाला है, वैसे चन्द्रको जिसका मन कहते हैं महा ऐश्वर्य वाला परमात्मा हम पर प्रसन्न हों ॥ ३४ ॥

जिसके वेद धन उत्पन्न हुआ, और वैदिक क्रिया काण्ड निमित्त जिसका जन्म, और जो समुद्र के भीतर वडवा अग्नि रूप से और उदर के भीतर जठराग्नि रूपसे अन्नों को तथा धातुओं को परि पक्व करता है, वह परम ऐश्वर्य विशिष्ट पुरुष हमारे ऊपर प्रसन्न हो ॥ ३५ ॥

जो सूर्य देवयान अर्थात् अर्चिरादि मार्ग के देवता, वेद त्रयी मय, और ब्रह्मका एक स्थान रूप हैं अर्थात् जिन के मंडल में चतुर्भुज मूर्ति नारायण का ध्यान होता है और जो मुक्ति का द्वार, अर्थात् जिनके मंडल को भेदन करके ही मुक्त लोग वैकुण्ठ को जाते हैं तथा अमृत रूप और कालात्मक होने से मृत्यु रूप, ऐसे सूर्य जिनके नेत्र हैं वह महा ऐश्वर्य वाले परमात्मा हमारे ऊपर प्रसन्न होवें ॥ ३६ ॥

जो चर अचर ( स्थावर जङ्गम ) का प्राण, और सह, बल ओज, रूपधर्म वाला, और बुद्धि आदि के अधिष्ठाता हम सब देवलोग, सम्राट् के पीछे जैसे नौकर इस प्रकार जिसका अनुसरण करते हैं ऐसा वायु जिन के प्राण से उत्पन्न हुआ वह महा ऐश्वर्य वाले परमेश्वर हम पर प्रसन्न हो ॥ ३७ ॥

जिन के श्रोत्र से दिशायें उत्पन्न हुई और हृदय से अनेक छिद्र, और प्राण, इन्द्रियें, मन, असु, ( नागकूर्म आदि ) शरीर, इन सबों का आश्रयभूत आकाश जिस पुरुष के नाभि से उत्पन्न हुआ वह महाविभूति परम पुरुष हमारे ऊपर प्रसन्न हो ॥ ३८ ॥

और जिनके बल से महेन्द्र उत्पन्न भया, प्रसन्नता से देव लोग, क्रोध से कैलासवासी श्रीरुद्र, धिषणा (बुद्धी) से ब्रह्मा छिद्रों से ऋषि लोग तथा छन्द और मेढ्र इन्द्रिय से प्रजापति हुए, वह अचिन्त्य ऐश्वर्य वाला पुरुष हमारे ऊपर प्रसन्न हो ॥ ३९ ॥

जिन के वक्षःस्थल से श्री ( सम्पत् ) छाया से पितर, स्तन से धर्म, पीठ से अधर्म, मस्तक से स्वर्ग, विहार से अप्सरायें हुई वह महाविभूति श्रीहरि हमपर प्रसन्न हों ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विड्वैश्यः ओजो नैपुण्यं तस्य वृत्तिः अङ्घ्रिः अङ्घ्रिजाविस्यर्थः अवेदशूद्रौ अवेदो वेदव्यतिरिक्ता शुश्रूषा तद्वृत्तिमान् शूद्रश्च पाठान्तरं सुगमम् ॥ ४१ ॥

द्रव्यं वयः कर्मगुणान्विशेषं यद्योगमायाविहितान्वदन्ति ।
यद्दुर्विभाव्यं[1] प्रबुधापिबाधं प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥
नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने ।
गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय[2] नभस्वदूतये ॥ ४४ ॥
स त्वं नो दर्शयात्मानमस्मत्करणगोचरम् ।
प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥
तैस्तैः स्वेच्छाधृतै रूपैः काले काले स्वयं विभो ! ।
कर्म दुर्विषहं यन्नो[3] भगवांस्तत्करोति हि ॥ ४६ ॥
क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा ।
देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥
नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ।
कल्पते पुरुषस्यैव सह्यात्मा दयितो हितः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपर्युत्तरोष्ठात् नस्तो नासिकातः द्युतिः कान्तिः पशव्यः पशूनां हितः कामः स्पर्शेनाभूत् ॥ ४२ ॥

द्रव्यं भूतानि वयः कालं विशेषं भौतिकप्रपञ्चं यस्माद्दुर्विभाव्यं कुतः प्रबुधापबाधं विद्वद्भिरपोह्यमानं पाठान्तरे प्रबुधानां मायेत्यवबोधो यस्मिन्नित्यर्थः ॥ ४३ ॥

तदेवं सप्रपञ्चमुपवर्ण्य निष्प्रपञ्चमनुवर्णयन्प्रणमति—नमोऽस्त्विति । वृत्तिभिर्दर्शनादिभिः नभस्वान्वायुस्तस्येव ऊतिर्लीला यस्य तस्मै ॥ ४४ ॥

सस्मितं मुखाम्बुजं दिदृक्षूणां नोऽस्मच्चक्षुरादिकरणगोचरं यथाभवत्येवमात्मानं दर्शय ॥ ४५ ॥

भक्तेच्छानुवर्तित्वं च तव बहुशो दृष्टमेवेत्याह—तैस्तैरिति । यन्नो दुर्विषहमशक्यं कर्म तद्भगवान्स्वयमेव करोति हि ॥ ४६ ॥

न च बहिर्मुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पूर्वपुण्यानि विपरीतफलानि भवितुमर्हन्तीत्याह, क्लेशो भूरिर्येषु अल्पं सारं फलं येषु यद्वा विफलान्येव सकामानां कर्माणि त्वय्यर्पितं तु नैव तथा ॥ ४७ ॥

तत्राविफलत्वमुपपादयति—अवमो ऽल्पोऽपि कर्मकल्पः कर्माभासोऽपीश्वरार्पितश्चेद्विफलायायासाय न कल्पते हि यस्मात्स एव ईश्वरः पुरुषस्याऽऽत्मा अत एव दयितो हितश्च न ह्यात्मनि दयिते चार्पितं निष्फलं स्यात् ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा यस्य मुखाद्विप्रःविप्रकुलं गुह्यमतीन्द्रियार्थावबोधि ब्रह्म वेदश्चासीत् "ऋचस्सामानि जज्ञिरे" "ब्राह्मणोऽस्य मुखमासीत्" इति श्रुतिः भुजयोर्बाहुभ्यां राजन्यो बलश्चासीत् "बाहू राजन्यः कृतः" इतिश्रुतेः ऊर्वोर्विट् वैश्यः ओजः नैपुण्यं तस्य वृत्तिश्च अंघ्रिः अंघ्रिजावित्यर्थः । अवेदशूद्रौ अवेदः वेदव्यतिरिक्ता शुश्रूषा वृत्तिः तद्वृत्तिमान् शूद्रश्च विड्भ्योरभवच्छूद्र इति पाठान्तरम् सुगमम् "ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इतिश्रुतेः ॥ ४१ ॥

अधरादधरोष्ठाल्लोभः उपर्युत्तरोष्ठात्प्रीतिरभूत् नस्तः नासिकातः द्युतिः कान्तिः पशव्यः पशूनां हितः कामः स्पर्शेनाभूत् भ्रुवोर्यमः कालः पक्ष्मभवः पक्ष्मणो जातः सः प्रसीदताम् ॥ ४२ ॥

किं बहुना द्रव्यं भूतपञ्चकं वयः कालं कर्म जीवादृष्टं गुणान् सत्त्वादीन् विशेषं ब्रह्मायत्तं तदुपलक्षितं कार्यवर्गञ्च यस्य योगमायया ईक्षणात्मकसङ्कल्पेन विहितान्वदन्ति द्रव्यादिकारणात्मकं विशेषं रूपं कार्यात्मकं च सर्वं वस्तु यत्सङ्कल्पविहितं वदन्तीत्यर्थः । अतएव यदात्मस्वरूपं दुर्विभाव्यं चेतनाचेतनसजातीयत्वेन चिन्तयितुमशक्यं प्रबुधावबाधं प्रकृष्टविद्वदवबोध्यं स महाविभूतिः प्रसीदताम् ॥ ४३ ॥

एवं कार्यावस्थप्रपञ्चशरीरकं वैराजपुरुषं प्रसाद्याय कारणावस्थं नमस्करोति—नम इति । उपशान्तशक्तये सर्गाद्यनभिमुखचिदचित्कालादिशक्तये स्वराट् स्वतन्त्रं स्वस्वरूपं तस्य भावो याथात्म्यं स्वाराज्यं तस्य लाभेन स्वानन्दानुभवेनेत्यर्थः । तेन

(१) वबोधम । (२) नमस्वभूतये । (३) भवान्वै इति च वीर० पाठाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतिपूरित आत्मा स्वरूपं यस्य तस्मै स्वतन्त्रानवधिकानन्दस्व-स्वरूपानुभवपूर्त्यावाप्तसमस्तकामायेत्यर्थः। मायया रचितेषु गुणेषु न सज्जमानाय लीलारसविमुखाय स्वभूतये स्वाभाविकैश्वर्याय तस्मै नमो नमः ॥ ४४ ॥

एवं प्रकृतिपुरुषविलक्षणं विभूतिद्वयाधिपं सर्वकारणं भगवन्तं प्रसाद्य नमस्कृत्य स्वाभिप्रेतं विज्ञापयितुं तावत्तद्दर्शनं प्रार्थयति—स त्वमिति । उक्तविधस्त्वमात्मानं दिव्यमङ्गलविग्रहं दिदृक्षूणां प्रपन्नानां नोऽस्माकमस्मच्चक्षुरादिकरणगोचरं यथा भवति तथा सस्मितं ते मुखाम्बुजं दर्शय ॥ ४५ ॥

ननु "न चक्षुषा पश्यति कश्च नैनम्"इति श्रुत्युक्तविधया चक्षुराद्यगोचरोऽहं कथं त्वच्चक्षुरादिकरणविषयः स्याम् ? इत्यत्राह, तैरिति । हे विभो ! कालेकाले "यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य" इत्युक्तकाले स्वेच्छाधृतैर्न तु पुण्यपापात्मककर्मधृतैरूपैरवतारैर्भवानोऽस्माकं दुर्विषहं दुरासदं दुष्करं कर्म करोति हि अघटितघटनात्मकक्रियाशक्तेस्तव स्वविग्रहदर्शयितृत्वं न दुर्घटमिति भावः ॥ ४६ ॥

स त्वमात्मानं सकृत्स्तुतिकर्मणा हेतुना कथं दर्शयेयम् ? इत्यत्राह—क्लेशेति । विषयार्तानामनुकूलविषयालाभदुःखपीडितानां देहिनां क्लेशो भूरिर्येष्वल्पः सारः सुखं येषु ततः कर्मारम्भः तानि कर्माणि यथा विफलानि भवन्ति तथा त्वदर्पितं कर्म न विफलं भवति हि ॥ ४७ ॥

कर्मकल्पोऽपि कर्माभासोऽप्यधमः लौकिकव्यापारोऽपीश्वरे त्वय्यर्पितश्चेद्विफलाय न कल्पते न विफलो भवति हि यस्मात्स एवेश्वरः पुरुषस्यात्मा अत एव दयितः प्रियः हितश्च तस्यात्मनि दयिते हिते चार्पिते कर्म निष्फलं स्यादित्यर्थः ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपर्युत्तरोष्ठात्प्रीतिः द्युतिः कान्तिश्च पशव्यं पशुजीवनं नस्तो नासिकायाः स्पर्शेन गुणेन जातः कामः स्त्रीविषयः कालो मृत्युः ॥ ४२ ॥

द्रव्यं भूतपञ्चकं वय आयुर्लक्षणं कर्म त्रिविधं गुणाः भक्त्यादयः शुक्लादयो वा शेषं स्वभावजीवकालादयः यस्य हरेर्योगमायया स्वरूपभूतेच्छया विहता उपेक्षिताः पतन्ति प्रच्युता भवन्तीत्यन्वयः "द्रव्यं कर्म च कालश्च" इति किञ्च यद्दुर्विभाव्यमेवंविधमिति भावयितुमशक्यं स वा एष आत्मानीत किञ्च प्रबुद्धज्ञानिनां अवबोधो ज्ञानं यस्मात्तथा अनेन स्वानुग्रहेण स्वविषयज्ञानं सुशकमित्युक्तं भवति "अज्ञानां ज्ञानदो विष्णुः" "यमेवैष वृणुते" इत्यादि द्रव्यादिसत्ताप्रदत्वेन ब्रह्मादिभिस्स्वमहिमत्वेन ज्ञानदातृत्वेन परिपूर्णैश्वर्यः प्रसीदतामित्यन्वयः नवत्वसङ्ख्याविशिष्टं द्रव्यं "द्रव्यगतौ" इति धातोः द्रवत्यवगच्छत्यनेन नीलोत्पलमित्यादिव्यवहारं पुरुष इति वयः समवायः

उत्क्षेपणादीनि पञ्चकर्माणि शब्दस्पर्शरूपरसगन्धादिचतुर्विंशतिगुणाः सामान्यविशेषौ शेषमित्यनेनोच्यते एते यद्योगमायया विहताः अहितीकृताः पतन्ति पातयन्त्यधः पुरुषमिति शेषः नरकहेतव इत्यर्थः। विषकण्ठकणभक्षशङ्करो त्रिदशाक्षपञ्चशिखादपादवादान्महदपि सुविचार्य लोकतन्त्रं भगवदुपास्ति मृतेन सिद्धिरस्तीति प्रमितेनायमुक्तार्थ इति सिद्धं कणादाक्षपादमतज्ञानात् सिद्धिर्माभूदद्वैतज्ञानेन मा स्यादिति तत्राह—परेति । अद्वैतमतोक्तविधया भावयितुमशक्यम् अनेनान्येऽपि दुर्वादिवादा अपि निरस्ताः इति ज्ञातव्यं कर्मणा पुरुषार्थसिद्धिः स्यात्तर्हीति नेत्याह, प्रबुधेति अनेन भाट्टादिमतमपि प्रत्युक्तम् ॥ ४३ ॥

उपात्तसर्वाधिकाद्विष्णोः शान्ताःआनन्दमूर्तयो यासां ताः तादृश्यः शक्तयो भार्या यस्य स तथा तस्मै "निवृत्तरूपदशक्तये"इति च स्वाराज्यलाभः स्वयंप्रकाशमानानन्दस्तेन परिपूरित आत्मा यस्य स तथा तस्मै नित्याविर्भूतानन्दस्वरूपायेत्यर्थः । मायया स्वाधीनप्रकृत्या रचितेषु निर्मितेषु गुणेषु विषयेषु वा प्रवर्तमानायापि तद्योग्याभिर्वृत्तिभिर्दुःखलक्षणाभिर्नसज्जमानाय निरवद्यत्वेन दुःखानुभूतिरहितायेत्यर्थः । स्वभूतये स्वयम्भुवे स्वरूपपूर्णैश्वर्यायेति वा ॥ ४४ ॥

अस्मत्करणगोचरोऽस्मदिन्द्रियविषयो भूत्वा ॥ ४५ ॥

भक्तानुकम्पामन्तरेण तवान्यत्कृत्यं न विद्यते इत्याशयेनाह—तैस्तैरिति । हे विभो ! यद्यदा नोऽस्माकं दुर्विषहं सोढुमशक्यं कर्म दुःखलक्षणमसुरादेः स्यादिति शेषः तदा भगवान् स्वयमसुरादेर्दुर्विषहं कर्म पराक्रमलक्षणं करोतीति वा इत्यन्वयः। कथं स्वेच्छाकृतैस्तैस्तैरूपैः "यदा यदा हि धर्मस्य" इतिस्मृतिर्हिशब्देन गृहीता ॥ ४६ ॥

ज्ञानमेव मुक्तिसाधनं न कर्म तन्मतदूषणादित्यभिप्रायो यदि तर्हि कर्मकरणं व्यर्थमित्याशङ्क्य सत्यं भगवदर्पणाख्यचिकित्साभावे सास्ति चेत्फलवदित्याशयेनाह—क्लेशेति । विषयार्तानां देहिनां कर्माणि विफलानि विरुद्धफलान्यनभीष्टफलानीत्यन्वयः कथं भूरिक्लेशानि अल्पसाराणि च ईश्वरार्पितं कर्म तथा ऽनर्पितवद्विफलं न स्यादित्यन्वयः ॥ ४७ ॥

सांगं कर्म ईश्वरार्पितं सफलमस्तु अनङ्गं कथमिति तत्राह—नेति । पुरुषस्य कर्मकल्पः कर्माभासः अङ्गसाकल्येन रहितः अतएवाधमोऽपि यदीश्वरार्पितः तर्हि विफलाय न कल्पते किन्तु फलवानेव स्यादित्यन्वयः तत्र किं कारणमत्राह—स इति । यत्प्रीत्यै कर्म करोति स आत्मा परमात्मा हितः प्रेक्ष्येष्टकारी दयितोऽनिमित्तबन्धुः हि युस्मात्तस्मादिति शेषः नाधर्म इति केचित्पठन्ति स्मृत्याविहितः "सर्वधर्मान्परित्यज्य"इत्युक्तः ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अधुना अर्वाक् समन्वन्तं . तत्र परिहरन्नैश्वर्यलीलयास्मोहिमानमाह—नमोस्त्विति । उपशान्ता निरुपद्रवा शक्तिर्यस्य स्वाराज्यस्य त्रिपाद्विभूतेः स्वधाम्नो लाभेन प्रतिपूरित

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्तदंशेन सम्भाविता आत्मानः स्वांशा येन तमस्मानिव विचित्रगतिर्लीला यस्य तस्मै ॥ ४४ ॥

अभीष्टमाह—स त्वमिति । अस्माकं करणान्यपि गोचराः प्रकाशानि यस्य तादृशमप्यात्मानं दर्शयन् स्वयं प्रकाशय ॥ ४५ ॥

स्वेषां भक्तानामिच्छया भूतैः पुष्टैराविर्भावितप्रकाशैरित्यर्थः ॥ ४६—५० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मुखं विप्रः गुह्यं ब्रह्म वेदश्च विट् वैश्यः ओजः नैपुण्यं तस्य वृत्तिश्च अङ्घ्रिः अङ्घ्रेः सकाशादवेदः वेदव्यतिरिक्ता शुश्रूषा वृत्तिः तद्वृत्तिमान् शूद्रश्च विशोऽङ्घ्रेरभवन् शूद्र इति च पाठः ॥ ४१ ॥

उपरि उत्तरोष्ठात् नस्तो नासिकातो द्युतिः कान्तिः पशव्यः पशूनां हितः कामः स्पर्शनाभूत् ॥ ४२ ॥

द्रव्यं पृथिव्यादिभ्यो विंशतितत्त्वं वयः कालः कर्म च तद्धेतुभूतान् गुणान् सत्त्वादीन् यस्य योगमाययैव विहितान् सृष्टान् वदन्ति यदेभ्यः पृथिव्यादिभ्यो दुर्विभाव्यं विश्वं प्रपञ्चं च वदन्ति कीदृशं प्रकृत्यवबुधानाम् अपवादः निषेधः प्राकृतत्वेनाग्रहणं यस्य तं प्रबुधावबोधामिति पाठे दुर्विभाव्यमपि प्रकृष्टैर्बुधैरेवावबोध्यमित्यर्थः । तेन यस्य स्वरूपशक्तिर्वृत्तेर्योगमायया विभूतिः सत्त्वादिगुणमयी माया तस्या विभूतयः कालकर्ममहदादिपृथिव्यन्तानि तत्त्वानि तेषां विभूतिरिदं मायिकं विश्वमेवास्माभिरवगम्यते इति व्यञ्जितम् ॥ ४३ ॥

मायातीतं स्वरूपं तु दुरवगमं केवलमस्माभिर्नमनीयमेवेत्याह—नम इति । उपशान्ताः संविदाद्याः अन्तरङ्गाः शक्तयो यस्य तस्मै तेन स्वरूपशक्त्यैव राजत इति स्वराट् तस्य भावः स्वाराज्यं तेनैव लाभेन प्रतिपूरित आत्मा मनो यस्य तस्मै ननु तर्हि कथं सृष्ट्याद्या शक्तिस्तत्राह—गुणेष्विति । वृत्तिभिर्दर्शनादिभिर्नभस्वतो वायोरिव ऊतिः सृष्ट्यादिलीला यस्य तस्मै ॥ ४४ ॥

ननु. अस्मदभीप्सितं वरं गृहाणेत्यतआह—स त्वमिति । नोऽस्माकं प्रपन्नानाम् अस्मान् प्रपन्नान् आत्मानं स्वस्वरूपं दर्शय किं निर्विशेषं स्वरूपं सविशेषं वा ? तत्राह—अस्मत्करणगोचरं सविशेषमित्यर्थः तत्रापि सस्मितं मुखाम्बुजम् ॥ ४५ ॥

भक्तवात्सल्यं बहुशः स्मरन्नाह—स्वेच्छाभूतैः स्वभक्तेच्छापुष्टैः रूपैर्नृसिंहादिभिः यद्यो दुर्विषहं कर्म तत् स्वयमेव करोति ॥ ४६ ॥

नच बहिर्मुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पुण्यपुण्यानि विपरीतफलानि भवितुमर्हन्तीत्याह । क्लेशो भूरि येषु अल्पं सारं फलं येषु तानि तान्यपि यथा त्वद्विमुखानां कर्माणि वा यथार्थं विफलान्येव तथा त्वय्यर्पितं भक्तानां कर्म न ॥ ४७ ॥

त्वय्यर्पितमल्पमपि कर्म महद्भवति । अनर्पितं महदपि व्यर्थमेव भवतीत्याह—नेति । अधमः अल्पोऽपि कर्म कल्पः कर्माभासोऽपि न विफलाय । हि यस्मात् स ईश्वरः पुरुषस्यात्मा दयितो हितश्चेत्यतस्तदादरानादरावेव कर्म साफल्यवैफल्यहेतुरिति भावः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विप्रः गुह्यं गूढाभिप्रायश्च ब्रह्म वेदश्च यस्य मुखं ब्राह्मणो गूढाभिप्रायवान् वेदश्च मुखज इत्यर्थः । विट् वैश्यः ओजो नैपुण्यं वैश्यवृत्तिरित्यर्थः । अवेदो वेदव्यतिरिक्ता शुश्रूषा शूद्रश्चेत्यवेदशूद्रौ अङ्घ्रिः अङ्घ्रिजौ ॥ ४१ ॥

यस्य अधरात् लोभः उपरि उत्तरोष्ठात् प्रीतिश्च अभूत् नस्तो नासातः द्युतिः छविः पशव्यः पशूनां हितः कामः स्पर्शेन अभूत् ॥ ४२ ॥

यस्य योगमायया युज्यते इति योगः सङ्कल्पस्तद्रूपया मायया वयुनेन विहितान् द्रव्यादीन् वदन्ति स नः प्रसीदतामित्यन्वयः तत्र द्रव्यं प्राकृततत्त्वजातं वयः कालः गुणाः सत्त्वादयः तान् यत् प्रबुधापबाधं प्रबुधानामपबाधो सर्वेश्वरत्वाभिमानबाधो यस्मिन् तद्विविधविचित्रप्रदेशत्वात् प्रबुधावबोधमिति पाठान्तरं तत्र प्रकृष्टबुधानामवबोधो यस्मिन् दुर्विभाव्यं विशेषं ब्रह्माण्डं च विहितं वदन्ति ॥ ४३ ॥

विराडाख्यप्राकृतशरीरिणमुपवर्ण्याथाप्राकृतं श्रीमद्विग्रहदर्शनकामस्तद्विग्रहयुक्तं प्रणमति—नम इति । उपशान्ताः शक्तयो यस्य अत एव स्वतः राजते इति स्वराट् तस्य भावः स्वाराज्यं तस्य लाभेन प्रतिपूरित आत्मा देहो यस्य मायारचितेषु दम्भादिना निवेदितेषु गुणेषु गुणवत्स्वपि पदार्थेषु न सज्जमानाय नभस्वत इव ऊतिः सर्वाधारकत्वासङ्गत्वादिगुणद्योतका लीला यस्य तस्मै नमोऽस्तु ॥ ४४ ॥

स त्वं नोऽस्माकं ते मुखाम्बुजं दिदृक्षूणाम् आत्मानं स्वाराज्यलाभपरिपूरितं देहं दर्शयेति प्रार्थना ॥ ४५ ॥

बहुशो भवान् स्वभक्तानां कार्यं कर्तुं रूपाण्याविष्करोतीत्याह—तैरिति । स्वीयानां भक्तानामस्माकामिच्छाभूतैः रूपैः मत्स्यादिमूर्तिभिः यद्यो दुर्विषहमशक्यं कर्म वेदरक्षणादिकं तद्भवान् स्वयमेव करोति ॥ ४६ ॥

विषयार्त्तानां विषयभोगार्थं कर्मनिष्ठानां क्लेशो भूरिर्येषु अल्पं साङ्गं फलं येषु तानि वस्तुतस्तु मुक्त्यनुपयोगित्वाद्विफलान्येव त्वयि अर्पितं कर्म तु तथा न किन्तु स्वल्पश्रमसाध्यमपि भूरिफलदं मुक्तिदं चेत्यर्थः ॥ ४७ ॥

कर्मकल्पः कर्माभासोऽपि तत्रापदवमः ईश्वरे त्वयि अर्पितश्चेद्विफलाय विरुद्धफलाय संसाराय फलाभावाय वा न कल्पते हि यतः स एष ईश्वरः पुरुषस्य आत्मा आश्रय अत एव दयितः प्रियतमः ॥ ४८ ॥

---

यथाहि स्कन्धशाखानां तरोर्मूलाऽवसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥
नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ।
निर्गुणाय गुणेशाय सत्त्वस्थाय च साम्प्रतम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे अमृतमथने
पञ्चमोऽध्यायः ॥ ५ ॥

भाषाटीका ।

जिनके मुख से ब्राह्मण और ब्राह्मण की वृत्ति वेद ये दोनों हुए, और भुजाओं से क्षत्रिय और उसकी वृत्ति बल ऊरु से वैश्य और उसकी वृत्ति निपुणता, चरण से शूद्र और उसकी वृत्ति वैदिक कर्म व्यतिरिक्त शुश्रूषा, इस प्रकार जिनके मुखादिक वृत्तियों सहित चारों वर्ण उत्पन्न हुये, वह महा ऐश्वर्य वाले परमात्मा हम पर प्रसन्न होवैं ॥ ४१ ॥

जिनके नीचे के ओष्ठ से लोभ उत्पन्न भया, ऊपर के ओष्ठ से प्रीति हुई, नासिका से कान्ति, स्पर्श से पशुओं का हितकारी काम, और दोनों भ्रकुटियों [ भौंहों ] से यम, और जिनके निमेष [ पलकों ] से काल उत्पन्न हुआ वह महाविभूति शाली श्री गोविन्द हमारे ऊपर प्रसन्न हों ॥ ४२ ॥

पंचभूत, काल, कर्म, गुण, और लौकिक प्रपञ्च जिसकी योगमाया से रचित कहते हैं, और जो दुर्विभाव्य तथा प्रबुध लोगों को अवबोध जिससे होता है, वह महाविभूति शाली परमेश्वर हम पर प्रसन्न होवैं ॥ ४३ ॥

उपशांत शक्ति वाले और स्वाराज्य लाभ से परिपूरित स्वरूपवाला और माया से रचित गुणों में जो वृत्ति से सक्त न होवै, और वायु सदृश लीला धारी, ऐसे श्रीहरि को वारंवार नमस्कार हो ॥ ४४ ॥

हे भगवन् ! वही आप अपने दिव्य मंगल विग्रह को [ शरीर को ] और सुन्दर स्मित युक्त मुखारविन्द को, दर्शन करने का इच्छा वाले, हम शरणागत लोगों के नेत्रों के गोचर करो अर्थात् कृपा कर दर्शन देओ ॥ ४५ ॥

हे विभो ! समय २ पर स्वयं आप अपनी इच्छा से नाना प्रकार के रूप धारण करके हमारे लोगों से अशक्य जो कर्म उनको करते हो ॥ ४६ ॥

जैसे आप से बहिर्मुख विषयासे लोगों के कर्म बहुत क्लेश वाले और थोड़े सारवाले—और निष्फल होते हैं, ऐसे आपके विषै कर्म समर्पण करने वालों के नहीं होते हैं ॥ ४७ ॥

अल्प कर्म वा कर्माभास ही क्यों न हो पर जो परमेश्वर को समर्पण करदे तो कभी निष्फल नहीं होता है, क्योंकि परमेश्वर तो जीव का भी आत्मा है परमप्रिय है और हितकारी भी है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनन्तफलत्वमाह—यथाहि मूलावसेचनं स्कन्धानां शाखाभां च भवति॥ ४९ ॥

एवं सत्यपि त्वदर्पितकर्मणां त्वद्भक्तानामस्माकं किं निमित्तमिदं दुःखमिति त्वमेव वेत्सीत्याशयेनाऽऽह—नम इति। दुर्वितर्क्याण्यात्मकर्माणि स्वभावचेष्टितानि यस्य तस्मै ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ईश्वरार्पितस्य स्वल्पस्यापि कर्मणोऽनल्पफलत्वमाह—यथेति। यथाहि तरोः मूलावसेचनं मूले जलावसेचनं स्कन्धानां शाखानां च भवति एवम् आत्मनः परमात्मनः विष्णोराराधनं सर्वेषां हि सर्वपुरुषार्थानां साधनं भवतीत्यर्थः ॥ ४९ ॥

स्तुतिनमस्कारादिकर्मणा विना नान्यस्त्वत्तोषहेतुरस्तीत्यभिप्रायेणाह–नमइति। दुर्वितर्क्याणीतरसजातीयत्वेन विभावितुमशक्यान्यात्मकर्माणि स्वचेष्टितानि यस्य तस्मै अनन्ताय त्रिविधपरिच्छेदरहिताय निर्गुणाय हेयगुणरहिताय सत्त्वादिगुणानां नियन्त्रे सत्त्वस्थाय सत्त्वगुणोन्मेषनिमित्तकर्मानुगुणमधुना प्रवर्तमानाय तुभ्यं नमः सांप्रतं नमस्कार एव युज्यते ईदृशं त्वां प्रसादयितुं नम एव युज्यते नान्य एवोपाय इत्यर्थः यद्वा गुणत्रयोन्मेषनिमित्तकर्मानुगुणं प्रवर्तमानायापि सांप्रतमधुना सत्त्वस्थायेति वान्वयः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ननु, यज्ञतप्त्यादिविहितकर्म परित्यज्य भगवदेकाराधनाया-मितरदेवतातृप्त्यभावेनापुरुषार्थः स्यादिति तत्राह—यथेति। स्कन्धानां शाखानां तृप्तिं जनयतीति शेषः तेनाङ्कुरफलपुष्प-समृद्धिलक्षणपुरुषार्थो यथा भवति तथा सर्वेषामिन्द्रादीना-मात्मनः स्वस्यापि तृप्त्यानन्दानुभवलक्षणपुरुषार्थः स्यादिति भावः "मुखादिन्द्रश्चाग्निश्च" इत्यादि वाक्यं हिशब्देन दर्शयति तेन-न्द्रादीनां श्रीनारायणशाखिशाखात्वं दर्शितं भवति तथाहीति वत् यथाहीत्येकं वाक्यम् ॥ ४९ ॥

अनन्तायेत्यनेन मुखाम्बुजमिति परिच्छिन्नत्वशङ्कां निवारयति-दुर्वितर्क्येत्यादिना। न स्वरूपस्यानन्त्यमपितु तत्कर्मणामप्युच्यते निर्गुणायेत्यनेन शबलत्वं निवारयति गुणेशायेत्यनेन गुणैः प्रवर्त-मानस्यापि गुणसम्पर्कप्राप्तं दोषं निरुणद्धि सत्त्वस्थायेत्यनेन गुणैर्योगपद्यप्रतीतं निवारयति साम्प्रतमित्यनेन सत्त्वगुणयुक्तत्वं स्थितिकालं च दर्शयति यतस्त्वं सत्त्वगुणप्रवर्तकोऽधुना तस्मा-दस्मानापदः पालयेति भावः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्च कर्माकरणेऽपि विष्णोराराधने सति सर्वाणि कर्मफलानि भवन्ति तदाराधनाभावे कृतान्यपि कर्माणि विफलान्येव भवन्ती-त्यत्र सदृष्टान्तमाह—यथाहीति ॥ ४९ ॥

अस्मदभीप्सितं पूरयिष्यसि त्वत्स्वरूपं न प्राप्नुम इत्याह—अन-न्ताय सर्वज्ञानामप्यस्माकं त्वयि सर्वज्ञं नास्त्येव सम्प्रतिस्वत्करि-ष्यमाणं कर्म अनुमानेनापि न विद्म इत्याह—दुर्वितर्क्येति। ननु,मत्कृ-पामेव हेतुकृत्य भक्तानामिन्द्रादीनामभीष्टसिद्धिरनुमीयताम् तत्र नेत्याह, निर्गुणाय कृपयैव गुणाजन्यां सम्पत्तिमनर्थहेतुं न ददासि गुणेशायेति कृपयैव गुणाजन्यां सम्पत्तिं ददास्यपीति तयैव तद्दय-यानुमानसम्भवात् तर्हि संशये कथं स्तौषि, तत्राह सत्त्वस्थाय सत्त्वगुणस्य सम्प्रतिवृद्धिकाल इति सात्त्विकान् देवान् वर्द्धे-यितुमर्हसीति पयाश्च गुरुभक्तयभावात् विषयभोगविच्छेदङ्कर्तुञ्च नार्हसीति निश्चयोऽपि वर्त्तत इति भावः ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
अष्टमे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदाराधनेन सर्वेषां ब्रह्मादीनां स्वस्याराधनकर्तुश्च प्रसन्नता स्यादित्याह—यथाहीति ॥ ४९ ॥

अनन्ताय त्रिविधपरिच्छेदशून्याय अत एव दुर्वितर्क्याणि आत्मा कर्माणि स्वभावचेष्टितानि यस्य तस्मै निर्गुणाय हेय-गुणरहिताय गुणेशाय कल्याणगुणनिधये सत्त्वस्थाय सत्त्व-प्रधानमनोनिलयाय तुभ्यं नमः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चमाऽध्यायार्थप्रकाशः ॥ ५ ॥

---

भाषा टीका।

जैसे तरुके मूलके सींचने से उसके मोटे गुद्दे और छोटी डारे और पत्र पुष्पपर्यन्त सबही तृप्त होजाते है इसी प्रकार विष्णु का आराधन है ॥ ४९ ॥

अनन्त [ देश के ओर छोर रहित ] और जिन कर्मो की कोई तर्क न करसके ऐसे आश्चर्य कर्म वाले, और प्राकृत गुणों से रहित, तथा गुण त्रय के ईश और इस समय सत्व में, स्थित होने वाले ऐसे आपको नमस्कार हो ॥ ५० ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, पंचम अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टाकी समाप्त ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

———:*:———

## ॥ षष्ठोऽध्यायः ॥

श्रीशुक उवाच ।

एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः ।
तेषामाविरभूद्राजन् ! सहस्रार्कोदयद्युतिः ॥ १ ॥
तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ।
नापश्यन्खं दिशः क्षोणीमात्मानं च कुतो विभुम् ॥ २ ॥
विरिञ्चो भगवान्दृष्ट्वा सह शर्वेण तां तनुम् ।
स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम् ॥ ३ ॥
तप्तहेमावदातेन लसत्कौशेयवाससा ।
प्रसन्नचारुसर्वाङ्गीं सुमुखीं सुन्दरभ्रुवम् ॥ ४ ॥
महामणिकिरीटेन केयूराभ्यां च भूषिताम् ।
कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम् ॥ ५ ॥
काञ्चीकलापवलयहारनूपुरशोभिताम् ।
कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ॥ ६ ॥
सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ।
तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ।
सर्वामरगणैः साकं सर्वाङ्गैरवनिङ्गतैः ॥ ७ ॥

ब्रह्मोवाच ।

अजातजन्मस्थितिसंयमायागुणाय निर्वाणसुखार्णवाय ।
अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे पुनः स्तुतिर्विष्णावाविर्भूते सुरैः कृता ।
तन्मन्त्रेणासुरैः साकममृतार्थं महोद्यमः ॥ ० ॥
सहस्राणामर्काणामुदये द्युतिरिव द्युतिर्यस्य ॥ १ ॥
महसा तेजसा प्रतिहतानीक्षणानि चक्षूंषि येषाम् ॥ २ ॥
तामाविर्भूतां तनुं विरिञ्चो दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः
कञ्जगर्भवदरुणे ईक्षणे यस्याः ॥ ३ ॥

तप्तहेमवदवदातेन पीतेन लसता कौशेयवाससा युक्ताम्
प्रसन्नानि चारूणि सर्वाण्यङ्गानि यस्याः शोभनं मुखं यस्याः
सुन्दरे भ्रुवौ यस्याः ॥ ४ ॥

महान्तो मणयो यस्मिंस्तेन किरीटेन कर्णाभरणे कुण्डले
ताभ्यां निर्भातौ यौ कपोलौ ताभ्यां श्रीमुखाम्बुजे यस्याः ॥ ५ ॥

कौस्तुभ आभरणं कण्ठे यस्या लक्ष्मीं वक्षसि बिभ्रतीम् ॥ ६ ॥

श्रीमच्छ्रीधरस्वामिकृतभावार्थदीपिका ।

देवप्रवरो ब्रह्मा सर्वाङ्गैरवनिस्पृशैः साष्टाङ्गं प्रणतैः ॥ ७ ॥

अनादित्वाविरासेऽयं नाभूतोऽभूदिति ब्रुवन् ।
ब्रह्माऽभिप्रैति नित्यत्वविभुत्वे भगवत्तनोः ॥ ० ॥

श्रीमूर्तेरयमाविर्भाव एव नत्वस्मदादिवज्जन्मादि तवास्तीत्याह—न जाता जन्मादयो यस्य कुतः अगुणाय अतो निर्वाणसुखरूपार्णवाय अपारमोक्षसुखरूपायेत्यर्थः । तथाप्यणोरप्यणिम्नेऽतिसूक्ष्माय दुर्ज्ञेयत्वात् वस्तुतस्त्वपरिगण्यमपिगणनातीतं धाम मूर्तिर्यस्य तस्मै नचैतदसम्भावितं यतो महानचिन्त्योऽनुभावो यस्य तस्मै ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं संस्तुतो भगवानाविर्बभूवेत्याह मुनिः—एवमिति । हे राजन् इत्थं संस्तुतः सम्यक् स्तुतः हरिरीश्वरो भगवान् सहस्राणामर्काणां सूर्याणामुदये द्युतिर्यस्य सः अभूतोपमेयं तेषां ब्रह्मादीनां पुर इति शेषः आविर्बभूव प्रकटोऽभूत् ॥ १ ॥

तेन महसा तेजसा प्रतिहतानीक्षणानि येषां ते सर्वे देवाः स्वादीनेव नापश्यन् कुतोऽपि विभुमाविर्भूतं पश्येयुरित्यर्थः ॥२॥

भगवान्विरिञ्चो ब्रह्मा शर्वेण रुद्रेण सह तां भगवतस्तनुं दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः तनुं विशिनष्टि, निर्मलामिन्द्रनीलवत्श्यामां कञ्जगर्भवदरुणे ईक्षणे यस्यास्ताम् ॥ ३ ॥

तप्तहेमवदवदातेन विशुद्धेन पिशङ्गेन लसता कौशेयवाससा युक्तामिति शेषः । प्रसन्नानि चारूणि सुन्दराणि च सर्वाणि अङ्गानि यस्याः सुन्दरं मुखं यस्याः सुन्दरे भ्रुवौ यस्याम् ॥ ४ ॥

महान्तो मणयो यस्मिंस्तेन किरीटेन केयूराभ्यां च अलङ्कृतां कर्णाभरणे कुण्डले ताभ्यां नितरां भातौ कपोलौ ताभ्यां श्रीः शोभा मुखाम्बुजे यस्यास्ताम् ॥ ५ ॥

काञ्चीकलापादिभिः शोभितां कौस्तुभं आभरणं कण्ठे यस्यास्तां लक्ष्मीं वक्षसि बिभ्रतीं वनमाला अस्यामस्तीति तथा ताम् ॥ ६ ॥

मूर्तिमद्भिः पुरुषाकृतिभिः स्वकीयैः सर्वैः सुदर्शनादिभिरस्त्रैरुपासितां सेव्यमानां सशर्वः रुद्रेण सहितः देवप्रवरो ब्रह्मा सर्वाङ्गैरवनीं भूमिं स्पृशैः प्राप्तैर्युक्तैर्देवैः साष्टाङ्गप्रणतैर्देवैस्सह परं पुरुषं तुष्टाव ॥ ७ ॥

तावत्स्तोतुं प्रवृत्तः कर्माधीनजन्मादिविरहितं निरस्तनिखिलदोषं ज्ञानानन्दादिकल्याणगुणावधिं सर्वान्तरात्मानमपरिच्छिन्नस्वरूपं महाप्रभावं नमस्करोति—अजातेति । न जाता जन्मादयः कर्मायत्ता यस्य तत्र हेतुरगुणाय सत्त्वादिप्राकृतगुणावश्यत्वप्रतिभटाय निर्वाणसुखार्णवाय निर्दुःखानन्दमहोदधये अणोरणीयोऽप्यणिम्ने अन्तरात्मतया तदन्तःप्रवेशयोग्याय अपरिच्छेद्यस्वरूपाय महाप्रभावाय तुभ्यं नमोनमः ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानवत् ज्ञानपूर्वकं यथा तत्त्वस्तुतिरपि हरेः प्रीतिजननीत्येतमर्थं प्रपञ्चयत्यस्मिन्नध्याये, तत्रादौ हरेराविर्भावप्रकारं वक्तुमेवमित्यादिना । ब्रह्मणा पुरस्कृत्येति शेषः ॥ १ ॥

आत्मानं स्वान् जातावेकवचनं अग्रतः स्थितम् ॥ २—३ ॥

अवदातेन पीतेन "अवदातोऽरुणे पीते श्वेते श्यामे च कथ्यते" इति वाससोपलक्षितम् ॥ ४ ॥

कपोलश्रिया युक्तमुखाम्बुजम् ॥ ५ ॥

कलापो भूषणं लक्ष्म लाञ्छनं श्रीवत्सनाम ॥ ६ ॥

देवप्रवरः ब्रह्मा ॥ ७ ॥

अजाय विष्णवे "अजाविष्णुहरच्छागाः"——————इत्यतोऽजशब्दस्योभयत्र वृत्तावप्यत्र विष्णुरेवोच्यते सर्वेति सर्वकारणत्वेन निर्देशात्ततो परत्वप्रतीतेः जन्म स्थितिसंयमाय जन्मादीनां तदेकाधीनत्वात्तथोक्तिर्गुणाय "विज्ञानमानन्दं ब्रह्म" इति श्रुतेरभिप्रायानुसारेणोक्तिः निर्वाणसुखार्णवाय शरीराभिमानानुत्थसुखसमुद्राय अपरिगण्यमहिम्ने ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥ २ ॥

विरिञ्च इति पञ्चकम् ॥ ३—७ ॥

अजातेति स्थितिरत्र जन्मानन्तराविस्थत्वलक्षणैव न नित्यतस्याविकारित्वाभावात् निर्वाणन्तु यस्य ब्रह्मानन्दस्यार्णवायेति भगवत्त्वेनाविर्भावस्य परमवैशिष्ट्यं दर्शितम् ॥ ८—६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आविर्भूते हरौ षष्ठे ब्रह्मा तुष्टाव तं पुनः ।
तन्मन्त्रणेनामृतार्थं बलिं देवाः प्रपेदिरे ॥

॥ १—२ ॥

विरिञ्चः तुष्टावेति पञ्चमेनान्वयः ॥ ३ ॥

तप्तहेमवदवदातेन पीतेन ॥ ४ ॥

कर्णाभरणेन निर्भातौ कपोलौ यत्र तादृशं श्रीमुखमेवाम्बुजं यत्र ताम् ॥ ५—७ ॥

न जातो जन्मस्थित्योः संयमः उपरमो यस्येति कृष्णरामाद्यवतारणां जन्मस्थित्योर्नित्यत्वं स्थितिरकर्मका जातस्य चेतनस्य न सम्भवतीति कर्मणोऽपि नित्यत्वम् अगुणाय प्राकृतगुणरहिताय हेयैर्गुणादिभिरिति समस्तकल्याणगुणात्मने हीति वैष्णवोक्तेरप्राकृतषाड्गुण्यवत्त्वेन भगवत्त्वमुक्तं निर्वाणसुखार्णवायेति ब्रह्मत्वम् अणोरप्यणिम्ने अतिसूक्ष्मायेति परमात्मत्वम्

रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोऽर्थिभिर्वैदिकतान्त्रिकेण ।
योगेन धातः सह नस्त्रिलोकान्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥ ९ ॥
त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे ।
त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥
त्वं माययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः ।
पश्यन्ति युक्ता मनसा मनीषिणो गुण(१)व्यवाये ऽप्यगुणं विपश्चितः ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपरिगणयमियतातीतं धाम मूर्तिर्यस्य तस्मै इति तन्मूर्तेः परिच्छिन्नत्वेऽप्यचिन्त्यशक्त्याविभुत्वं लोकम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आविर्भूतेन पुनः संस्तुतेन भगवता समुद्रमथने देवाः अमृतलाभाय प्रवर्तिता इति वर्णयति-एवं स्तुत इति षष्ठेन । सहस्रार्काणामुदये द्युतिरिव द्युतिस्तेजो यस्य स तथा ॥ १ ॥

तेनैव तेजसा महसाऽतिनिबिडेन ॥ २ ॥

शर्वेण शिवेन सह विरिञ्चस्तां तनुं दृष्ट्वा तुष्टावेति पञ्चभिरनाऽन्वयः । कञ्जगर्भवदरुणे ईक्षणे यस्यास्ताम् ॥ ३ ॥

तप्तहेमवदवदातेन पीतेन श्लक्ष्णता कौशेयवाससा भूषितां शोभनं मुखं यस्यास्तां सुन्दरं भ्रुवौ यस्यास्ताम् ॥ ४ ॥

महान्तो मणयो यत्र तेन किरीटेन केयूराभ्यां च भूषितां कर्णाभरणाभ्यां कुण्डलाभ्यां निर्भातौ कपोलौ यस्मिन् तथाभूतं श्रीमुखमेवाम्बुजं यस्यास्ताम् ॥ ५ ॥

काञ्चीकलापादिभिः शोभिताम् कौस्तुभ आभरणं कण्ठे यस्यास्ताम् लक्ष्मीं वक्षसि बिभ्रतीम् वनमाला अस्या अस्तीति तथा ताम् ॥ ६ ॥ ७ ॥

न जाता जन्मादयो यस्य तस्मै स्वेच्छया नित्यविग्रहेणाविर्भूतत्वात् अगुणाय हेयगुणवर्जिताय निर्वाणसुखार्णवाय नित्यानन्दमहोदधये "अणुर्ह्येष आत्मा" इति श्रुतिप्रतिपादिताऽणीयसेऽण्वात्मने तदन्तःप्रविष्टात् "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेः । अपरिगणयधाम्ने इयत्ताशून्यस्वरूपाय महाभिरतिशयः अनुभावो यस्य तस्मै नमो नमः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीशो जयति ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हेराजन् ! सुरगणों ने जब इस प्रकार स्तुतिकरी, तब भगवान् श्रीहरि उन लोगों को हजारों सूर्योदय की कान्ति को धारण कर प्रकट हुए ॥ १ ॥

उस समय उसी तेज के मारे ताडित हुए नेत्र जिनके ऐसे संपूर्ण देव लोग, आकाश, दिशायें, पृथिवी, और अपने आपको भी नहीं देख सके फिर गोविन्द को कहां से देखें ॥ २ ॥

श्रीमहादेवजी सहित भगवान् ब्रह्माजी ने स्वच्छ मरकत मणि के सदृश श्याम और कमल के गर्भ के सदृश लाल नेत्र जिसमें ऐसे आपकी तनु [ मूर्त्ति ] को देखी ॥ ३ ॥

फिर वह मूर्त्ति कैसी है कि—तप्त सुवर्ण के नांई चटकील पीतांवर को पहने हुये, और प्रसन्न भृकुटिवाली ॥ ४ ॥

और बडे २ मणियों से जटित किरीट और बाजूबन्दों से विभूषित, और गोल कपोलों पर जो मकराकृत कुण्डल झोका खारहे हैं तिन से है मुखकी शोभा जिसमें ॥ ५ ॥

और कमर में कोंधनी हाथों में कंकण गले में हार चरणों में नूपुर तिन से शोभित होरही है, और वक्षस्थल में कौस्तुभमणि तथा लक्ष्मी को धारण किये, और वनमाला को भी धारण किये हुए ॥ ६ ॥

और अपने असाधारण मूर्तिमान् सुदर्शनादिशस्त्रों से उपासित ऐसी आप की श्रीमूर्त्ति को देखकर, सब देवताओं ने पृथिवी पर पडकर सर्वांगों से साष्टाङ्गकर महादेवजी सहित देव प्रवर श्रीब्रह्माजी परमपुरुष श्रीनारायण की स्तुति करने लगे ॥ ७ ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि—जिनका जन्म स्थिति और प्रलय कभी न भया ऐसे, और माया के गुणों से रहित और मोक्षानंद के समुद्र । और अणु से भी अणु, अपार तेज वाले, तथा महा प्रभाव वाले ऐसे श्रीहरि को नमो नमः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तन्मूर्तेः सनातनत्वमपरिच्छिन्नत्वं चोपपादयति—रूपमिति । हे पुरुषर्षभ हे धातः एतदेव रूपं वैदिकेन तान्त्रिकेण च योगेनोपायेन श्रेयोऽर्थिभिः सदेज्यं पूज्यमतो नेदमिदानीमपूर्वमुत्पन्नमिति भावः । ननु, यूयं देवाः पूज्यत्वेन प्रसिद्धाः सत्यम्; सर्वेऽप्यत्रैवान्तर्भूता इत्याह—उ अहो ह स्फुटम् अमुष्मिन् त्वयि नोऽस्मान् त्रीन् लोकांश्च सह पश्यामि तत्र हेतुः विश्वं मूर्तौ यस्य अतस्त्वेतद्रूपं परिच्छिन्नमपि न भवतीति भावः ॥ ९ ॥

(१) व्यवाये इति वीर० ।

यथाऽग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बू[1] द्यमने च वृत्तिम्।
योगैर्मनुष्या अधियन्ति हि त्वां गुणेषु बुद्ध्या कवयो[2] वदन्ति ॥ १२ ॥
तं त्वां वयं नाथ! समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम्।
दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः ॥ १३ ॥
स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम्।
समागतास्ते बहिरन्तरात्मन्! किं वान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥
अहं गिरित्रश्च सुरादयो ये दक्षादयो ऽग्नेरिव केतवस्ते।
किं वा विदामेश पृथग्विभाविता विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥

श्रीशुक उवाच।

एवं विरिञ्चादिभिरीडितस्तद्विज्ञाय तेषां हृदयं तथैव।
जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन् संवृतसर्वकारकान् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

विश्वमूर्तित्वमेवाऽऽह—त्वयीति। घटस्य मृत्तिका यथा आदिरन्तश्च मध्यश्च तथात्वमस्य जगतः, तत्र हेतुः परस्मात्प्रधानादपि परः ॥ १० ॥

मृत्तिकादृष्टान्तेन परिणामं प्राप्तं वारयति—त्वमिति। स्वया स्वाधीनया मत्र एव गुणानां व्यवाये परिणामे ऽप्यगुणमेव त्वां मुक्ताः पश्यन्ति मनीषिणो विवेकिनः विपश्चितः शास्त्रज्ञाः ॥ ११ ॥

एतदेव सदृष्टान्तमाह—यथाऽग्निं काष्ठे मथनेन अमृतमाज्यं गोषु दोहनादिना भुव्यन्नं श्रीहयादिकर्षणादिना अम्बु च खननेन उद्यमेन पुरुषकारेण वाणिज्यादिना वृत्तिं जीविकाम् यद्वा अम्बु उद्यमने घटीयन्त्रादिनोद्धरणे योगैरुपायैर्मनुष्या अधियन्ति प्राप्नुवन्ति तथा कवयस्त्वां बुद्ध्या गुणेष्वधियन्ति वदन्ति च ॥ १२ ॥

हे नाथ! सरोजनाभ! अतिचिरादीप्सितमर्थं तं योगैकप्राप्यं त्वां सम्यगुज्जिहानमाविर्भवन्तं प्रत्यक्षतो दृष्ट्वाऽद्य वयं निर्वृतिं गताः दवार्ता दावाग्निपीडिताः ॥ १३ ॥

बहिर्भेयं 'तत्करणोति चेत्तत्राऽऽह—हे अन्तरात्मन्! अशेषसाक्षिणस्ते बहिः किं वाऽन्यैर्विज्ञाप्यमस्ति ॥ १४ ॥

यूयमेव किञ्चित्कुरुतेति चेत्तत्राऽऽह—अहमिति। अग्नेः केतवो विस्फुलिङ्गा इव ते त्वत्तो वयं पृथग्विभाविताः सन्त आत्मनः शं श्रेयः किं वा विद्मः अतस्त्वमेव द्विजानां देवानां च मन्त्रं विधत्स्व इदं कुरुतेत्युपादिशेत्यर्थः ॥ १५ ॥

हृदयं मन्त्र उपदेष्टव्य इत्यभिप्रेतं यथा तथैव विज्ञाय जगाद संवृतानि नियमितानि सर्वाणि कारकाणीन्द्रियाणि यैस्तान् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अजातजन्मस्थितिसंयमायेत्यनेन प्रकृतस्य दर्शितरूपस्यकर्मावश्यत्वं सूचितं तदेव रूपं विशिंषन्स्तौति—रूपमिति। हे पुरुषर्षभ! तवैतद्रूपं श्रेयोऽर्थिभिः कर्तृभिः वैदिकतान्त्रिकेण पञ्चरात्रादितन्त्राऽभ्यामवबोधितेन योगेन साधनेन इज्यमाराधनीयं तस्मिन् रूपे विश्वं साक्षात्कृत्याह—हे धातः! अमुष्मिन्नुह अमुष्मिन् हि रूपे मह त्रिलोकान् त्रिलोकैः सह नाऽस्मान्पश्यामि आर्षात्सहयोगेऽपि तृतीयाया अभावः त्रिलोकानित्यत्र कर्मधारयः दर्शनहेतुं वदन् रूपं विशिनष्टि, विश्वमूर्तौ विश्वाश्रयमूर्तौ, विश्वमूर्ते इति पाठान्तरं तदा हे विश्वमूर्ते इति सम्बोधनम् ॥ ९ ॥

विश्वमूर्तित्वमेव प्रपञ्चयति—त्वयीति। इदं विश्वमग्रे मध्ये अन्ते च त्वय्येवाश्रयभूतेऽन्तरात्मन्यासीद्विनाभूतमासीत् अतएवाद्यावस्थं विश्वं त्वमेव यद्यदवस्थं यदपृथक्सिद्धमन्तस्ततो भिन्नमिति भावः। अनेन जगदुपादानत्वमुक्तम् उपादानोपादेययोरभेदप्रसिद्धं दृष्टान्तमाह, घटस्योपादेयस्य मृदुपादानभूता यथा न तस्माद्भिन्ना तथेत्यर्थः। उपादानत्वप्रयुक्तं विकारित्वं वारयति—परः पर स्मादिति। परस्मात्स्वरूपादन्यथाभाववदचेतनात् यः परो विलक्षणो जीवः तस्मादपि स्वभावान्यथाभाववतः परो विलक्षणः स्वभावतोपि विकाररहित इत्यर्थः। उपादानत्वेपि तस्य सद्वारकत्वान्निर्विकारत्वमिति भावः ॥ १० ॥

एवं विश्वोपादानत्वात्त्वं विश्वमूर्तिरित्युक्तम् अथ विश्वस्यान्तरात्मत्वादपि त्वं विश्वमूर्तिरिति वक्तुं विश्वस्य सृष्टौ तदन्तरात्मतयानुप्रवेशमाह—त्वमिति। आत्माश्रयया स्वापृथक्सिद्धया स्वया स्वनियाम्यया मायेदं जगन्निर्माय सृष्ट्वा तदनुप्रविष्टः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्यर्थोऽत्रानुसन्धेयः अनुप्रविष्टमप्यनुप्रवेष्टव्यगतदोषास्पृष्टं "सत्यञ्चानृतं च सत्यमभवत्" इतिश्रुत्यर्थमाधीरास्याविष्टः पश्यन्तीत्याह पश्यन्तीति गुणव्यपायेऽपि गुणानां व्यपायोऽन्यथा भावः

(१) उद्यमनेन। (२) धियन्ति" इति वीर०।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परिणाम इति यावत् गुणानां परिणामेऽपि त्वां तत्राऽनुप्रविष्टं स्वामगुणं चेतनाचेतनगतहेयगुणरहितं विपश्चितः "सत्यञ्चानृतं च सत्यमभवत्" इत्यादिशास्त्रार्थयाथात्म्यविदः मनीषिणः तत्प्रतिपाद्यार्थयाथात्म्योपासनपराः युक्ताः सुसमाहितचित्ताः मनसा योगपरिशुद्धेन मनसा भावनेन पश्यन्ति साक्षात्कुर्वन्ति "सत्यञ्च" इत्यादिश्रुतेरयमर्थः परमात्मनश्चिदचित्सङ्घातरूपजगदाकारपरिणामे च परमात्मशरीरभूतचिदंशगताः सर्वएवापुरुषार्थाः तथा अचिदंशगताः सर्वे विकाराः परमात्मनि कार्यत्वं तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वं परमात्मा च तयोः स्वशरीरभूतयोर्नियन्तृतयाऽऽत्मभूतः तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते अपरिच्छिन्नज्ञानानन्दमयः सर्वदैकरूपएव जगत्परिवर्तनलीलयावतिष्ठते विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवत् निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दैकरूपमेवाभवदित्यर्थः ॥ ११ ॥

मनसा भावनेन पश्यन्तीत्यत्र दृष्टान्तानवदन्नुक्तमेवार्थमुपपादयति—यथेति । काष्ठादिष्वग्न्यादीन्यथा योगैरुपायैः तत्र यथाग्निमधाग्निकाष्ठे मथनेनोपायेन यथा चामृतं क्षीरं गोषु दोहनेन यथा भुव्यन्नं कृष्याद्युपायेन यथा वा भुवि जीवनभूतमम्बु अवमुत्खननेनोपायेन पश्यन्ति उद्यमनेति पाठे स एवार्थः तथा विपश्चितो मनीषिणो मनुष्याः बुद्ध्या योगविशुद्धया गुणेषु गुणपरिणामात्मकेषु महदादितत्त्वेषु पदार्थेषु त्वामविक्रियमेकरूपमधियन्ति "इक् स्मरणे" इति धातुः विदन्ति साक्षात्कुर्वन्तीत्यर्थः ॥ १२ ॥

तद्दर्शनेनात्मनो निसर्गं सुखितत्वं वदन्तस्तत्प्रयोजनं कुर्विति प्रार्थयन्ते—तमिति द्वाभ्याम् । हे नाथ ! हे सरोजनाभ ! अतिचिरादीप्सितमर्थं पुरुषार्थस्वरूपम् उज्जीवनादिभिर्भवन्तं तमुक्तविधं त्वां दृष्ट्वा सर्वे वयं निर्वृतिमानन्दं गताः प्राप्ताः यथा दवार्ताः दावाग्निपीडिताः गजाः गाङ्गं जलं प्राप्य निर्वृतिं प्राप्नुवन्ति ॥ १३ ॥

तथा स त्वम् उक्तविधः त्वं हे अखिललोकपाल ! यदर्थाः यत्प्रयोजनाः यत्कामायमाना वयं तवपादमूलं समागताः शरणं गताः तत्प्रयोजनं विधत्स्व कुरु यद्विधेयं तत्कथयेत्यत्राह—हे बहिरन्तरात्मन् बहिरन्तश्च व्यापिन् अशेषसाक्षिणः सर्वं गुणपरसाक्षात्कुर्वन्तः तव सर्वेश्वरस्य विज्ञाप्यं किमस्ति न किमपीत्यर्थः ॥ १४ ॥

तर्हि यूयमेव किंचित्कुरुतेत्यत्राह—अहमिति । अहं ब्रह्मा गिरित्रो रुद्रः ये च सुरादयो दक्षादयश्च प्रजापतयश्च सर्वे वयमग्नेः केवलः विस्फुलिङ्गा इव ते स्वतः पृथग्भाविताऽस्मन्तः आत्मनः स्वानां वा सुखं किं वा विद्मः न किमप्यात्मसुखसाधनं न विद्म इत्यर्थः अतस्त्वमेव हे ईश ! द्विजानां देवानां च भद्रं सुखकारिणीमालोचनां विधत्स्व इदं कुरुतेत्युपायमुपदिशेत्यर्थः ॥ १५ ॥

एवं स्तुतो विज्ञापितश्च तानाह भगवानित्याह मुनिः—एवमित्थं ब्रह्मादिभिरीडितः स्तुतो भगवांस्तेषां विरिञ्च्यादीनां तद्धृदयमभिप्रायं यथावद्विज्ञाय मेघनिर्ह्रादवद्गम्भीरया गिरा यद्वा प्रञ्जलयो यैः संवृतानि नियमितानि कारकाणीन्द्रियाणि यैस्तान्विरञ्च्यादीन् जगाद ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे पुरुषर्षभ ! मोक्षादिपुरुषार्थाकाङ्क्षिभिः वैदिकैस्तान्त्रिकैश्च यदे·

तत्तव रूपं हे धातः ! अमुष्मिन् रूपे योगेन सह त्रिलोकान् पश्यामि हे विश्वमूर्ते ! त्वं नः शरणं भवेत्यन्वयः । भुवनेति पाठे आधार इत्यर्थः ॥ ९ ॥

(१) इव यथा घटस्यादिरन्तो मध्यं च मृत्स्ना प्रशस्ता मृदेवोत्तमकारणं सलिलाद्यवान्तरं तथा त्वमस्यस्य जगतः आद्यादिः परस्मात्परः उत्तमहेतुः अत्र मृद्वदुपादानकारणं न ब्रह्म किं तु तदधीनसत्ताकत्वादुदृष्टान्तोपादानमित्याशयेनाह—त्वमेवेति । च शब्देन ब्रह्मोपादानकत्वे सर्वस्य चेतनत्वापत्तिप्रसङ्गं सूचयति. अयमर्थोऽत्र विवक्षितइति कुतोऽवगतमिति तत्राह—अशेषेति ॥ १० ॥

ननु, सृष्टिसंहृतिकर्तृत्वात्तदाद्यन्तत्वमस्तु मध्यत्वं कथमिति तत्राह—त्वमिति । आत्मैव आश्रयो यस्यः सा तथा तयाऽनन्यत्र स्वया स्वकीयत्वेनाभिमतया मायया प्रकृत्या इदं विश्वं निर्माय त्वं तदनुप्रविष्ट इति यस्मात्त्वां मध्यं वदन्तीति शेषः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिः । अत्र किं मानमिति तत्राह—पश्यन्तीति । मनीषिणो बुद्धिमन्तो मनसा मननलक्षणविचारेण युक्ता एवं पश्यन्तीति सत्तद्दर्शनं मानमित्यन्वयः । नन्वेवं तर्हि गुणसम्पर्किणो गुणदोषलेपः स्यात् न स्यादत्रापीत्यत्र मानमित्याह—गुणेति । विपश्चितो गुणाऽवत्वाये गुणकार्यसमूहे स्थितमप्यगुणं गुणनिमित्तदोषरहितं त्वां पश्यन्तीति शेषः । इतोपि ब्रह्मोपादानकारणं न किन्तु निमित्तमेवेत्याशयेनाह—त्वमिति । मायेदं विश्वं निर्माय तदनुप्रविष्ट इति मनसा युक्ता मनीषिणो गुणकार्ये जगति विषये अगुणं गुणव्यतिरिक्तं कारणं निमित्तमेव त्वां पश्यन्तीत्यन्वयः विपश्चितः पण्डिताः दर्शनपटव इत्यर्थः अनेन विद्वद्दर्शनमत्र प्रमाणमिति दर्शितम् ॥ ११ ॥

गुणकार्ये स्थितं गुणदोषरहितं पश्यन्तीत्युक्तं कथं तत्र पश्यन्तीति तत्राह—यथेति । यथा एधआदिष्वग्न्यादीनधियन्ति अधिगच्छन्ति तथा कवयो बुद्ध्या गुणेषु त्वामवयन्ति जानन्तीत्यन्वयः । उर्व्यां उत्खनने सति अम्बु यथा तथाशब्दः समुच्चये अमृतं क्षीरं घृतं वा भेदस्य दोषलेपराहित्यस्य च ज्ञापनार्थमिति निदर्शनं सर्वस्मात्सारः स्वभक्तमुक्तिद इति ज्ञापनायामृतदृष्टान्तः उपजीव्यत्वज्ञापनायाम्बु यथेति भूयस्त्वतापहरत्वदर्शनायाम्बु यथेति ॥ १२ ॥

यस्त्वं सर्वोत्तमत्वोपजीव्यत्वादिगुणसम्पन्नो वयं तं त्वां दृष्ट्वा निर्वृतिं गता इत्यन्वयः । अतिचिरेण कालेन वाञ्छितार्थं समुज्जिहानं निवार्यमाणे सति सर्वोत्तमं भगवन्तम् उपलीकुर्वाणां दवार्ता वनवह्निक्लिष्टाः गाङ्गं गङ्गामवाप्य ॥ १३ ॥

योऽर्थो येषां ते यदर्थाः यत्प्रयोजना अखिललोकपाला वयं तव पादमूलं समागताः स त्वं तमर्थमस्मदर्थं विधत्स्वेत्यन्वयः । तर्हि सोऽर्थः क इति तत्राह, न वाहिरीति. हे आत्मन् स्वात्मन् ! बहिरन्तः साक्षिणः ते तवाधि विज्ञाप्यं किं वा किञ्च न किमपीत्यन्वयः । अतोऽस्मदभीष्टं भवतः सिद्धमित्यर्थः ॥ १४ ॥

इतोऽप्यस्माभिर्विज्ञाप्यं नास्ति यतो वयं तव किङ्करा इति भावेनाह—अहमिति । यथा केवलः उल्का: अग्नेरुत्पन्ने तम-

(१) त्वञ्चाद्य आसीविरमास्यतन्ते त्वमादिरन्तो जगतोऽस्यमध्यम । घटस्य मृत्स्नेव परः परस्मात्त्वमेव चाशेषमशेषनामा॥ इति मूलपाठः ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वाधिताः एवं मद्वादयः सर्वे त्वदनुग्रहात्मनात्वरिकिङ्करा इत्यर्थः किङ्करत्वं विशदयति, किमेतेति. ईशत्वसृष्ट्यादिकर्तृत्वेन पृथक्-पृथग्विमानिनाः प्रत्याना वयं किं वा विधेम कामनाज्ञां कुर्मः हे द्विजदेवमित्र ! नोऽस्माकं तवाज्ञाकरणां शं विधत्स्व इदं कुरुध्वमित्याज्ञापय गिरित्रः महाशिवः ॥ १५ ॥

हृदयमभिप्रायं जीमूतो मेघः संवृतसर्वकामान् अप्रकाशित-स्वाभिप्रायान् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परस्माद्ब्रह्मणोऽपि परः ब्रह्मानुभवोत्तरभाव्यनुभवः तस्मा-त्तत्कृपाविर्भावश्च । उक्तञ्च चतुर्थे "यः परं रंहसः साक्षात्"इति । विष्णुपुराणेच "स ब्रह्मपारः परपारभूतः" इति । "अक्षरात् परतः परः" इति श्रुतेः ॥ १० ॥

ननु, मृत्तिकादृष्टान्तेन परः परस्मादिति न सङ्गच्छते तत्राह—त्वं माययेति । स्वया स्वस्य बहिरङ्गांशरूपया आत्मा-श्रयया स्वाधीनया मायया प्रकृत्याख्ययोपादानरूपया तदुक्तं श्रीभगवता "पृथिवी वायुराकाशः" इत्यादिना । तदनुप्रविष्ट इति मूर्तेः परिच्छिन्नापरिच्छिन्नतयाचिन्त्यशक्तिमयविर्यातत्वादिति भावः ॥ ११—१५ ॥

नदीदिनं विज्ञाय अवधाय यथा तेषां हृदयं तथा जगाद ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मापिमेति—मित्यस्याविभूत्ये भगवत्तनोरिनिकारिका तन्मूर्तेः सनातनत्वमपरिमेयत्वं चोपपादयति—रूपमित्यत्रावतारिका च श्रीस्वामिपादानामत्र दृश्या हे पुरुषर्षभ ! एवं तवेदं रूपं वैदि-केन तान्त्रिकेण च योगेन उपायेन इज्यं सदापूज्यमतो नेदा-नीन्तनमिति भावः ननु, यूयं देवाः पूज्यत्वेन प्रसिद्धाः सत्यं-स्वैश्वर्यैर्माहाम्भूता इत्याह, ॐ अहो ह स्फुटं अमुष्मिन्त्वयि नो-ऽस्माभिस्त्रिलोकांश्च सह पश्यामि तत्र हेतुः विश्वं मूर्तौ यस्य अनन्तत्वेनद्रूपं परिच्छिन्नमप्यपरिच्छिन्नमेवेति भावः ॥ ९ ॥

विश्वमूर्तित्वमेवाह- त्वयीति । घटस्य मृत्तिका यथा आदि-रन्तश्च मध्यं च तथा त्वमस्य जगतः मृत्तिकादृष्टान्तेन प्रसक्तं परिणामं वारयति परस्मात् प्रधानादपि परः प्रधानमेव विश्व-रूपेण परिणमति न तु त्वमिति भावः ॥ १० ॥

ननु, तर्हि प्रधानस्यैव विश्वहेतुत्वमापातं न तु ममेति तत्राह-- त्वमिति । मायया स्वया स्वशक्त्यास्ति तथ ततः परत्वेऽपि तत्कृपात्वतच्छक्तित्वात्त्वमेवेदं विश्वं निर्माय तत्र विश्वस्मिन्ननु-प्रविष्टो वर्तसे मायया कीदृश्या आत्मा त्वमेवाश्रयो यस्या-स्तया त्वदधीनयेत्यर्थः । अतो, गुणव्यवाये गुणपरिणामभूते अत्र विश्वस्मिन्नेव प्रविष्टमप्यगुणं गुणसङ्गरहितं त्वां मनसा युक्ताः समनस्का जनाः पश्यन्ति ये च पश्यन्ति त एव मनीषिणो विवेकिनः त एव विपश्चितः शास्त्रतात्पर्यविज्ञाः ये न पश्यन्ति त एवाविपश्चितोऽमनीषिणोऽमनस्कोऽधाश्चेति ॥ ११ ॥

कथं मां पश्यन्तीत्यतस्तदुपायं सदृष्टान्तमाह—यथेति । मनुष्या गुणेषु गुणमये जगति निर्गुणं त्वां योगैर्भक्त्याऽह-मेकया ग्राह्य इति त्वदुक्तेर्भक्तिभेदैः अधियन्ति प्राप्नुवन्ति बुद्ध्या त्वद्रूपया वदन्ति च त्वया सहोक्तिप्रत्युक्ती कुर्वन्ति एधसि काष्ठे अग्निं मथनेन यथेति मन्थनमपि गुरूपदेशेनैव यथा जानन्ति तथैव श्रीगुरूपदिष्टया श्रवणकीर्तनादिभक्त्या मनोमन्थनेन मुहुर्मथितया त्वां पश्यन्ति "यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम् । मथ्नन्ति मथ्ना मनसा दिदृक्षवः"इति पञ्चमोक्तेः साधुसा हाय्यभूयस्त्वेऽत्वल्पायासेनैवेत्यत्र दृष्टान्तः गोषु अमृतं दुग्धं दोहनेन यथेतिवत्समुखसंघृष्टाप न प्रस्तुतमित्यर्थः । प्राचीनभक्तिबीजसद्भावे तु भक्तिबाहुल्य-प्राप्त्यैव त्वत्प्राप्तिरित्यत्र दृष्टान्तः भुवि अन्नं कर्षणादिना यथा प्राचीनसाधुसङ्गवद्भक्तिसद्भावे तु प्रतिबन्धकाभाव एव त्वत्प्रा-प्तिरित्यत्र दृष्टान्तः अम्बु अंबं खननात्तदावरकमृत्तिकादिदूरीक-रणेन यथेति लब्धभक्तीनां तु भजनमात्रेण नित्यमेव त्वत्प्रा-प्तिरित्यत्र दृष्टान्तः वणिजे वृत्तिं नर्तकगायकादीनां प्रति स्वाधि-क्षेपेणैव जीविकां यथेति ॥ १२ ॥

वयन्तु कृतार्था एवाभूमेत्याह—तमिति । त्वा त्वां हे सरोज-नाभ ! आतामिवीप्सितम् अर्थं परमार्थवस्तुरूपम् ॥ १३ ॥

तर्हि धत्स्व यदर्थाः वयं यत्प्रयोजनाः तदेव स्पष्टं विज्ञाप-यतेति चेत् तत्राह—हे अन्तरात्मन् ! अशेषसाक्षिणस्तव बहिः किं विज्ञाप्यम् ॥ १४ ॥

ननु, यूयं सर्वकामाभूत सुखस्यच्छानुरूपवन्तश्च भवथेतिचाऽतो ऽत्र सङ्कटे यः प्रतीकारः सम्भवति तं व्रत यथा युष्मद्वाक्य-मपि तमहं निष्पादयामीति चेत् तत्राह—अहमिति । अग्नेः केतवो विस्फुलिङ्गा इव "केतुश्चिह्ने पताकायाम्" इति कोशात् ते त्वत्तो वयं पृथग्विमानाः सन्त आत्मानं श्रेयः किं वा विद्मः न किमपि तस्मात्त्वमेव नः शं विधत्स्व द्विजातीनां देवानां सत्रं च विधत्स्व इदं कुरुतेत्युपायमप्युपदिश अस्माकं बुद्धिचातु-र्यादिकं तु रसातलं यात्विति भावः ॥ १५ ॥

तेषां देवानां यथा हृदयम् अस्माकममरावती प्राप्तो कामपि मन्त्राणां भगवानेव ददात्विति यथा मनोगतं तद्यथेवेत्य-न्वयः संवृतसर्वकारकान् निवृत्तसर्वेन्द्रियान् ॥ १६—१८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे पुरुषर्षभ ! तव रूपं श्रेयोर्थिभिः कल्याणार्थिभिः इज्यं पूज्यं योगेनोपायेन विश्वं सर्वं मूर्तौ यस्य तस्मिन् अमुष्मिन् त्वयि नोऽस्मान् त्रिलोकांश्च सह युगपत् पश्यामि ॥ ९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वत्र सर्वधारकत्वम् सर्वोपादानत्वं च भगवत आह—त्वयीति । आत्मतन्त्रे अनन्याधारके घटस्य मृत्स्नेव अस्य जगतो विश्वस्य त्वमादिरन्तो मध्यं च स्वस्वरूपपरिणामाभाव माह, परस्मात् विकाराहंस्वशक्तिरूपात्प्रधानात् परो निर्विकारस्वरूप इत्यर्थः ॥ १० ॥

शक्तिपरिणाममेवाह—त्वं मायेति । सांख्यपक्षव्यावृत्त्यर्थमाह—आत्माश्रयया स्वशक्तिभूतया "देवात्मशक्तिं स्वगुणैर्निगूढाम्"इति श्रुतेः।अनेनानिर्वचनीयत्वादस्य निर्मूलत्वं बोध्यम् युक्ताः साधनचययुक्ताः गुणव्यपाये आत्मनो निर्गुणयानुसन्धानकाले अगुणां मायया गुणविलक्षणमात्मानं परमात्मानं गुणानियन्तारं च पश्यन्ति अत एव ते विपश्चितः आत्मानात्मपरमात्मविवेकवन्तः ॥ ११ ॥

. ननु, अनात्मदर्शनं जडत्वात्मप्रकाश्यत्वादिनात्मदर्शनं च ज्ञानस्वरूपत्वात्मप्रकाशत्वाद्विना सम्भवति परमात्मानं कथं पश्यन्तीत्यत्राह—यथेति । कवयो वेदा ऋषयश्च त्वां वदन्ति अतस्तदनुगृहीतया बुद्ध्या मनुष्याः यथा एधआदिषु अग्न्यादीन् योगैस्तत्तदुपायैः अधियन्ति तथा गुणेषु गुणकार्येषु समष्टिव्यष्टिषु देहे सर्वनियन्तारं त्वां योगैः श्रवणमननध्यानैः अधियन्ति सर्वचेतनाधिक्येन प्राप्नुवन्तीत्यर्थः ॥ १२ ॥

अतिचिरादीक्षितो वाञ्छितश्चासौ अर्थः पुरुषार्थभूतश्च तम् उज्जिहानमाविर्भवन्तं त्वां दृष्ट्वा सर्वे निर्वृतिं सुखितां गताः ॥ १३ ॥

यदर्थ यत्प्रयोजनात्तव पादमूलं समागताः तत्प्रयोजनं विधत्स्व ननु, यत्प्रयोजनं तत्स्पष्टं विज्ञापयेत्यत्राह, हे बहिरन्तरात्मन् ! अशेषसाक्षिणस्ते किं वान्यैर्विज्ञाप्यमस्ति न किमपीत्यर्थः ॥ १४ ॥

तर्हि यूयमेव स्वार्थसिद्ध्यर्थं किञ्चित्कुरुतेत्यत्राह—अहमिति । अग्नेः केतवः विस्फुलिंगा इव ते त्वत्तः पृथग्विभाविताः सन्तः आत्मनः शं सुखोपायं किं वा विदाम विद्मः ? नैव विद्मः अतः हे ईश ! त्वमेव द्विजानां देवानां च हितकरं मन्त्रं विधत्स्वोपदिश ॥ १५ ॥

इत्थमभिप्रायं यथैव यथावदेव विज्ञाय संवृतसर्वकारकान् नियमितसर्वेन्द्रियान् जीमूतगम्भीरया मेघनिर्ह्रादवद्विपुलया गिरा जगाद ॥ १६ ॥

---

भाषा टीका ।

हे पुरुषोत्तम ! हे धातः ! यह आपका रूप वैदिक और तांत्रिक उपायों से हम लोगों सहित श्रेय की कामना वाले जनों से सदा पूज्य है, इसीसे यह कुछ इस समय अपूर्व नहीं हुआ है, किन्तु इसी आप के रूपमें हम अपने सहित लोकों को देखते हैं ॥ ९ ॥

हे प्रभो ! यह जगत सृष्टि के पूर्व में आपही में रहा/मध्य में भी आप ही में रहा और अन्त में भी आपही में रहा और आप परमस्वतन्त्र हो । और इस जगत् के आदि अन्त और मध्य भी आपही हो । जैसे कि घट आदि कार्यवर्ग का आदि अन्त और मध्य मट्टी है, और परात्पर भी आपही हो अर्थात् आप से कोई परतत्त्व नहीं है ॥ १० ॥

आपने अपनी स्वाधीन माया से इस विश्व को निर्माण किया और पश्चात् उस में जीवद्वारा प्रविष्ट हुए परन्तु युक्तजन बुद्धिशालीलोग, गुणों के अर्थात् प्रकृत्यंशके परिणाम होनेपर भी आप को अगुण अर्थात् परिणामी प्रकृति के गुणों से भिन्न अत एव अपरिणामी ऐसे आप को देखते हैं ॥ ११ ॥

जैसे इंधन में अग्नि को गायों में दुग्ध को भूमि में अन्न को खनने में जलको उद्यम में जीविका को मनुष्य लोग उपायों से प्राप्त करलेते हैं, ऐसे ही कवि ( ज्ञानि ) जन गुणों में बुद्धि से आप को कहते हैं तात्पर्य यह कि जैसे काष्ठादि में अग्नि रहती है पर सब को मालूम नहीं होती, ऐसे ही परमात्मा का शरीर रूप प्रकृति और उसके परिणाम रूप गुणों में शरीरी होकर व्याप्त हैं तौ भी सब को ज्ञात नहीं होते हैं ॥ १२ ॥

हे नाथ ! हे पद्मनाभ ! बहुतकाल योग करने से एक प्राप्त होने वाले, और इस समय प्रकट होकर दर्शनदेने वाले, ऐसे आप को देखकर अब हम सब लोग, दावाग्नि से पीडित गज जैसे गङ्गाजलको प्राप्त होकर सुख पावें तिस प्रकार परमानन्द को प्राप्त हुए हैं ॥ १३ ॥

हे प्रभो ! तस्मात् जिस प्रयोजन को हम लोग अखिललोकपाल आपके श्रीचरणों में आये हैं आप उसी का विधान कीजिये, क्योंकि ? आप सबों के बाहर भीतर के समाचारों को जानते हैं, और सब के साक्षी है, फिर आप से और क्या ? विज्ञापनीय है ॥ १४ ॥

ब्रह्मांजी बोले, कि हे प्रभो ! मैं और महादेव और देव आदिक तथा दक्ष आदिक प्रजापति ये सब लोग अग्नि के स्फुलिङ्ग जैसे स्फुलिङ्ग ( चिनगारियें ) हैं, ऐसे ही आप से पृथक् मान होने वाले हमलोग क्या अपना श्रेय जान सक्ते हैं ? न कदापि. तस्मात् हे ईश ! हे ब्रह्मण्यदेव ! आप हमलोगों को उत्तम मन्त्र विधान करो अर्थात् उपाय बतलाइये, कि—तुम लोग ऐसा काम करो ॥ १५ ॥

श्रीशुक उवाच ॥

श्री शुकदेवजी बोले, कि—ब्रह्मादिकों ने जब आप की इस प्रकार स्तुति करी, तब श्री हरि इन लोगोंके हृदय के अभिप्राय को जानकर, बद्धाञ्जलि और विनीतइन्द्रियवाले सब देवों से मेघ सदृश गम्भीर वाणी से बोलते हुए ॥ १६ ॥

---

एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः ।
विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥

श्रीभगवानुवाच ।

हन्त ब्रह्मन्नहो शम्भो ! हे देवा ! मम भाषितम् ।
शृणुतावहितास्सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १८ ॥
यात दानवदैतेयैस्तावत्सन्धिर्विधीयताम् ।
कालेनाऽनुगृहीतैस्तैर्यावद्वो भव आत्मनः ॥ १९ ॥
अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे ।
अहिमूषकवद्देवा अर्थस्य पदवीं गतैः ॥ २० ॥
अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥
क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥
सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥
यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ।
न संरम्भेण सिद्ध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईश्वरस्यापि तथैवाभिप्रेतमित्याह—एक एवेश्वरः समर्थोऽपि ॥ १७ ॥

हे सुराः हे देवाः ! अन्ये च गन्धर्वादयः ॥ १८ ॥

वः आत्मनः स्वतो यावद्भवो वृद्धिर्भवति ॥ १९ ॥

अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तैः पश्चादहिमूषकवद्भ्यघातकत्वेन वर्तितव्यमिति शेषः । यद्वा पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण सन्धिं विधत्ते पश्चात्तमेव कदाचिद्भक्षयति—तथाऽर्थमार्गप्रवृत्तैः प्रथमं सन्धेया इत्यर्थः ॥ २० ॥

ततस्तैः सह यत्कार्यं तदाह—अमृतोत्पादन इति । यस्य मृतस्य पीतस्य सतः ॥ २१ ॥

नेत्रं रज्जुम् ॥ २२ ॥

ननु, तर्हि ते ऽप्यमृतपानेनामराः स्युस्तत्राऽऽह—क्लेशभाज इति ॥ २३ ॥

बलिभिः सहकारिभिः साध्या अर्थास्तदनुसरणं विना न सिध्यन्तीति कृत्वा सामादिकमुपदिशति—यूयमिति द्वाभ्याम् । हे सुराः ! संरम्भेण सम्भ्रमेण सान्त्वया साममार्गेण यथा सिध्यन्ति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुरेशो भगवान् स्वयमेक एव सुराणां कार्ये ईश्वरः कर्तुं समर्थोऽपि समुद्रोन्मथनादिभिर्विहर्तुकामः विहर्तुमिच्छुस्तानाह ॥ १७ ॥

उक्तिमेवाह—हन्तेति । हन्तेति दुर्लभस्वप्रसादलाभप्रयुक्तमाश्चर्यं द्योतयति, हे ब्रह्मन् ! हे शम्भो ! हे देवाः ! हे सुराः ! अवान्तरभेदाभिप्रायेण सुरा देवाश्चेति सम्बोधनद्वयम् अन्ये गन्धर्वादयश्च सर्वे यूयं वो युष्माकं यथा श्रेयः स्यात्तथा मम भाषितम् अवहितचित्तास्सन्तः शृणुत अमरा इति पाठान्तरं तदा श्रेयो दर्शयति—यथा अमरा मृत्युरहिताः स्युरिति ॥ १८ ॥

तावद्दानवैर्दैतेयैश्च सन्धिर्विधीयतां सख्यं क्रियतां कीदृशैः कालेनाऽनुगृहीतैः कालवशादनुकूलतां प्राप्तैः न ते सन्धिं सहन्तीति शङ्का न कार्येति भावः । तैः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

असुरैर्वो युष्माकमात्मनः स्वत एव यावद्वृद्धिः स्यात् तावत् सन्धिर्विधीयतामिति पूर्वेणान्वयः ॥ १९ ॥

"कार्यार्थिनः कुतो गर्वः" इति न्यायेनारयोऽपि सन्धेया एवेत्याह अरयोऽपीति । कर्तव्यप्रयोजनस्य गौरवे भूयस्त्वे सति तदर्थमरयः शत्रवोऽपि सन्धेया एव हि, हे देवा अर्थस्य प्रयोजनस्य पदवीं सिद्धं गते प्राप्तेः पश्चादहिमूषकवद्व्यवस्थानुरूपभावेन वर्तितव्यम् इति शेषः यद्वा पेटिकायां निरुद्धोऽहिर्येथा निर्गमद्वारविधानार्थं मूषकेण सह सन्धिं विधत्ते पश्चात्तमेव भक्षयति तथाऽर्थस्य पदवीं प्रवृत्तेः प्रथमं सन्धेया इत्यर्थः ॥ २० ॥

ततः तैः सह यत्कार्यं तदाह—अमृतेति । स्पष्टोऽर्थः, अमृतं विधिमहि, यस्यामृतस्य पीतस्य सतः मृत्युग्रस्तोऽप्यमरो मृत्युरहितो भवेत् यस्य पीतस्येति सम्बन्धमात्रे वा षष्ठी येन पीतेनामृतेन मृत्युग्रस्तोऽमरो भवेत् इत्यर्थः ॥ २१ ॥

अमृतोत्पादनप्रकारं विवृणोति—क्षिप्त्वेति । वीरुधः गुल्मानि तृणानि लताश्चौषधयश्च इमाः सर्वाः क्षीरोदधौ क्षिप्त्वा मन्दरं पर्वतं मन्थानं मन्थनदण्डं कृत्वा वासुकिं नेत्रं रज्जुं कृत्वा ॥ २२ ॥

मया सहायेन हे देवाः ! अतन्द्रिताः यूयं निर्मन्थध्वं ननु, तेऽप्यमृतपानेनामराः स्युरतआह—क्लेशभाज इति । दैत्यास्तु केवलं क्लेशभाजो भविष्यन्ति यूयमेव फलग्रहाः अमृतपायिनो भविष्यथेत्यर्थः ॥ २३ ॥

बलिभिः सहकारिभिः साध्या अर्थास्तदनुमरणं विना न सेत्स्यन्तीति सामादिकमुपदिशति—यूयमिति श्लोकद्वयेन । हे सुराः ! यदसुरा इच्छन्ति तदेव यूयमनुमोदध्वं सान्त्वया साधुमार्गेण सर्वेऽर्था यथा सिध्यन्ति न तथा संरम्भेण क्रोधेन सिध्यन्तीत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यतो ब्रह्मादयः श्रीनारायणं शरणं प्रापुः तस्मादेक एवेश्वरः सुरकार्यविषये ईश्वरः समर्थः ॥ १७ ॥

आरम्भे यथा येन विधिना युष्माकं श्रेयः स्यात्तं विधिं यातुधानैः राक्षसैः अनुगृहीतैः ऐकमत्येन गृहीतैर्वैः आत्मनो युष्मदात्मनो भवः श्रेयः वृद्धिर्वा ॥ १८—१९ ॥

हे देवाः ! कार्यार्थगौरवे कर्तव्यस्य प्रयोजनस्य गुरुत्वे सति अर्थस्य प्रयोजनस्य पदवीं गतैर्भवद्भिरसुरा अरयोऽपि सन्धेया इत्यन्वयः कथमिव अहिमूषकयोरिव यावन्मयूरस्तावत्तः सर्पो मूषकवेश्मनि निलीयन्निर्भयः पश्चाज्जित्वा मूषकं कृतवानिति तान्त्रिकाणां सन्ति कार्यार्थगौरवादिति पाठे कार्यार्थं गौरवादरयोऽपि सन्धेया इतिन्यायाः सन्तीत्यन्वयः अहिमूषकसन्धानमिव सर्पग्राहिणा सर्पमूषकौ गृहीत्वा फलकोष्ठेद्वारवर्जमञ्जूषायां निहितौ तत्रोपोषितः सर्पोऽमजुन एकमूषिकाद्वाद्वारमनेन संधिं कुर्वतो निर्यायामिति मूषकमभाषत हे मूषकोऽनतीभूत मत्फणाग्रे स्थित्वा त्वत्कृत फलकरन्ध्रेणावां निर्गच्छाव ततस्तत्रस्थौ कृपाणेन तेन/तौ निर्गत्य स्थितं गाऽऽरभीतं मूषकं भक्षयित्वा सर्पोऽन्यत्र निर्ययाविति किंवदन्ती ॥ २० ॥

अविलम्बितं शीघ्रं यस्य शक्त्या वैशब्द्येन योग्यतां सूचयति ॥ २१ ॥

नेत्रं रज्जुं "रज्जौ चक्षुषि नेत्रं स्यान्नाडायामपि नेतरत्" इत्यभिधानम् ॥ २२—२३ ॥

इच्छन्ति कार्यसिद्धिमिति शेषः सन्धानं वा संरम्भेण द्वेषेण कोपेन वा सान्त्वया क्रियया ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृपेश्वर इति मध्यन्धोक्तिः ॥ १७ ॥ १८ ॥ १९ ॥

अहिमूषकवदिति महाजनाख्यवादो तयोः सद्भावदर्शनात् ॥ २० ॥

यस्येति यस्मिन् पीते सतीत्यर्थः ॥ २१—२३ ॥

संरम्भेण क्रोधेन ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभवः सम्पत्त्यभावो यावत् सम्पत्तौ तु जातायां विग्रह एव विधेय इति भावः ॥ १९ ॥

नीतिमुपदिशति—अरय इति । अहिमूषकेति दैवात् पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण समं सन्धिं विधत्ते पश्चात्तमेव भुङ्क्ते एवं स्वार्थपदवीं गतैः । पश्चादेतान् वधिष्याम इति व्यवसायेनवर्तितव्यं भवद्भिः ॥ २० ॥

यस्य पीतस्य यस्मिन् पीते सति ॥ २१ ॥

क्षिप्त्वेति दुग्धयोगेन मथितवीरुधादिक्वाथपरिणाम एवामृतं भातीति भावः नेत्रं रज्जुम् ॥ २२ ॥

सहायेन मयेत्येतत्फलमाह—क्लेशभाज इति । फलग्रहाः फलममृतं यूयमेव प्राप्स्यथेत्यर्थः ॥ २३ ॥

हे सुराः ! संरम्भेण विग्रहेण सान्त्वया साम्ना यथा ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुरकार्ये यद्यपि एक एवेश्वरः समर्थः तथापि बहुकर्तृकैः समुद्रमन्थनादिभिर्विहर्तुकामस्तानाह ॥ १७ ॥

हे देवाः हे सुरा इति सम्बोधनद्वयं पुनः पुनरभिमुखीकरणाभिप्रायम् ॥ १८ ॥

आत्मनः कर्मफलदातुः मत्तः सकाशात् वो भवः समृद्धयोपिकुर्वेत्तावत्सन्धिर्विधीयताम् ॥ १९ ॥

न भेतव्यं कालकूटाद्विषाज्जलधिसम्भवात् ।
लोभः कार्यो न वै जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥

श्रीशुक उवाच ।

इति देवान्समादिश्य भगवान् पुरुषोत्तमः ।
तेषामन्तर्दधे राजन् ! स्वच्छन्दगतिरीश्वरः ॥ २६ ॥
अथ तस्मै भगवते नमस्कृत्य पितामहः ।
भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः ॥ २७ ॥
दृष्ट्वाऽरीनप्यसंयत्ताञ्जात[1]क्षोभान्स्वनायकान् ।
न्यषेधद्दैत्यराट् श्लोक्यः सन्धिविग्रहकालवित् ॥ २८ ॥
तं वैरोचनिमासीनं गुप्तं चासुरयूथपैः ।
श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कार्यगौरवस्य अनुष्ठीयमाणस्यार्थस्य गौरवे बहुभिर्निर्वर्त्यत्वे सति अरयोऽपि सन्धेयाः अर्थस्य प्रयोजनस्य पदवीं सिद्धिं गतैर्भवद्भिः अहिमूषकवत् हन्तृहन्तव्यभावेन वर्तितव्यमिति शेषः ॥ २० ॥

सन्ध्यनन्तरममृतोत्पादने यत्नः अविलम्बितं शीघ्रं क्रियताम् यस्य पीतस्य जनः मृत्युग्रस्तोऽपि मरणाद्धीनोऽप्यमरो भवेत् ॥ २१ ॥

नेत्रं रज्जुम् ॥ २२ ॥ २३ ॥

हे सुराः ! यथा सान्त्वया साम्ना सर्वेऽर्थाः सर्वप्रयोजनानि सिद्ध्यन्ति तथा संरम्भेण विग्रहेण न ॥ २४ ॥

---

भाषा टीका।

और उस समय उस देवकार्य में एकही आप समर्थ होकर भी, समुद्र मंथनादि से विहार करने की कामना वाले होकर स्वयं देवता ओं से बोले ॥ १७ ॥

॥ श्री भगवान् उवाच ॥

श्री भगवान् बोले, कि—हे ब्रह्मन् ! अहो शंभो ! हे देव लोगो ! तुम लोग सावधान होकर हमारा भाषण सुनों कि-जिससे तुमारा हित होवे ॥ १८ ॥

जब तक तुमारा वैभव ठीक २ होजावे, तब. तक तुम लोग जाकर दानव और दैत्यों से सन्धि अर्थात् मेल करलो क्योंकि उन का काल अनुकूल है ॥ १९ ॥

और समय पर वैरियों के साथ भी मेल करा जाता है यदि किसी कार्य का भारी प्रयोजन आ पड़े तो, और हे देवो ! जब अपना प्रयोजन सिद्ध होजावे तब सर्प और मूषक के तरह वर्तन लगना। जैसे पिटारी में रुका हुआ सर्प निकलने के रास्ता कराने को मूसे से मित्रता करके पीछे किसी समय उसी का भक्षण भी करलेना है इसी रीति से तुम लोग भी दैत्यों से मेल करो ॥ २० ॥

और जल्दी मेलकर अमृत के उत्पादन में यत्न करो, कि जिसके पीते मात्र ही मृत्यु ग्रस्त जंतु भी अमर होजाता है ॥२१॥

जब तुम लोगों का दैत्यदानवों से मेल होजावे, तब क्षीर समुद्र में सब वीरुध तृण लता और औषधियों को डालकर, मन्दर पर्वत को मथानी बनाकर वासुकी सर्पराज की नेती बनाकर ॥ २२ ॥

हे देवो, तुम लोग हमारी सहायता से आयत होकर दैत्यों सहित समुद्र का मंथन करो, बस हम कहदेते हैं कि दैत्य लोगों को केवल क्लेश ही हाथ लगेगा औ फल भागी तुम लोग होंगे ॥ २३ ॥

और एक बात हम और भी सिखाते हैं, कि-असुर लोग जैसी इच्छा करें तुम लोग भी सब उसी का अनुमोदन करना क्योंकि संपूर्ण प्रयोजन जैसे शान्ति से सिद्ध होते हैं वैसे संरम से सिद्ध नहीं होते हैं, ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

वस्तुषु मथनादुत्पन्नेषु ॥ २५ ॥ २६ ॥

सुरास्तु बलिमुपेयुरुपजग्मुः ॥ २७ ॥

---

[1] ( १ ) क्ष्वेलात् इति विजय०।

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥
(१)तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ।
शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥
ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ।
उद्यमं परमं चक्रुरमृतार्थे परन्तप ! ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

असंयत्तानपि दृष्ट्वा श्लोक्यः कीर्तनीयः ॥ २८ ॥

वैरोचनिं बलिं जितमशेषं त्रैलोक्यं येन तम् ॥ २९ ॥

तत्सर्वममृतोन्मथनादि ॥ ३० ॥

तत्र ये अन्ये चासुराधिपाः पौलोमकालेयादयः शम्बरादयश्च तेभ्यश्चारोचत ॥ ३१ ॥

संविदं समयम् ॥ ३२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च जलधिसम्भवात्कालकूटाख्याद्विषान्न भेतव्यं नोद्वेजितव्यं रुद्रो ग्रसिष्यतीति भावः । तथा वस्तुषु मथनादुत्पन्नेषु क्षोभः कामः जातु कदाचिदपि रोषश्च न वै कार्यः ॥ २५ ॥

इतीत्थं देवान्समादिश्याज्ञाप्य भगवान्पुरुषोत्तमः अजितः तेषां ब्रह्मादीनां पश्यतां सतामिति शेषः । हे राजन् ! अन्तर्दधे अन्तर्हितवान् यतः स्वच्छन्दगतिर्यथेच्छव्यापार ईश्वरः ॥ २६ ॥

अथ भगवदन्तर्धानानन्तरं तस्मै तिरोहिताय भगवते नमस्कृत्य पितामहो ब्रह्मा भवो रुद्रश्च स्वं स्वं स्थानं जग्मतुः सुरा इन्द्रादयस्तु बलिं वैरोचनिमुपेयुरुपजग्मुः ॥ २७ ॥

अरीञ्छत्रूनसंयत्तान् युद्धायानुद्यतान्देवान् दृष्ट्वा श्लोक्यः स्तुत्यः दैत्यराट् बलिर्जातक्षोभान्सुरान् हन्तुमुद्यतान् च स्वनायकानसुरसैन्यनायकान् न्यषेधत् न्यवारयत् यतः सः सन्धिविग्रहयोः सन्धिवैरयोः कालमुचितं वेत्ति इति तथा ॥ २८ ॥

ते देवाः असुरयूथपैर्गुप्तमासीनं परमया श्रिया सम्पदा जुष्टं युक्तं जिता अशेषा देवादयो येन तं वैरोचनिं बलिम् उपागमन् समीपमुपाविविशुः ॥ २९ ॥

तत इन्द्रो महामतिः श्लक्ष्णया मृदुया वाचा सान्त्वयित्वा सामोपायेन प्रसन्नं कृत्वा पुरुषोत्तमादजिताच्छिक्षितं तत्सर्वममृतोत्पादनप्रयत्नरूपमकथयत् ॥ ३० ॥

तदिन्द्रोक्तं दैत्यस्य बलेर्ये च शम्बरादयोऽसुराधिपाः ये च त्रिपुरवासिनः तेषां च अरोचत रुचिकरमभूत् ॥ ३१ ॥

ततो देवाश्चासुराश्च ते सर्वे संविदं समयं सङ्केतं कृत्वा परस्परं कृतं सौहृदं यैस्ते हे परन्तप ! अमृतार्थे परममुद्यमं यत्नं चक्रुः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वो युष्माभिः ॥ २५ ॥

तेषां पश्यताम् ॥ २६—२७ ॥

क्ष्वेलो दर्पः सिंहनादो वा स्वो नायको येषां ते तथा ॥ २८—२९—३० ॥

तेऽसुराः दैत्यस्य भृत्याः ॥ ३१ ॥

संविदं सन्धिलक्षणवार्ताम् ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्षोभो दृष्टे वस्तुनि कामस्त्वदृष्टे वस्तुनि ॥ २५—२७ ॥

असंयत्तानप्यरीन् दृष्ट्वा स्वनायकान् दैत्यान् न्यषेधत् । कीदृशान् जातक्षोभान् हन्तुमुद्यतानित्यर्थः ॥ २८—३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तुच्छार्थे रत्नादिषु न क्षोभः तस्तैरसुरैः नीतेषु सत्सु न रोषः । स्त्रीरत्नेषु न कामश्च कार्य इत्यर्थः । वस्तुषु मथनादुत्पन्नेषु तेषामीश्वरः ॥ २५ ॥ २६ ॥

सुरास्तु बलिमुपेयुरुपजग्मुः ॥ २७ ॥

असंयत्तान् अधृतकवचाद्यस्त्रादीनपि दृष्ट्वा स्वनायकान् स्वसेनापतीन् जातक्षोभान् हन्तुमुद्यतान् श्लोक्यो यशस्वी ॥ २८ ॥

जिताशेषं सर्वदिग्विजयिनम् ॥ २९ ॥ ३० ॥

दैत्यस्य दैत्या येऽन्ये तेऽप्यत्रेति उत्पत्स्यमानममृतं सुरानिमान् तिरस्कृत्य वयमेव ग्रहीष्याम इत्यभिप्रायेणारोचत ॥ ३१ ॥

(१) तेभ्योऽरोचन्त इति विज० ।

ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः ।
नन्दत उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥
दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ।
अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥
निपतन्स गिरिस्तत्र बहूनमरदानवान् ।
चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥
तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ।
विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

संविदं सङ्केतं संवादं वा—
"संविद्युद्धे प्रतिज्ञायामाचारे नाम्नि तोषणे ।
सम्भाषणे क्रियाकारे सङ्केतज्ञानयोरपि" ॥
इत्यजयः ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वस्तुषु मथनादुत्पन्नेषु लोभः बाह्येन्द्रियव्यापारः कामः अतिरिन्द्रियव्यापारः परैः संगृहीतेषु रोषश्च जातु कदाचिदपि न कार्यः ॥ २५ ॥

तेषां देवानामीश्वरः ॥ २६ ॥

सुरास्तु बलिमुपेयुः ॥ २७ ॥

असंयत्तान् अपि दृष्ट्वा जातक्षोभान् श्लोकयः कीर्त्यर्हः ॥ २८ ॥

ते देवा जितमशेषं त्रैलोक्यं येन तं वैरोचनिं विरोचनपुत्रं बलिमुपागमन् ॥ २९ ॥ ३० ॥

ये अन्ये तेऽप्यश्चारोचन ॥ ३१ ॥

कृतमन्योन्यतः सौहृदं यैस्ते संविदं समयं कृत्वा अमृतार्थे परममुद्यमं चक्रुः ॥ ३२ ॥

भाषाटीका ।

और समुद्र के मथने से प्रथम विष उत्पन्न होगा तुम लोग उस विष से भय नहीं करना तथा एक बात और भी याद रखना कि, मथने से जो वस्तु उत्पन्न हो उनमें कभी भूलके लोभ न करना और उनके निमित्त द्वेष भी नहीं करना, और उन वस्तुओं में इच्छा भी न करना ॥ २५ ॥

श्रीशुक उवाच ॥

स्वच्छन्द गति वाले ईश्वर, भगवान् श्रीपुरुषोत्तम, इस प्रकार देवताओं को सीख देकर आप अन्तर ध्यान होगये ॥ २६ ॥

अब इस अनन्तर उन भगवान् को नमस्कार कर श्री-ब्रह्माजी और श्री शंकर अपने २ धामको सिधारे, और सब देवता लोग विरोचन के पुत्र बलि महाराज के समीप गये ॥ २७ ॥

दैत्यराज बलिने इन्द्रादिक अपने वैरियों को असज्जित देखकर, और अपने सेनापतियों को क्षुभित देखकर, लड़ाई का निषेध कर दिया क्योंकि ? बलितो बड़े यशस्वी और संधि विग्रह ( मेल लड़ाई ) के समय को जानने वाले रहे ॥ २८ ॥

उन देवताओं ने भी बैठे हुए बलि को देख कि जहां बड़े २ असुर यूथप लोग चारों तरफ रक्षा में जाग्रत हैं, और बलि भी बड़ी सम्पत्ति से सेवित होकर और त्रिलोकी को जीतकर बैठा है उसके समीप में सब देवता लोग पहुंचे ॥ २९ ॥

महामति महेन्द्र ने बड़ी मधुर वाणी से सान्त्वन करके जैसा कुछ पुरुषोत्तम ( श्रीहरि ) से सीखा था वैसाही-बोलता हुआ ॥ ३० ॥

अब वहांपर जो कुछ इन्द्र ने कहा वह बलि को बहुत रुचा और भी जो वहांपर शंबर अरिष्टनेमि और त्रिपुर वासी असुराधिप लोग रहे उन्हों को भी ठीक मालूम भया ॥ ३१ ॥

तब तो देवता और असुर लोगों ने मित्रता करी फिर उत्साह करके अमृत के उत्पादन करने लिये बड़ा उद्यम किया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिघा इव बाहवो येषाम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ।
(१) ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ॥ ३७ ॥
गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ।
आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥
अवरोप्य गिरिं स्कन्धात्सुपर्णः पततां वरः ।
ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् अष्टमस्कन्धे अमृतमथने मन्दराचलानयनं नाम षष्ठोऽध्यायः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विसर्जितः प्रस्थापितः सुपर्णो तत्र स्थिते वासुकेरागमनायोगादिति भावः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उद्यममेवाह—ततस्ते देवासुराः दुर्मदाः परिघा इव बाहवो येषां ते मन्दरगिरिमोजसा बलेनोत्पाट्य नदन्तः शक्त्या भारणाशक्त्यां क्षीरोदधिं निन्युः प्रापयितुं प्रवृत्ता बभूवुः ॥ ३३ ॥

शक्रवैरोचनिप्रभृतयः सर्वे दूरभारोद्वहनेन श्रान्ताः अत एव मन्दरगिरिं वोढुमपारयन्तोऽशक्नुवन्तः विवशाः पथि गिरिं विजहुस्तत्यजुर्न्यपतंश्च ॥ ३४ ॥

स च गिरिस्तत्र पात्यमानः बहूनमरानसुरांश्च चूर्णयामास यतः स गिरिर्महता भारेण कनकाचलः मेरुतुल्यः ॥ ३५ ॥

तदा सुरदानवान्भग्नमनसः भग्नोत्साहान् कांश्चिद्भग्ना बाहव ऊरवः कन्धराश्च येषां तान्विज्ञाय भगवान् गरुडध्वजो गरुडारूढः आविर्बभूव ॥ ३६ ॥

गिरिपातेन विनिष्पिष्टांश्चूर्णीकृतान् सुरान्दानवांश्च विलोक्य ईक्षयाऽमृतदृष्ट्या निर्जरान्देवान् निर्व्रणान्यथावज्जीवयामास असुरांस्तु नाजीवयदिति भावः ॥ ३७ ॥

ततः एकेनैव हस्तेन लीलया गिरिमुद्धृत्य गरुडे आरोप्य स्वयमप्यारुह्य सुरगणैर्वृतः पयोधिं प्रययौ ॥ ३८ ॥

ततः पतताम् पक्षिणां वरः श्रेष्ठः सुपर्णो गरुडः स्कन्धाद्गिरिमवरोप्य जलान्ते जलसमीपे उत्सृज्य निधाय हरिणानुविसर्जितः प्रस्थापितः यथावगात् सुपर्णो तत्र स्थिते वासुकेरागमनासम्भवात् तदागमनाय विसर्जितो यथोचिति भावः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुर्मदाः दुस्सहमदाः ॥ ३३ ॥

दुरन्तं प्रति भारो भरणं यस्य स दुरभारो गिरिस्तस्योद्वहो वहनं तेन श्रान्ताः अपारयन्तः पारं गन्तुमशक्नुवन्तः ॥ ३४ ॥ ३५ ॥

नाम्ना गरुडध्वज इति रूपधारी बभूव ॥ ३६—३७—३८ ॥

सुपर्णो गरुडः जलान्ते जलमध्ये अत्र सुपर्ण इति कथनेनेदं तात्पर्यमवबोद्धव्यं वैवस्वतरैवतमन्वोरन्तरयोरमृतमथनमस्ति तत्र वैवस्वतमन्वन्तरेऽनन्तनाम्ना गरुडेनोढो गिरिः सुपर्णनाम्नोढो रैवतमन्वन्तरे "अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् । अमुनार्थं सुपर्णोढो रैवतस्यान्तरे मनोः" इत्यनेनेति निश्चयोक्तेरिति ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् षष्ठोऽध्यायः ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथा यथावत् । निर्जरान् निर्व्रणान् कृत्वेति शेषः ॥३७-३९॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षष्ठोऽध्यायः ॥ ६ ॥

(१) कटाक्षैः इति वीर० ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परिघा इव बाहवो येषाम् ॥ ३३ ॥ ३४ ॥

यतः कनकाचलः कनकमयत्वात् अचलतीत्यचलः कनकस्य प्रस्तराद्यपेक्षया भाराधिक्यात् ॥ ३५ ॥

बभूव आविर्बभूव ॥ ३६—३८ ॥

विसर्जितः अन्यत्र प्रस्थापितः। सुपर्णो तत्र स्थिते वासुकेरागमनायोगाविति भावः ॥ ३९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षष्ठोऽयमष्टमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ते देवासुराः परिघ इव बाहवो येषां ते ओजसा बलेन ॥ ३३ ॥

दूरं भारोद्वहेन श्रान्तास्तं मन्दरं वोढुमपारयन्तो असंहन्तः ॥ ३४ ॥ ३५ ॥

भग्नमनसः नष्टोत्साहान् ॥ ३६ ॥

येषां यथावत् जीवयामास ॥ ३७—३९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठमोऽध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका।

तदनंतर उन सबों ने पराक्रम से मन्दर पर्वत को, उखाड़कर बड़े दुर्मद लोग नाद करते हुए समुद्र को लेजाने लगे रहे भी सब लोग बड़े शक्तिवाले और बाहु भी उनकी परिघ [ बेंड़ा ] सदृश दृढ रहीं ॥ ३३ ॥

परंच इतने भारी भार को दूर तक ले आने से इन्द्र आदि देवता और बलि प्रभृति दैत्य लोग जब बहुत श्रान्त होगये और उस पर्वत के वहन करने [ लेकर चलने ] में समर्थ नहीं हुए तब विवश होकर उस पर्वत को मार्ग में छोड़ दिया ॥ ३४ ॥

उस समय देव और दैत्यों के ऊपर से गिरता हुआ वह कनकाचल [ पर्वत ] बहुत भारी बोझ से बहुत से देवता और दानवों को चकना चूर करता भया ॥ ३५ ॥

तब श्री हरि गरुडगामी ने देखा कि कितने एक देवता के बाहु भग्न होगये कोई के ऊरु [ जंघा ] टूट गये, किन्हीं के कंधे का चूर्ण होगया इसी से भग्न हुआ संकल्प जिन का ऐसे दैत्य और देवताओं को दुःखित जानकर आप स्वयं प्रकट हुए ॥ ३६ ॥

गिरि के पतन होने से देव दानवों को भग्न देखकर प्रभु ने अपनी अमृत वर्षिणी दृष्टि से देखकर सबों को जैसे के तैसे निर्व्रण [ बिना क्षत के ] कर दिये ॥ ३७ ॥

और प्रभु ने लीला पूर्वक मंदराचल को एक हस्त से गरुड के ऊपर रखकर और आप स्वयं गरुडपर चढ़कर सुराऽसुर गणों से युक्त होकर समुद्र के तीरपर गये ॥ ३८ ॥

और उड़ने वालों में श्रेष्ठ गरुड जी ने अपने कन्धे से पर्वत को उतार कर जलके समीप धरदिया और भगवान की आज्ञा लेकर चले गये ॥ ३९ ॥

इति श्रीमद्भागवत महापुराण अष्टम स्कन्ध में
षष्ठम अध्याय की भागवताचार्य कृत
भाषा टीका समाप्त ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

———○:*:○———

## ॥ सप्तमोऽध्यायः ॥

श्रीशुक उवाच ।

ते नागराजमामन्त्र्य फलभागेन वासुकिम् ।
परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः ॥ १ ॥
आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ! ।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥
तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् ।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥
स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ।
इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ॥ ४ ॥
स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।
कृतस्थानविभागास्त एवं कश्यपनन्दनाः ॥ ५ ॥
ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ६ ॥
ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन ! ।
ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ।
आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥
विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुःकाच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे मथनोद्भूतविषभीत्याऽखिलैर्जनैः ।
स्तुतस्सन् कृपया रुद्रः पपौ विषमितीर्यते ॥ ० ॥

फलभागेन तवाप्यमृते भागो भविष्यतीत्यामन्त्र्य संमन्त्र्य वासुकिं नेत्रं गिरौ परिवीय संवेष्ट्याब्धिं मथितुमारेभिरे ॥१॥

वासुकेर्मुखं शीर्षं दैत्यान्ग्राहयितुमेव पूर्वं हरिः पुरस्तान्मुखे जगृहे ततोऽभवन्मुखं जगृहुः ॥ २—४ ॥

कृतो धारणे स्थानविभागो यैः ॥ ५ ॥ ६ ॥

दैवेन हेतुना स्वपौरुषे नष्टे सति ॥ ७ ॥

विघ्नेशस्य विधिं तेन रचितं विघ्नम् अवितथः सत्योऽभिसन्धिः सङ्कल्पो यस्य ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते देवासुराः फलभागेन तवाप्यमृतभागो भविष्यतीत्येवं वासुकिमामन्त्र्य संप्रार्थ्य नेत्रीभूतं गिरौ परिवीय परिवेष्ट्य मुदा युक्ताः ॥ १ ॥

अमृतार्थे अब्धिं मथितुमारब्धाः हे कुरूद्वह ! वासुकेरग्रं मुखं दैत्यान् ग्राहयितुमेव पूर्वं हरिः पुरस्तान्मुखं जगृहे ततो देवा अभवन् मुखं जगृहुः ॥ २ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तन्मुखग्रहणरूपं महापुरुषस्य हरेश्चेष्टितं दैत्याधिपा नैच्छन् स्वाध्यायश्रुतसंपन्नाः वेदशास्त्राध्ययनसम्पन्नाः जन्मभिः कर्मभिश्च प्रसिद्धाः वयममङ्गलं निकृष्टं महोरगपुच्छं न गृह्णीम इत्यभिप्रायेण तूष्णीं स्थितान् दैत्यान्विलोक्य भगवान्पुरुषोत्तमः ॥ ३ ॥ ४ ॥

स्मयमानो मुखं विसृज्याऽमरैः सहितः पुच्छमग्रहीत् एवम् इत्थं कृतो ग्रहणस्थानविभागो यैस्ते कश्यपस्य नन्दनाः देवासुराः ॥ ५ ॥

परमधिकमायत्ताः उद्यताः पयोनिधिममृतार्थं ममन्थुः अथोते पयोदधौ मथ्यमाने सत्यनाधारोऽद्रिर्मन्दरोऽप्योऽविशद्यामधोभागं प्रविष्टोऽभूत् ॥ ६ ॥

हे कुरुनन्दन ! बलिष्ठैर्देवासुरैध्रियमाणोऽप्यद्रिर्गौरवाद्भारभूयस्त्वादपोऽविशदिति पूर्वेणान्वयः । ते देवासुरास्तु अतिबलीयसा दैवेन हेतुना स्वपौरुषे विनष्टे सति निर्विण्णमनसः अत एव परिम्लानमुखश्रियो बभूवुः ॥ ७ ॥

विघ्नेशस्य विघ्नाधिदेवतस्य विष्वक्सेनस्य तत्पार्षदस्य वा कस्यचिद्विरचितां विधिं चरितं तद्विघ्नमपि विलोक्य तथा सत्यसङ्कल्पः दुरन्तवीर्यः अपारबलो भगवानीश्वरोऽजितः महत् बृहत् अद्भुतञ्च काच्छपं वपुर्भूत्वा तोयं जलं प्रविश्य गिरिं मन्दरमुज्जहार उद्धृतवानित्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हालाहलनाम तमोगुणाज्जन्ममन्यथाज्ञानलक्षणां सुरानाम राजसा अज्ञानलक्षणा अमृतं नाम सात्त्विकं ज्ञानलक्षणां मुक्तिसाधनमित्याद्युत्पत्तिकथनेन महामाहात्म्यं स्पष्टयतेऽत्राध्यायद्वये तत्रादौ मथनप्रकारं शास्त्रश्रवणलक्षणां कथयति–ते नागराजेति । परिधाय वेष्टयित्वा ॥ १ ॥

देवास्ततः पूर्वमगृह्णन्नित्यन्वयः ॥ २–३ ॥

अर्थवादेनाङ्गत्वमुपपादयति । स्वाध्यायेति ॥ ४–५ ॥

अपोऽभितोऽञ्जलमध्यं प्रविष्टः ॥ ६—७ ॥

विघ्नेशेनाधो गतिर्यस्य स तथा तद्गिरिं काच्छपं कच्छपस्य विग्रमानम् ॥ ८—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त इति सार्द्धकम् ॥ १ ॥

ततस्तस्मिन्नभवन् ॥ २ ॥

तन्मुखधारणरूपं महापुरुषचेष्टितं नैच्छन् तत्रैषामकुर्वन्नित्यर्थः ॥ ३ ॥ ४ ॥

कश्यपनन्दना इति षष्ठसप्तमे मन्वन्तरे देवानामैक्यं बोधयति तेन तच्छेदेन इन्द्रादिभेदश्च प्रायिक एवेति ज्ञेयं तत्तच्च पुण्याधिक्यन्यूनत्वाभ्यां समाधेयं यथात्र षष्ठमन्वन्तरादौ जातानामाकस्मिककर्मक्षयनाशेन प्रायोनाशात्तन्मध्ये जातानां सप्तममन्वन्तरानुवृत्तिः यथोक्तं चतुर्थे "प्राक् सं प्रलयं गते" इति । परमं यथा भवति तथा यत्ताः कृतयत्ना अनाधार इति तलस्थमृत्तिकायाः कर्दमप्रायत्वात् अन्यथ प्रथममेव मग्नः स्यात् ॥ ५ ॥ ६ ॥ ७ ॥

विघ्नेशविधिशब्दस्य विघ्नवाचित्वमात्रे तात्पर्यम् । न तु विघ्नेशरचितत्वे स्थलजलरुहशब्दवत् तस्यापि देवतात्वे कारत्वात् ॥ ८—१० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमे कच्छपोद्धृतिः सिन्धुमन्थो विषोद्गमः ।
जनैः स्तुत्या शिवेनैव विषपानमितीर्यते ॥ ० ॥

नागराजं वासुकिं तवाप्यमृते भागो भविष्यतीति संमन्त्र्य तं गिरौ परिवीय नेत्रं कृत्वा परिवेष्ट्य आरेभिरे मथितुमिति शेषः ॥ १ ॥

वासुकेर्मुखं तीव्रं दैत्यान् ग्राहयितुमेव पूर्वं हरिः पुरस्तान्मुखं जग्राह अभवन् तेच मुखं जगृहुरित्यर्थः ॥ २ ॥ ३ ॥

मानं गृहीत्वा विषज्वालया यूयमेव म्रियध्वमित्यभिप्रायेण स्मयमानम् ॥ ४—७ ॥

विघ्ने ईष्टे समर्थो भवतीति विघ्नेशो यो विधिस्तं विलोक्य अस्मिन् विघ्ने अयमेव प्रकारो योग्य इति विचार्य काच्छपं वपुः कृत्वा उज्जहार ऊर्ध्वं प्रतिनीतवान् । कच्छपजातेरेव जलाधःस्थवस्तून्नयने योग्यता स्वाभाविकीति विमृश्येति भावः अवितथाभिसन्धिः सत्यसङ्कल्पः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समुद्राज्जातं विषं प्राशितो हरोऽपि वक्ष्यति सप्तमेन वर्णयन्, तवाप्यमृतभागो भविष्यतीति आमंत्र्य गिरौ नेत्रं कृत्वा परिवीय आवेष्ट्य अब्धिं मथितुमारेभिरे ॥ १ ॥

वासुकेस्तीव्रं मुखम् असुरनिर्बन्धेनैवासुरान् ग्राहयितुं पूर्वं हरिः पुरस्तान्मुखं जगृहे ततस्तदनन्तरं देवा अभवन् मुखं जगृहुः ॥ २ ॥

असुरनिर्बन्धं वर्णयति—न गृह्णीम इति ॥ ३ । ४ । ५ । ६ ॥

दैवेन हेतुना पौरुषे नष्टे सति निर्विण्णमनसः अत एव परिम्लानमुखश्रियः आसन् ॥ ७ ॥

विघ्नेशस्य विधिं तद्रचितं विघ्नं विलोक्य अवितथाभिसन्धिः सत्यसङ्कल्पः दुरन्तवीर्योऽपारबलः गिरिमुज्जहार ॥ ८ ॥

---

तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ।
दधार पृष्ठेन सलक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥
सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग ! पृष्ठतः ।
बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥
तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः ॥ ११ ॥
उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ।
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोऽभिवृष्टः ॥ १२ ॥
उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ।
ममन्थुरब्धिं तरसा मदोत्कटा महाऽद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥
अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥
देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान् ।
समभ्यवर्षन्[1] भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥
मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः ।
यदा सुधा न जायेत निर्ममन्थाऽजितः स्वयम् ॥ १६ ॥

भाषा टीका ।

श्रीरुक्मिणीप्राणनाथाय नमः

उन देव दैत्यों ने नागराज वासुकि को अमृत के भागदेने को कह कर वासुकी को ही नेती बनाकर चारों तरफ पर्वत में लपेट कर अमृत के उत्पन्न होने के लिये समुद्र मथने का आरम्भ किया ॥ १ ॥

हे कुरूद्वह ! उस समय श्रीहरि ने प्रथम वासुकि को मुख की तरफ ग्रहणकिया, तब सब देवतालोग भी उसी तरफ होगये ॥२॥

यह भगवान् की चेष्टा को देखकर दैत्यपति लोगों ने पुच्छग्रहणकरने की इच्छा न करी, और कहने लगे, कि—हम लोग अमांगलिक सर्पकी पूँछ को न पकडें गे ॥ ३ ॥

क्यों कि ? हमलोग भी स्वाध्यायश्रुतसम्पन्न हैं अर्थात पढे लिखे हैं, और उत्तम जन्म और कर्मों से विख्यात हैं । ऐसा कह कर चुपे खडे हुए दैत्यों को भगवान ने देखकर ॥ ४ ॥

किंचित् हँसकर मुख के तरफ भाग को छोडकर देवताओं के सहित आपने पुच्छ का ग्रहण किया, तब दैत्यों ने वासुकि का मुख पकडा इस प्रकार उन कश्यपनंदन अर्थात देव दैत्यों ने अपने २ स्थान का विभाग करलिया ॥ ५ ॥

और बडे यत्न वाले होकर अमृत के लिये समुद्र को मथने लगे, जब उनों ने मथने का आरंभ किया तब नीचे से बिना आधार का वह पर्वत मारे बोझके बडे २ बली लोगों का पकडा हुआ भी जल में डूबगया । हे पाण्डुनन्दन ! तब तो उन लोगों के मनमें बडा निर्वेद [ वैराग्य ] आया और अतिबलिष्ठ दैव से जब उनके पौरुषके नाश होगया तब उन सबों के मुखकी कान्ति भी सब उतर गई ॥ ६ ॥ ७ ॥

परमात्मा ने उस समय उस दैविक विघ्न को देखकर, दुरन्तपराक्रम वाले सत्यसंकल्प प्रभु ने आप० अपूर्व भांति अद्भुत कच्छप के रूप को धारण करके जल में प्रवेश कर पर्वत को ऊपर को उठाया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लक्षयोजनः प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन ॥९॥
तस्य गिरेरावर्तनं भ्रमणमङ्गकण्डूयनं मेने ॥ १० ॥
आसुरेणासुराकारेण दैवेन देवाकारेण रूपेणाविशत्॥११॥१२॥

(१) समवर्षन्भगवद्वशा घना इति पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मेति देवदैत्यमध्ये गोत्रे दाढर्यरूपेण नेत्रे अमेद्याबोधरूपेण परेण हरिणा चोभितं नक्राणां चक्रं समूहो यस्मिन् ॥ १३ ॥

दृशश्च मुखानि च श्वासाश्च अहीन्द्रस्य साहस्रमपरिमिताः कठोरा ये दृगादयस्तेभ्यो निर्गताभ्यामग्निधूमाभ्यामाहतं वर्चो येषां ते सरलाः द्रुमविशेषाः ॥ १४ ॥

देवांस्तु भगवद्वशा घनाः समभ्यवर्षन् समुद्रोर्मिभिरुपगूढा वायवश्च शीतला ववुर्वातिरूपम् कथम्भूतान् तस्याहीन्द्रस्य श्वासशिखाभिर्हता प्रभा येषां धूम्रायम्बरादीनि येषाम् ॥ १५-१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमुत्थितं कुलाचलं मन्दरं वीक्ष्य सुराश्चासुराश्च पुनर्निर्मथितुं समुत्थिताः बभूवुः गिरिं बिभ्रतं कूर्मकायिणं मर्षयन्ति, दधारेति । लक्षं योजनानि प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन दधार मन्दरमिति शेषः । कथंभूतः अपरो द्वीप इव जम्ब्वादिद्वीप इव महान्निवृत्तदेहः ॥ ९ ॥

सुरासुरेन्द्रैः कर्तृभिभुजानां वेगेन बलेन वेपितं कम्पितं भ्रमन्तं गिरिम् अङ्ग हे राजन् ! पृष्ठे विभ्रदयमेयोऽपरिच्छिन्नबलशक्त्यादियुक्त आदिकच्छपरूपस्तद्रावर्तनं गिरिभ्रमणम् अङ्गकण्डूयनं मेने ॥ १० ॥

एवं जले कच्छपवपुषा गिरिं बिभ्रदेव विष्णुः पुनरसुरानसुररूपेणाविशत् कथम्भूतः तेषामसुराणां बलं वीर्यं च ईरयन्प्रेषयमानः तथा देवेन रूपेण देवगणान् बलवीर्यादिकमुद्दीपयन्नाविशत् नागेन्द्रं वासुकिमबोधरूपः निद्रारूपः चकारात् नागेन्द्ररूपश्चेत्यर्थः अतः पृथक्स्वरूप एव सर्वबलोत्साहवीर्याणि प्रावर्त्तयदितिभावः ( इन्द्रादिरूपः ) प्राविशत् ॥ ११ ॥

अगेन्द्रमुपरि गिरेरुपर्यपरो गिरिराडिव सहस्रबाहुरेकेन हस्तेन गिरिमाक्रम्य पुनर्दिव्यभिनः स्तुवद्भिर्ब्रह्मादिभिः कर्तृभिः सुमनोभिः पुष्पैः कर्षोऽभिवृष्टः तस्थौ ॥ १२ ॥

गिरिरूपर्वपक्षन्दोयनेत्रयोर्गिरिनेत्रयोरात्मनि देवासुरेषु च प्राविशता परेण परमात्मना सन्धिताः समुपोद्बलिताः अत एव मदोत्कटा देवासुरास्तरसा बलेन महाद्रिणा मन्दरेण क्षोभितं नक्राणां चक्रं समूहो यस्मिन् । तमब्धिं ममन्थुः ॥ १३ ॥

तथा दृशः नेत्राणि च मुखानि च श्वासाश्चाहीन्द्रस्य वासुकेः साहस्रमपरिमिताः कठोरा ये दृगादयः तेभ्यो निर्गताभ्यामग्निधूमाभ्यां हतं वर्चो येषां तेऽसुराः पौलोमादयः दावाग्निदग्धाः सरलाः द्रुमविशेषास्तद्वदासन् ॥ १४ ॥

देवांस्तु मघवद्वशा इन्द्राधीनाः घना मेघाः समभ्यवर्षन् कथम्भूतांस्तस्य वासुकेर्यःश्वासस्तस्य शिखया हता प्रभा येषां धूम्राणि निश्वासधूमाक्रान्त्यम्बराणि वस्त्राणि अम्बराणि कञ्चुकान्यवनानि च येषां तान् किञ्च समुद्रस्योर्मिभिस्तरङ्गैरुपगूढाः संवृता वायवः पवनाश्च ववुः प्रसस्रुः ॥ १५ ॥

यदा देवासुरैर्मथ्यमानादप्यब्धेरमृतं न जायेत तदा भगवानजितः स्वयमेव निर्मन्थ मन्थनं चकार ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्य गिरेरावर्तनं परिभ्रमणं कण्डूयनं मेने इत्यन्वयः ॥१०॥

तमोगुणप्रवर्तकं रूपं यस्य स अबोधरूपः निर्यग्रूप इति वा ॥ ११—१२ ॥

आत्मन्यन्तः ॥ १३ ॥

अहीन्द्रस्य साहस्रमङ्ख्यां गतानि करालानि च दिश इव विस्तृतानि च मुखान्यहीन्द्रसाहस्रकरालदिङ्मुखानि तेषां निःश्वासा एवाऽग्नयः निःश्वासाग्नयस्तैर्धूम्राहतं वर्चो येषां ते तथा ॥ १४ ॥

अम्बरं वस्त्रं कञ्चुकः कूर्पासकम् ॥ १५ ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आसुरेण राजसेन दैवेन सात्त्विकेन शक्तिविशेषेण अबोधस्तु तामसः ॥ ११ ॥

विधि ब्रह्मभवेन्द्रमुख्यैरित्यत्र भवस्य कैलासे दिवि च महेन्द्रादीनां क्षीरोदतीरे दिवि च कायव्यूहो ज्ञेयः ॥ १२—१३ ॥

अहीन्द्रसाहस्रः सहस्रसंख्यैव परिवृताः न तु शक्त्यादिसङ्ख्यया ॥ १४ ॥ १५ ॥

मथ्यमान इत्यादि सटीकं पद्यद्वयं विगीतम् ॥ १६-१८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र कुलाचलं स कच्छपः पृष्ठेन दधार । महान् अबाधश्यो जम्बूद्वीप इवेत्यर्थः ॥ ९ ॥

पृष्ठोपरि गुरुतरपर्वतपरिभ्रमणेन च न तस्य कष्टं प्रत्युत सुखमेवाभूदित्याह सुरेति ॥ १० ॥

कतिपयक्षणानन्तरं तेषां मन्थने सामर्थ्याभावं वासुकेश्च संघर्षणपीडया प्राणत्यागमिव विलोक्य कृपया प्रभुरेवं विदधावित्याह—तथेति । आसुरेण राजस्या शक्त्येत्यर्थः । ईरयन् प्रवर्तयन् दैवेन रूपेण सात्त्विकया शक्त्येत्यर्थः । अबोधरूपः तामसशक्तिमयस्तमित्यर्थः । अबोध इति मोहेन तस्य पीडाबोधो माभूदिति भावः ॥ ११ ॥ १२ ॥

ततश्च मन्दरमूर्ध्नमुपक्रान्तं वीक्ष्य बाक्रमणाकतवाह—उपरीति । ब्रह्मादिष्वपि मुख्यैर्विष्णुपार्षदैरित्यर्थः । यद्वा इन्द्रा-

**मेघश्यामः कनकपरिधिः [1]कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ।**
**जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः ॥ १७ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दीनां क्षीरोदतीरे दिवि च कायव्यूहो ज्ञेयः तदेवम् उपरि सहस्रबाहुरूपेण अधः कच्छपरूपेण आत्मनि दैत्यदेवसमूहे आसुरदैवरूपेण गोत्रे दार्ढ्यरूपेण नेत्रे अबोधरूपेण प्राविशता परेण हरिणा ॥ १३ ॥

भा सप्यगेव हृतवर्चसः सरला द्रुमभेदाः ॥ १४ ॥

देवांश्च दुर्व्वर्त्तिनस्तत्पुच्छधारिणोऽपि सुधा न जायतेति मन्थनाधिक्यादमारभाग निःसृत एव सुधोद्गमासम्भवादिति भावः ॥ १५ ॥ १६ ॥

-----

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं कुलाचलं मन्दरं वीक्ष्य सुरासुरा निर्मथितुमुद्यताः स कूर्मस्तु अपरो द्वीप इव लक्षयोजनानि प्रस्तारोऽस्यास्तीति तथा तेन पृष्ठेन दधार ॥ ९ ॥

अङ्ग हे राजन् ! तदावर्त्तनं तस्य मन्दरस्य भ्रमणं अङ्गकण्डूयनं मेने ॥ १० ॥

आसुरेण असुराकारेण दैवेन देवाकारेण नागेन्द्रमबोधरूपः पीडाभावार्थं जडाकाररूपः प्राविशत् ॥ ११ ॥

नागेन्द्रं हस्तेनाक्रम्य तदुपरि अन्यगिरिराडिव तस्थौ ॥१२॥

उपर्यधोगिरेरिति शेषः । गोत्रनेत्रयोः गिरिनागयोः आत्मनि देवासुरेषु च प्राविशता परेण परमेश्वरेण समेधिताः महाद्रिणा मन्दरेण क्षोभितं नक्राणां चक्रं यस्मिन् तं ममन्थुः ॥ १३ ॥

अहीन्द्रस्य साहस्रपरिमिताः कठोराः दृशः नेत्राणि मुखानि च श्वासाश्च तेभ्यो निर्गताभ्यां धूमाग्निभ्यां भा सम्यगेव हृतं वर्चो येषां ते दवाग्निदग्धाः सरला द्रुमविशेषा इवाभवन् ॥१४॥

समुद्रोर्मिभिरुपगूढाः वायवश्च ववुः ॥ १५—१६ ॥

-----

भाषा टीका ।

सब देव और असुरों ने फिर उठे हुए उस पर्वत को देखकर, मन्थन करने को त्यार हुए और श्रीहरि ने एक लक्ष योजन विस्तार वाला कूर्म रूप धारण कर अपने पृष्ठ पर पर्वत को धारण किया, आपका रूप ऐसा विस्तार वाला रहा जैसे एक महान् द्वीप हो ॥ ९ ॥

हे राजन् ! देवदैत्यों के भुजबल से फिरते हुए उस मंदराचल को भगवान ने पृष्ठ पर धार कर श्री आदिकूर्म ने ऐसा माना कि जानो हमको कोई खुजला रहा है ॥ १० ॥

और उस काल में गोविन्द आसुर रूप से असुरों के और दैव रूप से देवों के मध्य में तथा अबोध रूप से नागेन्द्र के विषे प्रवेश कर उनके बल पराक्रम को बढ़ाते हुए, उद्दीपन करते क्योंकि आप विष्णु अर्थात् प्रवेश करने के स्वभाव वाले हैं ॥ ११ ॥

तदनन्तर सहस्रभुजा वाले प्रभु ने एक दूसरे पर्वत के सदृश रूप धारण कर मन्दराचल के ऊपर हाथ से दबाकर खड़े होगये ऐसी लीला को देखकर आकाश में स्थित होकर ब्रह्म रुद्र आदि देवताओं ने स्तुति करी और गोविन्द पर पुष्पों की वर्षा करी ॥ १२ ॥

जब भगवान ने ऊपर नीचे आत्मा में पर्वत में नेती में इत्यादि सबों में अपनी शक्ति द्वारा प्रवेश किया तब वे मदोत्कट दैत्य दानव वृद्धि को प्राप्त होकर महाद्रि के फिरने से क्षुभित हुए मगर मच्छ जिसके ऐसे उस समुद्र को बड़े वेग से मथने लगे ॥ १३ ॥

तब वासुकि के हजारों कठोर दृष्टि मुख और श्वास से निकला जो अग्नि और धुआं उससे असुरों की कान्ति नष्ट होगई । पौलोम कालेय बलि इल्वल इत्यादि सब दैत्य लोग कुछ तो पहिले ही काले थे फिर वासुकी के अग्नि धूम से तो वन की आग्नि से जले हुए चीड़ के पेड़ सदृश होगये ॥ १४ ॥

यद्यपि देवताओं की भी कान्ति वासुकि के श्वास की अग्नि के शिखा से नष्ट होगई और वस्त्र भूषण माला कवच वदन आदिक सबही मलीन होगये, तथापि भगवान के आज्ञानुसार मेघों ने उनके ऊपर वर्षा करी और समुद्र की तरंगों के ऊपर से आई हुई शीतल पवन भी चलने लगी इस कारण से देवों को उतनी व्याकुलता न हुई ॥१५॥

उस समय देव और असुरों के यूथ पतियों ने भी बड़े श्रम से समुद्र को मथा पर जब अमृत नहीं निकला तब श्रीहरि ने स्वयं आपही इकेले मथा ॥ १६ ॥

-----

श्रीधरस्वामिकृतभावार्थदीपिका ।

धृतोऽद्रिर्येन स धृताद्रिर्भगवान्परमपुरुषोऽन्यत्समशोभतेत्यन्वयः । कथम्भूतः कनकपरिधिः पीतवासाः कर्णयोर्विद्योतमाना विद्युत्कुण्डललक्ष्मी यस्य तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचाः यस्य स तथा जैत्रैर्जिष्णुभिः दन्दशूकं सर्पं प्रतिगिरिः प्रतिद्वन्द्वी पर्वतः ॥ १७ ॥

(1) कर्णद्योतिविद्युन्मूर्ध्नि कामन् विपति वाचितः सम्भवो इति वीर० ॥

निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः।
सम्भ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥
तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति।
भीताः प्रजा दुद्रुवुरङ्ग! सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥
विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभिमतं मुनीनाम्।
आसीनमद्रावपवर्गहेतोस्तपोजुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥

प्रजापतय ऊचुः।

देवदेव महादेव भूतात्मन्भूतभावन।
त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥
त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः।
तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥
गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो।
धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥
त्वं ब्रह्म परं गुह्यं सदसद्भावभावनः।
नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हालाहलमित्याह्वा नाम यस्य सम्भ्रान्ता मीना उन्मत्ता मकरादयश्च यस्मिंस्तस्मात् तिम्यादिभिराकुलाच्च ॥ १८ ॥

तद्विषम् अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा कुतः उग्रो वेगो यस्य तदेवाऽऽह—दिशिदिशीति। यद्वा उग्रा वेगा रोमाञ्चादयो यस्मात्तत् एवम्भूतं विलोक्य भीता अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुर्जग्मुः ॥ १९ ॥

त्रिलोक्या उद्भवाय देव्या सहाद्रौ कैलासे आसीनं तथापि मुनीनामभिमतं तेषामेवापवर्गाय तपो जुषाणम् ॥ २० ॥

निर्गुणं सगुणं चैव शिवं हरिपराक्रमैः।
स्तुवन्तस्तु प्रजेशाना नामन्यन्नान्तरं तयोः ॥ २१ ॥ २२ ॥

सत्त्वेनस्थितो विष्णुरिति प्रसिद्धं तत्राहुः—गुणमय्येति। अस्य जगतो यदा सर्गादिनिमित्तं तदा हे भूमन् स्वदृक् स्वतःसिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से ॥ २३ ॥

तत्र हेतुः—त्वं ब्रह्मेति। सदसतो भावान्देवतिर्यगादिरूपान्भावयतीति तथा तत्त्वं तु त्वद्व्यतिरिक्तं नास्तीत्याहुः आत्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाभातस्तस्मादीश्वरः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथानन्तरमजितं वर्णयति—मेघश्याम इति। मेघ इव श्यामः "उप-मानानि सामान्यवचनैः (।२।१।५५") इति समासः कनकपरिधिः कनकपरिधानः पीताम्बरः कण्ठे द्योतमानविद्युदिवाऽऽभरणम्: निपत्याकाशं मूर्ध्ना सकिरीटेनाक्रमन् चलितं स्रजं वनमालां बिभर्तीति तादृशः रक्ते नेत्रे यस्य सः जगतामभयप्रदैर्दोर्भिर्भुजैर्दन्दशूकं सर्पं गृहीत्वा मथ्नता गिरिणाऽपि मथनकर्माधृताद्रिरजितोऽपरो गिरिरिवाशोभत ॥ १७ ॥

एवं निर्मथ्यमानादुदधेः प्रथमम् उल्बणं दुःसहं हालाहलाख्यं विषमुदभूत् कथम्भूतादुदधेः संभ्रान्ता मीना उद्भ्रान्ता मकरादयश्च यस्मिन् तस्मात् तिम्यादिभिर्मत्स्यविशेषैराकुलाच्च ॥ १८ ॥

विषं विशिषंस्ततो भीतानां प्रजानां सदाशिवप्रपत्तिमाह—तदिति। तद्विषमप्रति प्रतिक्रियाशून्यमप्रतिमं वा कुतः उग्रः वेगो यस्य तदेवाह दिशिदिशि प्रतिदिशम् उपर्यधश्च विसर्पत् उत्सर्पत् उद्गच्छत् एवंविधं तद्विषं दृष्ट्वेति शेषः। अङ्ग हे राजन्! सेश्वराः स्वपालकाः प्रजाः त्रिलोकस्थाः अरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुर्जग्मुः ॥ १९ ॥

त्रिलोक्याः भवाय समृद्ध्यै देव्या भवान्या सहाद्रौ कैलासे आसीनमपवर्गहेतोस्तपोजुषाणं मुनीनामभिमतं देववरं सदाशिवं विलोक्य स्तुतिभिः प्रणेमुः तुष्टुवुः प्रणेमुश्च ॥ २० ॥

स्तुतिमेवाह—देवदेवेत्यादिना स्वकर्मका इत्यन्तेन। तत्र परमकारणभूतभगवदसाधारणधर्मैरारोपितैर्वा तैः स्तुतिः क्रियते इति सर्वमुपपन्नं रुद्रादिविषयाणां शास्त्राणां रुद्रशरीरकपरमात्म-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ायन्तत्वेन वा रुद्रस्य परमात्मावेशावतारकरूपत्वाद्वा सर्वं घटते । देवानामपि देव, हे सर्वभूतान्तरात्मन्, हे भूतभावन ! भूतग्रहः शरणं गतानस्मान् त्रैलोक्यं दहतीति त्रैलोक्यदहनः कर्तारि ायुः तस्मात् विषात्त्राहि पाहि ॥ २१ ॥

सर्वस्य जगतो बन्धमोक्षयोस्त्वमेक एवेश्वरः तमेतंभूत प्रपन्नदुःखहरं त्वामेव कुशलाः सुधियः अर्चन्त्याराधयन्ति मोक्षेश्वरत्वम् उपायोपदेशद्वारकम् इत्यभिप्रायेण विशिनष्टि गुरुर्मति ॥ २२ ॥

गुणमय्या त्रिगुणात्मिकया स्वशक्त्या स्वांशभूतया मायया अस्य जगतः यदा सर्गादीन् विधत्से करोषि तदा हे विभो, हे स्वदृक् स्वप्रकाश, हे भूमन् ! ब्रह्मविष्णुशिवाभिधां धत्से बिभर्षि ॥ २३ ॥

गुह्यमौपनिषदं परमं ब्रह्मसद्भावनं चिदचिद्रूपपदार्थभावनं परंब्रह्म त्वमेव "ब्रह्म हविरुत्कर्षात्" (४।१।५) इति न्यायेनैवं विपश्चितः स्तुवन्ति अत एव ब्रह्मत्वेन स्तुतमप्यात्मानमब्रह्मभूतं ज्ञात्वा वक्ष्यति रुद्रः—

"अहो बत भवान्येतत् प्रजानां पश्य वैशसम् ।
पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ॥—

प्रीते हरौ भगवति" इति आपन्नानामब्रह्मणां मयि ब्रह्मत्वेन स्तुतिं पश्येति भवान्यै दर्शयित्वा अनन्दयं भूतदयया भगवान् सर्वान्तरात्मा परब्रह्मभूतः तुष्यतीति वक्ष्यति तत्तस्मान्न रुद्रे परत्वभ्रमः कार्यः तस्माद्रुद्रशरीरकपरमात्मगताः सर्वे दैवतप्रकरणोदिता धर्माः इत्यवगन्तव्यम् "भूयसां स्यात्सधर्मत्वम्" इति न्यायेन भगवत्पारम्यस्य प्रायशोऽस्मिन्पुराणे प्रतिपादनात् नानाशक्तिभिराभातश्चिदचित्कालादिशक्तिविशिष्टतया ऽऽभातः प्रपञ्चस्त्वमेव जगदीश्वरस्तदन्तरात्मा च त्वमेव ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कनकपरिधिः कनककाञ्चीकः कर्णविद्योतविद्युदिति सुतोपमेयमिति कर्णशब्दप्रयोगेन कुण्डलद्वयमुपलक्ष्यते तेनैवं योजनीयं विशिष्टौ द्योतौ ययोस्ते विद्योते कर्णयोर्विद्योते विशिष्टदीप्तिमी विद्युद्रूपे इव कुण्डले यस्य स तथा विलुलिता विचलिता वनस्रग्वनमाला तां धारयतीति मूर्ध्नि शोभमानविलुलितवनस्रग्धरः दन्दशूकं नागेन्द्रं मथ्ना मन्दराख्येन ॥ १७ ॥

उन्मकराः उन्मुखमकराः उत्तिमयः उत्पतिततिमिमत्स्याः सम्भ्रान्तैर्मीनादिभिः आकुलाब्धेः ॥ १८ ॥

दुद्रुवुः शीघ्रं जग्मुः ॥ १९—२२ ॥

यदा सर्गादीन् धत्से तदा ब्रह्माद्यभिधां धत्से ॥२३॥

सदसच्छीवा देवासुरतिर्यगादयस्तान् भावयत्युत्पादयति वर्धयति वशीकरोति चेति अतः सदसद्भावभावनम् अनेन ब्रह्मशिवयोरन्तर्यामित्वेन स्थितमेव जगदुत्पत्त्यादि करोतीति निरन्तराणि नानाशक्तिभिः आभासः आ समन्ताद्भासो भासनं यस्य स तथा ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विशीर्यदशीति शनैः शनैरेवेति ज्ञेयम् । शीघ्रत्वे झटिति सृष्टिनाशापत्तेः प्रजाश्चात्र देवासुरा एव । साधारणानां समुद्रवृन्दवल्गुनाद्यशक्तेः तत्रापि झटिति ऊर्ध्वस्थितनक्रदुर्व्यूहानां तत्रस्थशिवप्रभावेनैव तथाहिर्यानिश्चया अधः स्थितानान्तु तस्मिन्नगमनम् । विषाग्निना झटित्यूर्ध्वस्थानेः सम्भ्रमेण तत्तदस्फूर्तेश्च अरक्ष्यमाणाः श्रीशिवमाहात्म्यदर्शनार्थं श्रीभगवत उदासीनीभावात् ॥ १९ ॥ २० ॥

निर्गुणमित्यादिटीकापद्ये हरिपराक्रमैरित्यनेन हरेरेव मुख्यत्वमायातम् अत एव यत्तदन्तरमस्ति तदपि स्तुतितात्पर्यासामञ्जस्यत्यागाय "स्तुतिश्च महिम्ना स्तूयमाना हि देवा वीर्येण वर्धन्ते" इति वैदिकन्यायेन कालकूटनाशनार्थम् । श्रीहरेस्मुखत्वन्तु स्वयं श्रीशिवेनैव वक्ष्यते "पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः । प्रीते हरौ भगवति प्रीयेऽहं सचराचरः" । इति । तथा नवमे "वयं न तात ! प्रभवाम भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोशाः । भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः" इति । "एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः" इत्यादि ॥ २१—२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कनकपरिधिः कनकवर्णं परिधानं यस्य सः विद्युन्मकरकुण्डलं मथ्ना मथनसाधनेन गिरिणा प्रतिगिरिः कनकगिरेस्तस्य प्रतियोगी इन्द्रनीलगिरिरित्यर्थः ॥ १७ ॥

विषमभूदिति क्षीरोदाद्विषस्यामृतस्य च सत्त्वात् मथने सति प्रथमं विषभागः पृथक्तया उत्थित इति ज्ञेयं हालाहलाह्वमिति "हालाहलं हालहलं तथैव च हलाहलम्" इति त्रिरूपकोशः । सम्भ्रान्ताः कथं विपत्तिरागतेत्यादिविभ्रा मीनादयो यस्मिस्तस्मात् उन्मकर उत्कृष्टो मकरः तिमितिमिङ्गिलौ मत्स्यभेदौ ॥१८॥

दिशिदिशि विसर्पत् उपरि उत्सर्पत् अधो अपसर्पच्चेति शेषो ज्ञेयः । सर्पणं च शनैः शनैरेवेति ज्ञेय शीघ्रत्वे झटिति सृष्टिनाशापत्तेः प्रजाश्चात्र देवासुराः एव साधारणानां झटिति समुद्रवल्गुनाद्यशक्तेः अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा विलोकयति शेषः । अरक्ष्यमाणा इति तदानीं भगवता तदुपेक्षयां स्वभक्ताभिप्राय चन्द्रार्धमौलये तादृशकीर्तिप्रदानार्थमिति ज्ञेयम्॥१९॥

भवाय भूत्यै सम्पदर्थमिति यावत् अद्रौ कैलासे मुनीनामपवर्गहेतोस्तपो जुषाणम् ॥ २० ॥

हे महादेव ! त्राहि त्रायस्व ननु, महादेवो न त्रायते किन्तु संहरति संहारावतारत्वात् तत्राहुः भूतात्मन् ! भूतानि चेतयसि हे भूतभावन ! भूतानि पालयस्येव ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, एतन्मात्रतो विष्णुरेव ते शरणं यातेति तत्राहुः त्वमेकः नहीश्वराः बहवो भवन्त्यतस्त्वं विष्णुश्चैक एव मायागुणस्पर्शास्पर्शाऽभ्यामेव भेद इति भावः ॥ २२ ॥

पुरुषरूपत्वेन स्तुवन्ति–गुणमय्येति। यदा सर्गादीन् धत्से तदा ब्रह्मादिसंज्ञां धत्से ॥ २३ ॥

निर्विशेषस्वरूपत्वेन स्तुवन्ति–त्वं ब्रह्मेति। ब्रह्मत्वेन स्तुवन्ति सदसद्भावात् उत्कृष्टनिकृष्टस्वभावात् देवतिर्य्यगादीन् भावयसि सृजसि विष्णुत्वेन स्तुवन्ति नानेति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथो अनन्तरं धृतः अद्रिर्येन सः मेघ इव श्यामः कनकवत् परिधिः परिधानं यस्य सः कर्णयोर्विद्योतमाने विद्युतौ कुण्डललक्षणौ यस्य सः मूर्द्ध्नि भ्राजन्तो विलुलिता विकीर्णाः कचाः केशाः यस्य सः जैत्रैर्जिष्णुभिः जगतामभयदैर्दोर्भिर्दन्दशूकं सर्पं गृहीत्वा मथ्ना गिरिरूपेण मथनसाधनेन अब्धिं मथ्नन् प्रतिगिरिरिव प्रतिद्वन्द्वी पर्वत इवाशोभत ॥ १७ ॥

सम्भ्रान्ताः मीनाः उद्गताः मकरादयो यस्मिन् तस्मात्तिमिंगिलादिभिराकुलात् महोदधेः प्रथमं विषमभूत् कथम्भूतं महोल्बणं अतिदुःसहं हालहलमित्याख्या नाम यस्य तत् "हालाहलं हालहलं तथैव च हलाहलम्" इति द्विरूपकोशः ॥ १८ ॥

अहेस्तद्विषम् अपति अप्रतिमं दिशि अधश्च विसर्पत् उपरि उत्सर्पच्च दृष्ट्वा प्रजाः सदाशिवं शरणं दुद्रुवुः जग्मुः कथम्भूताः अरक्ष्यमाणाः तत्रत्येनाप्यजितेनेति शेषः। तद्रक्षणे तु गरलपानाभावे नीलकण्ठत्वादिचिह्नतिरोभावापत्तिरिति भावः ॥ १९ ॥

ताः प्रजाः देववरं विलोक्य स्तुतिभिः तुष्टुवुः प्रणेमुश्च कथंभूतं त्रिलोक्याः भवाय समृद्ध्यै भवान्या सह अद्रौ आसीनम् मुनीनां मननशीलानां तत्त्वावगन्तॄणामभिमतं सम्मतं तपः अपवर्गहेतोः जुषाणम् ॥ २० ॥

"सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" "एते सर्वं तस्य यशो महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः" इत्यादिब्रह्मशिववाक्यात् "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान्" इति हरिवंशे शिववाक्यात् "नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते" इति श्रुतेश्च शिवस्य भगवज्जन्यत्वेन भगवत्संहारशक्तियुक्तत्वेन भगवदंशत्वेन च तदभिन्नत्वात् परमकारणभूतभगवदसाधारणैर्गुणैः स्तुतिः क्रियते–देव देव इत्यादिना। त्राहि त्रायस्व ॥ २१ ॥ २२ ॥

गुणमय्या सत्त्वादिगुणमय्या ॥ २३ ॥

सदसतः साध्वसाधून् सुरासुराभावान् भावयतीति तथा आत्मा जगदात्मा जगदीश्वरश्च ॥ २४ ॥

---

भाषा टीका।

जब आप इकले ही समुद्र मथने लगे उस समय की शोभा कहते हैं, कि—आप तो स्वयं मेघ के सदृश वर्ण वाले हैं और कटि के ऊपर जो आपने पीतांबर का लपेटा दिया है सो ऐसे मालूम होता है कि जैसे सजल मेघ पर सुवर्ण का लपेटा दिया हो, और मथने से कर्णों में चलायमान मकराकृतिकुण्डल बिजुली सदृश चमक दमक देरहे हैं, और मस्तक पर हलते चलते हुए केश न्यारी शोभा कर रहे हैं, मालाओं को धारण किये हुए हैं और कमल सदृश लोचनों में किंचित् ललाई भी शोभित होरही है, इस प्रकार के श्रीहरि जगत के अभय देने वाले आपने विजयी बाहुओं से वासुकि नाग को ग्रहण कर मंदराचल रूप मथानी से समुद्र को मथते हुए दूसरे पर्वत के सदृश शोभा को प्राप्त होते हुए, और कूर्मरूप धारण करके नीचे से पर्वत को भी आपही धारण किये हुए हैं ॥ १७ ॥

इस प्रकार भगवान के मथने से उस समुद्र से हालाहल नाम जिसका ऐसा बड़ा तीक्ष्ण और जिसकी उपमा नहीं अथवा जिसके सहन पर कुछ उपाय नहीं इस प्रकार का विष उत्पन्न हुआ, उस समय समुद्र के मीनादि जंतु संभ्रांत होगये और मकर कच्छपादि जंतु बाहर निकल आये, तथा द्वीप ग्राह और तिमिंगल ये सब जंतु व्याकुल होगये ॥ १८ ॥

जब वह विष असह्य वीर्य वाला बड़े वेग से ऊपर नीचे और चारों तरफ को फैलने लगा। तब हे राजन्! प्रजापतियों सहित प्रजालोग उसके भय से भागने लगे और जब किसी ने रक्षा न करी तब सदाशिव श्रीमहादेव जी के शरण गये ॥ १९ ॥

और उन्हों ने देव वर श्रीमहादेव जी को देखा, कि त्रिलोकी के कल्याण के लिये श्रीपार्वती जी के सहित कैलास पर्वत पर विराजमान हैं और मोक्षार्थ मुनि लोगों के अभिमत तप का सेवन कररहे हैं ऐसे सदाशिव को प्रजापति लोगों ने प्रणाम किया ॥ २० ॥

॥ प्रजापतय ऊचुः ॥

प्रजापति लोग बोले, कि हे देवदेव! हे महादेव! हे भूतात्मन्! हे भूतभावन! त्रैलोक्य के जलाने वाले इस विष से हमारी रक्षा करो, हम लोग आपके शरण हैं ॥ २१ ॥

अब सब प्रजापति लोग शिवके अंतर्यामि परमात्मा की बुद्धि से श्रीशिवजी की स्तुति करने लगे, और बोले, कि–हे समर्थ! संपूर्ण जगत के बन्ध मोक्ष के आपही नियंता हो, प्रपन्नों की आर्ति (दुःख) के हरण करने वाले, और अज्ञानरूप अंधकार को दूर करने वाले ऐसे आप को कुशल लोग पूजते हैं ॥ २२ ॥

हे भूमन्! हे विभो! आप अपनी त्रिगुण मयी माया शक्ति से जगत के सृष्टि स्थिति और संहार के लिये ब्रह्म

त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्स्वभावः ।
कालः क्रतुः सत्यमृतञ्च धर्मस्त्वय्यक्षरं यत् त्रिवृदामनन्ति ॥ २५ ॥
अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ।
कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥
नाभिर्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्म रेतः ।
परावरात्मा[१]श्रयणं तवात्मा सोमो मनो द्यौर्भगवन् ! शिरस्ते ॥ २७ ॥
कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते ।
छन्दांसि साक्षात्तव सप्तधातवस्त्रयीमयात्मन्हृदयं[२] सर्वधर्मः ॥ २८ ॥
मुखानि[३] पञ्चोपनिषदस्तवेश ! यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ।
यत्तच्छिवाख्यं[४] परमार्थतत्त्वं देवः स्वयञ्ज्योतिरवस्थितिस्ते ॥ २९ ॥
छाया त्वधर्मो[५]र्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ।
[६]साङ्ख्यात्मनः शास्त्रकृतस्तवेक्षा छन्दोमयो देव ! ऋषिः पुराणः ॥ ३० ॥
न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥
कामाध्वरत्रिपुरकाल[७]गराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते ।
यस्त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं[८] न वेद ॥ ३२

भाषा टीका ।

विष्णु और शिव इन तीन संज्ञाओं को सदा आपही धारण करते हो ॥ २३ ॥

आपही परम ब्रह्म हो और गुह्यहो और कार्य कारण जगत् के वृद्धि करने वाले हो, आपही नाना शक्तियों से भान होने वाले आत्मा और जगदीश्वर हो ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वतःसिद्धज्ञानत्वमुपपादयन्तो जगदात्मना आभानप्रकारमाहुः—त्वं शब्दस्य वेदस्य योनिरतः स्वतःसिद्धज्ञानः त्वं जगदादिर्महत्तत्त्वम् आत्मा चाहङ्कारः कथम्भूतः प्राणेन्द्रियद्रव्याणां कारणभूता गुणा यस्य राजसादित्रिविध इत्यर्थः। स्वभावादयश्च त्वमेव क्रतुः सङ्कल्पः सत्यमृतञ्चेति यो धर्मः स त्वं महदादिस्वरूपत्वे हेतुः त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वदाश्रयं तदामनन्ति यद्वा एवम्भूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः ॥ २५ ॥

अखिलदेवतात्मा "अग्निः सर्वा देवताः" इति श्रुतेः। सोऽग्निस्ते मुखम् हे लोकभव ! द्वितीयांतेषु विदुरित्यस्य सम्बन्धः ॥२६॥

परे अवरे च ये आत्मानो जीवास्तेषामाश्रयस्तवात्माऽहङ्कारः।

त्रयीमयात्मन्वेदत्रयमूर्ते ! ॥ २८ ॥

पञ्चोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा मन्त्रा यैर्मुखैरष्टोत्तरत्रिंशन्मन्त्राणां वर्गः तेषामेव मन्त्राणां पदच्छेदे अष्टोतरत्रिंशत्कलात्मका मन्त्रा इत्यर्थः। अवस्थितिरुपरतावस्था ॥२९॥

अधर्मस्योर्मिषु दम्भलोभादिषु यैरूर्मिभिर्विसर्गः संहारः यैः सत्त्वादिभिर्विविधः सर्गस्तानि नेत्रत्रयम् हे देव ! छन्दोमय ऋषिर्वेदः स तवेक्षा ईक्षणम् साक्षात्मनुरिति पाठे मनुं तमेवाह, छन्दोमय इति ॥ ३० ॥

हे गिरित्र ! ते परं ज्योतिरखिलानां लोकपालादीनां गम्यं भवति कुतः यत्र रजआदि नास्ति किं तज्ज्योतिः यन्निरस्तभेदं ब्रह्म ॥ ३१ ॥

कामश्चाध्वरश्च दक्षयज्ञस्त्रिपुरादयश्च ये अनेकभूतद्रुहः तान् क्षपयतः संहरतस्ते तत्कर्म स्तुतये न भवति अत्यल्पत्वादित्यर्थः गरक्षपणस्याप्ययदयं भावित्वेन सिद्धवन्निर्देशः स्तुतयेऽलं न भवतीत्यत्र हेतुः यस्तु भवान्स्वनेत्रवह्निविस्फुलिङ्गस्य शिखया जगद्भसितं भस्मसाज्जातं न वेद नालोचयत्यपि ॥ ३२ ॥

(१) त्रुहिगाः इति विज० (२) सधर्मः इति वीर० विज० (३) पञ्चोपनिषत्तवेश इति विज० (४) परमात्मतत्त्वं इति वि० वी० (५) मूर्मि इति विज० (६) साङ्ख्यात्मनः इति वीर० साक्ष्यात्मनुः इति वि० (७) हरा इति विज० (८) तवेश इति विज०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वमेवै शब्दयोनिः शास्त्रप्रमाणकः जगदादिः जगत्कारणभूतः आत्मा "आत्मन आकाशस्सम्भूतः" इत्युक्तस्त्वमेव द्रव्यं भूतपञ्चकं स्वभावो विशेषणां प्राणेन्द्रियद्रव्यगुणस्वभावः प्राणादिविशेषणावानित्यर्थः ।कालादिशरीरकश्च त्वमेव, त्वच्छरीरको यः परमात्मा स एव कालादिशरीरक इति तात्पर्यं सत्यभूतं "ऋतं सत्यं परंब्रह्म" इत्युक्तं निर्विकारं सर्वान्तरात्मभूतं ब्रह्मत्वमेवेत्यर्थः धर्मः धर्मशरीरकस्तदाराध्यो वा त्वमेव, त्रिवृत्त्रयाणां वृत्तनं यस्मिस्तत्, अकारोकारमकारात्मकमक्षरं प्रणवं त्वद्रूपत्वाऽऽमनन्ति त्वद्विषयकमेवामनन्तीत्यर्थः ॥२५।

विराड्रूपं स्तुवन्ति—अग्निरिति । अखिलदेवतात्मा "अग्निः सर्वा देवता" इति सर्वदेवतामयत्वेन श्रुतोऽग्निस्ते तव मुखं क्षितिं पृथ्वीं हे लोकभव ! तवाङ्घ्रिपङ्कजं पादपद्मं विदुः कालं त्वखिलदेवतात्मनः तव गतिं विदुः तथा दिशस्तव कर्णौ विदुः जलेशं वरुणं तव रसनं जिह्वां विदुः ॥ २६ ॥

नभ आकाशस्तव नाभिः नभस्वान्वायुस्तव श्वसनं श्वासः सूर्यस्तव चक्षूंषि नेत्राणि जलं तव रेतः तवात्मा परेऽवरे च ये आत्मानो जीवास्तेषामाश्रयणमाश्रयः आधारः सोमः चन्द्रस्तव मनः हे भगवन् ! द्यौरूर्ध्वलोकस्तव शिरः ॥ २७ ॥

समुद्रास्तव कुक्षिः गिरयः पर्वतास्त्वस्थिसमुदायाः सर्वा औषध्यो वीरुधश्च तव रोमाणि छन्दांसि गायत्र्यादीनि साक्षात्तव सप्तधातवः हे त्रयीमयात्मन्वेदप्रचुरमूर्ते स प्रसिद्धो वेदोदितो धर्मः तव हृदयम् ॥ २८ ॥

हे ईश ! पञ्चोपनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानात्मकपञ्चानुवाकाः तव मुखानि मुखव्यापारात्मका इत्यर्थः । मुखानि विशिनष्टि—यैर्मुखैस्त्रिंशदष्टोत्तरमन्त्रवर्गाः अष्टोत्तरत्रिंशन्मन्त्राणां वर्गास्तेषामेव मन्त्राणां परिच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मन्त्रा इत्यर्थः । हे देव ! यत्स्वप्रकाशं शिवाख्यं "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्" इति प्रसिद्धं परमात्मतत्त्वं तत् ते तवावस्थितिरवस्थानं परमात्मशरीरत्वेन तदपृथक्सिद्धत्वेनावस्थितिस्त्वमिति तात्पर्यम् ॥ २९ ॥

अधर्मस्योर्मिषु दम्भलोभादिषु तव छाया अप्रकाशः अधर्मोऽपि तव छायाभूता इत्यर्थः । यैस्सत्त्वादिभिर्गुणैर्विसर्गः प्रपञ्चसृष्टिस्तानि सत्त्वरजस्तमांसि तव नेत्रत्रयं हे देव ! छन्दोमयः गायत्र्यादिछन्दःप्रचुरः पुरातनः ऋषिर्वेदः साङ्ख्यात्मनः सर्वशास्त्रात्मनः शास्त्रप्रणेतुस्तव ईक्षा ईक्षणं ज्ञानमित्यर्थः ॥ ३० ॥

हे गिरित्र, हे ऽखिललोकपाल ! ते तव परं ज्योतिः स्वप्रकाशं स्वरूपं विरञ्च्यादिभिरगम्यं वैकुण्ठः उपेन्द्रः सुरेन्द्रसमभिव्याहारात्तस्याप्यगम्यत्वमतिस्तुतिः यद्वा अस्य प्रकरणस्य रुद्रशरीरकपरमात्मस्तुतिपरत्वात्परमात्मस्वरूपस्यापरिच्छिन्नत्वेन तेनापीयत्तयावगन्तुमशक्यत्वाद्वैकुण्ठेनाप्यगम्यत्वमुक्तम् ज्योतिर्विशिनष्टि—यत्र ज्योतिषि रज आदयः प्राकृतगुणाः न सन्ति यद्ब्रह्म यच्च निरस्तभेदवागनुपगाद्यभेदम् ॥ ३१ ॥

कामश्चाध्वरश्च दक्षश्च, त्रिपुराश्च येऽनेकभूतद्रुहस्तान् क्षपयतः संहरतः ते तव स्तुतये तत्कामादिक्षपणात्मकं कर्म न भवति तत्कर्म त्वत्स्तुतये न भवति अत्यल्पमतदित्यर्थः तदेव वक्तुं विशिनष्टि—यो भवांस्तु आत्मकृतं स्वसृष्टमिदं जगदन्तकाले स्वनेत्रवह्निस्फुलिङ्गस्य शिखया भसितं भस्मसाज्जातं न वेद न जानातीत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शब्दयोनिर्भक्तिकारणं यस्य स तथा प्राणादिसत्ताप्रदः तत्तत्स्वभावप्रवर्तकः क्रतुः सत्यकामः संकल्पप्रवर्तको वा सत्यं साक्षिदानन्दरूपम् ऋतमेकप्रकारं धारकत्वाद्धर्मः योग्रवृद्धकाराद्विवर्णत्रयात्मकं तदक्षरं प्रणवलक्षणं त्वयि त्वद्वाचकत्वेन प्रवर्तत इत्यामनन्ति "ओमित्येकाक्षरम्" इत्यादिवेदान्ताः ॥ २५ ॥

अखिलदेवतात्मा अखिलदेवताभ्यो हविर्भागदाता हे लोकभव जगत्कर्तः । अखिलदेवतान्तर्यामिणः ॥ २६ ॥

द्रुहिणस्तवात्मा सत्वं लक्षणं चित्तम् ॥ २७—२८ ॥

"ईशानः सर्वविद्यानाम्" इत्यादि पञ्च मन्त्राः यैर्मन्त्रैस्त्रिंशदष्टोत्तरमन्त्रवर्गः अष्टत्रिंशत्कलालक्षणाः मन्त्रसमूहः उत्पन्न इति शेषः यच्छिवाख्यं तत्त्वन्तु तेऽवस्थितिरवस्थानं तदनुग्रहादिति शेषः ॥२९॥

यैः सत्त्वादिभिः सर्गो भवति तानि सत्त्वादीनि तव नेत्रत्रयं साक्षान्मनुः शास्त्रकृत तवेक्षा ततो जातः देवर्षिस्तवच्छन्दोमय इच्छातो जातः ॥ ३० ॥

यत्तव परं ज्योतिः रूपं तद्धरिरब्जादिभिरगम्यं न सर्वात्मनेति शेषः । निरस्तभेदम् "नेह नानास्ति किञ्चन" इति श्रुतेः ॥ ३१ ॥

कामाद्यनेकभूतहिंसकस्य क्षपयतः संहरतस्तव स्तुतये तच्छक्तिः कुत इति तत्राह—यदिति । हे ईश ! प्रलयकाले तव स्वस्य नेत्रस्य नेत्रवह्नेः स्फुलिङ्गशिखया भसितं भक्षितमिदमात्मकृतं जगदिति यत्तःमादित्यन्वयः । अत्र हरेतिपदोपादानादियं स्तुतिः श्रीहरिविषयेति ज्ञायते "सर्वात्मा प्रीयते हरिः" इति वक्ष्यमाणवाक्याच्च—

"तत्र तत्र स्तुतिं पदैर्हरिरेव तु तद्गतः ।
स्तूयतेऽतो युक्तमेव गुणाधिक्यवचोऽपि तु "
इति वचनाच्च ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

"ऋतञ्च सूनृतावाणी सत्यञ्च समदर्शनम्" ॥ २५ ॥

ज्ञानि चेष्टाम ॥ २६ ॥ २७ ॥२८ ॥ २९ ॥

अधर्म्मोर्मिषु ते तव छाया प्रकाशाभावः ॥ ३० ॥

न ते इति, यच्छिन्नस्य ज्योतिः परमात्मलक्षणं तत्र स्थितं तत् सम्यग् ज्ञाने तस्याप्यक्षमता युक्तैवेति वा व्याख्येयम् । तदुक्तम् "द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि" इति ॥ ३१ ॥ ३२ ॥

---

ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसाभितप्तम् ।
कत्थन्त* उग्रपरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥
तत्तस्य ते सदसतोः परतः परस्य नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ।
ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि[1] शक्तिमात्रम् ॥ ३४ ॥
एतत्परं प्रपश्यामो[2] न परं ते महेश्वर ।
मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥

श्रीशुक उवाच ।

तद्वीक्ष्य व्यसनं तासां कृपया भृश[3] पीडितः ।
सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ ३६ ॥

श्रीशिव उवाच ।

अहो बत भवान्येतत्प्रजानां पश्य वैशसम् ।
क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ ३७ ॥
आसां प्राणपरीप्सूनां विधेयमभयं हि मे ।
एतावान् हि प्रभोरर्थो यद्दीनपरिपालनम् ॥ ३८ ॥
प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ।
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥
पुंसः कृपयतो भद्रे ! सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥
तस्मादिदं गरं भुञ्ज प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥

भाषा टीका ।

आपका आत्मा सब जीवों का आश्रय है, चन्द्र आपका मन है, स्वर्ग आपका शिर है ॥ २७ ॥

समुद्र आपकी कुक्षि है, पर्वत आप के अस्थि समूह हैं, सर्व औषधि और वृक्ष आप के रोम हैं, छन्द आप के सप्त धातु हैं । हे वेदमूर्त्ते ! सर्व धर्म आपका हृदय है ॥ २८ ॥

हे ईश ! पंच उपनिषद् आप के मुख हैं जिन से अड़तीस ३८ कलारूप मन्त्र हुए और जो शिवनाम ज्ञेय परमार्थतत्त्व जो स्वयं ज्योति है, वह तुम्हारी अवस्थिति है अर्थात उपराम की अवस्था है ॥ २९ ॥

जिन लोभादिक षट् ऊर्मियों से संहार होता है वे आप की छाया हैं, और सत्त्व रज और तम ये तीन गुण आप के तीनों नेत्र हैं और साक्षात् वेद जो है वह शास्त्रकार जो आप हैं तिनका सङ्कल्प है हे देव ! जो छन्दोमय प्राचीन ऋषि है अर्थात ऋषि नाम वेद वाला है ॥ ३० ॥

हे गिरिश ! आपका पर ज्योति निरस्त भेद ब्रह्म स्वरूप है ॥ ३१ ॥

काम और दक्ष का यज्ञ और त्रिपुर, काल, विष, आदि जो अनेक भूतों के द्रोह करने वाले हैं उनके नाश करने वाले ऐसे आप के ये सब कर्म कुछ स्तुति के लिये नहीं हैं क्योंकि अन्तकाल में आप अपने नेत्र की अग्नि की शिखा से भस्म होने वाले अपने किये हुए इस जगत को भी नहीं जानते हैं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं नित्यं परानुग्रहव्यग्रं त्वां ये निन्दन्ति तेऽतिमूर्खा इत्याहु ये त्विति । उमया सह चरन्तं तस्यां नितरां रतं कामिनं कत्थन्ते प्रलपन्ति तथा श्मशाने चरन्तमुग्रं क्रूरं परुषं च हिंस्रं कत्थन्ते कथंभूतम् आत्मारामाश्च ते गुरवो विश्वहितोपदेष्टारस्तैर्हृदि चिन्तित-

* उग्रवपुषमिति विज० ( १ ) भाक्ति इति विजयं० ( २ ) नापरं ते महेश्वरम् इति वीर० ( ३ ) भीडितः इति वीर० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मङ्घ्रिद्वन्द्वं यस्य तथाभूतमपि तपसाऽभितप्तमपि ते नूनं तवोतिमविदर्शिनि काकुः त्वल्लीलां नैव विदुरित्यर्थः । अतो ह्यानलज्जाः त्यक्तत्रपाः कथमात्मारामैः सेवितचरणयुगलस्य ते कामित्वं सम्भवति कथं वा तपसाऽभितप्तस्य शान्तस्योग्रत्वं परुषत्वं वा सम्भवतीत्यविचार्यप्रलापादित्यर्थः ॥ ३३ ॥

आस्तां तावन्निन्दकानां वार्ता महान्तोऽपि तव तत्त्वं न जानन्तीत्याहुः—तत्तस्मात्तव स्वरूपस्य गमने ज्ञाने ब्रह्मादयोऽपि न समर्थाः संस्तवने तु कुतः शक्ताः स्युस्तत्र वयं कथं प्रभवेम यत्तेषां सर्गे अत्यन्तार्वाचीनाः तथापि यदेतावत् स्तवनमेतदात्मशक्तिपरिमितमात्रमित्यर्थः ॥ ३४ ॥

तदेवाहुः—एतत्परमिति । न परं रूपं तथाऽपि त्वद्दर्शनादेव कृतार्था वयमित्याहुः, मृडनाय हीति ॥ ३५ ॥ ३६ ॥

तत्प्रभाववर्णनेनाथ विषपाने प्रवृत्तं मां कथंचिदियं प्रिया वारयेदिति शङ्कया तामनुज्ञापयन्नाह—अहो बतेति सार्धैश्चतुर्भिः । वैशसं दुःखम् ॥ ३७ ॥

प्राणार्थीप्सूनां प्राणरक्षणेच्छूनां मे मया प्रभोः समर्थस्य अर्थः कार्यम् ॥ ३८ ॥

किञ्च बद्धवैरेषु भूतेषु परस्परं जिघांसत्सु ॥ ३९ ॥

कृपयतः कृपां कुर्वतः पुंसः मे मत्तः स्वस्तिः शोभना सत्ता सुखेन जीवितमस्त्वित्यर्थः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंभूतं त्वां ये निन्दन्ति ते मूर्खा इत्याह—ये त्विति । ये तु त्वाम उमया भवान्या सह चरन्तं नितरां कामिनं कथयन्ते प्रलपन्ति तथा श्मशाने चरन्तमुग्रं क्रूरं परुषं हिंस्रं च कथयन्ते, कथंभूतम् ? आत्मारामाश्च ये गुरवो विश्वहितोपदेष्टारस्तैर्हृदि चिन्तितमङ्घ्रिद्वन्द्वं यस्य तथाभूतमपि तपसाऽभितप्तं ते नूनं तव ऊतिमविन्दर्शिनि काकुः त्वच्चेष्टितं नैव विदुरित्यर्थः । अतस्ते ह्यानलज्जाः गतत्रपाः यानि कानिचित्त्वन्निन्दावचनानि तेषां तद्रहिता निन्दान्यायेनेतरस्तुतौ तात्पर्यमिति भावः ॥ ३३ ॥

एवंभूतं त्वां ब्रह्मादयो वोढुमेव न प्रभवः किम्पुनः स्तोतुं वयं तु न सुतरां प्रभव इत्याहुस्तदिति । तत्तस्मात् कविभिस्त्वत्तत्त्व सदसतोश्चिदचितोः कार्यावस्थयोः परतः कारणावस्थयोश्च परस्य चिद्घनस्य भूम्नो व्यापकस्य ते तव स्वरूपावगमने स्वरूपावबोधने ब्रह्मादयोऽपि जना न प्रभवन्ति किमुत संस्तवने न प्रभवन्तीति तत्र वयं कथं प्रभवेम कुतः यतस्तेषां सर्गसर्गविषयाः वयं तत्सृष्टसृष्टा वयमित्यर्थः । अतो यदेतत्स्तवनमप्यस्मच्छक्तिमात्रं शक्त्यनुसारमात्रेण कृतमित्यर्थः ॥ ३४ ॥

ननु एते सर्वे धर्मास्त्वदुक्ताः परमात्मासाधारणाः अहं तु पुण्योपचिताधिकारविशेषभाक्क्षेत्रज्ञ इत्यत्राहुः—एतदिति । हे परमेश्वर ! ते तव परमुत्कृष्टमपरमवमं च तत्त्वं न पश्यामः न जानीमः किन्तु लोकस्य मृडनाय सुखापादनाय तवाव्यक्तकर्मणो व्यक्तिरित्येतत्तु जानीम इत्यर्थः । नूनं भवान् परमात्मा भवतु सा वा सर्वस्यापि चिदचिदात्मकस्य जगतस्तदात्मकत्वात्तदायत्तसत्तादिमत्त्वेन त्वं विना स्वनियम्यरूपस्वभावयोरभावात्तदृष्ट्या तद्धर्मैरेव सर्वं वस्तु स्तोतव्यमित्येव तूष्णीमिति ॥ ३५ ॥

एवमुक्तो देवः प्रियामाहेत्याह शुकः—तदिति । एवं भृशमधिकम् ईडितः स्वाभिमतविद्यमानैरपि परमात्मासाधारणैर्गुणैरीडितः स्तुतो देवो रुद्रस्तासां प्रजानां तत्कालकूटादुपस्थितं व्यसनं दुःखं वीक्ष्य सर्वभूतसुहृत्त्वात् सतीं भवानीम् इदं वक्ष्यमाणमाह ॥ ३६ ॥

विषपाने प्रवृत्तं माम् इयं प्रिया वारयेदिति शङ्कया तामनुज्ञापयन्नाह—अहो इति सार्धैश्चतुर्भिः । हे भवानि ! अहो बत महत्कष्टम् एतत्प्रजानां वैशसं दुःखं पश्य; वैशसं विशिनष्टि, क्षीरोदमन्थनात् यदुत्पन्नं कालकूटाख्यं विषं तस्मात्समुपस्थितं सम्प्राप्तम् इत्यर्थः ॥ ३७ ॥

प्राणपरीप्सूनां जिजीविषूणामासां प्रजानां मे मया अभयं विधेयं हि यस्मात्प्रभोः समर्थस्यार्थः कर्तव्यप्रयोजनमेतावानेव यद्दीनानां परिपालनम् इत्येतावानेव ॥ ३८ ॥

तथा हि, साधवः क्षणभङ्गुरैः हेतुभूतैरिदं स्वैः स्वकीयैः प्राणैः प्राणिनः पान्ति रक्षन्ति किं प्राणिरक्षणेनेत्यत आह—आत्ममायया भगवन्मायया मोहितेष्वतएव परस्परं बद्धवैरेषु भूतेषु ॥ ३९ ॥

कृपयतः कृपां कुर्वतः पुंसः हे भद्रे सर्वान्तरात्मा भगवान् प्रीयते किन्तत्प्रीत्या ? अत आह—षाड्गुण्यपूर्णे हरौ प्रीते सति सचराचरोऽहमपि प्रीये नितरामानन्दयुक्तो भवामि तस्मादिदं गरं विषं भुञ्जे भोक्ष्ये मे मत्तः प्रजानां स्वस्तिरस्तु अयमत्रायः स्वस्तिशब्दः सुखार्थकः अतएव प्रयोगात् "दैवीस्वस्तिरस्तु नः" इत्यादि श्रुतिप्रयोगाच्च ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये त्वामुमया भवान्या अर्थे तपसं चरन्तमत एवाभितप्तं श्मशाने निरतमत एवोग्रवपुषं घोराकारं कथयन्ते भाषन्ते ते तव भूतभूतिपूर्णैश्वर्यम् अविद्वांसो न जानन्तोऽत एव निर्लज्जाः ॥ ३३ ॥

यतस्तत्र चर्या दुर्बोधा तत्तस्मात्सदसतोः परतः प्रकृतेः परस्य तस्य भूम्नः ते स्वरूपगमने ब्रह्मादयोऽन्तर्यामिविषये विरिञ्चादयः अन्यत्र सनकादयो नाङ्गः प्रभवन्ति वयं ब्रह्मपुत्राः स्तवने न प्रभवाम इति किमुत वयं न तत्सृष्टसर्गिनोऽपीत्याह, तत्सर्गेति. तस्य ब्रह्मणः सृष्टिप्रवाहे निपतिताः तर्हि क्रियमाणा कथमिति तत्राह—भक्तिमात्रमिति. अस्मत्स्तुतिर्भक्तिप्रकटनमात्रमित्यर्थः । तुशब्दोऽवधारणद्योतकः ॥ ३४ ॥

अव्यक्तकर्मणोऽस्ते व्यक्तिर्लोकस्य मृडनाय पालनायेत्येतत्परं केवलं प्रपश्यामः परमन्यत्तव प्रयोजनं न पश्याम इत्यन्वयः हे महेश्वर ! परं नैतद्रूपं पश्यामः तवान्तर्यामिरूपं परं हरिं न पश्यामः एतद्रूपप्रयोजनमाह, मृडनायेति. व्यक्तिरवतारादिलक्षणाकृतिः ॥ ३५—३६ ॥

वैशसं नाशलक्षणम् ॥ ३७—३८ ॥

पान्ति रक्षन्ति ॥ ३९ ॥

कृपयतः कृपां कुर्वतः गरं विषम् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ये त्विति अयमर्थः ये त्वाम् उग्रत्वेन परुषत्वभस्मेन श्मशाननिरतत्वेन च प्रतीयमानमपि हतलज्जाः त्यक्तसङ्कोचाः सन्तः कत्थन्ते श्लाघन्ते तपन्त ऊति तेन तेन मायाकृतेन स्वसन्दरणामयीं लीलामविदुः न जानन्तः । "कत्थ श्लाघायाम्" "विद सम्भरणे" इति धातुद्वयमत्रोपजीव्यत इति भावः । मायापिहितदृष्टीनान्तु त्वमित्थं भासीत्यभिप्रेत्य तमन्यथा विशिंषन्ति—आत्मारामेति । भागवतपरमहंसानां गुरुत्वेन परमादरणीयमित्यर्थः । तथा उमया तदात्मना विश्वपालनपरया देव्या सह चरन्तं तथा स्वयमपि तपसा परमज्ञानप्रभावेन अभितःसर्वतोभावेन ततमैश्वर्यं यस्य तादृशमिति । "तप ऐश्वर्ये" इति धातुरूपजीव्यः इति ॥ ३३ ॥ ३४ ॥

मृडनायेति "मृड सुखे" ॥ ३५—३७ ॥

आसामिति सार्द्धकम् ॥ ३८—४१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तव माहात्म्यं बहिर्दर्शिभिर्दुर्गममित्याहुः—ये त्विति । उमया सह चरन्तं रममाणामपि तपसा अभितप्तं न तु कामेन व्याप्तम् अत एवात्मारामाणां गुरुमपि च ध्यानाद्युग्र तथाभूतमपि त्वामुग्रं परुषं कत्थन्ते विपरीतलक्षणया श्लाघन्ते ये निन्दन्ति ते नूनं तवोनिम् अनिर्वाणिति काकुः त्वल्लीलां नैव जानन्तीति कामक्रोधाद्यनावाप्तमधी सर्वं येषा लोकोपहासिका लीलैवेत्यर्थः । हतलज्जाः त्यक्तत्रपाः स्वयं कामक्रोधादिभिर्व्यग्रमानाश्चात्मारामशिखामणिध्यातावप्रि निन्दितुं लज्जामपि किं न प्राप्नुवन्तीत्यर्थः ॥ ३३ ॥

तेषां का कथा ब्रह्मादयोऽपि ते तत्त्वं न जानन्तीत्याहुः—नेति । तस्माद्भवतः सर्गो येषां तेषां मरीच्यादीनां सृष्टिपरायाः शक्तिमात्रं शक्त्यनुरूपमेव स्तुमः न तु यथोचितम् ॥ ३४ ॥

मृडनायेति विषं संहृत्य शीघ्रं लोकसुखं निष्पादयेति ध्वनिः ॥ ३५—३८ ॥

तन्मधीषु सांसारिकजीवेषु परस्परबद्धवैरेषु आत्मारामाणां भवादृशामुपेक्षणमेवोचितं तत्राहुः बतेति ॥ ३९ ॥

मे मम सतः अस्ति शोभना सत्ता ॥ ४०—४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मारामाश्च ते गुरवः सर्वादिनोपदेशकास्तैर्हृदि चिन्तितमङ्घ्रियुग्मं यस्य तथाभूतमपि ये मन्दा उमया सह चरन्तं अत एव उग्रं क्रूरं तथा परुषं हिंस्रं तथा श्मशाने निरतं कत्थन्ते सलपन्ति ते नूनं निश्चितं हतलज्जा गतत्रपाः तव ऊतिं लीलां किमपि नैव विदुरित्यर्थः ॥ ३३ ॥

किञ्च ततस्मात्तस्य ते स्वरूपगमने स्वरूपावबोधने ब्रह्मादयोऽपि अज्ञोऽज्ञा न प्रभवन्ति किमु संस्तवने प्रभवन्ति कुतस्त्वत्सर्गसर्गानिरताः वयं तत्र प्रभवामः तथापि एतत्स्तोत्रं शक्तिमात्रम् अस्मच्छक्तिपरिमितम् कथम्भूतस्य सदसती स्थूलसूक्ष्मयोः देहयोः परतः जीवात् परस्य ॥ ३४ ॥

हे महेश्वर ! ते परं रूपं न पश्यामः लोकस्य मृडनाय सुखाय ते व्यक्तिरित्यनतपरं केवलं पश्यामः ॥ ३५ ॥

तासां प्रजानाम् ॥ ३६ ॥

वैशसं दुःखम् ॥ ३७ ॥ ३८ ॥

आत्मनः सर्वात्मनो हरेर्मायया बद्धवैरेषु अन्योन्यं स्पर्द्धमानेषु ॥ ३९ ॥

कृपयतः कृपां कुर्वतः ॥ ४० ॥

---

भाषा टीका ।

हे भगवन् ! आत्माराम और ज्ञानि लोग आपके चरणयुगल का हृदय में चिन्तवन करते हैं और आप श्रीउमादेवी के साथ तप आचरण करते हैं फिर जो लोग आप को पार्वती के साथ विहार करने वाले, तथा श्मशान में निरत और उग्ररूप अर्थात् हिंसक कहते हैं वे निर्लज्ज आपकी लीलाओं को नहीं जानते हैं ॥ ३३ ॥

तस्मात् कार्य कारण से और पर सेभी पर भूमापुरुष ऐसे आपके स्वरूप जानने को ब्रह्मादिक भी शक्ती नहीं समर्थ होसक्ते हैं फिर स्तुति करने में क्या समर्थ होंगे, और ब्रह्मादिकों की यह दशा तब हमलोगतो उनकी सृष्टि की सृष्टि के रचे हुए हैं तथापि यह जो हमने स्तुति करी है वह अपनी शक्ति के प्रमाण करी है ॥ ३४

हे महेश्वर ! हमलोग तो आपके केवल इसीरूपमात्र को देखते हैं, और आप के पर रूप को नहीं परन्तु इतना तो जानते है कि अव्यक्त कर्म वाले ऐसे आपका प्राकट्य केवल लोकरक्षार्थ ही है ॥ ३५ ॥

श्री शुक उवाच ।

श्री शुकदेवजी बोले, कि—हे राजन् ! श्री शङ्कर प्रजाओं का इस प्रकार व्यसन [ दुःख ] देख कृपा से अति पीड़ित हुए और प्राणी मात्र के सुहृद श्रीमहादेवजी अपनी प्रिया श्रीसती जी से यह बोले ॥ ३६ ॥

शिव उवाच ॥

श्रीशिवजी बोले, कि——हे भवानि ! बड़े खेद की बात है, क्षीर समुद्र के मथने से उत्पन्न हुआ जो विष तिस से यह प्रजाओं की हिंसा उपस्थित भई इसको तो तुम देखो, ॥ ३७ ॥

श्रीशुक उवाच ।

एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ।
तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥
ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥
तस्यापि दर्शयामास स्ववीर्यं (१)जलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥
तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याऽखिलात्मनः ॥ ४४ ॥
निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः ।
प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥
प्रस्कन्नं पिबतः पाणेर्यत्किञ्चिज्जगृहुः स्म तत् ।
वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्याम् अष्टमस्कन्धे अमृतमथनं नाम
सप्तमोऽध्यायः ॥ ७ ॥

भाषा टीका ।

प्राणी की रक्षा को चाहने वाले हम लोगों का मैं अभय करूंगा । क्यों कि ? समर्थ होने का यही तो प्रयोजन है कि—जो दीन का परिपालन करे ॥ ३८ ॥

साधुजन क्षणभंगुर अपने प्राणों से प्राणियों की रक्षा करते हैं, सो भी कहां की माया से मोहित इसी से वैर बांधने वाले ऐसे प्राणियों में रहकर भी ॥ ३९ ॥

हे भद्रे ! हे सती जी ! कृपा करने वाले पुरुष के ऊपर सर्वात्मा श्रीहरि प्रसन्न होते हैं, और जब साक्षात् भगवान् श्रीहरि प्रसन्न हो गये तब हम सब चराचर आपही प्रसन्न हो जाते हैं, तस्मात् इस विष का मैं भक्षण करता हूं जिस से मेरी प्रजा का मङ्गल हो ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

जग्धुमत्तुम् ॥ ४१ ॥

करतलीकृत्य करतलपरिमितमात्रं कृत्वा ॥ ४२ ॥

जलकल्मषो जलदोषो विषं यस्मात्तं गले नीलं चकार साधोः पाणौ ॥ ४३ ॥ ४४ ॥ ४५ ॥

प्रस्कन्नं गलितम् अपरे ये सविषास्तेऽपि जगृहुः अनेन विषस्य तीव्रतोक्ता ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमित्थं भवानीमामन्त्र्याऽनुज्ञाप्य विश्वसुखकरो भगवान् रुद्रः तद्विषं जग्धुमत्तुमारेभे तत्प्रभावज्ञा भवानी अन्वमोदताऽनुमोदितवती ॥ ४१ ॥

ततस्तदनुमोदनानन्तरं सर्वतो व्यापि हालाहलाख्यं विषं करतलीकृत्य करतलमात्रपरिमितं कृत्वा भूतसुखकरो महादेवः कृपया अभक्षयत् ॥ ४२ ॥

जलकल्मषरूपं विषं स्ववीर्यं स्वबलं तस्यापि रुद्रस्यापि दर्शयामास यस्मात्तं रुद्रं गले नीलं चकार तच्च नैल्यं साधोः रुद्रस्य विशेषेण भूषणमेवाभूत् जडकल्मष इति पाठान्तरम्. तदा कथमहं विषं कथं भक्षयामासेत्यत आह—जडकल्मषः जडानामितरेषामेव कल्मषो बाधकमित्यर्थः ॥ ४३ ॥

( १ ) गलकल्मष इति विजय० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कृपालूनामियं परिपाटीत्याह—तप्यन्त इति । प्रायशः साधवः साधु कुर्वन्ति परकार्यमिति साधवः स्वार्थनिरपेक्षपरकार्यप्रसाधनस्वभावाः जनाः प्रायशो लोकतापेन स्वयमपि तप्यन्ते न तद्व्यर्थमपि त्वखिलान्तरात्मनः परमपुरुषस्याराधनं तोषहेतुः ॥४४॥

मीढुषः आश्रिताशीर्वपुंकस्य शम्भोर्देवस्य तद्विषपानरूपं कर्म श्रुत्वा प्रजाः दाक्षायणी भवानी ब्रह्मा च वैकुण्ठो भगवांश्च शशंसिरे प्रशंसितवन्त इत्यर्थः ॥४५॥

शम्भोर्विषं पिबतस्तस्मात् यत्किञ्चित्प्रस्कन्नं गलितं विषं तत् वृश्चिकादयः प्रायो जगृहुः विषौषध्यः काकतुण्डकरवीरादयः । दन्दशूकाः दंशनस्वभावाः अन्ये जन्तवः सर्पाणामुक्तत्वात् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवान्याऽऽदृतत्वात्तस्यार्धत्वाद्विषभोजनं किं न निवारितमिति तत्राह—तत्प्रभावज्ञेति ॥ ४१ ॥

गले कण्ठे कल्मषं यस्य स तथा तस्य विषस्य स्ववीर्यं स्वरूपभूतवीर्यम् ॥ ४२ ॥

किं तद्वीर्यमिति तत्राह—यदिति । साधोर्देवस्य भूषणमभूत् दूषणमित्यर्थः ॥ ४३ ॥

लोकोपकारार्थमेव विषपानमित्याशयेनाह—तप्यन्त इति । अनेन किमस्य प्रयोजनमिति तत्राह, परमेति ॥ ४४ ॥

शशंसिरे इत्यनेन रुद्रस्य यशोऽर्थं हरिणा विषं न पीतमिति ज्ञायते——

"रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं विभुः ।
न सञ्जह्रे समर्थोऽपि वायुश्चाच प्रशान्तये" ॥—

इति वचनाच्च ॥ ४५ ॥

विषौषध्यः धत्तूरप्रभृतयः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्यापि व्याप्तिशीलं विषम् ॥ ४२ ॥

तस्यापीति तत्रापीत्यर्थः । गले नीलमित्यलुक् समासः नन्विदममङ्गलं तत्राह, तच्चेति. कृपया स्वामीष्टं तद्विभूषणत्वेन धृतवतः तस्यैव तादृशोऽर्हेति भावः ॥ ४३ ॥

लोकतापेन तप्यन्ते तत्तापभयी कुर्वन्तीयर्थः । साधवः सापराधा अपि किमुत न इत्यर्थः ॥ ४४—४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्यापि तावद्देशव्यापकमपि करतलमात्रपरिमितीकृत्य ॥ ४२ ॥

जलकल्मषो विषं तस्यापि तस्मिन्नपि ॥ ४३—४५ ॥

पिबतस्तस्य पाणेः सकाशात् यत् प्रस्कन्नं क्षरितं येऽपरे श्वशृगालाद्यास्ते च जगृहुः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मे मत्तः ॥ ४१ ॥

व्यापि हालाहलमपि करतलीकृत्य योगबलेन करतलपरिमितं कृत्वा ॥ ४२ ॥

यद्यस्मात्तत् शिवं गले नीलं चकार तच्च गलनैल्यं साधोः दयालोर्विभूषणमभूत् ॥ ४३—४५ ॥

विषं पिबतः शिवस्य पाणेः हस्तात् यत्किञ्चित्प्रस्कन्नं क्षरितं तत् वृश्चिकादयः अपरे च ये सविषाः प्रसिद्धास्ते सर्वे जगृहुः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाऽध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

विश्व के पालन करने वाले भगवान् श्रीशंकरने भवानी श्री सतीजी से पूंछ कर उस विष के पान करने का आरम्भ किया, और आपके प्रभाव को जानने वाली श्रीसतीजी ने भी इसको अनुमोदन किया ॥ ४१ ॥

तब तो सर्वत्र व्याप्त होने वाले उस हालाहल विषको हाथ में लेकर श्रीमहादेवजी ने कृपाकर भक्षणकर लिया ॥४२॥

परंच उस जलके कल्मष ने अर्थात् विषने अपना पराक्रम श्रीशंकर को भी दिखाया क्योंकि गलेमें नील चिन्ह कर दिया पर वह दूषण भी शंकर सदृश साधु का भूषण होगया कि जिससे आपका नाम नीलकंठ होगया ॥ ४३ ॥

भाषा टीका।

प्राय करके साधुजन लोक के दुख को देखकर बड़े दुःखित होजाते हैं पर यह दुखी को देखकर कृपा करना अखिलात्मा परम पुरुष श्रीमन्नारायण का परम आराधन [पूजन] हैं ॥ ४४ ॥

देवदेव भगवान् श्रीशंभु के इस कर्म की सब प्रजा और दक्षपुत्री श्रीसतीजी और ब्रह्माजी और भगवान् श्रीविष्णुजी भी प्रशंसा करने लगे ॥ ४५ ॥

श्रीशंभु के पीते समय में जो कुछ थोड़ासा विष गिर गया उसको विच्छु, सर्प, दंदशूक, [ यह भी एक सर्प आदि है ] इन सब जन्तुओं ने ग्रहण किया, और उसी से यह विषवाली औषधियां उत्पन्न होगई ॥ ४६ ॥

इति श्रीमद्भागवत अष्टमस्कन्धमें सप्तम अध्याय की श्रीवृन्दावनस्थ भागवताचार्यकृत भाषाटीका समाप्त ॥ ७ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

———○:*:○———

## ॥ अष्टमोऽध्यायः ॥

श्रीशुक उवाच ।

पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १ ॥
तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवयानस्य मेध्याय हविषे नृप ! ॥ २ ॥
तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।
तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥
तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम् ॥ ४ ॥
कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ।
तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलङ्करणे मणौ ॥ ५ ॥
ततोऽभवत्पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥ ६ ॥
ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ७ ॥
ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामिनी यथा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ।
धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥ ० ॥

हविर्धानी सुरभिः ॥ १ ॥

देवयानस्य ब्रह्मलोकमार्गप्रापकस्य यज्ञस्य सम्बन्धिने हविषे ॥ २ ॥

ईश्वरशिक्षया प्रागेवकृतया ॥ ३ ॥

भगवतो यः श्वेताद्रिः कैलासस्तस्य महिं महिमानं हरन्तः शिखरकल्पैर्हरन् चन्द्रवत्पाण्डुर इत्यनुषङ्गः ॥ ४—६ ॥

वल्गुभिर्गत्यादिभिः स्वर्गिणां रमण्यो रतिकर्यः ॥ ७ ॥

सुदामा पर्वतस्तत्रैकस्यां दिशि जाता सौदामनी स्फटिका-द्रिमध्यगिरिशृङ्गस्थाधिकं स्फुरन्ती विद्युदिव कान्त्या दिशो रञ्जयन्ती श्रीः सम्पत्साक्षान्मूर्तिधारिणी सती सैव भगवत्परा रमा आविरभूदित्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं वृषाङ्केण रुद्रेण गरे विषे पीते भक्षिते सति ते सर्वे सुरदानवाश्चेन्द्रादयो वैरोचनादयश्च तरसा बलेन सिन्धुं ममन्थुः ततस्तस्मिन् सिन्धावेवं मथ्यमाने सति ततो विषादनन्तरं हविर्धानी सुरभिः कामधेनुरभवत् ॥ १ ॥

तां हविर्धानीम् अग्निहोत्रीं हविःपयोघृतादिहविःप्रधानेनाग्नि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

होत्रादिवैदिककर्मनिष्पादिनीं ब्रह्मवादिनः ऋषयो जगृहुः स्वीकृतवन्तः किमर्थम् ? हे नृप ! देवयानस्य वेला यास्त्वग्निहोत्रकर्माणि इति देवयानं तस्य यज्ञस्य सम्बन्धिने मेध्याय हविषे पय आदि-हविरर्थम् ॥ २ ॥

ततो हविर्धान्युद्भवानन्तरं चन्द्रवत्पाण्डुरः शुभ्रो हय उच्चैःश्रवा इति प्रसिद्धः उद्बभूव तस्मिन्नुच्चैःश्रवसि हये ईश्वरशिक्षया "क्षोभः कार्यो न वै जातु रोषः कामस्तु वस्तुषु" इत्याद्युक्तरीत्या शिक्षया इन्द्रः स्पृहां न चक्रे उच्चैःश्रवस्युत्पन्नामपि स्पृहामभिव्यक्तां न चक्रे किन्तु मनस्येवाधादिति भावः । बलिः स्पृहां चक्रे इत्यर्थः ॥ ३ ॥

तत उच्चैःश्रवस उद्भवानन्तरम् ऐरावताख्यो वारणेन्द्रो गजश्रेष्ठः विनिर्गतः कथम्भूतः भगवतो रुद्रस्य श्वेताद्रेः कैलासस्य महि माहात्म्यं शोभां चतुर्भिर्दन्तैः शिखरतुल्यैर्हरन् चन्द्रवत् पाण्डुर इत्यनुषङ्गः ॥ ४ ॥

तस्मिन् अष्टौ दिग्गजा अभवन् ततो हे नृप ! अभ्रमुप्रमुखा अष्टौ करिण्योऽभवन् ततो महोदधेः कौस्तुभाख्यं रत्नमभूत् स च पद्मरागो मणिः तस्मिन् महामणौ भगवान् हरिः वक्षसोऽलङ्करणे निमित्ते स्पृहां चक्रे ॥ ५ ॥

ततः पारिजातो वृक्षः सुरलोकस्य विभूषणभूतोऽभवत् कथम्भूतः यः शश्वत्सदाऽर्थिनः अर्थैः पूरयति पूरयन्नर्थान्पूरयन् भुवि भवान् यथार्थान् पूरयत्यर्थिनामर्थकतयाभूत इत्यर्थः ॥ ६ ॥

ततश्चाप्सरसः उद्बभूवुः कथम्भूताः ? स्वर्णाभरणविशेषकण्ठाः शोभनानि वासांसि यासां ताः स्वर्गिणां स्वर्गतानां सुन्दरगतिभिर्लीलावलोकनैश्च रमण्यः प्रियाः स्वर्गिणां रतिकर्त्र्य इत्यर्थः ॥ ७ ॥

ततः साक्षाल्लक्ष्मीराविरभूत् कथम्भूता ? भगवत्परा भगवदनन्यार्हा कान्त्या दिशो रञ्जयन्ती प्रकाशयन्ती यथा सौदामिनी विद्युत्तद्वत् सुदामा पर्वतः तत्रैकस्यां दिशि जाता सौदामिनी स्फटिकादिमयगिरिशृङ्गेष्वधिकं स्फुरन्ती विद्युदिव कान्त्या दिशो रञ्जयन्तीत्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १ ॥

किमर्थं जगृहुरिति तत्राह-यज्ञस्येति । हविषे यज्ञस्य देवानां सोमपानस्य च मेध्याय देवानां सोमपानं यस्मिंस्तथा तस्येति ॥ २—३—४—५ ॥

सुरलोकं विभूषयतीति सुरलोकविभूषणः ॥ ६ ॥

निष्कमाभरणविशेषः रमण्यो रमणीयाः ॥ ७ ॥

रुच्या विविधं द्योतयन्तीति विद्युत्सा च सौदामनी ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऐरावतादयस्त्वष्ट दिग्गजा अभवंस्ततः ।
अभ्रमुप्रमुखा अष्टौ करिण्यस्त्वभवन्नृप ! ॥

कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ।
तस्मिन् मणौ स्पृहाञ्चक्रे वक्षोऽलङ्करणे हरिः ॥

इति क्वचित् पाठः ततोऽभवत् पारिजात इति ॥ १—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मथनोद्भूतरत्नानां लक्ष्म्या विष्णौ वृते ऽमृते ।
उत्थिते ऽथ कृते दैत्यैर्मोहिन्या वृत्तमष्टमे ॥ ० ॥

हविर्धानी सुरभिः ॥ १ ॥

देवयानस्य ब्रह्मलोकमार्गप्रापकस्य ॥ २ ॥

ईश्वरशिक्षया दैत्यानां मनोवर्धनार्थं प्रागेव कृतया ॥ ३ ॥

भगवतः शम्भोर्यः श्वेताद्रिः कैलासस्तस्य महि महिमानं दन्तैः शिखरतुल्यैर्हरन् । ४—६ ॥

गत्यादिभिः रमण्यः रमयित्र्यः ॥ ७ ॥

श्रीः सम्पत्तिः साक्षात् मूर्तिमतीत्यर्थः । रमा हरिं रमयन्ती हरेः प्रेयसी रूपा च प्रादुर्भूता कीदृशी भगवती चासौ परा पूर्वस्याः सकाशात् श्रेष्ठेति पूर्वस्या एतद्विभूतिरूपत्वमिति भावः । पूर्वा यथा विद्युत् उत्तरा यथा सौदामनी स्फटिकमयसुदामापर्वतभवत्वात् पूर्वस्याः सकाशादधिककान्तिमती कान्त्यैव सम्पत्तिपक्षे कस्मिंश्चित्क्षणेऽपि भ्रातुः अभिलाषिणीत्यर्थः । दिगन्तस्था दिग्भर्तीनो जनान् रञ्जयन्ती सम्पत्तिरस्माकं भूयादिति रागवतीः कुर्वती पक्षे दिशः पूर्वाद्याः कान्त्या स्वरोचिषा रञ्जयन्ती ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हविर्धान्याद्यमृतान्तपदार्थोत्पत्तिं भगवतो भगवत्संयोगम् अमृतहरणाद्यसुरदौरात्म्यं मोहिनीरूपाविर्भावञ्च वर्णयति—पीते गरे इत्यष्टमेनाध्यायेन ॥ १ ॥

अग्निहोत्रीं घृतादिद्वाराऽग्निहोत्रादिकर्मोपकारिकाम् ऋषयो जगृहुः कस्मै प्रयोजनाय ? देवयानस्य देवो विष्णुर्विचित्सोत्पादनद्वारा तत्प्रापकस्य यज्ञस्य हविषे ॥ २ ॥

ईश्वरशिक्षया "क्षोभः कार्यो न वो जातु" इत्येवम्भूतया ॥ ३ ॥

चतुर्भिर्दन्तैर्युक्त इति शेषः । भगवतो यः श्वेताद्रिस्तस्य महि महिमानं हरन् अर्थात् श्वेतो वारणेन्द्रो विनिर्गतः ॥ ४ ॥ ५ ॥ ६ ॥

वल्गुभिर्गत्यादिभिः स्वर्गिणां रमण्यः रमयन्त्यः ॥ ७ ॥

ततस्तदनन्तरं सुदामा पर्वतस्तत्रैकस्यां दिशि जाता सौदामिनी स्फटिकादिमयगिरिशृङ्गेष्वधिकं विस्फुरन्ती विद्युत् यथा कान्त्या दिशो रञ्जयन्ती भगवत्परा साक्षाद्रमा आविरभूत् तस्या विभूतिभूता यस्यां सर्वेषां मार्गानुग्रह्या स्पृहा जाता सा श्रीः सम्पत्तिः रमाश्रया जाता भगवद्रूपात्मकात् भगवदवतारानुरूपस्वतनुप्रकाशनेन निःश्रीकान् देवान् स्वाभिभूतिरूपश्रीप्रकाशनेन च तोषयन्तीति प्रयोजनद्वयाय चकार्येषा लक्ष्मीर्जातेति भावः । अन्यथा रमा श्रीरिति पुनरुक्तिः स्यात् "तस्यां चक्रुः स्पृहां सर्वे"

तस्यां चक्रुः स्पृहां सर्वे ससुरासुर[1] मानवाः ।
रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥
तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ।
मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ १० ॥
आभिषेचनिका भूमिराहरत्सकलौषधीः ।
गावः पञ्च पवित्राणि वसन्तो मधु[2] माधवौ ॥ ११ ॥
ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ।
जगुर्भद्राणि गन्धर्वा नटयश्च ननृतुर्जगुः ॥ १२ ॥
मेघा मृदङ्गपणवमुरजानकगोमुखान् ।
व्यनादयन् शङ्खवेणुवीणास्तुमुलनिःस्वनान् ॥ १३ ॥
ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ।
दिगिभाः पूर्णकलशैः सूक्त[3] वाक्यैर्द्विजेरितैः ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्यनन्तरश्लोकोक्त्या सर्वेषां वोपभोगित्वमुक्तंत्वप्रसङ्गश्च स्यात् तस्मात्तस्याः स्पृहा सर्वेषां स्पृहा जाता साक्षाद्रमा तु तान् पुत्रान् ज्ञात्वा भगवन्तं शरणं गतेति सिद्धान्तः ॥ ८ ॥

भाषा टीका ।

श्रियै नमः ॥

त्रिकुम्भकरम्बडम्बरपरिष्वङ्गप्रसङ्गाकुल—
प्रत्यूषस्फुरमाणपङ्कजवनीसौभाग्यसर्वङ्कषः ॥
इक्षणाः स्ववशंवदीकृतजगद्दृष्टकर्दोर्घरां
लक्ष्म्याः कोऽपि नमज्जनेषु पततात्सिक्तजनोऽजीवनः ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—जब वृषभध्वज श्रीशंकर ने विष पान कर लिया तब सब देवता और दानव बड़े प्रसन्न होकर बड़े वेग से सिंधु को मथने लगे तब उसमें से सुरभि गौ उत्पन्न भई ॥ १ ॥

हे नृप ! अग्निहोत्र का साधन रूप ऐसी उस गौ को ब्रह्म लोक के मार्ग को प्राप्त करने वाले यज्ञ के हविष के अर्थ ब्रह्मवादि ऋषि लोगों ने ग्रहण कीनी ॥ २ ॥

तिसके पीछे उच्चैःश्रवा नाम का चन्द्रमा के सदृश श्वेत घोड़ा उत्पन्न हुआ, उसमें बलि ने स्पृहा करी, श्रीकृष्ण की शिक्षा से इन्द्र चुप रहे ॥ ३ ॥

तदनंतर ऐरावत नाम वाला वारणेन्द्र ( हस्तियों का इंद्र ) चंद्र के सदृश श्वेत हाथी निकसा, जोकि, अपने श्वेत दांतों से श्रीशंकर के कैलास पर्वत की महिमा को हरने वाला हुआ, अर्थात् उसके दंत कैलास के शिखर सदृश रहे ॥ ४ ॥

फिर महोदधि से एक रत्न कौस्तुभ नामक पद्मराग मणि उत्पन्न हुआ, उस मणि में वक्षःस्थल के अलंकार के निमित्त श्रीहरि ने स्पृहा कीनी ॥ ५ ॥

ताके पीछे सुरलोक का भूषण रूप पारिजात [ कल्पवृक्ष ] हुआ जो याचकों के मनोरथ को पूर्ण करता है, हे राजन्! जैसे पृथिवी में आप अर्थियों की कामनाओं को पूर्ण करते हो ॥ ६ ॥

तिसके पीछे अप्सरायें उत्पन्न हुईं, जो कंठ में पदक पहरे हैं और सुन्दर वस्त्रों को धारण करें हैं और ललित गति तथा लीला पूर्वक अवलोकन से स्वर्ग के लोगों को रमाने वाली हैं ॥ ७ ॥

तदनंतर भगवत्परायणा साक्षात् श्रीमहालक्ष्मीजी प्रकट भई, जैसे सघन घनकी बीजुली होवे तिस प्रकार अपनी कांती से सब दिशाओं को प्रकाशित करती भई ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य रूपादिमहिम्ना आक्षिप्तं चेतो येषाम् ॥ ९ ॥

भगवद्वक्षसि स्थितया श्रिया विलोकितानां सुराणां यथापूर्वं संपत्प्राप्तिमसुराणां च तदभावं वक्तुमभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह—तस्या आसनमित्यादिना । यथाशीलाकर्णाख्यिनः प्राक्तन प्रबन्ध ॥ १० ॥

( १ ) दानवाः इति वीर० ( २ ) माधवमिति विजय० ( ३ ) वाकैरिति वीर० विजय० ।

समुद्रः पीतकौशेयवाससी समुपाहरत् ।
वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १५ ॥
भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ।
हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिषेचनिका अभिषेकोचिताः पञ्च पवित्राणि पञ्च गव्यानि मधुमाधवौ चैत्रवैशाखभवं फलपुष्पादि पाठान्तरेऽपि छन्दैक्ये स एवार्थः मधुमासे भवं मधिवति वा ॥ ११ ॥

अभिषेकमभिषेकोचितं विधिं नव्यो नटानां स्त्रियः ॥ १२ ॥

शङ्खवेणुवीणाश्च व्यनादयन् तुमुलो निःस्वनो येषां तान्मृदङ्गादीन् ॥ १३—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्यां रूपादिमहिम्ना आक्षिप्तं चित्तं येषां ते सर्वे ससुरासुरदानवाः स्पृहां चक्रुः ॥ ९ ॥

भगवद्वक्षःस्थितया श्रिया विलोकितानां देवादीनां यथापूर्वं सर्वसम्पत्प्राप्तिमसुराणां तद्विपर्ययं च वक्तुं तस्या अभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह—तस्या इत्यादिना । अथासीदाविरभूदित्यतः प्राक्तनेन ग्रन्थेन तस्या रमायाः उपवेशनार्थं महदद्भुतं महत्तं सिंहासनम् इन्द्र आनीय समर्पितवान् गङ्गादयः सरिच्छ्रेष्ठाः देहयुक्ताः सत्यः हेमकुम्भैः शुचं जलमानिन्यिरे ॥ १० ॥

भूमिरपि मूर्तिमती सती अभिषेचनिका अभिषेकोचिता ओषधीः सकला आहरदानिन्ये गावस्तु पञ्चपवित्राणि पञ्च गव्यान्याजह्रुः वसन्त ऋतुः मूर्तिमान् मधुमाधवौ चैत्रवैशाखभवफलपुष्पाद्युपाहरदित्यनुषङ्गः पाठान्तरे छन्दैक्येऽपि स एवार्थः मधुमासे भवं मधिवति वा ॥ ११ ॥

तत ऋषयोऽभिषेकं यथाविधि अभिषेकोचितविधिं यथावत्कल्पयाञ्चक्रुः गन्धर्वा भद्राणि मङ्गलानि जगुः नव्यः नटानां स्त्रियः ननृतुर्जगुश्च ॥ १२ ॥

मेघा मूर्तिमन्तो मृदङ्गादीन्वाद्यविशेषान् शङ्खवेणुवीणाश्च व्यनादयन् तुमुलो निःस्वनो येषां तान्मृदङ्गादींश्च ॥ १३ ॥

ततः पद्मकरां सतीं श्रियं दिग्गजाः पूर्णकलशैः सर्वौषधीयुक्तैः सरिच्छ्रेष्ठानीतैर्द्विजेरितैः सूक्तवाक्यैराभिषेचनिकमन्त्रैस्सह अभिषिषिचुः अभिषिक्तवन्तः ॥ १४ ॥

ततः समुद्रः पीतकौशेयवाससी समर्पितवान् ततः वरुणः मधुना मधुपानेन मत्ताः षट्पदाः भृङ्गा यस्यां तां वैजयन्तीं वनमालां समुपाहरदित्यनुषङ्गः ॥ १५ ॥

विश्वकर्मा प्रजापतिः भूषणानि सरस्वती हारम् अजो ब्रह्मा पद्मं नागाश्च कुण्डले समुपाहरन् ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपादिमहिम्ना ॥ ९—१० ॥

अभिषेचनिकाः अभिषेकयोग्याः साधनानि पञ्च पवित्राणि गोमयादीनि माधवं स्वकालसम्भवम् ॥ ११—१२ ॥

शङ्खादीनां तुमुलः निःस्वनो येषु ते तथा ॥ १३—१६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चक्रुः स्पृहामिति सम्पदधिष्ठातृत्वज्ञानेन तदधिष्ठानात्मलक्ष्मीसम्पल्लाभः स्यादित्येवमेव मत्वा नान्यथा ते हि प्रायो महाभक्ताः अतएवाग्रे सर्वेषां निजनिजोपायनादिमयभक्तिरेव वर्णनीया । आक्षिप्तचित्तत्वं विस्मयेनैवेति ज्ञेयम् ॥ ९—१२ ॥

मेघा वसन्तवत्तदधिष्ठातृदेवाः ॥ १३ ॥

नव्य इति नटस्येयमित्यर्थे । नृत्य इति पाठेऽप्यन्वयः इत्येव व्याख्येयं ॥ १४—१८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्यां पूर्वस्यां मरुदङ्गायामेव स्पृहां ननु तस्यामपि "तस्याः श्रियस्त्रिजगतो जनको जनन्याः" इति वक्ष्यमाणत्वेनैव तस्या जगज्जननीत्वज्ञापनात् किञ्च तस्या अपि रूपादीनां महिमा महिम्ना मा आक्षिप्तानि मैवात्मकानि चेतांसि येषां ते यतः ते तस्याः सकाशाद्राज्यभोगादि प्रेप्सव इति भावः ॥ ९ ॥

तस्याश्चेति चकारात् हरिप्रेयसीरूपायाश्च ॥ १० ॥

आभिषेचनिका अभिषेकोचिताः पञ्च पवित्राणि पञ्च गव्यानि मधुमाधवौ चैत्रवैशाखभवपुष्पफलादि मधुमाधवमिति पाठे मधुमासोद्भवं मधु ॥ ११—१३ ॥

श्रियमिति सम्पद्रूपां देवीमिति "दिवुक्रीडायाम्" भोगैश्वर्यवितरणेन क्रीडन्तीं पद्मकरामिति हरिप्रेयसीरूपां सतीं पतिव्रताम् ॥ १४ ॥

ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ।
चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम् ॥ १७ ॥
स्तनद्वयं[1] चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम् ।
ततस्ततो नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥
विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारि सद्गुणम् ।
गन्धर्वयक्षाऽसुरसिद्धचारणत्रैविष्टपेयादिषु नाऽन्वविन्दत ॥ १९ ॥
नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥ २० ॥
धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः ॥ २१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पीतकौशेये इति अभिषेकानन्तरं पीतवस्त्रस्यैव विहितत्वात् ॥ १५ ॥ ॥ १६ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्रूपादिमहिम्ना आक्षिप्तानि चेतांसि येषां ते ॥ ९ ॥ १० ॥

आभिषेचनिकाः अभिषेकार्हाः पञ्चपवित्राणि पञ्चगव्यानि मधुमाधवौ चैत्रवैशाखौ मासद्वयोत्पन्नपुष्पादिबाहुल्यार्पणसूचनाय तौ मासावेवाहरदित्युक्तम् ॥ ११ ॥ १२ ॥

मेघास्तदधिष्ठातारो देवताः तुमुलो निःस्वनो येषां तान् मृदङ्गादीन् शङ्खवेणुवीणाश्च व्यनादयन् ॥ १३—१५ ॥

अजो ब्रह्मा ॥ १६ ॥

———

### भाषा टीका ।

उनके रूप, औदार्य, ( उदारता ) अवस्था, वर्ण, और महिमा, से सबों के चित्तका आकर्षण होगया, अन एव उन श्री जी के लिये सुर, असुर, और मनुष्य, सबों ने स्पृहा कीनी ( केवल धन धान्यादि संपत्त्यर्थ ) ॥ ६ ॥

महेन्द्र ने तो उनको परम अद्भुत आसन लाकर बिछाया और नदियों में उत्तम गंगा यमुना प्रभृति सरिताओं ने सुवर्ण के कलसों से पवित्र जल समर्पण किया ॥ १० ॥

और अभिषेक के उचित सम्पूर्ण औषधियों को पृथिवी ने समर्पण किया, गायों ने पंच गव्य, और वसन्त ऋतुने फल पुष्प अथवा मधु समर्पण किया ॥ ११ ॥

और ऋषि लोगों ने यथा विधि श्री जी का अभिषेक किया और गन्धर्व लोग मंगल गान करने लगे नटी लोग नाचने लगी ॥ १२ ॥

तथा मेघ लोग मृदंग, पणव, मुरज, आनक, गोमुख, शंख, वेणु, वीणा, इन सबों का जैसे तुमुल शब्द हो इसे प्रकार नाद करते हुए, ॥ १३ ॥

तदनंतर पद्म जिन के हस्त में ऐसी श्रीदेवी को दिग्गजों ने ब्राह्मणों के मुख से उच्चरित सूक्त के वाक्यों सहित पूर्ण कलसों से अभिषेक किया ॥ १४ ॥

जब दिशाओं के गज अभिषेक कर चुके तब श्रीजी के पिता समुद्र ने पीतांबर युगल वस्त्र समर्पण किये, और वरुण जी ने मकरंद के मारे जामें भ्रमर गुंजार कर रहे ऐसी वैजयंती माला समर्पण करी ॥ १५ ॥

और विश्वकर्मा प्रजापति ने विचित्र भूषण, सरस्वती ने हार, ब्रह्मा जी ने कमल, और नाग लोगों ने कुंडल समर्पण किये ॥ १६ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पदमाश्रयं ध्रुवं नित्यमव्यभिचारिणो नित्याः सन्तो गुणा यस्मिंस्तं नान्वविन्दत कचित्कस्यचिद्दोषस्य सद्भावात् ॥ १९ ॥

तदेवाह—नूनमिति, त्रिभिः । मन्युनिर्जयो नास्ति दुर्वासः प्रभृतिषु गुरुशुक्रादिषु सङ्गवर्जितं ज्ञानं नास्ति महत्त्वेऽपि ब्रह्मसोमादेः न कामनिर्जयः परतो व्यपाश्रयः परापेक्ष इन्द्रादिः सः किमीश्वरः ॥ २० ॥

न भूतसौहृदं परशुरामादिषु न मुक्तिकारणं त्यागः शिबिप्रभृतिषु पुंसः कार्तवीर्यादेर्वीर्यमस्ति अजवेगनिष्कृतं कालवेगेन परि-

(१) चाक इति वीर०

क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते हि माम् ॥ २२ ॥

श्रीशुक उवाच।

एवं विमृश्याव्यभिचारि[१] सद्गुणैर्वरं निजै[२]काश्रयतयाऽगुणाश्रयम्।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २३ ॥
तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम्।
तस्थौ[३] निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन[४] याता ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इतं तु न भवति गुणामङ्गवर्जितः सनकादिर्द्वितीयो मम वरो न हि समाधिनिष्ठत्वात् ॥ २१ ॥

चिरायुष्यपि मार्कण्डेयादौ शीलमङ्गलं नास्ति इन्द्रियदमनशीलत्वात् क्वचित्तदप्यस्ति हिरण्यकशिपुप्रभृतौ आयुषः स्थैर्यं न वेद्यं तुर्यमपि भगवद्रूपेणाकस्मादेव मृत्युसम्भवात् यत्र कुत्र च श्रीरुद्रे मार्कण्डेयादिष्विन्द्रियदमनाद्यभावाच्छीलं मङ्गलं चायुर्निश्चयश्चेत्युभयमस्ति न चान्यः पूर्वोक्तः कश्चिद्दोषस्तथाऽपि सोऽप्यमंगलः श्मशानवासाद्यमङ्गलचेष्टितः श्रीमुकुन्दं लक्ष्यीकृत्याह, कश्चेति। कश्चित्सुमंगलो निरवद्यश्च स तु मां न हि काङ्क्षते आत्मारामत्वात् ॥ २२ ॥

एवं विमृश्य रमा निरपेक्षमपि मुकुन्दमेव वरं वव्रे तत्किम्? अव्यभिचारिभिः सद्भिर्धर्मज्ञानादिभिर्गुणैर्निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमं तत्र हेतुः अगुणाश्रयं प्रकृतिगुणातीतम् पाठान्तरेऽप्ययमेवार्थः, अतएव स्वस्य ईप्सितं किञ्च सर्वैर्गुणैर्गुणाभिमानिभिरपेक्षितं वृतम् अयं भावः यद्यपि स्वयमात्मारामत्वेनान्यनिरपेक्षस्तथाऽप्याश्रिता अणिमादिसिद्धीर्यथा नापेक्षते तद्वन्मामपि नापेक्षेत तावतैव तत्सेवयाऽहं कृतार्था स्यां किमन्यैः प्राकृतैरिति तमेव वृतवतीति ॥ २३ ॥

तदेवाह, तस्यांसदेशे कमनीयां नवकञ्जमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ कथम्भूतां मालाम्? माद्यन्तो ये मधुव्रतास्तेषां वरूथस्य गिरा उपघुष्टां नादितां कथम्भूता श्रीः सव्रीडहासेन विकसन्नयनं तेन तस्योरः स्वधाम याता सती वक्षः प्रतीक्षमाणा तस्थावित्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततः कृतस्वस्त्ययना कृतमङ्गलाश्रया श्रीर्नदन्तो द्विरेफा भ्रमराः यस्यां ताम् उत्पलस्रजं पाणिना परिगृह्य निरस्तनिखिलदोषस्य समस्तकल्याणगुणाकरस्य स्वाभिमतस्य पुंसः कण्ठे निधातुं परिवृणोतीति भावः चचाल कथम्भूता सती शोभनयोः कपोलयोः कुण्डले प्रथ्नती यस्मिन् सव्रीडो हासः यस्मिंस्तत्सुशोभनमतिसुन्दरं वक्त्रं दधती ॥ १७ ॥

तथा चन्दनकुङ्कुमाभ्याम् उक्षितं सिक्तं लिप्तं समं निरन्तरं च यत्स्तनद्वयं तच्च चारु सुन्दरं कृशाम्बरं च दधती ततः सा श्रीः नूपुराणां वल्गुभिर्मधुरैः शिञ्जितैरितस्ततः विसर्पन्ती चलन्ती हेमलतेव बभौ ॥ १८ ॥

तत आत्मनः स्वस्याः पदमाश्रयं ध्रुवं नित्यमव्यभिचारिणो नित्याः स्वाभाविकाः सन्तः कल्याणगुणाः यस्मिंस्तादृशमवद्यं निरस्तहेयगुणम् एवम्भूतं पदं गन्धर्वादिमध्ये विलोकयन्ती विचारयन्ती नान्वविन्दत नापश्यत् कश्चित्कस्यचिद्दोषस्य दर्शनेन नान्वविन्दतेति भावः ॥ १९ ॥

तदेवाह–नूनमिति त्रिभिः। यस्य रुद्रदुर्वासःप्रभृतेस्तपोऽस्ति तस्य मन्युनिग्रहस्तु नास्ति नूनमिति निश्चये यस्य तु गुरुशुक्रादेर्ज्ञानमस्ति न तस्य ज्ञानं सङ्गवर्जितं किन्तु फलसङ्गादियुक्तमेव कश्चिद्ब्रह्मादिर्महांस्तथापि न तस्य कामनिर्जयोऽस्ति दुहितुरेव पत्नीत्वेन गृहीतत्वादिति भावः। यः परतोऽपाश्रयः परपेक्षैश्वर्याश्रय इन्द्रादिः स किमीश्वरः? अनीश्वर एवेति भावः ॥ २० ॥

क्वचित्परशुरामादौ धर्मोऽस्ति तथाऽपि न भूतसौहृदमस्ति त्यागः क्वचिच्छिबिप्रभृतिष्वस्ति यस्त्यागः शिब्यादिगतःस न मुक्तिकारणं न मुक्तिहेतुः पुंसः कार्तवीर्यादेः वीर्यमस्ति तथाऽपि तद्जवेगेन कालवेगेन निष्कृतं परिहृतमस्तु न भवति द्वितीयः भगवतोऽन्यः कश्चिदपि सनकादिरपि सत्त्वादिप्राकृतगुणसङ्गवर्जितो न भवति"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः"इत्युक्तरीत्या गुणत्रयविनिर्मुक्तस्य श्रीभगवदन्यस्य कस्याऽपि जन्तोरभावादिति भावः ॥ २१ ॥

क्वचिन्मार्कण्डेयादिषु चिरायुरस्ति न तु शीलं मङ्गलञ्चास्ति इन्द्रियदमनधर्मशीलत्वादिति भावः क्वचित्तदप्यस्ति नैवायुषः स्थैर्यं न वेद्यं न निश्चेयं कुत्रचित् रुद्रादौ उभयं चिरायुष्यं शीलञ्चास्ते तथापि स रुद्रादिरमङ्गलः अमङ्गलवेषः श्रीभगवन्तं लक्ष्यीकृत्याह–यश्च कार्त्स्न्येन सद्गुणाश्रयानिरवद्यानिरतिशयमङ्गलमूर्तिर्भगवान् स तु मां न हि काङ्क्षते स्वत एव पूर्णत्वादिति भावः ॥ २२ ॥

एवमित्थं विमृश्य रमा लक्ष्मीः निरपेक्षमपि मुकुन्दमेव वरं पतिं वव्रे, तत्र हेतुं वदन्मुकुन्दं विशिनष्टि—अव्यभिचारिभिरनितरसाधारणैर्मङ्गलगुणैर्निजैः ... निरुपाधिकैराश्रयतः आश्रयणादरं सर्वोत्कृष्टम् अगुणाश्रयं सत्त्वादिप्राकृतगुणानाश्रयं च निजैराश्रयतागुणाश्रयम् इतिपाठान्तरं तदा निजैरव्यभिचारि-

(१) सद्गुणं पदं निजैकाश्रयि सद्गुणाश्रयम् इति विज०। (२) राश्रयतो इति वीर०। (३) निरीय। (४) गीता इति च विज०।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सद्गुणैराश्रयतया प्राकृतगुणाश्रयं वरम् उत्कृष्टमित्यर्थः । सर्वगुणैराश्रयणासौकर्यादिहेयाश्रयणीयत्वेनापेक्षितम् अत एवेप्सितमाप्तुमिच्छाविषयं मुकुन्दं वरं वव्रे ॥ २३ ॥

उक्तवरणप्रकारमेवाह—तस्येति । तस्य मुकुन्दस्य अंसदेशे स्कन्धप्रदेशे कमनीयां नवकञ्जमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ, कथम्भूतां मालाम् ? माद्यतां मधुपानमत्तानां मधुव्रतानां भ्रमराणां वरूथस्य समूहस्य गिरोपघुष्टां ध्वनितां; कथम्भूता लक्ष्मीः ? सव्रीडहासेन विकसत् नयनं येन तस्य भगवत उरो वक्षः स्वधाम स्वाश्रयं याता तद्वक्षःस्वाश्रयत्वेन प्रतीक्षमाणा सतीत्यर्थः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वक्रं समं स्तनद्वयञ्च दधती ॥ १७—१८ ॥

आत्मनः स्वस्य निर्दोषं गन्धर्वादिषु पदं स्थानं पतिलक्षणं स्थानं नान्वविन्दतेत्यन्वयः ॥ १९ ॥

ननु, पदमनुपलभ्य किं पुंश्चली जातेत्याशङ्कां श्लोकत्रयेण परिहरति—नूनमिति । यस्य तपोऽस्ति तस्य मन्युनिर्जयो नास्ति नूनं निश्चयं "नूनं तर्केऽर्थनिश्चये" इत्यभिधानाद् इति तर्कयामि वा

" निर्भिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् " इति.

अनेन ऋषितया नारदादयः प्रतिषिद्धाः क्वचित्पुंसि ज्ञानमस्ति तस्य ज्ञानं सङ्गवर्जितं फलकन्नतरहितं न स्यात् नूनमित्यत्राप्यनुकृष्यते अनेन बृहस्पत्यादयो निषिद्धाः कश्चिद्ब्रह्मा तत्र महानस्ति तस्य ब्रह्मणः कामनिर्जयो नास्ति "प्रजापतिः स्वां दुहितरम् अभ्यध्यायत्" इति श्रुतेः । "कस्मै देवाय हविषा विधेम" इति च. यः परो व्यपाश्रयः परमन्यमाश्रयत इति स ईश्वरः किं नैव अनेन रुद्रादिर्निवारितः ॥ २० ॥

तर्हि दयादयाश्रिः स्यादिति । तत्राह—धर्म इति । क्वचित्संयमित्वं धर्मोऽस्ति तस्य धर्मस्य भूतेषु दया नास्ति निरनुक्रोशाधिकारप्रवृत्तत्वात् क्वचित्कस्मिंश्चित्पुंसि पुण्यलक्षणो धर्मोऽस्ति तस्य प्राणिषु सौहृदं दुर्लभमिति सामान्यनिषेधो वा त्यजनं च भार्गवं देवतादिभ्यो वाऽन्यायार्जितधनादिदानं त्यागः तच्च मुक्तिकारणं न भवति भगवदर्पणाबुद्ध्याऽननुष्ठितत्वात् हानोपादानादिलक्षणत्यागाधिकारित्वाद्वायुरपि मुक्तिकारणं न "मोक्षरस्तु जनार्दनः" इति वचनाद्वा अनेन वायुर्लक्ष्यते कश्चित्पुंसां वीर्यं तापादिदुःखनिवारकमस्ति तद्जवंगनिष्कृतं न कालचक्रनिवृत्ति भवति अनेन चन्द्रो निवारितः "क्षीणाः क्षीणाः प्रविशन्ति" इति वचनात् गुणसङ्गवर्जितो द्वितीयो न हि हरिं विनेति शेषः ॥ २१ ॥

कश्चिद्वस्तुनि चिरायुरस्ति चेत्तस्य शीलमङ्गलं न हि । चिरंजीविषत् कश्चिद्वस्तुनि तच्छीलमप्यस्ति तद्यायुषो न वेद्यम् आयुर्ज्ञानं दुःशकमित्यर्थः । कुत्र च क्वापि यत्र यस्मिन् पुंसि उभयमायुः शीलं च सोऽपि पुमानमङ्गलः गर्वितः सुमङ्गलः कश्चन लोकविलक्षणो मुक्तजातीयो मां काङ्क्षते यदि सोऽपि न भवतीति शेषः ॥ २२ ॥

एवमिन्द्रादीनपि विमृश्य दोषानुक्त्वा रमा मुकुन्दं परम्परं वव्रे इत्यन्वयः अव्यभिचारिणो नातिव्याप्ताः सन्तः अव्यापकमस्मदादिदोषरहिता गुणा लक्षणानि यस्य स तथा तं निजाश्रैकाश्रयिणाश्रेकस्मिन्नेव वर्तमानाश्च सन्तश्च तपआदिगुणा येषां ते तथा तेषां पुंसामाश्रयं निजत्वादेकाश्रयित्वं निजमात्मीयमित्ययोरिति तत्तन्मत्वापन्नत्वेन तदाश्रयत्वं युक्तं भक्त्यादिसर्वगुणैरपेक्षितत्वं तत्रान्यथा सौशील्यादिगुणैर्वा. काञ्चन काङ्क्षत इत्यस्याप्रवादमाह, निरपेक्षमिति. तर्हि न कश्चन तस्मिन्नादरं करोतीति तत्राह ईप्सितमिति—

एष ब्रह्मातिवृद्धस्तपति दिनपतिश्चञ्चलो मातरिश्वा —
दिग्वासा नीलकण्ठाम्बरशयनगिरसौ गर्वितः क्षीयतेऽब्जः ॥
इत्थं देव्या विचिन्त्य भ्रमरकुलकलागीतशब्दप्रफुल्ला —
दत्ता माला मुरारेः सुरतरुकुसुमालङ्कृता पातु युष्मान् ॥

इति पुराणज्ञा व्याचक्षन्ते ॥ २३ ॥

तस्य हरेरंसे मालां निश्रीय निधाय तस्थावित्यन्वयः उशतीमिष्टमाधनीभूतां कान्तां वा व्रीडया सह वर्तमानः सव्रीडः स चासौ हासः सव्रीडहासः तेन विकसितनयनेन स्वस्या धाम तस्य हरेः उरः पश्यतीति शेषः भीता शरीरकंपोपेता अयं च शृङ्गारविशेषः—

"अनाद्यमनन्तकालं च विष्णुमेवाभिना रमा ।
अन्येषां ज्ञापनार्थाय दोषानुक्त्वतरान् जहौ" ॥—

इति वचनात् अधुना हरेर्लक्ष्मीप्राप्तिनं पूर्वमिति शङ्कापरिहर्तव्या स्वस्याः स्त्रियः इत्युत्तरश्लोकविशेषणसामर्थ्याच्च ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यशिक्षार्थं श्रियश्चरितमाह—विलोकयन्तीति ॥ १९ ॥

अन्येषां स्वल्पगुणत्वेऽतिदोषमिश्रतामाह—नूनमित्यादिश्रेयसा । अत्र तप आदिभिरपि न साम्यं विवक्षितम् । असाम्यप्रसिद्धेः । यथोक्तम् "इमे चान्ये च भगवन्नित्या यत्र" इत्यादौ प्राध्वी महत्त्वमिच्छद्भिरिति किन्त्वन्यदीयतप आदिलेशानां सतामपि दोषान्तरोपरक्तत्वमित्येवमत्यन्तासाम्यमेव विवक्षितं । परतो व्यपाश्रय इति गुणसाम्यमपि प्रत्याख्यातम् ॥ २० ॥

अजवंगेति यत्तत्तेषां तत्तद्गुणत्वमपि मायागुणकृतमेव न तु तदतीततद्गुणत्वमिति परामृशति—नहीति । हि यस्मात् द्वितीयः श्रीमुकुन्दादन्यः अनेन सनकादय आत्मारामा अपि परिहृताः तेषां शमदमादिगुणानां मायिकत्वात् तथा शिवोऽपि परिहृतः "शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः" इति

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हरिर्हि निर्गुणः साक्षात्" इत्याद्युक्तेः यद्वा यो वा कश्चिद्गुणाङ्गवर्जितोऽस्ति सोऽपि द्वितीयो मुकुन्दस्य तुल्यगुणो न भवेदित्यर्थः ॥ २१ ॥

अथ प्रकारान्तरेण शिवं परिहर्त्तुमुपक्रमते—क्वचिदिति । चिरायुश्चिरजीविता शीलमङ्गलशब्देनात्र भोग उच्यते इन्द्रियदमनशीलत्वादिति टीकायां हेतुविन्यासात् अभोगिनोऽमङ्गलस्वभावत्वेन लोके नामाग्रहणदर्शनाच्च यद्वा क्वचित् मार्कण्डेयादौ चिरजीवितास्ति शीले स्वभावे मङ्गलं माङ्गल्यं नास्तीत्यर्थः । असुरस्वभावत्वादेवं क्वचित् बलिप्रभृतौ शीलमङ्गलमप्यस्ति किन्त्वायुषो वेद्यं वेदनं नास्ति मरणानिश्चयात् यत्र शिवे मङ्गलस्वभावो नित्यत्वाच्चायुषो वेद्यत्वं चास्त्युभयमप्यस्ति सोऽप्यमङ्गलः बहिःश्मशानवासाद्यमङ्गलचेष्टितः श्रीमुकुन्दं लक्ष्यीकृत्याह—यः कश्च कोऽपि तत्तद्गुणातिक्रमणानन्तगुणत्वात्तद्दोषहीनत्वाच्च सुमङ्गलः अतिशयेन सर्वेषां मङ्गलनिधानरूपः स तु मां स्वरूपेण परमानन्दरूपां शक्त्या च सर्वगुणसम्पत्तिदायिनीमपि न काङ्क्षति स एव स्वरूपगुणसम्पत्तिभिः पूर्ण इत्यर्थः । अथच प्रेमवशोऽसौ प्रेमवतीं मां कथं नाकाङ्क्षेदित्यभिप्रेत्य श्लेषेण कश्चन कोऽपि सुमङ्गलोऽसौ हि निश्चितं मां काङ्क्षतीत्यपि भावितम् एवमत्र सत्यम् परमानन्दरूपे तस्मिन् गुणादिसम्पल्लक्षणानन्तशक्तिर्लक्ष्मीस्वरूपशक्तिर्द्विधा विराजते तदन्तरेऽनभिव्यक्तनिजमूर्त्तित्वेन तद्बहिरप्यभिव्यक्तलक्ष्म्याख्यमूर्त्तित्वेन इयञ्च मूर्त्तिमती सर्वगुणसम्पदधिष्ठात्री भवति ततः स्वस्मिन् परमानन्दत्वस्य सर्वगुणसम्पत्तेश्च स्वरूपसिद्धपरमपूर्णत्वात् उभयथापि न तां पृथग्भूय स्थितां मूर्त्तिमतीमपेक्षते यथा खल्वन्यः । किन्तु भक्तवशता स्वभावेन तां प्रेमवतीमपेक्षत एवेति ॥ २२ ॥

प्रकरणं निगमयति—एवमिति । मुकुन्दं वरं वव्रे इत्यन्वयः तं विशिनष्टि, अव्यभिचारिभिः सद्भिर्निर्दोषैश्च गुणैर्वरं सर्वोत्तमं निजैकाश्रयतया अन्यनिरपेक्षत्वेनैव च गुणाश्रयम् । स्वरूपसिद्धसद्गुणमित्यर्थः । अतएव तेषां गुणानां प्रकृतिसम्बन्धित्वमपि व्यावृत्तं स्वतः परमानन्दघनरूपत्वात् सर्वगुणोपेक्षितं स्वयं निरपेक्षम् अतएव निजाभीप्सितमिति । यद्वा एवं विमृश्य वव्रे विमर्शनमेवानुवदति—अव्यभिचारीति । निरपेक्षोऽप्यनाकृताऽव्यभिचारसद्गुणत्वात्कृतवत्सलतया मामङ्गीकरिष्यत्येवेति भावः ननु योग्य एवाऽयं तस्य महतो महागुणः भवत्याकर्षणोऽयायात्तद्वरणं न योग्यं तत्राह, सर्वैर्गुणैः प्राकृतैरप्यपेक्षितं मायांशभूताभिस्तत्तदधिष्ठातृदेवीभिः स्वसमृद्धये समाश्रयतेऽसौ किमुत मयेत्यर्थः ॥ २३ ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उभयरूपस्याः एव तस्याः श्रीभगवत्प्राप्तिमाह—तत इति ।
कुतमनादित एव स्वास्ति सर्वकालमङ्गलं नारायणरूपं एतदायतनमास्पदं यस्याः सा स्वप्रतिच्छविरूपा गुणमय्येव स्थिताः सम्पदो ब्रह्मादिभ्यो दत्तापि स्वयं गुणातीता चिन्मयसम्पद्रूपा लक्ष्मीः श्रीः नारायणमेकमेवाभिलक्ष्य सदा वर्त्तते तथैवानादित एव कमपि गुणं नोपाधीकृत्य स्वभावत एव तस्मिन् प्रेमवती तत्सर्वेन्द्रियसुखसम्पादयित्री प्रेयसीरूपाणि वर्त्तत इत्यर्थः । तदपि द्विविधेन लक्ष्मीः समुद्रं जनकीकृत्य प्रादुर्भूता पुनरेकीभूता सती स्वनित्यप्रियं श्रीनारायणं स्वयं वरीतुं चचाल ॥ १७ ॥

ततस्तदनन्तरं ततस्तत्र महामदसि विसर्पन्ती हेमलता जङ्गमा स्वर्णवल्लीव ॥ १८ ॥

किञ्च तयोरेकीभूतयोर्लक्ष्म्योर्मध्ये या सम्पद्रूपा सा लोके स्वप्रेयसो भगवतः सर्वत एवोत्कर्षं ख्यापयितुं तत्र नित्यनिरुपाधिप्रेमवत्यपि अन्यत्र गुणदोषविवेचनपूर्वकमन्यस्याः स्वयंवराथा इव स्वस्यापि तत्रैव गुणोत्कर्षोपाधिकं स्वयंवरणं दर्शयामासेत्याह—विलोकयन्तीति । गन्धर्वादिषु आत्मनः स्वस्य पदमास्पदं जनं कमपि नान्वविन्दत कीदृशं निरवद्यं निर्दोषम् अथ च अव्यभिचारिणः सदैव स्थायिनः सन्तः कल्याणत्वात् श्रेष्ठा गुणा यत्र तत् ध्रुवं नित्यम् ॥ १९ ॥

तत्रतत्र वरणाऽनवसायानुरूपे सदोषप्राकृतगुणवत्त्वमेव हेतुरिति सम्पद्रूपा लक्ष्मीः स्वगतमाह—नूनमिति त्रिभिः । तस्य दुर्वाससःप्रभृतिमन्युनिर्जयो नेति तपसो वैयर्थ्यम् ज्ञानं क्वचित् बृहस्पत्यादिषु सङ्गवर्जितं नेति ज्ञानस्य वैयर्थ्यम् महान् ब्रह्मा न कामनिर्जय इति महत्त्वस्य वैयर्थ्यम् यः परतः शत्रुभ्यो हेतोऽर्थपाश्रयः व्यपगताश्रयो वारम्वारम्भवति स किमिन्द्रादिरीश्वरो भवति नैवेत्यर्थः ॥ २० ॥

क्वचित्कार्मिषु शुक्रादिषु धर्मः कर्मित्वादसुरसुरहितत्वाच्च न भूतसौहृदमिति धर्मस्य वैयर्थ्यं त्यागोऽन्नादिदानं दक्षादिषु तद्दानस्य मुक्तिकारणत्वाभावाद्वैयर्थ्यं वीर्यं बलं पुंसः शुम्भनिशुम्भादेः अजवेगानिष्कृतं कालवेगपरिहृतं न भवतीति बलस्य वैफल्यं गुणसङ्गवर्जितः प्राकृताप्रकृतविषयासक्तिमात्ररहितः सनकादिर्न द्वितीयो न ह्यागरस्तत्र यदप्राकृतसौरूप्यसौरभ्यादेर्नैष्फल्यापत्तेः ॥ २१ ॥

क्वचिद्बलिप्रभृतिषु चिरमायुः किन्तु शीलमङ्गलानि न तत्र आसुरस्वभावेन शीलाभावः इन्द्रशत्रुकत्वेन मङ्गलाभावश्च क्वचिन्मनुपुत्रपौत्रादिषु तत् शीलमङ्गलं किन्त्वायुषो न वेद्यं न ज्ञानं मनुष्यजातित्वेनाचिरायुष्ट्वात् यत्र कुत्रचिच्च उभयं सौशील्यं निपदभावत्वं चिरायुष्टुं च स च महादेवः अमङ्गलः श्मशानवासाद्यमङ्गलचेष्टितः भगवन्तं लक्ष्यीकृत्याह—शोभनानि मङ्गलान्येव यस्येति पूर्वोक्तदोषाणां स्वरूपत एवामङ्गलत्वात् गुणानां प्राकृतानां नश्वरत्वेन कल्याणत्वाभावात् ते गुणा दोषाश्चैव सुमङ्गला इति भावः किञ्च पूर्वपूर्ववदभिलषणीयको दोषोऽस्तीति व्याजस्तुत्या दोषमाह—न काङ्क्षते मापेक्षत इति निरपेक्षत्वलक्षणः सर्वत्र विलक्षणो ऽत्रैव दृष्ट इति भावः ॥ २२ ॥

एवं विमृश्य रमा निरपेक्षमपि मुकुन्दमेव वरं वव्रे ननु,

तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षो निवासमकरोत्परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथुः स्वनः ।
देवाऽनुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २६ ॥
ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ।
ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २७ ॥
श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ।
शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम् ॥ २८ ॥
निस्सत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः ।
यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २९ ॥
अथासीद्वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ ३० ॥
अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज ! पुरुषः परमाद्भुतः ॥ ३१ ॥
दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३२ ॥

---

भाषा टीका ।

सुपेक्षित और आप निरपेक्ष ऐसे श्रीमुकुन्द को अपने मनके इच्छित पति स्वीकार किये ॥ २३ ॥

फिर श्रीमुकुन्द भगवान् के कंठ में बड़ी कमनीय और मदमत्त मधुव्रतों [ भ्रमरों ] के समूहों की वाणी का जिसमें घोष होरहा है ऐसी नवीन कमलों की माला को धारण कराकर निकट में स्थित भई। तब गोविंद ने भी अपने वक्षःस्थल में वास दिया और श्री जी लज्जा हास और विकसित नयनों से अपने धाम श्रीहरि के वक्षस्थल में विराजमान भई ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भगवानपि त्रैलोक्याभिवृद्धये स्वयमेव तस्याः स्थानं दत्तवानित्याऽऽह—तस्या इति । विविधा भूतयो विभवा यस्याः तस्यास्त्रिजगतो जनन्याः श्रियः परमं सुस्थिरम् ऐश्वर्यतावर्धयत ॥ २५—२६ ॥

तल्लिङ्गैर्विष्णुप्रतिपादकैः अवितथैर्यथार्थैः ॥ २७—२९ ॥

वारुणी वरुणादेवतत्वं यदन्नं तन्मयी सुरा ॥ ३० ॥ ३१ ॥

दीर्घौ पीवरौ दोर्दण्डौ यस्य कम्बुग्रीवः शङ्खनाभिरिव त्रिरेखा सुवृत्ता ग्रीवा यस्य ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रिजगतो जनन्यास्तस्या अखिलविभूत्याश्रयभूतायाः श्रियः त्रिजगज्जनको भगवान् स्वं वक्ष एव परं निवासस्थानमकरोत् यत्र वक्षसि स्थिता श्रीः सकरुणेन निरीक्षणेन स्वाः प्रजाः साधिपतींस्त्रिलोकांश्चैधयत अवर्धयत ॥ २५ ॥

तदा शङ्खादीनां वाद्यानां सस्त्रीणां देवानुगानां गन्धर्वादीनां नृत्यतां गायतां पृथक्पृथक् महान् ध्वनिरभूत् ॥ २६ ॥

तदा ब्रह्मादयः सर्वे विश्वस्य स्रष्टारः पुष्पाणि वर्षन्तः विभुं भगवन्तं तल्लिङ्गैर्भगवद्गुणप्रतिपादकैरवितथैः सत्यैः यथावस्थितार्थप्रतिपादकैर्नत्वाऽऽरोपितगुणप्रतिपादकैरित्यर्थः । मन्त्रैरीडिरे तुष्टुवुः ॥ २७ ॥

देवाः सप्रजापतयः प्रजाश्च श्रियाऽवलोकिताः शीलादिगुणसम्पन्नाः परां निर्वृतिमानन्दं लेभिरे ॥ २८ ॥

दैत्या दानवाश्च यदा लक्ष्म्योपेक्षितास्तदैव हे राजन् ! निस्सत्त्वाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निर्बलाः अत एव निरुद्योगाः स्वर्गकलत्राः लोलुपाः विमोहशीलाः बभूवुः ॥ २९ ॥

अथ श्रिय उद्गमनानन्तरं वारुणी देवी वरुणदैवत्यं यस्त्मयी सुराऽधिदेवता कन्या कमले इव नेत्रे लोचने यस्याः साऽऽसीदुद्बभूव तां च हरेरनुज्ञया ते असुरा जगृहुः ॥ ३० ॥

अथामृतार्थिभिः काश्यपैर्देवासुरैर्मथ्यमानादुदधेः हे राजन् ! परमाद्भुतः पुरुषः उदतिष्ठदुद्बभूव ॥ ३१ ॥

तं विशिनष्टि—दीर्घौ पीवरौ च दोर्दण्डौ भुजौ यस्य कम्बुवत्शङ्खवत् त्रिरेखा वृत्ता च ग्रीवा यस्य अरुणे ईक्षणे यस्य मेघ इव श्यामः तरुणो युवा स्रग्वी वनमाली सर्वैराभरणैरलङ्कृतः॥३२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऐधयत अवर्धयत ॥ २५ ॥

"काहले गोमुखे तूर्यदुन्दुभौ च प्रचक्षते" इति च ॥ २६ ॥

तल्लिङ्गैः श्रीलक्षणोपेतैः श्रीसूक्तैरित्यर्थः ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥

वारुणी सुराभिमानिनी देवता च ॥ ३० ॥

काश्यपैर्देवासुरैः परममुत्तममद्भुताश्चर्यमहात्म्यं यस्य स तथा ॥ ३१ ॥

कम्बुग्रीवः रेखात्रयाङ्कितगलः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीभगवानपि तादृशतद्भक्त्यनुभवेन जातानुरागस्तत्परमाश्रयं स्ववक्ष एव तस्यै स्थानमदात् सापि तं निजपरमाश्रयं प्राप्य समुद्धा सर्वान् सम्वर्द्धयामासेत्याह, तस्याः श्रिय इति ॥ २५ —२८ ॥

यदा लक्ष्म्योपेक्षितास्तदा निस्सत्त्वादयो बभूवुरित्यन्वयः ॥ २९ ॥

वारुणी तन्नाम्न्याः सुराया अधिष्ठात्री ॥ ३० ॥

अथेति सार्द्धत्रिकम् ॥ ३१-३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्विविधाया लक्ष्म्यास्तत्र वासं व्यवस्थयैवाह–तस्याः प्रसिद्धायाः हरिप्रेयसीरूपायाः त्रिजगतो जनन्याः वक्ष एव निवासम् अकरोत् तथैव विभूतेः संपद्रूपायाः अपि वक्षः परमं श्रेष्ठं सार्वकालिकं च निवासम् अकरोत् तेन ब्रह्मेन्द्राद्याः खलु विभूतिरूपायाः असार्वदिकाः गौणाश्च निवासाः स्युरिति ध्वनितम् अथात्र विष्णुसदाशिवयोर्निर्गुणत्वेश्वरत्वाभ्यां साम्येऽपि यथा सदाशिवांशाभूतस्य रुद्रस्य गुणावतारत्वं न तु विष्णोरंशभूतस्य मत्स्यकूर्मादेस्तथा लक्ष्मीतदंशभूतविभूतिरूपलक्ष्म्योर्भगवत्प्रेयसीत्वादिना साम्येऽपि विभूतिरूपलक्ष्म्याः या विभूतिस्तस्या एव ब्रह्मादिभ्यो दत्तसंपत्तेर्गुणमयत्वं न लक्ष्म्याः । लक्ष्म्यास्तु नित्यैमिश्रधामस्थसिद्धभक्तेभ्यो दत्तसम्पत्तेश्चिन्मयत्वमतस्तयोरीशपक्षैलक्षण्यमिति भावः । तदेव स्पष्टयति–श्रीः सम्पद्रूपा यत्र वक्षसि स्थिता एव स्वाः प्रजाः ब्रह्मेन्द्राद्या ऐधयत अवर्धयतेति ब्रह्मेन्द्रादिषु सम्पद्रूपायाः विभूतयः स्थिता इति व्यञ्जितम्. प्रजा एवाह—साधिपतीन् इति ॥ २५—२६ ॥

वारुणी वरुणदैवत्यं यद्द्रव्यं तन्मयी सुरा ॥ ३०—३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुकुन्दोऽपि तदभिलाषापूर्णार्थं स्ववक्षसि तां स्थापितवान् इत्याह—तस्या इति । त्रिजगतो जनन्याः श्रियः परमं सर्वश्रेष्ठं स्ववक्षोवासं निवासस्थानमकरोत् यत्र स्थिता सकरुणेन निरीक्षणेन स्वाः प्रजाः साधिपतींस्त्रिलोकांश्च दुर्वाससः शापेन निःश्रीकान् पुनरैधयत अवर्द्धयत सश्रीकान् चकार ॥२५॥२६॥

तल्लिङ्गैर्विष्णुस्वरूपगुणाद्यर्थकैः मन्त्रैः ईडिरे तुष्टुवुः अवितथैर्यथार्थैरित्यनेन सर्वज्ञत्वसर्वात्मत्वसर्वेश्वरत्वप्रतिपादकानि वाक्यानि विष्णावेवा ऽवितथानि भवन्त्यन्यत्र तु स्तुतिमात्रपराणीति द्योत्यते ॥ २७—२६ ॥

वारुणी सुरा ॥ ३०—३२ ॥

---

भाषा टीका ।

इस प्रकार श्रीहरि ने विविध वैभव वाली जगज्जननी श्रीलक्ष्मी जी को अपने वक्षःस्थल उत्कृष्ट निवास दिये जहां स्थित होकर श्री लक्ष्मी जी अपने करुणा पूरित कटाक्षों से अपनी सकल प्रजा तथा लोकपालों सहित तीनों लोकों की वृद्धि करतीं भई ॥ २५ ॥

उस समय शंख, तूर्य, मृदंग, इत्यादि बाजों का तथा देव और उनके अनुचर और उन सबों की स्त्रियों का नाचने गाने का बड़ा भारी शब्द होता भया ॥ २६ ॥

और ब्रह्मा महादेवजी और अंगिरा प्रभृति सर्व प्रजापति लोग यथार्थ मंत्रों से श्रीविष्णु के प्रतिपादक चिन्हों को कथन कर २ पुष्पों की वर्षा करते हुये प्रभु की स्तुति करते भये ॥ २७ ॥

उस समय जब श्री लक्ष्मी जी ने देवता प्रजापतियों सहित सम्पूर्ण प्रजा को अपनी कृपा दृष्टि से देखा तब सब लोग शील गुण संयुक्त हुए और परमानन्द को प्राप्त होते हुए ॥ २८ ॥

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः।
(१) स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ३३ ॥
अमृताऽऽपूर्णकलशं बिभ्रद्वलयभूषितः।
स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः ॥ ३४ ॥
धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्।
तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥ ३५ ॥
लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन्।
नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥ ३६ ॥
विषण्णमनसो देवा हरिं शरणमाययुः।
इति तद्दैन्यमालोक्य भगवान् भृत्यकामकृत्।
मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३७ ॥
मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम्।
अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ! ॥ ३८ ॥
देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः।
सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥
इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः।
दुर्बलाः प्रबलान्राजन् ! गृहीतकलशान्मुहुः ॥ ४० ॥

भाषाटीका।

प्रथम जब श्रीलक्ष्मी जी ने इन की उपेक्षा करी रही तब हे राजन् ! सम्पूर्ण जन पराक्रमहीन लोलुप निरुद्योग वाले निर्लज्ज दैत्य दानव होगये रहे ॥ २९ ॥

अब लक्ष्मी जी के प्रकट होने तथा श्री हरि के स्वीकार करने के पश्चात् फिर जब समुद्र मथने लगे तब वारुणी देवी [सुरा] कमल सदृश लोचनोंवाली एक कन्या उत्पन्न हुई उसको श्रीहरि की अनुमति से असुर लोगों ने ग्रहण किया ॥३०॥

तदनंतर हे महाराज ! अमृत की इच्छा वाले कश्यप के पुत्र देव दानवों ने जब फिर मंथन किया तब उस उदधि से एक परमाद्भुत पुरुष निकला ॥ ३१ ॥

जिसके बड़े लंबे और पुष्ट भुजदंड और शंख भरी की ग्रीवा अरुणारे लोचन रूप से श्याम अवस्था में तरुण माला को धारण किये सर्व आभरणों से विभूषित ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्निग्धः कुञ्चितः केशानामन्तो यस्य ॥ ३३ ॥ ३४ ॥

इज्यभाक् यज्ञभागभोक्ता अमृतेन आभृतं परिपूर्णम् ॥ ३५ ॥ ३६ ॥

मिथो दैत्यानां परस्परं कलहोत्पादनेन योगमायया च मोहिन्या वोऽर्थं साधयिष्याम्यतो मा खिद्यतेत्याहेति शेषः ॥ ३७ ॥

तदेवाह-मिथ इति। तर्षः कामस्तद्युक्तानि चेतांसि येषाम् इत्येवं समबलानां कलिरभूत् ॥ ३८ ॥

दुर्बलानां स्वाक्रोशप्रकारमाह—देवा इति द्वाभ्याम्। ये देवाः तुल्येनायासेन हेतवः साधकाः तुल्य आयासो हेतुश्च अमा-विशेषामिति वा सत्रयागे यथा सर्वेषां समं फलं तद्वत् तथा च श्रुतिः "ऋद्धिकामाः सत्रमासीरन्" इति "ये यजमानास्त ऋत्विजः" इति च ॥ ३९—४१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पीते वाससी यस्य बृहद्विपुलमुरो वक्षो यस्य सुमृष्टे निर्णिक्ते मणिमये कुण्डले यस्य नीलः कुञ्चितः कुटिलः केशानामन्तो

(१) नीलकुञ्चितेति विज० पाठः।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ऽप्रभागो यस्य सः सुभगः सुकुमारः सर्वावयवसुन्दरो वा सिंहस्येव विक्रमः पादविन्यासो यस्य ॥ ३३ ॥

अमृतेन पूर्णं कलशं बिभ्राणः वलयैरलङ्कृतः कोऽसौ विस्मयाह—स इति । स वै साक्षाद्भगवतो हरेरंशांशेन सम्भवो यस्य ॥ ३४ ॥

स तु धन्वन्तरिरिति प्रसिद्धः आयुर्वेदस्य द्रष्टा इज्यभाक् यागभोक्ता तममृतकलशं बिभ्रतं धन्वन्तरिमालोक्य सर्वेऽसुराः सर्ववस्तूनि मथनादुत्पन्नानि लिप्सन्तोऽमृतेन आभृतं सम्पूर्णम् कलशं तरसा बलेनाऽऽशु वा आहरन् आहृतवन्तः अमृतभाजने तस्मिन् कलशे दैत्यैर्नीयमाने हृते सति ॥ ३५—३६ ॥

देवा विषण्णमनसः खिन्नचित्ता हरिं शरणमाययुः इत्थं तेषां देवानां दैन्यमालोक्य भक्तानां कामसिद्धमभीष्टं करोतीति तथा भगवानिमेषां दैत्यानां परस्परं कलहोत्पादनेन योगमायया मोहिन्या वो युष्माकमर्थं साधयिष्यामि अतो माखिद्यतेत्याह, इतीत्थमुक्त्वा देवान्सान्त्वयन्हरिस्तत्रैवान्तर्दधे ॥ ३७ ॥

मिथः कलहमेवाह—मिथ इति । मिथः तदर्थेऽमृतनिमित्ते तर्षः कामस्तद्युक्तानि चेतांसि येषां तेषां दैत्यानां परस्परं कलिः कलहो बभूव कलहमेवाह—अहमिति । हे प्रभो, राजन् ! अहंपूर्वमहमेव पूर्वं पास्यामि न त्वमित्यादि एवं कलिरभूदित्यर्थः ॥ ३८ ॥

तत्र दुर्बलानां दैत्यानामाक्रोशप्रकारमाह—देवा इति । देवा अपि स्वममृतभागमर्हन्ति कुतः यतो येऽपि देवास्तुल्यायासहेतवस्तुल्यमायासेन हेतवः साधकाः यथा सत्रयागे "य एव यजमानाः त एव ऋत्विजः" इति यजमानाभिन्न ऋत्विक्कर्तृके बहुयजमानके च सर्वेषां समं फलं तद्वदयमेव सनातनो धर्मः ॥ ३९ ॥

इतीत्थं हे राजन् ! स्वान् गृहीतकलशान् प्रबलान् दैत्यान्दुर्बला दैतेया जातमत्सरास्सन्तो मुहुर्मुहुः प्रत्यषेधन् न्यवारयन् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नीलकुञ्चितकेशान्तः नीलकुञ्चितकेशस्वभावः "अन्तस्त्ववसिते मृत्यौ स्वभावे परमात्मनि" इति ॥ ३३ ॥

अमृतस्येति षष्ठी तृतीयार्थे अमृतेन पूर्णं कलशमित्यर्थः ॥ ३४ ॥

इज्यभाक् अमृतलक्षणमाहृतमाहारो यस्मिन्स तथा—

तेषां मत्यापालनार्थं हरिर्धन्वंतरिर्विभुः ।
समर्पयत्सुराणां च स्वहस्तादमुचत्सुधाम् ॥—

इति वचनात् दैत्यैर्हरिहस्तादमृतं हृतं न स्वशक्त्यादिति देर्शनरहस्यम् ॥ ३५—३७ ॥

तर्षचेतसां तृष्णायुक्तमनसाम् ॥ ३८ ॥

यथा सत्रयागे सर्वेषां समानं फलम् ॥ ३९—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्ववस्तूनि लिप्सन्त इति अमृते पीते बलादिप्राप्त्या सर्वाण्येव वस्तूनि प्राप्तानि स्युरित्यभिप्रायात् ॥ ३६—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इज्यभाक् यज्ञभागभोक्ता अमृतेनाभृतं पूर्णम् ॥ ३५-३७ ॥

मिथो रहः अन्याजश्रितं यथा स्यात्तथा "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । तर्षचेतसां मनोरथयुक्तमनसां तत्र समबलाः परस्परमाहुः अहं पूर्वं ग्रहीष्यामि कुलीनत्वात् न त्वं रे प्राप्तुमर्हसि दुष्कुलीनत्वात् न मत्प्राप्तुमर्हसि दुष्कुल इति वीप्सया ॥ ३८ ॥

दुर्बलानां त्वाक्रोशप्रकारमाह द्वाभ्यां—ये देवाः तुल्येनायासेन मथनधर्मेण हेतवः अमृतसाधकाः सत्रयागे यथा सर्वेषां समं फलं तद्वत् तथा च श्रुतिः "ऋद्धिकामाः सत्रमासीरन्" इति "ये यजमानास्ते ऋत्विजः" इति च ॥ ३९—४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुमृष्टेर्निर्णिक्ते मणिमये कुण्डले यस्य सः स्निग्धः कुञ्चितः केशानामन्तो यस्य सः ॥ ३३ ॥ ३४ ॥

इज्यभाक् यज्ञभागभुक् अमृतेनाभृतं परिपूर्णाम् ॥ ३५ ॥ ३६ ॥

भक्तानां कामं करोतीति तथा मिथो रहोभूतया किमात्मिका कुत आगता इत्येवं दुर्ज्ञेयया स्वकीयया मोहिन्या तन्त्रा "मिथोऽन्योन्ये रहस्यपि" इत्यमरः । वो युष्माकमर्थं साधयिष्ये यथा मिथोऽन्योन्ययोगतः सुरासुरनिष्पादितमर्थं यः सुराणामेव साधयिष्ये इत्यर्थः । अतो मा खिद्यतेत्याद्युक्तवान् ॥ ३७ ॥

तदर्थे अमृतार्थे तर्षोऽभिलाषा चेतस्सु येषाम् ॥ ३८ ॥

दुर्बलानां चेष्टितमाह—देवा इति द्वाभ्याम् । ये एतस्मिन् समुद्रमथने तुल्येनायासेन हेतवः साधकाः ते देवा अपि सत्रयागे यथा सर्वेषां तुल्यं फलं भवति तद्वत्तद्भागमर्हन्ति एषः सनातनो धर्मः सत्रयागलक्षणमाह—

"कर्त्तारो बहवो यत्र दीज्यन्ते बहवस्तथा ।
बहुभ्यो दीयते यत्र तत्सत्रमभिधीयते" । इति स्मृतिः

तन्मूलभूता श्रुतिः "ऋद्धिकामाः सत्रमासीरन्" इति "ये यजमानास्ते ऋत्विजः" इति च ॥ ३९ ॥ ४० ॥

---

भाषा टीका ।

पीताम्बर को धारण किये महान् दीर्घ जिसका वक्षः स्थल स्वच्छ मणियों के कुण्डलों को धारण किये, सचि-

एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ।
योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥
प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ।
समानकर्णाभरणं सुकपोलोन्नताननम् ॥ ४२ ॥
नवयौव[1]ननिर्वृत्तस्तनभारकृशोदरम् ।
मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४३ ॥
बिभ्रत्सुकेशभारेण मालामुत्फुल्लमल्लिकाम् ।
सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४४ ॥
विरजाम्बरसंवी[2]तनितम्बद्वीपशोभया ।
काञ्च्या प्रविलसद्वल्गु[3]चलच्चरणनूपुरम् ॥ ४५ ॥
सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ।
दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्याम् अष्टमस्कन्धे
अष्टमोऽध्यायः ॥ ८ ॥

भाषा टीका ।

कण, और घुंघरारे केश वाले, और सौभाग्यवान् तथा सिंह सदृशगमन वा पराक्रम वाला ॥ ३३ ॥

हाथों में कंकण पहिने हुए, और अमृत का पूर्ण कलश को लिये साक्षात् विष्णु भगवान् के अंशांश से उत्पन्न ॥ ३४ ॥

और धन्वन्तरि इस नाम से विख्यात तथा आयुर्वेद के द्रष्टा और यज्ञभागी वाले, इस प्रकार के उस पुरुष को असुर लोगों ने न देखा और उसके हाथ में अमृत के भरे हुए कलश को देखा ॥ ३५ ॥

यद्यपि असुर लोग सबही वस्तुओं को लेने की इच्छा वाले रहे परंतु उस अमृत के भरे हुए कलशको तो बड़े वेगसे छुड़ा लिया, जब असुर लोगों ने वह अमृत का पात्र कलश छुड़ालिया ॥ ३६ ॥

तब देवता विषाद को प्राप्त होकर खिन्न मन वाले सब श्रीहरि के शरण आये—इस प्रकार की देवताओं की दीनता को देखकर अपने भृत्यों ( दासों ) के कार्य करने वाले श्री हरि देवताओं से बोले, कि— तुम लोग खेद न करो हम अपनी माया से तुमारे लोगों का प्रयोजन सिद्ध करेंगे ॥ ३७ ॥

हे प्रभो ! राजन् ! अब उन दैत्यों में तो परस्पर में "तुम नहीं प्रथम हम लेंगे तुम नहीं प्रथम हमहीं लेंगे" इस प्रकार अमृत के अर्थ तृष्णायुक्तचित्त वालों का परस्पर बड़ा कलह होने लगा ॥ ३८ ॥

हे राजन् ! तब तो दैत्यों में जो दुर्बल रहे वे लोग, मत्सर युक्त होकर जिन्होंने हाथ में अमृत कलश लिया है उन प्रबल दैत्यों से वारंवार यों कहने लगे, कि—देखो सत्रयाग में जैसे सब को समान फल मिलता है इसी प्रकार इस देवता लोगों को भी अपना भाग मिलना चाहिये, क्योंकि इन लोगों ने भी परिश्रम बराबर किया है,, बस सनातन धर्म तो यही है ॥ ३९—४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्रूपं वर्णयति पञ्चभिः । प्रेक्षणीयमुत्पलमिव श्यामम् सर्वेष्ववयवेषु सुन्दरम् समानयोः कर्णयोराभरणे यस्मिन् सुकपोलं च तदुत्कृष्टनासिकञ्चाननं यस्मिन् ॥ ४२ ॥

नवयौवननिर्वृत्तयोः स्तनयोर्भारेण च कृशमुदरं यस्मिन् ॥ ४३ ॥

सुष्ठु ग्रीवा यस्मिन् कण्ठ आभरणं यस्मिंस्तच्च तत्र शोभना ग्रीवा येन तत्कण्ठाभरणं यस्मिन्निति वा सुभुजयोरङ्गदाभ्यां भूषितम् ॥ ४४ ॥

( १ ) निष्पन्न इति विज० । ( २ ) तं विभ्रं बध्नीय इति विज० । ( ३ ) स्फुरत् इति. विज० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विरजाम्बरेण संवीतो नितम्ब एव द्वीपो विशालत्वात्तत्र शोभा यस्यास्तया काञ्च्या प्रकर्षेण विलसत् वल्गु यथा भवत्येवं चलतोश्चरणयोर्नूपुरे यस्मिन् ॥ ४५ ॥

सव्रीडेन स्मितेन सह विक्षिप्ता कम्पिता या भ्रूस्तस्या विलासेन सह यान्यवलोकितानि तैर्दैत्ययूथपानां चेतस्सु मुहुः काममुद्दीपयत् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतस्मिन्समये सर्वोपायविज्जगतामीश्वरो विष्णुः परमाद्भुतं केनाप्यदृष्टपूर्वमनिर्देश्यं देवादिसजातीयत्वेन निर्देष्टुमशक्यं योषिद्रूपं दधार ॥ ४१ ॥

तद्रूपं वर्णयति पञ्चभिः । प्रेक्षणीयमुत्पलवत् श्यामं सर्वेष्ववयवेषु सुन्दरं समानयोः कर्णयोराभरणे यस्मिन् सुकपोलं च तदुन्नतनासिकञ्चाननञ्च यस्मिन् ॥ ४२ ॥

नवयौवनेन निर्वृत्तयोः प्रवृत्तयोर्वर्तुलयोश्च स्तनयोर्भारेण कृशमुदरं यस्मिन् मुखस्यामोदेनानुरक्तानामलीनां झङ्कारेणोद्विग्ने चञ्चले लोचने यस्मिन् ॥ ४३ ॥

उत्फुल्लानि मल्लिकाकुसुमानि यस्यां तां मालां स्वकेशभारेण केशपाशेन बिभ्राणं शोभना ग्रीवा यस्मिन् तत् कण्ठ आभरणानि च यस्मिन् तच्च शोभनयोर्भुजयोरङ्गदाभ्यां भूषितम् ॥ ४४ ॥

विरजोम्बरेण सम्वीतः नितम्ब एव द्वीपः विशालत्वात्तच्छोभा यस्यास्तया काञ्च्या प्रकर्षेण विलसद्वल्गु सुन्दरं यथा भवत्येवं चञ्चलयोश्चरणयोर्नूपुरे यस्मिन् ॥ ४५ ॥

सव्रीडस्मितेन सह विक्षिप्ता कम्पिता या भ्रूस्तस्या विलासेन सह यान्यवलोकनानि तैर्दैत्ययूथपानां चेतस्सु मुहुर्मुहुः काममुद्दीपयत् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुकपोलेनोन्नतनासिकया युक्तमाननं यस्य तत्तथा ॥ ४२ ॥

नवयौवनेन निष्पन्दतोर्निश्चलतोस्स्तनयोर्भारेण कृशं तनुतरमुदरं तत्तथा मुखपरिमलेऽनुरक्तानां निरतानाम् अलीनां भृङ्गाणां झङ्कारेण झङ्कारेणोद्विग्ने भ्रान्ते लोचने यस्य तत्तथा सुष्ठु शोभना ग्रीवा यस्य तत्तथा शोभनं कण्ठाभरणं यस्य तत्तथा शोभनैर्भुजाङ्गदैर्विभूषितम् ॥ ४३ ॥ ४४ ॥

वधूनां विद्यमानानां वर्ष्मीया तया शोभया चित्रं काञ्च्या च चित्रं प्रविलसच्छोभमानं वा यथा वल्गु कर्णरमणीयं तथा स्फुटन्ती शब्दं कुर्वती चरणनूपुरे यस्य तत्तथा ॥ ४५ ॥

सव्रीडस्मितेन विक्षिप्तैर्भ्रूविलासैर्युक्तैरवलोकनैः उद्दीपयन् ज्वलयत् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

[ एतद्विजयध्वजीयरीत्याऽत्राध्यायसमाप्तिर्न विद्यते किन्तु श्रीधरीयरीत्याऽस्माभिरध्यायसमाप्तिरङ्किता ॥ ]

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एतस्मिन्निति षट्कम् । उद्दीपयन् मुहुरिति ईश्वरे इति पूर्वेणान्वयः ॥ ४१—४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनिर्देश्यं निर्देष्टुं वर्णयितुमशक्यम् ॥ ४१ ॥ ४२ ॥

नवयौवनेन हेतुना निःशेषेण वृत्तौ वर्तुलौ यौ स्तनौ तयोर्भारेणेव कृशमुदरं यस्य तत् ॥ ४३ ॥

स्वकेशभारेण सह ॥ ४४ ॥

विरजाम्बरसंवीते नितम्बरूपे द्वीपे शोभा यस्यास्तया काञ्च्या प्रविलसत् वल्गु चलतोश्चरणयोर्नूपुरे यत्र तत् ॥ ४५ ॥

सव्रीडेन स्मितेन सह विशेषतः क्षिप्ता चालिता या भ्रूस्तस्या विलासेन सह यान्यवलोकनानि तैः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनिर्देश्यं निर्देष्टुं साकल्येन वर्णयितुमशक्यम् ॥ ४१ ॥

तद्रूपं यथाशक्ति वर्णयति—प्रेक्षणीयोत्पलश्यामामित्यादिना । प्रकर्षेणेक्षणीयमुत्पलमिव श्यामं सर्वावयवानि सुन्दराणि यस्य तत्समानयोः कर्णयोराभरणे यस्मिन् तत् सुकपोलं च तदुन्नसमाननं यस्मिन् आननस्यात्यन्तसुन्दरत्वमनेन पुनरुक्तम् ॥ ४२ ॥

नवयौवनेन निःशेषतया वृत्तयोर्वर्तुलयोः स्तनयोर्भारेण कृशमुदरं यस्य तत् ॥ ४३ ॥

स्वकेशभारेण सह मालां बिभ्रत् ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरजाम्बरेण सम्वीते नितम्बरूपे द्वीपे शोभा यस्यास्तया प्रविलसत् वल्गु चलतोश्चरणयोर्नूपुरे यस्मिन् तत् ॥ ४५ ॥

सव्रीडेन लज्जासहितेन विशेषतः स्मिता चालिता या भ्रूस्तस्या विलासेन सह यान्यवलोकनानि तैः दैत्ययूथपचेतस्सु मुहुः काममुद्दीपयत् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमोऽध्यायः ॥ ८ ॥

———

भाषा टीका ।

इतने ही बीच में सर्व उपायों को जानने वाले ईश्वर साक्षात् विष्णु परम अद्भुत जो कहने में न आवे ऐसा, मोहनी स्त्री का रूप धारण करते हुए ॥ ४१ ॥

नील कमल सदृश श्याम सर्व अवयवों से सुन्दर ऐसा रूप आपने धारण किया कि जाको सदा देखते ही रहिये । और समान कर्णों में आभरण पहिने हुए, सुन्दर कपोल और ऊंची नासिकावाला मुख जामें ॥ ४२ ॥

नवीन यौवन से प्राप्त हुए जो स्तन तिनके भार से कृश है उदर जामे, और मुख से श्वास के साथ जो अत्यन्त सुन्दर सुगन्ध निकसता है तिसके लोभी ऐसे भ्रमरों की झङ्कार से उद्विग्न होरहे लोचन जिसमें ॥ ४३ ॥

और चोटी के बीच में फूली भई मल्लिका की माला गूथी हुई है, और ग्रीवा में सुन्दर कंठाभरण धारण किये हैं । सुन्दर भुजाओं में बाजूबंद पहिने हैं ॥ ४४ ॥

और निर्मल अम्बर से ढके हुए नितंब ( कटिपश्चाद्भागे ) रूप द्वीपों के ऊपर शोभा देने वाली कांची ( कोंधनी ) से अति शोभित, मनोहर बजते हुए चरणों में नूपुरों को धारण किये ॥ ४५ ॥

और लज्जा सहित मन्दमुस्क्यान पूर्वक फेंके जो भ्रुकुटि के विलास युक्त कटाक्ष, तिन कटाक्षों से उन दैत्य यूथप लोगों के चित्त में बारंबार काम का उद्दीपन करने वाला ऐसे सुन्दर स्वरूप को धारण करके श्री मोहनी जी प्रकट भई ॥ ४६ ॥

इति श्री मद्भागवत अष्टम स्कन्ध में अष्टम अध्याय की
श्रीवृन्दावनस्थ भागवताचार्यकृत भाषा टीका
समाप्त ॥ ८ ॥

———

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

———:*:———

## ॥ नवमोऽध्यायः ॥

श्रीशुक उवाच ।

(१)तेऽन्योऽन्यतोऽसुराः पात्रं हरन्तस्त्यक्तसौहृदाः ।
क्षिपन्तो दस्यु(२)धर्माण आयान्तीं ददृशुः स्त्रियम् ॥ १ ॥
अहो रूपमहो धाम अहो अस्या नवं वयः ।
इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ २ ॥
का त्वं कञ्जपलाशाक्षि ! कुतो वा किं चिकीर्षसि ।
कस्यासि वद वामोरु ! मथ्नन्तीव मनांसि नः ॥ ३ ॥
न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ।
(३)नास्पृष्टपूर्वां जानीमो (४)लोकेशैश्च कुतो नृभिः ॥ ४ ॥
नूनं त्वं विधिना सुभ्रूः ! प्रेषिताऽसि शरीरिणाम् ।
सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५ ॥
सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ! ।
ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ! ॥ ६ ॥
वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ।
विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ७ ॥
इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ।
प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने ।
तद्व्याजेन देवेभ्योऽमृतन्दत्तवर्ण्यते ॥

॥ १ ॥

अहो रूपं सौन्दर्यं धाम द्युतिरिति वदन्तः का त्वमित्यादि पप्रच्छुः ॥ २ ॥

मथ्नन्तीव क्षोभयन्तीव ॥ ३ ॥

कस्यासीत्ययुक्तमुक्तमस्माभिर्यतस्त्वं न केनचिद्भुक्तपूर्वेत्याहुः नेति द्वाभ्याम् । त्वा त्वाममरादिभिरस्पृष्टपूर्वां न जानीम इति नापि तु जानीम एव ॥ ४ ॥

आस्तामिदं त्वद्दर्शनं स्त्रीभाग्येनैव सम्पादितमित्याहुः—नूनमिति । सर्वेन्द्रियाणां मनसश्च प्रीतिं विधातुं सघृणेन प्रेषितासि किं वा यदृच्छयाऽऽगतासि नैवं नूनं प्रेषितैवेत्यर्थः ॥ ५ ॥ ६ ॥

भेदो विग्रहो यथा न भवेत्तथा ॥ ७ ॥ ८ ॥

---

( १ ) अन्योन्यतस्सुधापात्रम् इति वीर० विज० ( २ ) धर्मेण इति वीर० विज० ( ३ ) स्पृष्टपूर्वां तु इति विज० ( ४ ) लोकेशैः इति च वीरराघवी पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवंविधं रूपं बिभ्रतीं मायास्त्रीं तां स्त्रियमन्योन्यं त्यक्तसौहृदाः अतएव क्षिपन्तः सुधापात्रं चौर्यधर्मेण हरन्तस्ते दैत्या ददृशुः॥१॥

दृष्ट्वा चाहो रूपं सौन्दर्यमहो धाम द्युतिरहो अस्या योषितो नवं वय इति वदन्तस्ते दैत्यास्तां योषितमभिद्रुत्याभिमुखमागत्य जातहृच्छयाः सञ्जातकामाः पप्रच्छुः॥२॥

प्रश्नप्रकारमेवाह—केति। हे कञ्जपलाशाक्षि! का त्वम्? किं शीला? कुत आगता? त्वं किं चिकीर्षसि कर्तुमिच्छसि? कस्यासि कस्य सम्बन्धिन्यसि? वद हे वामोरु! नोऽस्माकं मनांसि मथ्नन्तीव क्षोभयन्तीव वर्तसे॥३॥

कस्यासीत्ययुक्तमुक्तमस्माभिः यतस्त्वं न केनचित्स्पृष्टपूर्वा इत्यूचुः—नेति। त्वाममरादिभिरस्पृष्टपूर्वां न जानीम इति न किन्तु जानीम एव अमरादिभिरेवास्पृष्टपूर्वा कुतो नृभिः स्पृष्टपूर्वा भवेदित्यर्थः॥४॥

आस्तामिदं त्वद्दर्शनन्तु ईश्वरेणैव कारितमित्याहुः—नूनमिति। हे सुभ्रु शरीरिणामस्माकं सर्वेन्द्रियाणां मनसश्च प्रीतिं विधातुं कृपेण सकृपेण विधिना ईश्वरेण त्वं प्रेषिता किम्? नूनं न यदृच्छया आगतासि नूनं दैवेनैव प्रेषितासि इत्यर्थः॥५॥

हे मानिनि! अत्रैकस्मिन् वस्तुन्यमृतनिमित्ते स्पर्धमानानां परस्परमभिमयतां बद्धवैराणां ज्ञातीनामस्माकं हे सुमध्यमे! शं विधत्स्व सन्धिं कुरु सम्यग्विभजस्वेति वा॥६॥

कश्यपस्य दायादाः पुत्राः भ्रातरश्चाधुना कृतं पौरुषं कलहनिमित्तं येस्ते वयमतो यथान्यायं कलहो यथा न भवेत्तथाऽमृतं विभजस्व॥७॥

दैत्यैरित्थमुपामन्त्रितश्चोदितः प्रमोदितः श्लाघितो वश्यतामभूतो मायायोषिद्वपुरात्मीयसङ्कल्पोपात्तस्त्रीवपुर्हरिः प्रहस्य सुन्दरैरपाङ्गैर्निरीक्षन्निरीक्षमाणः इदं वक्ष्यमाणमब्रवीत्॥८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

॥ १—३ ॥

त्वा त्वाम्॥४॥

विधिना विरिञ्चेन॥५॥

शं विधत्स्व शं विधानं मनस्सन्तोषं कुरु॥६–७॥

मायया इच्छया अङ्गीकृतस्त्रीदेहः॥८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—४ ॥

नूनमिति तैः तत्र किंपदस्य सन्देहवाचित्वेनाभयकोटिस्पर्शित्वादुभयत्र सम्बन्धः॥५॥

तत्र तस्याः कोपाविष्कारभावस्य तया मोहितत्वेन विस्मृत्य च प्रस्तावान्तरं कक्षीकृत्याहुः—मा त्वं न इति॥६–९॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मोहिता वञ्चिता दैत्याः पायिताश्चामृतं सुराः।
मोहिन्या नवमे राहोश्छेदश्चात्र वर्ण्यते॥०॥

॥१॥२॥

कस्यासि कस्य कन्याऽसि॥३॥

अमरादिभिरस्पृष्टपूर्वां वयं न जानीम इति न अपितु जानीम एवेति ते नन्वत्र त्वममरार्थमत्रायातासीति बुद्ध्यत इति भावः॥४॥

किमस्माकं त्वदभिप्रायबुभुत्सया त्वद्दर्शनादिनैव तावद्वयं कृतार्था अभूमेत्याहुः—नूनमिति॥५॥

किञ्च त्वया स्वाभिप्रेतं पश्चाद्विधेयं सम्प्रत्यस्मदभिप्रायं सफलं कुर्वित्याहुः—मा त्वमिति द्वाभ्याम्॥६॥

विभजस्व अस्मभ्यमिति शेषः॥७॥८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मोहिन्या यत्कृतस्तद्दर्शयति नवमेन॥१॥

रूपं सौन्दर्यं धर्मः धाम शरीरं वर्ष्म॥२॥

हे कञ्जपलाशाक्षि! त्वं कासि? हे वामोरु! नो मनांसि मथ्नन्तीव क्षोभयन्तीव वर्तसे इति शेषः॥३॥

वयं त्वा त्वाम् अमरादिभिः अस्पृष्टपूर्वां न जानीम इति न किन्तु जानीम एव॥४॥

विधिना प्रेषितासि किञ्च स्वत आगतासि॥५॥

नो ज्ञातीनुकूलान् कर्तुं स्वयं तदनुकूला भवन्ति—मा त्वमिति द्वाभ्याम्। शं कल्याणमविरोधं विधत्स्व कुरु॥६॥

भेदो विरोधो यथा न भवेत्तथा विभजस्व अस्मभ्यं सुधामिति शेषः॥७॥

मायायोषिद्वपुः स्वसङ्कल्पेनाविष्कृतस्त्रीदेहः॥८॥

---

भाषा टीका।

श्रीरुक्मिणीशो जयति॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि–वे असुरलोग, सुहृदपने को छोड़कर डाकुओं की तरह एक दूसरे के हाथ से उस अमृत कलश को छीनते झपटते हुए एक आती हुई स्त्री को देखते हुए॥१॥

वस अति सुन्दर उस स्त्री को देखकर सब दैत्य लोग झगड़ना तो भूल गये और कहने लगे, कि–अहो बड़े आश्चर्य की बात है इस का रूपतो देखो, कितने एक बोले कि–

श्रीभगवानुवाच ।

कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः ।
विश्वासं पण्डितो जातु कामिनीषु न याति हि ॥ ९ ॥
सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ।
सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥ १० ॥

श्रीशुक उवाच ।

इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ।
जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ११ ॥
ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ।
(१) यद्यभ्युपेत क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥
इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः ।
अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥ १३ ॥

भाषा टीका ।

रूप क्या देखते हो इसका तेज तो देखो, तब फिर कितने एक बोले, कि तुमको देखना नहीं आता अरे भाई इसकी नवीन अवस्था तो देखो, इस प्रकार कहकर ये सब दैत्य लोग कामवश होकर श्री मोहिनी जी के समीप में जाकर पूँछने लगे ॥ २ ॥

दैत्य लोग बोले, कि-हे कमलदललोचने ! आप कोन हैं फिर कितने एक बोले, कि-आप कहां से आई हो, फिर भी चुप रहने पर कितने एक दैत्य बोले, कि आपकी क्या करने की इच्छा है, फिर कितने एक दैत्य लोग आपुस में बोले कि तुमको पूँछना आता नहीं, ठहरो हम पूँछते हैं ऐसे कहकर पूंछने लगे, कि अजी आप कौन की हो कहो तो सही, इतने पर भी जब न बोली तब दैत्य लोग बोले, कि-आप बोलो अथवा न बोलो पर आप हम लोगों के मनको तो मथेंई डारती हो ॥ ३ ॥

फिर दैत्य लोग बोले, कि-हम लोग तो ऐसा जानते हैं कि-देव दैत्य सिद्ध गन्धर्व चारण इन लोगों ने अब तक तुमारा स्पर्श भी नहीं किया होगा, और कहां तक कहैं पर बड़े २ लोकेशों ने भी आपका स्पर्श नहीं किया होगा फिर बिचारे मनुष्य लोगों की तो बात ही क्या कहैं ॥ ४ ॥

हे सुभ्रूः ! यह तो हम निश्चय जानते हैं कि जब ब्रह्मा को दया हुई तब उसने देहधारियों के मन और इन्द्रियों के प्रिय करने को आपको यहां भेजा है ॥ ५ ॥

हे मानिनि ! बस हम लोग तो आपसे और कुछ नहीं कहते हैं परंच हम सब ज्ञाति लोग परस्पर में, जिसके निमित्त स्पर्धा करके वैर बांध रहे हैं । हे सुमध्यमे ! आप उस एक वस्तु का ठीक २ न्याय करके हम लोगों के कलह की शांति करदो ॥ ६ ॥

यदि आप हम लोगों को अप्रतिष्ठित जानती होवे सो हम लोग कश्यप महाराज के पुत्र लोग है और देव दैत्य सब भ्राता लोग हैं, और हम लोगों ने बड़ा पौरुष ( परिश्रम ) किया है, तब यह अमृत हम लोगों को प्राप्त हुआ है सो हमारा आप से इतनाही कहना है, कि-जिसमें हम लोगों में भेद न होवे इस प्रकार आप हम सबों को बांट दीजिये ॥ ७ ॥

जब दैत्यों ने इस प्रकार बहुत आग्रह करके कहा तब माया से योषित् [ स्त्री ] रूप को धारण करने वाले श्रीहरि अपने रुचिर कटाक्षों से देखते हुए और उनपर कटाक्ष चलाते हुए हंसके इस प्रकार बोले ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सङ्गता अनुसृता ॥ ९ ॥

हे सुरद्विषः ! ॥ १० ॥

भावेन केनाप्यभिप्रायेण गम्भीरं यथा भवत्येवं जहसुः ॥ ११ ॥

ईषत्स्मितेन शोभा यस्यास्तया मया कृतं साधु वा असाधु यद्यभ्युपेताङ्गीकुरुत तर्हि विभजे ॥ १२ ॥

(१) यद्यभ्युपेतामिति वीर० विज० पाठः ।

अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ।
दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥ १४ ॥
यथोपजोषं वासांसि परिधायाऽहतानि ते ।
कुशेषु प्राविशन् सर्वे [१]प्रागग्रेष्वभिभूषिताः ॥ १५ ॥
प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ।
धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असुरपुङ्गवाः दैत्यश्रेष्ठाः प्रमाणामियत्तामजानन्तः ॥१३ ॥ १४ ॥

यथोपजोषं यथाप्रीति अहतस्य लक्षणम् "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा" प्रागग्रेषु कुशेषु विविशुः ॥ १५ ॥

धूपैरामोदितायां सुरभीकृतायां शालायाम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—कथमिति । हे कश्यपदायादाः ! पुंश्चल्यां मयि कथं सङ्गता अनुसृताः हि यस्मात् पण्डितः कदाचिदपि कामिनीषु पुंश्चलीषु विश्वासं न याति न प्राप्नोति न कुरुते इत्यर्थः ॥ ९ ॥

हे सुरद्विषः ! सालावृकाणां स्वैरिणीनां स्त्रीणां च सख्यान्यनित्यान्याहुः अनित्यत्वे हेतुं वदन् सालावृकान् स्त्रीश्च विशिनष्टि, नवंनवं विचिन्वताम् अन्वेषताम् ॥ १० ॥

इतीत्थं तस्याः मोहिन्याः क्ष्वेलितैः परिहासवचनैः विश्वस्तं मनो येषां तेऽसुराः भावेन केनाप्यभिप्रायेण गम्भीरं यथाभवत्येवं जहसुः हसितवन्तोऽमृतपात्रं च ददुः ॥ ११ ॥

ततोऽमृतभाजनं गृहीत्वा योषिद्रूपो हरिरीषत्स्मितेन शोभा यस्यास्तया गिरा बभाषे, तदेवाह—यदीति । कचित् साध्वसाधु वा मया कृतं यद्यभ्युपेतं युष्माभिः अङ्गीकृतं स्यात्तर्हि इमां सुधां वो युष्मभ्यं, विभजे ॥ १२ ॥

इतीत्थं तस्या मोहिन्या अभिव्याहृतं वाक्यमाकर्ण्यासुरश्रेष्ठास्तस्या अप्रमाणविदः प्रमाणं तद्वाक्यनिर्णयो निश्चयस्तमजानन्तस्तथेति यथेष्टं कुरु इत्यन्वमंसतानुजज्ञिरे ॥ १३ ॥

अथ तस्या अनुज्ञया उपोष्य कृतं स्नानं यैस्तेऽसुराः सुराश्च हविषा चरुणाऽनलमग्निं हुत्वा विप्रेभ्यो भूतेभ्योऽन्येभ्यश्च गाः गवादीनि यथायोग्यं दत्त्वा द्विजैः कृतं कारितं स्वस्त्ययनं मङ्गलाचरणं येषाम् ॥ १४ ॥

ते देवा असुराश्च यथोपजोषं यथाप्रीति आहतानि नूतनानि सद्यो यन्त्रान्निर्मुक्तानि वस्त्राणि परिधाय वासित्वाऽभितो भूषिताः सर्वे प्राक्कूलेषु प्रागग्रेषु कुशेषु सर्वे प्राविशन् उपाविविशुः ॥ १५ ॥

ततो धूपैरामोदितायां माल्यैर्दीपैश्च जुष्टायामलङ्कृतायां दीपितायां च शालायां पूर्वाभिमुखेषु सुरासुरेषु उपविष्टेषु सत्सु ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुंश्चल्यां पुंश्चलीशीलगुणवत्याम् ॥ ९ ॥
नूत्नं नूतनम् ॥ १० ॥
क्ष्वेलितैः कलभिभाषणैः ॥ ११ ॥
अभ्युपेतम् अङ्गीकृतम् ॥ १२ ॥
प्रमाणामियत्ता ॥ १३—१९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वैरिणीनां स्त्रीणाञ्चेत्यन्वयः ॥ १०—१२ ॥

प्रमाणामियत्ताचिकीर्षितपर्यवसानमित्यर्थः । तत्राविदन्तीत्यप्रमाणविदः ॥ १३—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कश्यपस्य दायादाः पुत्रा इति पिता युष्माकमृषिर्यूयं कथमेवं कामिनोऽभूवन्निति तान् मोहयितुं परिहासो व्यञ्जितः सत्यं वयं स्त्रीजातिमात्रेणैव भावैर्वशीकर्तुमशक्याः भवत्या परमशुद्धस्वरूपया तु स्वपवित्रेणैव वयं विजिता वर्तामहे इति चेत् तत्राह-पुंश्चल्यामिति । हन्त हन्त भवत्या निष्कामत्वस्यावधि किं स्तुवामहे यतस्त्वमाबालयमनाघ्रातपुरुषगन्धापि स्वं गोपयन्त्येव स्वत्वेवं ब्रूषे स्त्रीजातिः पुंश्चल्यपि स्वं, सतीमेव प्रथयतीति स्त्रीजातिविलक्षणस्वभावायै भवत्यै निष्कपटायै सर्वस्वमपि दिस्सामहे इति स्वगतोक्त्या विस्मयाहितमितदर्शितामास्यस्याह—विश्वासमिति । भोः पण्डिताः मयि विश्वासं मा कुरुत यथात्मनां भद्रमिच्छतेति भावो बाह्यः आभ्यन्तरस्तु सर्वमहं विपरीतलक्षणयैव ब्रवीमीति पण्डिता भवन्तो ज्ञात्वा यदुचितं तत्कुर्वन्त्विति भावः । पूर्वत्र उत्तरत्रापि आभ्यन्तरो

(१) प्राक्कूलेषु इति वीर० ॥ सिद्धान्त० चक्रवर्ती ।

तस्यां नरेन्द्र ! करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ।
सा कूजती कनकनूपुरशिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वैरिणीष्वेव विश्वासः कामिनीष्विति यद्यप्यहं युष्मदनुभवेन शङ्केव भवामि तदपि मम यौवनवत्त्वादाप्यन्तरः कामोऽनुमेय एव कामवत्त्वे स्त्रीत्वे च कामिनी पतिपुत्राद्यावरणाभावात् स्वैरिण्यपि कथं न भवामीत्यविश्वास्यैव सर्वथा भवाद्भिरहमिति भावः ॥ ९ ॥

ततः किमिति चेत् शृणुत तत्त्वमित्याह—सालेति । "सालावृकाः कपिक्रोष्टृश्वानः" इत्यमरः ॥ १० ॥

क्ष्वेलितैर्नर्मोक्तिभिः भावेनाभिप्रायेण गम्भीरमन्तिदूर्यां दुष्प्रवेशं यथा स्यात्तथा जहसुः हे सर्वगुणमण्डिते ! किमस्मान् परीक्षसे वयमविश्वासिनोऽशुद्धान्तःकरणा नैव भवामस्त्वदिदममृतकलशं गृहाण अस्मभ्यं विभज्य देहि वा स्वयं पिब वा कचिदन्यत्र क्षिप वा यथेच्छसि तथा कुरु अस्मास्तु क्षमावृद्ध्युपरत्नक्रीतानात्मीयानेव जानीहीति भावः ॥ ११ ॥

मया कृतं साधु वा असाधु वा यद्यप्युपेत अङ्गीकुरुत तदा विभजे इति स्वस्याहमनाश्रितत्वं जानाम्यतः प्रथममेव वच्मीति भावः ॥ १२ ॥ १३ ॥

अर्थात् अमृतपानरूपमङ्गलकृत्यार्थं प्रथममेवोपोष्य स्नितास्ते परस्परविवादमध्य एव मोहिनीदर्शनवचनप्रतिवचनाद्यनन्तरं कृतस्नानाः ॥ १४ ॥

यथोपजोषं यथाप्रीति अहतस्य लक्षणं "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वायम्भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेषु सर्वदा" इति प्राक्कूलेषु प्रागग्रकुशेषु ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सङ्कृताः विश्वस्ताः ॥ ९ ॥

हे सुराद्विषः ! ॥ १० ॥

भावेन तत्पारवश्यरूपेण गम्भीरम् भवति यथा तथा जहसुः ॥ ११ ॥

ईदृक्स्मितेन शोभा यस्यास्तथा कच कचित् मया साध्वसाधु वा कृतं भवद्भिरभ्युपेतं स्वीकृतं भवेत्तर्हि विभजे ॥ १२ ॥

प्रकृतं मानं बुद्ध्वा परिमितं कार्यमजानन्तः तत्तथेत्यन्वमंसत कुरु इत्यनुजज्ञिरे ॥ १३ ॥ १४ ॥

"अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेषु सर्वदा" इत्युक्तलक्षणानि वासांसि यथोपजोषं यथाप्रीति परिधाय प्राक्कूलेषु प्रागग्रेषु कुशेषु प्राविशन् ॥ १५ ॥

धूपैरामोदितायां सुरभीकृतायां माल्यैर्दीपकैश्च जुष्टायामलङ्कृतायां शालायां प्राङ्मुखेषु पूर्वाभिमुखेषूपविष्टेषु सत्सु ॥ १६ ॥

---

भाषा टीका ।

श्रीभगवानुवाच

मोहनी रूप धारी श्री गिरधारीजी बोले, कि—हे कश्यप पुत्र हो ! आप लोग ऐसे कुलीन होकर मेरे पुंश्चली के समीप कैसे आये ? क्यों कि पंडित पुरुष तो कदाचित् भी कामिनी का विश्वास में नहीं लाते हैं ॥ ९ ॥

हे दैत्यो ! शाला वृक ( कुत्ता बन्दर वा स्यार ) और और स्वैरिणियों की मित्रता को लोग अनित्य कहा करते हैं, क्योंकि ये लोग नये नये को ढूंढते हैं ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—श्री मोहनीजी ने तो इस प्रकार उन दैत्यों से परिहास किया पर उन लोगों के मन में पूर्ण विश्वास होगया और उन्होंने कुछ गंभीर अभिप्राय से हँसकर उस अमृत कलश को सौंप दिया ॥ ११ ॥

तब तो श्री मोहनी रूपधारी श्री हरि जी अमृत के कलश को लेकर किंचित् हास युक्तवाणी से बोले, कि—यदि तुम इसके मध्यस्थ करते हो तब हम जो कुछ भला बुरा करें उसको यदि तुम लोग स्वीकार करो तो हम तुमारे इस अमृत को बांट देवें ॥ १२ ॥

श्रीशुकदेवजी कहते हैं, कि—श्री मोहनी जी की ऐसी वाणी को सुनकर वे सब असुरोत्तम लोग वैसे ही मानते हुए, क्योंकि वे सब इनकी ऐसी चालाकी थोड़ी जानते रहे ॥ १३ ॥

तदनंतर श्री मोहनी जी की बताई हुई विधि पूर्वक सब देव दैत्यों ने उपवास कर स्नान कर हविष से अग्नि में हवन कर गौ ब्राह्मण और अन्य प्राणियों को भोजन दानादि देकर ब्राह्मणों के द्वारा स्वस्तिवाचन कराकर ॥ १४ ॥

यथा प्रीति पूर्वक नवीन वस्त्र पहिन कर भूषणों को धारण कर पूर्व को अग्र भाग कर कुशाओं बिछाकर उन पर जब बैठते हुए ॥ १५ ॥

धूप की सुगन्धों से सुरभित ऐसी शाला में कुशाओं के ऊपर पूर्व को मुख करके जब सब देवता और दैत्य बैठे ता समय में ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथ तस्यां शालायां हे नरेन्द्र ! सा कलशपाणिराविवेश कथंभूता "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" करभसदृशौ सुवृत्तावूरू यस्याः सा उशत्कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन विशालेन

तां श्रीसखीं कनककुण्डलचारुकर्णनासाकपोलवदनां परदेवताख्याम् ।
संवीक्ष्य सम्मुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकान्ताम् ॥ १८ ॥

असुराणां सुधादानं सर्पाणामिव दुर्नयम् ।
मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥ १९ ॥
कल्पयित्वा पृथक्पंक्तीरुभयेषां जगत्पतिः ।
तांश्चोपवेशयामास स्वेषुस्वेषु च पङ्क्तिषु ॥ २० ॥
दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः ।
दूरस्थान् पाययामास जरामृत्युहरां सुधाम् ॥ २१ ॥
ते पालयन्तः समयमसुराः स्वकृतं नृप ! ।
तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ २२ ॥
तस्यां कृताऽतिप्रणयाः प्रणयाऽपायकातराः ।
बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम् ॥ २३ ॥
देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रोणया अलसा मन्दा गतिर्यस्याः पाठान्तरे करभसदृशयोरूर्वोर्लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेनालसा गतिश्च मदेन विह्वले अक्षिणी यस्याः ॥ १७ ॥

तां श्रियः सखीं सम्वीक्ष्य देवासुराः सम्मुमुहुः, कथम्भुताम ? कनकमये कुण्डले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च ताम् विगलितः स्रस्तः स्तनपट्टिकाया अन्तो यस्याः ॥ १८ ॥

एवं तान् मोहयित्वा यत्कृतवांस्तदाह त्रिभिः—असुराणां सुधादानं सर्पाणां क्षीरदानमिव दुर्नयमन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभजत् अयं भावः देवैरेवमेवं साध्वसाधु वा सर्वमनुमतमेवातो मत्कृतान् देवानेव सुधां पाययिष्यामि किञ्च तैर्यथान्यायं विभजेत्युक्तं न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यमतस्तेभ्यः सुधां न दद्यामिति ॥ १९ ॥

पंक्तीः पृथग्विविक्ताः कल्पयित्वा विधाय तासु पंक्तिषु स्वेषुस्वेषु तत्तत्समजातीयेषु तांश्चासुरानपि प्रतारणार्थमेवोपवेशयामास ॥ २० ॥

उपसञ्चरैर्बहुमानप्रियवाक्यादिना तानतिक्रम्यातिक्रम्य गमनैः दूरस्थानपि देवान् ॥ २१ ॥

तथा कृतः स्नेहो येषु स्त्रिया सह विवादस्य जुगुप्सया ॥ २२ ॥

कृतोऽतिप्रणयः स्नेहो यैः प्रणयापायेन कातरा भीताः एते तावत् कृपणाः पूर्वं किञ्चित्पिबन्तु यूयं तु धीराः स्वयं प्रतीक्षध्वमित्यादिबहुमानेनाबद्धा नियन्त्रिताः समयपालनादिभिः षड्भिरेतैः कारणैर्विप्रियं किञ्चिदपि नोचुः किन्तु तूष्णीमासन् ॥ २३ ॥

देवपङ्क्तौ चन्द्रार्कयोर्मध्ये प्रविष्टः सोमममृतमपिबत् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तस्यां शालायां हे नरेन्द्र ! अमृतकलशः पाणौ यस्याः सा मोहिनी आविवेश । कथम्भूता ? "करस्य करभो बहिः" करभसदृशौ सुवृत्तौ ऊरू यस्याः सा उद्यत् कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन विशालया श्रोणया अलसा मन्दा गतिर्यस्याः सा पाठान्तरे करभसदृशयोरूर्वोर्लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेनालसा गतिर्यस्याः सा च मदेन विह्वले अक्षिणी यस्याः सा कनकनूपुराणां शिञ्जितेन कूजती ध्वनन्ती कुम्भाविव स्तनौ यस्याः सा ॥ १७ ॥

तां श्रीसखीं श्रियमिव स्थितां श्रीसहायिनीं वा भगवद्रूपत्वात् कनकमये कुण्डले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च तां विगलितः विस्रस्तः स्तनपट्टिकाया अन्तो यस्यास्तां परदेवताख्यां परदेवतारूपां तां संवीक्ष्य देवासुरास्तस्या उत्स्मयवीक्षणेन संमुमुहुः ॥ १८ ॥

एवं तान्मोहयित्वा यत्कृतवांस्तदाह-असुराणामिति त्रिभिः जातिनृशंसानां स्वभावतः क्रूराणामसुराणां सुधादानं सर्पाणां क्षीरमिव दुर्नयमन्याय्यं मत्वा तां सुधामसुरेभ्यो न व्यभजत् श्रीमदच्युतः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतोऽसावाभिताश्च इत्यादिकमित्यत्रोत्तरं प्रकृतमिदमयं भावः, दैत्यैर्मदीयं साध्वसाधु वा सर्वमनुमतमेव यतो मामाश्रितान्देवानेव सुधां पायथिष्यामि किञ्च तैः यथान्यायं विभजस्व इति चोक्तं न तेऽपां जात्यैव क्रूरेभ्योऽमृतपानं न्याय्यम् अतस्तेभ्यस्सुधां न दास्यामीति ॥ १९ ॥

उभयेषां पंक्तीः पृथग्विभक्ताः कल्पयित्वा तान्देवानसुरांश्च स्वासु स्वासु पंक्तिषूपवेशयामास ॥ २० ॥

गृहीतकलशः श्रीभगवान् योषिद्रूपः उपसञ्चरैः समीपगमनबहुमानेन्द्रियव्यापारादरवाक्यादिभिः दैत्यान्वञ्चयन्दूरस्थानपि देवानेव सुधां पाययामास ॥ २१ ॥

तेऽलब्धसुधा अपि दैत्याः स्वकृतं समयं साध्वसाधु वा त्वत्कृतमनुमन्यामहे इति पूर्वकृतं सङ्केतं पालयन्तः हे नृप ! कृतस्तस्यां स्नेहो यैस्तादृशाश्च स्त्रीविवादस्य जुगुप्सिततया च तूष्णीमेवासन् ॥ २२ ॥

तस्यां कृतः प्रतिप्रणयः प्रतिस्नेहो यैः ते प्रणयापायेन कातराः भीताः एते तावत्कृपणाः पूर्वं किञ्चित्पिबन्तु यूयं धीराः क्षणं प्रतीक्षध्वम् इत्यादिबहुमानेन चावज्ञाः नियन्त्रिताश्च किञ्चिदपि विप्रियं नोचुः । समयपालनादिषड्भिरेतैः कारणैरप्रियं किञ्चिदपि नोचुः किन्तु तूष्णीमासुरित्यर्थः ॥ २३ ॥

देवलिङ्गेन देवताधर्मेण प्रतिच्छन्नस्तिरोभावितात्मवेषः स्वर्भानुः राहुः देवानां पङ्क्तौ प्रविष्टः सोममममृतमपिबत् चन्द्रार्काभ्यां सूचितः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

करभो गजपोतः तत्करवच्छोभमानयोरूर्वोर्लम्बना दुकूलेन युतं श्रोणीतटं यस्याः सा करभोरु: वंशाङ्कुरस्तद्वद्वर्तमानयोर्वा अलसगतिः अलसा मन्दा गतिर्यस्याः सा तथा शिञ्जितेन शब्दितेन "शिञ्जि अव्यक्ते शब्दे" इति धातुः १७ ॥

कनककुण्डलचारुकर्णाभ्यां नासाकपोलाभ्यां च युक्तं वदनं यस्याः सा तथा नाम ॥ १८ ॥

"सुधा पयसि देवान्ने गुणापकपयोमृदि" इति वचनात् सर्पाणां पयोदानमिव तानुद्दिश्य ॥ १९ ॥

"आली श्रेणी श्रेणी पंक्तिसमयोस्ततिरव्ययुते" इति ॥ २० ॥

उपसञ्चरैः समीपगमनादिभिर्नर्मव्यवहारैः ॥ २१ ॥

कृतस्नेहाः क्लिन्नस्नेहाः "क्नूयी शब्दे" इति धातुः पूर्वं सम्पन्नस्नेहा अधुना नष्टस्नेहा इत्यर्थः ॥ २२ ॥

प्रणयस्यापायं उपशमनं सम्भवतीति कातराः भीताः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कल्पयित्वेति तांश्च देवासुरान् परस्परमभिमुखानिति ज्ञेयम् ॥ २० ॥

वञ्चयन् मलक्ष्यं सारभागं गृहन्निव: सर्वतः श्रेष्ठोऽपो वा... मीति प्रतारयन् ॥ २१ ॥

समयं प्रतिज्ञाम् ॥ २२—२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

करभोरुरुशद्दुकूला करभोरुलसद्दुकूलेतिपाठद्वयम् "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः ॥ १७ ॥

श्रीसखी श्रियो लक्ष्म्याः सखापि तदानीं सर्वेषामूत पुंजातिमध्ये यथा नारायणः सुन्दरस्तथैव स्त्रीजातिमध्ये अहमेवातिसुन्दरीति माऽहङ्कुर्याः स्त्रीजातावप्यहमेव परमसुन्दरीति तां ज्ञापयितुमिवेति भावः । कनककुण्डला चासौ चारुकर्णाघा चेति नाम ॥ १८ ॥

न तां व्यभजदिति दैत्यैर्यथान्यायं विभजस्वेत्युक्तम् अतो न्यायश्चायमेवेति भावः ॥ १९ ॥

स्वेषु स्वेषु इति पङ्क्तिषु मध्ये या याः पंक्तयो येषां येषां स्वानि धनरूपाणि स्वेषु स्युस्तेषु स्वत्वविशिष्टासु पङ्क्तिष्वित्यर्थः ॥ २० ॥

उप निकटे निकट एव सञ्चरैः सञ्चरणैर्भ्रूभङ्गनेत्राञ्चितक्रीडामुखार्थाचञ्चलनूपुरादिभूषणावसनस्खलनपूर्वकैश्चरणसञ्चलनैः किञ्चिन्मात्रप्रदानेन दूरस्थानां देवानामुत्कण्ठां निवर्त्य सम्पूर्णामेव पाययिष्यतीति प्रत्यायनैः वञ्चयन्निति अस्माभिः श्रीमन्नेत्रमनोभिर्यदिदममृतं पीयते इतोऽधिकं सामुद्रममृतं न भविष्यति. तदर्थं तेन एतस्या आनुकूल्यमेवाकाङ्क्षणीयमित्यपि तेषां मनसि विचारं प्रापयामासेति भावः । दूरस्थान् देवान् ॥ २१ ॥

समयं साध्वसाधु वा यथासुखं विभजस्वेति नियमं स्त्रिया सह विवादस्य जुगुप्सया एते तावत् कृपणाः पूर्वं किञ्चित् पिबन्तु यूयं तु धीराः क्षणं प्रतीक्षध्वमित्यादिबहुमानेन चावज्ञा नियन्त्रिताः समयपालनादिभिः षड्भिरेतैः कारणैरप्रियं किञ्चिदपि नोचुः किन्तु तूष्णीमेवासन् ॥ २२ ॥ २३ ॥

तदेवं मोहिनीमूर्त्या भगवता सर्व एव दैत्या मोहयित्वा वञ्चिताः किन्तु मध्येऽप्यमृतमाहिमज्ञापनार्थमेकः स्वर्भानुर्न मोहितः स च सहसैव मोहिन्यभिप्रायं ज्ञात्वा देवपङ्क्तिषूपविष्ट इत्याह—देवलिङ्गेति । अत एव देवास्तं प्रथमं परिचेतुं न शेकुः उपविष्टे तु चन्द्रार्काभ्यां परिचितोऽपि तद्रूपावृतोऽन्यत्र पङ्क्तावुपविशेति वक्तुं नाशक्यतेति ज्ञेयम् । यदा यदा तु सोमममृतं प्राप्तमेवापिबत्तदाऽसुरोऽसाविति भ्रूभङ्ग्या सूचितः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे नरेन्द्र ! तस्यां शालायां कलशः पाणौ यस्याः सा आविवेश कथम्भूता करभोर्वोः मणिबन्धादिकनिष्ठान्तहस्तभागसदृशयोरूर्वोर्लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेन अलसा गतिर्यस्याः मदेन विह्वले अक्षिणी यस्याः ॥ १७ ॥

चक्रेण क्षुरधारेण जहार पिबतः शिरः।
हरिस्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत् ॥ २५ ॥
शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्।
यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥ २६ ॥
पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः।
पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः ॥ २७ ॥
एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फले विकल्पाः।
तत्रामृतं सुरगणाः फलमञ्जसाऽऽपुर्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तां श्रियः सखीं संवीक्ष्य देवासुराः तस्याः उत्स्मयवीक्षणेन संमुमुहुः कनकमये कुण्डले यस्याः सा चासौ चारवः कर्णौ द्वयौ यस्याः विगलितो विस्रस्तः स्तनपट्टिकायाः अन्तो यस्याः परदेवतेत्याख्या नाम यस्यास्ताम् ॥ १८ ॥

सर्वेषामिवासुराणां सुधादानं दुर्नयमन्वाख्यं मत्वा तां सुधां न व्यभजत् सुरानपाययामास ॥ १९ ॥

उभयेषां देवानां पृथक् असुराणां पृथक्पङ्क्तीः कल्पयित्वा ॥ २० ॥ २१ ॥

तासु पृथग्भूतासु यथेष्टं कुर्विति नियमं पालयन्तस्ते कृतस्नेहाः तूष्णीमासन् ॥ २२ ॥

बहुमानेन आबद्धाः परतन्त्राः ॥ २३ ॥

सोममसृतम् ॥ २४ ॥

---

भाषा टीका।

हे नरेन्द्र! उसी शाला में करभ [ मणिबन्ध से कनिष्ठ-तक हस्त के बाहर के मांसल भाग के सदृश ऊरु ( जङ्घा ) वाली अथवा एतादृश ऊरु प्रदेश में शोभायमान सूक्ष्म दुकूल जिनके और श्रेणी प्रदेश अर्थात् कटि पश्चाद्भाग के गौरव से आलस्य युक्त गति वाली और मदसे मत्त हो रहे नेत्र जाके, ऐसी वे मोहनी जी सुवर्ण नूपुरों के सिंजित ( शब्द ) से कूजन करती हुई कलश सदृश स्तन वाली अमृत कलश हाथ में लेकर प्रवेश करती भई ॥ १७ ॥

सुन्दर कर्णों में सुवर्ण के कुण्डलों को झलकाती हुई अति सुंदर नासिका कपोल और मुख वाली पर देवता नाम जिनका ऐसी लक्ष्मी जी की सगांति न सखी को देव और असुरों ने जब देखा तो आपके चलते समय स्तनपर से अंचल का छोर गिरता जाता है और आप वारंवार सम्हारती जाती है इतने में आपने किंचित ऊंचे को मुख कर एक बार हँसकर जो देख दिया इतने ही से सब देव और असुर मोहित होगये ॥ १८ ॥

आपने भी उस शाला में प्रवेश करके विचारा कि—असुरों को अमृत देना ऐसी दुर्नीत है कि जैसे सर्पों के विष देना, क्योंकि ये लोग तो स्वभाव ही से क्रूर हैं ऐसा मानकर भगवान ने उनको अमृत का विभाग नहीं किया ॥ १९ ॥

मोहिनी रूप वाले जगत्पति ने पृथक २ पंक्ति रचकर देव और दैत्यों को अपनी अपनी पंक्तियों में अलग अलग बैठारे ॥ २० ॥

फिर आपने कलश को हाथों में ले रक्खा है और दैत्यों से बड़े उपचार पूर्वक बोले, कि तुम कहो तो जामें इन देवताओं की नजर न लगजावे ताके लिये इनको प्रथम थोड़ी सी पिवा देवें फिर तो तुम हैंहीं, इत्यादि रीति से कहकर दूर बैठे हुए देवताओं को जरा मृत्यु के हरने वाली सुधा ( अमृत ) को पिलाने लगे ॥ २१ ॥

हे नृप! वे असुर लोग अपनी करी हुई प्रतिज्ञा को पालन करते हुए चुप बैठे रहे, और मनमें यह भी विचारते रहे कि हमारे ऊपर तो वे बड़ा स्नेह करती हैं यदि हम प्रथम बोलेंगे तो हमारे ही ऊपर रूस जायगी ऐसे प्रत्येक दैत्य विचार कर बैठे रहे ॥ २२ ॥

और उन मोहिनी जी में किया है अति प्रेम जिन्होंने, इसी से प्रेम न घटजावे इस बात को डरते हुए, और बड़प्पन के बहुमान में बंधे हुए श्रीमोहिनी जी से अप्रिय किञ्चित् भी नहीं बोलसके ॥ २३ ॥

इतने में राहु ने देवता का रूप धारण कर देवताओं की सभा में छिपा हुआ बैठा रहा तब अमृत बांटने के वक्त में इसने भी अमृत पान तो करलिया परंतु चन्द्र और सूर्य के बीच में बैठा रहा इससे दोनों ने भगवान को जना दिया कि यह दैत्य है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हरिस्तस्य शिरो जहार अप्लावितोऽसंस्पृष्टः ॥ २५ ॥

यद्युज्यतेऽसुवसुकर्मवचोमनोभिर्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात् ।
तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्याम् अष्टमस्कन्धे अमृतमथने
नवमोऽध्यायः ॥ ९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ग्रहं सूर्यादिवद्ग्रहत्वाधिकारिणम् ॥ २६ ॥ २७ ॥

हरिभक्तानामेवोद्यमः फलति नान्येषामित्येवमाख्यानतात्पर्यमाह—एवमिति । समा देशादयो येषाम् हेतुर्मन्दराद्रिः अर्थः समुद्रे क्षिप्तं क्षीरोदादि विविधः कल्पः फलं केषाञ्चिज्ज्ञानं केषाञ्चिन्नेति वैषम्यमेषां ते फलवैषम्यवन्तो बभूवुरित्यर्थः । तदेवाह, तत्र तेषु यस्य पादपङ्कजरजःश्रयणादेवा अमृतं फलमापुः स एव सेव्य इत्यर्थः । वशादेर्नित्यसम्बन्धात् ॥ २८ ॥

एतदेवोपपादयति—यदिति । असुः प्राणः वसु धनम् प्राणादिभिर्देहात्मजादिषु नृभिर्यद्युज्यते प्रयुज्यते देहाद्यर्थं यत्क्रियत इत्यर्थः । तदसद्व्यर्थं भवति कुतः पृथक्त्वाद्भेदाश्रयत्वात् शाखानिषेचनवत् तैरेव प्राणादिभिरीश्वरोद्देशेन यत्क्रियते तत्तु सन्महाफलं भवति अपृथक्त्वादीश्वरस्य सर्वत्रानुगतत्वात् तत्र दृष्टान्तः यत्तरोर्मूलनिषेचनं तद्यथा सर्वस्य स्कन्धशाखादेरपि भवतीति यद्वा ल्यब्लोपे पञ्चमी पृथक्त्वमालोच्य भेददृष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् अपृथक्त्वं पर्यालोच्येश्वरदृष्ट्या तैरेव तत्रैव च यत्क्रियते तत्सद्भवतीति शेषं समानम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिः सोमं पिबतः स्वर्भानोः शिरः क्षुरस्येव धारा यस्य तेन चक्रेण जहार चिच्छेद तस्य स्वर्भानोः कबन्धः सुधयाऽप्लावितः असंस्पृष्टोऽपतत् अमृतस्य कण्ठादधो निस्सरणात्पूर्वमेवास्य शिरसः छिन्नत्वादमृतसंस्पर्शाभावात्कबन्धः पतितः ॥ २५ ॥

शिरस्तु अमृतसंस्पर्शादमरत्वं प्राप्तम् अजो ब्रह्मा ग्रहमचीक्लृपत् अकल्पयत् सूर्यादिवच्चारेण प्राणिनां शुभाशुभसूचकं ग्रहं अचीकरदित्यर्थः । यस्तु ग्रहत्वं प्रापितो राहुर्मूर्धा वैरधीः पर्वसु चन्द्रार्कौ अभिधावति ॥ २६ ॥

देवैरमृते पीतप्राये सति प्रायग्रहणादमृतस्यावशेषः सूच्यते लोकभावनः लोकपालको भगवान्विभुरसुरेन्द्राणां पश्यतां सतां स्वरूपं स्वकीयं पौरुषं रूपं जगृहे गृहीतवान् ॥ २७ ॥

श्रीभगवन्तमेवाश्रितानामेवोद्यमफलं नान्येषामित्येवमाख्यानतात्पर्यमाह-एवमिति । एवम् इत्थं समास्तुल्या देशादयो येषां तादृशा अपि तत्र देशः क्षीरोदधितीरं कालः मथनसमयः हेतुः मन्दराद्रिणा मथनम् अर्थः अमृतरूपं प्रयोजनं कर्म मथनानुकूलं मतिः अन्योन्यमेकप्रयोजनविषयः एवंविधा अपि फले विकल्पाः फलवैषम्यवन्तो बभूवुः केषाञ्चित्फलमपरेषां नेति वैषम्यमभवदित्यर्थः । तदेवाह-तत्र देवासुराणां मध्ये देवगणा एवामृतरूपं फलमञ्जसा सुखेनापुः प्रापुः, कुतः ? यस्य भगवतः पादपङ्कजयोः रजसस्तामश्रयणाद्धेतोः । तदनाश्रयणात् दैत्या न प्रापुः वैषम्यं जीवनिष्ठमेव न तु परमात्मनिष्ठमिति दिक् ॥ २८ ॥

किञ्च यदिति असुः प्राणः वसु धनं देहात्मजादिषु निमित्तेषु देहाद्यर्थं नृभिः प्राणादिभिः यद्युज्यते यत्क्रियते इत्यर्थः । तदेतदसद्व्यर्थं शाखानिषेचनवद्व्यर्थं भवति.कुतः ? पृथक्त्वात्. तस्य कर्मणो ऽहममेत्यादिपृथगभिमानगर्भत्वात्तैरेव प्राणादिभिर्यत्क्रियते सर्वान्तरात्मनो भगवतः सर्वकारणस्य प्रीतये क्रियते तत्तु सन्महाफलं भवति । कुतोऽपृथक्त्वात्. सर्वान्तरात्मतया सर्वमूलकतया च सर्वत्रानुस्यूतत्वात्. तत्र दृष्टान्तः यत्तरोर्मूले सेचनं यथा सर्वस्य शाखास्कन्धादेरपि भवति तद्वत्,यद्वा पृथक्त्वादपृथक्त्वादिति च ल्यब्लोपे पञ्चमी देहात्मजादीनां पृथक्त्वमालोच्याब्रह्मात्मकत्वं पश्यन् केवलदेहाद्यर्थं प्राणादिभिर्यत्क्रियते कर्म तन्निष्फलं ब्रह्मात्मकत्वमालोच्य तदाराधनबुध्या कृतं लौकिकमपि कर्म सफलमेवेत्यर्थः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समा देशादयो येषां ते तथाऽपि विफलैर्विशिष्टफलैः विकल्पाः विकल्पयोग्याः अभूवन् कथं तत्राह—तत्रेति । तत्रापि हेतुमाह यत्पादेति । फलवैकल्पे विशेषणाविशिष्टकल्पनार्हा इति ॥ २८ ॥

मन्वसुरादीनामपि शिवादिदेवार्चनादिसद्भावात्कथं तैर्विशिष्टफलं नावाप्तमित्याशंक्य श्रीहरिचरणारविन्दप्रपन्नमात्रामात्मित्याशयेनाह—यदीति । नृभिः पुरुषैः पुरस्तात्कुर्वत्सु फलदानाभिमुखेषु देहात्मजादिषु यदर्चनादिकं शिवादिभिः क्रियते

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदि तर्ह्यपि तद्वत्कर्म विशिष्टफलं न भवति कुत इति तत्राह—उद्यतेष्विति । उत्कृष्टफलमुद्दिश्य यत्तेषूपयतेषु विशिष्टशक्त्यभावादिति द्विरावृत्त्या योजनीयं तर्हि कथंकारं तज्जयतीति तत्राह—तैरिति । यद्यप्यनुवर्तते यदि तैः पूर्वोक्तैर्निमित्तादिभिरेव व्यक्तिमन् हरौ यत्कर्म क्रियते तर्हि तत्पूर्णफलं भवति हरिभक्तिमात्रेण देवानुद्दिष्टकृतैस्तदर्चनाभावे कथं तत्पूर्णफलं स्यात् ? इति तत्राह—सर्वस्येति । यन्मूलभूतस्य हरेरर्चनलक्षणं निषेचनं तत्सर्वस्य देवतादेस्तन्निषेचनफलं भवति हरिभक्तिमन्तरेण शिवाद्यर्चनेनासुराणां विशिष्टफलं नाभूत्तस्मात्तद्भक्त्या भाव्यमितीदं मुक्तितत्त्वमार्गनिदर्शनायोक्तमिति ज्ञातव्यम् "देहात्मजादिष्वेव महाहंकारं तदभावादात्मा महनीयः" इति वचनादित्यतो माह—*यदीति, देहात्मजादिष्विति केचित्पठन्ति तत्रैव योजनिका पुरुषाद्देहात्मजानां पूर्ववत् वित्तादिव्यय एवानन्य इत्यर्थः । इति शेषं समम्० ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥
( विज० रीत्या अष्टमोऽध्यायः ) ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कबन्धोऽरतदिति केतुस्तुच्छायाग्रह एव न तु कबन्धरूप इत्यभिप्रायः ॥ २५—२७ ॥

हेतुः साधकतमः सर्वस्तत्प्रयोगिणाश्रम ॥ २८ ॥

तेषां च तेषाञ्च तत्तद्युक्तमेवत्याह—यद्युज्यत इति । नृभिः कर्तृभिः असुप्रभृतिभिः करणैर्जायादिषु यत् युज्यते क्रियते तदसत् सर्वकालसर्ववस्तुव्यापिपोषकशक्तिकं न भवतीति नश्वरमेव भवतीत्यर्थः । कुतः पृथक्त्वात्, असुप्रभृतीनां जायादीनां च स्वतस्तादृशशक्तिर्नास्त्येव क्षुद्रशक्तित्वादित्यर्थः । असुप्रभृतिभिरेव सर्वस्य मूलनिषेचनं सम्पर्णं यत् क्रियते तत्तु सर्वदा सर्ववस्तुपोषकं भवति. कुतः? अपृथक्त्वात्. सर्वदा सर्वस्यापि पोषकत्वादित्यर्थः । जायादीनामेव पोषकं भवतीति किमवदित्यर्थः । सर्वहरा मूर्तं श्रीभगवानेवेति भावः ॥२९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हरिश्चक्रेण हरेः शिरो जहार मा ईषत् प्राप्तवतः ॥ २५ ॥

अमरत्वं नीतम् अमृतपानप्रभावात्मरणाच्च्युत्वतां प्राप्तमिति अमृतपमपि दर्शितः । अजो ब्रह्मा ग्रहं सूर्यादिकमिव ग्रहत्वाधिकारत्वम् ॥ २६ ॥ २७ ॥

लौकिकहेतुमात्रेऽपि फलप्राप्तिर्भक्तिमतामेव नान्येषामित्याख्यानतात्पर्यमाह—एवमिति । समा देशादयो येषां ते देशः क्षीरसिन्धुः कालस्तत्क्षणसमूहः हेतुर्मथनं साधनं मन्दराद्रिः अर्थः समुद्रे क्षिप्तमोषध्यादि कर्म मथनं मतिरमृतकामना फले फलप्राप्तौ विकल्पाः फलप्राप्तिर्भेदसत्त्वेति विकल्पवन्तः तत्र तयोर्मध्ये सुरगणाः फलमापुः तत्पदाश्रयणात् । दैत्या न आपुः तदाश्रयणाभावादिति भावः । स एव सेव्य इति प्रकरणार्थः ॥ २८ ॥

तस्मात् फलितमाह—यदिति । असवः प्राणा इन्द्रियाणि वस्तु धनं असुवस्त्रादिभिर्देहादिषु युज्यते विनियुज्यते तदसत् प्राणादीनां देहार्थः यो विनियोगः सोऽसाधुरित्यर्थः । कुतः ? पृथक्त्वात् शाखानिषेचनवत् मूलात् शाखा भिन्ना इति बुद्ध्या यथा मूलं विहाय शाखा निषिच्यते तथैव भगवन्तं विहाय देहादयः परिचर्यन्ते मूढैः तैरेव असुवस्त्रादिभिर्भगवति क्रियते असुवस्त्रादीनां भगवति यो विनियोगः स साधुरित्यर्थः । अपृथक्त्वात् मूलनिषेचनवत् मूलात् शाखा न भिन्ना इतिबुद्ध्या यथा मूलमेव सिच्यते तथैव भगवानेव परिचर्यते तत्परिचरणात् सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्यैवेत्यर्थः । यद्यस्मात् तन्मूलनिषेचनम् ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्षुरस्येव धारा यस्य तेन कबन्धः सुधया अप्लावितोऽसंस्कृतः सुधायाः कण्ठादधोऽप्रवेशात् ॥ २५ ॥

सचीक्लृपत् अकरोत् ॥ २६ ॥ २७ ॥

कस्मभूतो हरिः यस्य पादपङ्कजरजःश्रयणात् समाः देशादयो येषां ते देशः क्षीरनिधिः कालो मन्थनसमयः हेतुः मन्थनसाधनं मन्दराद्रिः अर्थः क्षीरनिधौ अर्पितो वीरुधादिकः कर्म पुरुषकारः मतिः स्वार्थैकपरा तत्र अमृतम् फलं सुरगणाः आपुः न तु दैत्याः, इत्येवं फले विकल्पाः भिन्नाः भजनफलाश्रेति भेदं प्राप्ताः ॥ २८ ॥

किं बहुना कर्मोद्देशेन देहाद्यर्थमपि कृतं कर्म महाफलं भवतीत्याह—पृथक्त्वादपृथक्त्वाच्चेति उपलक्षणे पञ्चमी नृभिः पृथक्त्वमालोच्य प्राणधनादिभिर्देहादिषु युज्यते देहाद्यर्थे यत्क्रियते तदसत् अयुक्तं भवति यदा तु "प्रजानां ब्राह्मणैर्ब्रह्मणा ब्रह्महुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना" इति भगवदुक्तानुसारेण सर्वस्य अपृथक्त्वमालोच्य भगवद्दृष्ट्या तैरेव तेषु यत्क्रियते तत्सत्कर्माणि तत्र सदृष्टान्तमाह—यत्तरोर्मूलनिषेचनं तत्सर्वस्य स्कन्धशाखादेरपि भवति तद्वत् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाध्यायार्थप्रकाशः ॥ ९ ॥

---

* यद्युज्यतेषु च सुकर्म मनोवचोभिर्देहात्मजादिषु इति मूलपाठः ।

भाषा टीका।

तब मोहिनीजी ने भी छुरा के नाईं तीक्ष्ण धार वाले चक्र से पीते हुए दैत्य का शिर उड़ादिया उसका कबन्ध भी अमृत से किंचित् भीजा हुआ गिरपड़ा ॥ २५ ॥

शिर भी अमर होगया ब्रह्मा जी ने उसको ग्रह बना दिया जो आज कल भी पर्व २ में अर्थात् ग्रहण काल में वैर बुद्धि कर चंद्र और सूर्य के प्रति दौड़ता है ॥ २६ ॥

जब देवतालोग प्रायकर अमृत पान करचुके तब सर्व लोक के पालक हरिने असुर लोगों के देखते २ अपना स्वरूप ग्रहण करलिया ॥ २७ ॥

इस प्रकार सुरगण और असुर गणों का समान देश समान काल समान हेतु समान प्रयोजन समान मति होने परभी फल में विकल्प होगया । तहां पर कारण इतना ही हुआ कि देवगणों को तो श्रीहरि के चरण कमल की रजका आश्रय लेने से अमृत रूप फल प्राप्त हुआ, और इतने के विना दैत्यों को फल प्राप्त नहीं हुआ, बस पुरुष को इतना ही मुख्य समझना चाहिये फल से जैसे न चूके ऐसे का आश्रय ले ॥ २८ ॥

लोक में जो कुछ प्राण, धन, कर्म, मन, वाणी इत्यादि उपकरणों से पुत्र कलत्रादि के निमित्त मनुष्यों से जो कुछ किया जावे वह बुद्धि के भेद होने से असत् अर्थात् व्यर्थ होता है। और प्राण धनादि से यदि भगवदाराधन मानकर भगवत् की आराधन बुद्धि से जो कुछ कियाजाय तो वह अपृथक् होने से संपूर्ण सत् होता है पश्चात् उसका अपने पुत्रादि मे ही विनियोग कियाजाय तो भी बुद्धिमात्र के अभेद से दूसरा प्रकार होता है, जैसे कि वृक्ष के मूल में सींचने से शाखा पत्रादिक सब हरे होते हैं इसी प्रकार श्रीहरि के आराधन के निमित्त सर्व कार्य करने से कर्म विपरीत फलप्रद नहीं होते किन्तु पूर्ण अनुकूल फल देते हैं ॥ २९ ॥

इति श्रीमद्भागवत अष्टमस्कन्धमें नवम अध्याय की

श्रीवृन्दावनस्थ भागवताचार्यकृत भाषाटीका

समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

———:*:———

## ॥ दशमोऽध्यायः ॥

श्रीशुक उवाच ।

इति दानवदैतेया नाऽविन्दन्नमृतं नृप ! ।
युक्ताः कर्मणि [1] यत्ताश्च वासुदेवपराङ्मुखाः ॥ १ ॥
साधयित्वाऽमृतं राजन् ! पाययित्वा स्वकान् सुरान् ।
पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥
सपत्नानां [2] परामृद्धिं दृष्ट्वा ते दितिनन्दनाः ।
अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥
ततः सुरगणाः सर्वे सुधया पीतयैधिताः ।
प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ॥ ४ ॥
तत्र दैवाऽसुरो नाम रणः परमदारुणः ।
रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥
तत्रान्योऽन्यं सपत्नास्ते संरब्धमनसो रणे ।
समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥
शङ्खतूर्यमृदङ्गानां भेरीडमरुणां महान् ।
हस्त्यश्वरथपत्तीनां नदतां निःस्वनोऽभवत् ॥ ७ ॥
रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ।
हया हयैरिभाश्चेभैः समसज्जन्त संयुगे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे मत्सराद्दैत्यैरारब्धे तु मृधे सुरैः ।
दैत्यमायाविपर्यासेषु देवेभ्यश्चाविर्बभौ हरिः ॥ १ ॥
तदेव ममतावाप्तिर्नाभक्तानामितीरितम् ।
भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥ २ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥
रणः संग्रामः उदन्वतः समुद्रस्य रोधसि तीरे बभूव ॥ ५ ॥
अन्योऽन्यं समासाद्य निजघ्नुः ॥ ६——१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

समदेशकालहेत्वर्थकर्ममतीनामपि श्रीभगवन्तमनाश्रितानां न केवलं फलाप्राप्तिरेव, प्रत्युत प्राणहानिश्चेति वक्तुममृतालाभप्रयुक्तसंरम्भाणां दैत्यानां आदितेयैस्सह युद्धमाहाध्यायशेषेण । हे नृप ! इति इत्थं दानवा दैत्याश्च अमृतं नाविन्दन्. न लब्धवन्तः तत्र हेतुं वदन् विशिनष्टि कर्मणि मथनकर्मणि युक्ता यत्ताश्चानुकूलकर्मवन्तो यत्नवन्तोऽपि वासुदेवपराङ्मुखाः अतो नाविन्दन्नित्यर्थः ॥ १ ॥

हे राजन् ! इत्थं भगवानमृतं साधयित्वा स्वकान् स्वाश्रितान् सुरान् सुधां पाययित्वा सर्वभूतानां पश्यतां सतां श्रीगरुडवाहनस्सन् जगाम ॥ २ ॥

---

(१) इष्ताः (२) परां सिद्धिम् इति वीर० ।

उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ।
केचिद्गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥
गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः ।
शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सपत्नानां देवानां परां सिद्धिं फलप्राप्तिं दृष्ट्वा ते दैत्याः असहमानाः सन्तः उद्यतानि उद्धृतानि आयुधानि यैस्ते देवान्प्रति उत्पेतुरभिदुद्रुवुः ॥ ३ ॥

ततः सुरगणा अपि पीतया सुधया एधिताः आहितबलाः नारायणपदाश्रयाश्च शस्त्रास्त्रैः प्रतिसंयुयुधुः ॥ ४ ॥

तत्रोदन्वतः क्षीराब्धेः रोधसि तीरे देवासुर इति प्रसिद्धः परमदारुणोऽतिभीषणस्तुमुलः सङ्कुलः पश्यतां शृण्वतां च रोमहर्षणो रोमहर्षणजनको रणः संग्रामो बभूव ॥ ५ ॥

तमेवानुवर्णयति--तत्रेति । तदा सपत्नाः ते देवासुराः संरब्धं क्रुद्धं मनो येषां ते रणे अन्योन्यं समासाद्य बाणैः विविधैरायुधैश्च निजघ्नुः ॥ ६ ॥

भेर्यादीनां शङ्खादीनां च नदतां हस्त्यश्वपदातीनां च महान् निस्स्वनो बभूव ॥ ७ ॥

तत्र रथयादयो रथ्यादिभिरेव द्वन्द्वसंगरे समसज्जन्त युयुत्सया सङ्गता बभूवुः ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्प्रसादजातेन ज्ञानेन पापप्रणाशो भवत्येव नान्येनेत्येतत्प्रदर्शनाय देवासुरयुद्धं वर्णयत्यध्यायद्वयेन, तत्रादौ हरेरदर्शनप्रकारमाह, इतीति ॥ १ ॥

यथावद्दृष्टोऽभूदिति ॥ २-३ ॥

एधिताः वर्धिताः ॥ ४ ॥

उदन्वतः समुद्रस्य रोधसि तीरे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

युक्ता योग्याः यत्ताः कृतयत्नाः ॥ १—१२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमेऽन्तर्हिते विष्णौ दैत्यैर्युद्धे प्रवर्तिते ।
दैत्यमायाविभूतेषु सुरेष्वाविरभूद्धरिः ॥ १ ॥

यथौ अन्तर्दधे ॥ १—४ ॥

रणो बभूव ॥ ५—१० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवासुरसङ्ग्रामे असुरैर्मायया अभिभूतान् देवान् हरिराविर्भूय तारितवानिति वर्णयति दशमेन ॥ १—४ ॥

रोधसि तीरे ॥ ५ ॥

अन्योन्यं समासाद्य अस्त्रादिभिर्निजघ्नुः ॥ ६—१२ ॥

———

भाषा टीका ।

श्रीरुक्मिणीशो जयति ॥

श्रीशुक उवाच ।

श्री शुकदेवजीबोले, कि हे राजन् ! इस प्रकार सब दानव और दैत्य गणोंने यद्यपि समुद्र मथन में बड़ाभारी परिश्रम किया और सावधान रहे, तथापि श्रीहरिके अप्रिय सो विमुख होनेसे अमृत को प्राप्त नहीं भये ॥ १ ॥

हे राजन् ! भगवान् श्री हरि इस प्रकार दैत्यों से अमृत अपने हाथ में लेकर और शरणागत सम्पूर्ण देवताओंको पिलाय, सब प्राणियों के देखते २ गरुड़ के ऊपर चढ़कर चले जाते भये ॥ २ ॥

तब दिति के पुत्र सब दैत्यगण अपने शत्रुओं का मनोकामना सिद्ध देखकर न सहसके और बड़ी भारी ईर्षा से अपने अस्त्र शस्त्रों को सम्भाल देव गणों से युद्ध करने के लिये सावधान होगये ॥ ३ ॥

तिसके अनन्तर सब देवता श्रियः पति के चरण कमल के आश्रित होने से और अमृत के पीनेसे रिष्ट पुष्ट होकर परस्पर में अस्त्र शस्त्र लेकर युद्ध करने को खड़े होजाते भये ॥ ४ ॥

हे राजन् ! उस समुद्र के किनारे में अतिघोर कठोर देवासुर नाम संग्राम होता भया, जिसके देखने वालों का रोम खड़े हो जाँय ॥ ५ ॥

वहां परस्पर में देवता दैत्यदानव अतिक्रोधित होकर खड्ग बाण व नाना प्रकार के आयुधों से मारने लगे ॥ ६ ॥

उस समय में शंख, तुरही, मृदङ्ग, नगाड़े, डमरू इत्यादिक ननाप्रकार के बाजाओं का शब्द, और हाथी घोड़े रथ पैदल चलने वालों का जो परस्पर से अनेक प्रकार के बातों का अति घनाघोर शब्द होता भया ॥ ७ ॥

उस रण भूमि में रथ पर चढ़ने वालों से रथी लोग और पैदल चलने वालों से पदाती सब, और घोड़ों से घोड़ों का, हाथियों से हाथियों को परस्पर से युद्ध होने लगा ॥ ८ ॥

———

शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः ।
बस्तैरके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥
अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ।
सेनयोरुभयो राजन् ! विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥
चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ।
महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥
वातोद्धूतोत्तरोष्णीषैरर्चिभिर्वर्मभूषणैः ।
स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥
देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन ! ।
रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥
वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः ।
यानं वैहायसं नाम कामगं मयनिर्मितम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चित्रध्वजपटादिभिश्च वीराणां मालाभिश्च राजिभिर्देवदानववीराणां ध्वजिन्यौ यादसां मालाभिः सागराविव रेजतुरिति त्रयाणामन्वयः । बार्होभिरिति वा सितैरमलैरातपत्रैश्च बार्हैश्चामरैश्च व्यजनैश्च ॥ १३ ॥

वातेनोद्धूतैरुत्तरीयैरुष्णीषैश्च, सूर्यरश्मिभिः सुतरां स्फुरद्भिः ॥ १४—१५ ॥

असुराणां या चमूस्तस्याः पतिः स बलिर्यानमास्थितः ॥ १६ ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र देवेषु असुरेषु च केचित् केचिद्रूढा उष्ट्रादिभिर्वाहनैरभिमम्ययुः अभिदुद्रुवुः गौरमुखैरिति ऋक्षैरित्यस्य विशेषणं रक्तमुखैर्वानरैरित्यर्थः । हरिभिः सिंहैः तिमिङ्गिलैर्मत्स्यविशेषैः गोभिर्धेनुभिः वृषैर्बलीवर्दैश्चात्रैव गोबलीवर्दन्यायः प्रदर्शितः ॥ ९ ॥ १० ॥

शिवाः शृगालविशेषास्ताभिः बस्तैर्मेषैः ॥ ११ ॥

जले स्थले खे आकाशे गच्छन्तीति तथा तैः विकृतविग्रहैः सत्त्वैर्जन्तुभिर्वाहनभूतैरुभयोर्देवासुरसम्बन्धिन्योः सेनयोरग्रतः हे राजन्, विविशुः ॥ १२ ॥

हे राजन् ! चित्रध्वजपटैः सितैः शुभ्रैरमलैर्महाधनैरनर्घैः वज्रदण्डैरातपत्रैस्तथा वज्रदण्डैः व्यजनैरनर्घैश्चामरैः ॥ १३ ॥

वातेनोद्धूतैरुत्तरीयैरुष्णीषैर्वर्मभिः कवचैर्भूषणैश्च विशदैः निघर्षणेन निर्मलीकृतैः सूर्यरश्मिभिर्नितरां स्फुरद्भिः शस्त्रैश्च ॥ १४ ॥

वीराणां मालाभिश्च देवासुराणां ध्वजिन्यौ सेने रेजतुः यथा यादसां मालाभिः सागरौ समुद्रौ तद्वत् ॥ १५ ॥

असुराणां या चमूः सेना तस्याः पतिर्वैरोचनो बलिर्वैहायसाख्यं यानं विमानमास्थितः अधिष्ठितः उदये उदयगिरौ स्थितश्चन्द्र इव रेजे यानं विशिनष्टि, कामगं कामं यथेच्छं गच्छतीति तथा मयेन निर्मितम् ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेषामारोहसाधनान्याह—उष्ट्रैरित्यादिना । द्विजैः पक्षिभिः ॥ ९ ॥
खड्गैर्मृगविशेषैः अरुणैर्वेनमत्स्यविशेषैः ॥ १०—१२ ॥
बार्हचामरैः पिच्छाधरीकृतचामरैः ॥ १३—१४ ॥
वीचिमालाभिः यादसां जलजन्तूनां वरूथिनी यथा ॥ १५-१६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चित्रध्वजैरिति त्रिकम् । व्यजनादिभिः कीदृग्भूतैः अर्चिभिः कृत्वा स्फुरद्भिः सूर्यरश्मिभिस्तु सुतरां स्फुरद्भिरित्यन्वयः । एवमेवाभिप्रेतं तैरपि पाठस्याऽस्य दुर्गमत्वादेव पाठान्तराणि कल्पितानि लक्ष्यन्ते परस्परं विगीतानि ॥ १३-१५ ॥

असुराणां या चमूस्तस्याः पतिः स बलिर्यानमास्थितः उदये उदयगिरिशिखरे स्थितश्चन्द्र इव रेजे इति त्रयाणामन्वयः ॥ १६-२४ ॥

सर्वताङ्गामिकोपेतं सर्वाश्चर्यमयं प्रभो ! ।
अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥
आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ।
वालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये ॥ १८ ॥
तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः ।
नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥
द्विमूर्द्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ।
शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥
हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः ।
तारकश्चक्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः ॥ २१ ॥
अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ।
अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बस्तैः छागैः ॥ ११ ॥ १२ ॥ १३ ॥

वातेनोद्धूतैरुत्तरीयैरुष्णीषैश्चार्चिभिः अर्चिष्मद्भिः सूर्यस्य रश्मिभिः सुतरां स्फुरद्भिः ॥ १४ ॥

ध्वजिन्यौ सेने यादसां मालाभिः सागराविव ॥ १५-२४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चित्रध्वजपटादिभिर्देवदानववीराणां ध्वजिन्यौ रेजतुरिति तृतीयेनान्वयः ॥ १३—१४ ॥

हे वीर ! यादसां मालाभिः सागराविव ॥ १५—२४ ॥

———

भाषा टीका ।

और कितने ही तो ऊटों पर चढ कें, कितने हाथियों पर चढकर, और कितने योद्धा गधोंपर चढकर युद्ध करने लगे, और कितने तो गौर मृगों [ वानर विशेषों ] के ऊपर चढकर, कितनें व्याघ्रों के ऊपर कितने सिंहों के ऊपर चढकर लडने लगे ॥ ६ ॥

कितने गृध्रोंपर कितने ही कंकों ( गृध्रजाति विशेष ) पर, कोई २ बकलाओं पर सिगरों पर ( श्वेनभास ) कोई कोई मछलियों पर, शरभों पर कोई कोई भैंसों पर कोई गेंडोंपर कोई बिजारों ( सांढो ) पर, कोई २ रोझों के ऊपर चढकर युद्ध करते भये ॥ १० ॥

कोई २ शृगालों पर कोई मूसाओ पर, कोई गिरगिटोंपर कोई खरहों पर, कोई कोई मनुष्यों के ऊपर कोई बकराओं पर कोई काले मृगाओं पर, कोई हंसों पर कोई सूकरो पर चढकर परस्पर में युद्ध करते भये ॥ ११ ॥

हे राजन् ! और कितने योद्धा लोग जल मे भूमी में रहने वाले पची व कुरूप जन्तुओं के ऊपर चढकर दोनों सेनाओं में आगे से आगे युद्ध करने के लिये रण भूमि में खडे होते भये ॥ १२ ॥

हे राजन् ! चित्र विचित्र के ध्वजा पताके वा निर्मल-श्वेत छत्र, हीरादि अनेक प्रकार के रत्नों से जटित दण्डा लगा हुआ पंखा और चमर ॥ १३ ॥

और वायु के वेग से कम्पता हुआ डुपट्टा वा पाग जामा मटका वा प्रकाशमान कवच वो भूषणों से, और सूर्य के किरणाओं के लगने से चमकते हुए शस्त्रों करके ॥ १४ ॥

हे पाण्डु नन्दन ! देव दानव वीरों की दोनो सेना कैसी शोभित होती भई, जैसे अनेक प्रकार के जलजन्तुओं के पंक्तियों से समुद्र शोभित हो ॥ १५ ॥

उस सेना मे असुर के सेनापति विरोचन के पुत्र स्वयं बलि मय का बनाया हुआ मनोगामी वैहायस नामक विमान के ऊपर विराजमान होते भये ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

उदये उदयगिरिशिखरे स्थितश्चन्द्र इव रेज इति नैयायामन्वयः ॥ १८—२४ ॥

अलब्धभागाः सोमस्य केवलं क्लेशभागिनः।
सर्व एते रणमुखे बहुशो निर्जितामराः ॥ २३ ॥
सिंहनादान्विमुञ्चन्तः शङ्खान्दध्मुर्महारवान्।
दृष्ट्वा सपत्नानुत्सिक्तान् बलभित्कुपितो भृशम् ॥ २४ ॥
ऐरावतं दिक्करिणमारूढः शुशुभे स्वराट्।
यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥
तस्यासन् सर्वतो देवा नाना वाहध्वजायुधाः।
लोकपालाः सहगणैर्वाय्वग्निवरुणादयः ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्रवन्ति प्रस्रवणानि यस्मिन्निति मदधारासादृश्यम् ॥ २५ ॥ नाना वाहनादीनि येषां ते देवा असुराश्च मिथो ययुधुः ।२६।२७।

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सर्वैः संग्रामसाधनैरस्त्रशस्त्रादिभिर्युक्तं सर्वेषामप्याश्चर्यकरं महद्विपुलमप्रतर्क्यं विमानान्तरसजातीयत्वेन तर्कितुमप्यशक्यम् अनिर्देश्यमनियतप्रदेशावस्थानत्वेन कस्मिन्देशे नियमेन स्थितमिति निर्देष्टुमशक्यं क्वचिद्दृश्यमानमपि पुनरप्यदर्शनमदृश्यं द्रष्टुमशक्यं तेजस्वित्वाद्विमानस्य श्रेष्ठं यानं तदा स्थित इत्यन्वयः कथम्भूतः सर्वैः सेनाधिपतिभिर्व्यजनच्छत्रचामरग्राहिभिश्च वृतः ॥ १७ ॥ १८ ॥

तस्य बलेः समन्ताद्यूथानां पतयोऽसुराः स्वस्वयानैः सहाऽऽसन् परिवृत्य तस्थुः यूथपतीनेव कांश्चिन्निर्दिशति–नमुचिरिति ॥ १९—२२ ॥

त एते सर्वे सोमस्यामृतस्यालब्धो भागो यैः ते केवलं क्लेशमात्रं प्राप्तास्सन्तः पूर्वं रणमुखे बहुशो निर्जिता अमराः यैस्ते ॥२३॥

सिंहनादं विमुञ्चन्तः कुर्वन्तः महान् रवो येषां तान् शङ्खान् दध्मुः ध्वनयामासुः एवम् उद्धतान् शत्रूनसुरान् दृष्ट्वा स्वराट् बलभिदिन्द्रः नितरां कुपितः ॥ २४ ॥

दिक्करिणमैरावतमधिरूढः वियत्याकाशे अवस्थित इतिशेषः। कमिव ? स्रवन्ति प्रस्रवणानि यस्मिन् मदधारासादृश्यमनेनाभिप्रेतं तमुदयाद्रिमारूढोऽहर्पतिः सूर्यो यथा तद्वत् ॥ २५ ॥

तस्येन्द्रस्य सर्वतः परितो देवा नानाविधानि आयुधादीनि येषां ते आसन् तं परिवेष्ट्य तस्थुः स्वगणैः सहिता वाय्वादयो लोकपालाश्च ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

साङ्ग्रामिकं युद्धसाधनम् ॥ १७-२२ ॥

सोमस्य अमृतस्य ॥ २३ ॥

उत्सिक्तान् बलगर्वितान् ॥ २४ ॥

स्रवत्प्रस्रवणं स्रोतःप्रस्रवणं स्रोतस्मदजलम् अन्यत्र निरन्तरस्यन्दमाननिर्झरम् अहर्पतिः सूर्यः ॥ २५—३९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्रवन्ति प्रस्रवणानि यस्मिन्निति मदधारासादृश्यम् ॥२५-२९॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रस्रवणानि दानजलानि निर्झराश्च ॥ २५-२७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्रवन्ति स्रवणानि निर्झरा यस्मिन् तमुदयाद्रिमहर्पतिः भास्करो यथा तथा स्रवन्ति प्रस्रवणानि मदजलानि यस्मिन् तमैरावतमारूढः स्वराडिन्द्रः शुशुभे ॥ २५—२७ ॥

---

भाषा टीका।

वह विमान, युद्ध के सम्पूर्ण सामग्रियों से परिपूर्ण सर्व प्रकार से आश्चर्य मय, जो कोई के तर्क मे भी नहीं आ-सके, कोई अंगुलियों से भी नहीं बताय सके, और कभी तो देखने मे आवे कभी नही भी देखने मे आवे इस प्रकार का मय दैत्यने इसका रचना किया रहा ॥ १७ ॥

ऐसे विमान मे आगे, सब सेनापतियों के सहित छत्र जिनके मस्तक के ऊपर शोभित हो रहा है, चंवर जिनके दोनों बगल में दुर रहा है, ऐसे शोभासहित बलि विराजमान होते भये जैसे पूर्णिमा का चन्द्रमा• उदय काल मे शोभित हो ॥ १८ ॥

तेऽन्योऽन्यमभिसंसृत्य क्षिपन्तो मर्मभिर्मिथः ।
आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥ २७ ॥
युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत ।
वरुणो हेतिनाऽयुध्यन्मित्रो राजन् ! प्रहेतिना ॥ २८ ॥
यमस्तु कालनाभेन विश्वकर्मा मयेन वै ।
शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥
अपराजितेन नमुचिरश्विनौ वृषपर्वणा ।
सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च ॥ ३० ॥
राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।
निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी ॥ ३१ ॥
वृषाकपिस्तु जम्भेन महिषेण विभावसुः ।
इल्वलः सह वातापिर्ब्रह्मपुत्रैररिन्दम ! ॥ ३२ ॥
कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ।
बृहस्पतिश्चोशनसा नरकेण शनैश्चरः ॥ ३३ ॥
मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ।
विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥
त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः ।
अन्योऽन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥

भाषा टीका

बलि के आस पास चारों ओर में अपने अपने विमानों में असुरन के यूथ पति शूर वीर इकट्ठे होजाते भये, नमुचि, शम्बर, बाण विप्रचिति, अयोमुख, ॥ १९ ॥

द्विमूर्धा, कालनाभ, प्रहेति, हेति, इल्वल, शकुनि, भूतसन्ताप, वज्रदंष्ट्र, विरोचन ॥ २० ॥

और हयग्रीव, शंकुशिरा, कपिल, मेघदुन्दुभि, तारक, चक्रदृक्, शुम्भ, निशुम्भ, जम्भ, उत्कल, ॥ २१ ॥

अरिष्ट, अरिष्टनेमि, मय, त्रिपुराधिप, और पौलोम, कालेय, निवातकवचादिक, ॥ २२ ॥

ये सब दैत्य दानव बारम्बार देवों को जीतनेवाले अमृत को नहीं प्राप्तभये, केवल क्लेशही मात्र इनसबोंके हाथ आया, इससे बहुत क्रोधयुक्त होकर युद्ध की तैयारी से ॥ २३ ॥

शंख को बजाते हुये सिंह के से गर्जने लगे, ऐसे दैत्य दानवों को युद्ध मे उत्साह देखकर इन्द्रको भी बहुत क्रोध उत्पन्न हुआ ॥ २४ ॥

उस समय मद झरते ऐरावत हस्ती के ऊपर बैठेभये इन्द्र कैसे शोभित हुये, जैसे झरना झरते भये उदयाचल के ऊपर सूर्य शोभित होय ॥ २५ ॥

हे राजन ! इन्द्र के आस पास चारों ओर सब देवगण नाना प्रकारके सवारियोंपर बैठकर अनेक प्रकार के हथियारों को धारण कर इकट्ठे होगये और वायु अग्नि वरुणादिक लोकपालभी अपने अपने सेनाओं को लेकर इन्द्र के पास में आयगये ॥ २६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वन्द्वान्येवाऽऽह–युयोधेति सप्तभिः । अस्यत आस्यद्युध्यतेत्यर्थः ॥ २८ ॥ २९ ॥

सूर्यो देव एक एव शतेन बलिसुतैः बाणो ज्येष्ठो येषां तैः ॥ ३० ॥

निशुम्भशुम्भाभ्यां देवी ॥ ३१ । ३२ । ३३ । ३४ । ३५ । ३६ ॥

भुशुण्डिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि ।
निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिन्दिपालैश्च शिरांसि चिच्छिदुः ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्योन्यमभिमुखं समीपमागत्य परस्परं क्षिपन्तस्तिरस्कुर्वन्तो नामभिराह्वयन्तो विशन्तश्चाग्रेद्वन्द्वयोधिनो युयुधुः ॥ २७ ॥

द्वन्द्वान्येवाह—युयोधेत्यादिसप्तभिः । बलिर्वैरोचनिरिन्द्रेण सह तारकेण असुरेण गुहः कुमारः अस्यत अयुध्यत इत्यर्थः । हे राजन् ! मित्रः प्रहेतिना अयुध्यत ॥ २८ ॥

विरोचनः बलेः पिता अन्यो वाऽसुरो दैत्यः सूर्यो देव एक एव बलेः सुतैर्बाणज्येष्ठैः बाणो ज्येष्ठो येषां तैः शतसङ्ख्याकैः अयुध्यतेत्यर्थः ॥ ३० ॥

सोमश्चन्द्रः पुलोम्ना दैत्येन अनिलो वायुरयुध्यत निशुम्भशुम्भयोरिताभ्यां तरस्विनी बलवती भद्रकाली देवी अयुध्यत ॥ ३१ ॥

वातापिसहित इल्वलः ब्रह्मपुत्रैर्मरीच्यादिभिः हे अरिन्दम ॥ ३२ ॥

मातृभिर्ब्राह्म्यादिभिः सह उत्कलोऽसुरः उशनसा शुक्रेण बृहस्पतिः नरकेण असुरेण शनैश्चरः ॥ ३३ ॥

कालेयैः कालकेयैः ॥ ३४ ॥

एवमित्थमाजौ युद्धे त एते सुरासुरश्रेष्ठा द्वन्द्वेन सङ्घीभूय नियुध्यमानाः परस्परं समीपमेत्य जेतुमिच्छवः तीक्ष्णैः शरादिभिः बलेनान्योन्यमाजघ्नुः शिरांसि चिच्छिदुश्च ॥ ३५ ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपराजितेनेति पञ्चकम् । ब्रह्मपुत्रैः प्रजापतिमुखैः कामदेवेनेति तत्स्थाने देवेन्द्रेण कोऽप्ययं निवेशितः ननु स्वयं कामः तस्य रुद्रजन्मनः पूर्वमेव भस्मीकृतत्वात् ॥ ३०–३५ ॥

अद्वयः रिष्टिः ॥ ३६—४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्यत आस्यन अस्त्राणि चिक्षेप ॥ २८ ॥ २९ ॥
सूर्यो देव एक एव शतेन बलिसुतैः ॥ ३० ॥
निशुम्भशुम्भाभ्यां देवी ॥ ३१ ॥
ब्रह्मपुत्रैर्वसिष्ठाद्यैः ॥ ३२—३५ ॥
भुशुण्ड्यादयो ऽस्त्रविशेषाः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्यत आयुधानि चिक्षेप ॥ २८—२९ ॥

शतेन शतसङ्ख्याकैः बाणो ज्येष्ठो येषां तैर्बलिसुतैः ॥ ३० ॥
निशुम्भशुम्भयोरिताभ्याम् तरस्विनी बलवती ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

भाषा टीका ।

वे देव दैत्यगण युद्ध करने के लिये परस्पर में एक दूसरे को अपना नाम सुनाय २ आगे बढ़कर द्वन्द्व युद्ध करने को पुकारने लगे ॥ २७ ॥

इन्द्र के सङ्ग मे बलि ने युद्ध किया, तारकासुर के सङ्ग स्वामिकार्तिक ने युद्ध किया, वरुणके सङ्ग में हेती का संग्राम हुआ, और हे राजन ! मित्रदेवके साथ प्रहेती का संग्राम होने लगा ॥ २८ ॥

और कालनाभ के साथ यमराज का, विश्वकर्मा के सङ्ग मयदैत्यका, शम्बरासुर के संग त्वष्टाका, सविता के साथ विरोचन ने युद्ध किया ॥ २९ ॥

अपराजित के संग मे नमुचि ने युद्ध किया, दोनों अश्विनीकुमार वृषपर्वा के साथ, राजा बलि के बाणासुरादिक सौ पुत्रों के संग सूर्य ने युद्ध किया ॥ ३० ॥

और राहु के साथ चन्द्रमा, पुलोमाके साथ वायु, और बड़ी वेग वाली भद्रकाली देवी निशुम्भ और शुम्भ के साथ युद्ध करने लगी ॥ ३१ ॥

और वृषाकपि के साथ जम्भासुर, महिषासुर के सङ्ग विभावसु ( अग्नि ) इल्वल वातापि के साथ ब्रह्मपुत्रों से ॥ ३२ ॥

कामदेव के साथ दुर्मर्ष, मातृगणों के साथ उत्कल, बृहस्पति के सङ्ग शुक्र, और नरकासुर के संग शनिश्चर ने युद्ध किया ॥ ३३ ॥

और मरुतों ने निवातकवचों के संग, कालेय नामक असुरों ने वसुगणों के साथ, विश्वेदेवगणों ने पौलोम असुरों के संग, और रुद्रगणों ने क्रोधवशों के साथ युद्ध किया ॥ ३४ ॥

हे राजन् ! सब देव व असुर गण परस्पर में जीतने की इच्छा से द्वन्द्वयुद्ध करते भये बाण खड्ग तोमरादि अस्त्र शस्त्रों को उठाय बड़े वेग से मारने लगे ॥ ३५ ॥

और भुशुण्डी, चक्र, गदा, ऋष्टि, पट्टिश, शक्ति प्रास, फरसा, खड्ग, भाला, परिघ, मुद्गर, भिन्दपाल, इन आयुध विशेषों से अपने अपने शत्रुओं का शिर काटने लगे ॥ ३६ ॥

गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ।
निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥
तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा ।
रेणुर्दिशः खं द्युमणिं च छादयन्न्यवर्ततासृक्स्रुतिभिः परिप्लुतात् ॥ ३८ ॥
शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ।
महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥
कबन्धास्तत्र चोत्पेतुः पश्यन्तः स्वशिरोऽक्षिभिः ।
उद्यतायुधदोर्दण्डैराधावन्तो भटान्मृधे ॥ ४० ॥
बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ।
चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥ ४१ ॥
स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ।
चिच्छेद निशितैर्भल्लैरसम्प्राप्तान् हसन्निव ॥ ४२ ॥
तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ।
तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥
ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ।
यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ॥ ४४ ॥
ससर्जाथाऽऽसुरीं मायामन्तर्धानगतोऽसुरः ।
ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ! ॥ ४५ ॥
ततो निपेतुस्तरवो दह्यमाना दवाग्निना ।
शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम् ॥ ४६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आरोहन्तीत्यारोहास्तैः सहिता अन्ये च वाहाः पूर्वं तु केवलं गजादय उक्ताः कथम्भूताः निकृत्ता बाह्वादयो येषाम् छिन्नानि ध्वजादीनि येषां ते ॥ ३७ ॥

तेषां देवादीनां पदाघातैः रथाङ्गैश्च चूर्णितादायोधनाद्रणभूमेरुत्थितो रेणुर्दिशः खं द्युमणिं च सूर्यं छादयंस्तदैव न्यवर्तत कथम्भूतात् असृक्स्रुतिभिः रक्तस्रवणैः परिप्लुतात्सिक्तात् यद्वा परिप्लवनात्क्तोऽन्यत्र भावे क्तः रक्तधाराणां तत्पर्यन्तमुच्छलनादित्यर्थः । प्रथमान्तपाठे रेणोर्विशेषणम् ॥ ३८ ॥

शिरोभिर्महाभुजैश्च करभसदृशैरूरुभिश्च सा रणभूः प्रकर्षेण आस्तृता सती बभौ कथम्भूतैः शिरोभिः उद्धूतान्युत्पतितानि किरीटानि कुण्डलानि च येभ्यस्तैः संरम्भयुक्ता दृशो येषु तैः ॥ ३९ ॥

पतितानि यानि स्वशिरांसि तत्रस्थैरक्षिभिस्तैः पश्यन्त इत्यर्थः उद्यतान्यायुधानि यैस्तैर्दोर्दण्डैर्युक्ताः ॥ ४० ॥

वाहानैरावतपादरक्षकान् आरोहं गजयन्तारमार्च्छयद्विव्याध ॥ ४१ ॥ ४२ ॥

दुर्मर्षोऽसहनो बलिः ॥ ४३—४५ ॥

टङ्कवत्तीक्ष्णाग्रैः शिखरैः सहिताः ॥ ४६—४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गजादयः आरोहन्तीति आरोहास्तैः सहिताः अन्ये च वाहाः नानाविधाः खण्डिता निकृत्ताः नितरां छिन्ना बाह्वादयो येषां छिन्नानि ध्वजादीनि येषां ते बभूवुः तत्र इष्वासो निषङ्गः तनुत्रं कवचम् ॥ ॥ ३७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां देवादीनां पादाघातै रथाङ्गैश्च चूर्णिताद्दायोधनाद्युद्धभूमेरुत्थितो रेणुरुल्बणो निबिडः दिशः खं द्युमणिं सूर्यञ्च छादयन् पश्चात् न्यवर्तत निवृत्तौ हेतुं वदन्नायोधनं विशिनष्टि, असृक्स्रुतिभिः रुधिरप्रस्रवणैः परितः प्लुतात् सिक्तात् ॥ ३८ ॥

सा युद्धभूमिः शिरोभिर्महाभुजैः करभसदृशोरुभिश्च प्रावृता सती बभूव शिरांसि विशिनष्टि, उद्धूतानि उत्क्षिप्तानि किरीटादीनि येभ्यः संरम्भयुक्ताः दृशो येषु परिदष्टा दन्तच्छदा दन्तच्छदा-अधरोष्ठा येषु तैः भुजान् विशिनष्टि, साभरणैः सहायुधैरिति च॥३९॥

किञ्च कबन्धा इति, तत्र युद्धे मृधे पतितानि यानि स्वशिरांसि तत्रत्यैः अक्षिभिः पश्यन्तः कबन्धाः शिरोरहितदेहाः उत्पेतुः कथम्भूताः उद्यतानि आयुधानि यैस्तैर्भुजदण्डैर्दोर्दण्डैःसह धावन्तो भटा इवावस्थिताः महामृधे इति पाठान्तरम् ॥ ४० ॥

बलेः पराक्रममाह–बलिरिति । बलिर्दशभिः शरैरिन्द्रं त्रिभिरैरावतं चतुर्भिश्चतुरो वाहानैरावतपादरक्षकानेकेन शरेण आरोहं गजयन्तारमर्दयदपीडयत् ॥ ४१ ॥

स शक्रस्तानापततः शरानसम्प्राप्तानेव तावद्भिर्निशितैर्भल्लैः शरैः प्रहसन्निव शीघ्रविक्रमः धनुर्विद्याकुशलश्चिच्छेद ॥ ४२ ॥

तस्येन्द्रस्य तदुत्तमं धनुःकौशलं कर्म वीक्ष्य दुर्मर्षोऽसहमानो बलिः शक्तिमाददे गृहीतवान् प्रयोगं कर्त्तुमिति शेषः महोल्काया इव भा यस्यास्तां ज्वलन्तीं शक्तिं करस्थामेव हरिरिन्द्रश्चिच्छेद ॥ ४३ ॥

ततो बलिर्यद्यच्छूलादिकं शस्त्रमाददे तत्सर्वं समर्थं इन्द्रश्चिच्छेद ॥ ४४ ॥

अथासुरो बलिः स्वयं तिरोहितः आसुरीं मायां ससर्ज कीदृशीमित्यत्र तामेव दर्शयति–तत इति सार्द्धैः षड्भिः । हे प्रभो ! सुरसैन्यस्योपरिष्टात् शैलोद्रिर्मायिकः प्रादुर्बभूव ॥४५ ॥

तस्माच्छैलाद्दवतरवो वृक्षा निपेतुः, कथंभूताः ? दवाग्निना दह्यमानास्तथा टङ्कवत् तीक्ष्णाग्रैः शिखरैः सहिताः शिलाः द्विषतां देवानां बलं चूर्णयन्तो निपेतुः ॥ ४६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपधा मौर्व्यां आसम् आसनं यस्य धनुः तनुत्रं कवचम् ॥३७।३८॥

उद्वृत्तं विपर्यस्तं रहितं वा दन्तच्छदैरोष्ठैः सम्प्रास्तृता सञ्छादिता ॥ ३९ ॥

कबन्धाः शिरोरहितदेहाः ॥ ४०-४१-४२ ॥

हरिरिन्द्रः ॥ ४३ ॥

ऋष्टयः ऋष्टीः ॥ ४४—४५ ॥

विटङ्कशिखराः उन्नतशृङ्गाः विस्तृतप्रान्ता वा ॥ ४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आरोहन्तीत्यारोहा वाहाः तैः सहिता वाहा वाहनाः इष्वासो धनुः तनुत्रं कवचम् ॥ ३७ ॥

चूर्णितात् चूर्णीभूतात् योधनात्संग्रामस्थानात् उत्थितो रेणुः न्यवर्तत कीदृशात् असृक्स्रुतिभिः रक्तस्रवणैः परिप्लुतात् सिक्तात् परिप्लुत इति पाठे रेणुविशेषणं तदा च सूर्य्यपर्यन्तं रक्तोच्छलनं ज्ञेयम् ॥ ३८ ॥

प्रकर्षेण आस्तृता आच्छादिताः ॥ ३९ ॥

पतितानि यानि स्वशिरांसि तत्रस्थैरक्षिभिः पश्यन्तः ॥ ४० ॥

वाहान् ऐरावतपादरक्षकान् आरोहं गजयन्तारं आच्छंयत विव्याध ॥ ४१ ॥ ४२ ॥

दुर्मर्षः असहनो बलिः ॥ ४३—४५ ॥

टंकवत्तीक्ष्णैः शिखरैः सह वर्त्तमानाः ॥ ४६—४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आरोहन्तीत्यारोहाः वाहास्तैः सहिताः वाहाः उष्ट्रादयश्च निकृत्ताः बाह्वादयो येषां ते छिन्नानि ध्वजादीनि येषां ते ॥३७॥

पदाघातैः रथाङ्गैश्च चूर्णितात् आयोधनात् युद्धस्थानात् उत्थितो रेणुर्दिशः खं द्युमणिञ्च छादयन् न्यवर्त्तत निवृत्तौ हेतुमाह—असृक्स्रुतिभिः क्षतजप्रस्रवणैः परिप्लुतात् परिप्लवनात् भावे क्तः ॥ ३८ ॥

उद्धूतानि उत्पतितानि किरीटानि कुण्डलानि च येभ्यस्तैः संरम्भयुक्ताः दृशो येषु तैः परिदष्टा दन्तच्छदा ओष्ठा येषु तैः शिरोभिः महाभुजैश्च करभतुल्यैरूरुभिश्च प्रकर्षेणास्तृता सती सा भूः बभौ ॥ ३९ ॥

उद्यतायुधैर्दोर्दण्डैर्युक्ताः कबन्धाः पतितानि स्वशिरांसि तत्रत्यैरक्षिभिः पश्यन्तः तत्र मृधे उत्पेतुः ॥ ४० ॥

वाहान् गजपादरक्षकान् आरोहं गजयन्तारम् ॥ ४१—४२ ॥

दुर्मर्षो ऽसहमानः ॥ ४३—४५ ॥

टंकवत्तीक्ष्णाग्रैः शिखरैः सह वर्त्तमानाः ॥ ४६—४८ ॥

---

भाषा टीका ।

हाथी घोडे रथी, पैदल सवारों के अङ्ग खण्ड खण्ड होजाते भये, उन सबों की भुजायें, जांघें कन्धे पांव कट गये, और ध्वजा धनुष कवच, भूषणादि छिन्न भिन्न होगये ॥ ३७ ॥

सब देव दैत्य सेनाओं के पगों से और और रथके पहिया के जोरसे रणभूमि में धूर उडकर सब दिशामें व आकाश में छायगया, सूर्य ढकजाते भये, फिर वह धूर रुधिर के गिरने से गीली होकर आकाश में न उडी ॥ ३८ ॥

महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः ।
सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजान् ॥ ४७ ॥
यातुधान्यश्च शतशः शूलहस्ता विवाससः ।
छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो ! ॥ ४८ ॥
ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ।
अङ्गारान्मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥
सृष्टो दैत्येन स महान् वह्निः श्वसनसारथिः ।
सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥
ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत ।
प्रचण्डवातैरुद्धूततरङ्गावर्तभीषणः ॥ ५१ ॥
एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ।
सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥
न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप ! ।
ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः ॥ ५३ ॥
ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ।
अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घकिरीटकुण्डलः ॥ ५४ ॥

भाषाटीका ।

और मारे क्रोधके दान्तों से होठों को दबाये हुये व लाल नेत्र व किरीट कुण्डलादिकों के संयुक्त कटेहुये मस्तकों से और भूषण व हथियारों के संयुक्त बडे बडे भुजाओं से, व हाथी के शुंडो के समान जांघों से वह युद्ध भूमि ढक जाती भई ॥ ३९ ॥

उस समरभूमि में सबके देखते देखते वीरों को मारने के लिये हाथों में शस्त्रों को लिये हुये मस्तक व नेत्रों से रहित कबन्ध सब दौडने लगे ॥ ४० ॥

तिसके पीछे असुरोंके राजा बलि ने इन्द्र को, दशबाण से, व ऐरावत को तीन बाणसे, व ऐरावत के चार रक्षकों को चार बाणों से, और महावत् को एक बाण से बेधन करने का विचार से बडे वेग से बाणों को चलाये ॥ ४१ ॥

अपने ऊपर आते हुये देख के इन्द्रने हंसकर पहिलेही तीक्ष्ण भालों से उन सब बाणों को काट दिया ॥ ४२ ॥

इन्द्र का यह प्रशंसनीय कर्म देखकर, दर्पों के मारे राजा बलिने प्रज्वलित अग्नि कीसी प्रकाशित शक्ति उठाई, वह शक्ति जबतक बलि के हाथ से न चली उसके पहिलेही इन्द्र काट दिये ॥ ४३ ॥

इसके अनन्तर शूल, प्रास, तोमर, ऋष्टि, इत्यादिक जोजो शस्त्रों को बलिने उठाया उन सबोंको अपनेऊपर आवने के पहिले ही इन्द्रने काट डाला ॥ ४४ ॥

हे प्रभो ! तिसके अनन्तर असुराधिपति राजा बलि अपने सब शस्त्रों को निष्फल देखकर अन्तर्ध्यान होगये, और आसुरी मायाकी सृष्टि करने लगे, इतने ही में सबके देखते देखते देवताओं की सेना के ऊपर एक बड़ा भारी पर्वत प्रकट हुआ ॥ ४५ ॥

उस पर्वत में से जलते हुये बडे बडे वृक्ष गिरने लगे और बडे बडे पत्थर, व पैने शिखर शत्रु के सेनाओं का चूर्ण करते हुये धरती में आय पडे ॥ ४६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तनयित्नवश्चांगारान्मुमुचुरित्यनुषङ्गः ॥ ४९ ॥
अधाक् आर्षः अधाक्षीदित्यर्थः ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उद्धूतैस्तरङ्गैरावर्तैश्च भीषणाः ॥ ५१ ॥

एवमन्यैश्च दैत्यैः सृज्यमानासु ॥ ५२ ॥

यत्र यदा तत्र तदा तैर्ध्यातः सन् ॥ ५३ ॥

अष्टायुधयुक्ता बाहवो यस्य श्रीश्च कौस्तुभश्च अनर्घं किरीटं च कुण्डले च उल्लसन्ति श्रीकौस्तुभादीनि यस्मिन् ॥ ५४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दंशनस्वभावाः वृश्चिकैः सहिता महोरगाश्च समुत्पेतुः सिंहादयो महागजाश्च नर्दयन्तः शब्दयन्तः समुत्पेतुरित्यनुषङ्गः ॥ ४७ ॥

विवाससः नग्नाः शूलहस्ताः शतशः सहस्रशश्च यातुधान्यः बिन्धि छिन्धीति वादिन्यः समुत्पेतुः ततो रक्षोगणाश्च ॥ ४८ ॥

हे प्रभो ! ततो व्योम्नि गम्भीरः परुषः कठोरश्च स्वनो येषां ते महामेघा वातैराहताः स्तनयित्नवः गर्जन्तः अङ्गारान् मुमुचुः ॥४९॥

दैत्येन बलिना सृष्टो महान्विपुलः श्वसनसारथिर्वायुसनाथो वह्निः सांवर्तकः प्रलयानल इवात्युग्रो विबुधध्वजिनीं देवानां चमूम् अधाक् अदहत ॥ ५० ॥

ततः सर्वतश्चतुर्दिक्षु समुद्रः प्रत्यदृश्यत देवैरिति शेषः कथम्भूतः ? उद्वेलः मर्यादातिगः प्रचण्डैर्मारुतैरुद्धूतैस्तरङ्गैरावर्तैश्च भीषणः ॥ ५१ ॥

यथा बलिना एवमन्यैश्च महामायैरलक्ष्यगतिभिर्युद्धे मायासु सृज्यमानासु सतीषु सुरसैनिकाः विषेदुः दुःखिता बभूवुः ॥५२॥

हे नृप ! यत्र यदा इन्द्रादयस्तत्प्रतिविधिं मायाप्रतिक्रियां न विदुस्तदा तैर्ध्यातो भगवान् विश्वभावनः प्रादुरभूत् ॥ ५३ ॥

कथम्भूतः प्रादुर्बभूवेत्यत्राह—तत इति । तत इन्द्रादिध्यानानन्तरं गरुडस्यांसे स्कन्धे कृतौ निहितौ अङ्घ्रिपल्लवौ येन पिशङ्गं वासो वस्त्रं यस्य नवकञ्जे इव लोचने यस्य अष्टावायुधयुक्ता बाहवो यस्य श्रीश्च कौस्तुभश्चानर्घकिरीटं च कुण्डले च उल्लसन्ति श्रीकौस्तुभादीनि यस्मिन्नेवंभूतोऽदृश्यत इति पूर्वेणान्वयः ॥ ५४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महोरगा अजगराः दन्दशूकाः दंशनशीलाः सर्पाः ॥४७–४८॥

स्तनयित्नवः सनिर्घाता मेघाः ॥ ४९ ॥

सांवर्तकः प्रलयाग्निः अधाक् अदहत ॥ ५० ॥

उद्वेलः तीरमतिक्रान्तः ॥ ५१–५२ ॥

यत्र यदा तदा ध्यातः ॥ ५३—५४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महोरगा इति युग्मकम् ॥ ४७ ॥ ४८ ॥

स्तनयित्नवः घनविशेषाश्च ॥ ४९–५४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्तनयित्नवो गर्जनवन्तः ॥ ४९ ॥

अधाक् अधाक्षीत् ॥ ५०—५४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्तनयित्नवः गर्जनवन्तो महामेघाः अङ्गारान् मुमुचुः ॥४९॥

सांवर्तकः प्रलयानल इवात्युग्रः अधाक् अधाक्षीत् ॥ ॥ ५० ॥

सर्वतः सर्वदिक्षु उद्वेलः मर्यादातिगः उद्धूतैस्तरङ्गैः आवर्तैश्च भीषणः ॥ ५१ ॥

एवमन्यैश्च दैत्यैः अलक्ष्यगतयश्च ते भीषणाश्च तैः मायासु आसुरीविद्यासु दम्भरूपास्वित्यर्थः । "माया दम्भे कृपायां च" इति विश्वः, सृज्यमानासु सतीषु सुरसैनिकाः विषेदुः ॥ ५२ ॥

यत्र यदा तासां मायानां प्रतिविधिं प्रतिक्रियामिन्द्रादयो न विदुः तत्र तदा तैर्ध्यातो भगवान् प्रादुरभूत् ॥ ५३ ॥

पिशङ्गं वाससी वस्त्रं यस्य अष्टावायुधयुक्ता बाहवो यस्य श्रीश्च कौस्तुभश्च अनर्घं किरीटं कुण्डले च उल्लसन्ति श्र्यादीनि यस्मिन् ॥ ५४ ॥

---

भाषा टीका ।

फिर पीछे बड़े बड़े विषधर सर्प, दन्दशूक ( सर्पों के भेद ) वा अति तीक्ष्ण डंक वाले बीच्छू और सिंह, व्याघ्र, वराह, ये सब हाथी घोड़ों का मर्दन करने लगे ॥ ४७ ॥

और हे प्रभो ! हाथों में शूलों को लिये भये काटो फाड़ो ऐसे बोलती हुई नंग धड़ङ्गी सैकड़ों राक्षसी उस पर्वत से निकलने लगीं, हे प्रभो ! तिसके अनन्तर नाना प्रकार के हथियारों को लिये राक्षसों की सेना निकलपड़ी ॥ ४८ ॥

तिसके पीछे पवन के जोर से आकाश में अति कठोर गर्जना करते हुए बड़े २ बादलों के समूह छाय गये अग्नि के अङ्गारों की वृष्टि होने लगी, ॥ ४९ ॥

फिर दैत्य ने प्रचण्ड अग्नि को अपने माया से प्रकट किया, जो कि वायु के वेग से अति उग्र प्रलयानल की नाईं होकर देव सेनाओं के भस्म करने लगा ॥ ५० ॥

इतने ही में प्रचण्ड पवन के वेग से तरङ्गों को ऊपर को उछालते हुवे चारों दिशा से समुद्र दिखाई देने लगे जिस से सब सेना भयभीत होने लगी ॥ ५१ ॥

इस प्रकार मायावी दैत्यों ने अलक्ष्य होकर जब सबको

तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः ।
स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥ ५५ ॥
दृष्ट्वा मृधे गरुडवाह[1]मिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः ।
तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥
मालीसुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ।
आहत्य तिग्मगदयाऽहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्याम् अष्टमस्कन्धे
देवासुरसंग्रामे दशमोऽध्यायः ॥ १० ॥

भाषा टीका ।

भयंकर माया की सृष्टि किया, तब देवता लोगों की सेना अति विषाद को प्राप्त हुई ॥ ५२ ॥

हे नृप ! इन्द्रादिक सब देवता जब इस माया से मोहित हुये, और कोई की बुद्धि कुछ काम न दी, तब सब देवगण भगवान् के शरण गये, उसी समय आनादि षड्गुण संयुक्त विश्वभावन भगवान प्रकट हुये ॥ ५३ ॥

इसके अनन्तर गरुड के कन्धे के ऊपर दोनों श्रीचरण कमल को रखे हुये, पीताम्बर धारण किये नवीन कमल सदृश नेत्र वाले आठ भुजाओं में आठ आयुधों को धारण किये हुये, गले में कौस्तुभ वक्षःस्थल में श्री जिनके शोभित होरही है, नाना प्रकार के अमूल्य मणियों से जटित मस्तक के ऊपर किरीट व कानों में कुण्डल जिनके चमक रहे हैं इस अद्भुत रूप से भक्त भयहारी श्री भगवान् सबको दर्शन दिये ॥ ५४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

असुराणां कूटकर्म मन्त्रादिप्रयोगस्तस्माज्जाताः महिना महिम्ना हरेः स्मृतिरेव सर्वासां विपदां मोक्षणरूपा किमुत हरेः प्रवेश इत्यर्थः ॥ ५५ ॥

इभारिवाहः सिंहवाहः अहिनोत्क्षिप लीलयैव तद्गृहीत्वा, अहनदहन् हे नृप ॥ ५६ ॥

यस्य चक्रेण कृत्तशिरसौ पेततुस्तं तथाभूतमप्याहत्य सङ्क्रुद्धः, अण्डजेन्द्रं गरुडमहनत् तं हन्तुं गदामुत्क्षिप्य इत्यर्थः । आद्यो हरिः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किमत आह—तस्मिन् भगवति प्रविष्टे आविर्भूते सति असुराणां कूटकर्म मन्त्रादिप्रयोगः तस्माज्जातास्सर्वा मायाः महीयसोऽनेकमायाविनाशकस्य हरेर्भगवतो महिना महिम्नैव विनेशुः विनष्टा बभूवुः यथा प्रतिबोधे आगते जागरे प्राप्ते सति स्वप्नो नश्यति तद्वदित्यर्थः । हि यतः हरेः स्मृतिरेव सर्वासां विपदां विमोक्षणमपहर्त्तृ, किमुत श्रीभगवत्प्रादुर्भावः आपदमपहरतीति वक्तव्यमिति भावः ॥ ५५ ॥

मृधे युद्धे गरुडवाहं श्रीभगवन्तं दृष्ट्वा इभारिवाहः सिंहवाहनः कालनेमिरसुरः शूलमाविध्य भ्रामयित्वाऽहिनोत् चिक्षेप तस्य गरुडस्य मूर्ध्न्यापतच्छूलं गृहीत्वा हे नृप ! तेनैव शूलेन त्र्यधीशः त्रिलोकेशो भगवान् सवाहम् इभारिवाहनसहितम् अरिं शत्रुं कालनेमिमहनत् हतवानित्यर्थः ॥ ५६ ॥

ततोऽतिबलौ मालिसुमालिनामानौ असुरौ यस्य भगवतश्चक्रेण कृत्तशिरसौ छिन्नशिरसौ युधि पेततुः तत्र मालिनो विक्रमं कथयन् तस्य शिरश्छेदनं श्रीभगवच्चक्रकृतमाह—अथेति । अथ कालनेमिवधानन्तरं माल्यवान् माली तं भगवदधिष्ठितमण्डजेन्द्रं गरुडं तीक्ष्णया गदयाऽऽहत्य सङ्क्रुद्ध्य अहनत्ताडितवान् तावन्नदतोऽरेर्माल्यवतः शिरोऽरिणा चक्रेण आद्यो भगवांश्चिच्छेद, अत्र माल्यवतश्छेदो न श्रीरामायणप्रसिद्धमाल्यवद्विषयः अपितु असुरान्तरपरः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
दशमोऽध्यायः ॥ १० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असुरकूटकर्मजाः असुरकपटकर्मजाताः अत्र कैमुत्यन्यायमाह, हरिस्मृतिरिति । सर्वविपद्विनाशिनी किमुत हरिरितीति ॥ ५५ ॥

(१) सिंहारिवाहः इति पि० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महिम्ना महिताम् अमुञ्चत अरीनसुरान् वहतीत्यरिवाहः कुम्भकारशब्दवदणप्रत्ययान्तः अरिः सिंहो वाहो यस्य स तथा इभारिवाह इति पाठे स्पष्टोऽर्थः ॥ ५६ ॥

आहत्य भ्रामयित्वाऽण्डजेन्द्रो गरुड आद्यो हरिररिणा चक्रेण नदतोऽरेः कालनेमेः शिरोऽच्छिनदित्यन्वयः । अच्छिनदिति क्रियापदशक्तेर्द्विवारं कालनेम्यादीन् हतवान्हरिरित्यर्थोऽभिविज्ञायते "छिदिर् द्वैधीभावे" इति द्वैधीभावश्रवणात "उशना जीवयामास" इत्युत्तरवाक्याच्च द्विवारं हतिरस्ति—

"कालनेम्यादयः सर्वे हरिणा निहता अपि ।
शुक्रेणोज्जीविताः सन्तः पुनस्ते वै निपातिताः"

इति वचनाच्च निश्चितोऽयमर्थ इति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हरिरिति पाठः सर्वत्र हरेरिति तु टीकायां दृश्यते ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मोहिना महिम्ना ॥ ५५ ॥

इभारिवाहः सिंहवाहः आविध्य कम्पयित्वा पतदेव शूलं वामहस्तेन गृहीत्वा तेनैवाहनत् अहन् ॥ ५६ ॥

यच्चक्रेण यस्य चक्रेण तं हरिम् आहत्य अण्डजेन्द्रं गरुडम् अहनत् यावत् हन्तुं प्रववृते तावदेव अच्छिनत् आद्यो हरिः ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् भगवति प्रविष्टे आविर्भूते असुराणां कूटं कर्म मन्त्रादिप्रयोगकृता: मायाः महीयसो भगवतः महिना महिम्ना विनेशुः हरिस्मृतिरेव सर्वविपद्विमोक्षणं किमु तत्प्रादुर्भाव इत्यर्थः ॥ ५५ ॥

हे नृप ! अथानन्तरम् इभारिवाहः सिंहवाहः शूलम् आविध्य भ्रामयित्वा आहनोत् चिक्षेप गरुडमूर्ध्नि पतदेव शूलं लीलयैव गृहीत्वा तेनैव अहनत् हतवान् ॥ ५६ ॥

यस्य चक्रेण मालिसुमालयतिबलौ युधि कृताशस्मौ पेततुः भगवन्तमपि माल्यवान् गदया आहत्य अण्डजेन्द्रं यावदहनत् यावद्धन्तुं गदामुद्यम्य तावदेव आद्यो विश्वपूर्ववर्त्ति: हरिः अरेर्मोलयवतः शिरः अरिणा चक्रेण अच्छिनत् ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
दशमोऽध्यायः ॥ १० ॥

---

भाषा टीका ।

हे राजन् ! उस रण भूमी में श्रीहरि के आते ही कपट से रची हुई असुरों की सब माया आप से आप नष्ट होगई जैसे सोवता हुआ पुरुष स्वप्न में नाना प्रकार के विपत्तीयों को देखे और जागते पीछे सब दुःख भाग जाय, महा प्रभाव वाले आश्रित दुःख भंजक श्रीभगवान की महिमा ही इस प्रकार की है, कि जिनके नाम स्मरण मात्र से सब विपत्तियां दूर होजावे हैं ॥ ५५ ॥

गरुड के ऊपर विराजमान श्रीभगवान को आये हुए देखकर सिंह के ऊपर बैठा हुआ कालनेमि ने शूल घुमायकर बड़े वेग से मारा, गरुड के मस्तक के ऊपर उस शूल को आता हुआ देखकर त्रिलोकी नाथ ने लीला से ही पकड़ लिया, और उसी शूल को फेंक कर वाहन सहित कालनेमि को मार डाले ॥ ५६ ॥

तिसके पीछे अति बलिष्ठ दोनों माली वा सुमाली युद्ध भूमी में आयकर भगवान के ऊपर दौड़े, आवने के पहिले ही चक्र से उन दोनों का मस्तक काट लिये, इतने ही में माल्यवान बड़े वेग से गदा चलाय कर गरुड को मारा, और गर्जना किया, इतने ही में श्रीहरि उस शत्रु का भी चक्र से माथा काट डाले ॥ ५७ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, दशम अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्त ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे दशमोऽध्यायः ॥ १० ॥

## ॥ एकादशोऽध्यायः ॥

श्रीशुक उवाच ।

अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परमानुकम्पया ।
जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान्रणे यैरभिसंहताः पुरा ॥ १ ॥
वैरोचनाय संरब्धो भगवान्पाकशासनः ।
उदयच्छद्यदा वज्रं प्रजा हा हेति चुक्रुशुः ॥ २ ॥
वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरः स्थितम् ।
मनस्विनं सुसम्पन्नं विचरन्तं महामृधे ॥ ३ ॥
नटवन्मूढ ! मायाभिर्मायेशान्नो जिगीषसि ।
जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम् ॥ ४ ॥
आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् ।
तान्दस्यून्विधुनोम्यज्ञान् पूर्वस्माच्च पदादधः ॥ ५ ॥
सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ।
शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥ ६ ॥
बलिरुवाच ।
सङ्ग्रामे वर्तमानानां कालचोदितकर्मणाम् ।
कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥
तदिदं कालरशनं जनाः पश्यन्ति सूरयः ।
न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे तु देवेषु दैत्यघातिषु नारदः ।
देवानवारयच्छुक्रो मृतान्दैत्यानजीवयत् ॥ ० ॥
॥ १ ॥
उदयच्छदुद्यमितवान् ॥ २ ॥ ३ ॥
निबद्धान्यक्षीणि येषां तान्बालाञ्जित्वा नटः कपटवृत्तिर्यथा तेषां धनं हरति तथा हे मूढ ! मायेशानस्मान् जेतुमिच्छसि ॥ ४ ॥
मत्प्रभावं शृण्वित्याह—आरुरुक्षन्त्यारोढुमिच्छन्ति ये चोत्सिसृप्सन्त्युल्लङ्घयितुमिच्छन्ति मोक्षमिच्छन्तीत्यर्थः । अधो विधुनोमि पातयामि ॥ ५ ॥ ६ ॥ ७ ॥
कालरशनं कालयन्त्रितम् अतो न हृष्यन्ति तत्र एवं विवेके यूयमपण्डिता अनिपुणाः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथो अथ परमपुरुषस्य परमयोत्कृष्टया कृपया प्रत्युपलब्धमासुरीभिः मायाभिरनभिभूतं चेतो येषां ते शक्रवाय्वादयो देवा युद्धे पुरा वा पूर्वं यैर्दैत्यैर्विरोचनादिभिरभिसंहिताः इन्द्रयाः सङ्गताः योद्धुमिति शेषः तान् भृशं जघ्नुः ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेव प्रपञ्चयति–वैरोचनायेति। भगवान् पाकशासनः इन्द्रः सुसंरब्धः नितरां क्रुद्धः वैरोचनाय बलये यदा वज्रमुद्यच्छदुद्धर्त्तुमुद्यतवान् तदा प्रजाः हाहाकारं कुर्वत्यश्चुक्रुशुः रुरुदुः॥ २॥

वज्रं पाणौ यस्य स इन्द्रः महायुद्धे विचरन्तं सुसंरब्धं मनस्विनं युयुत्सुं पुरतः स्थितं वैरोचनिं तिरस्कुर्वन्निदं वक्ष्यमाणमाह॥ ३॥

तावत्तिरस्कारप्रकारमाह–नटवदिति द्वाभ्याम्। तत्र एकेन वचमाह–मोहमिति। हे मूढ! मायेशानस्मान्नटवत् मायाभिर्जेतुमिच्छसि दृष्टान्तमेवोपपादयति-जित्वेति। निबद्धानि अक्षीणि येषां तान् बालानज्ञान् जित्वा नटः कपटवृत्तिर्यथा तेषां धनमपहरति तथा॥४॥

मत्प्रभावं श्रृणु इत्याह–हे मूढ अद्य! पूर्वस्मात्पूर्वजन्मनः अधोऽधःपतनात् पदात्स्थानात् ये आरुरुक्षन्ति आरोढुमिच्छन्ति उत्तरोत्तरं लोकमारोढुमिच्छन्ति असुरा ये च मायाभिर्दिवं स्वर्गम् उन्मिमृत्सन्ति उत्सर्पितुमिच्छन्ति तान् दस्यून् अज्ञान् दुष्टजन्तुतुल्यान् अधुना विधुनोमि हन्मि॥ ५॥

दुर्मायिनस्तव शिरः सोऽहं शतं पर्वाणि यस्य तेन वज्रेणायुधेन, हरिष्ये हे मन्दात्मन्! ज्ञातिभिः सह घटस्व यथाबलं विक्रमस्व॥ ६॥

इत्थं तिरस्कृत उक्तश्चाह बलिः—संग्राम इति त्रिभिः। कालेन चोदितानि सुखदुःखजयापजयादिफलदानाय प्रवर्तितानि कर्माणि येषां तेषां संग्रामे युद्धे वर्तमानानां कीर्त्यादयः सर्वेषामनुक्रमात् कीर्त्यादिनिमित्तकर्मपरिपाकानुक्रमात् स्युरेव भवतामपि न सर्वदा कीर्त्यादयो बभूवुः किन्तु तत्तन्निमित्तकर्मपरिपाकदशायामेवात्यस्माकमपि तथैवेति भावः॥ ७॥

तमिममनुक्रमेण कीर्त्यादिमन्तं जनं कालरशनं कालवशीभूतं कालोन्मिषितकर्मफलभोक्तारं सूरयः पण्डिताः पश्यन्त्यतस्ते कीर्तिजयमृत्युषु न हृष्यन्ति तद्विपरीतेषु न शोचन्ति च तत्रैवम्भिधे विवेके यूयमपण्डिताः अनिपुणाः॥ ८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

देवासुरयुद्धमुपक्रम्य हरिणा चक्रेण कालनेमेः शिरोच्छिन्नमित्युपसंहृतम्. तत्रामरा मृता उत पलायिताः? विनष्टमरणधर्माणां तेषां विनाशायोगात्पलायनमेव प्राप्तं भगवतानुगृहीतबलानां तदप्ययुक्तम् अतस्तैः किमकारीति तत्राह—अथेत्यादिना, अनेन हरेरनुग्रहेणैव जयोऽन्यथा पराजय इत्ययमर्थः स्पष्टित इति ध्वनयति॥ १॥

तत्र बलिवासवयोः प्रसक्तं युद्धं किमभूदित्याह, वैरोचनायेति॥ २॥

तत्र युद्धं प्रहरिष्यता योधेन स्वपौरुषं प्रकाश्य प्रहर्तव्यमिति न्यायमनुसन्दधानो वज्रमुद्धृत्य वज्रपाणिस्तं वक्ति—वज्रपाणिरिति॥ ३॥

स्वपौरुषप्रकटनमपि अनिष्टानिच्छापूर्वकमित्यतस्तं निन्दति, जित्वेति। कश्चित्खल इन्द्रजालादिना निबद्धाक्षान् बालान् जित्वा तत्र आकाशादावाच्छाद्य तेषां धनं यथा हरति तथा ये मायाभिः कपटमिथ्यवृत्तैः दिवं परलोकमारुरुक्षन्ति ततोऽप्युन्मिमृत्सन्ति ऊर्ध्वं गन्तुमिच्छन्ति अहं तान् दस्यून् पूर्वस्मादाक्रवर्तिपदादधो विधुनोमि चालयामि ततो विधूयाऽधो निक्षिपामि कदाप्यूर्ध्वदर्शनरहितान् करोमीत्यर्थः। यत्र तार्थपदत्वमुपदयवञ्शाशाश्विन इत्यत्र यथोपमा लुप्ता तथा ऽत्रापि “मायाभिरुत्सिसृप्सन्तमिन्द्राग्रामारुरुक्षतः अवधस्यून् रघूनुयाः” इत्युच्चं प्रमाणयति॥४—७॥

रशनं रज्जुः॥ ८॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

१—३॥

हे मूढ! मायेशानस्मान् नटतुल्योऽपि नटयोग्याभिर्मायाभिः किं जिगीषसीत्यर्थः। नटस्तु तावांश्चवद्धाक्षान् स्वमाययाऽऽवृतनेत्रान् बालान् तद्विद्यामिथ्यात्वदर्शकविद्याऽनभिज्ञानेव जिगीषति नतु मायेशानिति, ततो मूढ इति भावः॥ ४॥

उन्मिमृत्सन्तीत्यत्र मायाभिर्योगबलैः न तु भगवदाश्रयेणेति ज्ञेयम्॥ ५॥

घटस्व युद्धाय यत्नस्व॥ ६॥ ७॥

काल एव रशना रज्जुर्यस्य तत्॥ ८॥ ९॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एकादशे सकोपोक्तिरिन्द्रो जम्भादिकानहन्॥
नारदोक्त्या युद्धभङ्गे शुक्रो दैत्यानजीवयत्॥ ०॥

॥ १-३॥

नटवदिति श्लोकं विवृणोति—नटो हि बालान् निबद्धाक्षान् कृत्वा कपटेन जित्वा तद्धनं हरति तथैव किमस्मान् जिगीषसि?॥ ४॥

उन्मिमृत्सन्ति दिवमप्युल्लङ्घयितुमिच्छन्ति महर्लोकादिष्वप्यधिकर्त्तुमिच्छन्तीत्यर्थः। पूर्वस्मात् स्थानादप्यधः पातयामि॥ ५—६॥

जयात् कीर्त्तिरजयान्मृत्युरित्यर्थः॥ ७॥

कालरशनां कालयन्त्रितं पश्यन्त्येव नतु हर्षशोकादिकं प्राप्नुवन्ति॥ ८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकादशे पराजितानप्यसुरान् हन्तुं प्रवृत्तान् सुरान् ब्रह्मप्रेषितो नारदो निवारितवानित्याह्नुच्यते॥ १॥

पाकशासनः इन्द्रः संरब्धः क्रुद्धः वज्रमुद्यच्छत् उद्यन्तवान्॥२।३॥

रे मूढ! नोऽस्मान् नट इव मायाभिः परव्यामोहजनकाभिरासुरीविद्याभिः जेतुमिच्छसि? नटवदित्युक्तिं विवृणोति—नटो व्यामोहजनकविद्यावृत्तिः बालान् तद्विद्याहीनान् निबद्धान्यक्षाणि येषां तान् जित्वा तेषां धनं हरति॥ ४॥

मायाभिः आसुरीविद्याभिः न तु तपोव्रतयज्ञादिभिः दिवमारुरुक्षन्ति उन्मिमृत्सन्ति दिवमप्युल्लङ्घयितुमिच्छन्ति तान्

न वयं मन्यमानानामात्मानं तत्र साधनम् ।
गिरो वः साधुशोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥

श्रीशुक उवाच ।

इत्याक्षिप्य विभुं वीरो नाराचै[1]र्वीरमर्दनः ।
आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥
एवं निराकृतो देवो वैरिणा तथ्यवादिना ।
नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥
[2]प्राहरत्कुलिशं तस्मा अमोघं [3]परमर्दनः ।
सयानो[4]ऽन्यपतद्भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥
सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ।
अभ्ययात्सौहृदं सख्युर्हतस्यापि समाचरन् ॥ १३ ॥
स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ।
जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥
गदाप्रहारव्यथितो भृशं विह्वलितो गजः ।
जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दस्यून् दुर्वृत्तान् पूर्वस्मात्तद्धामस्थानात् अपि अधो विधुनोमि पातयामि ॥ ५ ॥

किञ्चाद्य ते शिरो हरिष्ये घटस्व निक्रमस्व ॥ ६ ॥ ७ ॥

इदं विश्वं कालवशगं कालशक्तिपरमेश्वरायत्तम् अतस्ते न हृष्यन्ति न शोचन्ति तत्रोक्तार्थे यूयमपण्डिताः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीप्राणजीवनो जयति ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! इसके अनुसार सब देवता लोग परम पुरुष श्रीहरि के परम अनुग्रह से असुरों को बड़े वेग से मारने लगे, जो कि-असुरों के अस्त्र शस्त्र से पहिले घायल हुए रहे ॥ १ ॥

जब विरोचन के पुत्र बलि के ऊपर इन्द्र ने वज्र उठाया, तब उस समय सम्पूर्ण प्रजाओं ने हा हा कार करी ॥ २ ॥

युद्ध भूमी में निःशंक होकर विचरते हुए मनस्वी राजा बलि को अपने सामने आगे में ही खड़ा देखकर, बहुत तिरस्कार पूर्वक इन्द्र ने वचन बोला ॥ ३ ॥

हे मूढ ! जैसे नट अपनी कपट विद्या से आंख बांधकर बालकों का मन धन हरलेता है, इसी प्रकार माया के ईश्वर हम लोगों को तू ठगने चाहता है ॥ ४ ॥

जो लोग अपने कपट विद्या से स्वर्ग को प्राप्त करने या मोक्ष को जाना चाहते हैं, उन चोरों को निज स्थान से भी हम लोग नीचे पटक देते हैं ॥ ५ ॥

हे मन्दात्मन् ! अपने ज्ञातियों के संग तू सावधान होकर खड़ा रहो, देख शतधार वाला इस वज्र से अभी तेरा माथा काटता हूं ॥ ६ ॥

बलि उवाच ॥

इतना सुनकर बलि बोले, हे मूर्ख ! युद्ध में कालाधीन कर्म वाले पुरुषों को यश, जय, पराजय, वा मृत्यु ये सब भी प्राप्त होता है ७ ॥

इस कारण ज्ञानी लोग सब प्राणियों को काल रूप रस्सी से बँधे हुए देखते हैं, इससे जय होने से हर्षित नहीं होते, और पराजय से शोक को भी प्राप्त नहीं होते, इस सब ज्ञान के विचारों में तुम लोग अपण्डित हो ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र कीर्तिजयादावात्मानं साधनं मन्यमानानां वो गिरो न गृह्णीमः मर्मसु ताडनं याभिस्ताः ॥ ९ ॥

विभुमिन्द्रम वीरो बलिः ॥ १० ॥

---

(१) वीरमानदः (२) प्राहिणोत् (३) अरिमर्दनम् (४) नृप तद्भूमौ इति वीर० पाठाः ।

ततो रथो मातलिना[1] हरिभिर्दशशतैर्वृतः।
आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः॥ १६॥
तस्य तत्पूजयन्कर्म[2] यन्तुर्दानवसत्तमः।
शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे॥ १७॥
सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः।
इन्द्रो जम्भस्य सङ्क्रुद्धो वज्रेणापाहरच्छिरः॥ १८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तोत्रमङ्कुशस्तेनाहत इव॥ ११॥
सयानो विमानसहितः॥ १२—१८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्र कीर्त्यादावात्मानं देहं साधनसाधकं मन्यमानानामत एव साधुभिः शोच्यानाम् अहो अमी एते इत्येवं शोच्यानां वो युष्माकं मर्मताडनाः मर्मसु ताडनं याभिस्ताः गिरो वयं न गृह्णीमो न साधु मन्यामहे॥ ९॥

इत्थं विभुमिन्द्रमाक्षिप्य अधिक्षिप्य वीराणां मानदो वीरो वैरोचनिराक्षेपैरधिक्षेपवाक्यैराहतं पुनराकर्णान्तमाकृष्टैः नाराचैराहनत्॥ १०॥

यथार्थवादिना वैरिणा बलिनैवं निराकृतः तिरस्कृतो देव इन्द्रस्तेन बलिना कृतमधिक्षेपं नामृष्यन्नासहत तोत्रमङ्कुशं तेन आहतो द्विपः गज इव॥ ११॥

किन्तु तस्मै बलये अमोघमप्रतिहतमरीणां मर्दनं घातकं वज्रं कुलिशं प्राहरत् प्रायुङ्क्त हे नृप! तस्मात्कुलिशप्रहाराच्छिन्नपक्षः पर्वत इव सविमानो भूमौ न्यपतदिति शेषः। शयानो न्यपतद्भूमाविति पाठान्तरे न शेषः। शयानो नृपेति पाठे तु शयानोऽभूदित्यर्थः। बलेः सखा सुहृच्च जम्भोऽसुरः सखायं बलिं भूमौ पतितं दृष्ट्वा हतस्यापि सख्युर्बलेः सुहृदं भावयमानो निर्दयः सौहार्दमाचरन्नभ्ययात् इन्द्रस्याभिमुखमगादित्यर्थः॥ १२॥ १३॥

सिंहो वाहनं यस्य स महाबलो जम्भः समीपमागत्य रंहसा बलेन वेगेन वा गदामुद्यम्य शत्रुम् इन्द्रं जत्रौ कण्ठस्य मूलदेशे अताडयत् तथा गजञ्चाताडयत्॥ १४॥

भृशं गदाप्रहारेण व्यथितः अत एव विह्वलितो गज ऐरावतो जानुभ्यामवनीं स्पृष्ट्वा परं दुःखं लेभे॥ १५॥

ततो गजस्य दुःखं दृष्टवता मातलिना हरिभिर्दशशतैः सहस्रसंख्याकैरश्वैर्युक्तो रथ आनीतस्तमानीतं रथं विभुरिन्द्रो गजमैरावतमुत्सृज्य आरुरुहे आरूढवान्॥ १६॥

तस्य यन्तुर्मातलेस्तत्कर्म रथानयनरूपं कर्मपूजयन् अहो एवं विधेन सारथिना भवितव्यमित्येवं बहुमानयन् ज्वलता प्रकाशमानेन शूलेन तं मातलिं स्मयमानो युधि अहनत्॥ १७॥

सत्त्वं धैर्यमवलम्ब्य मातलिर्दुस्सहामपि रुजं शूलघातजां व्यथां सेहे असहत ततः संक्रुद्ध इन्द्रो वज्रेण जम्भस्य शिरोऽपाहरत् चिच्छेद॥ १८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तत्र जयादौ आत्मानं स्वं कारणं मन्यमानानां वो गिरः साध्विति न गृह्णीमः मर्मण्येव ताडनं यासां तास्तथोक्ताः॥ ९—२१॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

आकर्णपूर्णैः कर्णपर्यन्तपूर्णतयाकृष्टैः॥ १०॥

निराकृतो नाराचैः पराहतः तदधिक्षेपं नाराचप्रयोगानन्तरं पुनरधिक्षेपं "तोत्रं वेणुकम्" इत्यमरः॥ ११—१४॥

स्पृष्ट्वा कश्मलञ्च परं ययाविति पाठो बहुसम्मतः शाखा लब्धश्च॥ १५—२२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तत्र कीर्तिजयादौ आत्मानं स्वं साधनम् अहङ्कारमौढ्याद्वेति भावः। साधुभिर्जीवन्तोऽपि यथा यूयं शोच्या एव तथा वयं मृता अपि न शोच्यामहे इति भावः॥ ९-१५॥

हरिभिरश्वैः॥ १६—२०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्र कीर्त्यादौ आत्मानं स्वं साधनं मन्यमानानां साधुभिः अहो एते कीर्त्यादौ आत्मानं साधनं मन्यन्त इत्येवं शोच्यानां वो गिरो मर्मसु ताडनं याभिस्ता न गृह्णीमः॥ ९॥

विभुं विपुलप्रभावमिन्द्रम् वीरो बलिः॥ १०॥

तोत्रेणाङ्कुशेनाहतः॥ ११-१६॥

यन्तुः सारथेस्तद्रथानयनं कर्म दानवसत्तमो जम्भः॥ १७॥ ॥ १८॥

---

भाषा टीका।

यद्यपि तुम हृदयको दुखाने वाली बातें बोले, तथापि, तुम्हारे

(१) हरिद्वंद्वशतैरिति विज० (२) यन्तोः इति वीर०॥

जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ।
नमुचि(२)श्च बलः पाकस्तत्रोपेयुस्त्वरान्विताः ॥ १९ ॥
वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य मर्मसु ।
शरैरवाकिरन्मेघा धाराभिरिव पर्वतम् ॥ २० ॥
हरीन् दशशतान्याजौ हर्यश्वस्य बलः शरैः ।
तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥
शताभ्यां मातलिं पाको रथं (२) सावयवं पृथक् ।
सकृत्सन्धानमात्रेण तदद्भुतमभूद्रणे ॥ २२ ॥
नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ।
आहत्य व्यनदत्संख्ये सतोय इव तोयदः ॥ २३ ॥
सर्वतः शरकूटेन शक्रं सरथसारथिम् ।
छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥
अलक्षयन्तस्तमतीवविह्वला विचुक्रुशुर्देवगणाः सहानुगाः ।
अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो यथाऽर्णवे ॥ २५ ॥
ततस्तुराषाडिषु(३)बद्धपञ्जराद्विनिर्गतः साश्वरथध्वजाग्रणीः ।
बभौ दिशः खं पृथिवीं च रोचयन् स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥

भाषा टीका ।

सर्वथा शोचनीय अज्ञानियों के वानों को हम लोग नहीं ग्रहण करसक्ते हैं, क्यों कि-तुमतो जय पराजयादिकों में काल रूप ईश्वर को नहीं जानकर अपने ही को कर्ता समझते हो ॥ ९ ॥

श्रीशुक उवाच ॥

श्रीशुकदेव जी बोले, कि-हे राजन्! वीरों को मारने वाले राजा बलि इस प्रकार से बातें मारकर, पीछे तीखे २ बड़े वेग वाले बाण से इन्द्र को वेधन करने लगे ॥ १० ॥

यद्यपि इस प्रकार यथार्थ कहने वाले अपने शत्रु से इन्द्र अव मानित हुए जैसे अंकुश के लगने से हाथी क्रोधित होय तैसे बलि के बातों को इन्द्र नहीं सह सके ॥ ११ ॥

और शत्रु को नाश करने के इच्छा से अमोघ वज्र बलि के ऊपर फेंके, उस वज्र के लगने ही बलि विमान सहित भूमि में जा पड़े जैसे पक्षों के कटने से पर्वत गिर जावे ॥ १२ ॥

उस समय बलि का परम सुहृद मित्र जंभासुर वज्र के लगने से गिरे हुए अपने मित्र के लिये सुहृदपने का आचरण करता हुआ दौड़ कर आया ॥ १३ ॥

और सिंह के ऊपर बैठ कर बड़े वेग से गदा घुमाकर ऐरावत सहित इन्द्र के जत्रु ( हसिली ) में मारा ॥ १४ ॥

उस समय महाबलिष्ठ जम्भासुर के गदा के प्रहार से ऐरावत बहुत विह्वलित होकर व्यथित होगया, और घुटने से भूमी को टेककर मूर्छित हो गया ॥ १५ ॥

ऐरावत की ऐसी दशा देखकर मातलि ने हजार घोड़े लगे हुए जिसमें ऐसा रथ लाया, तब इन्द्र उस हाथी को छोड़कर रथ के ऊपर बैठे ॥ १६ ॥

उस समय मातलि के कार्य को सबने प्रसन्न किया परन्तु जम्भासुरने संग्राम में हसते २ जलते हुए त्रिशूल को मातली के ऊपर चलाया ॥ १७ ॥

मातलि ने भी धीरज धरकर उसकी व्यथा सही, इतने में इन्द्र को क्रोध जो आया सो वज्र से जम्भासुर के माथे को काटकर तड़ाक पटक दिया ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नमुचिर्बलः पाकश्चेति त्रय आजग्मुः ॥ १९ ॥ २० ॥
त्रयाणां पृथग्विक्रमानाह-हरीनिति त्रिभिः । हर्यश्वस्येन्द्रस्य ताव-द्भिर्दशभिः शतैः ॥ २१ ॥ २२ ॥
आहत्येन्द्रं विद्ध्वा ॥ २३ ॥

(१) सबलइति चक्रवर्ति (२ च तिवाद्यः (३) पुङ्क्षु इति पाठः

निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे ।
उदयच्छद्रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥
स तेनैवाष्टधारेण शिरसी बलपाकयोः ।
ज्ञातीनां पश्यतां राजन् जहार जनयन्भयम् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रावृट्कालीनं सूर्यम ॥ २४ ॥

वणिक्पथा वणिजः भिन्ना नौर्येषां ते भिन्ननाव इत्यर्थः । तुराषाडिन्द्रः अश्वादिसहितो विनिर्गतः अग्रणीः सारथिः ॥२६-२८॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य जम्भस्य ज्ञातयो नमुचिबलपाकाख्यास्त्रयो नारदादृषेर्जम्भं हतं श्रुत्वा त्वरयाऽन्विताः तत्र युद्धदेशे उपेयुराजग्मुः ॥ १९ ॥

ते परुषैर्वचोभिरिन्द्रमर्दयन्तस्ताडयन्तश्चिरस्कुर्वन्तः अस्येन्द्रस्य मर्मसु स्थानेषु मेघा जलधाराभिः पर्वतमिव शरैरवाकिरन् ॥ २० ॥

बलपाकनमुचीनां त्रयाणां विक्रमान् क्रमेणैकैकेनाह—हरीणिति । बलोऽसुर आजौ संग्रामे हर्यश्वस्येन्द्रस्य दशशतानि अश्वानामितिशेषः । हरीनिन्द्रस्य तावद्भिरेकाधिकदशशतैः शरैर्युगपत् अर्दयामास तताड यतः असौ बलो लघुहस्तवान् शरसन्धानोपयुक्तकौशलाख्यलाघवयुक्तहस्तवान् इत्यर्थः ॥ २१ ॥

पाकोऽसुरः शताभ्यां शराभ्यामिति शेषः । मातलिं रथञ्च पृथक् पृथगवयवशश्च युगपदेव शरसन्धानतन्मोक्षणायोगेन रणे अर्दयामासेत्यनुषङ्गः तत्सकृत्सन्धानमोक्षणं पृथगवयवशोऽर्दनात्मकं च कर्माऽद्भुतमभवत् ॥ २२ ॥

नमुचिस्तु स्वर्णमयाः पुङ्खाः मूलप्रान्तदेशाः येषां तैः पञ्चदशभिर्भल्लैरिषुभिरिन्द्रमाहत्य प्रताड्य सजलो मेघ इव स्वयं संख्ये युद्धे व्यनदद्ध्वान ॥ २३ ॥

ततः सर्वेऽसुराः प्रावृट्कालिकं सूर्यं मेघा इव रथसारथियुक्तम् इन्द्रं सर्वतः शरवर्षेण छादयामासुः ॥ २४ ॥

तदा तमिन्द्रमलक्षयन्तोऽपश्यन्तः सहानुगाः सर्वे देवगणाः अतीव विह्वलितचित्ता अनायका विचुक्रुशुः यथा महार्णवे भिन्ना नौर्येषां ते दीर्घाभाव आर्षः अत एव निसर्जिता वणिक्पथाः वणिज उपप्लुतयः क्रोशन्ति तद्वत् ॥ २५ ॥

ततस्तुराषाडिन्द्रः बाणपुङ्खानां पञ्जरात् साश्वरथध्वजसारथिर्विनिर्गतः नभसि त्यये निशावसाने सूर्य इव स्वतेजसा दिशः खमाकाशं पृथिवीं च प्रकाशयन् बभौ ॥ २६ ॥

असुराणां परैरभ्यर्दितां पीडितां स्वसेनां निरीक्ष्य देवो वज्रधरः शक्रो रणे रिपूनसुरान् हन्तुं रुषा वज्रमुदयच्छत उद्धृतवान् ॥ २७ ॥

इन्द्रोऽष्टौ धारा यस्य तेनैव वज्रेणैव बलपाकयोरसुरयोः शिरसी मूर्धानौ जहार चिच्छेद, किं कुर्वन् ? हे राजन् ! पश्यतां बलपाकयोः ज्ञातीनां महत् भयं जनयन् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शताभ्यां शतद्वयेन सन्धानयुक्तमोक्षणं मौर्व्यां सन्धानं ततो मोक्षणञ्च सकृद्युगपदिति तत्कर्मकरणमपश्यतामिति शेषः ॥ २२ ॥ ॥ २३ ॥ २४ ॥

भिन्ननवः भिन्ननावः ॥ २५ ॥

तुराषाडिन्द्रः "आखण्डलस्तुराषाट्" इति हलायुधः । २६-३०॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नमुचिरिति शोकाज्जातोऽमर्षोऽसहिष्णुता तस्माज्जाता या रुट् जिघांसा तया युक्तः ॥ २३-२९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हर्यश्वस्य इन्द्रस्य पीतवर्णाश्वस्य "हरिता कपिलं त्रिषु" इत्यमरः । तावद्भिः दशभिः शतैः शताभ्यामिति मातलिं शतेन रथञ्च शतेनेत्यर्थः ॥ २१—२४ ॥

वणिक्पथा वणिजः भिन्ननवः भिन्ननौकाः ॥ २५ ॥

तुराषाडिन्द्रः अग्रणीः सारथिः ॥ २६-२९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपेयुः आजग्मुः ॥ १९ ॥ २० ॥

हर्यश्वस्येन्द्रस्य हरीन् कपिलवर्णानश्वान् "हरिता कपिलं त्रिषु" इत्यमरः । तावद्भिर्दशभिः शतैः ॥ २१ ॥ २२ ॥

आहत्य प्रताड्य ॥ २३ ॥ २४ ॥

भिन्ना नौर्येषां ते वणिक्पथाः वणिजो यथा क्रोशन्ति तद्वद्विचुक्रुशुः ॥ २५ ॥

इषुभिर्बद्धात्पञ्जरात्तुराषाडिन्द्रः अश्वाश्च रथश्च ध्वजश्च अग्रणीः सारथिश्च तैः सहितो विनिर्गतः ॥ २६ ॥ २७ ॥ २८ ।

नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ।
जिघांसुरिन्द्रं नृपते ! चकार परमोद्यमम् ॥ २९ ॥
अश्मसारमयं शूलं घण्टावद्धेमभूषणम् ।
प्रगृह्याभ्यद्रवत्क्रुद्धो (१)हतोऽसीति वितर्जयन् ।
प्राहिणोद्देवराजाय निनदन्मृगराडिव ॥ ३० ॥
तदापतद्गगनतले महाजवं विचिच्छिदे हरिरिषुभिः सहस्रधा ।
तमाहनन्नृप कुलिशेन कन्धरे रुषाऽन्वितस्त्रिदशपतिः शिरो हरन् ॥ ३१ ॥
न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ।
तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३२ ॥
तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ।
किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३३ ॥
येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ।
कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥ ३४ ॥

भाषा टीका ।

नारदजी के मुख से जम्भ के ज्ञाति लोगोंने जम्भका मरना सुन कर, नमुचि, बल, और पाक ये सब लोग बड़ी जलदी उसी जगह पर आये ॥ १९ ॥

और इन्द्र को बड़ी कठोर वाणी के प्रहार करते हुए बाणों की वर्षा करने लगे जैसे मेघ, धारा से पर्वत पर वर्षा करते हैं ॥ २० ॥

बलने इन्द्र के संग्राम में हजार बाणों से हजार घोड़ाओं को हस्त के लाघव से एक ही बार सबी मार गिराये ॥२१॥

पाकने भी एक बार सन्धान करके जो दो सौ बाण छोड़े, सो रथ के सौ टुकडे२ होगये, और कुछ मातलि को भी लगे, यह बात संग्राम में अद्भुत सी हो गई ॥ २२ ॥

नमुचि ने सुवर्ण के पुंख वाले बड़े२ पन्द्रह बाण इन्द्र के ऊपर छोड़े और रण में ऐसा नाद किया कि जैसे सजल मेघ करे ॥ २३ ॥

चारों तरफ से मारे बाणों की वर्षा से असुरों ने सारथि और रथ सहित इन्द्र को ढांक लिया जैसे वर्षा के सूर्य को मेघ घेर लेवे ॥ २४ ॥

इन्द्र को न देखकर सब देवलोग अनुचरों सहित विह्वल होकर घबड़ाने लगे, बिना स्वामी के होने से शत्रुओं की सैना से पराजित होकर ऐसे दुःखित हुए, कि जैसे समुद्र में नौका टूट जाने पर व्यापारी बनिये लोग दुःखित होते हैं ॥ २५ ॥

इतने में इन्द्र भी उस बँधे हुए बाणों के पिंजरे में से घोड़ा रथ ध्वजा और सारथि सहित बाहर निकलकर दिशायें पृथिवी और आकाश को प्रकाशित करते हुए शोभा को प्राप्त होते भये, जैसे रात्रि के अनन्तर अपने तेज से सूर्य प्रकाशित होते हैं ॥ २६ ॥

इन्द्र ने शत्रुओं से मर्दित अपनी सेना को देखकर बड़ा क्रोध कर शत्रुओं के मारने को वज्र हाथ में लेकर उठाया ही तो सही ॥ २७ ॥

बस इन्द्र ने उस अष्टधार वाले वज्र से ज्ञातिओं के देखते २ बल और पाक इन दोनों के मस्तक काटकर गिरादिये इस से शत्रुओं को बड़ा भय उत्पन्न हुआ ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शोकामर्षाभ्यां युक्तया रुषा क्रोधेनान्वित इन्द्रं हन्तुं परमोद्योगं चकार ॥ २९ ॥

घण्टावद्घण्टाभिर्युक्तम् ॥ ३० ॥ ३१ ॥
अतिवीर्यं वृत्रभिनत्तीति तथा ॥ ३२ ॥ ३३ ॥
तथा पतत्त्रैः पक्षैः ॥ ३४ ॥

( १ ) नमुचिर्दानवोत्तमः । * तदाविक्रम्य महावीर्यो हतोऽसीति विसर्जयन् इति विज० पाठः ।

तपः सारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ।
अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३५ ॥
सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ।
नाहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम् ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सारमयं वीर्याधिकं त्वाष्ट्रं तप एव वृत्रः स येन वज्रेण मया विपाटितः ॥ ३५ ॥

दण्डं लगुडतुल्यं कुलिशम् ब्रह्मतेजो दधीचेः सामर्थ्यम् ॥ ३६ ॥ ३७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो नमुचिस्तयोर्बलपाकयोर्वधं दृष्ट्वा शोकामर्षाभ्यां युक्तया रुषा युक्तः हे नृप ! तं शक्रं हन्तुमिच्छुः परममुद्यमं यत्नं चकार ॥ २९ ॥

उद्यममेवाह—अश्मेति । अश्मसारमयं घण्टावत् लोहमयं घण्टाभियुक्तं हेमभूषणं शूलं प्रगृह्य क्रुद्धोऽस्यद्य वस्त्वां हतोऽसीति विभर्त्सयन् भ्रामयन् सिंह इव विनदन् देवराजायेन्द्राय प्राहिणोत्प्रायुङ्क्त ॥ ३० ॥

गगनतले महोल्कावदापतत्तच्छूलमिन्द्रः शरैः सहस्रधा विचिच्छेद चिच्छेद हे नृप ! ततः रुषा युक्तः त्रिदशपतिरिन्द्रः तं नमुचिं कन्धरे कण्ठे शितेन कुलिशेन वज्रेण समन्तात्खनन् भिन्दंस्तस्य शिरो हर्तुमारब्धवान् ॥ ३१ ॥

यः सुरपतिनेन्द्रेणौजसा बलेनारिन्दमः प्रयुक्तः ऊर्जितः बलवान् वज्रः सः तस्य नमुचेस्त्वचं चर्मापि न बिभेद भेत्तुं नाशक्नोदित्यर्थः । अतिवीर्यं वृत्रमभिनदिति तथाभूतो वज्रः नमुचेः शिरोधरत्वचा तिरस्कृतः इत्यत्यन्तमद्भुतमासीदिति शेषः ॥ ३२ ॥

तस्मात्तच्छत्रोर्नमुचेरिन्द्रोऽपि भृशं भीतोऽभवत्, कुतः ? यतो वज्रः प्रतिहतो बभूव तस्य भयनिमित्तां चिन्तां दर्शयति ; इदं वज्रप्रतिहतिरूपं लोकविमोहनं दैवयोगेन भूतं जातम् ? किंवा लोकं विमोहयज्जातं लोकमोहनार्थं जातमित्यर्थः ॥ ३३ ॥

अन्यथा कथमप्रतिहतेन वज्रेण नैवं भवितव्यमित्याह—येनेति । मे मया कर्त्रा येन वज्रेण यच्छब्दस्य सोऽयमित्युपरिष्टात्तच्छब्देनान्वयः पूर्वमद्रीणां पक्षच्छेदः कृतः कथम्भूतानां भारैः पतत्रैः पक्षैर्भुवि पततां प्रजात्यये प्रजानाशने निमित्ते विशतां च ॥ ३४ ॥

किञ्च त्वाष्ट्रं त्वष्टुः सम्बन्धि सारमयं वीर्याधिकं यत्तपः स एव वृत्रः त्वाष्ट्रं तप एव वृत्रः स येन वज्रेण विपाटितः किञ्चान्ये चाधुना बलिजम्भपाकबलादयोऽतिबला यत एव सर्वैः वज्रेतरैरस्त्रैरक्षताः त्वचो येषां ते निपातिताः ॥ ३५ ॥

सोऽयमेवंविधो वज्रो मया तेनैव मया प्रयुक्तोऽल्पके तुच्छेऽसुरे नमुचौ प्रतिहतो बभूव ब्रह्मतेजः दधीचेः सामर्थ्यरूपमप्यधुना अकारणं निष्कारणं दण्डं लगुडतुल्यं जातं तं वज्रं नाददे न परिगृह्णामि ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिरिन्द्रः आकाशतले आपतन्महावेगं शूलमिषुभिः सहस्रधा निचिच्छेद नितरामच्छिनत् कन्धरे कण्ठे शिरो हर्तुं छिन्दंस्तमहनदित्यन्वयः ॥ ३१ ॥

ततः किमभूत्तत्राह—तत इति । तिरस्कृतो धिक्कृतः ॥ ३२ ॥

भूतमद्भुतम् ॥ ३३ ॥

पतत्रैः पततां भारैः भुवि निविशतामद्रीणाम् ॥ ३४ ॥

तपः सारं मयमिति पदच्छेदः ॥ ३५—३७ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राहिणोच्च ॥ ३०—३२ ।

भूतं लोकं विमोहयदित्येव पाठः ॥ ३३ ॥

पतत्रैः पततामुत्पततां भारैर्निविशमानानाम् ॥ ३४ ॥ ३५ ॥

नाहमिति । नाददे नाद्रिये इत्यर्थः "दद दाने" इत्यस्मादात्मनेपदिरूपम् ॥ ३६ ॥ ३७ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

घण्टावत् घण्टायुक्तम् ॥ ३० ॥

शिरः हरन् हर्तुम् ॥ ३१ ॥

अतिवीर्यं वृत्रमपि अभिनत् यः सोऽपि वज्रः ॥ ३२ ॥

अयमेतद्भीतोऽभूत् लोकविमोहनं लोकं विमोहयतीति च पाठः ॥ ३३ ॥

पतत्रैः पक्षैर्निविशतां निविशमानानां प्रविशतामित्यर्थः । तथा भारैः स्वीयैः भुवि पतताम् ३४ ॥

दण्डं लकुडतुल्यम् ॥ ३५-३९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शोकेन अमर्षेणाऽसहनेन च युक्तया रुषा क्रोधेनान्वितः ॥ २९ ॥

घण्टावत् घण्टाभियुक्तम् ॥ ३० ॥ ३१ ॥

इति शक्रं विषीदन्तमाह वागशरीरिणी ।
नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३७ ॥
मयाऽस्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ।
अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन्रिपोः ॥ ३८ ॥
तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः ।
ध्यायन्फेनमथापश्यदुपायमुभयात्मकम् ॥ ३९ ॥
न शुष्केण न चार्द्रेण जहार नमुचेः शिरः ।
तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन् विभुम् ॥ ४० ॥
गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ।
देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४१ ॥
अन्येऽप्येवं प्रतिद्वन्द्वान्वाय्वग्निवरुणादयः ।
सूदयामासुरस्त्रौघैर्मृगान्केसरिणो यथा ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतिवीर्यं वृत्रमपि योऽभिनत् तथा भूतोऽपि वज्रः तस्य त्वचं न बिभेद ॥ ३२ ॥

अबिभेद्दीनोऽभूत् ॥ ३३ ॥

येनेति यच्छब्दस्य सोऽयमिति तच्छब्देनान्वयः । येन वज्रेण मे मया अद्रीणां पक्षभेदः कृतः कथम्भूतानां प्रजात्यये प्रजानाशे निमित्ते भारैः स्वीयैर्भुवि पततां तथा पतत्रैः पक्षैर्निविशतां निविंशमानानाम् ॥ ३४ ॥

त्वाष्ट्रं त्वष्टुः सम्बन्धि सारमयं वीर्याधिकं तपस्तदेव वृत्रः स येन वज्रेण मया विपाटितः ॥ ३५ ॥

अल्पकेऽसुरे मयाऽतिबलवता मुक्तोऽपि प्रतिहतोऽस्ति अतः ब्रह्मतेजः मुनिशक्तिमयवज्ररूपं ब्रह्मसामर्थ्यमकारणं कार्यासाधकं दण्डं यष्टितुल्यं वज्रमहं नाददे न गृह्णामि ॥ ३६ ॥ ३७ ॥

---

भाषा टीका ।

नमुचिने दोनों का वध देख, बड़े शोक, अमर्ष, और रोष, युक्त होकर हे राजन् ! इन्द्र के मारने की इच्छा से बड़ा उद्यम किया ॥ २९ ॥

लोहे का त्रिशूल जिसमें घंटाओं का घन घनाट हो रहा सुवर्ण से विभूषित उस शूल को लेकर, बड़े क्रोध कर, "मरा है" ऐसा कह कर इन्द्र के ऊपर चलाया और सिंह सरीका नाद किया ॥ ३० ॥

अपने ऊपर आते हुए बड़े वेग वाले उस त्रिशूल को मारे बाणों के हजार टुकड़े कर गिरा दिया । हे नृप ! और इन्द्रने बड़ा क्रुधित होकर उसके कन्धे पर वज्र चलाया ॥ ३१ ॥

जो सुरपति [ इन्द्र ] ने वज्र चलाया उस वज्र से नमुचि के कन्धे के चर्म पर खरोंट भी नहीं आई यह बड़ा ही आश्चर्य हुआ कि जिस वज्र से अतिपराक्रमी वृत्रासुर का भेदन हुआ, उस वज्र को नमुचि के गले की त्वचाने तिरस्कृत करदिया ॥ ३२ ॥

तब तो उससे इन्द्र को भी डर हुआ क्योंकि, जब वज्र भी प्रतिहत होगया, इन्द्रने विचारा कि यह लोक को मोह करने वाला कौन प्राणी है ॥ ३३ ॥

जब प्रथम पंखों से उड़ २ ग्रामों पर बैठ २ कर पर्वत लोग प्रजा का नाश करते रहे तब जिस वज्र से मैंने उन पर्वतों के पंख काटे ॥ ३४ ॥

और तप का सार मय त्वष्टा का पुत्र वृत्रासुर जिस वज्र से मारा, और भी जो बड़े बलिष्ठ लोग, कि जिनकी त्वचा सब अस्त्रों से नहीं क्षत हुई वे भी जिस वज्र से नष्ट किये ॥ ३५ ॥

वह यह वज्र मेरा चलाया हुआ अति अल्प असुर पर कुंठित होगया, जब वह दधीचि ऋषि का तेज रूप वज्र निष्फल होगया तौ तब अब मैं दंड को भी नहीं ग्रहण करता हूं ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आर्द्रशुष्काभ्यां मृत्युर्नैवेति ॥ ३८ ॥ ३९ ॥

उभयात्मकत्वमेवाह—न शुष्केण न चार्द्रेण फेनेन तथा च श्रुतिः "अपां फेनेन नमुचेः शिर इन्द्रो उदवर्तयत्" इति ॥ ४०—४४ ॥

श्रीशुक उवाच ।

संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ।
गीयमाना अनुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४५ ॥
ये ऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते ।
बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ॥ ४६ ॥
तत्राविनष्टावयवान् विद्यमानशिरोधरान् ।
उशना जीवयामास सञ्जीविन्या स्वविद्यया ॥ ४७ ॥
बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ।
पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्याम् अष्टमस्कन्धे देवासुरसङ्ग्रामे
एकादशोऽध्यायः ॥ ११ ॥

भाषा टीका ।

नारद उवाच ॥

नारदजी बोले, कि–हे देव गण हो ! तुम लोगों ने नारायण की भुजाओं के आश्रय से अमृत पाया, और सब भी सम्पन्न होगये अब विग्रह ( लड़ाई ) से उपराम करो ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुचरैरनुगीयमाना इत्यर्थः । उपगीयमानैरनुचरैः सहेति वा ॥ ४५ ॥ ४६ ॥

अविनष्टा अवयवा येषाम् विद्यमानाः शिरोधरा येषां तान् ॥ ४७ ॥

प्रत्यापन्नानि पुनः प्राप्तानीन्द्रियाणि स्मृतिश्च येन सः ॥४८॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंभूतं मुनेः नारदस्य वचो मानयन्तो देवा मन्युं तत्प्रयुक्तं युद्धोद्योगं चोपसंहृत्य सर्वे इन्द्रादयो देवा अनुचरैरुपगीयमानाः सन्धिरार्षः त्रिविष्टपं स्वर्गलोकं ययुः ॥ ४५ ॥

ततस्तस्मिन् रणे ये हतावशिष्टा दानवा दैत्याश्च ते सर्वे नारदस्यानुज्ञया विपन्नं वज्रप्रहारेण भूमौ पतितं बलिमादायास्ताद्रिं ययुः ॥ ४६ ॥

तत्रास्ताद्रौ उशना भार्गवः अविनष्टा अवयवाः येषां विद्यमाना शिरोधराः येषां तान् असुरान् आत्मनः स्वमन्त्रसिद्ध्या अनन्यगामितसाधारणत्वं सूचितं मृतसञ्जीविन्याख्यया विद्यया मन्त्रविद्यया जीवयामसेत्यर्थः ॥ ४७ ॥

बलिश्च उशनसा संस्पृष्टः प्रत्यापन्नानि पुनः प्राप्तानि इन्द्रियाणि स्मृतिश्च येन सः पराजितोऽपि नादुःखित तत्कुतः ? यतो लोकतत्त्वविचक्षणः लोकानां पुकृतिसंसृष्टजीवानां यत्तत्त्वं कर्मयत्तज्जयापजयसुखदुःखादिफलभोक्तृत्वरूपं तत्र विचक्षणः तत्परिशीलननिपुणः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ते च अनुचरैः सङ्गीयमाना इत्यर्थः । संरम्भं द्वेषोद्रेकम् ॥ ४५—४८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्तमिति । तत्रैव तदानीं तेषां गृहात् सच तत्रत्यानां सुर्णांस्तदेशो ज्ञेयः ॥ ४६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अविनष्टावयवादीनेव जीवयामासेति तेषां मन्त्राणां प्रभावः सूचितः ॥ ४७ ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपगीयमाना अनुचरैरिति सन्धिरार्षः ॥ ४५–४८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशोऽष्टमस्य सङ्गतः सङ्गतः सताम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गीयमाना मनुचरैरिति क्वचित्पाठः उद्गीयमानानुचरैरिति पाठे तु सन्धिरार्षः ॥ ४५ ॥ ४६ ॥ ४७ ॥

प्रत्यापन्नः पुनः प्राप्ता इन्द्रियस्मृतिः बाह्याऽभ्यन्तरकरणगता सञ्ज्ञा येन सः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशो ऽध्यायः ॥ ११ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

श्री शुकदेवजी बोले, कि–देवलोग मुनि के वाक्य को मानकर क्रोध को ठंढा कर यश गाने वाले अनुचरों सहित सब स्वर्ग को गये ॥ ४५ ॥

और जो दैत्य लोग रण में बच रहे वे लोग नारदजी की अनुमति से घायल राजा बलि को लेकर अस्ताचल को चले गये ॥ ४६ ॥

वहां पर जिनके अवयव नहीं नष्ट हुए थे और जिन २ के शिर और ( अधर कबन्ध विद्यमान थे उन सबों को शुक्राचारी ने अपनी संजीवनी विद्या से जिवा दिया ॥ ४७ ॥

और जब बलि को शुक्राचारी ने स्पर्श किया तब बलि की भी सब इन्द्रियें ठीक होगईं और स्मृति भी आगई । यद्यपि इस युद्ध में बलि का पराजय हुआ तथापि लोक तत्व के जानने वाले बलि को कुछ खेद नहीं हुआ ॥ ४८ ॥

इति श्रीमद्भागवत महापुराण अष्टम स्कन्ध में
एकादश अध्याय का भागवताचार्य कृत
भाषा टीका समाप्त ॥ ११ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

———○:※:○———

## ॥ द्वादशोऽध्यायः ॥

श्रीबादरायणिरुवाच ।

वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ।
मोहयित्वा सुरगणान् हरिः सोममपाययत् ॥ १ ॥
वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ।
सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥
सभाजितो भगवता सादरं सोमया भवः ।
सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन्हरिम् ॥ ३ ॥

श्रीमहादेव उवाच ।

देवदेव जगद्व्यापिन् जगदीश जगन्मय ।
सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥
[1]आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः ।
यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्मचिद्भवान् ॥ ५ ॥
तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ।
विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ६ ॥

त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ७ ॥
एकस्त्वमेव सदसद्द्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।
अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणव्यतिकरो निरुपाधिकस्य ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे मोहिनीरूपविभ्रमाक्षोभकौतुकम् ।
सर्वं स मोहयामास हरिः पुनरमापयत ॥ १ ॥
अमृत्यसुरा विष्णुमायया न तदद्भुतम् ।
इति वक्तुं महादेवमोहोऽयमुपवर्ण्यते ॥ २ ॥

हरिः सोममपाययदितीदं निशम्य स यत्रास्ते यत्र तद्रूपं द्रष्टुं ययाविति सर्वत्रान्वयः ॥ १ ॥ २ ॥

सोमया उमया सह ॥ ३ ॥

"त्वयि किञ्चिच्चाश्चर्यं वयन्त्वाश्चार्यमानसाः" इति वक्ष्यन्महादेव स्तुपाय हरिमष्टभिः "त्वयि महामायाविनि परमेश्वरे न हि किञ्चिदर्थाद्भुतमिव वयं तु परमकौतूहलेन द्रष्टुमागता इति बहुधा प्रश्रयं भयन् स्तौति—हे देवदेव ! कुतोऽहं देवानां देवः ? इत्यत आह—हे जगद्व्यापिन् ! तत्कुतः ? हे जगन्मय ! तर्हि किं प्रधानम् न हे जगदीश ! तत्र कुतस्तत्राह—सर्वेषामपि त्वं हेतुरत ईश्वरः आत्मत्वाच्च न जडं प्रधानं त्वमित्यर्थः ॥ ४ ॥

ननु, जगन्मयत्वोक्त्या जगत उत्पत्त्यादिनाऽनन्यत्वेन जाड्यं च ममापि किं तथा त्वं ब्रूषे ? नहि नहीत्याह—आद्यन्तौ मध्यमस्य जगतो यतो ब्रह्मणो भवन्ति तस्य चाऽव्ययस्यैतानि

( १ ) विजयध्वजतीर्थ पाठेऽयं श्लोको नास्ति ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

आद्यन्तमध्यानि न सन्ति यस्य ब्रह्म त्वहङ्कारास्पदं दृश्यमहङ्कारास्पदं उपद्रष्टृ च बाह्यमाभ्यन्तरञ्च तत्सत्यं च चिद्रूपं च ब्रह्मैव भवानतो न तव विकारादिशङ्केत्यर्थः ॥ ५ ॥

तवैवम्भूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह-तवैवेति । उभयत इहामुत्र च सङ्गं त्यक्त्वा ॥ ६ ॥

ननु, ब्रह्मैव चेदहं तर्ह्यसङ्गोदासीनस्य मम चरणाम्भोजोपासनया किं तेषाम्? तत्राह-त्वमिति । ब्रह्मत्वेऽपि त्वं नात्यन्तमुदासीनः किन्तु विश्वस्य प्रपञ्चस्योदयादीनां हेतुस्तदुपाधीनामात्मनां जीवानामीश्वरश्च तत्तत्फलदाता, तर्हि किं राजादिवत्कयाप्यपेक्षया सेवकेभ्यः फलं ददामि ? नहि नहि अनपेक्ष एव त्वम्, तर्हि किमीश्वरत्वेन ? तत्राह—तैरात्मभिस्तत्फलदानार्थमपेक्ष्यत इति तदपेक्षस्तस्य भावस्तदपेक्षता तया; अनपेक्षत्वमेव दर्शयितुं तदीयं ब्रह्मत्वं विशिनष्टि पूर्णममृतं च सुखरूपम्, विषयसुखवैलक्षण्यार्थमाह-अविकारं नित्यमानन्दमात्रं च. कुतः ? विशोकम्. तत्कुतः ? त्रिगुणम् किञ्च अनन्यत् न विद्यतेऽन्यदस्मात्, ब्रह्मव्यतिरिक्ताभावादपि निरपेक्षत्वमित्यर्थः । तर्हि सर्वात्मकत्वे तत्तद्विकारप्रसङ्गो दुर्वारस्तत्राह—अन्यत्सर्वतो व्यतिरिक्तं च कारणत्वात् न ह्यवरभूतसुखात्मकब्रह्मस्वरूपस्य तदान्यापेक्षास्त्यतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमित्यर्थः ॥ ७ ॥

अन्यत्वमनन्यत्वञ्चैकस्य कुतः ? इत्याशंक्य दृष्टान्तेनोपपादयति सदसत्कार्यकारणरूपं द्वयमद्वयं च परमकारणं त्वमेवैकः कृतं कुण्डलादिरूपं द्वयमकृतं च केवलमद्वयं स्वर्णं यथैकमेव तद्वदेवेह त्वयि वस्तुतो भेदो नास्ति, कथं तर्हि भेदप्रतीतिः ? तत्राऽऽह-अज्ञानत इति । कुतः यस्मादिदमुपाधिकस्यैव तथायं गुणव्यतिकरो भेदो न स्वतः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवन्मायया दैत्या मुमुहुरिति न विचित्रं यतो रुद्र एव मुमोह इति वक्तुमध्यायः प्रवर्तते—वृषध्वज इति । हरिर्योषिद्रूपेण दानवान्मोहयित्वा सुरगणान् सोममममृतं पाययदितीदं श्रुत्वा वृषध्वजो रुद्रः भवान्या सह वृषमारुह्य सर्वभूतगणैः प्रमथादिभिः परिवृतो यत्र मधुसूदनो वसति तत्र योषिद्रूपं द्रष्टुं जगाम ॥ १–२ ॥

सोमयोमया सह सादरं यथा तथा भगवता सभाजितः सत्कृतो भवो रुद्रः सम्यगुपविष्टो हरिं प्रतिपूज्य स्मयन्निदं वक्ष्यमाणमुवाच प्रतिपूजनं स्तुतिः ॥ ३ ॥

तामेवाह—देवदेवेत्यादिभिरष्टभिः । तत्रासुरसम्मोहनाय धृतं योषिद्रूपं मह्यं दर्शयेति प्रार्थयितुकामो नटेनेव बालानसुरान् वञ्चयितुं मया धृतं कपटपुंश्चलीरूपं द्रष्टुं किमिच्छसीति माप्रत्याचक्ष्वेत्याशयवान् कृत्स्नजगदुदयविभवलयबन्धमोक्षलीलस्य अचिन्त्यविविधविचित्रशक्तेस्तव तद्योषिद्रूपं ध्रमप्रापणक्षमजगदुपद्रवकृदसुरमोहनेन तद्विनाशार्थत्वाद्रामकृष्णादिरूपवल्लीलया आत्मीयमङ्गलरूपेण धृतं दर्शनीयमेवान्यथा प्रकृतिपुरुषविलक्षणस्य अवाप्तसमस्तकामस्य निरतिशयानन्दमहोदधेस्तवैवं प्राकृतरूपेण न घटत इति वक्तुमतितरमाधारणोर्धर्मैः सम्बोधयति-देवदेवेति । हे देवदेव देवानामस्मदादीनामपि देव! हे जगद्व्यापिन्! जगद्व्यापित्वं न वाय्वाकाशादिवत्स्वरूपेणापितु प्रशासनेनेत्यभिप्रायेण सम्बोधयतिजगदीशेति । हे जगदीश जगत्प्रशासितः ! जगन्मयः कार्यावस्थचिदचिदात्मकजगत्परः न केवलं जगदीशः अपितु तद्रूपश्चेत्यभिप्रायेण सम्बोधयति—जगन्मयेति । हे जगत्प्रचुर तत्प्रचुरत्वं च तच्छरीरकत्वेनेत्यभिप्रेत्य तत्प्रतिसम्बन्ध्यात्मा त्वमेवेत्याह—सर्वेषामपि चेतनाचेतनात्मकानां भावानां पदार्थानामात्मा त्वमेव आत्मत्वमन्तःप्रविश्य धारकत्वं न केवलमात्मैव अपितु हेतुः कारणभूतः ईश्वरः कारणावस्थचिदचिन्नियन्ता च त्वमेवेत्यर्थः ॥ ४ ॥

एवं कार्यकारणोभयावस्थचिदचिदात्मकत्वोक्तम् तत्र कारणत्वम् , ——————— उपादानत्वरूपं निमित्तत्वरूपञ्चेति द्विविधमभिप्रेतम्. तत्रतावदुपादानत्वमुपपादयन् तत्प्रयुक्तं विकारं परिहरति—आद्यन्तावित्यादि । यत इति “ सार्वविभक्तिकस्तसिः ” ततश्च यतो यस्मिन् येन यदिति लभ्यते अस्य जगत आद्यन्तावादिसृष्टिरुत्पत्तिः यतः सूक्ष्मचिदचिद्विशिष्टात् अस्यान्तो लयो यस्मिन् अस्य मध्यं स्थितिर्येन यदिदं विश्वं यच्चान्यज्जगतो विलक्षणमहं प्रत्यगर्थशरीरकं बहिः पराग्गर्थशरीरकञ्च यस्याव्ययस्य प्रकृतिपुरुषगतविकाररहितस्य च एतान्याद्यन्तमध्यानि न सन्ति एतेषां शरीरभूतचिदचिद्गतत्वादिति भावः । तदेवंभूतं सत्यं स्वरूपतः स्वभावतश्च विकाररहितं चिदत्यासङ्कुचितापरिच्छिन्नज्ञानाश्रयं तदात्मकत्वञ्च ब्रह्मस्वरूपेण गुणैश्च निरतिशयबृहत् भवानेव आद्यन्तावित्यादिना जगत्कारणत्वेनोक्तस्य स्वरूपं विशोध्यते—तत्सत्यं ब्रह्म चिदिति । यथा “सत्यं ज्ञानमनन्तं ब्रह्म” इत्यनेन जगत्कारणत्वादिवाक्योक्तं स्वरूपं विशोध्यते तद्वत् सत्यादिवाक्यार्थोऽत्रानुसन्धेयः सत्यशब्देन सत्यशब्दस्य चिद्ब्रह्मशब्दाभ्यां ज्ञानानन्तपदयोश्चात्र प्रत्यभिज्ञानात् ॥ ५ ॥

“कश्च ध्येयः कारणं तु ध्येयः” इति जगत्कारणत्वसमनियतत्वमुपास्यत्वमतितरमाधारणत्वञ्चाह-तवैवेति । यतो जगत्कारणभूतस्त्वमतस्तवैव चरणाम्भोजं निःश्रेयसकामा मुमुक्षवः उभयतः इहामुत्र च सङ्गं त्यक्त्वा निराशिषः अनन्यप्रयोजनाः मुनयः मननशीलाः भक्तास्त्वत्स्वरूपरूपगुणविभूतिमननशीला इत्यर्थः । समुपासते सम्यग्विघ्नैरनभिभूयमानाः सन्तः उपासते समीपमासते इत्यर्थः ॥ ६ ॥

अथ लीलार्थमेव योषिद्रूपमुपात्तम् अन्यथा प्रकृतिपुरुषविलक्षणस्य प्राकृतवत्तन्न घटत इत्यभिप्रयन् प्रकृतिपुरुषयोरसम्भावितैर्धर्मैर्विशिष्टं वेदान्तवेद्यं जगन्निमित्तकारणं स्तौति—त्वमिति । त्वं ब्रह्मस्वरूपेण गुणैश्च निरतिशयबृहत् ब्रह्मशब्दवाच्यं परमात्मतत्त्वं त्वमेव, किं तद्ब्रह्म ? यत्पूर्णं सर्वव्याप्यमृतं स्वरूपतः स्वभावतश्च विकाररहितं ब्रह्मामृतशब्दाभ्यां, सत्यादिवाक्योदितं प्रत्यभिज्ञापितं पूर्णपदेन “तेनेदं पूर्णं पुरुषेण सर्वम् ” इति वाक्योदितम् अत्र पूर्णशब्दः कर्तरि क्तान्तः त्रिगुणं

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथैवेति । श्रेयस्कामास्त्वद्भक्तिरेवतदुपयोगिमङ्गलकामाः निराशिषः तदितरकामनाशून्याः ॥ ६ ॥

कथमेकस्य मम ब्रह्मत्वं भगवत्त्वञ्च तत्राह—त्वं ब्रह्मेति, आनन्दमात्रलक्षणविशेष्यांशेन त्वं ब्रह्म यः विश्वहेतुशक्तिमता वैशिष्ट्येन तु त्वं भगवानित्यर्थः । तर्हि कथं सापेक्षोऽहम् ? तत्राह—तेन विश्वेनापेक्ष्यस्त्वं यस्मात्तस्मात्त्वमनपेक्ष एव लोक-लीला कैवल्येन तु तत्सृष्ट्यादौ प्रवृत्तिरिति भावः ॥ ७ ॥

एतावता त्वयि सुवर्णे इव वस्तुभेदो नास्ति स्वकार्ये सुवर्णत्वाव्यभिचारवत्तद्रूपत्वाव्यभिचारात् तथापि सुवर्ण इव त्वयि शुद्धे जनैर्यो विकल्पो विविधकल्पना विहितो मतः स पुनरज्ञानत एव, कुतः ? यस्मात् सूर्यवत्स्वरूपाधिकस्यैव सतस्तव ये गुणाः रश्मिप्रतिच्छविनिर्यासवद्दूरबहिरङ्गशक्त्यंशाः तत्त्वत्रयः तेषामेव व्यतिकरो विकल्पोऽयं तथापि सूर्यं विना तदभावात् सूर्यत्वमेव तत्र परामृश्यमिति सुवर्णदृष्टान्तोऽपि सिद्ध इति भावः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मायामोहाद्दैत्याद्यानां मोहनेन किम् ।
इति मोहयितुं शम्भुमनैषीत्स्वान्तिकं हरिः ॥
द्वादशे मोहयन् शम्भुं पश्यन्त्याः शम्भुयोषितः ।
मोहिन्या विभ्रमस्यासाधारण्यं तावदबूबुधत् ॥

॥ १—२ ॥

सोमया उमया सह ॥ ३ ॥

हे देवदेव ! ननु, त्वमपि देवेषु दीव्यमानोऽसि तत्राह—हे जगद्व्यापिन् ! मम जगन्मध्यवर्तित्वान्ममापि त्वं व्यापकोऽसीत्यर्थः । अतो मत्सहितं जगदिदं तव ईशितव्यमेवेत्याह, हे जगदीश ! ननु विश्वेश्वरत्वेन त्वमुच्यसे लौकिकैस्तत्राह, हे जगन्मय । त्वं चिन्मयोऽपि जगन्मयः जगन्मयत्वादीशितव्योऽपीश्वरः न त्वहमीदृशः किन्तु ब्रह्मेन्द्रादिवदुपचारादेव विश्वेश्वर इति भावः । ननु तर्हि मां त्वं प्रधानस्वरूपं ब्रूषे तस्यैव जगदुपादानत्वप्रसिद्धेः जगद्रूपत्वं तत्राह, सर्वेषां भावानां वस्तूनां त्वमात्मा चेतयिता च हेतुश्चेत्यतस्त्वमेवेश्वर इति भावः ॥ ४ ॥

ननु, जगन्मयत्वोक्त्या जगत उत्पत्त्यादिना नश्वरत्वेन जाड्येन च ममापि किं तथात्वं ब्रूषे ? नहि नहीत्याह—आद्यन्ताविति, अस्य जगतः यौ आद्यन्तौ जन्ममृत्यू यच्च मध्यं जीवनं यच्च इदं प्रत्यक्षं वस्तु अन्यत् परोक्षम् अहमहङ्कारास्पदं बहिर्ममकारास्पदं च वस्तु यतो भवति तद्ब्रह्म चिद्रूपो भवान् अव्ययस्य ब्रह्मणस्तवाद्यन्तादीनि न सन्ति ॥ ५ ॥

तवैवंभूतस्य महतामाचारमेव प्रमाणमित्याह—तवैव न तु मम. मम तु सकामा एवेति भावः । श्रेयस्कामा भक्तीच्छवः उभयत्र इहामुत्र च यथा त्वद्भक्ता निराशिषस्तथा त्वमपि निराशीर्न त्वस्मदादिरिवैश्वर्यकामनया सेवकसापेक्षः ॥ ६ ॥

अतस्त्वं विश्वस्माद्भिन्नस्तद्रूप एवेत्याह—त्वमिति । ब्रह्मचिन्मयं विश्वं त्वमेव एवं पूर्णमित्यादिविशेषणैर्विश्वमपूर्णं समूर्तिकं सगुणं सशोकं सुखदुःखात्मकं सविकारं तथा च विद्धि अन्यत् यत्तत्तु ब्रह्म अनन्यत् सर्वकारणत्वात् विश्वं तु अन्यत् चिद्भिन्नत्वात् तथा ब्रह्म अन्यत् मायिकजडांशभिन्नत्वात् विश्वं तु अन्यत् ब्रह्मकार्यत्वात् ब्रह्मकार्यत्वमेव दर्शयति, विश्वस्य उद्भवादीनां हेतुः तदुपाधीनामात्मनां जीवानामीश्वरश्च तत्फलदाता तर्हि किं राजादिवत् कयाप्यपेक्षया सेवकेभ्यः फलं ददासि ? नहि न हि तदपेक्षया तेषाम् । अपेक्षा यत्र स तदनुव्रतस्य यावत्सेवा तथैव फलं ददासि न तु स्वापेक्षया नैर्जीवैरेव स्वस्वफलप्राप्त्यर्थं त्वमपेक्ष्यसे इत्यर्थः त्वं तु अनपेक्ष स्वप्रयोजनार्थं तान् नापेक्षसे ॥ ७ ॥

किञ्च जीवानां त्वदीयतटस्थशक्तिकार्यत्वात् तदुपाधेर्विश्वस्य त्वदीयमायाशक्तिकार्यत्वादिदं चिज्जडात्मकं जगदपि त्वमेवेत्याह—एकदेति । सदसत् कार्यकारणात्मकं जगत्तत्र स्थूलं कार्यं विराट् असत् कारणं महदादि किमिव कृताकृतं स्वर्णमिव कृतं कुण्डलादि अकृतं केवलस्वर्णम् इह निरागाह-दाद्योः कार्यकारणयोर्वस्तुतः परमकारणत्वात्तव भेदो नास्ति कार्यकारणयोरभेदावगमात् विराजो महदादिकार्यत्वात् महदादेर्मायाकार्यत्वात् मायायास्त्वच्छक्तित्वेन त्वद्रूपत्वादिति भावः । अत एव तदज्ञानत एव त्वयि एकस्मिन्नेव जनैर्विकल्पः विहितः जगत्कारणं ब्रह्मेति मायेति प्रधानमिति कर्मेति विविधा कल्पना कृता यस्मात्स्वरूपाधिकस्य गुणातीतस्वरूपस्य तव गुणैरेव व्यतिकरो व्यसनं विवादरूपा विपत्तिरिति यावत् बहुच्छक्तयो नदतां वादिनां "विवादसंवादभुवो भवन्ति" इति हंसगुह्योक्तेः "अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मोहिनीरूपं दृष्ट्वा शिवोऽपि मोहमुपागत इति वर्णयति—वृषध्वज इति, द्वादशाध्यायेन ॥ १ ॥ २ ॥

सोमया उमया सह ॥ ३ ॥

देवदेवत्वादौ हेतुमाह, सर्वेषां चेतनाचेतनात्मकानां भावानां त्वमात्मा आश्रयः हेतुः सृष्ट्यादिकर्ता ईश्वरः नियन्ता ॥ ४ ॥

सर्वहेतुत्वं प्रपञ्चयति—यत् यस्मिन् प्रपञ्चे अहमहमर्थभूतं चेतनं तत्त्वं बहिः देहेन्द्रियादिरूपमचेतनं तत्त्वं तस्याख्यचिदचिदात्मकस्य प्रपञ्चस्य यतः आद्यन्तौ सृष्टिसंहारौ मध्यं पालनम् इदं स्थूलत्वमन्यत्सूक्ष्मत्वं च तत् सत्यं चिद्ज्ञानं ब्रह्मानन्द "सत्यं ज्ञानमनन्तम्" इति श्रुतिप्रोक्तं एवं तत्त्वं भवान् अविकारिस्वरूपत्वादजन्माविनाशित्वस्वानन्दपूर्णत्वं भगवत आह यस्याव्ययस्याविकारिस्वरूपस्य एतानि उत्पत्तिविनाशपालनानि भवन्ति स भवानित्यन्वयः ॥ ५ ॥

मुमुक्षुपास्यस्त्वमेवेत्याह—तवेति । उभयतः इहामुत्र च सङ्गमासक्तिं विसृज्य त्यक्त्वा ॥ ६ ॥

उक्तार्थदृढीकरणार्थं बृहत्त्वपूर्णत्वादीन् विश्वहेतुत्वादीन् सर्वभिन्नाभिन्नत्वसर्वव्यतीतत्वपर्यन्तान् अचिन्त्यत्वादींश्च भगवतो गुणान्

त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम् ।
अन्येऽवयन्ति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥ ९ ॥
नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः ।
यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ १० ॥
स त्वं समीहित[१]मदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबन्धमोक्षौ ।
वायुर्यथा विशति खं च चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुन्त्से ॥ ११ ॥
अवतारा मया दृष्टा रममाणस्य ते गुणैः ।
सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रुतिस्मृतिसूत्रगणसिद्धान् भक्तप्रहेया वर्णयति—त्वं ब्रह्मेति,पञ्चभिः। ब्रह्म बृहत्स्वरूपगुणशक्त्याश्रयं तत्त्वं त्वमेव पूर्णममृतं च त्वं विगुणं निखिलैर्हेयैर्गुणैर्वर्जितमत एव सर्वोपादानकारणत्वेन सर्वाऽभिन्नम् अन्यत् चिदचिच्छक्तिमयसर्वप्रपञ्चाभिन्नस्वरूपम् अतो विश्वस्य उद्भवादीनां हेतुः विश्वस्य आत्मान्तर्यामी च तदपेक्षतया विश्वस्थितिप्रवृत्त्यादिप्रदत्वेन ईश्वरः नियन्ता च अनपेक्षः अन्यायत्तस्थितिप्रवृत्त्याद्यपेक्षारहित इत्यर्थः ॥ ७ ॥

तार्किकाद्यभिमतस्य जगदीशयोरत्यन्तभेदस्याऽज्ञानमूलत्वं दर्शयन् पूर्वोक्तं जगद्ब्रह्मणोर्भिन्नाभिन्नं सम्बन्धं दृष्टान्तेनोपपादयति,एक इति। सदसद्रूपं चिदचिदात्मकम् द्वयं कार्यम् अनभिव्यक्तनामरूपचिदचिच्छक्तिमत् कारणमेव "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः । तथाद्वयम् एकः समाधिकशून्यस्त्वमेवेत्यर्थः। तत्र दृष्टान्तः कृतं कटककुण्डलादिरूपमकृतं तत्कारणं च स्वर्णमेव भवति तद्विव दार्ष्टान्ते हेतुः यस्माद्धेतोः निरुपाधिकस्य सजातीयविजातीयपदार्थद्वयरूपोपाधिरहितस्यानन्तशक्तिमतः एकस्यैव कारणभूतस्य भवतः सम्बन्धिगुणव्यतिकरः प्रपञ्चः "तदात्मानं स्वयमकुरुत सच्च त्यच्चाऽभवत्" "एकोऽहं बहुस्याम्" इत्यादिश्रुतेः। एवं यद्यपि वस्तुतो जगद्ब्रह्मणोर्भेदः घटकुलालयोरिव नास्ति तथापि त्वयि निमित्तोपादानरूपे जनैः परमाणुवादिकारणवादिभिः अज्ञानतः विकल्पो भेदो विहितः ईश्वरभिन्नः परमाणुमयः संसारः इति जगदीशयोः घटकुलालयोरिव भेदः कल्पित इत्यर्थः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीशो जयति ॥

श्रीबादरायणिरुवाच ।

श्रीशुकदेवजी बोले कि—वृषध्वज भोलानाथ श्री शङ्करने यह सुना कि, श्रीहरिने योषित् को रूप धरकर असुरगणों-को मोहितकर देवगणोंको अमृत पान कराया ॥ १ ॥

बस इतना सुनकर शिव वृषभपर बैठ कर देवी सहित भूतगणोंको साथ लेकर जहां भगवान् विराजरहे वहां उसी रूप देखने को गये ॥ २ ॥

भगवान् ने उमा देवी सहित श्री शङ्कर की सादर पूजा करी, तब सुन्दर तरह से बैठकर श्रीहरि का प्रति पूजन करके हंसते हुए हरिसे बोले ॥ ३ ॥

श्रीमहादेवजी बोले कि—हे देव ! हे जगत में व्यापने वाले ! हे जगत के ईश ! हे जगत स्वरूप ! सर्व भावों के आप आत्मा हैं हेतु हैं और नियन्ता है ॥ ४ ॥

इस विश्व का आदि मध्य और अन्त जिससे होते हैं और अव्यय होने से जिसका आदि मध्य और अन्त, नहीं है वह सत्य चैतन्य स्वरूप ब्रह्म आप हैं ॥ ५ ॥

परम श्रेय की कामना वाले मुनि जन ऐहिक पार लौकिक सुखों के सङ्ग को छोड़कर कोई कामना नहीं करके केवल आपके चरणाम्भोज की उपासना करते हैं ॥ ६ ॥

आप पूर्ण ब्रह्म हो अमृत विगुण विशोक आनन्द मात्र अविकार अनन्य और अन्य आप ही हैं, और विश्व के उत्पत्तिस्थिति और संहार के हेतु भी आपही हैं, और जगत् के आत्मा तथा फलदेने के लिये अपेक्षित होने से नियामक भी हैं और स्वयं निरपेक्ष हैं ॥ ७ ॥

जो कुछ जगत् में कार्य कारण प्रपञ्च तथा द्वय और अद्वय है सो सब आपही हो जैसे सोनेके कुण्डलादिक दूसरे नहीं होसके किन्तु सोनाही है, इसप्रकार कृत या अकृत सर्व वस्तु स्वरूप आपही, जनोंने अज्ञान से आप में विकल्पविधान किया है क्योंकि गुणों से निरुपाधिक का व्यतिकर है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत एव त्वां बहुधा वर्णयन्ति तत्त्वतस्तु केपि न जानन्तीत्याह द्वाभ्याम्—त्वां ब्रह्म वेदान्तिनोऽवयन्ति अन्यन्ते त्वामेव धर्मं मीमांसका मन्यते प्रकृतिपुरुषयोः परं पुमांसं सांख्याः विमलोत्कर्षिणी ज्ञाना क्रियायोगा प्रह्वी सत्या ईशाना अनुग्रहाचेत्येवं नवशक्तियुतं परं पाञ्चरात्राः महापुरुषं पातञ्जलाः ॥ ९ ॥

(१) भवस्थिति इति वीर० ।

येन संमोहिता दैत्याः पायिताश्चामृतं सुराः ।
तद्दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १३ ॥

श्रीशुक उवाच ।

एवमभ्यर्थितो विष्णुर्भगवाञ्छूलपाणिना ।
प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १४ ॥

श्रीभगवानुवाच ।

कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ।
पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १५ ॥
तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ।
कामिनां बहुमन्तव्यं सङ्कल्पप्रभवोदयम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परायुर्ब्रह्मा सत्त्वसर्गाः सत्त्वगुणेन सृष्टा अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानन्ति किं पुनस्त्वाम् हे ईश अभद्रं राजसं तामसं च वृत्तमुत्पत्तिर्येषां ते न जानन्तीति किमु वक्तव्यम् ॥ १० ॥

किन्तु त्वं तत्सर्वं जानासीत्याह—स त्वं सर्वमवरुन्त्से व्याप्नोषि जानासि किं तत्सर्वम् समीहितं कृतमदः स्थितिजन्मनाशममुष्य जगतो जन्मादि भूतानामीहितं च जगतो भवबन्धमोक्षौ च व्याप्तौ दृष्टान्तः चराचराख्यं देहजातं खं च यथा वायुराविशति तथा कथमवरुन्त्से तदात्मकतया तस्य सर्वस्यात्मत्वेऽयर्थः । आत्मत्वे हेतुः अवगमो ज्ञानरूप इति ॥ ११ ॥

एवं स्तुत्वा प्रस्तुतं विज्ञापयति—अवतारा इति द्वाभ्याम् ॥ १२ ॥ १३ ॥ १४ ॥

सुरकार्याणि योषिद्वेषेण भविष्यन्तीति पश्यता अयं भावः अवश्यं तावदुन्मत्तान्दैत्यान्वञ्चयित्वा देवेभ्योऽमृतं देयम् न चैवं मेघस्य रूपान्तरेण कर्तुमुचितम् अतो वञ्चनमोहनादिसारं कामिनीरूपं मया धृतमिति ॥ १५ ॥

तद्रूपं दर्शयिष्यामि सङ्कल्पप्रभवः कामस्तस्योदयो यस्मात् ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमनन्यत्वाच्चैवं उपपादिते तदेवं प्रकृतिपुरुषविलक्षणात्वेन वेदान्तवेद्यत्वमेवेति स्तुतम्. किंबहुना "सर्वेवेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्" इत्याद्युक्तरीत्या निगमागमादिषु सर्वत्र धर्मब्रह्मादिशब्दैर्व्यवह्रियमाणस्त्वमेवेत्याह—त्वां ब्रह्मेति । कोचिद्वेदोत्तरभागाख्यां ब्रह्माऽव्ययन्ति मन्यन्ते ब्रह्मेति बोधयन्ति केचिद्वेदान्तिनो ब्रह्मेति व्यवहरन्तीत्यर्थः । एके मीमांसकाः धर्ममवयन्ति यद्यप्यपूर्वाख्यं क्रियाजन्यं ते धर्मं मन्यन्ते तथापि "फलमत उपपत्तेः" [ ३ । २ । ३७ ] इति शारीरकन्यायेनापूर्वस्यापि भगवत्प्रसादरूपत्वमकामेनापि तैरवश्यं वाच्यम् इति यागादिक्रियाया भगवदाराधनरूपत्वेन तत्प्रतिपादकस्य वेदपूर्वभागस्याराध्येऽलौकिकश्रेयस्साधने सिद्धधर्मरूपे तस्मिन्नेव पर्यवसानात्तत्रापि तात्पर्यवृत्त्या भगवानेव प्रतिपाद्यते इत्यभिप्रायेण धर्ममेकेऽवयन्तीत्युक्तम् तथाचोक्तम्—

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥"—इति

एके सेश्वरसांख्याः योगिकाश्च तत्र वेदान्ताविरुद्धतत्त्वापोहनेतद्ग्राह्यं निरीश्वरसांख्यस्मृतिस्तु निर्मूलैवेति भावः । सदसतोः प्रकृतिपुरुषयोः परं विलक्षणं परेशशब्दवाच्यमवयन्ति अन्ये केचित्पाञ्चरात्रास्तु नवशक्तियुतम्—

"विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम् ।
प्रह्वा सत्या तथेशानानुग्रहा नव शक्तयः" ॥—

इत्युक्तनवशक्तियुतं परं निरस्तसाम्याधिकमव्ययं निर्विकारं स्वतन्त्रं महापुरुषमवयन्ति ॥ ९ ॥

न कार्त्स्न्येन त्वद्गुणान् स्तोतुं वयं प्रभवामः यतस्त्वया सृष्टं विश्वमेव तत्त्वतो न जानीमः इत्यनन्तमाह—नेति । अहं रुद्रः परायुः ब्रह्मा मरीच्यादयः ऋषयः न एते वयं सत्त्वसर्गा जन्तुसमूहाः यस्य तव मायया सङ्कुचितज्ञानाः यत्त्वया विरचितं विश्वमेवं तत्त्वतो न जानीमः किंपुनरनन्तत्वत्स्वरूपगुणादिकमस्मदादय एव न जानन्ति किंपुनः शश्वत्सदा अभद्रवृत्ताः ज्ञानसंकोचकाऽमङ्गलकर्मपरायणाः दैत्यमर्त्यादयो न जानन्तीति ॥ १० ॥

त्वमेक एवापरिच्छिन्नस्वरूपस्वभावः सर्वज्ञ इत्याह—स इति । स त्वमुक्तविधस्त्वं सर्वं तदात्मकतया सर्वान्तरात्मकतया व्याप्नोषि शेषः । अवरुन्त्से जानासि,कथम्भूतोऽवगमः ज्ञानस्वरूपः सर्वात्मकतया वाक्याद्यगम्यो वा किं तत्सर्वं समीहितं स्वकृतमदोऽमुष्य जगतः स्थितिसृष्टिनाशानां समाहारस्तद्भूतानाम्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ईहितं च जगतो भवरूपं बन्धं मोक्षञ्चेत्येतत्सर्वम् अवभुङ्क्ते इति पाठान्तरं तदाऽन्तरात्मतयावगमः अवगच्छतीत्यवगमः कर्त्तरि पचाद्यजन्तः जानन्नवभुङ्क्ते लीलारसमनुभवसीत्यर्थः । व्याप्तौ दृष्टान्तः चराचरात्मकं वस्तु वायुः खमाकाशं च यथा आविशति तद्वदिति ॥ ११ ॥

एवं प्रतिपूज्य प्रस्तुतं विज्ञापयति—अवतारा इति द्वाभ्याम् । गुणैः सर्वज्ञत्वसर्वान्तरात्मत्वादिभिः कल्याणगुणैः रममाणस्य लीलारसमनुभवतस्तवावतारा: वराहादयो बहवो मया दृष्टाः योषिद्रूपं तु न दृष्टं सोऽहं दृष्टबहुभवदवतारोऽहमधुना यत्त्वया धृतं योषिद्वपुस्तद्द्रष्टुमिच्छामि ॥ १२ ॥

येन योषिद्वपुषा दैत्याः संमोहिताः सुरास्त्वमृतं पायिताः तद्योषिद्वपुर्द्रष्टुमिच्छन्तो वयमागतास्तद्दर्शनेऽस्माकमधिकं कौतूहलं वर्त्तते ॥ १३ ॥

एवमुक्तो भगवान् रुद्रं प्रत्यभाषतेत्याह शुकः–एवमिति । इति इत्थं शूलपाणिना रुद्रेणाभ्यर्थितः प्रार्थितो भगवान् भावगम्भीरम् केनचिदभिप्रायेण गम्भीरं यथा तथा प्रहस्य रुद्रं प्रत्यभाषत ॥ १४ ॥

तदेवाह–कौतूहलायेति द्वाभ्याम् । पीयूषभाजने अमृतकलशे गते दैत्यैरपहृते सति सुरकार्याणि योषिद्वेषेण भविष्यन्तीति पश्यता आलोचयता मया दैत्यानां कौतूहलाय यो योषिद्वपुः धृत उपात्तः ॥ १५ ॥

तत्ते दिदृक्षोरहं दर्शयिष्यामीत्यन्वयः । पश्यतेत्यस्यायं भावः अवश्यन्तावदुन्मत्तान् दैत्यान्वञ्चयित्वा देवेभ्योऽमृतं देयं न चेदं वैषम्यं रूपान्तरेण तथाकर्त्तमुचितमतो वंचनमोहनादिसारं कामिनीरूपं मया धृतमिति कथम्भूतं योषिद्रूपम् ? कामिनां बहुमन्तव्यं कामुकैर्बहुमाननीयं सङ्कल्पप्रभवः कामः तस्योदयो यस्मात्तादृशम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकस्य नानामतविषयत्वं न भिन्नस्येत्याह – त्वामिति । केचिद्वेदान्तिनः त्वां ब्रह्मेत्यवबन्त्यवगच्छन्ति एके स्मार्ताः धारकत्वाद्धर्मम् एके पौराणिकाः परेशं त्वां महद्मनोः परं पुरुषम् अन्ये पाञ्चरात्रिकाः त्वां विमलोत्कर्षणीज्ञानेत्यादिनवशक्तियुतं परं वदन्ति केचिदेकान्तिनः त्वामव्ययमात्मतन्त्रं महापुरुषमभिवदन्तीत्यन्वयः ॥ ९ ॥

तद्विषयज्ञानमात्रमज्ञभावाज्ञानात्त्वकल्पना इत्याशयेनाह–नाहमिति. सत्त्वसर्गाः सात्त्विकाः अत्रापि निमित्तमाह–यन्माययेति ॥ १० ॥

जन्मस्थित्यादीनां भिन्नकर्तृत्वेन नानात्वं किं न स्यादिति तत्राह–स त्वमिति । यो ब्रह्माद्यविज्ञातस्वरूपः स जगतः स्थितिजन्मनाशान् भूतेरीहितं च बन्धमोक्षावपि समीहसि करोषि हि यस्मात्तस्मान्नानात्मकत्वं भ्रान्तिरिति भावः । (१)यथासुकल्पनाखेकाविषया ततोऽन्या किं तव स्तुतिरिति तत्राह,

(१) त्वां ब्रह्मेत्यादि श्लोकाकासु ।

वायुरिति यथा वायुः खञ्चराचराख्यं सर्वं प्रविशति ततो भिन्नश्च तथा सर्वस्य त्वदात्मकतया त्वद्व्याप्तत्वेनाऽवगमो ज्ञानं ते तव नुतिः स्तुतिः स्यादित्यन्वयः । अनेन धर्मादिप्रवर्तकत्वेन तत्तच्छब्दवाच्यत्वाऽवगमः स्तुतिरित्युक्तं भवति ॥ ११ ॥

तव स्तुत्या कोऽभिप्राय इति तत्राह–अवतारा इति । अस्तु दृष्टस्ततः किमिदानीमपेक्षितमिति तत्राह, सोऽहमिति ॥ १२—१५ ॥

सङ्कल्पप्रभवस्य कामस्योदयो यस्माद्वपुषस्तत्तथा तद्वपुः कामिनीनां च मन्तव्यमिति प्रयोगः "गन्तव्या ते वसतिरलका" इतिवत्कृद्योगे षष्ठी चशब्दादकामिनामिति ग्राह्यम् ॥ १६ ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वोऽप्यतस्तु त्वां केऽपि न जानन्तीत्याह, त्वामिति ॥ ९ ॥ १० ॥

स त्वमिति टीकायाम् अवरुन्त्से व्याप्नोषि जानासि चेत्यर्थः इत्येव व्याख्येया ॥ ११ ॥ १४ ॥

दैत्यानां कौतूहलाय तद्द्वारा वञ्चनाय ॥ १५ ॥

सङ्कल्पप्रभवोदयम् उपासनया वरयोषित् प्रदम् ॥ १६ ॥ १७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेवं स्वस्वमत्यनुसारेण त्वामृषयो बहुधा वर्णयन्तीत्याह, परेशं परमेश्वरं त्वां ब्रह्म वेदान्तिनोऽवयन्ति मन्यन्ते, धर्मं मीमांसकाः, प्रकृतिपुरुषयोः परं सांख्याः, अन्ये विमलोत्कर्षिणी ज्ञाना क्रियायोगे प्रह्वीसत्या ईशाना अनुग्रहा चेत्येवं नवभिश्चिच्छक्तिभिर्युतं मिश्रितं मायाशक्तेस्तु परं पाञ्चरात्राः, महापुरुषं पातञ्जलाः ॥ ९ ॥

यद्यपि सर्वमतेषु मध्ये पञ्चरात्रमतमेव भगवन्मतं "पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्" इत्युक्तेः "तुभ्यं च नारद भृशं भगवान् विवृद्धभावेन साधु परितुष्ट उवाच योगम् । ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव" इत्युक्तेश्च तदेव तत्त्वं तदेव महाभक्तस्य शम्भोरपि मतं तदपि जानीम इत्यभिमानिनो न जानन्तीत्याशयेनाह—नेति । न केवलमहं न जानामि किन्तु परायुर्द्विपरार्द्धजीवी ब्रह्मा सत्त्वगुणेन सृष्टा अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानन्ति किं पुनस्त्वां हे ईश अभद्रं राजसं तामसं च वृत्तं येषां ते तं त्वां न जानन्तीति किमुत वक्तव्यं तेन पूर्वोक्ताः शास्त्रकृतोऽप्यभिमानिनो न जानन्तीति भावः ॥ १० ॥

तर्हि को जानातीति चेत्तत्र त्वमेव स्वं परं च जानासीत्याह–स प्रसिद्धस्त्वं सर्वमवगमः अवगच्छन् ज्ञानेनैव सञ्ज्ञवरुन्त्से व्याप्नोषि किं तत् सर्वं समीहितं स्वकृतम् अमुष्य जगतः स्थित्यादि भूतानां प्राणिमात्राणाम् ईहितं भवबन्धं च तस्मान्मोक्षं च बन्धमोक्षप्रकारं जानासीत्यर्थः । व्याप्तिमात्रे दृष्टान्तवायुरिति खं महाकाशं स्वस्थानं चराचराख्यं देहजातं च यथा विशति तथैव त्वं निजधाम श्रीवैकुण्ठमध्यासीन एव तदात्मकतया तस्य सर्वस्यात्मतयेत्यर्थः ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभिलषितं ब्रूहीति चेत्तत्राह-भवतारेति । गुणैर्भक्तवात्सल्यादिभिः ॥ १२—१३ ॥

प्रहस्येति स्वस्य योगेश्वरत्वं लोकेषु प्रख्यापयितुं मोहिनीदिदृक्षसेचेत् सत्यं ते 'तत् सर्वं व्यक्तीभविष्यतीति भावः भावगम्भीरं महादेवेनापि दुष्प्रवेशम् ॥ १४ ॥

दैत्यानां कौतूहलायेति तादृशानामेव मोहजनकं नदतिविस्मयास्पदं योषिद्वपुः युष्माकं योगेश्वराणां तु तदकिञ्चित्करं न हि मृगयुं मृगो हिंसितुं क्षमत इति भावः दैत्यानामिति तत्रैव स्थिताः सात्विकत्वाद्देवा अपि नैव मुमुहुरिति भावः । ननु दैत्यानां तुच्छानां कृते कोयं ते यत्नस्तत्राह-पश्यतिगत्यन्तराभावादिति । भावः ॥ १५ ॥

भवतु यथा तथा तदपि तदर्थमेतावद्दूरागमनं तव न मोघं भवितुमर्हतीत्याह-तदिति । विरक्तोरित्यन्यथा ते तत्रैव विशिष्टवर्धूनांपयास्यत्येवेति भावः। सङ्कल्पप्रभवः कामस्तस्योदयो यस्मात्तः कामिनां बहुमन्तव्यं तव तु कामशत्रोः काम उद्भावितुं नैव शक्नोति तदपि कौतुकं चेत् पश्यति भावो ग्राह्यः भाव्यन्तरस्तु कामजेतुरपि महायोगीश्वरस्यापि तव तद्विस्तैव कामसिन्धुमहावर्त्तनिक्षेपे हेतुरभून्मम नात्र दोष इति भावः ॥१६-१७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ यद्विज्ञानेन सर्वं विज्ञातं भवति "ब्रह्मविदाप्नोति परम्"—

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति" ॥

इत्यादिज्ञानबोधकं शास्त्रं "क अद्धा वेद, यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिज्ञानाभावबोधकं शास्त्रं चाश्रित्य त्वां यथोपदेशं यथामति बहवो जानन्ति साकल्येन तु केऽपि जानन्तीत्याह—त्वामिति, द्वाभ्याम् । परेशं सर्वेश्वरं परं पूर्णम् अव्ययं निर्विकारम् आत्मतन्त्रं स्वाधीनं त्वां केचित् "बृहत्वाद्बृंहणत्वाच्च तस्मादुच्यते परं ब्रह्म" इति श्रुत्युक्तं ब्रह्मवदत्स्वरूपगुणशक्त्याद्याश्रयं अवयन्ति जानन्ति—

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" ॥—

इत्येवं धर्ममवयन्ति, एके "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतेः । सदसतोः प्रधानक्षेत्रयोः परमवयन्ति, अन्ये—

"विमलोत्कर्षिणी ज्ञाना क्रियायोगा ततः परम् ।
प्रह्वीसत्या तथेशानाऽनुग्रहानवशक्तयः" ॥—

इत्येवं नवशक्तियुतमवयन्ति । केचित् "पुरुष एवेदं सर्वम्" इत्येवमवयन्ति, अन्ये महापुरुषम्, अन्ये अग्निप्राणजलप्रणवनामादिरूपिणं नानाविधं नानोपासकाः यथोपदेशं यथामति त्वामवयन्ति ते धन्या इति भावः ॥ ६ ॥

कात्स्न्येन तु त्वद्बोधकस्य का कथा येन त्वया विरचितं विश्वमपि परायुर्ब्रह्मा न जानाति अहं शिवो न जानामि न सत्त्वसर्गाः ऋषयो जानन्ति भ्रम्यद्भ्रमद्बुद्धयः रजस्तमःप्रकृतयः देवमर्त्यादयः न जानन्तीति किमुत वक्तव्यम् ? ॥ १० ॥

त्वमेतु सर्वं जनासीत्याह—स उक्तप्रकारस्त्वम् अवगमः परमज्ञानस्वरूपः तदात्मकतया तदन्तर्यामित्वेन सर्वगतत्वेनेत्यर्थः । सर्वमन्तस्त्वं व्याप्नोषि जानासि सर्वशब्दोक्तं विवृणोति, समीहितं स्वकृतं विश्वम् अदोऽमुष्य विश्वस्थितिजन्मनाशं च भूतानामीहितं च जगतो भवबन्धं मोक्षं च सर्वगतत्वे दृष्टान्तः वायुर्यथा चराचराख्यं देहजातं खं च आविशति तद्वत् ॥११॥

एवं स्तुत्वा स्वेप्सितं विज्ञापयति-अवतारा इति द्वयेन । गुणैर्धर्मसंस्थापनाद्यर्थमाविष्कृतैः सत्यसङ्कल्पत्वसर्वज्ञत्वादिभिः रममाणस्य ॥ १२ ॥

सोऽस्माकं परं कौतूहलं तद्दर्शनेऽत्योत्सुक्यम् ॥ १३ ॥

भावेन दुर्ज्ञेयाभिप्रायेण गम्भीरं यथा तथा प्रहस्य ॥ १४ ॥

अमृतलाभप्रतिपक्षपराजयस्थानलाभादीनि सुरकार्याणि योषिद्रूपेण भविष्यन्तीति पश्यता मया दैत्यानां कौतूहलाय योषिद्रूपः कृतः ॥ १५ ॥

सङ्कल्पप्रभवस्य कामस्योदयो यतः ॥ १६ ॥

---

भाषा टीका ।

कोई लोग आपको ब्रह्मजानते हैं कितने एक धर्म कोई कार्य कारणसे ऊंचे परम पुरुष परेशजानते हैं कोई पर कोई एक महापुरुष और अव्ययतया स्वतन्त्र आप को जानते हैं ॥ ६ ॥

हम ब्रह्मा मरीच्यादि ऋषि जिस के रचे हुए को कोई नहीं जान सके हैं, हे ईश ! सत्त्व सृष्टि वाले भी जिन की माया से खण्डित चित्त वाले हैं तो फिर सदा जो खोटे आचरण वाले हैं उनकी और मनुष्यों की कौन गति है ॥ १० ॥

जो आप अपने किये हुए जगत के स्थिति जन्म नाश और प्राणियों के चेष्टित और जगत के बन्ध मोक्ष को आप जानते हो, जैसे वायु और आकाश चराचर में व्याप्त हो रहेहैं इसी प्रकार आप भी चराचर में व्याप्त हो रहे हो ॥ ११ ॥

गुणों से रमण करने वाले ऐसे आपके बहुत अवतारों के मैंने दर्शन किये—पर आपने ये जो मोहिनी नामक योषित को रूप धारण किया इसको देखने की मैं बहुत इच्छा करता हूं ॥ १२ ॥

जिस रूप से आपने दैत्यों को मोहित किया और देवताओं को अमृत पिवाया उस उसी के देखने की इच्छा से हम सब आये हैं । हम लोगों को बड़ा कौतूहल ॥ १३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—जब त्रिशूल हस्त वाले महादेव जी ने श्रीविष्णु भगवान से ऐसी प्रार्थना करी तब श्री हरि भी गंभीर अभिप्राय से हँसकर शंभु से बोले ॥ १४ ॥

श्रीभगवान उवाच ॥

श्रीभगवान् बोले, कि—हे महादेवजी ! जब अमृत कलश देवताओं के हाथ से चला गया तब देव कार्य की उसी रीति से

श्रीशुक उवाच ।

इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ।
सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥ १७ ॥

ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ।
विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥ १८ ॥

आवर्त्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदेपदे ।
प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥ १९ ॥

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ।
स्वकर्णविभ्राजितकुण्डलोल्लसत्कपोलनीलालकमण्डिताननाम् ॥ २० ॥

श्लथद्दुकूलं कवरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ।
विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया ॥ २१ ॥

तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ।
स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २२ ॥

तस्याः कराग्रात्स तु कन्दुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः ।
वासः ससूत्रं लघुमारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः ॥ २३ ॥

एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् ।
दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल ॥ २४ ॥

भाषा टीका ।

सिद्धि देखकर हमने दैत्यों के कौतूहल के लिये योषित (स्त्री) का रूप धारण किया ॥ १५ ॥

हे सुरसत्तम ! यदि आपकी देखने इच्छा है तो हम वह रूप आपको दिखावेंगे पर वह रूप तो कामि जनों को बहुत माननीय है क्योंकि ? उसको देखकर काम का उदय अवश्य ही होता है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विचित्राणि पुष्पाण्यरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् लसद्दुकूलेन पर्यस्ते परिवृते नितम्बे मेखला यस्यास्ताम् ॥ १८ ॥

उत्पतत्पतत्कन्दुकलीलावशेन ये आवर्तनोद्वर्तने नमनोन्नमने ताभ्यां कम्पितयोः स्तनयोः प्रकृष्टहाराणां चोरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव चलत्पदमेव प्रवालवत्कोमलं ततस्ततो नयन्तीं ॥ १९ ॥

दिक्षु भ्रमतः कन्दुकस्य चापलैश्चाञ्चल्यैर्भृशं प्रोद्विग्नतारे आयते लोले चञ्चले लोचने यस्याः स्वकर्णाभ्यां विभ्राजिते ये कुण्डले ताभ्यामुल्लसन्तौ कपोलौ ताभ्यां नीलालकैश्च मण्डितमाननं यस्याः ॥ २० ॥

सन्नह्यतीं बध्नन्तीम् जगद्विमोहयन्तीम् ॥ २१ ॥

तां वीक्ष्य देवः श्रीरुद्र आत्मानमन्तिके स्थितामुमां स्वगणांश्च न वेद कथंभूतः इति एवम्भूतया कन्दुकलीलया य ईषद्व्रीडा तयाऽस्फुटं स्मितं तेन सह विसृष्टो यः कटाक्षस्तेन मुष्टो वञ्चितः अतएव स्वयं यत् स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य ॥ २२ ॥

ते कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं काञ्चीसहितम् ॥ २३ ॥

विषज्जंत्यां कुञ्चितकटाक्षैरात्मानं निरीक्षमाणायाम् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यमुक्त्वाऽन्तर्हितो भगवान् योषितं स्वनिर्मितां काञ्चिदुपवने दर्शयामासेत्याह मुनिः–इतीति । इत्थं ब्रुवाणोऽभिदधानो भगवान् तत्रैवान्तर्हितो बभूव रुद्रस्तूमया भवान्या सह सर्वतः परितश्चक्षुःप्रसारयन् सर्वत्र पश्यन्नास्ते तत्रवासाञ्चक्र ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ततश्च विचित्राणि पुष्पाण्यरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् तस्मिन्नुपवने वरस्त्रियं श्रेष्ठां स्त्रियं ददर्श भव इति शेषः । भगवन्निर्मिता काचिदियं स्त्रीः न तु स्वयं पुरुषोत्तमएव स्त्रीरूपं जग्राहेति विवक्षायेन"प्रादुरभूत् सा पृथुश्रोणी माया देवविनिर्मिता "आत्मानं देवमायया" "जडीकृतं"यन्मे दुस्तरया स्वैरं मोहितोऽप्यङ्ग मायया" इत्यनन्तरोक्तिभिस्तथावगमात् कथंभूतां वरस्त्रियं कन्दुकस्य क्रीडया विक्रीडन्तीं पार्कं पश्चतीतिर्वाक्यैर्वा: कन्दुकक्रीडाङ्कुर्वतीमित्यर्थः । यद्वा कन्दुकयोक्येति हेत्वर्थे तृतीया कन्दुकक्रीडाजन्यरसानुभवार्थं कन्दुकक्रीडां कुर्वतीमित्यर्थः । लसद्दुकूलेन पर्यस्ते परिधाने नितम्बे मेखला यस्यास्ताम् ॥ १८ ॥

उत्पतत्कन्दुकक्रीडावशेन ये आवर्तनाद्गतेन नमनोन्नमने ताभ्यां कम्पितयोः स्तनयोः प्रकृष्टहाराणाञ्चोरुभरैः पदेपदे प्रतिपदं मध्ये. प्रभज्यमानामिव स्थितां चलत्पद्ममेव प्रवालसदृशकोमलं ताद्दिनक्तितः नयन्तीम् ॥ १९ ॥

दिक्षु भ्रमतः कन्दुकस्य चापलैश्चाञ्चल्यैः भृशं प्रोद्विग्ने तारे कनीनिके ययोस्ते आयते लोचने यस्यास्तां स्वकर्णाभ्यां विभ्राजिते कुण्डले ताभ्याम् उल्लसन्तौ कपोलौ ताभ्याञ्च नीलालकैश्च मण्डितमाननं यस्यास्ताम् ॥ २० ॥

श्लथच्छिद्युतं दुकूलं शिथिलां कबरीं अमिलत्वं च वल्गुना सुन्दरेण वामहस्तेन सन्नह्यन्तीं बध्नतीम् अन्यतरेण करेण कन्दुकं विनिघ्नन्तीमात्मनः स्वसंरक्षणिच्छया मायया कपटवृत्त्या जगद्विमोहयन्तीम् ॥ २१ ॥

तां वीक्ष्य देवो रुद्रः आत्मानमप्यन्तिकस्थिताम् उमां स्वगणांश्च न वेद कथंभूतो देवः इति या कन्दुकलीला तया ईषद्व्रीडा तया स्फुटमप्रकटं स्मितं तेन सह विसृष्टो यः कटाक्षस्तेन मुष्टो वञ्चितः अत एव. स्वयं यत् स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वलः परवश आत्मा मनो यस्य तथाभूतः ॥ २२ ॥

स: क्रीड्यमानः कन्दुकः यदा तस्याः कराग्राद्विदूरङ्गतः तदा तं कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं काञ्चीसहितं मारुतो देवस्य रुद्रस्य पश्यतस्सतः जहार किल ॥ २३ ॥

एवमेवम्भूतां मारुतेनापहृतवाससं नग्नामिति यावत् रुचिरः सुन्दरोऽपाङ्गो यस्याः दर्शनीयाम् अति सुन्दरीत्वादितिभावः । मनोरमां तां दृष्ट्वा रुद्रस्तस्यां विलज्जन्त्यां लज्जया कुञ्चितकटाक्षैरात्मानं निरीक्षमाणायां मनश्चक्रे किल ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लसन्ती नितम्बे पर्यस्ता परिवृता दुकूलोपरि मेखला यस्याः सा तथा ताम् ॥ १८ ॥

आवर्तनमवाङ्नमनमुद्वर्तनमुन्नमनं ताभ्यां कम्पितयोरारब्धचञ्चलयोस्तनयोर्गुणाः प्रकृष्टहारस्य चोरुभरैः पदेपदे मध्यप्रदेशे भज्यमानामिव स्थितां ततस्ततस्ततश्च चलत्पदपल्लवं नयन्तीं प्रचालयन्तीम् ॥ १९ ॥

भ्रमतः कन्दुकस्य चापलैः चलभावैः प्रोद्विग्ने चञ्चले तारे कनीनिके ययोस्ते प्रोद्विग्नतारे ते चायते च लोले च लोचने यस्याः सा तथा तां स्वकर्णयोर्विभ्राजिते च लोलकुण्डले स्वर्णविभ्राजितलोलकुण्डले ताभ्यां उल्लसद्भ्यां कपोलाभ्यामलकैश्च मण्डितमाननं यस्याः सा तथा ताम् ॥ २० ॥

सन्नह्यन्तीं बध्नतीम् आत्ममायया स्वरूपशोभाविर्भावविडम्बया ॥ २१ ॥

व्रीडासहितेन स्मितेन स्फुटेन प्रफुल्लेन विसृष्टेन दिक्षु मुक्तेन च कटाक्षेण मुष्टः संप्रेक्षणसमीक्षणाभ्यां निवृत आह्लादित आत्मा यस्य स तथा भूतः ॥ २२ ॥

स्त्री रुद्रं पश्यति रुद्रः स्त्रियं पश्यतीति भावेन तं कन्दुकमनुव्रजन्त्याः स्त्रियाः ॥ २३ ॥

विलज्जन्त्यां लज्जाभावं कुर्वन्त्याम् ॥ २४ ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत इति चतुष्कम् ॥ १८—२५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लसद्दुकूलेन हेतुना परि सर्वतो भावेन अस्ते अदर्शनं प्राप्ते नितम्बे मेखला यस्यास्ताम् ऊर्ध्वमुत्क्षिप्तं कन्दुकं गृहीतुं यत् स्वकायावर्तनमाकुञ्चितस्यावनमनमुद्वर्तनमुन्मुखत्वेन वृत्तिस्तेन कम्पितयोः स्तनयोः प्रकृष्टहाराणां चोरुभारैः प्रतिपदं मध्यतः मध्यदेशे भज्यमानामिव चलत्पदमेव प्रवालवत् मृदुलं ततस्ततो नयन्तीम् ॥ १८—१९ ॥

दिक्षु भ्रमतः पतदुत्पतत् चतुर्दिक्षु विचलमानस्य कन्दुकस्य चापलैश्चाञ्चल्यैर्हेतुभिः प्रोद्विग्नतारे आयते लोले लोचने यस्यास्ताम् ॥ २० ॥

सन्नह्यन्तीं बध्नतीम् आत्मनो मायया बहिरङ्गशक्त्यैव जगन्मोहयन्तीं सम्प्रति जितमायमात्मारामम् अपि शंभुम् आत्मस्वरूपेणैव मोहयन्तीमिति भावः ॥ २१ ॥

देवः श्रीरुद्रः इति एवंभूतया कन्दुकक्रीडयैव मां कश्चित् सुन्दरः पुरुषः पश्यतीति प्रमाणितया बुद्ध्या या ईषद्व्रीडा कन्दर्पविकारद्योतकी तया कृतं यत् स्फुटस्मितं ताभ्यां सह विसृष्टो यः कटाक्षस्तेन मुष्टः चोरितयोगैश्वर्यविवेकादिस्तजडीभूत इत्यर्थः । स्वयं स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य सः ॥ २२ ॥

तं कन्दुकमनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मं वासः सूक्ष्मशाटिकां ससूत्रं सूत्रबद्धम् अहरत् उत्क्षिप्य ॥ २३ ॥

विलज्जन्त्यां मां पश्यति न पश्यतीति द्योतकैः कुञ्चितकटाक्षैर्महादेवं आसक्तिममितयन्त्याम् ॥ २४ ॥

तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः।
भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २५ ॥
सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम्।
निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

समन्ता शोभमानेन दुकूलेन पर्यन्ते संवृते नितम्बे मेखला यस्यास्तां कन्दुकलीलावशात् ॥ १८ ॥

आवर्तनोद्वर्तनाभ्यां नमनोन्नमनाभ्यां कम्पितयोस्तनयोः प्रकृष्टानां हाराणामुरुभारैश्च पदे पदे मध्यतः प्रभज्यमानामिव चलत्पदमेव प्रवालवत्कोमलमरुणां च ततस्ततो नयन्तीम् ॥ १९ ॥

दिक्षु भ्रमतः कन्दुकस्य चापलैश्चाञ्चल्यैः भृशमत्यर्थं प्रोद्विग्ने तारे यथोस्ते आयते लोले चपले लोचने यस्यास्तां स्वकर्णयोर्विभ्राजिताभ्यां कुण्डलाभ्यामुल्लसन्तौ कपोलौ ताभ्यां च नीलैरलकैश्च मण्डितमाननं यस्यातां ॥ २० ॥

श्लथत् विस्रस्तं दुकूलं कबरीं च सव्यहस्तेन बध्नतीम् ॥ २१ ॥

देवः महादेवः इति पत्रस्भूतां तां मोहिनीं वीक्ष्य आत्मादीन् न वेद कीदृशः कन्दुकलीलया ईषद्व्रीडया स्फुटाकिमनं तेन सह निसृष्टो यः कटाक्षः तेन मुष्टो विवशः अत एव स्वयं सत्स्त्रियाः प्रेक्षणां तथा च यत्प्रतिसमीक्षणं ताभ्यां विह्वलो व्याकुल आत्मा चित्तं यस्य सः ॥ २२ ॥

अनुव्रजन्स्त्रियाः अनुव्रजन्त्याः स्त्रियाः लघु सूक्ष्मम सूत्रेण काञ्च्या सहितं वासः ॥ २३ ॥

रुचिरोऽपाङ्गो यस्यास्तां विपजन्त्यां प्रत्यासक्ति लज्जया कुञ्चितकटाक्षैर्योतयन्त्याम ॥ २४ ॥

---

भाषा टीका।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—भगवान् तो इतना कहते २ वहीं अंतर ध्यान होगये, पार्वती सहित महादेवजी चारों तरफ को नेत्र चलाते हुए बैठे रहे ॥ १७ ॥

इतने में ही श्रीशंकर को उसी बगीचे में एक अति सुन्दर स्त्री देख पड़ी, और वह क्या कर रही है ? कि—जहां विचित्र पुष्प और अरुण पल्लव वाली वृक्षावली शोभा दे रही है उसी जगह गेंद हाथ में लिये हुये क्रीड़ाकर रही, और बहुत महीन वस्त्र से ढकी हुई है नितंब के ऊपर मेखला ( कौंधनी ) जा की ऐसी स्त्री देखी ॥ १८ ॥

फिर वह कैसी है, कि—गेंद के ऊंचे नीचे जाने से उछलने और नमने में दोनों स्तनों पर उत्तम हार जिस के हलचल होरहे हैं, जंघाओं के भारी होने से और मध्यभाग के बहुत सूक्ष्म होने से कंदुक ( गेंद ) के फेंकने में रोकने में और किसी समय उठाने में महादेवजी को ऐसी शंका उत्पन्न करती है कि-इतने जल्दी में वह पतली कमर कहीं टूट न जाय - और जहां २ वह गेंद जावे वहां २ अपने कोमल पद पल्लवों को परिश्रम से लेजा रही है ॥ १९ ॥

दिशाओं में फिरती हुई गेंद के ऊपर दृष्टि लगाने से गेंद की चपलता से अति उद्विग्न नेत्रों के तारे और नेत्र भी चंचल होरहे हैं, और दोनों कर्णों में धारण किये जो कुंडल उनसे अति शोभायमान कपोलों पर नीली अलकें जो लटकी हैं तिन से बहुत ही शोभा युक्त मुख है जिसका ॥ २० ॥

जो सूक्ष्म वस्त्र धारण किया है वह कन्दुक क्रीडा से ढीला पड़ गया है उसको और शिरसे वेणी के खुल जाने से वस्त्र को और केशों को बायें हाथ से सम्हालती बांधती जारही है, पर गेंद के खेल को नहीं छोड़ा किंतु कौतुक पूर्वक दहिने हाथ से गेंद का ताडन करती जारही है इस प्रकार जगत को मोह करने वाली उस स्त्री को शिव ने देखी ॥ २१ ॥

उसको देखकर, उसकी ऐसी गेंद की लीला से किंचित् लज्जा सहित अप्रकट मंद हसन पूर्वक कटाक्ष से महादेवजी तो लुट गये, बस स्त्री को आप टक टकी लगाकर देख रहे हैं कंदुक क्रीडा करती हुई वह भी कभी इनको देख लेती है इतने ही में श्रीभोलानाथ ऐसे विह्वल होगये, कि—हम कौन हैं और कहां है और किस लिये आये, और पार्वती कहां और हमारे गण कहां है यह कुछ आपको खबर न रही ॥ २२ ॥

एकवार जो गेंद उस स्त्री के हाथ की चोट खाकर दूर दुलती हुई चली गई तब वह स्त्री भी उसके पीछे वेग से दौड़ी इतने में शंभु के देखते २ उस स्त्री का वस्त्र शिथिल तो रहाई था आया जो पवन का झोंका भोर्ड वह हलका • वस्त्र सूक्ष्म कटि सूत्रसहित, शरीर से अलग होकर उड़ गया ॥ २३ ॥

इस तरह रुचिर कटाक्ष वाली बहुत ही सुन्दर देखने के योग्य और मन को हरने वाली स्त्री को हरने नग्न देखी और देख कर उसके बीच आपने मन लगाया, भोलानाथ ने जाना कि यह भी हमको चाहती है तब तो मन किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्पदं तस्याः समीपं ययौ ॥ २५—२६ ॥

तामन्वगच्छद्भगवान् भवः प्रमुषितेन्द्रियः ।
कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २७ ॥
सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ।
केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २८ ॥
सोपगूढा भगवता करिणा करिणी यथा ।
इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २९ ॥
आत्मानं मोचयित्वाङ्ग ! सुरर्षभभुजान्तरात् ।
प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता ॥ ३० ॥
तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ।
प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः ॥ ३१ ॥
तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः ।
शुष्मिणो यूथपस्येव वासितामनुधावतः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अङ्ग, हे राजन् ! ॥ ३०—३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तयाऽपहृतविवेको ऽत एव तया कृत उत्पादितः स्मरः कामः तेन विह्वलोऽत एव गता ह्रीर्यस्य "कामातुराणां न भयं न लज्जा" इतिन्यायादेवंभूतो रुद्रः भवान्याः पश्यन्त्याः सत्या अपि तत्पदं तस्याः समीपं ययौ गतः ॥ २५ ॥

समायान्तं रुद्रं विलोक्य सा स्त्री: विगतवस्त्रा ऽत एव भृशं व्रीडिता वृक्षेषु निलीयमाना तिरोदधाना हसन्ती नान्वतिष्ठत क्वचित् स्थिरं न तस्थौ ॥ २६ ॥

तामनुतिष्ठन्तीम् भगवान् भवोऽन्वगच्छत् कथम्भूतः प्रमुषितानि क्षोभितानीन्द्रियाणि यस्य कामवश्यतां प्राप्तः यथा यूथपो गजः करेणुम् इभीमनुगच्छति तद्वत् ॥ २७ ॥

सोऽनुगतो रुद्रोऽतिवेगेन समीपमेत्यानिच्छन्तीमपि स्त्रियं केशबन्धे गृहीत्वा स्वसमीपं प्रापय्य बाहुभ्यामालिङ्गितवान् ॥ २८ ॥

यथा करिणा गजेन करिणी तथा भगवता रुद्रेण उपगूढा परिष्वक्ता, विप्रकीर्णाः शिरोरुहाः केशाः यस्याःसा इतस्ततः प्रसर्पन्ती सुरर्षभस्य रुद्रस्य भुजयोरन्तरान्मध्यादात्मानं सा मोचयित्वा अङ्ग, हे राजन् ! देवेन भगवता विनिर्मिता सा पृथुश्रोणी मायामोहिनी भगवन्मायाविनिर्मिता वा सा योषित् प्राद्रवत् प्राधावत् ॥ २९ ॥ ३० ॥

वैरिणा कामेन विनिर्जित इवासौ रुद्रस्तस्याद्भुतकर्मणः विष्णोर्विष्णुनिर्मितायाः योषितः पदवीमन्वगच्छत् ॥ ३१ ॥

शुष्मिणः मत्तस्य यूथपस्य वासितां पुष्पवतीं गजीमनुधावत इव तस्य तामनुधावतोऽमोघरेतसो रुद्रस्य रेतश्चस्कन्द अक्षरत् ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नान्वतिष्ठत नाऽनुकूलाऽभूत् ॥ २६ ॥ — ॥ ३० ॥
वैरिणा पुरुषार्थविरोधिना विरुद्धप्रेरणावता वा ॥ ३१ ॥
शुष्मिणः वीर्यवतः वासितां मैथुनेच्छावतीं करिणीम् ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विवस्त्रा स्खलद्दुकूला ॥ २६-२८ ॥
सोपगूढेति । युग्मकम् मोहिनी, माययाऽऽवेशमात्रं न तु स्त्रीत्वमिति बोध्यं यूथपस्य करीन्द्रस्य ऋतुमतीं करिणीम् ॥ २९-३३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्पदं तस्याः स्थानम् ॥ २५ ॥

विवस्त्रा स्खलद्दुकूला नान्वतिष्ठत भवम् अनुकूलीकृत्य न स्थितवती किन्तु दुद्राव एव ॥ २६—२९ ॥

मायया योगमायया देवेन हरिणा विनिर्मिता प्रकटीकृता ॥ ३० ॥

यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः ।
तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते ॥ ३३ ॥
सरित्सरस्सु शैलेषु वनेषूपवनेषु च ।
यत्र क्व चासन्नृषयस्तत्र सन्निहितो हरः ॥ ३४ ॥
स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ॥
जडीकृतं नृपश्रेष्ठ ! सन्न्यवर्तत कश्मलात् ॥ ३५ ॥
अथावगतमाहात्म्य आत्मनो जगदात्मनः ॥
अपरिज्ञेयवीर्यस्य न मेने तदुहाद्भुतम् ॥ ३६ ॥
तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ॥
उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम् ॥ ३७ ॥

श्रीभगवानुवाच ॥

दिष्ट्या त्वं विबुधश्रेष्ठ ! स्वां निष्ठामात्मनास्थितः ॥
यन्मे स्त्रीरूपया स्वैरं मोहितोऽप्यङ्ग ! मायया ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इवेत्युत्प्रेक्षाद्योतकं वस्तुतस्तु भगवतैव विनिर्जित इत्यर्थः ॥३१॥ शुष्मिणो मत्तस्य यूथपस्य हस्तीन्द्रस्य रेतसोऽमोघत्वम् स्वर्णत्वेन परिणामात् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपहृतं विज्ञानं विवेको यस्य सः तत्पदं तयाधिष्ठितं स्थलम् ॥ ॥ २५—२६ ॥

देवेन हरिणा विनिर्मिता आविःकृता माया मोहिनीमूर्तिः ॥ ३० ॥

विष्णोर्मोहिनीरूपस्य पदवीं मार्गम् अन्वपद्यत अन्वगच्छत ॥३१॥

अस्कन्द् अक्षरत् ॥ ३२ ॥ ३३ ॥

---

भाषा टीका ।

जब उसने आपका मन विज्ञान भी हर लिया और उसको देखकर उत्पन्न हुआ जो काम जिससे अति विह्वल होगये और पार्वती जी देखती रही गण देखते रहे, इनके देखते २ निर्लज्ज होकर उस स्त्री के समीप महादेव जी गये ॥ २५ ॥

वह स्त्री भी शंकर को आते हुए देखकर बिना वस्त्र के बहुत ही लज्जित हुई, और भोलानाथ के पकड़ने के डरसे उस वृक्षावली में छुपती हुई एक जगह स्थित नहीं रही पर बीच २ हँसती भी जाती रही ॥ २६ ॥

ठगी गई इन्द्रियें जिनकी ऐसे भगवान् श्रीमहादेव जी काम के वस होकर, जैसे यूथप हाथी हथिनी के पीछे जावे तैसे उस स्त्री के पीछे जाते हुए ॥ २७ ॥

शिवजी ने बड़े वेग से दौड़कर इच्छा न करने वाली उस स्त्री की चोटी के बँध को पकड़ कर समीप लाकर दोनों बाहुओं से आलिंगन किया ॥ २८ ॥

भगवान् श्रीमहादेव जी ने उस स्त्री का आलिंगन किया जैसे उन्मत्त हस्ती हस्तिनी का करे, पर उस स्त्री के केश भी खुल गये और तौ भी वह इधर उधर को छूटने को तड़फड़ाती रही ॥ २९ ॥

हे राजन् ! किसी प्रकार शंकर के दोनों बाहुओं के बीच में से झटक कर अपने शरीर को छुड़ा कर बड़े नितंब वाली मानो देव विनिर्मित साक्षात् माया हो ऐसी रूप वाली वह स्त्री भाग चली ॥ ३० ॥

श्रीशुकदेवजी कहते हैं, कि उन अद्भुतकर्मा विष्णु के पीछे रुद्र भागे, उस समय ऐसा मालूम पड़ा कि–जैसे वैरी कामदेव ने रुद्रको अच्छी तरह पछाड़ दिया हो ॥ ३१ ॥

उन अमोघ वीर्य वाले शंकर का पीछे २ दौड़ते में वीर्य पतन होता हुआ, जैसे ऋतु के समय वाली हथिनी के पीछे जाने वाले मदोन्मत्त हाथी का ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च सन्निहितो बभूव ॥ ३४ ॥ ३५ ।

**कोनु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ॥**
**तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः ॥ ३९ ॥**
**सेयं गुणमयी माया न त्वामभिभविष्यति ॥**
**मया समेता कालेन कालरूपेण भागशः ॥ ४० ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदुह देवमायया जडीकरणम ॥ ३६ ॥ ३७ ॥

स्वां निष्ठां प्रकृतिम् ॥ ३८ ॥ ३९ ॥

कालेन सृष्ट्यादिनिमित्तेन मया कालरूपेण भागशो रज आद्यंशेन समेता मदधीना सती ॥ ४०—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अमोघरेतस्त्वमेवाह-यत्रेति । मह्यां यत्रयत्र स्थले महात्मनस्तस्य रुद्रस्य रेतोऽपतत्तानि स्थलानि हे महीपते ! रौप्यस्य रजतस्य हेम्नः सुवर्णस्य च क्षेत्राण्यासन् बभूवुः ॥ ३३ ॥

किञ्च यत्र क्वचयत्र सरिदादिषु रेतोऽपतत्तत्र रुद्रः संनिहितो बभूव तत्र तदुपासका ऋषयश्च आसन् बभूवुः ॥ ३४ ॥

एवं रेतसि स्कन्ने सति देवमायया योषिता जडीकृतमात्मानं स रुद्रोऽपश्यत् ततः हे नरश्रेष्ठ ! कश्मलात्कामात्सन्न्यवर्तत ॥ ३५ ॥

अथानन्तरमपरिज्ञेयं परितो ज्ञातुमशक्यं वीर्यं चेष्टितं यस्य तस्य जगदात्मनः परमात्मनो यन्माहात्म्यं तदवगतं ज्ञातं येन स तथाभूतो रुद्रस्तदुह तच्च योषिद्रूपं तच्चेष्टितं च महदद्भुतं अदृष्टाश्रुतपूर्वं मेनेऽमन्यत ॥ ३६ ॥

ततो भगवान् मधुसूदनः स्वां तिरोधापितां पौरुषीं तनुं बिभ्रदाविर्भावयन् स्वयमाविरभूदित्यर्थः । अविक्लवं भ्रूणव्रीडं निर्लज्जं च तं रुद्रमालक्ष्य नितरां प्रीतस्सन् जगाद ॥ ३७ ॥

तदेवाह-दिष्ट्येति त्रिभिः । हे विबुधश्रेष्ठ ! त्वं स्वां निष्ठां प्रकृतिं कामविकाररहितं दैवादात्मना स्वेनैवास्थितः स्थितः लब्धवान् मन्मायाया दुरत्ययत्वादिति भावः । तद्दुरत्ययत्वमेवाह-यदिति । अङ्ग हे रुद्र ! यद्यस्मात्त्वं मे मम मायया दुस्तरया स्वैरं यथेच्छं नितरामित्यर्थः । मोहितोऽसि मोहं प्रापितोऽसि इत्यर्थः । एवं मोहितस्य तव स्वनिष्ठालाभो दैवात्संपन्न इति भावः ॥ ३८ ॥

दुस्तरत्वमेवाह-कोन्विति । त्वां विना कोनु पुमान् मम मायां विषक्तः विषयासक्तोऽतितरेत्, विषक्तः इत्यनेन जितेन्द्रियस्तु मत्प्रपन्नोऽतितरेदेवेति सूचितम्. कथम्भूता अकृतात्मभिरजितेन्द्रियैः दुस्तरां तांस्तान् भावान् कामक्रोधादीन् विसृजन्तीम् ॥ ३९ ॥

एवं स्वमायाया दुस्तरत्वमभिधाय तां तितीर्षतया तस्याऽनभिभवमनुगृह्णाति-सेयमिति । सेयमुक्तविधा त्रिगुणात्मिका कालेन कालशरीरकेण मया सृष्ट्याद्युचितकालेन भागशः रज आद्यंशेन समेता व्याप्ता माया त्वां नाभिभविष्यति मोहितं न करिष्यतीत्यर्थः ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(१)रुद्रस्य क्षेत्राणि हेम्नश्च क्षेत्राणि स्वर्णाकाराण्यासन् ॥ ३३ ॥

क्व च यत्र क्व च सरिदादिषु रेतः क्षेत्रेषु ऋषय आसन् तत्र भवश्च संनिहितोऽभवत् ॥ ३४ ॥ ३५ ॥

बुद्धिभ्रंशकरं कश्मलं निवृत्तमिति यस्मात्तस्मात्तदुदाहृतम्तां प्राप्यमोक्तिम् ॥ ३६ ॥

अविक्लवं स्वस्थम् अव्रीडं कामजनकलज्जारहितम् ॥ ३७ ॥

स्वां निष्ठां भक्तिलक्षणां आत्मना मनसा कुत इति तत्राह यत इति ॥ ३८ ॥

दुरन्ते जीवराशौ कश्चिन्मायां तरेत् वैचिदयादिति तत्राह-ऋते त्वदिति । विषये विषक्तः "ये ये विषयपाशबन्धकास्तांस्तान् भावान् कश्चिद्धीरः प्रत्यगात्मानमैक्षत" इति श्रुतेः । मायातरणपटूनां सद्भावात्कथं कोन्वित्याक्षिप्यत इति तत्राह, दुस्तरामिति ॥ ३९ ॥

मदनुग्रहवतः सुतरां त्याह-सेयमिति । भागशः एकदेशेनापि ॥ ४० — ॥ ४५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र च हेमक्षेत्रात् रुद्रत्वं विविच्याह-सरिदिति । सरिदादिषु विशेषं दर्शयति, यत्र क्वचेति ॥ ३४ ॥ ३५ ॥

आत्मनः स्वीयपरमस्वरूपस्य जगतोऽपि परमस्वरूपस्य तदन्तर्यामिणश्च ॥ ३६ ॥

तद्रूपतास्फुरणादेवाविक्लवं पराभवजग्लानिरहितम् अव्रीडश्च ॥ ३७-३९ ॥

सेयमिति पूर्ववत्तु मदिच्छया तया मोहितत्वात् ॥ ४०—४२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

(१)रुद्रस्येति तानि क्षेत्राणि रुद्रदेवतानीत्यन्यस्तेभ्यो हेमबिन्दुभिः प्रथमं रुद्रः प्रसादनीय इति भावः ॥ ३३ ॥

एवं तामनुधावन् हरः सरिदादिषु संनिहितो बभूवेति मोहिन्यास्तत्र तत्र धावनं तत्रस्थानृषीन् हरस्य योगभ्रंशं मान्ना-

(१) तानि रुद्रस्य हेम्नश्च इति मूलपाठः । विज० चक्र०

### श्रीशुक उवाच ।

**एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ॥**
**आमन्त्र्य तं परिक्रम्य सगणाः स्वालयं ययौ ॥ ४१ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दर्शयितुमिति ध्वनिः तेन मुनिभिर्योगारूढैरपि विजितमपि स्वमनो युवतिषु न विश्वसनीयमिति शिक्षणमनुध्वनितः ॥ ३४ ॥

स्कन्नं सम्पूर्णं सतीत्यर्थः । मोहिनी प्रथमदर्शनक्षणमारभ्यैव तया जडीकृत एवासीत् तदानीमपश्यदिति जडीकृतत्वेनानुसन्धानाभावादित्यर्थः । कश्मलात् मोहिन्यनुधावनात् ॥ ३५ ॥

अथ स्वविवेकोत्पत्तिक्षण एव मोहिनीमन्तर्हितामालक्ष्य भगवतं स्वमोहविवेकौ भगवदधीनाविति माहात्म्यं येन सः आत्मनो हरेः यद्वा आत्मनः स्वस्य अवगतमाहात्म्यः ज्ञानयोगैश्वर्यप्रभावः तत् जडीकरणं विवेकप्रदानं च अद्भुतं न मेने तत्र हेतुः जगदात्मनः जगन्मध्यवर्त्तिनं मामपि मोहयितुं प्रबोधयितुं च समर्थस्येत्यर्थः ॥ ३६ ॥

हन्त हन्त महायोगेश्वरोऽप्यहं विषयान्ध एवाऽभूवमित्यनुतापराहित्यादविक्लवं स्वान्तर्यामिणि का लज्जेत्यव्रीडम् अयं भावः नाहमन्येन केनापि मोहयितुं शक्यः मत्प्रभुणा तु मन्मोहनं न दूषणमहं प्रत्युत भूषणमेवाहं मन्ये ममाऽपि मोहनं विना मत्प्रभोरात्यन्तिकं प्रभुत्वमेव कुत इति प्रभुत्वातिशयो दासस्य मे भक्त्युत्कर्षमेव पुष्यतीति ॥ ३७ ॥

स्त्रीरूपया मोहिन्याख्यस्वरूपभूतया मायया मोहितोऽपि स्वां निष्ठां भक्त्युत्थदैन्यमयीं निरहङ्कारतामित्यर्थः ॥ ३८ ॥

जगन्मोहिन्या मद्बहिरङ्गमायया तु त्वं नैव मोहितो वर्त्तस इत्याह—कोन्विति । विषक्तः मायिकविषयासक्तः सन् को मायां तरेत् तरते त्वां विना त्वं तु मायायामासक्तोऽपि मायामतर इत्यर्थः । मायां विशिनष्टि—भावान् रजस्तमोमयान् कामादीन् ॥ ३९ ॥

सैव केति चेदतः स्वाकुलया तत्समीपस्थां दुर्गान्दर्शयति—सेयमिति । कालेन कारणेन मया जगत् सृजता समेता सहिता मया कीदृशेन भागशोंऽशेन कलयति ईक्षणेनाङ्गीकरोतीति कालः पुरुषो रूपं यस्य तेन ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सरिदादिषु यत्र क्वचन ऋषयस्तदाश्रमेषु च हरः सन्निहितस्तस्याः यत्नात्तस्याः पृथगन्वगो बभूव ॥ ३४ ॥

देवस्य मायया मोहिनीमूर्त्या ॥ ३५ ॥

जगदात्मनः अवगतं माहात्म्यं येन सः आत्मनः स्वस्य तज्जडीकृतत्वमद्भुतं न मेने ॥ ३६—३७ ॥

निष्ठां प्रकृतिम् मोहिनीमूर्तिधरेण मोहितोऽपि मदनुग्रहाद्विमोहोऽसीत्यर्थः ॥ ३८ ॥

अथ मदीयेन मोहिनीरूपेण त्वद्विधोऽपि मोहितो भवतीति का कथा मन्मायया सर्वोऽपि जनो मोहितोऽस्तीति सूचयन् अकृतात्मभिर्दुस्तरा त्रिगुणा मायापि मदनुग्रहात्त्वां नाभिभविष्यतीत्याह क इति द्वाभ्याम् ॥ ३९ ॥

कालेन कालशक्तिना मया सृष्ट्यादिकर्त्रा विभागशः रजआदिप्रवर्त्तनेन हेतुना समेता अधिष्ठाता ॥ ४०—४१ ॥

---

भाषा टीका ।

हे महीपते ! उन महात्माजी का पृथिवीमें जहां वीर्य गिरा वे सब सोने और चांदी ( अथवा रुद्र ) की खानें हो गईं ॥ ३३ ॥

नदी तलाव पर्वत वन उपवनों में जहां कहीं ऋषिलोगों के आश्रम रहे तहां तहां भगवान भागे और पीछे २ हर भी उसी जगह होकर नङ्ग धड़ङ्ग दौड़ते गये ॥ ३४ ॥

हे नृपश्रेष्ठ ! वीर्य पतन होने के पीछे महादेवजी ने अपने को देव माया से जड़ किया हुआ जाना तब दुःख से निवृत्त हुये ॥ ३५ ॥

तदनन्तर जगदात्मा अपरिमेय वीर्यवाले श्रीहरि का माहात्म्य जानकर शिवनेभी अपने ऊपर बीती हुई बात को कुछ अद्भुत नहीं समुझी ॥ ३६ ॥

श्रीमधुसूदन भगवान भी शङ्कर को अविकल और अलज्जित देखकर परम प्रसन्न होकर अपने पुरुष शरीर को धारण कर श्रीभगवान कहने लगे ॥ ३७ ॥

श्रीभगवानुवाच ॥

श्रीभगवान बोले, कि हे विबुधश्रेष्ठ, ! तुम धन्य हो, जो कि हमारे स्त्रीरूप मायासे मोहित भी होकर ज्ञान के बल से अपने स्वरूपसे चलायमान न हुये ॥ ३८ ॥

विषयों मे आसक्त होनेवाला कौन पुरुष तुमारे बिना हमारी माया को तर सक्ता है, दिन २ मृगतृष्णा कीसी विषयों में सुख लेश दर्शाने वाली ऐसी हमारी माया अजितेन्द्रिय पुरुषों को बहुत दुस्तर है ॥ ३९ ॥

ऐसीप्रभाव वाली त्रिगुण मयी ये हमारी माया अब तुम को मोहित नहीं करेगी, क्योंकि-सृष्ट्यादिकों का कर्ता कालरूप हम हैं, और रज आदि उत्पन्न करने वाली माया भी हमारे ही आधीन है ॥ ४० ॥

आत्मांशभूतां तां मायां भवानीं भगवान् भवः ॥
शंसतामृषिमुख्यानां प्रीत्याचष्टाथ भारत ! ॥ ४२ ॥
अपि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ॥
अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुतास्वतन्त्राः ॥ ४३ ॥
यं मामपृच्छस्त्वमुपेत्य योगात्समासहस्रान्त उपारतं वै ॥
स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४४ ॥

श्रीशुक उवाच ।

इति तेऽभिहितस्तात ! विक्रमः शार्ङ्गधन्वनः ॥
सिंधोर्निर्मथने येन धृतः पृष्ठे महाऽचलः ॥ ४५ ॥
एतन्मुहुः कीर्त्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ॥
यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम् ॥ ४६ ॥
असदविषयमङ्घ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयत्सिन्धुमथ्यम् ।
कपटयुवतिवेषो मोहयन्यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥४७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे शंकरमोहनंनाम
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अध्यायार्थनिगमनम् इतीति ॥ ४५ ॥

एतत्कीर्तनादौ फलमाह—एतदिति ॥ ४६ ॥

भगवता कृतं भक्तानुग्रहं स्मरन्नमस्करोति—असदविषयम् भावो भजनं तेन गम्यमङ्घ्रिं प्रपन्नान् शरणागतान् सिन्धुमथ्यं सिन्धोर्मथनेन जातममृतं य आशयदभोजयत् ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमित्थं हे राजन्! भगवता श्रीवत्साङ्केन सत्कृतोऽनुगृहीतो रुद्रस्तं श्रीवत्साङ्कमामन्त्र्यानुज्ञाप्य तेनानुज्ञातस्तं परिक्रम्य प्रणम्य च सगणः सप्रमथादिगणः स्वालयं कैलासाद्रिं जगाम ॥ ४१ ॥

अथानन्तरं हे भारत ! ऋषिमुख्यानां पश्यतां सतां भगवान् भवः आत्मनोंऽशभूतां शरीरार्द्धभूतां तां भवानीं प्रत्याचष्ट उवाच ॥ ४२ ॥

तदेवाह—अपीति द्वाभ्याम् । परदेवताया अजस्य कर्माधीनोत्पत्तिरहितस्य परमपुरुषस्य मायां त्वमप्यपश्यः मायामाहात्म्यम् अपश्यः किमित्यर्थः । तदेव दर्शयति, कलानां विद्यानामृषभोऽधिपतिरस्वतः पारवश्यरहितश्चापि अहं यया मायया मुह्ये मोहितवानस्मि किंपुनरस्वतन्त्राः मर्त्यदैत्यादयो मुह्यन्तीति ॥ ४३ ॥

समासहस्रान्ते अनेकसंवत्सरसहस्रपर्यन्तं तपस्तप्त्वा तदन्ते योगात्तपोयोगादुपारतं निवृत्तं मां त्वं यदपृच्छस्त्वमुपास्यं वस्तु किमिति पृष्टवत्यसि स मया उपासितः साक्षादेव एष पुराणः पुरुषः यत्र यस्मिन् पुराणे पुरुषे कालो न विशति यं कालो न कलयति कालापरिच्छिन्न इत्यर्थः । यश्च कालादिकं सर्वं वस्तुजातं युगपत् साक्षादेव सर्वदापि वेद इत्यर्थः ॥ ४४ ॥

अष्टाध्यायार्थं निगमयति मुनिः—इतीति । हेतातेति वात्सल्यातिशयद्योतनं हे राजन्नित्थं शार्ङ्गधन्वनोऽजितस्य विक्रमः ते तुभ्यं मया अभिहितः कथितः कोऽसौ? येनाजितेन कूर्मरूपिणा सिन्धोः क्षीराब्धेः निर्मथने काले महाचलो मन्दराचलः पृष्ठे धृतः ॥ ४५ ॥

अष्टाध्यायार्थश्रवणादिफलमाह—एतदिति । एतत्सिन्धोर्निर्मथनादिकं पुनः पुनः कीर्तयतः कथयतः शृण्वतश्च समुद्यमः प्रयत्नः क्वचिदपि देशे जातु कदाचिदपि काले न रिष्यति "रिष हिंसे" नश्यति न नश्यति न विफलो भविष्यतीत्यर्थः । कुतः यद्यस्मादुत्तम-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्लोकस्य भगवतो गुणानामनुवर्णनं समस्तानां संसारभ्रमाणां श्रयाणामाध्यात्मिकादितापानामपहन्तृ ॥ ४६ ॥

भक्तपक्षपातं स्मरन्नमस्करोति - असाविति । मथो मथनं तत्र जातं मथ्यं सिन्धोर्मथने जातममृतं यः कपटयुवतिवेषः सुरारीन्दैत्यान्मोहयन् प्रपन्नानमरश्रेष्ठानाशयदपाययदसमतामांजनोन्द्रियाणामविषयोऽगम्योऽङ्घ्रिर्यस्य तं भावेन भक्त्यागम्यमुपसृतानामात्मानमनुवर्तमानानां कामानिष्टार्थान् पूरयतीति तथा तं नतोऽस्मि कर्त्तरि क्तः नमस्कृतवानस्मीत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भागवत एकदेशेनापि उत्तमश्लोकस्य हरेर्गुणानुवर्णनं समस्तसंसारपरिभ्रमविनाशनमिति यद्यस्मात्तस्मान्निरन्तरमेतदनुशृण्वतः कीर्तयतः पुरुषस्य समुद्यमः समीचीनः प्रयत्नो जातु न रिष्यते न नश्यति "रीङ्क्षये" ॥ ४६ ॥

निरन्तरमनुस्मरणार्थं पूर्वोक्तगुणविशिष्टत्वेन तं श्रीनारायणं नमति—असदविषयमिति । यो भावेन भक्त्या गम्यं प्राप्यं चासता मभक्तानामविषयमङ्घ्रिं प्रपन्नानमरवर्यान् सिन्धोर्मथनोद्भूतममृतमाशयदपाययत् कीदृशः कपटयुवतिवेषः सुरारीन् असुरान् मोहयन् उपसृतानां शरणं गतानां पुंसां कामपूरम् अभीष्टदं तमिमं श्रीनारायणं नतोऽस्मीत्यन्वयः । अनेनैवंविधे भगवति भक्तिः कर्त्तव्येति सिद्धमित्युक्तं भवति ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

"अयि ! व्यपद्यस्त्वमजस्य मायाम्" इत्यनेन स्वांशभूताया मायाया देव्याः सकाशादस्याः परमवैलक्षण्यं दर्शितम् ॥ ४३ ॥

यंमामित्यादिकं भगवत्सन्दर्भे भगवत एव परमतत्त्वरूपत्वे समुदाहार्यम् ॥ ४३—४६ ॥

असदविषय इत्यादिना बहिर्मुखनिष्कामसकामभक्ताः क्रमेण दर्शिताः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रीवत्साङ्कमित्यनेन प्रणतः स उत्थाप्य वक्षसा संस्पृश्य आलिङ्गित इत्यर्थः ॥ ४१ ॥

शंसतां प्रशंसतस्तान्मुनीननादृत्य ॥ ४२—४३ ॥

न विशते इति कालः सर्वत्र प्रभवितुं विशन्नपि यत्र न विशति वेदः सर्वं जानन्नपि यत्र ज्ञातुं न विशति कालवेदयोरपि यो न गम्य इत्यर्थः ॥ ४४ ॥ ४५ ॥

न रिष्यते न नश्यति ॥ ४६ ॥

अङ्घ्रिं प्रपन्नानमरवर्यान् सिन्धुमथ्यं सिन्धुमथनोद्भूतममृतं य आशयत् अभोजयत् कपटं युवतिवेषो यस्य सः ॥४७॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

अष्टमे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥१२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऋषिमुख्यानां शंसतां मोहिनीचरित्रं प्रशंसतां सताम् आत्मनोंऽशभूतां देवीं सतीं प्रति हृष्टोवाच ॥ ४२—४५ ॥

नरिष्यते नैव नश्यति ॥ ४६ ॥

कपटहेतुर्युवतिवेषः कपटरूपा असुराः हेतवो यस्मिन् तथाभूतमोहिनीरूपइत्यर्थः । सुरारीन् मोहयन् असतामविषयम् भावेन भजनेन गम्यम् अङ्घ्रिं प्रपन्नान् अमरवर्यान् सिन्धुमथनजममृतम् यः आशयदभोजयत् तं नतोऽस्मि ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

द्वादशोऽध्यायः ॥ १२ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-हेराजन् ! इस प्रकार जब श्रीवत्साङ्क भगवान ने बड़े आदर के साथ उमापति से ऐसे कहा, तब महादेवजी श्रीहरि से आज्ञा लेकर अपने गणों के सहित श्रीहरिकी परिक्रमा देकर अपने घर को गये ॥ ४१ ॥

हे भारत ! सब के अन्तर्यामि श्रीहरि की अंशरूप माया का प्रभाव देखकर भगवान भव ने, पूछने वाले सब ऋषि मुख्यों के आगे बड़े प्रसन्न होकर भवानी से कहने लगे ॥ ४२ ॥

और भवानी से कहे कि, कर्माधीन जन्मादि विकारों से रहित भगवानकी माया का प्रभाव तुमने देखी ? जो भगवान पुरुषों में परपुरुष हैं और सब देवताओं में परदेवता हैं ऐसे महत्त्व वाले श्रीहरि के गौणावतारों में हम मुख्यभी होकर मोहित होगये और जोलोग विषयों के पराधीन हैं उन लोगों को क्या कहना चाहिये ॥ ४३ ॥

हजारहों वर्ष के योग समाधि में जब हम विराम को प्राप्त होते हैं उससमय जिस परमात्मा के विषय तुम प्रश्न करती हो, सो वह यही साक्षात् अनादि पुरुष है, जिनके सामने

भाषा टीका।

कालभी अपने बल को नहीं दर्शा सके, और वेदभी जिनका नियमन नहीं कर सके है ॥ ४४ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी फि–बोले, हे तात! इसप्रकार शार्ङ्गधनुष धारी श्रीहरि का चरित्र हमने तुमसे वर्णन किया, जिनने समुद्र मथन समय में इतने बड़े मन्दराचल को अपने पीठ पर से धारण किया ॥ ४५ ॥

इस कथा को जो पुरुष सदा कीर्तन करे वा सुने उसका कभी भी कोई मनोकामना नष्ट नहीं होसक्ती, और वारंवार श्रीभगवान के गुण कीर्त्तन करने से यह पुरुष संसार चक्र से छूटकर अन्त काल में मोक्ष को भी प्राप्त होता है ॥ ४६ ॥

अब अध्याय के अन्त में एक श्लोकसे श्रीशुकदेवजी श्रियः पति को वन्दना पूर्वक नमस्कार करते हैं॥ अभक्तों का दुर्लभ और भक्ति वालों को सुलभ ऐसेअपने शरण आये हुये देवताओं को अमृत पिलाया, और कपट से मोहिनी स्त्री का वेष धारण कर असुरों को मोहित किया, आश्रितों के मनोवांछित फल को प्राप्तकरने वाले ऐसे श्रीहरि के चरण विन्द मे नमस्कार हो ॥ ४७ ॥

इति श्रीमद्भागवत अष्टमस्कन्ध में द्वादश अध्याय की श्रीवृन्दावनस्थ भगवताचार्यकृत भाषा टीका समाप्त ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

### श्रीशुक उवाच ।

मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ।
सप्तमो वर्त्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ।
नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥
करूषश्च पृषध्रश्च दशमो वसुमान्स्मृतः ।
मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ! ॥ ३ ॥
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः ॥ ४ ॥
कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥
अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ।
आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥
संक्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते ।
भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्याऽन्वितानि च ॥ ७ ॥
विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे ।
संज्ञाच्छाया च राजेन्द्र ! ये प्रागभिहिते तव ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशे तु पर्यन्ते सप्तमादीन्यनुक्रमात् ।
मन्वन्तराणि सर्वाणि वक्ष्यन्ते पृथक्पृथक् ॥

सप्तमादिमन्वन्तराण्याह—मनुरित्यादिना यावदध्यायसमाप्ति ॥ १--३ ॥

आदित्यादयो देवा इत्यन्वयः ॥ ४ ॥ ५ ॥

भगवतो जन्म अवतारः तमेवाह—आदित्यानाम् "विवस्वानर्यमा पूषा" इत्याद्युक्तानां मध्ये अवरं जन्म यस्य सः ॥ ६ ॥

शक्त्याऽवतारैर्वाऽन्वितानि ॥ ७ ॥

अष्टमं मनुं वक्तुं कथामाह—विवस्वत इति त्रिभिः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं षष्ठं चाक्षुषमन्वन्तरं सचरित्राजितावतारं निरूप्याथ सप्तमादिमन्वन्तराण्याह मुनिर्यावदध्यायसमाप्ति—मनुरिति । अधुना विद्यमानः सप्तमो मनुर्विवस्वतः पुत्रः श्राद्धदेव इति प्रसिद्धः तस्य श्राद्धदेवस्यापत्यानि पुत्रान् कथयतो मे मत्तः शृणु ॥ १ ॥

हे परन्तप ! इक्ष्वाकादयश्चैते दश वैवस्वतस्य मनोः पुत्राः ॥ २-३ ॥

देवानाह—आदित्या इति । आदित्यादयो देवा इत्यन्वयः । इन्द्रमाह हे राजन् ! तेषामधिपतिरिन्द्रः पुरन्दराख्यः ॥ ४ ॥

सप्तर्षीनाह—कश्यप इति ॥ ५ ॥

अवतारमाह—अत्रापीति । अत्रापि सप्तमे मन्वन्तरे कश्यपात्पितुः

**तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ।**
**यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥ ९ ॥**

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

...दितेर्मातुश्च भगवज्जन्माभूद्भगवानवततारेत्यर्थः । स च विष्णुः उपेन्द्राख्यो वामनरूपं धरतीति तथा आदित्यानां विवस्वदादीनां षष्ठस्कन्धोक्तानां मध्ये अवरं जन्म यस्य सः आदित्यानां कनीयानित्यर्थः ॥ ६ ॥

एवं वर्त्तमानं सप्तममन्वन्तरमुक्तं षडतीतान्युक्तानि अथ भाविन्यष्टमादिमन्वन्तराणि विवक्षुरुक्तान्यनुवदति-सङ्क्षेपत इति । एवं सप्त मन्वन्तराणि संक्षेपतस्तुभ्यं मयोक्तान्यथ भाविष्याणि वक्तुं प्रतिजानीते-भविष्याणीति । अथ विष्णोः शक्तिभिरंशैरवतारैरिति यावत् अन्वितानि भविष्याणि मन्वन्तराण्यष्टमादीनि वक्ष्यामि विष्णोः शक्त्यन्वितानीत्यनेन तेषामवश्यश्रोतव्यत्वं सूच्यते ॥ ७ ॥

अष्टमं मन्वन्तरं वक्तुं तावत्तदुपोद्घातरूपां कथामाह—विवस्वत इति त्रिभिः-विश्वकर्मणः प्रजापतेर्दुहितरावुभे संज्ञा च्छाया चान्यौ विवस्वतः द्वे भार्ये हे राजेन्द्र ! ये संज्ञाच्छाये तव तुभ्यं या प्राक् षष्ठस्कन्धेऽभिहिते उक्ते ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रासङ्गिकं समाप्याऽवशिष्टश्राद्धदेवादिमनुकथाकथनेन हरेर्माहात्म्यमेव वर्णयति—कतिपयैरुत्तरैरध्यायैः । तत्र श्राद्धदेवः कस्य पुत्र इति तत्राह, मनुरिति ॥ १ ॥

श्राद्धदेवस्यापत्यानि तत्र देवनामानि सप्तऋषिनामानि हरेरवतारविशेषं च वक्ति, इक्ष्वाकुरित्यादिना ॥ २—६ ॥

मन्दानां प्रमेयविज्ञानार्थम उत्तरमन्वन्तराणि प्रतिजानीते, भविष्याणीति ॥ ७—८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—५ ॥

अत्रापीति पद्यं स्वाम्यसम्मतं किन्तु पुस्तकेषु दृश्यते ६—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मन्वन्तराणि मन्वादिषट्कवन्ति समासतः ।
सप्तमादीनि कथ्यन्ते क्रमादत्र त्रयोदशे ॥

१—३ ॥

आदित्यादयो देवा इत्यन्वयः ॥ ४—१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तमादीनि मन्वन्तराणि वर्ण्यन्ते—मनुरिति त्रयोदशेन ॥ १ ॥ २ ॥ ३ ॥

देवा आदित्यादयः ॥ ४ ॥

भगवतो जन्मावतारः तमाह—आदित्यानां विवस्वदादीनां मध्ये अवरजः कनिष्ठः ॥ ६–७ ॥

विवस्वत एव पुत्रः सावर्णिरष्टमो मनुर्भविष्यतीति वक्तुं तत्पुत्रबाहुल्यमाह-विवस्वत इति त्रिभिः ॥ ८–१४ ॥

---

भाषाटीका ।

श्रीरुक्मिणीमधुसूदनौ जयतः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—सातमें मनु विवस्वान् [ सूर्य ] के पुत्र श्राद्धदेव नाम से विख्यात वैवस्वत हैं जो कि आज कल वर्त्तमान हैं अब उनकी संतान को आप हम से श्रवण करो ॥ १ ॥

इक्ष्वाकु, नभग, धृष्ट, शर्याति, नरिष्यन्त, नाभाग, और सात में दिष्ट ॥ २ ॥

करूष, पृषध्र, और दश में वसुमान् । हे परंतप ! ये दश पुत्र वैवस्वत मनुके हुए ॥ ३ ॥

और इस मन्वन्तर में आदित्य, वसु, रुद्र, विश्वेदेवा अश्विनी कुमार, और ऋभुये सब देवता हुए और हे राजन् इन सबों का इन्द्र पुरन्दर हुआ ॥ ४ ॥

कश्यप, अत्रि, वसिष्ठ, विश्वामित्र, गौतम, जमदग्नि, और भरद्वाज ये सप्त ऋषि हुए ॥ ५ ॥

इस मन्वंतर में भी भगवान का जन्म कश्यपजी से अदिति में हुआ, वे आदित्यों के अनुज विष्णु वामन रूप धारी हुए ॥ ६ ॥

संक्षेप से हमने राजन् ! तुम से सात मन्वंतर कहे । अब विष्णु शक्ति युक्त भविष्यों को कथन करेंगे ॥ ७ ॥

विवस्वान् के विश्वकर्मा की पुत्री दो पत्नी रही हे राजन् ! एक संज्ञा दूसरी छाया जोकि मैंने पहिले तुम से कही रहीं ॥८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एके वडवां तृतीयामाहुः मम तु सञ्ज्ञैव वडवेति मतम् तदुक्तं षष्ठे "सैव भूत्वाथ वडवा नासत्यौ सुपुत्रं भुवि" इति यमश्च यमी च यमुना श्राद्धदेवश्चेति त्रयः सुताः ॥ ९ ॥

सावर्णिस्तपतीकन्या भार्या सम्वरणस्य या ।
शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥ १० ॥
अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः ।
निर्मोकविरजस्काद्याः सावर्णितनया नृप ! ॥ ११ ॥
तत्र देवाः सुतपसो विरजा अमृतप्रभाः ।
तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥
दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ।
राद्धमिन्द्रपदं हित्वा ततस्सिद्धिमवाप्स्यति ॥ १३ ॥
योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ।
निवेशितोऽधिके स्वर्गादधुनास्ते स्वराडिव ॥ १४ ॥
गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा ।
ऋष्यशृङ्गः पिताऽस्माकं भगवान्बादरायणः ॥ १५ ॥
इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ।
इदानीमासते राजन् ! स्वे स्वे आश्रममण्डले ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सावर्णिः पुत्रः ॥ १०-१२ ॥

पदत्रयं याचमानायेमां सर्वां महीं सप्तमे मन्वन्तरे दत्त्वाऽष्टमे मन्वन्तरे विष्णोः प्रसादेन च राद्धं लब्धमिन्द्रपदं हित्वेत्यर्थः ॥ १३ ॥ १४ ॥

रामः परशुरामः द्रोणपुत्रोऽश्वत्थामा ॥ १५ ॥

इदानीं तु स्वयोग आसते ॥ १६-१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वडवाख्यां विवस्वतस्तृतीयां भार्याम् एके आहुः मम तु नैवमभिमतं "सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि" इति षष्ठस्कन्धोक्तेः तासां तिसृणां भार्याणां मध्ये संज्ञायाः सुताः त्रयः सुताश्च सुतौ च सुताः पुमान् स्त्रियेत्येकशेषः एका सुता द्वौ सुतौ इत्यर्थः । तदेवाह—यमश्च यमी च यमुना नदी च श्राद्धदेवश्चेति त्रयः सुता इत्यर्थः ॥ ९ ॥

अथ छायायाः सुतान् अत्रापि पूर्ववदेकशेषः । तदेवाह—सावर्णिः सुतस्तपत्याख्या कन्या सुता या तपतिः सम्वरणस्य भार्या कथिता शनैश्चरस्तृतीयः सावर्णिशनैश्चरौ द्वौ पुत्रौ तपतिरेका सुता चेत्यर्थः । अश्विनौ तु वडवायाः सुतौ ॥ १० ॥

अथाष्टममन्वन्तरषट्कमाह—अष्टम इत्यादिना । नवमो दक्षसावर्णिरित्यतः प्राक्तनेन ग्रन्थेन अष्टमे मन्वन्तरे आयाते सति सावर्णिर्विवस्वत एव पुत्रो मनुर्भविष्यति निर्मोकादयः सावर्णेर्मनोः पुत्राः भवितारः ॥ ११ ॥

तत्र मन्वन्तरे सुतप आद्याख्या देवगणाः तेषां देवगणानामधिपतिरिन्द्रो विरोचनसुतो बलिर्भविष्यति ॥ १२ ॥

तं विशिनष्टि—दत्त्वेति द्वाभ्याम्. यो बलिः पदत्रयं याचमानाय विष्णवे वामनायेमां पृथ्वीं दत्त्वा तत्प्रसादाद्राद्धं लब्धमिन्द्रपदं हित्वा अनुभवपूर्वकं हित्वेत्यर्थः । ततः सिद्धिं मुक्तिमवाप्स्यति ॥ १३ ॥

योऽसौ बलिर्भगवता बद्धः पुनः प्रीतेन तेनैव भगवता सुतले स्वर्गादप्यधिके लोके निवेशितोऽधुना स्वराडिन्द्र इवास्ते ॥१४॥

अत्र मन्वन्तरे भविष्यतः सप्तर्षीनाह—गालव इति । रामः परशुरामः द्रोणपुत्रोऽश्वत्थामा कृपः कृपाचार्यः ॥ १५ ॥

इमे गालवादयः स्वयोगतः स्वयोगप्रभावात्सप्तर्षयो भविष्यन्ति हे राजन् इदानीं त एते गालवादयः स्वकीयाश्रमेषु वर्तन्ते ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तासां संज्ञाच्छायावडवानां मध्ये संज्ञासुता एत इत्याह, यम इति ॥ ९—१२ ॥

बलेरिन्द्रपदानन्तरं का सिद्धिरिति तत्राह—दत्त्वेमामिति । पदत्रयं याचमानाय विष्णवे इमां पृथिवीं दत्त्वा राद्धं सिद्धमिन्द्रपदं हित्वा यो बलिस्ततः सिद्धिं मुक्तिमवाप्स्यतीत्यन्वयः॥१३॥

देवगुह्यां सरस्वत्यां सार्वभौम इति प्रभुः ।
स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वरः ॥ १७ ॥
नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः ।
भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप ! ॥ १८ ॥
पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः ।
द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥
आयुष्मतोऽम्बुधारायामृषभो भगवत्कला ।
भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥
दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ।
तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥
हविष्मान्सुकृतिः सत्यो जयो मूर्तिस्तदा द्विजाः ।
सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥ २२ ॥
विष्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति ।
जातः स्वांशेन भगवान् गृहे विश्वसृजो विभुः ॥ २३ ॥
मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ।
अनागतास्तत्सुताश्च सत्यधर्मादयो दश ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं कुत्रास्त इत्यत आह—य इति । स्वराडिव इन्द्र इव ॥ १४ ॥ १५ ॥

स्वयोगतः अच्युतनिग्रहानुग्रहयोगात् इदानीं कुत्रास्त इति तत्राह । इदानीमिति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यो ऽसाविति पुनर्निवेशित इत्यन्वयः ॥ १४—३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रामो जामदग्न्यः द्रोणपुत्रोऽश्वत्थामा ॥ १५—१८ ॥

---

भाषा टीका ।

कोई लोग तीसरी एक बडवा नाम वाली स्त्री भी विवस्वान् की कहते हैं उनमें संज्ञा से तीन पुत्र हुए, यम यमी और श्राद्ध-देव । अब छाया के पुत्रों को सुनो ॥ ९ ॥

एक सावर्णि नाम वाला पुत्र, दूसरी तपती नाम वाली कन्या, जो संवरण की भार्या हुई और तीसरा शनीचर हुआ और बडवा नाम वाली तीसरी भार्या के अश्विनी कुमार हुए ॥१०॥

अब जब आठमा मन्वंतर आवेगा तब सावर्णि, मनु होंगे और हे नृप ! सावर्णि विरजस्क आदि मनु के पुत्र होंगे ॥ ११ ॥ उस मन्वंतर में सुतपस विरज अमृतप्रभ आदि देवता होंगे ॥१२॥

जो कि याचना करने पर सप्तम मन्वंतर में विष्णु को तीन पग पृथिवी देकर अष्टम मन्वंतर में श्रीविष्णु की प्रसन्नता से प्राप्त हुए इन्द्र पद को देकर सिद्ध को प्राप्त होजायँगे ॥१३॥ जिसको प्रथम भगवान् ने बाँधा फिर प्रसन्न होकर स्वर्ग से भी अधिक सुख वाले स्थान में स्थित कर दिया और अब भी वहां स्वराट् के सदृश विराजते हैं ॥ १४ ॥

और उस सावर्णि मन्वंतर में गालव, दीप्तिमान्, राम, द्रोणपुत्र अश्वत्थामा, कृप, ऋष्यशृङ्ग, और हमारे पिता भगवान् बादरायण ॥ १५ ॥

हे राजन् ! ये ही सब अपने योग से सप्तर्षि होंगे, जो कि अब अपने २ मंडलों में स्थित हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अद्भुत इन्द्रः ॥ १९–२१ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

हविष्मत्प्रमुखा इत्युक्तानामेव केषाञ्चिन्नामान्याह—हविष्मानिति ॥ २२ ॥

विपूच्यां जातस्सन् ॥ २३ ॥

एकादशम इत्यादिरार्थः ॥ २४-२८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अवतारं तच्चरित्रं चाह—देवगुह्यादिति। ईश्वरो भगवान् देवगुह्यात्सरस्वत्यामवतीर्णः सार्वभौम इति प्रसिद्धो विभुः समर्थोऽतएव पुरन्दरात् सप्तममन्वन्तरस्थादिन्द्रात् स्थानमिन्द्रपदं हृत्वाऽपनीय बलये दास्यति अत्रेदमनुसन्धेयं चाक्षुषाख्ये षष्ठे मन्वन्तरे यदा दुर्वाससश्शापेन गतश्रीरिन्द्रोऽजितशरणावरणात्तत्सहायोऽमृतं प्राश्य बलिं विजित्य सश्रीकः सदेवगणस्त्रिलोकाधिपत्यं कृतवान् तदा बलिर्भार्गवैराहितबलः तमिन्द्रमुखाद्य त्रिविष्टपमभितस्थौ तदा पुनरदित्या ऽऽराधितो भगवानादित्यानामवरजो वामनोभूत्वा पदत्रययाञ्चाव्याजेन बलेस्त्रिविष्टपं गृहीत्वा इन्द्राय पुरन्दराय प्रदाय बलिमनुगृह्णन्निदमाह—

> एष मे प्रापितः स्थानं दुष्प्रापममरैरपि।
> सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः॥
> तावत्सुतलमध्यास्ते विश्वकर्मविनिर्मितम्। इति—

तदेवमनुगृहीतस्ततःप्रभृति सुतलं अधिवसन्नायास्यत्यष्टमे मन्वन्तरे तदाऽवतरिष्यमाणेन सार्वभौमाख्येन भगवता पुरन्दरादपनीय दत्तेन्द्रपद इन्द्रो भविष्यति ततस्तदाधिपत्यावसाने सिद्धिमवाप्स्यतीति ॥ १७ ॥

नवममन्वन्तरषट्कमाह—नवम इति। वरुणात्सम्भवः वरुणस्य पुत्रः दक्षसावर्णिरिति प्रसिद्धो मनुर्नवमो भविता भविष्यति तस्य सुताः धृतकेत्वादयो भविष्यन्ति ॥ १८ ॥

पाराद्या देवगणा इन्द्रस्तु अद्भुत इति प्रसिद्धो भविता द्युतिमत्प्रभृतयस्सप्तर्षयः भवितारः ॥ १९ ॥

एवं मन्वादयः षडुक्ताः सचरित्रमवतारमाह—आयुष्मत इति। अम्बुधारायां भार्यायामायुष्मतः सकाशाद्भगवानवतीर्णः ऋषभ इति प्रसिद्धो भविता येन ऋषभेण समृद्धां रचितां त्रिलोकीं अद्भुताख्य इन्द्रो भोक्ष्यते पालयिष्यति ॥ २० ॥

दशममन्वन्तरषट्कमाह—दशम इति। उपश्लोकस्य सुतो महान् सुगुणः ब्रह्मसावर्णिरिति प्रसिद्धो दशमो मनुर्भविता तस्य ब्रह्मसावर्णेः सुताः भूरिषेणाद्याः द्विजाः सप्तर्षयस्तु हविष्मत्प्रभृतयः ॥ २१ ॥

एतानेव कांश्चिन्निर्दिशति—हविष्मानिति। सुवासनादयो देवगणाः भवितारः सुरेश्वर इन्द्रस्तु शम्भुः भविता ॥ २२ ॥

अवतारमाह—विष्वक्सेनो विभुर्भगवान् विश्वसृजो गृहे तद्भार्यायां विषूच्यां स्वांशेनावतीर्णः शम्भोरिन्द्रस्य सख्यं करिष्यति ॥ २३ ॥

एकादशमन्वन्तरषट्कमाह—मनुरिति। आत्मवान् प्रशस्तमनस्को धर्मसावर्णिरिति प्रसिद्धः एकादशो मनुर्भविष्यति एकादशम इत्यादौ तस्य धर्मसावर्णेस्सुताः दश सत्यधर्मादयोऽनुगताः भवितारः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्थानं स्वर्गम् ॥ १७-१९ ॥

अम्बुधारायां स्त्रियां येन ऋषभेण सम्भातोऽद्भुतो नामेन्द्र ॥ २०—२२ ॥

शम्भोरिन्द्रस्य शान्तः शान्ताख्यः ॥ २३ ॥

अनागतो भविष्यन् ॥ २४—३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अद्भुत इन्द्रः ॥ १९—२२ ॥

विपूच्यां जातः सन् ॥ २३—२८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अद्भुत इन्द्रः ॥ १९—२१ ॥

हविष्मत्प्रमुखानवाह—हविष्मानिति ॥ २२ ॥

विपूच्यां मातरि जातस्सन् ॥ २३ ॥

एकादशम इत्यादि पदम् एकादशः ॥ २४—२८ ॥

---

### भाषा टीका।

देवगुह्य सरस्वती में सार्वभौम ऐसा प्रभु ईश्वर इन्द्र से स्थान हरण करके बलि को देवेंगे ॥ १७ ॥

नव में मनु दक्ष सावर्णि होंगे जिनका संभव वरुण से है, हे नृप ! भूरिकेतु दीप्तिकेतु इत्यादिक मनु के पुत्र होंगे ॥१८॥

पारामरीचि गर्भ आदिक देवता होंगे और अद्भुत नाम वाले इन्द्र होंगे, तथा द्युतिमान् इत्यादिक सप्त ऋषि होंगे ॥१९॥

आयुष्मान् से अंबुधारा में भगवान् की कला से ऋषभ होंगे। जिनकी कृपा से समृद्धि वाली त्रिलोकी को अद्भुत नाम इन्द्र भोगेगा ॥ २० ॥

हे नृप ! दशवाँ मनु उपश्लोक का पुत्र ब्रह्म सावर्णि होगा, भूरिषेण प्रभृति मनु के पुत्र होंगे इस मन्वंतर में हविष्मान्, सुकृत, सत्य, जय, मूर्ति इत्यादि सप्त ऋषि होंगे। और सुवासन विरुध, आदि देव होंगे तथा शंभु देवराज (इन्द्र) होंगे ॥ २१-२२ ॥

दशमें मन्वंतर में भगवान् विभु विश्वसृक् ब्रह्मा के घर में विषूची गर्भ में अंशांश से जन्म ग्रहण कर विष्वक्सेन इस नाम से प्रसिद्ध होंगे और उसी, देवराज ( शंभुनाम वाले इन्द्र ) के साथ मित्रता होगी ॥ २३ ॥

विहङ्गमाः कामगमा निर्वाणरुचयः सुराः ।
इन्द्रश्च वैधृतस्तेषामृषयश्चारुणादयः ॥ २५ ॥
आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः ।
वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥ २६ ॥
भविता रुद्रसावर्णी राजन्द्वादशमो मनुः ।
देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २७ ॥
ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ।
ऋषयश्च तपोमूर्तिस्तपस्व्याग्नीध्रकादयः ॥ २८ ॥
स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ।
अन्तरं सत्यसहसः सूनृतायाः सुतो विभुः ॥ २९ ॥
मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ।
चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३० ॥
देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः ।
निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥ ३१ ॥
देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥ ३२ ॥

भाषा टीका ।

ग्यारहवां मनु बडे मनस्वी धर्म सावर्णि होगा उसके सत्य धर्मादि दश पुत्र होंगे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य मनोरन्तरं साधयिष्यति सत्यसहसः सूनृतायाश्च सुतः सन् ॥ २९ ॥ ३० ॥ ३१ ॥
दिवस्पतेरिन्द्रस्योपहर्ता सम्पादकः ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विहङ्गमाद्या देवगणाः तेषामधिपतिरिन्द्रस्तु ध्रुव इति प्रसिद्धो भविता सप्तर्षयस्त्वरुणादयः ॥ २५ ॥

अवतारमाह—आर्यकस्येति । आर्यकस्य भार्यायां वैधृतायां जातोऽवतीर्णः हरेरंशस्तत्र मन्वन्तरे धर्मसेतुरिति प्रसिद्धो भविता स च त्रिलोकीं धारयिष्यति रक्षिष्यति ॥ २६ ॥

हे राजन्! द्वादशो मनुः रुद्रसावर्णिरिति प्रसिद्धो भविता तस्य सुता देवादयः ॥ २७ ॥

तत्र मन्वन्तरे ऋतधामाख्य इन्द्रः हरितादयो देवगणाः सप्तर्षयस्तु तपःप्रभृतयः ॥ २८ ॥

सुधामाख्यो हरेरंशावतारस्तस्य मनोः रुद्रसावर्णेरन्तरं साधयिष्यति स च सत्यसहस्सूनृतायाः सुतः ॥ २९ ॥

त्रयोदशो मनुर्देवसावर्णिरिति प्रसिद्धो भाव्यः भविता देवसावर्णेर्देहाज्जातास्तत्सुताः चित्रसेनादयः ॥ ३० ॥

सुकर्मादिसंज्ञकाः देवगणाः, इन्द्रस्तु दिवस्पतिरिति प्रसिद्धो भविता तथा मन्वन्तरे ऋषयः सप्त ऋषयो निर्मोकादयो भविष्यन्ति ॥ ३१ ॥

देवहोत्रस्य भार्यायां बृहत्यां हरेरंशः संभविष्यति स च योगेश्वराख्यो देवहोत्रस्य तनयो दिवस्पतेरिन्द्रस्य उपहर्ता इष्टसम्पादको भविता ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दिवस्पतिनामा ॥ ३१—३४ ॥

---

मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति ।
उरुगम्भीरबुद्ध्याद्या इन्द्रसावर्णिवीर्यजाः ॥ ३३ ॥
पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ।
अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ॥ ३४ ॥
सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ।
वितानायां महाराज ! क्रियातन्तून्वितायिता ॥ ३५ ॥
राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते ।
प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्याम् अष्टमस्कन्धे मन्वन्तरानुवर्णनंनाम
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मनोरन्तरं मन्वन्तरमित्यर्थः सहसः पितुः ॥ २९—३१ ॥
दिवस्पतेरिन्द्रस्य उपहर्त्ता उपकर्त्ता ॥ ३२—३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत्यसहसः सूनृतायाश्च सुतः हरेरंशोऽवतारः तस्य मनोरन्तरं साधयिष्यति ॥ २९–३१ ॥

दिवस्पतेरिन्द्रस्योपहर्तोपकारकः ॥ ३२ ॥

भाषा टीका ।

इस मन्वन्तर में विहङ्गम, कामगम, निर्वाण, और रुचिराभादि देवता होंगे, वैधृतिनामक उनके इन्द्र होंगे और अरुणादिक आदि सप्तऋषि होंगे ॥ २५ ॥

और भगवान् हरि एक अंश से वैधृता नाम की माता में आर्यक के पुत्र होंगे धर्मसेतु इसनामसे प्रसिद्ध होकर त्रिलोकी का पालन करेंगे ॥ २६ ॥

फिर बारहवें रुद्रसावर्णि नामक मनु होंगे जिनके पुत्र देववान्, उपदेव, और देवश्रेष्ठ आदि होंगे ॥ २७ ॥

और उस मन्वन्तर में ऋतधामा नाम वाले इन्द्र होंगे, तथा हरित देवता, और तपोमूर्त्ति, तपस्वी, आग्नीध्रक आदि सप्त ऋषि होंगे ॥ २८ ॥

और उस समय हरिका अंश स्वधामा नाम वाले सत्यसहा की सूनृता भार्या में उत्पन्न होकर उस मन्वन्तर को पालन करेंगे ॥ २९ ॥

तेरहवें मनु देवसावर्णि होंगे चित्रसेन विचित्रादि उनके पुत्र होंगे ॥ ३० ॥

इस मन्वन्तर में सुकर्म, सुत्राम आदि देवता होंगे दिवस्पति इन्द्र और निर्मोक तत्त्वदर्शी आदिक सप्त ऋषि होंगे ॥ ३१ ॥

इस मन्वन्तर के समय भगवान् श्रीहरि बृहती के गर्भ से एक अंश से अवतार लेकर देवहोत्र के पुत्र होंगे। और योगेश्वर नाम से विख्यात होकर तात्कालिक दिवस्पति नाम के इन्द्र के कार्य साधन करेंगे ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्रियातन्तून् कर्मसन्ततीः वितायिता विस्तारयिष्यति ॥ ३५

युगसाहस्रेण पर्ययः परिवर्तो यस्य युगसहस्रप्रमाणमित्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चतुर्दशो मनुरिन्द्रसावर्णिरिति प्रसिद्धः एष्यति भविष्यति तद्वीर्यजाः तत्सुता उर्वादयः ॥ ३३ ॥

देवगणास्तु पवित्रादिसंज्ञिताः इन्द्रः शुचिरिति प्रसिद्धः भविष्यति तपस्विनः सप्तर्षयो अग्न्यादयः ॥ ३४ ॥

हरिर्भगवान् सत्रायणस्य तनयो बृहद्भानुरिति प्रसिद्धो भविष्यति, हे महाराज ! स च बृहद्भानुर्वितानायां सत्रायणस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यायां जातः क्रियातन्तून् यज्ञकर्मसन्तानान् विताथिता स्तारयिष्यति ॥ ३५ ॥

मन्वन्तरकथनमुपसंहरति-राजन्निति । हे राजन् ! त्रिकालानुगानि भूतवर्त्तमानभविष्यत्कालानुगतानि तत्र भूतानि षट् वर्त्तमानं भविष्याणि सप्त इत्येवं चतुर्दश मन्वन्तराणि ते तुभ्यं मया कानि एभिश्चतुर्दशभिर्मन्वन्तरैः कल्पः दैनं दिनात्मकः कल्पः च युगसहस्रपरिमितः युगानां कृतादीनां साहस्रवारं पर्य्ययः परिवर्त्तोऽस्मिन् स तथाभूतः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रियातन्तून् क्रियासमुदायान् वितायिता विस्तारं कारता ॥ ३५ ॥

त्रिकालानुगतानि अतीतवर्तमानभविष्यत्संज्ञांस्त्रिकालान् अनुमानानीति त्रिलोकानुगतानीति पाठे स्पष्टोऽर्थः ते तव भितः यालोकृतः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तपस्विनः ऋषयः ॥ ३४-३५ ॥

युगसहस्रेण पर्य्ययोऽन्तो यस्य सः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशश्चाष्टमस्य सङ्गतः सङ्गतः सताम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चतुर्दशमस्रनुवंशः ॥ ३३ ॥ ३४ ॥

सत्रायणस्य तनयो विनतायां जातः क्रियातन्तून् कर्मसन्ततीः वितायिता विस्तारयिष्यति ॥ ३५ ॥

युगसाहस्रेण चतुर्युगसहस्रेण पर्यायः परिवर्तः चतुर्युगसहस्रप्रमाणः इत्यर्थः ॥ ३६ ॥

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाध्यायार्थप्रकाशः ॥ १३ ॥

---

भाषा टीका ।

चौदहवें मनु इन्द्रसावर्णि नामक होंगे । उरु, गम्भीर, बुद्धि, आदिक मनुके पुत्र होंगे ॥ ३३ ॥

और उस मन्वन्तर में पवित्र, चाक्षुष, देव होंगे तथा शुचि नामक इन्द्र होंगे. अग्निबाहु, शुचि, शुद्ध, मागध, प्रभृति सप्त ऋषि होंगे ॥ ३४ ॥

हे महाराज ! उसकाल में भगवान् विनता के गर्भ से अवतार धारणकर सत्रायण के पुत्र होंगे और वृहद्भानु नाम से प्रसिद्ध होकर क्रिया कलाप का विस्तार करेंगे ॥ ३५ ॥

हे राजन् ! ये भूत भविष्य और वर्त्तमान कालके चतुर्दश (चौदह) मनु हमने तुम्हारे सामने कहे इन चतुर्दश मन्वन्तरों का एक कल्प होता है और उस कल्पका प्रमाण सहस्र युग का है ॥ ३६ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में त्रयोदश
अध्याय की श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्त ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## ॥ चतुर्दशोऽध्यायः ॥

राजोवाच ।

मन्वन्तरेषु भगवन्यथा मन्वादयस्त्विमे ।
यस्मिन्कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥

ऋषिरुवाच ।

मनवो मनुपुत्राश्च मुनयश्च महीपते ! ।
इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥
यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ! ।
मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥ ३ ॥
चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान्यथा ।
तपसा ऋषयोऽपश्यन्यतो धर्मः सनातनः ॥ ४ ॥
ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ।
युक्ताः सञ्चारयन्त्यद्धा स्वे स्वे काले महीं नृपाः ॥ ५ ॥
पालयन्ति प्रजापाला यावदन्तं विभागशः ।
यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः ॥ ६ ॥
इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ।
भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति ॥ ७ ॥
ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ।
ऋषिरूपधरः कर्मयोगं योगेशरूपधृक् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ॥
पृथक्कर्माणि वर्ण्यन्ते भगवद्वशवर्तिनाम् ॥

॥ १ ॥

पुरुषेणेश्वरेण यज्ञाद्यवतारैः शास्यन्ते नियुज्यन्ते इति तथा ॥ २ ॥

तदेवाऽऽह—यज्ञादय इति ॥ ३ ॥

ऋष्यादीनां कर्माण्याह—चतुर्युगान्त इति, चतुर्भिः । यतः येभ्यः श्रुतिगणेभ्यः ॥ ४ ॥

उदिता उक्ताः युक्ताः संयत्ताः सन्तो महीं धर्मं सञ्चारयन्ति महयां धर्मं प्रवर्तयन्तीत्यर्थः ॥ ५ ॥

प्रजापाला मनुपुत्रास्तं धर्मं पालयन्ति यावदन्तं यावन्मन्वन्तरावसानम्, विभागशः पुत्रपौत्रादिक्रमेण ये चान्ये द्यावापृथिव्यादयो यज्ञ कर्मणि भोक्तृत्वेनान्वितास्तैश्च सह ॥ ६–७ ॥

प्रसङ्गाद्रूपान्तरैरपि जगद्यात्राप्रवर्तनमाह—ज्ञानमिति, द्वाभ्याम् सिद्धाः सनकादयः ऋषयो याज्ञवल्क्यादयः योगेशा दत्तात्रेयादयः तत्तद्रूपः सन् ज्ञानं कर्म च योगं च ब्रूते ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मन्वन्तरेषु कथितेषु प्रसङ्गान्मन्वादीनां कृत्यं पृच्छति राजा-मन्वन्तरेष्विति । हे भगवन् ! मन्वन्तरेष्वमी उक्ता मन्वादयः आदिशब्दग्राह्यास्तत्पुत्रादयः एते अमी मन्वादयः येन यस्मिन् कर्मणि ये नियुक्ताः तत्सर्वमशेषं वदस्व प्रत्येकं मन्वादीनां कृत्यं वदस्वेत्यर्थः ॥ १ ॥

तत्र येनेति पृष्टं नियोक्तारं तावदाह मुनिः--मनव इति । हे महीपते ! मन्वादयः पञ्चैते सर्वे पुरुषेणेश्वरेण यज्ञाद्यवतारैः शास्यन्ते नियुज्यन्त इति तथा ॥ २ ॥

तदेवाह—यज्ञादय इति । हे नृप ! पौरुष्यः परमपुरुषस्य संबन्धिन्यस्तस्य तनवोऽवतारा: या यज्ञादयः कथिताः आभिस्तनुभिः प्रचोदिता नियुक्ताः मन्वादयः जगद्यात्रां नयन्ति जगत्पोषणं कुर्वन्तीत्यर्थः ॥ ३ ॥

एवं भगवदवतारो नियोक्ता मन्वादयो नियोज्याः जगद्यात्रानयनं तेषां कर्मेत्युक्तम् अथ कथं जगद्यात्रां नयन्तीत्यपेक्षायां तावद्दर्षीणां कर्माह—चतुर्युगान्त इति । पूर्वपूर्वमन्वन्तरावसाने कालेनाध्येत्रभावयुक्तकालेन ग्रस्तान्विलुप्तान् श्रुतिगणान् पुनर्यथा ऋषयः सप्त ऋषयस्तपःप्रभावेनापश्यन् साक्षात्कृत्य प्रवर्तितवन्त इत्यर्थः । श्रुतिगणान्विशिनष्टि-यतो येभ्यः श्रुतिगणेभ्यः सनातनो धर्मोऽवबुध्यत इति शेषः ॥ ४ ॥

मनूनां कर्माह—तत इति । ततः ऋषिभिर्यथावच्छ्रुतिगणदर्शनानन्तरं तद्दवबोधितं स्वं स्वप्रवर्त्यं चतुष्पादं धर्मं यथा यज्ञादिरूपिणोदिता उक्ता नियुक्ता इत्यर्थः । सम्यताः सन्तो मनवोऽद्धा साक्षात् स्वेस्वे काले युगानुरूपं महीं मह्यां सञ्चारयन्त्युपदेशेन प्रवर्तयन्ति ॥ ५ ॥

मनुपुत्राणां कृत्यमाह—पालयन्तीति । प्रजापालाः मनुपुत्रास्तं धर्मं यावदन्तं यावन्मन्वन्तरावसानं विभागशः पुत्रपौत्रादिक्रमेण वर्णाश्रमविभागेन च पालयन्ति, देवानां कर्माह-यज्ञेति । ये च ऋषिपितृभूतमनुष्याः यत्र पञ्चमहायज्ञादौ कर्मण्यन्विताः भोक्तृत्वेनान्वितास्तैस्सह देवा यज्ञभागभुजः तल्लोकाः ॥ ६ ॥

इन्द्रस्य कर्माह—इन्द्र इति । भगवता यज्ञादिरूपिणा दत्तामत एवोर्जितां प्रभूतां त्रैलोक्यश्रियमनुभवंस्त्रीन् लोकान् पाति, कथं पातीत्यत्राह कामं यथेष्टं लोकेऽभिवर्षति वृष्ट्या पातीत्यर्थः ॥ ७ ॥

अथावतारस्य कृत्यमाह-ज्ञानमिति । चशब्देन मन्वादिनियोजनं समुच्चीयते हरिर्यज्ञाद्यवताररूपः सिद्धरूपधृक् कपिलादिरूपभृत ज्ञानं युगानुरूपं ब्रूते उपदिशति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा कथं प्रवृत्त इति शेषः ये इमे मन्वादयो येन पुरुषेण यस्मिन्कर्मणि नियुक्ताः प्रेरिता वर्तन्ते तत्सर्वम् ॥ १—२ ॥

कोऽयं पुरुष इति तत्राह—यज्ञादय इति । मन्वादिकालमारभ्य तेन यज्ञनाम्ना हरिणा प्रचोदिता मन्वादयो जगद्यात्रां जगत्स्थितिं नयन्तीत्यन्वयः, यतः श्रुतिगणेभ्यः सनातनो धर्मः सिद्धः ऋषयस्तांश्छ्रुतिगणान् यथावत्तपसाऽपश्यन् ॥ ३ ॥ ४ ॥

ततस्तदुक्तविधिना हरिणा चोक्ता मनवस्तं चतुष्पादं धर्ममद्धा संचारयन्ति ॥ ५ ॥

प्रजापाला नृपाश्च स्वस्वकाले विभागशो यावदन्तं कर्मक्षयपर्यन्तं महीं पालयन्तीत्यन्वयः ॥ ६–७ ॥

सिद्धस्वरूपः ज्ञानमुपदिशति ऋषिरूपधरो हरिः कर्मयोगेश्वररूपभृद्योगम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—३ ॥

चतुर्युगान्त इति व्यासस्तु तान् श्रुतिगणान् व्यपश्यतीति भावः ॥ ४–५ ॥

यत्रानुकीर्तिता इति पाठः प्रायः सर्वत्र यत्रान्विताश्च तैरित्येव पाठः स्वामिसम्मतः ॥ ६—९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मन्वादीनां तु कर्माणि यथा यानि भवन्त्यथ ।
चतुर्दशे प्रकथ्यन्ते तेषां तानि पृथक् पृथक् ॥

१ ॥

पुरुषेण यज्ञाद्यवताररूपेण शास्यन्त इति तथा ॥ २ ॥

शासनमाह-यज्ञादय इति ॥ ३ ॥

ऋष्यादीनां कर्माण्याह, चतुर्युगान्ते यतः येभ्यः ॥ ४ ॥

महीं धर्मं सञ्चारयन्ति मह्यां धर्मं प्रवर्तयन्तीत्यर्थः ॥ ५ ॥

प्रजापाला मनुपुत्रास्तं धर्मं पालयन्ति यावदन्तं मन्वन्तरावसानपर्यन्तं विभागशः पुत्रपौत्रादिक्रमेण ये च देवास्ते च पालयन्ति ॥ ६—७ ॥

मन्वादिरूपेण हरिरेव सर्वं करोतीति ज्ञापयन् मन्वादीनां षट्कर्माण न नियतमित्युक्तानुक्तं संक्षेपेणाह-ज्ञानमिति द्वाभ्याम् । सिद्धाः सनकादयः योगेशा दत्तादयः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मन्वादीनां कृत्यं वर्ण्यते-मन्वन्तरेष्विति चतुर्दशेन । इमे मन्वादयः येन नियोक्ता यस्मिन्कर्मणि यथा ये नियुक्ता भवन्ति तत्सर्वं वदस्व ॥ १ ॥

पुरुषेण यज्ञाद्यवताररूपेण शास्यन्ते नियुज्यन्ते इति तथा ॥ २—३ ॥

ऋष्यादीनां कृत्यमाह-चतुर्युगान्ते इत्यादिचतुर्भिः । यथा यथावत् अपश्यन् पश्यन्ति येभ्यः श्रुतिगणेभ्यः धर्मो ज्ञायते इति शेषः ॥ ४ ॥

उदिताः उक्ताः युक्ताः धर्मानुष्ठानयुक्ताः महीं धर्मं संचारयन्ति पुत्राद्युपदेशेन मह्यां धर्मं प्रवर्तयन्ति ॥ ५ ॥

प्रजापालाः मनुपुत्राः तं धर्मं यावदन्तं यावन्मन्वन्तरं क्रमशः पुत्रपौत्रादिक्रमशः वर्णाश्रमशः कृतत्रेतादिक्रमशश्च पालयन्ति ये यस्मिन् यज्ञभागे भोक्तृत्वेनान्वितास्तैः सह देवाः यज्ञभागभुजो भवन्ति ॥ ६–७ ॥

सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः ।
कालरूपेण सर्वेषामभावाय पृथग्गुणः ॥ ९ ॥
स्तूयमानो जनैरेभिर्मायया नामरूपया ।
विमोहितात्मभिर्नाना दर्शनैर्न च दृश्यते ॥ १० ॥
एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ।
यत्र मन्वन्तराण्याहुश्चतुर्दश पुरा विदः ॥ ११ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्याम् अष्टमस्कन्धे
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मन्वन्तरेष्वपि ज्ञानादिकं हरिर्मन्वन्तरेषु कृत इत्याह, ज्ञानमिति द्वाभ्याम् । सिद्धस्वरूपधृक् सनकादिरूपधृक् ऋषिरूप धरः याज्ञवल्क्यादिरूपधरः योगेशरूपधृक् दत्तादिरूपधृक् ॥८॥

भाषा टीका ।

श्रीरुक्मिणीनायको जयति ।

राजोवाच ।

राजापरीक्षितबोले, कि—हे भगवान् ! ये मन्वादिक मन्वन्तरों में जिसकर्म में जैसे नियुक्त हुए सो आप कहिये ॥ १ ॥

ऋषिरुवाच ।

श्रीशुकदेवजीबोले, कि—हेमहीपते ! मनु मनुपुत्र, मुनि, इन्द्र, और सुरगण, ये सब श्रीहरिकी आज्ञा पालन करने वाले हैं ॥ २ ॥

क्यों कि—सब मन्वन्तरों मे यज्ञ से आदि लेकर जो अवतार कहे सो राजन् ! मनुप्रभृति सब लोग उनकी आज्ञाके अनुरूप लोक यात्राको चलावै हैं ॥ ३ ॥

जैसे कि, चतुर्युगी के अन्तके अन्तमें काल ग्रस्त श्रुतिगणों ऋषि लोग तपसे देखते हुए, जिन वेदोंसे सनातन धर्म की प्रवृत्ति है ॥ ४ ॥

तहां चतुष्पाद ( चार चरण वाले ) धर्म को भगवद्‌द्वारासे बडे सावधानहोकर मनु लोग पृथिवी सञ्चार करते हैं ॥ और राजालोगभी अपने पुत्र पौत्रादि क्रमसे जब तक मन्वन्तर का अन्तआवे तब तक अपने२ कालमें उन धर्मों का पालन करते हैं तथा यज्ञ भाग भोगने वाले देव लोग और लोग भी जिन लोगों का उस कर्म में भोगने का सम्बन्धहै सब पालन करते हैं ॥ ५-६ ॥

और इन्द्र भी भगवान् की दई हुई और बढी हुई त्रिलोकी की सम्पत्ति को भोगता हुआ पालन करता है और समयर पर यथेष्ठ वर्षे करता है ॥ ७ ॥

और साक्षात् स्वयं हरि युग युग में सिद्धरूपधारण कर ज्ञान सिखाते हैं, और ऋषिरूपधारण कर्म और योगेशोंका रूप लेकर योगभी सिखाते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोतीति शेषः । स्वराड्वपुराजमूर्तिः सर्वेषामभावाय भवति पृथग्विधाः गुणाः शीतोष्णादयो यस्य ॥ ९ ॥

नामरूपात्मिकया मायया विमोहितात्मभिर्जनैः नानादर्शनैः शास्त्रैः स्तूयमानो निरूप्यमाणोऽपि नैव दृश्यत इत्यर्थः ॥ १० ॥

प्रासङ्गिकं निरूप्य प्रस्तुतमेवोपसंहरति—एतत्कल्पविकल्पस्यावान्तरकल्पस्य ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रजेशरूपेण मरीच्यादिरूपेण सर्गं करोतीति शेषः । स्वराड्वपुः राजमूर्तिस्सन् तदनुप्रवेशनेत्यर्थः । दस्यून् दुष्टसत्वान् हन्यात् पुनः कालरूपेण सर्वेषामभावाय क्षयाय च भवति कथम्भूतः पृथग्गुणः सृष्ट्याद्युपयुक्तगुणविशिष्टः ॥ ९ ॥

नामरूपया नामरूपभाजा मायया विमोहितानि मनांसि येषां तैरत एव नानादर्शनैः ज्ञानैकाकारेष्वात्मसु देवमनुष्यादिनाना-बुद्धिं कुर्वद्भिरभिर्जनैः केवलं स्तूयमान एव शास्त्रैर्निरूप्यमाण एव न तु दृश्यते इत्यर्थः ॥ १० ॥

प्रासङ्गिकं निरूप्य "मनवोऽस्मिन् व्यतीताः स्युः कल्पे स्वायंभुवादयः" इति मन्वन्तरकथनार्थतया प्रस्तुतं कल्पमेवोपसंहरति—एतदिति । कल्पविकल्पस्य कल्पभेदस्यावान्तरकल्पस्य वैवं-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिनकल्पस्येत्यर्थः । एतच्चतुर्दशमन्वन्तरात्मकं प्रमाणं परिकीर्तितं कोऽसौ कल्पविकल्पः पुराविदः कल्पविकल्पयाथात्म्यविदः यत्र कल्पविकल्पे मन्वन्तराणि चतुर्दशाहुरूचुः ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रजापतिरूपेण सर्गं करोति स्वराड्वपुः सत्रवपुः दस्यून्हन्ति यद्गुणाः अयथार्थज्ञानजनकमोगुणप्रवर्तकः ॥ ९ ॥

एभिर्मन्वादिभिः स्तूयमानो दृश्यते नामरूपरहितया अदृश्यत्वादिस्वभावविशिष्टया मायया अव्यक्तशब्दवाच्यया मोहितात्मभिः जनैः कल्पितैर्नानादर्शनैरद्वैतादिनानाविधशास्त्रैर्न दृश्यते न ज्ञायते चक्षुरादि द्वैतज्ञानेन दृश्यत इति प्राप्तम् "अन्यमीशमस्य महिमानमिति वीतशोकः" इति श्रुतेः ॥ १० ॥

उपसंहरति—एतदिति । पुराविदो यत्र यस्मिन्कल्पे चतुर्दशमन्वन्तराण्याहुस्तस्य कल्पस्यैतत्प्रमाणमुक्तं यस्मिन्नवान्तरमन्वन्तराण्याहुस्तस्य विकल्पस्यैतत्प्रमाणं परिकीर्तितं शास्त्रान्तरे इति शेषः । इति कल्पविकल्पस्य कल्पभेदस्यैव वा ॥ ११ ॥

इति श्री मद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनेनैव दृश्यत इत्यन्वयः ॥ १० ॥

एतदिति कल्पाः ब्रह्मदिनानि तेषु ये विकल्पा नानाप्रकारास्तेषामेकस्य प्रकारस्येत्यर्थः ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रजेशा मरीच्यादयः स्वराजो मनुपुत्राः काला यौवनवार्द्धक्यादयः अभवाय, नाशाय भवन्ति पृथग्विधाः स्थौल्यकार्श्यवार्द्धिक्यपालितादयो गुणा यतः सः ॥ ९ ॥

इच्छामात्रेणैव सर्वदा सर्वं कर्तुं समर्थस्य भगवत एतावद्भिः पृथक्पृथक् प्रयासवद्भीरूपैः किमिति चेत्तत्राह, नामरूपात्मिकया मायया विमोहितात्मभिरेभिः शास्त्रैर्जनैः स्तूयमानो निरूप्यमाणोऽपि न्यायादिनानादर्शनैर्नैव दृश्यते इत्यर्थः । तेन तस्य लीलैव कीर्त्यते विविधसितं त्वतितुर्गममिति भावः ॥ १० ॥

यत्र यत्र चतुर्दशमन्वन्तराण्याहुः एतत् कल्पविकल्पस्य महाकल्पावान्तरकल्पस्य नैमित्तिकस्य प्रमाणम् ॥ ११ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्दशो ऽष्टमस्यायं सङ्गतः सङ्गतः सताम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रजेशरूपेण मरीच्यादिरूपेण सर्गं करोति स्वराड्पुनराजिषमूर्तिः दस्यून् हन्यात् कालरूपेण सर्वेषामभवाय प्रलयाय भवति कथंभूतः पृथग्विधा गुणाः शीतोष्णादयो यस्य सः ॥ ९ ॥

नामरूपया देवमनुष्यादिनामरूपात्मिकया मायया मोहितात्मभिर्मोहितचित्तैर्नानाकारं देहगेहादिविषयकं दर्शनं येषां तैर्बहिर्दृष्टिभिः स्तूयमानोऽपि न दृश्यते ॥ १० ॥

एतत्कल्पविकल्पस्य महाकल्पावान्तरकल्पस्य दैनं दिनस्येत्यर्थः ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्दशाऽध्यायार्थप्रकाशः ॥ १४ ॥

---

और प्रजापति रूपसे सृष्टि करते हैं राजा रूपसे चोरों का नाश करते हैं, और पृथक् गुण शीत उष्ण आदि हैं जिसके ऐसे कालरूपी होकर सर्व के अभाव के अर्थ होते हैं ॥ ९ ॥

नाना प्रकार नाम रूपात्मक मायासे मोहित मति लोगों को नानादर्शनवाले शास्त्रोंके द्वाराभी आप नहीं देख पड़ते हो ॥ १० ॥

राजन् ! यह हमने अवतार कल्पका प्रमाण कथन किया प्राचीन ज्ञाता लोग जिसमें चतुर्दश [चौदह] मन्वन्तरों को कहते हैं ॥ ११ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, चतुर्दश अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्त ॥ १४ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

## ॥ पञ्चदशोऽध्यायः ॥

——:*:——

॥ राजोवाच ॥

बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ।
भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥
एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः ।
यज्ञेश्वरस्य पूर्णस्य बन्धनं चाप्यनागसः ॥ २ ॥

॥ श्रीशुक उवाच ॥

पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् ! भृगुभिः स जीवितः ।
सर्वात्मना तानभजद्भृगून्बलिः शिष्यो महात्माऽर्थनिवेदनेन ॥ ३ ॥
तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्वजिता त्रिणाकम् ।
जिगीषमाणं विधिनाऽभिषिच्य महाऽभिषेकेण महाऽनुभावः ॥ ४ ॥
ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ।
ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥ ५ ॥
धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ।
पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥ ६ ॥
एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ।
प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥
अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ।
सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चदशे विश्वजिताऽऽचार्या अयाजयन् ॥
ततोऽसौ स्वर्गमजयद्दृष्ट्वा निखिलैर्युतः ॥ ० ॥
वर्ण्यते नवाध्याय्या यामं वामनचेष्टितम् ।
निग्रहच्छलतो यत्र बलेर्भूयाननुग्रहः ॥ ० ॥

ईश्वरः स्वयं कृपणवत्कस्माद्धेतोरयाचत लब्धार्थोभूत्वाऽपि तं कस्माद्बबन्ध ॥ १—२ ॥

तत्र तावद्बलेस्त्रिलोकीमपहर्तुं पात्राविच्छलनं कृतवानिति वक्तुं ब्राह्मणाराधनेन बलेरभ्युदय एव स्वर्गविजयक्रममाह—पराजितश्री-रित्यादिना यावदध्यायसमाप्ति। युद्धे पराजिता श्रीर्येन सः इन्द्रेण असुभिश्च त्याजितस्सन् भृगून् भृगोर्वंश्यान् शुक्रादीन् महात्मा उदारचित्तः अर्थानां निवेदनेनार्पणेन ॥ ३ ॥

त्रिणाकं स्वर्गं जेतुमिच्छन्तं विश्वजिता यागेनायाजयन् महाभिषेकेणैन्द्रेण बह्वृचब्राह्मणप्रसिद्धेन ॥ ४ ॥

हर्यश्वस्येन्द्रस्य ये तुरङ्गास्तेषामिव वर्णो हरितो येषाम् ॥ ५ ॥

पुरटं सुवर्णम् तूणाविषुधी अरिक्तावक्षयशरौ पितामहः प्रह्लादः जलजं शङ्खम् ॥ ६ ॥

विप्रैरर्जितः सम्पादितो योधनार्थो युद्धपरिकरो यस्य तैरेव

श्रीधरस्वामिकृतभावार्थदीपिका ।

कल्पितं कृतं स्वस्त्ययनं मङ्गलवाचनादि यस्य आमन्त्र्य पृष्ट्वा ॥ ७ ॥

अथारुह्य रराजेति द्वयोरन्वयः सुस्रग्धरः शोभनमालाधरः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मन्वन्तरानुवर्णनप्रसङ्गात् "दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम्" इति संग्रहेणोक्तं हरेर्वामनस्य चरितं विस्तरेण बुभुत्सुः पृच्छति राजा—बलेरिति द्वाभ्याम् । हरिः स्वयमीश्वरः अवाप्तसमस्तकामो भूत्वा कृपणवत्कस्माद्धेतोः बलेः सकाशाद्भूमेः पदत्रयमयाचत लब्धार्थोऽपि याच्ञया लब्धपदत्रयोऽपि कस्माद्धेतोस्तम् बलिं बबन्ध ॥ १ ॥

एतद्याच्ञाबन्धनादिकं हरेः कर्म वेदितुमिच्छामो वयमत्रैतच्छ्रवणे नोऽस्माकं परमधिकं कौतूहलं वर्तते एतच्छ्रवणनिर्बन्धमाह—पूर्णस्यावाप्तसमस्तकामस्य यज्ञेश्वरस्य भगवतः कर्तरि षष्ठी यज्ञेश्वरेणानागसो निरपराधिनो बलेः बन्धनं चकाराद्याचनञ्च ॥ २ ॥

इत्येतदेवमापृष्टः सविस्तरं तच्चरित्रमाह मुनिर्नवभिरध्यायैः—तत्रतावद्बलिस्त्रिलोकीमपहर्तुमुपायान्तरमपश्यन् याच्ञां कृतवानिति वक्तुं तावद्बलेः गुरुसेवावैभवेन स्वर्गप्राप्तिक्रममाह—पराजितश्रीरित्यादिना यावदध्यायसमाप्ति । हे राजन् ! इन्द्रेण देवासुरे युद्धे पराजिता गृहीता श्रीराज्यलक्ष्मीर्यस्य सः असुभिः प्राणैश्च हापितः त्याजितः पुनर्भृगुभिर्भृग्वादिभिर्जीवितः जीवनं प्रापितो भृगूणां शिष्यो बलिर्वैरोचनिः तान् भृगूनेव सर्वात्मना करणत्रयैक्येन महात्मा उदारमना अर्थनिवेदनेन धनसमर्पणेन न केवलं शुष्कभक्त्येत्यर्थः । चाभजदाराधितवान् ॥ ३ ॥

तं भजन्तं त्रिणाकं स्वर्गं जेतुम् इच्छन्तं बलिं महानुभावाः ब्राह्मणा भृगवः प्रीयमाणाः सन्तः विश्वजिता यागेनायाजयन् किं कृत्वा ? महाभिषेकेण बहृचब्राह्मणप्रसिद्धेनाभिषिच्य ॥ ४ ॥

ततो विश्वजिद्यागे हविर्भिरिष्टाद्धुताशनाद्यथाद्य आसन् तत्र तावत्काञ्चनपरिकरवान् रथः आविर्बभूव ततो हर्यश्वस्य इन्द्रस्य तुरङ्गाणामिव वर्णो हरितो येषां ते हया उद्बभूवुस्ततः सिंहेन विराजमानो ध्वजः ॥ ५ ॥

ततः पुरटोपनद्धं काञ्चनपरिकरवद्धनुररिक्तावक्षयौ तूणौ इषुधी दिव्यं कवचञ्चासन् पितामहः प्रह्लादः तस्य बलेः सम्प्रदानस्य सम्बन्धविवक्षया षष्ठी तस्मै अम्लानानि पद्मानि यस्यां तां मालां ददौ शुक्रः जलजं शङ्खं ददौ इत्यनुषङ्गः ॥ ६ ॥

एवं भृगुभिर्विप्रैरर्जितः सम्पादितो योधनार्थो युद्धपरिकरो यस्य स बलिस्तैर्विप्रैः कल्पितं कृतं स्वस्त्ययनं मङ्गलवाचनादिकं यस्य तादृशोऽथ विप्रान् परिक्रम्य तेभ्यः कृतः प्रणामो येन सः प्रह्लादमामन्त्र्य पृष्ट्वा तस्मै नमश्चकार ॥ ७ ॥

अथ भृगुभिर्दत्तं दिव्यमनर्घं रथमारुह्य स बलिः रराजेत्यन्वयः । कथम्भूतः ? स्रग्धरः मालाधरः सुसन्नद्धः कवचित्वात् धन्वी धनुर्धरः धृत इषुधिर्येन सः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लब्धार्थः स्वीकृतत्रैलोक्यः ॥ १ ॥

पूर्णस्य ईश्वरस्य याच्ञा अनागसो बलेर्बन्धनं च एतत् ॥ २ ॥

असुभिः प्राणैर्हापितो विजितः स्वार्थनिवेदनेन सर्वस्वसमर्पणेन अभीष्टार्थविज्ञापनेन वा तान् भृगून् सर्वात्मना अभजत् ॥ ३ ॥

विश्वजिता सर्वस्वदक्षिणात्मना यागेन महाभिषेकेण मन्त्रपूतस्नानविशेषेण ॥ ४ ॥

हर्यश्वस्य इन्द्रस्य तुरङ्गाणां वर्णो येषां ते तथा इन्द्राश्ववर्णसदृशवर्णा इत्यर्थः । इष्टाद्धुतात् ॥ ५ ॥

पुरटोपनद्धं सुवर्णबद्धम् अरिक्तौ बाणैरशून्यौ अक्षसायकावित्यर्थः जलजं शङ्खम् ॥ ६ ॥

योधनार्थो युद्धसाधनं विप्राद्भृगोः ॥ ७ ॥

स्रग्धरो मालाधरः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बलिर्बद्धरथाश्वादिः कृताद्विश्वजितो मखात् ।
स्वर्गं गतः पुरा निन्युरिति पञ्चदशे कथा ॥

॥ १—२ ॥

युद्धे देवैः पराजिता श्रीर्यस्य सः हापितस्त्याजितः महात्मा उदारचित्तः अर्थानां समर्पणेन ॥ ३ ॥

विश्वजिता यज्ञेन ॥ ४ ॥

हर्यश्वस्येन्द्रस्य तुरङ्गाणामिव वर्णो हरितो येषां ते ॥ ५ ॥

पितामहः प्रह्लादः जलजं शङ्खम् ॥ ६ ॥

विप्रैरर्जिताः सम्पादिता योधनार्था युद्धार्थकवस्तूनि यस्य सः आमन्त्र्य पृष्ट्वा ॥ ७—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चदशे पराजितस्यापि बलेर्गुरुप्रसादतो जयो वामनावतारचरितप्रश्नप्रसङ्गतो वर्ण्यते—ईश्वरः स्वयं कृपणवत् बलेः सकाशाद्भूमेः पदत्रयं कस्माद्धेतोरयाचत लब्धार्थोऽभूत्वापि तं कस्माद्बबन्ध ॥ १ ॥ २ ॥

युद्ध इन्द्रेण पराजिता श्रीर्यस्य सः असुभिश्च हापितस्त्याजितः स भृगुभिर्भृगुवंश्यैः शुक्रादिभिर्जीवितस्सन् तान् भृगून् अर्थानां निवेदनेन अभजत् ॥ ३ ॥

हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः ।
रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥
तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ।
पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव ॥ १० ॥
वृतो विकर्षन्महतीमासुरीं ध्वजिनीं विभुः ।
ययाविन्द्रपुरीं स्वृद्धां कम्पयन्निव रोदसी ॥ ११ ॥
रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥
प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ।
हंससारसचक्राह्वकारण्डवकुलाकुलाः ।
नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिपाकं स्वर्गं जिगीषमाणं तं बलिं विश्वजिता यागेन अयाजयन् हर्यश्वतुरङ्गाणामिन्द्राश्वानामिव वर्णो येषां ते ॥ ४ ॥ ५ ॥

पुरटोपनद्धं स्वर्णमयवस्त्रावेष्टितम् अरिक्तौ बाणयुक्तौ पितामहः प्रह्लादः अम्लानं शङ्खम् ॥ ६ ॥

विप्रैरर्जितः सम्पादितः योधनार्थः युद्धपरिकरो यस्य सः विप्रैः कल्पितं सम्पादितं स्वस्त्ययनं मङ्गलवाचनादिकं यस्य स अथ विप्रान् प्रदक्षिणीकृत्य तेभ्यः कृतः प्रणामो येन सः प्रह्लादं प्रदक्षिणीकृत्य तस्मै नमश्चकार तान् सर्वानामन्त्र्य पृष्ट्वा ॥ ७ ॥

अथ रथमारुह्य रराजेत्युत्तरेणान्वयः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीप्राणजीवनो जयति ।

राजोवाच ।

राजा परीक्षित बोले, कि—श्रीहरि सर्वेश्वर भी होकर कृपण के तरह बलि महाराज से क्यों तीन पग पृथिवी मागते हुए ? और उसका राज पाठ सब लेकर भी उसको क्यों बांधते हुए ॥ १ ॥

हे महाराज ! इस बातको हम अवश्य जानने की इच्छा करते हैं, कि—सर्वेश्वर सर्व कामों से परिपूर्ण की याचना, और निरपराधी को बांधना ऐसा क्यों किया ॥ २ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-हे राजन् ! इन्द्रने बलिका पराजय भी किया और प्राणों से हीन कर छोडदिया, फिर भृगुवंशी ब्राह्मणों ने उसको जिवाया, तब हे तात ! उस उनके शिष्य महात्मा बलिने भी भृगुवंशी ब्राह्मणों के सर्वार्थ निवेदन कर के सर्व प्रकारसे भजन किया ॥ ३ ॥

तबतो बड़ा प्रभाव वाले भृगुवंशी ब्राह्मण लोग, प्रसन्न होकर स्वर्ग के जिताने की इच्छा कर महाभिषेक से अभिषेक कराकर विश्वजित् यागसे यजन कराते हुए ॥ ४ ॥

तदनन्तर अग्नि में हविषसे सजा हुआ रथ, और सूर्यके घोडाओं के सदृशरङ्गवाले घोडा, और सिंह के चिन्ह कीध्वजा, ये सब निकाले ॥ ५ ॥

और सुवर्णसे मढा हुआ दिव्य धनुष, और बाणोंसे भरे हुए दो तरकस तथा एक दिव्य कवच भी निकाला । और उस समय बलिको प्रह्लादजीने अम्लान पुष्पों की माला दीनी, और कुलाचार्य श्रीशुक्रजीने विजयशङ्ख दिया ॥ ६ ॥

इस प्रकार ब्राह्मणों वेद संग्रामकी सामग्री जिस्को और ब्राह्मणोंकी दक्षिणा देकर प्रणामकरके प्रह्लादजीसे आज्ञा लेकर नमस्कार करता हुआ ॥ ७ ॥

तिसके पीछें भृगुलोगों ने दिये हुए दिव्य रथपर बैठकर वह महारथी सुन्दर माला को धारण किये धनुष खड्ग और तरकस को लगाकर कटिबद्ध हो गया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हेमाङ्गदाभ्यां लसन्तौ बाहू यस्य धिष्ण्यस्थः भवने प्रज्वालितः कुण्डस्थ आहवनीय इवेति वा ॥ ९ ॥

तुल्यमैश्वर्यं बलं च श्रीश्च येषां तैर्स्वयूथपैर्वृतो ययाविति द्वयोरन्वयः परिधीन् दिशः ॥ १० ॥

स्वृद्धामतिसमृद्धाम् ॥ ११ ॥

किञ्च प्राग्वद्युक्तं तथाविधां पुरीमकस्मादेव परित्यज्य इन्द्रादयः

आकाशगङ्गया देव्या वृतां परिखभूतया ।
प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ॥ १४ ॥
रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ।
जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ॥ १५ ॥
सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ।
शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिकायाम्

पलायिता इति वैराग्यार्थमिन्द्रपुरीमनुवर्णयति—रम्यामिति सार्द्धैरेकादशभिः। उपवनानि फलप्रधानानि निकटस्थानि वा उद्यानानि पुष्पप्रधानानि दूरस्थानि वा तैः रम्याम्, कूजन्ति विहङ्गमिथुनानि येषु गायन्तो मत्ता मधुव्रता येषु ॥ १२ ॥

प्रवालादीनामुरुभारो यासु ताः शाखा येषां ते अमरद्रुमा येषु तैः यत्र यासु सुरसेविताः प्रमदाः क्रीडन्ति ताः हंसादिकुलैराकुलाः व्याप्ता नलिन्यः सरांसि यत्र येषु सन्ति तैरुपवनोद्यानैः रम्यामिति पूर्वेणान्वयः ॥ १३ ॥

किञ्च परिखभूतया आकाशगङ्गया वृताम् प्राकारेण सौवर्णेन च वृताम् अट्टालाः प्राकारोपरि रचितान्युन्नतानि युद्धस्थानानि तत्सहितेन ॥ १४ ॥

रुक्मपट्टानि कपाटानि येषु तैर्द्वारैरवान्तरैः स्फटिकमयैर्गोपुरैश्च पुरद्वारैर्जुष्टाम् विभक्ताः प्रपथा राजमार्गा यस्याम् ॥ १५ ॥

सभा उपवेशस्थानानि चत्वराणि अङ्गणानि रथ्या उपमार्गास्तैराढ्याम् सम्पन्नाम् न्यर्बुदं दशकोटयस्तैर्गणनीयैरनन्तैर्विमानैर्युताम् वज्रविद्रुममय्यो वेद्यो येषु तैः शृङ्गाटकैश्चतुष्पथैर्युताम् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हेमाङ्गदाभ्यां लसन्तौ बाहू यस्य स्फुरती मकरकुण्डले यस्य तथाभूतो रथमारूढो रराज, क इव? धिष्ण्यस्थः धने प्रज्वलितः हव्यवाडग्निरिव कुण्डस्थ आहवनीय इवेति वा ॥ ९ ॥

दैत्ययूथपैर्वृतः स्वृद्धामिन्द्रपुरीं ययौ इत्यन्वयः। कथम्भूतैः? तुल्यमैश्वर्यं बलं श्रीश्च येषां तैः सयूथैः ससैन्यैः दृग्भिः समन्तात्सम्पिबद्भिरिव परिधीन् दिशो दहद्भिरिव स्थितैः ॥ १० ॥

कथम्भूतस्सन्? विभुस्समर्थः महतीमासुरीं ध्वजिनीं सेनां विकर्षन् प्रस्थापयन् रोदसी द्यावापृथिव्यौ कम्पयन्निव ॥११॥

समृद्धिमेव दर्शयितुमिन्द्रपुरीं वर्णयति—रम्यामिति सार्द्धैरेकादशभिः। श्रीमद्भिः फलपुष्पादिसमृद्धिमद्भिर्नन्दनादिभिरुपवनैरुद्यानवनैश्च रम्यां तत्रोपवनानि फलप्रधानानि निकटस्थानि वा उद्यानानि पुष्पप्रधानानि दूरस्थानि वा कथम्भूतैः कूजन्ति विहङ्गमिथुनानि येषु गायन्तो मधुना मत्ता मधुव्रता येषु तैः ॥१२॥

प्रवालादीनाम् उरुभारो यासु ताः शाखा येषां ते अमरद्रुमा येषु तैः यत्र यासु सुरसेविताः प्रमदाः क्रीडन्ति ताः हंसादिकुलैराकुला व्याप्ताः नलिन्यः सरांसि यत्र येषु तैरुपवनोद्यानैः रम्यामिति पूर्वेणान्वयः ॥ १३ ॥

किञ्च परिखाभूतया देव्या देवस्य त्रिविक्रमस्य पादाङ्गुष्ठजया आकाशगङ्गया प्राकारेण च जुष्टामित्यन्वयः। कथंभूतेन? अग्निरिव वर्णो यस्य तेन सुवर्णमयेनेति भावः। अट्टालाः प्राकारोपरिरचितानि युद्धस्थानानि तत्सहितेन उन्नतेन चेति ॥ १४ ॥

रुक्मपट्टानि कपाटानि येषु तैः अवान्तरद्वारैः स्फटिकमयैर्गोपुरैः पुरद्वारैश्च जुष्टां विभक्ताः प्रपथा राजमार्गाः यस्यां विश्वकर्मणा विनिर्मिताम् ॥ १५ ॥

सभादिभिराढ्यां सुन्दरां सम्पन्नां वा तत्र सभा आवेशस्थानानि चत्वराण्यङ्गणानि रथ्याः उपमार्गाः न्यर्बुदं दशकोटयः ताभिर्गणनीयैरनन्तैर्विमानैर्युतां वज्रविद्रुममय्यो वेद्यो वेदिका येषु तैः शृङ्गाटकैः चतुष्पथैर्युताम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

धिष्ण्यस्थ आहवनीयादिस्थाने स्थितः हव्यवाडग्निः ॥९-१३॥

यत्रेन्द्रपुर्यां यत्र नलिनीषु परिखभूतया दीर्घिकावद्वर्तमानया ॥ १४ ॥

पट्टमुपरिबन्धः ॥ १५ ॥

न्यर्बुदैरित्युपलक्षणम् अनेकैरित्यर्थः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तुल्यैश्वर्यं इत्यादि त्रयोदशकं तत्र नार्थं अर्चिभिरिति प्लुतत्वानुत्वाभावः चार्षमिति, मानिन इत्यादयः ऐहिका एव ज्ञेयाः ॥ १०—३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

दैत्ययूथपैर्वृतस्तामिन्द्रपुरीं ययाविति द्वितीयेनान्वयः परिधीन् दिशः ॥ १०—१२ ॥

यत्र नित्यवयोरूपाः श्यामा विरजवाससः ।
भ्राजन्ते रूपवन्नार्यो ह्यर्चिर्भिरिव वह्नयः ॥ १७ ॥
सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ।
यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥ १८ ॥
हेमजालाक्षनिर्गच्छद्धूमेनाऽगरुगन्धिना ।
पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरप्रियाः ॥ १९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रवालादीनामुरुभारो यासु ताः शाखा येषां ते अमरद्रुमा येषु तैः यत्र नन्दनादिषु वनेषु नलिन्यः सन्ति यासु नलिनीषु प्रमदाः स्त्रियः ॥ १३ ॥

पुरीं विशिनष्टि—आकाशेत्यादि । परिखभूतया परिखारूपया ॥ १४ ॥

गोपुरं पुरद्वारं विभक्ताः प्रपथा राजमार्गा यस्यां ताम् ॥ १५ ॥

सभा उपवेशस्थानानि चत्वरायचङ्गणानि रथ्या उपमार्गाः शृङ्गाटकैश्चतुष्पथैः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेमाङ्गदाभ्यां लसन्तौ बाहू यस्य सः धिष्ण्यस्थः कुण्डस्थ पावक इव ॥ ९ ॥

स्वयूथैः स्वभृत्यैर्दैत्ययूथपैश्च वृतः इन्द्रपुरीं ययाविति द्वयो रन्वयः तुल्यमैश्वर्यं बलं श्रीश्च येषां तैः ॥ १० ॥

स्मृद्धां सृष्टु ऋद्धां समृद्धाम् ॥ ११ ॥

एवं समृद्धियुतापि पुरी सुखदा नेति वैराग्यार्थं समृद्धिमेव दर्शयितुं पुरीं वर्णयति । रम्यामिति सार्द्धैरेकादशभिः कूजन्ति विहङ्गमिथुनानि येषु तैः गायन्तो मत्ता मधुव्रता भ्रमरा येषु तैः नन्दनादिभिः उपवनैर्निकटस्थैः उद्यानैर्दूरस्थैः रम्याम् ॥ १२ ॥ प्रवालादीनामुरुभारो यासु ताः शाखा येषां तेऽमरद्रुमा येषु तैः यत्र यासु सुरसेविताः सुरप्रियाः प्रमदाः क्रीडन्ति ताः हंसादिकुलैराकुलाः व्याप्ताः नलिन्यः सरस्यो यत्र येषु सन्ति ते नन्दनादिभिः रम्यामिति पूर्वेणैवान्वयः ॥ १३ ॥

परिखभूतया परिखाभूतया ॥ १४ ॥

रुक्मपट्टानि कपाटानि येषु तैर्द्वारैर्गृहद्वारैः स्फटिकमयैर्गोपुरैः पुरद्वारैश्च विभक्ताः प्रपथा राजमार्गा यस्यां ताम् ॥ १५ ॥

सभा उपवेशस्थानानि चत्वरायचङ्गणानि रथ्या उपमार्गास्तैराढ्यां सम्पन्नाम् वज्रादिमया वेदयो येषु तैः शृङ्गाटकैश्चतुष्पथैर्युक्ताम् ॥ १६ ॥

---

भाषाटीका ।

कानों में स्फुरायमान मकराकृत कुण्डलों को पहिने हुए रथके ऊपर बैठा हुआ इस प्रकार शोभा देता हुआ कि जैसे अग्निशाला में अग्नि दहकती हो ॥ ९ ॥

तुल्य ऐश्वर्य बल और शोभावाले यूथप लोगों को तथा दृष्टिसे जानों आकाश को पीकांयच, और दिशाओं को जला देवत ऐसे भयङ्कर दैत्य यूथप लोगों को साथ लेकर ॥ १० ॥

बड़ी भारी आसुरी सेना को खींचता हुआ सब सम्पत्ति से समृद्ध इन्द्रपुरी को पृथिवी आकाशको कम्पाता हुआसा गया ॥ १२ ॥

जिन बगीचाओं में नवीन फल पुष्पों के भारों से झुकी हुई शाखा वाले सुरद्रुमों से और हंस सार स चकोर कारण्डव आदि पक्षियों के समूहों से विकसित कमल वाली छोटी२ तलाई शोभा देरही है जिन में देवसे वित प्रमदा जान विहार पूर्वक क्रीडा कर रहीं हैं ॥ १३ ॥

और आकाशमें जिस इन्द्रपुरी के चारो तरफ श्रीगंगाजी परिखा (खाई) हो रही है, और अग्नि सदृश वर्ण वाला सुवर्ण का जिसके चारों तरफ प्रकार [परकोटा है ॥ १४ ॥

और उसमें जोद्वार हैं तिनमें उत्तम काम वाले सुवर्ण के किवाट जड़े हैं और स्फटिक मणिके जिसमें गोपुर हैं । भीतर सुन्दर विभागवाली वीथी और राजमार्ग से शुभोभित है, और जिस पुरी को साक्षात् विश्वकर्माने निर्माण करी है ॥ १५ ॥

और जामें सभामें चौक औ बीथी मरतग चोखित हो रही है और न्यर्बुदों [दशकोटिका एक न्यर्बुद होता है] विमानों से विभूषित है और जिसपुरी में मणि,मय चौराहे जिनमें बीच२ में हीरा और मूगाओं के चौंतरे बने हुए हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः रूपवत्यः स्वलङ्कृताः स्त्रियः यत्र यस्यां भ्राजन्ते ॥ १७ ॥

सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्रजामामोदम् ॥ १८ ॥

मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ।
शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम् ॥ २० ॥
मृदङ्गशङ्खाऽऽनकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ।
नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभाम् ॥ २१ ॥
यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः ।
मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्ति यत् ॥ २२ ॥
तां देवधानीं स वरूथिनीपतिर्बहिः समन्ताद्रुरुधे पृतन्यया ।
आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन्भयमिन्द्रयोषिताम् ॥ २३ ॥
मघवांस्तमभिप्रेत्य बलेः परममुद्यमम् ।
सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हेमगवाक्षेभ्यो निर्गच्छता धूमेन सुरप्रिया अप्सरसः ॥१९॥

मुक्तामयैर्वितानैर्मणिहेममयैः केतुभिश्च ध्वजैर्नानापताकायुक्ताभिर्वलभीभिश्च विमानानां पुरो भागैरावृतां व्याप्ताम् वैमानिकस्त्रीणां कलगीतैर्मङ्गलाम् ॥ २० ॥

उपदेवानां गन्धर्वादीनां गीतकैश्च मनोरमाम् जिता प्रभा साक्षाद्दीप्त्यधिष्ठात्री देवता यया ताम् अन्यैरजितप्रभामिति वा पाठान्तरे जिता ग्रहाः सूर्यादयो यया ॥ २१ ॥

यत् याम् ॥ २२ ॥

पृतन्यया सेनया ॥ २३—२४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नित्यं वयस्तारुण्यं रूपं सौकुमार्यं च यासां ताः श्यामाः यौवनमध्यस्थाश्च विरजं निर्मलं वासो यासां ताः रूपवत्यः नार्यः स्त्रियः अर्चिर्भिः शिखाभिर्वह्नय इव यत्र यस्यां राजन्ते ते इत्यर्थः ॥ १७ ॥

यत्र यस्यां सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्रजामामोदमुपादाय मारुतो हेमगवाक्षेभ्यो विनिर्गच्छता धूपेनागरुसुगन्धिना सह मार्गे वहति ताम् ॥ १८ ॥

यस्यां मार्गे पाण्डुरेण पटेन प्रतिच्छन्ने मार्गे सुरस्त्रियोऽप्सरसः यान्ति सञ्चरन्ति ताम् ॥ १९ ॥

मुक्तामयैर्वितानैर्मणिहेममयैः केतुभिश्च नानाविधानां पताकानामावलिभिश्च विराजितां शिखण्ड्यादिभिर्नादितां वैमानिकस्त्रीणां मधुरगीतैर्मण्डिताम् ॥ २० ॥

मृदङ्गादीनां स्वनैः तालादिध्वनिसहितैर्नृत्तैः सवाद्यैरुपदेवानां गन्धर्वादीनां गीतकैश्च मनोरमां स्वप्रभया जिता प्रभा साक्षाद्दिव्यगीताद्यधिष्ठात्री देवता यया 'तामन्यैरजितप्रभाम्' इति वा पाठान्तरे जिता ग्रहाः सूर्यादयो यया ताम् ॥ २१ ॥

यत् यां सामान्ये नपुंसकम् अधर्मिष्ठादयो न व्रजन्ति इतः प्रेत्य न प्राप्नुवन्ति खला दुरात्मानः शठाः मूर्खाः मानिनोऽहङ्कारिणः लुब्धाः वञ्चकाः ॥ २२ ॥

तामेवम्भूतां देवधानीममरावतीं बहिः समन्ताद्वरूथिन्याः सेनायाः पतिः स बलिः पृतन्यया सेनया रुरुधे तत इन्द्रयोषितां भयमुत्पादयन्नाचार्येण शुक्रेण दत्तं महास्वनं शङ्खं दध्मौ ॥ २३ ॥

मघवानिन्द्रस्तं बलेः परममधिकम् उद्योगं ज्ञात्वा सर्वैः देवानां गणैरुपेतो बृहस्पतिमित्थम् उवाच ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शृङ्गाटकैश्चत्वरमण्डपैः वज्ररत्नविद्रुमखचितवेदिभिः श्यामाः षोडशवर्षाः ॥ १७ ॥

सौगन्धिकैः कल्हारपद्मैः रचिताः स्रजः तासामामोदं परिमलमुपादाय ॥ १८ ॥

जालाक्षं गवाक्षम् ॥ १९ ॥ २० ॥

जितसूर्यादिप्रहाम् ॥ २१ ॥

एभिरधर्मादिभिः ॥ २२ ॥

पृतन्यया पृतनया ॥ २३ ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शीतकाले भवन्त्युष्णा उष्णकाले तु शीतलाः ।
स्तनौ सुकठिनौ यासां ताः श्यामाः परिकीर्तिताः ॥
१७—१८ ॥

हेममयेभ्यो जालाक्षेभ्यो गवाक्षेभ्यः सुरप्रिया अप्सरसः ॥१९॥

मुक्तामयैर्वितानैश्चन्द्रातपैः मणिहेममयैः केतुभिर्ध्वजैः पताकापङ्क्तिभिर्वलभीभिरट्टालपरिवर्तिगृहैः ॥ २०—२१ ॥

देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीम्।
देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम् ॥ ३३ ॥
तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः।
शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

इमम् उद्यमं बलिं वा आसीत् अभूत् ॥ २५ ॥

प्रतिव्योढुं युद्धादिभिः प्रतिकर्तुं यतः पितामहवाऽयं बलिः ॥२६॥

यतः कारणात् ओज आदि यतश्च ओज आदेरेतस्य समुद्यमः ॥ २७ ॥

शिष्याय श्रद्धाभक्त्यतिशयेन स्वसर्वस्वोपहारकाय बलये तेजः स्वीयमेव उपभृतं प्रत्युपहारत्वेन दत्तमित्यर्थः। तस्मादिदं न बलेस्तेजः किन्तु ब्रह्मतेज एवातः भवद्भिर्दुर्वारमिति भावः तेन तेभ्यो भृगुभ्यो न न्यूना वयमपि तथैव श्रद्धाभक्त्यादिना त्वया प्रसादिना बद्धभविष्याम तदा संप्रति त्वमप्यस्य तेजसा परिपूर्णं इमं बलिमजेष्य एवेत्युपालम्भोऽनुध्वनितः ॥ २८ ॥

योद्धुमनेनाधुना निर्गच्छामि न वेति चेदत आह—भवद्विध इति ॥ २९ ॥

एतत्समयोचितं मन्त्रं ब्रूहीति चेदत आह–तस्मादिति। यतः कालात् शत्रोर्विपर्ययः पराभवो भावी तं कालं प्रतीक्षमाणा इत्यर्थः ॥ ३० ॥

बलेरस्य पराभवकालः स किं भावी कदा वा भावीत्यपेक्षायां तमाश्वासयन्नाह–एष इति। विप्रबलमेव उदर्कम् उत्तरत्रफलं यस्य सः "उदर्कः फलमुत्तरम्" इत्यमरः। तानेवेत्यादि उपहारहठेनोक्तं सत्त्वतस्तु विष्णुभक्तत्वात्कुलः स विप्रावमानकृतस्य महाकीर्तिस्वर्गाधिकच्युतत्वभोगप्रकारपात्रीकृतविष्णुत्वभाविमन्वन्तरेन्द्रत्वाद्यर्थमभूदिति ज्ञेयम् ॥ ३१—३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

केन हेतुना तेजसा ऊर्जित आसीत् ॥ २५ ॥

प्रतिव्योढुं युद्धादिना प्रतिकर्तुम् ॥ २६ ॥

एतस्य मद्रिपोर्दुर्धर्षत्वस्य कारणं ब्रूहि यतः कारणात् एतस्य ओज आदि यतश्च ओज आदेः एतस्य समुद्यमः ॥ २७ ॥

तेजः उपभृतं दत्तमित्यर्थः ॥ २८ ॥ २९ ॥

त्रिविष्टपमुत्सृज्य निधायमदर्शनं यात ॥ ३० ॥

विप्रबलेन उदर्कमुत्तरोत्तराधिकं फलं यस्य सः ॥ ३१ ॥

सुमन्त्रितः अर्थः त्रिविष्टपत्यागादिरूपः कर्तव्यपदार्थो येषां ते जग्मुः गुर्वाज्ञानुसारेण निलीना बभूवुरित्यर्थः। यतः कामरूपधाः ॥ ३२ ॥ ३३ ॥

---

भाषा टीका।

इन्द्र कहने लगे, कि—हे भगवन्! हमारे पहिले वैरी बली का बड़ा भारी उद्यम है। अब इस समय तो इसको मैं बड़ा असह्य मानताहूं, परञ्च इस को इस समय किसने एस तेज से बढाया है ॥ २५ ॥

इस समय मे इसको कोई भी अधीश्वर किसी प्रकार निराकरण करने को समर्थ नही हो सकता है। और यह इस समय कैसा दुर्धर्ष मालुम होता है, कि—मानो जगतको मुख से पान करजायगा, और मानो दशों दिशाओं को चाट जायगा, और दृष्टि से दिशाओं को जलाता सा प्रलय काल के अग्नि सदृश जलता हुआ है ॥ २६ ॥

हे गुरो! यह हमारा वैरी क्यों इतना दुर्धर्ष हो इस का कारण तो आप कहो, कि— इस का यह ओज सह, बल, और तेज कहां से भया, जिससे इसने इतना उद्यम किया ॥ २७ ॥

गुरुरुवाच।

बृहस्पति जी बोले, कि–हे मघवन्, हे इन्द्र! मैं इस शत्रु की उन्नति का कारण जानता हूं, ब्रह्मवादि भृगुलोगों ने अपने शिष्यको ब्रह्मतेज का सञ्चय किया है ॥ २८ ॥

हे इन्द्र! एक श्रीहरि को छोड़कर तुमारे सदृश अथवा तुम भी इस के सन्मुख खड़े होने को समर्थ नहीं हो, जैसे काल के सन्मुख मनुष्य नही खड़े हो सके हैं ॥ २९ ॥

तस्मात् तुम सब लोग अपना स्थान ( स्वर्ग ) छोड़कर चले जाओ और काल की प्रतीक्षा करो जिस काल के प्रभाव से यह शत्रु का विपर्यय है ॥ ३० ॥

और यह बलि ब्राह्मणों के बल से उदय को प्राप्त भया है और इस समय तो इसका पराक्रम बहुत ही बढा है, परंच जब इनही लोगों का अपमान करेगा तब सकुटुम्ब विनाश को प्राप्त होगा ॥ ३१ ॥

इस प्रकार अर्थ दिखाने वाले गुरुजी से सलाह लेकर सब देवलोग कामरूप धारणकर स्वर्ग को छोड़कर चले गये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं प्राप्तमिन्द्रपदं स्थिरीकर्तुमयाजयन् अनुव्रतमनुवर्तिनम् ॥ ३४-३५ ॥

ततस्तदनुभावेन भुवनत्रयविश्रुताम् ।
कीर्तिं दिक्षु वितन्वानः स रेजे उडुराडिव ॥ ३५ ॥
बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम् ।
कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे बलिविजयो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।

द्विजदेवैर्ब्राह्मणैरुपलम्भितां प्रापिताम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं देवेष्वन्तर्हितेषु सत्स्वथ वैरोचनो बलिर्देवधानीं पुरीमधिष्ठाय लोकत्रयं स्ववशमकरोत् ॥ ३३ ॥

ततस्तं विश्वजयिनं शिष्यमनुव्रतं बलिं तद्वत्सला भृगवो हयमेधानां शतेनायाजयन् प्राप्तमिन्द्रपदं स्थिरीकर्तुमयाजयन् इत्यर्थः ॥ ३४ ॥

ततो हयमेधयागशतप्रभावेन लोकत्रयव्याप्तां कीर्तिं वितन्वानः स बलिश्चन्द्र इव रराज ॥ ३५ ॥

द्विजदेवैर्ब्राह्मणैरुपलम्भितां प्रापितां सुसमृद्धिं श्रियं सम्पदं बुभुजे, कथम्भूतः ? महामनाः दीर्घसङ्कल्पः आत्मानं कृतं कृत्यं कर्तव्यप्रयोजनं येन तं कृतार्थमिव मन्यमानः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्विजाः भृगवस्त एवमभीष्टदातृत्वेन देवाः उपलम्भितां प्रापिताम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अयाजयन् तदैवेन्द्रपदस्थिरीभावार्थमिति भावः ॥ ३४ ॥ ३५ ॥

द्विजदेवाः विप्राः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमेऽसौ पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अयाजयन् तत्र स्थिरीकर्तुमिति भावः ॥ ३४ ॥ ३५ ॥

स्वृद्धां सुष्ठु समृद्धां द्विजदेवैर्विप्रैरुपलम्भितां कृतकृत्यमिवात्मानं मन्यमानः बुभुजे न तु तां प्राप्यापि जनः कृतकृत्यो भवतीति भावः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशोऽध्यायार्थप्रकाशः ॥ १५ ॥

भाषा टीका ।

देव लोग इस प्रकार जब लीन होगये, तब विरोचन के पुत्र बलि ने अमरावतीपुरी में स्थित होकर तीनों लोक को वश में कर लिया ॥ ३३ ॥

शिष्यके ऊपर प्रेम करने वाले भृगु लोग उस विश्व विजयी शिष्य ( बलि ) को अपना अनुवर्ती जानकर प्राप्त हुए

भाषा टीका।

इन्द्रपद की स्थिरता के लिये सौ अश्व मेध यज्ञ से यजन कराते हुए ॥ ३४ ॥

तब तो उसके प्रभाव से वह तीनों भुवन में विख्यात होने वाली अपनी कीर्त्ति का विस्तार करता हुआ चन्द्रमा के सदृश शोभा को प्राप्त होता भया ॥ ३५ ॥

और द्विज देवों की कृपा से प्राप्त हुई ऐसी समृद्ध संपत्ति को वह उदार मन वाला आपको कृत कृत्य मानकर भोगता हुआ ॥ ३६ ॥

इति श्रीमद्भागवत अष्टमस्कन्ध में पंचदश अध्याय की श्रीवृन्दावनस्थ भगवताचार्यकृत भाषा टीका समाप्त ॥ १५ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## ॥ षोडशोऽध्यायः ॥



श्रीशुक उवाच ।

एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ।
हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥
एकदा कश्यपस्तस्या आश्रमं भगवानगात् ।
निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥
स पत्नीं दीनवदनां कृतासनपरिग्रहः ।
सभाजितो यथान्यायमिदमाह कुरूद्वह ! ॥ ३ ॥
अप्यभद्रं न विप्राणां भद्रे ! लोकेऽधुनागतम् ।
न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥ ४ ॥
अपि वा कुशलं किञ्चिद्गृहेषु गृहमेधिनि ! ।
धर्मस्याऽर्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥
अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ।
गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥
गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ।
यदि निर्यान्ति ते नूनं (१) फेरुराजगृहोपमाः ॥ ७ ॥
अप्यग्नयस्तु वेलायां न हुता हविषा सति ।
त्वयोद्विग्नधिया भद्रे ! प्रोषिते मयि कर्हिचित् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः ।
प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥

इदानीं श्रीवामनावतारप्रसङ्गमाह—एवमित्यादि यावत्समाप्ति, नष्टेष्वदृष्टेषु सत्सु ॥ १ ॥ २ ॥

स कश्यपः पत्नीमिदमाह—दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन्पृच्छति—अप्यभद्रमिति सप्तभिः । हे भद्रे ! मृत्योश्छन्दमिच्छामनुवर्तन्त इति तथा मृत्युवशवर्तिनो जनस्येत्यर्थः ॥ ३-४ ॥

हे गृहमेधिनि ! अपि वा किं वा गृहेषु धर्मादेः किञ्चित्कुशलमिति काका प्रश्नः यत्र येषु गृहेषु अयोगिनामपि योगः अधर्मादिना योगफलं भवति ॥ ५ ॥

किंवा त्वयाऽपूजिता एवाऽभ्येत्य गृहाद्याताः ॥ ६ ॥

नार्चिता अनार्चिताः सन्तो यदि निर्गच्छन्ति ते गृहाः फेरुराजः सृगालराजस्तदीयाविवरतुल्याः ॥ ७ ॥

वेलायां होमकाले कर्हिचित्र हुताः किम् ॥ ८-९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं बलेरिन्द्राधिपत्यप्राप्तिप्रकारमभिधायाथ भगवतो वामनावतारं प्रस्तोष्यन् तदुपोद्घातरूपां कथां तावत्प्रस्तौति मुनिः—एवमिति । इत्थं पुत्रेष्विन्द्रादिषु नष्टेष्वदृश्येषु सत्सु दैत्यैस्त्रिविष्टपे हृते च सति देवमाता अदितिरनाथवदसहाया इव पर्यतप्यत ॥ १ ॥

एवं परितप्यमानायामदित्यां कदाचिद्भगवान् कश्यपश्चिरात्

---

(१) प्रेतराज इति भिन्न० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

समाधेर्विरतः तस्या अदितेराश्रममाजगाम, कथम्भूतम् ? निर्गत उत्सवो यस्मान्निर्गत आनन्दो यस्मात्तम् ॥ २ ॥

स कश्यपः कृत आसनपरिग्रहो येन स यथान्यायं सभाजितः सम्यक्पूजितः हे कुरूद्वह ! दीनं वदनं यस्यास्तां पत्नीम् इदं वक्ष्यमाणमाह ॥ ३ ॥

दीनवदनामालक्ष्य बहुधा विकल्पयता कश्यपेन पृष्टमाह—अपीति सप्तभिः । अपीति प्रश्नद्योतकमव्ययं हे भद्रे ! अधुना लोके विप्राणां गवां धर्मस्य लोकस्य जनस्य कथम्भूतस्य मृत्योः छन्दमिच्छामनुवर्त्तत इति तथा तस्य चाऽभद्रमकुशलं न हि ॥ ४ ॥

हे गृहमेधिनि ! अपि वा किं गृहेषु धर्मादेः किञ्चिदकुशलमिति काका प्रश्नः गृहाग्निविशिनष्टि, यत्र येषु गृहेष्वयोगिनामपि योगः स्वधर्मादिना योगफलं भवति यद्वा अयोगिनामेव योगः आसक्तियोगिनान्तु नेत्यर्थः ॥ ५ ॥

अतिथयः आगत्य कुटुम्बासक्तया त्वया प्रत्युत्थानादिना कदाचिदप्यपूजिताः सन्तो गृहात् याता गताः किं वा ॥ ६ ॥

यद्यतिथयोऽभ्येत्य येषु गृहेषु सलिलैरप्यनर्चिताः सन्तो निर्गच्छन्ति तर्हि ते गृहाः नूनं शृगालनाथबिलतुल्या एव ॥ ७ ॥

हे सति भद्रे ! मयि प्रोषिते प्रस्थिते सत्युद्विग्नधिया त्वया अग्नयः आहवनीयादयस्तवभागाः हविषा वेलायामुदिते सूर्ये "प्रातर्जुहोति" इत्युक्तप्रातरादिकाले न हुताः किं वा ? ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्या अदित्याः ॥ २—३ ॥

आदित्यलोके विप्राणामभद्रं नागतमपि किं धर्मस्याभद्रं नागतमपि किम् अर्थस्याभद्रं नागतमपि छन्दानुवर्तिनो मृत्योः सकाशादभद्रं लोकस्य नागतं किम् अयोगिनां संसारिणां यत्र येषु धर्मादियोगोऽस्ति तेषु किञ्चिदप्यकुशलं नहीति तत्रानुकर्षः कर्तव्यः ॥ ४—६ ॥

प्रेतराजगृहोपमाः श्मशानतुल्याः ॥ ७ ॥

वेलायामिति योग्यकाले प्रोषिते गृहादन्यत्र स्थिते ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—३ ॥

अपि प्रश्ने विप्राणामभद्रं नागतं न प्राप्तं नवा लोकस्य लोके विशिनष्टि मृत्योश्छन्दानुवर्तिनः ॥ ४—१० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षोडशे कश्यपप्रश्नैरदितिस्तं न्यवेदयत् ।
स्वपुत्रदुःखं तच्छान्त्यै स प्रोवाच पयोव्रतम् ॥०॥

नष्टेषु अदृष्टेषु सत्सु ॥ १ ॥ २ ॥

स कश्यपः ॥ ३ ॥

दीनवदनत्वादेः कारणं विकल्पयन् बहुधा पृच्छति—अप्यभद्रमिति सप्तभिः । अपीति प्रश्ने विप्राणामभद्रं नागतं न प्राप्तं न वा धर्मस्य न वा लोकस्य लोकं विशिनष्टि मृत्योः छन्दमिच्छामनुवर्त्तत इति तस्य ॥ ४ ॥

अकुशलं वा धर्मादेः यत्र गृहेषु अयोगिनां कर्मिणामपि योगः योगफलप्राप्तिः ॥ ५ ॥

प्रत्युत्थानेनाप्यपूजिताः ॥ ६ ॥

फेरुः शृगालः ॥ ७—१० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुत्रैश्वर्यमिच्छन्त्यदित्या प्रार्थितः कश्यपस्तांप्रति पयोव्रतमुक्तवानिति वर्णयति—एवमिति षोडशेन । नष्टेषु अदर्शनं गतेषु ॥ १ ॥ २ ॥

स कश्यपः ॥ ३ ॥

दीनवदनामालक्ष्य पृच्छति—अपीति सप्तभिः । अपीति प्रश्ने हे भद्रे, विप्राणां धर्मस्य वा मृत्योः छन्दमिच्छामनुवर्तते इति तथा तस्य लोकस्य जनस्य वा अभद्रं नागतम् ॥ ३ ॥

हे गृहमेधिनि ! अपि वा किंवा गृहेषु धर्मादेः किञ्चिदकुशलम् यत्र गृहेष्वयोगिनामनूदरीतिवलजार्थः मन्दसाधकानामपि योगः साधनाचरणेऽधिकार इत्यर्थः ॥ ५ ॥

किंवा त्वया प्रत्युत्थानेनाप्यपूजिताः एव अभ्येत्य गृहाद्याताः ॥ ६ ॥

फेरुराजः शृगालराजः ॥ ७ ॥

अपि किंवा वेलायां होमसमये कर्हिचित्र हुताः ॥ ८ ॥

———

भाषा टीका ।

श्रीराधिकाकृष्णाय नमः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—जब इस प्रकार पुत्र लोग नष्ट प्राय होगये और दैत्यों ने स्वर्ग हर लिया तब देव माता अदितिजी अनाथ के तरह बड़े अनुताप को प्राप्त हुईं ॥ १ ॥

एक समय कश्यप भगवान् उनके आश्रम में गये, कश्यपजी भी बहुत काल में समाधि से विराम को प्राप्त हुए रहे इन्होंने अदिति के आश्रम को निरुत्सव और निरानन्द देखा ॥ २ ॥

हे राजन् ! वहां पर अदिति के दिये हुए आसन पर बैठकर दीन वदन पत्नी को देख कर स्वागत पूर्वक आप ऐसे बोले, ॥ ३ ॥

यत्पूजया कामदुघान्याति लोकान्गृहान्वितः।
ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥ ९ ॥
अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि।
लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥

अदितिरुवाच।

भद्रं द्विजगवां ब्रह्मन्! धर्मस्यास्य जनस्य च।
त्रिवर्गस्य परं क्षेत्रं गृहमेधिन्गृहा इमे ॥ ११ ॥
अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः।
सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥
को नु मे भगवन्कामो न सम्पद्येत मानसः।
यस्या भवान्प्रजाध्यक्ष एवं धर्मान्प्रभाषते ॥ १३ ॥
तवैव मारीच! मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः।
समो भवांस्तास्वसुरादिषु प्रभो! तथाऽपि भक्तं भजते महेश्वरः ॥ १४ ॥
तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत।
हृतश्रियो हृतस्थानान्सपत्नैः पाहि नः प्रभो ॥ १५ ॥
परैर्विवासिता साऽहं मग्ना व्यसनसागरे।
ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥

भाषा टीका।

कश्यपजी बोले, कि—हे भद्रे! अभी लोक में विप्रों को कुछ ऐसा तो अमंगल नहीं प्राप्त हुआ है? और कोई धर्मकी की बाधा तो नहीं उपस्थित है, और मृत्यु के वश में रहने वाले इस लोक का भी तो ऐसा कुछ अकल्याण नहीं आया है ॥ ४ ॥

हे गृहमेधिनि! भलाँ गृहों में तो कुशल है, जिन गृहों में अयोगियों को भी धर्म अर्थ और काम का योग [फल] प्राप्त होजाता है ॥ ५ ॥

क्या तुमारे यहां आये हुए अतिथियों को कुटुंब में आसक्त रहने वाली ऐसी तुमने प्रत्युत्थानादि से नहीं पूजा? और तुमारे घर से वो लोग विमुख चले गये क्या? ॥ ६ ॥

जिन घरों से अतिथि लोग जल मात्र से भी सत्कृत नहीं होकर चले जाते हैं वे घर स्यारों के घर सरीके हैं ॥ ७ ॥

हे सति! तुमारे यहां समय के ऊपर हवि से अग्नि का हवन नहीं हुआ क्या? क्योंकि, हम तो कहीं परदेश विचरने गये थे और तुमारी बुद्धि उद्विग्न होने से यदि हवन न किया हो ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

भवत्या आत्मानं मम: अस्वस्थमप्रकृतिस्थं लक्षये मुखम्लान्यादिभिर्लक्षणैः ॥ १० ॥

अस्वास्थ्यकारणमन्यदस्तीति यदुक्तं तत्पृष्टमभद्रादिकं नास्तीत्याह—भद्रमिति द्वाभ्याम्। इमे गृहास्त्रिवर्गस्य परं क्षेत्रमुत्पत्तिस्थानम् त्रिवर्गोऽपि यथावद्वर्तत इत्यर्थः ॥ ११ ॥

भगवतस्तवानुध्यानं यन्मया क्रियते तस्मादग्नयोऽतिथय इत्यादि सर्वं न रिष्यति न हीयते ॥ १२ ॥

प्रस्तुतं विज्ञापयितुमाह—कोन्विति ॥ १३ ॥

स्वस्याभीष्टं काममाह—तवैवेति चतुर्भिः ॥ १४ ॥

सपत्नैर्दैत्यैर्हृता श्रीर्येषां हृतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनम् ॥ १५-१७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किञ्चाग्नीनित्यादि, यत्पूजयेति। कामानिष्टार्थान् दोग्धीति तथा तान् तथा येषामग्नीनां पूजया गृहान्वितः गृहस्थः पुमान् पुण्यलोकान् याति प्राप्नोति किञ्च ब्राह्मणोऽग्निश्च सर्व-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवतासार्वीकस्य विष्णोः मुखं वै निश्चये "ब्राह्मणोऽस्य मुखमासीत्" मुखादिन्द्रश्चाग्निश्च" इत्यादि श्रुतेरिति भावः ॥ ९ ॥

हे मनस्विनि ते सर्वे पुत्राः कुशलिनोऽपि कुशलिन एवहि ? किमाश्चर्यं पृच्छसीत्यत्राह, भवत्या आत्मानं मन अस्वस्थमप्रकृतिस्थं वदनदैन्यादिभिश्चिह्नैरहं लक्षये तव चित्तमस्वस्थं लक्षयित्वाऽहं पृच्छामीति भावः ॥ १० ॥

एवं पृष्टाऽदितिरस्माकं स्वकारणमन्यदिति यदुक्तं तत्पृष्टभद्रादिकं नास्तीत्याह-भद्रमिति द्वाभ्याम् । हे ब्रह्मन् ! द्विजादीनां भद्रमेव तथा हे गृहमेधिन् ! त्रिवर्गस्य धर्मार्थकामस्य यत्परं क्षेत्रमुद्भवस्थानं तद्गृहं गृहाश्रमश्च अग्न्यादयः पूजेऽस्तत्रश्रेयस्त्वेनसर्वे हे ब्रह्मन् ! भगवतस्तवानुध्यानान्मया क्रियमाणात्सर्वतोनं रिष्यति न नश्यति न हीयत इत्यर्थः ॥ ११ ॥ १२ ॥

अनुध्यानान्न रिष्यतीत्येतदेव काका दर्शयति—कोन्विति । हे भगवन् ! मे मानसो मनोविषयः मनसा कांक्षितः कामः कोनु न सम्पद्येत सर्वोऽपि कामः संपत्स्यत एवेत्यर्थः । कुतः यतो भवान् प्रजाध्यक्षः प्रजानां पतिस्सन् यस्या मे त्वद्धर्मपत्न्याः एवंविधान् धर्मान् प्रभाषते उपदिशति उपदेशेनैवंविधान् धर्मान् स्वयमनुष्ठापयति सति कोनु कामो दुर्लभ इति भावः ॥ १३ ॥

तर्हि किं तव चित्तास्वास्थ्यनिमित्तमित्यपेक्षायां तद्विज्ञापयितुं तदयं नाशाकुर्यादित्याशङ्कया तावत्तं प्रसादयति—तवेति । हे मारिष ! सत्त्वादिप्रधाना इमाः सर्वाः प्रजाः देवा दैत्याश्च तवैव मनसः शरीराच्च जाताः अतो भवान् तासु असुरादिषु प्रजासु यद्यपि समः समदर्शनस्तथापि हे प्रभो ! महेश्वरो भवान् भक्तं भजते ऽनुवर्तते भक्तपक्षपाती भवानित्यर्थः । प्रभोरिति पाठे प्रभोस्तव भक्तं महेश्वरो भवान् भजत इत्यर्थः ॥ १४ ॥

तस्माद्भक्तानुभजनस्वभावत्वात्त्वं त्वां भजन्त्याः मे मम श्रेयः श्रेय उपायं चिन्तयालोचय । हे सुव्रत ! कस्तवाधुना श्रेयोविपर्ययस्तत्राह—सपत्नैर्दैत्यैर्हृता श्रीर्येषां हृतानि स्थानानि येषां तानस्मानस्मत्पुत्रान् पाहि पालयेत्यर्थः । यतः हे प्रभो ! पालनसमर्थस्त्वम् इत्यर्थः ॥ १५ ॥

सा त्वत्पत्नीत्वेनासम्भावितदुःखाऽहमधुना परैर्दैत्यैर्विवासिता व्यसनार्णवादिता पुत्रेषु स्वाभेदाभिप्रायेणाहं निवासितेत्युक्तं दुःखमागरे मग्नाऽस्मवमधुना प्रबलैर्दैत्यैर्ममैश्वर्यश्रीस्थानाद्यपहृतानि तत्र ऐश्वर्यमाधिपत्यं श्रीः गोगादिसम्पत् स्थानं निवासदेशः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वदेवात्मनो विष्णोर्मुखं ब्राह्मणोऽग्निश्चेति द्वयम् ॥ ९ ॥

हि यस्मात् अस्वस्थम् ॥ १०—११ ॥

इमे गृहा अग्नय आदिसर्वं भगवतोऽनुध्यानान्न रिष्यति न विनश्यति ॥ १२ ॥

यस्या मम प्रजानां कुशलाकुशलयोरध्यक्षः साक्षित्वेन द्रष्टा भवानेवंविधान् धर्मान्प्रवक्तीति यत् ॥ १३ ॥

यथाविभागं सत्त्वादिगुणानुकूल्येन अद्य दैत्यानां मनोरथं साधयसीत्यभिप्रायः ॥ १४ ॥

अंशं देवताभागं तथ देहार्थं व्यवहारार्थं वा हृतस्थानाः हृतस्वर्गस्थानाः ॥ १५ ॥

पुनरुक्तमेव विशिनष्टि-परैरिति । मम पुत्राणामिति शेषः ॥ १६—१८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

द्विजगवामिति द्विजोपलक्षणत्वाद्गावोऽपि पृष्टा इत्यभिप्रायात् ॥ ११ ॥

सर्वमित्याशी तथापि पुत्रगतदुःखं भवत्येवापराध इति भावः ॥ १२ ॥

मारीचेति पितृक्रमागतप्रभावं सूचयति ॥ १४ ॥

ननु, ते श्रीमन्तः न तु भक्तास्तत्राह-तस्मादीशेति ॥ १५-४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिवर्गस्य क्षेत्रम उद्भवस्थानं त्रिवर्गोऽपि यथोचितं वर्तत इत्यर्थः ॥ ११ ॥

भगवतस्तव त्वत्कर्मकादनुध्यानान्न रिष्यति न हीयते ॥१२-१३॥

तदपि कृपया यद्येवं पृच्छसि तर्हि मद्दुःखोपशमस्तवया सुकर एवेत्याह-तवैवेति चतुर्भिः । महेश्वरो भगवान् जगति सर्वत्र समोऽपि भक्तं यथा भजते तथैव त्वं पुत्रेषु मध्ये भक्तिमन्तमिन्द्रं पालयितुमर्हसीति भावः ॥ १४ ॥

नः इति पुत्रसाहित्याद्बहुवचनम् ॥ १५—१७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भवत्याः आत्मानं लक्षणैर्मुखम्लान्यादिभिरस्वस्थं लक्षये॥१०॥

क्षेत्रमुदयस्थानम् त्रिवर्गोऽपि यथोचितं वर्तते इति भावः ॥११॥

अग्न्यादयोऽपि होमादिना पूजिताः सन्तीति शेषः । किं बहुना भगवतः पतिरूपिणोऽनुध्यानं यन्मया क्रियते ततः सर्वं रिष्यति न हीयते ॥ १२ ॥

वाञ्छितं कामं विज्ञापयितुमाह—क इति । मानसः मनसा वाञ्छितः कामः को न सम्पद्येत सर्वोऽपि सम्पद्येतेत्यर्थः ॥ १३ ॥

सम्पाद्यं काममाह—तवेति चतुर्भिः । हे प्रभो ! यद्यपि भवानसुरादिषु समस्तथापि जनं भज, यथा महेश्वरः परमेश्वरः सर्वत्र समोऽपि भक्तं भजते अनुवर्तते ॥ १४ ॥

को मम भक्तः ? किमाकारं च मया तदनुवर्तनं कार्यम् अत्राह, तस्मादीश भजन्त्येति । नोऽस्मान् अदित्यादित्यान् ॥ १५—१७ ॥

यथा तानि पुनः साधो ! प्रपद्येरन्ममात्मजाः ।
तथा विधेहि कल्याणं धिया कल्याणकृत्तम ! ॥ १७ ॥

श्रीशुक उवाच ।

एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ।
अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ १८ ॥
क्व देहो भौतिकोऽनात्मा क्व चाऽऽत्मा प्रकृतेः परः ।
कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९ ॥
उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ।
सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ २० ॥
स विधास्यति ते कामान् हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ २१ ॥

अदितिरुवाच ।

केनाऽहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ।
यथा मे सत्यसङ्कल्पो विदध्यात्स मनोरथम् ॥ २२ ॥
आदिश त्वं द्विजश्रेष्ठ ! विधिं तदुपधावनम् ।
आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥

भाषा टीका ।

गृहस्थ पुरुष जिनकी पूजा से कामों के परिपूर्ण करने वाले लोकों को जाता है, वे ब्राह्मण और अग्नि सर्व देवात्मक श्रीविष्णु के मुख रूप हैं ॥ ९ ॥

हे मनस्विनि हे शुद्धि वाली ! तुमारे सब पुत्र तो कुशल हैं ? क्योंकि-इस समय लक्षणों से हम तुमारे आत्मा को अस्वस्थती देखते हैं ॥ १० ॥

अदितिरुवाच ॥

अदिति बोली, कि—हे ब्रह्मन् आपकी कृपा से गौ, ब्राह्मण, धर्म, और मेरी कुशल है, हे गृह मेधिन् ! ये आपके गृह अर्थ धर्म काम रूप त्रिवर्ग के तो क्षेत्र हैं अर्थात् गृह से ही त्रिवर्ग की सिद्धि है ॥ ११ ॥

हे भगवान् ! अग्नि, अतिथि, भृत्य, भिक्षु, और जो चाहना वाले हैं वे सभी आपके ध्यान से कोई खाली नहीं जाते हैं किन्तु सभी का सत्कार होता है ॥ १२ ॥

हे भगवन् ! मेरी कौनसी मनो कामना पूरी नहीं होसक्ती है, जिस मेरे लिये, मेरी प्रजा के अध्यक्ष आप इस प्रकार के धर्मों का भाषण करते हो ॥ १३ ॥

हे मारीच, ( हे मरीचि पुत्र ! ) ये सब प्रजा आपही के मनसे और शरीर से उत्पन्न है, जो कि—सत्त्व रज और तमको सेवन करने वाली है, हे प्रभो ! परंच आप उन असुरादिकों में समहो तथापि भक्त को तो महेश्वर भी भजते हैं ॥ १४ ॥

तस्मात् हे ईश ! हे सुव्रत ! मो भजनेवाली के श्रेय की चिन्ता करो आज हमको वैरियों ने श्री और स्थान हरण कर निकाल दिये हैं ऐसे न की आप रक्षा करो १५ ॥

शत्रुओं की निकाली भई मों मैं आज व्यसन के सागर में मग्न होरही हुं और प्रबल वैरियों ने हमारे ऐश्वर्य, श्री, यश, और स्थान सब हर लिये ॥ १६ ॥



श्रीधरस्वामिकृतभावार्थदीपिका ।

कः कश्यपः प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेनैव तत्त्वमुपदिशति-अहो इति सार्धेन ॥१८-१९॥

अत्रापरितुष्यन्तीं प्रत्याह—उपतिष्ठस्वेति द्वाभ्याम् ॥ २० ॥

नन्वेवम्भूतकामप्राप्तिहेतुर्देवान्तरसेवाप्रसिद्धा तत्राह—अमोघेति ॥ २१ ॥

## कश्यप उवाच ।

एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः ।
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा च मे मनोरथं विदध्यात् ॥ २२ ॥

यथा च मे आशु तुष्यति तथा तत्सेवाप्रकारमादिश ॥ २३ ॥

मे मया पृष्टः पद्मजो मे यद्व्रतमाह एतत्ते तव प्रवक्ष्यामीत्यन्वयः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतानि मत्पुत्राः पुनर्यथा पूर्ववत् प्रपद्येरन् प्राप्नुयुः यथा येनोपायेन प्रपद्येरन्निति वा तथा हे साधो कल्याणकृच्छ्रेष्ठ ! कल्याणधिया शुभालोचनया विधेहि कुरु ॥ १७ ॥

एवमित्थमदित्या प्रार्थितः कः प्रजापतिः कश्यपः स्मयन्निव तामदितिमाह ॥ १८ ॥

तदेवाह—अहो इति प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेन तत्त्वमुपदिशति—अहो इति सार्द्धेन । विष्णोर्मायाया बलं कियदिदं जगत् स्नेहबद्धं पुत्रादिषु स्नेहपाशेन बद्धमित्येतत् भौतिकः भूतपञ्चकपरिणामरूपो देहः क ? प्रकृतेः परो भिन्न आत्मा प्रत्यगात्मा क? परस्परमेवमत्यन्तविलक्षणयोर्देहात्मनोरभेदोऽत्यन्तमसम्भावित इत्यर्थः । एवमसम्भाविताभेदयोर्देहात्मनोर्मध्ये कस्येमे पुत्राद्याः ? कस्य सम्बन्धिनः किं देहस्य ? किम्वा आत्मनः ? अयं भावः तावदात्मनः साक्षात्पुत्रादिभिस्सम्बन्धः अपि तु देहद्वारा, देहस्य भौतिकत्वेनोपचयादिविकारित्वेन चानित्यत्वात्तत्सम्बन्धिषु स्नेहोऽज्ञानमूलक इति. तदेवाह—मोह एव हि कारणमिति । देहात्मभ्रम एवात्र स्नेहे कारणमित्यर्थः ॥ १९ ॥

एवं तत्त्वोपदेशेनापरितुष्यन्तीं प्रत्याह—उपतिष्ठस्वेति द्वाभ्याम् वासुदेवमुपतिष्ठस्व आराधय वासुदेवाराधनस्य समीहितसाधनत्वं सूचयंस्तं विशिनष्टि, जगद्गुरुं जगत आराधकस्य लोकस्य गुरुं हितकारिणं,काधिप्रभृतं हितं करोतीति विशिनष्टि, सर्वेषां भूतानां गुहासु हृदयकुहरेषु आवासो यस्य तम् अनेन वासुदेवशब्दस्य प्रवृत्तिनिमित्तं दर्शितम्. ननु, किं विशेषेण वासुदेवमेवोपतिष्ठस्वेति वदसीत्यतो विशिनष्टि, जनार्दनमिति ।"अर्द्द गतौ याचने च" इति धातुः जनैः श्रेयस्कामैरर्द्यते याच्यते इति तं स एव याचनीय इति भावः । तत्र हेतुं वदन् विशिनष्टि, भगवन्तं षाड्गुण्यपूर्णं देवतान्तरस्य दरिद्रत्वादिति भावः 'बहान्यन्यम् ह पुरुषमिति । पुरु अधिकं सनोति ददातीति पुरुषस्तं "षणुदाने" इति धातोः 'अन्येष्वपि दृश्यत' इति डः 'य आत्मदा बलदाः । एको बहूनां विदधाति कामान्' इत्यादिश्रुत्या परमपदान्तर्यामित्वेन प्रसिद्ध इति भावः ॥ २० ॥

पुरुषजनार्दनपदाभ्यामभिप्रेतं विशदयन्नाह—स इति । स पुरुषो जनार्दनस्तव कामान्विधास्यति पूरयिष्यति अनेन उदाहृतश्रुत्यर्थोऽनुसंहितः स च पुरुषशब्दप्रवृत्तिनिमित्तभूत इति च दर्शितं न केवलं कामानां विधाता अपितु हरिराश्रितार्तिहरश्च नाहं तमाराधितुं प्रभवामीति शङ्कामपनुदन्विशिनष्टि दीनानुकम्पनः दीनेषु किञ्चिदानुकूल्ययुक्तेषु विपुलापराधेष्वपि निरतिशयकृपायुक्तः भगवतः पूर्णषाड्गुण्ययुक्तस्यावाप्तसमस्तकामस्यैव सेवा अमोघा सफला नेतरा देवतान्तरसेवेति मम मतिः मतमित्यर्थः । देवतान्तरस्य अनवाप्तसमस्तकामत्वादिति भावः ॥ २१ ॥

एवमुपदिष्टानिर्विण्णा स्वनष्टप्रापणसमर्थोपाया तदुपायानुष्ठानप्रकारबुभुत्सया पृच्छत्यदितिः—केनेति द्वाभ्याम् । हे भगवन् ! अहं केन विधिना जगत्पतिं भगवन्तम् उपास्य भजेयम् ? यथा येन प्रकारेण भजमानाया मम स सत्यसङ्कल्पो भगवान्मनोरथं विदध्यात् ? ॥ २२ ॥

हे द्विजश्रेष्ठ ! पुत्रैस्सह क्लिश्यन्त्याः मम यथा च देवो भगवानाशु तुष्यति तथा तं तद्भजनप्रकारात्मकं विधिमादिशस्व उपदिश ॥ २३ ॥

एवं पुनरापृष्टो भगवान्कश्यपः पयोव्रताख्यं भगवदाराधनात्मकं कर्मोपदेक्ष्यन् तस्मिन् विश्रम्भार्थं साम्प्रदायिकत्वं वदन् तत्कथनं प्रतिजानीते—एतदिति । प्रजाः पुत्रान् कामयमानस्य मे मया पृष्टो भगवान् पद्मजो ब्रह्मा यत्पयोव्रताख्यं कर्माह तत्केशवसन्तोषकरं कर्म ते तुभ्यं प्रवक्ष्यामि ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनात्मा जडात्मकः मोहोऽज्ञानम् ॥ १९—२० ॥

इतरा इतरदेवादिविषया ॥ २१ ॥

सत्यसङ्कल्पो हरिः ॥ २२ ॥

तदुपधावनं तस्य हरेः सेवाविषयम् आशु तुष्यति येनेति शेषः ॥ २३ ॥

यद्व्रतं तद्वक्ष्यामि ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कः कश्यपः स्मयन्निव वस्तुतो न स्मयमानः तस्या दुःखेनात्मदुःखितत्वात् ॥ १८ ॥

आत्मा जीवः प्रकृतेः प्राकृताद्देहात्परोऽन्यः ॥ १९ ॥

तदपि पुत्रस्नेहेन रुदतीं कृपया पुनराह—उपतिष्ठस्वेति पुरुषं वस्तुतः पतिम् अहं तु ते लौकिक एव पतिरिति भावः भगवन्तं सर्वज्ञमिति त्वत्पुत्राणां कल्याणोपायं स एव जानातीति भावः । जनार्दनोऽसुरघातित्वं त्वत्सपत्नान् हन्तुमपि स एव समर्थ इति भावः । अयं स्वभक्तं बलिं त्रिलोकीमपि

फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ।
अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥ २५ ॥
सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया ।
यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥ २६ ॥
त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ।
उद्धृताऽसि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥
निर्वर्तितात्मनियमो देवमर्चेत्समाहितः ।
अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ष्यति इन्द्रार्थं याचिष्यते इति तमिति तु वास्तवोऽर्थः सर्वभूतेति बलेरन्तःकरणं प्रेर्य्य गुरुहेलनमपि स एव तं कारयिष्यते इति भावः । वसुदेवे शुद्धसत्त्वे आविर्भवतीति वासुदेवमिति भक्त्या स्वान्तःकरणं शुद्धीकृत्य तत्रैव तं ध्यायन्त्यां त्वयि स दयासिन्धुराविर्भवितुमपि न विलम्बिष्यते इति भावः । जगद्गुरुमिति तद् मम बलेरिन्द्रस्य सर्वजगतोपि गङ्गाप्रादुर्भावादिना हितं विधास्यतीति भावः ॥ २० ॥

हरिस्तद्दुःखहर्त्ता ॥ २१ ॥

सत्यः सङ्कल्पो यस्मात् ॥ २२-२४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कः कश्यपः ॥ १८ ॥

आत्मा नित्याभिन्नजीवः अनात्मभूते देहादौ पतिपुत्रादिबुद्ध्या अतिस्नेहः तदन्येषु द्रोहो न कर्तव्य इति तत्त्वज्ञानं तां प्रत्याह-आत्मा जीवः ॥ १९ ॥

उक्तार्थेऽदृत्तचित्तां प्रत्याह-उपतिष्ठस्वेति द्वाभ्याम्। उपतिष्ठस्व भज ॥ २० ॥ २१ ॥

उपस्थास्ये भजेयम् ॥ २२ ॥

येन देव आशु तुष्यति तत्तम उपधावनमाराधनरूपं विधिम् आदिश ॥ २३ ॥

मे मया पृष्टः पद्मजः प्रजाकामस्य जनस्य यद्व्रतं मे आह एतत्ते प्रवक्ष्यामीत्यन्वयः ॥ २४ ॥

---

भाषा टीका।

हे साधो ! अब जैसे हमारे पुत्र फिर ऐश्वर्य आदि को प्राप्त हों ऐसे आप कल्याण करो आप तो अति कल्याण करने वाले हो ॥ १७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि, कि—इस प्रकार दिति ने जब प्रार्थना करी तब कश्यपजी हँसते से बोले, कि—अहो विष्णु की माया का बल अपार है, यह जगत् स्नेह से बँधा हुआ है ॥ १८ ॥

कहां पंचभूत का रचा हुआ देह ? और प्रकृति से पर आत्मा कहाँ ? कौन किस के पति और कौन किसके पुत्रादिक पर मोह ही तो कारक है ॥ १९ ॥

अदितिजी तुम सर्व भूत हृदयस्थ वासुदेव जगद्गुरु परम पुरुष भगवान् श्री जनार्दन का उपस्थित हो (भजो) ॥ २० ॥

दीनानुकंपी वह हरि तुमारे सब मनोरथों को पूर्ण करेंगे, बस भगवान की भक्ति जैसी अमोघ है ऐसा और कुछ भी नहीं हमारा तो यही विचार है ॥ २१ ॥

अदितिरुवाच ॥

अदितिजी बोलीं कि—हे भगवन् हम कौन विधि से भगवान का उपस्थान देवें जैसे कि—सत्य संकल्प परमात्मा हमारे मनोरथ को पूर्ण करें ॥ २२ ॥

हे द्विजश्रेष्ठ ! आप भगवत्सेवा अनुष्ठान की विधि को बताइये और छोटे २ पुत्रों सहित दुःख को प्राप्त होने वाली ऐसी मेरे ऊपर श्री हरि शीघ्रही प्रसन्न होवेंगे ॥ २३ ॥

कश्यप उवाच ॥

कश्यपजी बोले, कि—प्रजा ( संतान ) की कामना से यह प्रश्न मैंने श्रीब्रह्माजी से किया रहा, तब ब्रह्माजी ने श्रीकेशव के संतोष करने वाला व्रत जो कहा सो हम तुमारे से कहते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अमले शुक्ले ॥ २५ ॥

तत्रादौ पूर्वेद्युः कृत्यमाह-सिनीवाल्यामित्यादिना ब्रह्मचर्यंच तद्व्रताऽशामित्यन्तेन ग्रन्थेन। यदि लभ्येत तर्हि क्रोडविदीर्णया वन्यवराहोत्खातया आलिप्य ॥ २६ ॥

तत्र मन्त्रः, त्वं देवीति। हे देवि ! त्वं रसाया उद्धृतासि ॥ २७ ॥

निवर्तित आत्मनि कर्मो नित्यनैमित्तिको येन ॥ २८ ॥

नमस्तुभ्यं भगवते पुरुषाय महीयसे ।
सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥
नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ।
चतुर्विंशद्गुणज्ञाय गुणसङ्ख्यानहेतवे ॥ ३० ॥
नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे ।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३१ ॥
नमः शिवाय रुद्राय नमः शक्तिधराय च ।
सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्राऽऽवाहनादौ नव मन्त्रानाह—नमस्तुभ्यमिति । पाद्यादौ विशेषतस्तु द्वादशाक्षरं वक्ष्यति ॥ २९ ॥

चतुर्विंशतिगुणास्तत्त्वानि जानातीति तथा तस्मै गुणसङ्ख्यानस्य हेतवे साङ्ख्यप्रवर्तकाय ॥ ३० ॥

एवं सामान्यतो नत्वा गुणावतारान् प्रणमति त्रिभिः—तत्राऽऽदौ मन्त्रोक्तयज्ञरूपेण विष्णोः प्रणामो नम इति द्वे शीर्षे यस्य त्रयः पादाः यस्य तन्तवे फलविस्तारकाय त्रय्यां विद्यायामात्मा यस्येति त्रिधा बद्ध इत्यस्यार्थ उक्तः तथा च मन्त्रः "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश" — इति ॥ ३१ ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रतिज्ञाय तदेवाह—फाल्गुनस्येत्यादिना यावदध्यायसमाप्ति । फाल्गुनस्य मासस्यामले शुक्ले पक्षे द्वादशाहं द्वादशाहसाध्यं पयोव्रताख्यं कर्म कर्तव्यमिति शेषः । तेन पयोव्रतेन परमया अव्यभिचरितया भक्त्या युक्तोऽरविन्दाक्षमर्चयेत् अन्वित इति पुन्निर्देशेन एतन्मे प्रजाः आहेत्यनेन ते प्रवक्ष्यामीत्यनेन च स्त्रीपुरुषसाधारणमेतद्व्रतानुष्ठानमिति सूचयति ॥ २५ ॥

तत्रादौ पूर्वेद्युः कृत्यमाह—सिनीवाल्यामित्यादिना ब्रह्मचार्यथ तद्व्रतेत्यन्तेन । दृष्टेन्दुकलायाममावास्यायां यदि लभ्येत तर्हि क्रोडविदीर्णायाऽऽरण्यवराहोत्खातया मृदा मृत्तिकया देहमालिप्य स्रोतसि नद्यामिमं मन्त्रं वक्ष्यमाणं जपन् स्नायात् उदीरयेदिति तदालेपनसमये एतन्मन्त्रमुदीरयेदित्यर्थः ॥ २६ ॥

मन्त्रमेवाह—त्वमिति । "उद्धृतासि वराहेण कृष्णेन शतबाहुना" इतिमन्त्रार्थानुवादकोऽयं मन्त्रः, हे देवि हे भूदेवते ! स्थानं तव यथास्थानमिच्छता वराहेण श्रीभगवता त्वं रसायाः रसातलादुद्धृतासि तुभ्यं नमः मम पापं प्रणाशयेतीमं मन्त्रमुदीरयन् मृदाऽऽलिप्य स्नायात् ॥ २७ ॥

ततो निर्वर्तितः सम्यगनुष्ठितः आत्मनियमः सन्ध्योपासनादिर्येन तादृशः समाहितचित्तो हरिमभ्यर्चयेत् कुत्रार्चयेदित्यत्राह—अर्चयेदिति । स्थण्डिलादिषु पञ्चस्वन्यतमेषु तत्र स्थण्डिलं कूर्चवल्यादिभिरलङ्कृता भूमिः जलं विशुद्धं कुम्भसम्भृतम् ॥ २८ ॥

तत्रावाहने नव मन्त्रानाह—नम इति । अत्रायं विवेकः अत्र प्रधानो मन्त्रो वासुदेवद्वादशाक्षरः वासुदेवं जगद्गुरुम् उपतिष्ठस्वेत्युक्तत्वात् "गन्धमाल्यादिभिश्चार्चेद्‌द्वादशाक्षरविद्यया" "शृतान्मूलविद्यया "जपेदष्टोत्तरंशतम्" इति वक्ष्यमाणत्वाच्च नमस्तुभ्यमित्यादयस्त्वावाहनोपचारमन्त्रा इति; तत्राद्यो मन्त्रो द्वादशाक्षरार्थानुवादी भगवद्वासुदेवशब्दाभ्यां तत्प्रत्यभिज्ञानात् 'सर्वभूतनिवासाय' इत्यनेन वासुदेवशब्दप्रवृत्तिनिमित्तमुक्तं सर्वभूतनिवासाय अत एव वासुदेवशब्दवाच्यायेत्यर्थः । वसतीति वासुः वसन्त्यस्मिन्निति वा वासुः । "वस निवासे" इतिधातोः कर्तर्यधिकरणे चौणादिकः आद्ये सर्वभूतेषु निवसत्यन्तरात्मतयेति सर्वभूतनिवासः तस्मै द्वितीये तु सर्वभूतानामाधेयानां वासुराधारभूतस्तथा तस्मै, साक्षिणे इत्यनेन देवशब्दार्थ उच्यते साक्षी साक्षाद्द्रष्टा सर्वं चेतनाचेतनात्मकं वस्तुजातं साक्षात्पश्यन् दृश्यधर्मैरस्पृष्टः साक्षीत्युच्यते देवशब्दस्याप्ययमेवार्थः । स्वतेजसा दीप्यमानो हि देवः महीयसे पुरुषायेत्यनेन "वेदाहमेतं पुरुषं महान्तम्" इति पुरुषसूक्तप्रत्यभिज्ञानात् तत्र चैतमित्येतच्छब्देन पूर्वोक्तजगत्कारणत्वतदुपयुक्तगुणपौष्कल्यवतः परामर्शात् तस्य जगत्कारणत्वादिगुणजातस्य मन्त्रप्रतिपाद्यवासुदेवविशेषणत्वमवगम्यते तदेवम्भूताय तुभ्यं नमः सर्वमन्त्रेषु नमःशब्दप्रयोगः स्वप्रयोक्त्रभिप्रायको ज्ञेयः ॥ २९ ॥

यदि स एवम्भूतो भगवान्सर्वभूतनिवासः सर्वसाक्षी च भवति तर्हि सर्वैः कथं न दृश्यते ? इत्यत्राह—नमोऽव्यक्तायेति । अयं मन्त्रस्तु "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्युपनिषत्प्रतिपाद्यपरमात्मस्वरूपप्रकाशकः अव्यक्तादिशब्दैरद्रेश्यसूक्ष्मभूतयोनित्वादिप्रत्यभिज्ञानात् अव्यक्ताय व्यक्तैरिन्द्रियैश्चक्षुरादिभिर्न व्यज्यते न दृश्यत इत्यव्यक्तः तथा तस्मै अद्रेश्यायेत्यर्थः । तत्र हेतु

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सूक्ष्माय निरतिशयसूक्ष्मजीवान्तरात्मतया प्रवेशयोग्यत्वेन ततोऽपि सूक्ष्माय,सूक्ष्मत्वप्रयुक्तं परिच्छिन्नत्वं वारयति,प्रधानपुरुषायेति,प्रधानपुरुषाय प्रकृतिपुरुषरूपायेत्यर्थः। तावद्रूपत्वमत्र प्रकृतिपुरुषसामानाधिकरण्यं तच्च शरीरात्मभावनिबन्धनं शरीरबुद्धिशब्दानामात्मपर्यन्तत्वाभिप्रायेणाभेदनिर्देशः। एवञ्च सर्वान्तःप्रवेशयोग्यतया सूक्ष्मत्वाख्याकारद्वयेन प्रकृतिपुरुषान्तरात्मतयानुप्रविष्टस्य स्वरूपमपरिच्छिन्नमेवेति भावः। प्रधानपुरुषायेति कारणावस्थाचिद्रूपत्वमुक्तम् अथ कार्यावस्थतद्रूपत्वमाह—चतुर्विंशद्गुणज्ञाय गुणाभूतचतुर्विंशतितत्त्वाभिज्ञाय गुणाभावो विशेषणत्वं शरीरत्वमिति यावत् शरीरमपि ह्याकृतिगुणादिवदपृथक्सिद्धविशेषणमेवेत्यभिप्रायः। अपृथक्सिद्धविशेषणविषयबुद्धिशब्दयोस्तद्विशेष्यपर्यन्तत्वमाकृत्यधिकरणन्यायसिद्धं न केवलं चतुर्विंशतितत्त्वान्तरात्मतया तद्रूपत्वम्, अपि तु तत्कारणत्वापीत्याह—गुणसङ्ख्यान हेतव इति। गुणानां सत्त्वादीनां चतुर्विंशतितत्त्वरूपेण कार्यावस्थानां सङ्ख्यानज्ञानं तस्य हेतवे कारणभूताय गुणानाम चतुर्विंशतिधा गणनायास्तेषां कार्यतापत्तिमूलकत्वात्तत्व तत्कारणत्वात्तद्धेतुत्वेन सङ्ख्यानहेतुत्वमित्यवगन्तव्यं यद्वा सङ्ख्यानं प्रमितिः गुणसङ्ख्यानस्य सत्त्वादिगुणानां प्रमितेः चतुर्विंशतिधा परिणतानां सत्त्वादिगुणानां प्रमितेः तद्विषयकप्रमायाः हेतवे तत्प्रमाहेतुत्वञ्च तत्कारणत्वद्वारा इत्यवगन्तव्यं यद्वा गुणसङ्ख्यानयोर्हेतवे सङ्ख्यानमत्र व्यष्टिप्रत्यगात्मस्वरूपम् अहमित्येवं सम्यक् स्वस्मै प्रकाशमानात्वाद्गुणशब्देन गुणकार्यभूतं चतुर्विंशतितत्त्वात्मकमचेतनद्रव्यमुच्यते तयोर्हेतवे कारणभूतायेत्यर्थः॥ ३०॥

एवं "भूतयोनिम्" इति श्रुतिस्थभूतयोनिशब्दार्थं उक्तः प्रधानपुरुषायेत्यादिपदत्रयेण कार्यकारणोभयावस्थप्रकृतिपुरुषशरीरकत्वेन तत्कारणत्वेन च रूपात्मकस्य जगतस्तद्विशेषणत्वमुक्तम् अथ नामात्मकप्रपञ्चस्य तद्बोधकत्वेन तद्विशेषणत्वमाह-नम इति। अयं मन्त्रः "चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश" इति मन्त्रप्रकाशितशब्दात्मकप्रपञ्चविशेषणपरमात्मस्वरूपप्रकाशकस्तस्मिन् हि मन्त्रे शब्दात्मकप्रपञ्चो वृषभत्वेन रूप्यते शब्दश्च वर्णात्मको ध्वन्यात्मकश्चेति द्विविधः वर्णात्मकोऽपि पुनः साध्वसाधुभेदेन द्विविधः, साधुश्च वेदरूपेण तन्मूलकस्मृतीतिहासादिरूपेण च द्विविधः तत्र—

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी नाम्ना यतः सर्वाः प्रसूतयः॥
वेदशब्देभ्य एवादौ देवादीनां स निर्ममे।—

इत्याद्युक्तरीत्या कृत्स्नजगत्सृष्टेर्वेदार्थबोधनमूलकत्वाद्वेदस्य प्राधान्यात्तस्य च तन्मूलकस्मृत्यादेश्च साधुशब्दात्मकः प्रपञ्चो वृषभत्वेनास्मिन्मन्त्रे रूप्यते तदयं मन्त्रार्थःमहोदेवः महान्देवः शब्दात्मको देवः देवस्य परमात्मनो बोधकत्वादुपचाराद्देवः मर्त्यान् अमरान् देवमनुष्यादीन् परमात्मशरीरभूतानाविवेश बोधयितुं प्रवृत्त इत्यर्थः। वृषभो रोरवीति प्रसिद्धद्विशृङ्गचतुष्पादकमूर्त-



वृषभविजातीयवृषभरूपः रोरवीति शब्दङ्करोति शब्दात्मकतामापन्न इत्यर्थः। विजातीयवृषभत्वेन तं रूपयति-चत्वारीति। अस्य शब्दात्मनो वृषभस्य शृङ्गाश्चत्वारि चत्वारः नामाख्यातनिपातोपसर्गाः त्रयो भूतभविष्यद्वर्तमानकालाः पादा अस्यार्थानां भूतादिकालोपाधिना विहितत्वाच्छब्दानां कालस्याहवयोश्च तेषां भूतादीनां पादत्वेन रूपणं द्वे शीर्षे प्रवृत्तिनिमित्तं तदाश्रयश्चेति द्वे शिरसी सप्त विभक्तयो हस्तासः हस्ताः "आज्जसेरसुक्" इत्यसुगागमः त्रिधा बद्धः उरसि कण्ठे शिरसि च बद्धः स्थानत्रय एव शब्दानामाविर्भावादिति भाव इति. प्रकृतमन्त्रार्थस्तु त्रयीविद्यात्मने त्रयीविद्या वेदविद्या तदात्मने तद्विशेषणकाय तद्विशेषणकत्वञ्च तद्वाच्यत्वरूपं विवक्षितम् रूपात्मकप्रपञ्चस्य परमात्मनोऽपृथक्सिद्धविशेषणत्वादपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वाभ्युपगमात् निगमागमादिशब्दजातवाच्यायेति फलितोऽर्थः "काठिन्यवान्यो बिभर्ति" इत्यादिवद्विशेषणत्वादिकं सामानाधिकरण्यविषयनिर्देशो परमात्मनस्तु सद्वारकं विशेषणमित्यवगन्तव्यं तन्तव तनोति यज्ञादिक्रियाकलापं विस्तारयति निष्कृत्य प्रकाशयतीति तन्तुस्तस्मै यज्ञाय यज्ञो विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेः "यज्ञावाऽऽचरतः कर्म समग्रं प्रविलीयते" इति स्मृतौ यज्ञशब्दस्य विष्णौ प्रयोगाच्च यज्ञाय विष्णुप्रकाशकाय पूर्वोत्तरभागाभ्यां कर्मब्रह्मप्रतिपादकायेत्यर्थः। क्वचिदत्र यज्ञरूपेण विष्णुः स्तूयते इत्युक्त्वा चत्वारि शृङ्गेति वेदा वा एतदुक्तास्त्रयोऽस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्तासः सप्त छन्दांसि त्रिधा बद्धः त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो वृषभो रोरवीति रोरवणं स्तवनकर्मेणा ऋग्भिर्यजुर्भिः सामभिः "यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति" इति यास्कनिरुक्तमुदाहृत्य व्याचक्ष्यते॥ ३१॥

तदेवं नामरूपात्मकजगदन्तरात्मत्वेन तत्कारणत्वेन च प्रकृतकर्माराध्यस्य वासुदेवस्य तद्विशेषणकत्वमुक्तम्. ननु, जगत्सृष्ट्यादिकर्तृत्वं ब्रह्मरुद्रादिगतं न वासुदेवगतमित्याशङ्कायां यद्ब्रह्मादिगतं जगत्सृष्ट्यादिकं तदन्तरात्मतयाऽनुप्रविष्टस्य तच्छरीरकस्य तद्द्वारा तस्यैव विशेषणमित्यभिप्रायेण तद्रूपत्व—मुच्यते नमःशिवायेति. तत्र शिवत्वादिधर्माणां प्रतर्दनाधिकरणन्यायेन इन्द्रद्वारा त्वाष्ट्रहन्तृत्वादीनामिव रुद्रब्रह्मशरीरकस्य परमात्मनः भूतानीति सद्वारकविशेषणत्वमवगन्तव्यं शक्तिधराय अम्बिकापतय इत्यर्थः॥ ३२॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पयोधन इति पुंल्लिङ्गप्रयोगः सर्वसाधनत्वज्ञापनार्थः मुद्रो विशेषमाह-स्रोतेति। धराहरणात्तथा स्रोतःस्यन्दमानं जल तत्र स्नानं कुर्यादित्यर्थः॥ २५॥

रसायाः रसातलात् स्थानमिच्छता भूतानामिति शेषः॥२७॥
निवर्तितात्मनियमः कृतसन्ध्योपासनादिकः॥ २८॥ २९॥
गुणसंस्थानहेतवे कपिलात्मने॥ ३०॥
त्रिशीर्षे "चत्वारिशृङ्गा" इति श्रुतेः—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"चत्वारि शृङ्गा वेदास्तु पादास्त्रिसवनानि च।
प्रायणीयं शिरस्त्वेकमन्यच्चोदयनीयकम्॥
हस्तास्तु सप्तच्छन्दांसि तैर्गृह्णाति फलान्यसौ।
मन्त्रब्राह्मणकल्पैस्तु त्रिधा बद्ध इतीर्यते॥
शास्त्राङ्गातृस्तुतिरवै रोरवीत्यृत्विजो मुखात्।
वृषभो महान्स्वधर्मत्वाद्देवस्तु फलभावनात्" ॥ इति
तस्मै व्याप्ताय सन्ततिहेतवे च त्रयीविद्यानां सोमपानाम् आत्मने अन्तर्यामिणे ॥ ३१-३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पयसा व्रतं यस्य सः पयःपायीत्यर्थः ॥ २५ ॥

तत्रादौ पूर्वेद्युः कृत्यमाह—सिनीवाल्याममावास्यायां क्रोडविदीर्णया वराहोत्खातया मृदा यदि लभ्येतैतत् काकाक्षिगोलकन्यायेनोभयत्रान्वितम् ॥ २६-२८ ॥

तत्रावाहनादौ नव मन्त्रानाह—नम इति ॥ २९ ॥

चतुर्विंशतिगुणान् वैशेषिकोक्तान् रूपादीन् साङ्ख्योक्तानि तत्त्वानि वा जानातीति तस्मै गुणसङ्ख्यानस्य सांख्यशास्त्रस्य हेतवे प्रवर्त्तकाय ॥ ३० ॥

गुणावतारान् प्रणमति त्रिभिः, तत्रादौ मन्त्रोक्तयज्ञरूपिणं विष्णुं प्रणमति—नम इति। तन्वते फलविस्तारकाय त्रय्यां विद्यायामात्मा यस्येति त्रिधा बद्ध इत्यस्यार्थ उक्तः, तथा च मन्त्रः"चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यां आविवेश"इति. तथा च यास्कः चत्वारि शृङ्गाणीति वेदा एवोक्ताः त्रयोऽस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासः सप्त छन्दांसि त्रिधा बद्धस्त्रेधाबद्धः मन्त्रब्राह्मणकल्पैःवृषभो रोरवीति रोरवणं सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिः "यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति"इति ॥ ३१- ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अमले 'शुक्ले' पक्षे द्वादशाहं द्वादशदिनपर्यन्तं पयसा व्रतं यस्य स जनः अरविन्दाक्षमर्चयेदित्यन्वयः ॥ २५ ॥

तत्र पूर्वदिनकृत्यमाह—सिनीवाल्यामित्यादिना मन्त्रचतुष्टयं तद्भाऽयामित्यन्तेन ग्रन्थेन। तेन सिनीवाल्यां दृष्टेन्दुकलायाममावास्यायां यदि लभ्येत तर्हि क्रोडविदीर्णया वन्यवराहोत्पाटितया मृदा आलिप्य यदि लभ्येत तर्हि स्रोतसि स्नायात् मृदालेपनवेलायामेतं वक्ष्यमाणं मन्त्रमुदीरयेत् ॥ २६ ॥ २७ ॥ २८ ॥

आवाहनादौ मन्त्रानाह—नम इति। पाद्यादौ विशेषस्तु द्वादशस्कन्धे बोध्यः गन्धमाल्यादिभिश्चार्हणविधिरित्यत्र तद्विधिरिति वक्ष्यमाणत्वात् ॥ २९ ॥

चतुर्विंशद्गुणज्ञाय चतुर्विंशतितत्त्वज्ञाय गुणसंख्यानस्य चतुर्विंशतितत्त्वप्रतिपादकस्य श्रीमद्भागवतशास्त्रान्तर्गतस्य सांख्यशास्त्रस्य हेतवे प्रवर्त्तकाय ॥ ३० ॥

अथ विश्वस्थितिनिमित्तभूतयज्ञरूपिणं श्रीमद्भगवन्तं प्रणमति—नमो द्विशीर्ष्णे इति। यज्ञाय यज्ञमूर्त्तये विष्णवे नमः "यज्ञो वै विष्णुः"इति श्रुतेः। तनोति फलमिति तन्तुस्तस्मै वाञ्छितफलदाय त्रय्यां विद्यायामात्मा यस्य वेदत्रयीप्रोक्तार्थ द्वे प्रायणीयोदयनीये शीर्षे यस्य तस्मै त्रयः सवनत्रयरूपाः पादाः यस्य तस्मै शृङ्गाय चत्वारो वेदाः शृङ्गा यस्य तस्मै सप्त छन्दांसि हस्ता यस्य तस्मै। तथा च मन्त्रः "चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यानाविवेश"इति। तथा यास्कनिरुक्तिः चत्वारि शृङ्गेति वेदा एवोक्ताः त्रयोऽस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्ताः सप्तच्छन्दांसि त्रिधा बद्धो मन्त्रब्राह्मणकल्पैः वृषभो रोरवीति रोरवणं सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिः "यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिस्तुवन्ति" इति महादेवो मर्त्यानाविवेशत्यस्य महादेवो यज्ञमूर्तिर्भगवान् मर्त्यान् यज्ञार्हान् आविवेशेत्यर्थः ॥ ३१ ॥

अथ विश्वं संहारनिमित्तभूतशिवात्मकांशरूपिणं भगवन्तं प्रणमति, नमः शिवायेति ॥ ३२ ॥

———

भाषा टीका।

फाल्गुन मास के शुक्ल पक्ष में द्वादश दिन का पयोव्रत धारण कर परम भक्ति युक्त होकर; कमलदललोचन श्रीहरि का अर्चन करे ॥ २५ ॥

तहां एक दिन पहिले अर्थात् अमावास्या को जंगली सूकर की विदारण करी हुई मृत्तिका का देहमें लेप करके यदि स्रोत (नदी आदि) मिल जावे तो वहां नहीं तो कूपादि पर भी, इस आगे के मंत्र को बोल कर स्नान करे ॥ २६ ॥

वह मंत्र यह है, कि—" हे देवि ! स्थिति की इच्छा से तुमको श्रीआदिवराह भगवान् ने रसातल से उद्धृत कीनी हैं आपको नमस्कारहो आप हमारे पाप को नष्ट करो" ॥ २७ ॥

फिर अपने सब नियमों से निवृत्त होकर, सावधान होकर श्रीहरि का पूजन करे वह पूजा अर्चा (प्रतिमा) में, स्थंडिल [ भूमि ] में सूर्य, जल, वा गुरुके विषय में करे ॥ २८ ॥

महान् पुरुष रूप सर्वभूतों में निवास करने वाले, सर्व साक्षी श्रीवासुदेव भगवान् को नमस्कार हो ॥ २९ ॥

अव्यक्त सूक्ष्म प्रधान पुरुष रूप और चौबीस [२४] गुणों के ज्ञाता तथा गुण संख्यान के हेतु ऐसे आपको नमस्कार हो ॥ ३० ॥

दो शिर वाले तीन पद वाले चार शृंग युक्त तंतुरूप और सप्त हस्त वाले, वेदत्रय की विद्या में आत्मा जिनका ऐसे यज्ञरूप आपको नमः हो ॥ ३१ ॥

शिव और रुद्ररूप तथा शक्ति के धारण करने वाले सर्व

नमो हिरण्यगर्भाय प्राणाय जगदात्मने ।
योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥
नमस्ते आदिदेवाय साक्षिभूताय ते नमः ।
नारायणाय ऋषये नराय हरये नमः॥ ३४ ॥
नमो मरकतश्यामवपुषेऽधिगतश्रिये ।
केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३५ ॥
त्वं सर्ववरदः पुंसां वरेण्य ! वरदर्षभ ! ।
अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥ ३६ ॥
अन्ववर्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः ।
स्पृहयन्त इवामोदं भगवान्मे प्रसीदताम् ॥ ३७ ॥
एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् ।
अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥
अर्चित्वा गन्धमाल्याद्यैः पयसा स्नपयेद्विभुम् ।
वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ।
गन्धधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥
शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ।
ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ ४० ॥

भाषा टीका।

…णा के पति और भूतों के पति भी आपही हो ऐसे आपको …मः ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

प्राणाय सूत्रात्मने योगैश्वर्यं शरीरं यस्य ॥ ३३ ॥ ३४ ॥

अधिगता प्राप्ता श्रीयेन तस्मै ॥ ३५—३६॥

तत्पादपद्मयोरामोदं स्पृहयन्त इव देवाश्च यमन्ववर्तन्त स मे प्रसीदतु ॥ ३७ ॥

आवाहने पुरस्कृतं सम्मानितम् ॥ ३८ ॥ ३९ ॥

पयसि शृतं पक्वं पायसम् मूलविद्यया द्वादशाक्षरेणैव ॥ ॥ ४०—४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हिरण्यगर्भाय चतुर्मुखरूपेणावस्थिताय प्राणयति सर्वाणि भूतानीति प्राणस्तस्मै "कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति श्रुतेः प्राणशरीरकत्वाद्वा प्राणः जगदन्तरात्मने ब्रह्मादिस्तम्बपर्यन्तजगदन्तरात्मत्वमेव तत्समानाधिकरणनिमित्तमिति भावः योगैश्वर्यशरीराय योगैश्वर्यनिर्वाहकाय तन्निर्वाहकत्व योगस्मृतिप्रणेतृत्वरूपकारणत्वेनेत्याह—योगहेतवे योगस्मृतिकर्त्रे इत्यर्थः। इदं विशेषणद्वयं साक्षाच्चतुर्मुखस्य तद्द्वारात् परमात्मन इत्यवगन्तव्यम् ॥ ३३ ॥

उक्तविशेषणानामर्थप्रदर्शनपूर्वकमाधारणधर्मैर्विशिनष्टि— नमस्त इति। आदिदेवाय ब्रह्मरुद्रादीनामप्यादिभूताय कारणभूतायेत्यर्थः। अयमुक्तसर्वकारणत्वसामर्थ्यदर्शनार्थः शब्दार्थस्त्वादिश्चासौ देवश्च इति अत एव देवानामपि देवाय अधिपतये स्वतेजसा दीप्यमानानां ब्रह्मादिदेवानामपि अन्तरात्मतया दीप्यमानायेति वा नारायणाय नाराणां प्रापकाय आधाराय च नरायनित्याय ऋषये सर्वज्ञाय यद्वा नारायणाय ऋषये नराय च नरनारायणऋषिरूपेणावतीर्णाय हरये मां भक्तानिहरुंस्य ३४

मरकतवदिन्द्रनीलवच्छ्यामं वपुर्यस्याधिगता नित्यसंश्लिष्टा श्रीमहालक्ष्मीर्येन तस्मै केशवादिद्वादशमूर्तीनाम उपलक्षकः केशवशब्दः केशवादिद्वादशमूर्तिरूपेणावस्थितायेत्यर्थः। पिशङ्गं वासो वस्त्रं यस्य तस्मै ॥ ३५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे वरेण्य ! अनेन गायत्रीप्रतिपाद्यत्वं सूचितम्. हे वरदर्षभ ! त्वमेव यतः सर्ववरदः ततस्तवैव पादरेणुमिष्टप्राप्तये धीरा उपासते सेवन्ते ॥ ३६ ॥

श्रीर्लक्ष्मीः देवाः ब्रह्मादयश्च यत्पादपद्मयोरामोदं स्पृहयन्तः कामयमाना इव यमनुसृतवन्तः सभगवान् पूर्णषाड्गुण्यो वासुदेवो मह्यं प्रसीदताम् ॥ ३७ ॥

इत्येतैः मन्त्रैरावाहनपुरस्कृतं सन्निधापितं हृषीकेशं पाद्योपस्पर्शनं पाद्याचमनं तदादिर्येषां तैरासनाद्यैः आदिशब्देन प्राह्य पाद्यक्रमस्त्वविवक्षितः आसनाद्यर्घ्यपाद्यैरर्घ्ययेदित्यर्थः ॥ ३८ ॥

एवमेतैरर्चित्वा गन्धमाल्यैः गन्धपुष्पैस्सह पयसा गन्धादिसहितेन क्षीरेण शुद्धजलेन च विभुं वासुदेवं स्नापयेदित्यर्थः । ततो वस्त्रादिभिरर्ध्यर्चयं गन्धादिभिश्चार्चयेत् आदिशब्देन दीपमधुपर्काचमनानि ग्राह्याणि द्वादशाक्षरविद्ययेति पूर्वोत्तरान्वयि आसनाद्युपचाराश्चाऽनयैव कार्याः ॥ ३९ ॥

तथा तयैव विद्यया विभवे सति पयसि क्षीरे शृतं पक्वं शाल्यन्नं सम्पर्विः घृतेन सहितं सगुडञ्च नैवेद्यं दत्वा समर्प्य उक्तद्वादशाक्षरविद्यया जुहुयात् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिनोति दुःखं राति सुखमिति हिरण्यं रेतो लक्षणां गर्भे यस्य स तथा तस्मै ॥ ३३—३५ ॥

यतो वरदर्षभः अतः ॥ ३६ ॥

श्रिया विनिर्जिते पद्मे ययोस्तौ तथा तयोः पादयोरामोदं स्पृहयन्तो देवा यमन्ववर्तन्त स भगवान् ॥ ३७ ॥

उपस्पर्शनमाचमनम् ॥ ३८ ॥

द्वादशाक्षरविद्यया ॐ नमो भगवते वासुदेवायेति ॥ ३९ ॥

पयसि शृतं पायसान्नम् ॥ ४०—४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्राणाय सूत्रात्मने योगैश्वर्यमयं शरीरं यस्य तस्मै ॥ ३३-३६ ॥

तत्पादपद्मयोरामोदं स्पृहयन्त इव देवाश्च श्रीश्च यमन्ववर्तन्त स मे प्रसीदतु ॥ ३७ ॥

एतैर्मन्त्रैरावाहनेन पुरस्कृतं सम्मानितं पुरःस्थीकृतमिति वा उपस्पर्शनमाचमनीयम् ॥ ३८ ॥

प्रथमं पाद्यादिभिरर्चित्वा स्नापयेत् स्नापयित्वा वस्त्रोपवीताभरणपरिधापनानन्तरं पुनरपि पाद्यादिभिः चकारेणान्यैरपि बहुभिरुपचारैः पाद्यादिदाने सर्वत्र मन्त्रमाह द्वादशेति ॥३९॥

पयसि शृतं पक्वं परमान्नम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सृष्टिनिमित्तभूतचतुर्मुखात्मकांशरूपिणं प्रणमति—नमो हिरण्यगर्भायेति । अथ विश्वधारणनिमित्तभूतप्राणरूपिणं भगवन्तं प्रणमति—प्राणाय जगदात्मने इति । अथाणिमादिविभूतिरूपिणं भगवन्तं प्रणमति—योगैश्वर्याणि ध्यानयोगजाऽणिमादिसिद्धयः शरीरं यस्य तस्मै सिद्धिसाधकध्यानयोगप्रवर्तकरूपिणं भगवन्तं प्रणमति, योगहेतवे इति ॥ ३३ ॥

अथ पुरुषाद्यवतारूपं भगवन्तं प्रणमति—नमस्ते आदिदेवाय प्रकृतिप्रेरकपुरुषरूपाय ॥ ३४ ॥

साक्षाद्भगवन्तं श्रीनिवासं केशवं प्रणमति—नमो मरकतश्यामवपुषे इति । अधिगता सर्वचेतनाचेतनपदार्थेभ्य आधिक्यं याभ्यां श्रीर्यस्मात्स्वभर्तुस्तस्मै ॥ ३५ ॥

अथ सर्ववरदत्वादिना स्तुवन् भगवान्प्रसीदत्विति प्रार्थयते—त्वमिति द्वाभ्याम् ॥ ३६ ॥

तत्पादपद्मयोः आमोदं श्रीरिव स्पृहयन्तः देवाः चकारान्मुनयः यमन्ववर्तन्त स मे मह्यं प्रसीदताम् ॥ ३७ ॥

अस्याराधनप्रकारस्य कर्ता ब्रह्मा तथान्योऽप्येवमाराधयेदित्याह—एतैरिति । एतैर्मन्त्रैः आवाहनेन पुरस्कृतं संमानितम् ॥ ३८ ॥ ३९ ॥

पयसि शृतं पक्वम् मूलविद्यया द्वादशाक्षरमन्त्रेण ॥४०॥४२॥

---

भाषा टीका ।

हिरण्यगर्भरूप प्राणरूप और जगत के आत्मा तथा योग ऐश्वर्य शरीरजिनका ऐसे योगके हेतु आपको नमः ॥ ३३ ॥

आदिदेव साक्षिरूप ऋषिरूप नररूप ऐसे श्रीहरिरूपनारायण को नमः ॥ ३४ ॥

मरकत मणि सदृश श्यामल दिव्य विग्रह में शोभायमान श्री जिनके ऐसे भगवान को नमः हो ॥ ३५ ॥

हे वरदश्रेष्ठ ! आपही वर देनेवाले हो तिसीसे धीरलोग कल्याण के अर्थ आपके चरण रजकी उपासना करते हैं ॥ ३६ ॥

जिनके चरणारविन्दके आमोदकी स्पृहा करके देवता लोग तथा श्रीलक्ष्मीजी अनुवर्तन करती हैं वे भगवान् हमारे ऊपर प्रसन्न होवैं ॥ ३७ ॥

श्रद्धायुक्त होकर इन मन्त्रो से श्रीहृषीकेश भगवान्‌को आवाहन से आदि लेकर पाद्य आचमन आदि समर्पण करके ॥ ३८ ॥

गन्ध माला इत्यादिक से अर्चन कर दुग्ध से श्रीहरिको स्नान करावे, ताके अनन्तर यज्ञोपवीत पहिरावे फिर वस्त्र धारण करावे तदनंतर आभूषण धारण कराकर पाद्य आचमन समर्पण करे और ता पीछे द्वादशाक्षर मंत्र से गंध धूप दीप इत्यादि समर्पण करे ॥ ३९ ॥

और दुग्ध में चांवलों को रांधकर वैभव होय घृत और गुड़ मिलाकर मूल मंत्र से हवन करे ॥ ४० ॥

---

निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ।
दत्त्वाचमनमर्चित्वा ताम्बूलं च निवेदयेत् ॥ ४१ ॥
जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ।
कृत्वा प्रदक्षिणां भूमौ प्रणमेद्दण्डवन्मुदा ॥ ४२ ॥
कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः ।
द्व्यवरान्भोजयेद्विप्रान् पायसेन यथोचितम् ॥ ४३ ॥
भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ।
ब्रह्मचार्यथ तद्रात्र्यां श्वो भूते प्रथमेऽहनि ॥ ४४ ॥
स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ।
पयसा स्नापयित्वाऽर्चेद्यावद्व्रतसमापनम् ॥ ४५ ॥
पयोभक्षो व्रतमिदं चरेद्विष्ण्वर्चनादृतः ।
पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥ ४६ ॥
एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ।
हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ ४७ ॥
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ।
ब्रह्मचर्यमधः स्वप्नं स्नानं त्रिषवणं चरेत् ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः ॥ ४२ ॥

तस्य शेषां निर्माल्यम् द्व्यवरौ येषां तान् असम्भवे द्वावपि भोजयेदित्यर्थः ॥ ४३ ॥

समाजितैस्तैरनुज्ञातः सन् सेष्टो बन्धुभिः सहितः तस्यां रात्र्यां ब्रह्मचारी सन् श्वोभूते प्रभाते सति ॥ ४४—४५ ॥

पय एव भक्ष आहारो यस्य ॥ ४६—४७ ॥

अधः स्वप्नं शयनम् ॥ ४८—४९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः यद्भगवते निवेदितमन्नं पायसं तत्सात्त्विकं भोक्त्रे ब्राह्मणाय दद्याद्योग्यत् स्वयं वा भुञ्जीत तत आचमनं दत्त्वा ताम्बूलं निवेदयेत् समर्पयेत् ॥ ४१ ॥

ततो द्वादशाक्षरं मन्त्रमष्टोत्तरशतं जपेत् स्तोत्रैर्वैदिकतान्त्रिकस्तुतिभिर्भगवन्तं स्तुवीत ततः प्रदक्षिणां कृत्वा दण्डवद्भूमौ मुदा हर्षेण प्रणमेत् ॥ ४२ ॥

तच्छेषां निर्माल्यं पुष्पादिकं शिरसि धृत्वा ततो भगवन्तमुद्वासयेत्, द्वाववरौ येषां तान् विप्रान्यथाविधि पायसेन भोजयेत् द्व्यवरानित्यनेनासम्भवे द्वावपि भोजयेत् स्वशक्तिमिति विवक्षितम् ततः सम्यक् पूजितैस्तैर्द्विजैरनुज्ञातः सेष्टः बन्धुभिः सहितः शेषं शिष्टमन्नादिकं भुञ्जीत अथ तद्रात्र्यां ब्रह्मचारी स्त्रीसङ्गरहितः स्यादिति शेषः अथ प्रथमेऽहनि श्वोभूते प्रभाते ॥ ४३ ॥ ४४ ॥

स्नातः शुचिः समाहितचित्तो यथोक्तेन विधानेन पयसा स्नापयन् भगवन्तमिति शेषः । स्नापनप्रदक्षिणाह्वानादीनामत्रोप-लक्षणं यावद्व्रतसमाप्ति एवमभ्यर्चेदित्यर्थः ॥ ४५ ॥

पयः क्षीरमेव भक्ष आहारो यस्य सः विष्णोरर्चने आदरयुक्त इदं व्रतं कुर्यात् पूर्ववदग्नौ जुहुयाद्विप्रांश्च भोजयेत् ॥ ४६ ॥

एवमहरहर्द्वादशदिनपर्यन्तं स्वयं पयोभक्षः हरेराराधनं द्विजभोजनं तदर्हणं ब्रह्मचर्यमधःशयनं त्रिकालस्नानं चेत्यनन्तरं यावच्छुक्लत्रयोदशीपर्यन्तं कुर्यात् द्वादशाहं पयोव्रतमिति पाठे द्वादशदिनसाध्यं पयोव्रताख्यं कर्म हरेराराधनादिरूपं चरेदित्यर्थः ॥ ४७ ॥ ४८ ॥

वर्जयेदसदालापं भोगानुच्चावचांस्तथा ।
अहिंस्रः सर्वभूतानां वासुदेवपरायणः ॥ ४९ ॥
त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभोः ।
कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥ ५० ॥
पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ।
चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥ ५१ ॥
शृतेन तेन पुरुषं यजेत सुसमाहितः ।
नैवेद्यं चापिगुणवद्दद्यात्पुरुषतुष्टिदम् ॥ ५२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तच्छेषं पुष्पं स्वमाल्यम् ॥ ४३ ॥

द्व्यवरानवरपक्षेऽपि द्वावपेक्षितौ मुख्यपक्षस्तु द्वादशेति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निवेदितमित्यर्थकम्, भुञ्जीतवेति वा शब्दः समुच्चये ॥४१-४२॥

द्वौ अवरौ कनिष्ठपक्षौ येषां द्वौ अवरसंख्यौ येषां तां द्व्यादीनिति वा ॥ ४३-६२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निवेदितं सर्वमेव दद्यात् किञ्चिद्दत्वा वा भुञ्जीतेत्यर्थः ॥ ४१—४२ ॥

शेषां निर्माल्यम् उद्वासो विसर्जनम् द्वौ अवरौ येषाम् असामर्थ्ये द्वावपि भोजयेत् ॥ ४३ ॥

समाजितैः सत्कृताम्बूलादिना पूजितैस्तैर्दत्ताज्ञस्सन् सेष्टः बन्धुसहितः श्वोभूते प्रभाते सति ॥ ४४—४७ ॥

शुक्लत्रयोदशीमि प्रथमान्तो द्वितीयान्तश्च कार्त्तिकः पाठः स्वप्नं शयनम् ॥ ४८ ॥ ४९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य भगवतः शेषां निर्माल्यम् द्वौ अवरौ येषां तान् अल्पधनः द्वावपि भोजयेदित्यर्थः ॥ ४३ ॥

सेष्टः बन्धुसहितः तद्रात्र्यां ब्रह्मचारी तां रात्रीमारभ्य व्रतसमाप्तिपर्यन्तं त्यक्तस्त्रीसौख्यः श्वोभूते प्रभाते ॥ ४४ ॥ ४५ ॥

पयः क्षीरं भक्ष्यं भोजनं यस्य सः ॥ ४६—४९ ॥

भाषा टीका ।

और गोविन्द के भोग लगाये हुए निवेदित अन्न को विष्णुभक्त को देवे अथवा आपही भोजन करे श्रीहरि को आचमन देकर अर्चना कर ताम्बूल को निवेदन करे ॥ ४१ ॥

फिर एक सौ आठ मंत्र का जाप करे और प्रभु को नाना स्तोत्रों से स्तुति करे । तथा प्रदक्षिणा करके बड़े हर्ष से भूमि में दंडवत् साष्टाङ्ग प्रणाम करे ॥ ४२ ॥

भगवान् का शेष अर्थात् प्रसादी माला पुष्पादि को को मस्तक पर धारण कर प्रभुको विसर्जन करे, तदनंतर यथोचित दो से कम न हों ऐसे ब्राह्मणों को पायस अन्न [खीर इत्यादि] का भोजन करावे ॥ ४३ ॥

तदनंतर ब्राह्मणों की आज्ञा पाकर बाकी बचे हुए को सादर इष्ट बन्धुओं के साथ भोजन करे, और उस रात्रि में ब्रह्मचर्य से [ जितेन्द्रिय होकर ] रहे, फिर रात्रि व्यतीत होने पर प्रथम दिन में प्रातःकाल क्या करे कि ॥ ४४ ॥

सावधान होकर यथोक्त विधि से शुचि होकर स्नान करे और श्रीहरि को दुग्ध से स्नान कराकर पूजा किया करे जब तक कि-व्रत समाप्त हो ॥ ४५ ॥

श्रीविष्णु के अर्चन में आदर युक्त होकर प्रथम, सहज अग्नि का हवन करे और ब्राह्मणों को भोजन करावे ॥ ४६ ॥

पयोव्रत को धारण करने वाला द्वादश दिवस पर्यंत प्रतिदिन इसी प्रकार श्रीहरि का आराधन, होम, पूजा, और ब्राह्मणों को भोजन करावे ॥ ४७ ॥

इस प्रकार प्रतिपदा के दिन से आरंभ कर जब तक उसी शुक्लपक्ष की त्रयोदशी आवे तब तक द्वादश दिन बराबर ब्रह्मचर्य से रहे, और भूमि में शयन करे, तथा त्रिकाल स्नान करे ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चकैः पञ्चामृतैः ॥ ५०—५७ ॥

आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः ।
तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥ ५३ ॥
भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते ! ।
अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ॥ ५४ ॥
दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथाऽर्हतः ।
अन्नाद्येनाऽऽश्वपाकांश्च प्रीणयेत्समुपागतान् ॥ ५५ ॥
भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु च ।
विष्णोस्तत्प्रीणनं विद्वान्भुञ्जीत सह बन्धुभिः ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अर्थ्यं वर्ज्यानाह—वर्जयेदिति । नानाविधानसच्छास्त्रालापान् वर्जयेत् यद्वा असदालापांस्तथेन्द्रियान्तरव्यापारानसतस्त्यजेदित्यर्थः तथा सर्वभूतसम्बन्धिहिंसारहितः वासुदेवानुसन्धानपरो भवेत् ॥ ४९ ॥

एवं द्वादशसु दिनेष्वतीतेष्वथ त्रयोदश्यां पञ्चभिरमृतैः साधनैश्चतुर्भिः ऋत्विग्भिराचार्येण चेति पञ्चभिर्वा शास्त्रोक्तेन विधिना तद्विद्भिः प्रयोज्यकर्तृभिर्विष्णोः स्नपनं कारयेत् ॥ ५० ॥

वित्तशाठ्यमकुर्वाणो विष्णोर्महतीं सर्वोपचारयुक्तां पूजां कुर्यात् क्षीरे चरुं हविः शिपिविष्टविष्णुदेवताकं श्रपयित्वा शिपिविष्टो निरतिशयतेजोयुक्तः सुसमाहितचित्तः परमपुरुषं पुरुषसूक्तेन षोडशऋग्भिः यजेत होमेन समाराधयेदित्यर्थः । ततः परमपुरुषप्रीतिकरं षड्रसोपेतं नैवेद्यं भगवते समर्पयेदित्यर्थः ॥ ५१ ॥ ५२ ॥

ततो वस्त्रादिभिर्ज्ञानसम्पन्नमाचार्यं यथावित्तं द्विजांश्च तोषयेत् हि यस्मात्तदाचार्यद्विजतोषणं विष्णोरेवाराधनं भवति तस्मात्तांस्तोषयेदित्यर्थः ॥ ५३ ॥

गुणवता षड्रसयुक्तेनान्नेन हे शुचिस्मिते ! तान्पूजितानाचार्यब्राह्मणान्ये चान्ये तत्र समागतास्तांश्च युक्तान्भोक्तुं योग्यान् भोजयेत् ॥ ५४ ॥

ततो गुरवे ऋत्विग्भ्यश्च स्ववित्तानुसारेण दक्षिणां दद्यात् श्वपाकपर्यन्तेभ्यः समागतान्सर्वानन्नादिभिस्तोषयेत् ॥ ५५ ॥

एवं दीनादिष्वपि भुक्तवत्सु तत्सत्कारं विष्णोरेव तोषकरं जानन् स्वयमपि बन्धुभिस्सह भुञ्जीत ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्नापकैः स्नानसाधनैः ॥ ५० ॥
शिपिषु रश्मिषु विष्टः शिपिविष्टः शिपौ गरुडे विष्टः तस्मै वा ॥ ५१ ॥

मधुरादिगुणवत ॥ ५२—५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चकैः पञ्चामृतैः ॥ ५०—५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चकैः पञ्चामृतैः ॥ ५०—५६ ॥

---

भाषा टीका ।

तथा असत् आलापों [ खोटे शब्दों ] को और ऊंचे नीचे भोगों को वर्जन करे, और सर्व भूतों का अहिंसक होकर श्रीवासुदेव परायण होकर रहे ॥ ४९ ॥

फिर त्रयोदशी में विभु श्रीविष्णु का विधि जानने वाले कोविद [ पंडित ] जनों से शास्त्रोक्त विधि पूर्वक पंचामृत स्नान करावे ॥ ५० ॥

और द्रव्य की कृपणता को छोड़कर बड़ी भारी पूजा करे, और शिपिविष्ट नामा श्री विष्णु भगवान् को चरु [पाक] का निरूपण करे ॥ ५१ ॥

दुग्ध में मिले हुए उसी अन्न से और बहुत गुण वाले परम पुरुष का संतोष कारक ऐसे नैवेद्य को निवेदन कर श्रीहरि का यजन करे ॥ ५२ ॥

और ज्ञान संपन्न आचार्य को वस्त्र आभरण धेनु देकर संतुष्ट करे और ऋत्विक् [ पूजा करने वाले ] लोगों को भी इसी रीति से संतुष्ट करे, बस यही श्रीहरि का आराधन जानो ॥ ५३ ॥

हे शुचिस्मिते । [ हे सुन्दर मन्द हास वाली ! अदितिजी ! फिर उन ब्राह्मणों को नाना प्रकार के गुण वाले उत्तम अन्न के

नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ।
कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५७ ॥
एतत्पयोव्रतं नाम पुरुषाराधनं परम् ।
पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ५८ ॥
त्वं चानेन महाभागे ! सम्यक्चीर्णेन केशवम् ।
आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥ ५९ ॥
अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् ।
तपःसारमिदं भद्रे ! दानं चेश्वरतर्पणम् ॥ ६० ॥
त एव नियमाः साक्षात्त एव च यमोत्तमाः ।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६१ ॥
तस्मादेतद्व्रतं भद्रे ! प्रयता श्रद्धया चर ।
भगवान्परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे कश्यपादितिसम्वादे पयोव्रतकथनं नाम
षोडशोऽध्यायः ॥ १६ ॥

---

### भाषा टीका ।

भोजन करावे, और भी जो ब्राह्मण वहां आये हों शक्ति पूर्व उनको भी भोजन करावे ॥ ५४ ॥

गुरु और ऋत्विक् लोगों को यथा योग्य दक्षिणा देवे ॥ और आये हुए लोगों में चांडाल पर्यन्त को भी अन्नादिक सत्कार से तृप्त करे ॥ ५५ ॥

जब दीन, अंध, कृपण, तक सब भोजन कर चुकें तब इसको श्रीविष्णु की तृप्ति जानता हुआ बन्धुओं के साथ आप भी भोजन करे ॥ ५६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मया च ते समुदाहृतम् ॥ ५८—५९ ॥

सर्वयज्ञाख्योऽयं यज्ञः सर्वव्रतमिति च स्मृतमेतद्व्रतम् ॥ ६० ॥ ६१ ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आद्यन्तदिनद्वयं मध्ये द्वादशैवमेवं चतुर्दशस्वहस्सु सुहृद्भिस्सह भगवतः पूजां कारयेत् ॥ ५७ ॥

तदेवं पयोव्रताख्यं कर्म उपदिश्य पुनर्विश्वासायास्य सांप्रदायिकत्वं स्मारयन्निगमयन्ननेन भगवन्तमाराधयेत्याह–एतदिति । पुरुषः परमपुरुष आराध्यते येन तत्तथा परं श्रेष्ठम् एतत्पयोव्रतं नाम प्रसिद्धं मह्यं पितामहेनोपदिष्टं मम मया च तुभ्यं सम्यगभिहितम् ॥ ५८ ॥

हे महाभागे त्वमपि सम्यगनुष्ठितेनानेन पयोव्रतेन विशुद्धः भावो भक्तिर्यस्मिन् तेन आत्मना मनसा भजनीयमव्ययं केशवं भज आराधय ॥ ५९ ॥

प्रकृतं व्रतं स्तौति–अयमिति । सर्वयज्ञाख्योऽयं व्रतरूपो यज्ञः इदं व्रतं सर्वव्रतं स्मृतं सर्वयज्ञव्रततुल्यमिदं पयोव्रतमित्यर्थः । किञ्च हे भद्रे ! सर्वतपस्सारतुल्यं तथा सर्वदानतुल्यञ्चेदं व्रतं कुतः चशब्दो हेत्वर्थः च यतः हेतोरिदमीश्वरतर्पणम् ईश्वरः तर्प्यतेऽनेनेति तथा ईश्वरतृप्तिकरत्वेन सर्वयज्ञादिसमकक्ष्यमित्यर्थः ॥ ६० ॥

यमनियमादयोऽपि ईश्वरतोषकरा एव सफलाः अन्ये तु व्यर्था एवेत्याह–त एवेति । येन नियमादिनाऽधोक्षजः तुष्यति अत एव नियमादिशब्दवाच्याः अन्ये त्वाभासरूपा व्यर्था एवेत्यर्थः ॥ ६१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महत्सम्बन्धयज्ञादिभिस्तुल्यत्वादीश्वरतोषकत्वाच्च हे भद्रे ! तादृशेन त्वं श्रद्धयाऽऽप्तहृतमनुतिष्ठ तेन तुष्टो भगवांस्तवाशु वरान् दास्यति ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो व्रतम् ॥
एते तु नियमाः प्रोक्तास्तांश्च सर्वान्पृथक् शृणु ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥
क्षमा धृतिर्मिताहारः शौचं चैते यमाः स्मृताः" ॥
इति ॥ ६०—६२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षोडशोऽध्यायः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वयज्ञात्मकोऽयं यज्ञ इत्यनेनैकेनैव सर्वयज्ञाः कृता भवन्तीत्यर्थः । एवमिदं सर्वव्रतं तपःसारमिति अस्य सर्वतपस्त्वादिति भावः । तेन यज्ञसारव्रतसारदानसारशब्देनापीदं वाच्यमिति द्योतितम् ईश्वरतर्पणञ्चेति चकारादीश्वरतर्पणोऽयं यज्ञः ईश्वरतर्पणं व्रतमित्येवं च वाच्यम् ॥ ६० ॥

ईश्वरतर्पणं विना सर्वमेव विफलमिति दिग्दर्शनेनाह—त एवेति। अन्ये नियमाद्या एव न स्युः यदेति "नपुंसकमनपुंसकेन" (।१।२।६९।।) इत्यादिनैकत्वम् ॥ ६१-६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमे षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अयं व्रतरूपो यज्ञः सर्वयज्ञात्मकः अस्मिन्कृते सर्वे यज्ञाः कृताः स्युरित्यर्थः । तथा सर्वव्रतं सर्वव्रततुल्यमिति च स्मृतमेतत् व्रतं तथा तपःसारं दानं सर्वदानतुल्यञ्च तत्र हेतुगर्भं विशेषणम् ईश्वरतर्पणमिति ॥ ६०—६२ ॥

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशोऽध्यायार्थप्रकाशः ॥ १६ ॥

———

भाषा टीका ।

नृत्य, वादित्र, [ बाजे ] गीत, स्तुति, और स्वस्तिवाचन पूर्वक प्रति दिन श्रीहरि की कथा कीर्तन करा कर पूजन करावै ॥ ७ ॥

हे भद्रे ! ये हमने अपने पिता ब्रह्मा जी से सुना है सो हमने तुमको उपदेश किया भगवान परम पुरुष का पूजन रूप इसका पयोव्रत ऐसा नाम है ॥ ५८ ॥

हे महाभागे ! तुम एकाग्र मन होकर इस उत्तम व्रत से शुद्धभाव वाला अन्तःकरण से अविनाशी केशव भगवान को भजो ॥ ५९ ॥

हे भद्रे ! यह पयोव्रत सब यज्ञ रूप है और तपका सार है दान रूप है और ईश्वर को सन्तोष का हेतु है इस व्रतका ऐसा बड़ा माहात्म्य है ॥ ६० ॥

साक्षात् सबसे उत्तम यम नियम वही है और तप दान व्रत यज्ञ भी वही है जिससे श्रीहरि प्रसन्न होवें ॥ ६१ ॥

इस कारण हे भद्रे ! सावधान होकर श्रद्धा पूर्वक इस व्रतको तुम अनुष्ठान करो तुमारे भी इस व्रत से सन्तुष्ट होकर शीघ्रही भगवान् मनोकामना पूर्ण करेंगे ॥ ६२ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध मे षोडश अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्ता ॥ १६ ॥

———

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे षोडशोऽध्यायः ॥ १६

———:*:———

॥ सप्तदशोऽध्यायः ॥

श्रीशुक उवाच ।

इत्युक्ता साऽदिती राजन् ! स्वभर्त्रा कश्यपेन वै ।
अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥
चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम् ।
प्रगृह्येन्द्रियदुष्टाश्वान्मनसा बुद्धिसारथिः ॥ २ ॥
मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ।
वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥
तस्मात्प्रादुरभूत्तात ! भगवानादिपूरुषः ।
पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥
तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ।
ननाम भुवि कायेन दण्डवत्प्रीतिविह्वला ॥ ५ ॥
सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा ।
बभूव तूष्णीं पुलकाकुलाऽऽकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥
प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ! ।
उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥

अदितिरुवाच ॥

यज्ञेश ! यज्ञपुरुषाच्युत ! तीर्थपाद ! तीर्थश्रवः ! श्रवणमङ्गलनामधेय ! ।
आपन्नलोकवृजिनोपशमोदयाद्य शं नः कृधीश[1] भगवन्नसि दीननाथः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सप्तदशेऽदित्या कृते तस्मिन्व्रते हरिः ।
तत्कामपूरणायाद्यौ तत्पुत्रोऽभूदितीर्यते ॥

॥ १-५ ॥

प्रीतिविह्वलत्वादेव सा बद्धाञ्जलिः सती स्थिता केवलमीडितुं पुनर्नोत्सेहे न शशाकापि तु तूष्णीं बभूव कथम्भूता आनन्दजलैराकुले ईक्षणे यस्याः पुलकैराकुला आकृतिर्देहो यस्याः तस्य दर्शनेन योऽत्युत्सवस्तेन गात्रे वेपथुः कम्पो यस्याः ॥ ६ ॥

तुष्टाव पिबतीवोद्वीक्षमाणेति च क्रियाभेदात्सेत्यस्य पदस्य द्विरुक्तिरदोषः ॥ ७ ॥

अयत्नतो विनिर्जित्य दैत्यानत्यूर्जितानपि भक्तान्रक्षितुमीशा-स्यामित्यस्तौददितिस्त्रिभिः । यज्ञेशेत्यादिदशभिः सम्बोधनैस्त्वदशक्यं किमपि नास्तीति वदन्ती प्रार्थयते शं नः कृधि कुरु यतो दीनानां नाथोऽसि त्वम् तीर्थे श्रवः कीर्तिर्यस्य, श्रवणमेव मङ्गलं यस्य तन्नामधेयं यस्य आपन्नानां शरणागतानां वृजिनोपशमायोदयो यस्य ॥ ८ ॥

( १ ) भगवन्नसज्जनाथ इति विजय० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमुपदिष्टपयोव्रताऽदितिस्तदनुष्ठितवत्याह मुनिः—इतीति। इति इत्थं हे राजन्! स्वभर्त्रा कश्यपेनोक्तोपदिष्टव्रता सा अदितिरतन्द्रिता समाहिता द्वादशाहमिदं पयोव्रतमन्वतिष्ठत् ॥ १ ॥

अथानुष्ठानप्रकारमाह—चिन्तयन्तीति द्वाभ्याम्। महापुरुषमीश्वरं वासुदेवमेकयाऽनन्यविषयया बुध्या चिन्तयन्ती पयोव्रतं चचारेत्यर्थः। किं कृत्वा बुद्धिरूपसारथिः मनो निग्रहोपायभूता यस्याः सा मनसेन्द्रियाण्येव दुष्टसदश्वांस्तान्प्रगृह्य निगृह्य ॥ २ ॥

मनश्चैकाग्रयाऽनन्यविषयया बुद्ध्या सर्वान्तरात्मनि षाड्गुण्यपूर्णे वासुदेवे समाधाय स्थिरं कृत्वा तस्यामदित्यामिदं व्रतमनुतिष्ठन्त्यां सत्यां भगवान् वासुदेवः प्रादुरासीत् कथम्भूतः पीते पिशङ्गे वाससी यस्य चत्वारो बाहवो यस्य सः शङ्खादीन्बिभ्राणः ॥ ३—४ ॥

तं नेत्रगोचरं वासुदेवं समीक्ष्यादितिः सहसोत्थाय प्रीत्या विह्वला सती कायेन दण्डवद्भूमौ ननाम नमस्कृतवती ॥ ५ ॥

प्रीतिविह्वलत्वादेव सा बद्धाञ्जलिस्तूष्णीं स्थिता केवलम् ईडितुं स्तोतुं पुनर्नोत्सेहे न शशाक, कथम्भूता? आनन्दजलैराकुले ईक्षणे अक्षिणी यस्याः पुलकैराकुला आक्रान्ता देहो यस्याः सा तस्य भगवतो दर्शनमेव निरतिशयोत्सवस्तेन गात्रे शरीरे वेपथुः कम्पो यस्याः सा ॥ ६ ॥

ततो हे कुरूद्वह! अदितिर्देवी शनैः गद्गदया गिरा प्रीतिपूर्वकं हरिं तुष्टाव, कथम्भूता? सा श्रियः पतिम् उद्वीक्ष्य चक्षुषा पिबन्तीव स्थिता सती तुष्टाव पिबन्तीवोद्वीक्ष्येति च क्रियाभेदात्सा इत्यस्य पदस्य द्विरुक्तिरदुष्टा इति ध्येयम् ॥ ७ ॥

"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादि श्रुतिस्मृतिप्रसिद्धं यत् यज्ञेश्वरत्वादिकं तदधुना दर्शयन्तीव दुर्लभोऽल्पीयसापि मत्कृतेनाराधनेनाविर्भूतोऽसीत्यभिप्रायेण सम्बोधयन्ती प्रार्थयते यज्ञेशेति। हे यज्ञेश यज्ञानां प्रभो! हे यज्ञपुरुष! यज्ञभोक्तः आश्रिताघरूपानयनीत्यच्युतस्तस्य सम्बोधनं तीर्थं गङ्गादिरूपं पादे यस्य तीर्थं विशुद्धं श्रवः कीर्तिर्यस्य हे तीर्थश्रवः! श्रवणमेव मङ्गलं यस्य तत् नामधेयं यस्य आपन्नानां शरणागतानां लोकानां दुःखोपशमाय उदय आविर्भावो यस्य स नोऽस्माकं शं सुखं कृधि कुरु यतस्त्वं हे भगवन् षाड्गुण्यपूर्ण! दीनानां मादृशादीनां नाथोऽसि ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अल्पकल्याणोऽपि भक्त्या भजमानस्य पुंसः प्रत्यक्षो भवति भगवानित्येतमर्थं दर्शयत्यध्यायद्वयेन, तत्र अदित्याः भक्त्या व्रताचरणप्रकारं भक्तिं इत्युक्तेति ॥ १ – ३ ॥

तद्व्रताचरणफलमाह—तस्या इति ॥ ४—५ ॥

तस्याः भक्तिलक्षणं दर्शयति—सेति। पुलकेन रोमाञ्चेनाकुला व्याप्ता आकृतिस्तनुर्यस्याः सा तथा पुनस्तया किमकारीति तत्राह—तद्दर्शनेति। तद्दर्शनमेवात्युत्सवः तन्निमित्तो गात्रवेपथुर्देहकम्पो यस्याः सा तथा ॥ ६ ॥

तस्याः मुग्धभावं दर्शयति—उद्वीक्षतीति ॥ ७ ॥

स्वाभीष्टावयवकरगुणाविर्भावाश्रुत्वेन स्तौति—यज्ञेशेति। यज्ञपुरुष अच्युत इत्यनेन गुणान्तराणां समुच्चिनोति तानि कानीति तत्राह तीर्थपादेत्यादि तीर्थस्य शास्त्रस्य श्रवःश्रवणं याभ्यां ते तीर्थश्रवसी ते च श्रवणे यस्येति तीर्थश्रवः श्रवणे ते मङ्गलयतीति तीर्थश्रवः श्रवणमङ्गलं तच्च नामधेयं नाम यस्य स तथा तस्य सम्बुद्धिस्तीर्थश्रवः श्रवणमङ्गलनामधेय आपन्नस्य लोकस्य वृजिनं दुःखं तस्योपशमनार्थं परिहारार्थमुदयोऽवतारो यस्य स तथा तस्य सम्बुद्धिस्तथा कृधि कुरु भवसन्ननाथ दीनजनरक्षक ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

१—६ ॥

पुनः सा चक्षुषा पिबन्तीवोद्वीक्षमाणा बभूवेत्यर्थः ॥ ७ ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

व्रतिन्यथादितिर्विष्णुं पश्यन्ती तुष्टुवे स ताम्।
आश्वास्याभूत्सुतो यस्तु ततः सप्तदशे प्रभुः ॥
॥ १ ॥

मनसा प्रगृह्य प्रग्रहरूपेण मनसा वशीकृत्येत्यर्थः। मनोरश्मिर्बुद्धिसूत इति पूर्वोक्तेः एकाग्रया एकाग्रीकृतया बुद्ध्या मनश्च वशीकृतं वासुदेवे सम्यगर्पयित्वा ॥ २–६ ॥

उद्वीक्षती उत्कर्षेण तथा वीक्षमाणा यथा चक्षुषा तं पिबन्तीवातिप्रसक्तेत्यर्थः। रमापतिं तत्पुत्रेभ्यः सर्वसमरप्रदातारं यज्ञपतिं यज्ञमाराध्यव्रतादाविर्भवन्तं जगत्पतिम् अवतीर्यं जगद्धर्त्तारम् ॥ ७ ॥

यज्ञेश हे व्रतयज्ञफलप्रद! यज्ञपुरुष हे मज्जन्मावधि यजनीयपुरुष अच्युत हे स्वभक्तशोकादिदुर्गतिविनाशिन्! तीर्थपाद हे गङ्गोत्पादयिष्यच्चरणपद्म! तीर्थश्रवः हे जगत्पावनीभविष्यद्बलिच्छलनादिकीर्ते! हे कर्णानन्दभविष्यदुपेन्द्रत्रिविक्रमादिनामन्! हे विपन्नमद्विधजनदुःखप्रशमकावतारेत्येवं भावयन्त्यास्तस्याः सम्बोधनपदान्यदित्याः मुखात्स्वयमेव निःसृतानीति ज्ञेयम् ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अदित्याः व्रतेन तुष्टो हरिः पुत्रोऽभूदिति सप्तदशेन वर्णयति ॥ १ ॥

मनसा इन्द्रियरूपान् दुष्टाश्वान्प्रगृह्य बुद्ध्या महापुरुषं चिन्तयन्ती मनश्च बुद्ध्या वासुदेवे समाधाय व्रतं चचारेति द्वयोरन्वयः ॥ २—५ ॥

विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥
आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौभूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनन्त ! भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ १० ॥

श्रीशुक उवाच ।

अदित्यैवं स्तुतो राजन् ! भगवान्पुष्करेक्षणः ।
क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ! ॥ ११ ॥

श्रीभगवानुवाच ।

देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् ।
यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बद्धाञ्जलिः स्थिता केवलम् ईडितुं तु नोत्सेहे न शशाक ॥६॥

ईडितुं पूर्वं या नोत्सेहे सा पुनः शनैर्हरिं तुष्टाव यदुक्तं यथा तुष्टावेति तत् सिंहावलोकन्यायेन निरूपयति सा च उद्यीक्षणी उत्कण्ठया वीक्षमाणा रमापतिं चक्षुषा पिबन्तीवासीत् ॥ ७ ॥

शं सुखं कृधि कुरु यतो दीननाथोऽसि दीनसुखदत्वयोग्यतां भगवतो बहुभिः सम्बोधनैर्दर्शयति—हे यज्ञेश ! हे यज्ञपुरुष ! हे अच्युत ! तीर्थानि पावयति यस्य हे तीर्थपाद ! तीर्थं श्रवो यशो यस्य हे तीर्थश्रवः ! श्रवणमङ्गलानि श्रवणमात्रेणापि मङ्गलदानि नामधेयानि यस्य हे श्रवणमङ्गलनामधेय ! आपन्नानां प्रपन्नानां लोकानां वृजिनोपशमाय उदयो यस्य स हे तथाभूत ! ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीशो जयति ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन् ! अपने पति कश्यप का उपदेश सुनकर बड़े श्रद्धा से सर्व आलस छोड़कर इस द्वादशाह व्रत को देवमाता अदिति अनुष्ठान करने लगीं ॥ १ ॥

अनन्यबुद्धि से सबके अन्तर्यामि श्री हरि में चित्त लगाई और बुद्धि है सारथि जिसका ऐसे इन्द्रियरूप दुष्ट घोड़ाओं को मनसे वश करती भई ॥ २ ॥

और एकाग्र बुद्धिसे सबजड़ चेतनके अन्तर्यामि स्वराट् देव श्री भगवान में मनलगाकर बड़े हर्ष से पयोव्रत का अनुष्ठान करने लगीं ॥ ३ ॥

हे तात ! इस पयोव्रत के अनुष्ठान से प्रसन्नहोकर चार भुजाओं में शङ्खचक्र गदादिकों को वा पीताम्बर को धारण किये अति अद्भुत रूपसे आदि पुरुष श्री भगवान प्रकट होते भये ॥ ४ ॥

ऐसे आश्रित वत्सल श्रीहरि को नेत्रों के गोचर देखकर अदिति शीघ्रही उठखड़ी हुई, और प्रेम में विह्वल होकर बड़े आदर से भूमि में गिरकर लम्बी साष्टांग करीं ॥ ५ ॥

फिर खड़ी होकर स्तुति करने की इच्छाकरी, परन्तु भगवद्दर्शनके आनन्दसे नेत्रों में जल भरआया, और सब अङ्गों मे रोमाञ्च होने लगे, शरीर में कम्प भी होने लगा इस कारण चुपसे ही खड़ी रह गई ॥ ६ ॥

हे कुरुद्वह ! इसके अनन्तर अदितिदेवी बड़ीप्रसन्नतापूर्वक गद्गद वचनों से साक्षात् श्री लक्ष्मी जी के पति सर्व यज्ञों के पति और जगत् के पति श्रीभगवान के अङ्ग प्रत्यङ्गों को अपने अतृप्त नेत्रों से दर्शनकरतीहुई उस सौन्दर्यामृत को पान करती हुई मन्द २ श्रीहरि की स्तुति करने लगीं ॥ ७ ॥

अदितिरुवाच ॥

हे यज्ञेश, हे यज्ञपुरुष, हे अच्युत, हे तीर्थपाद, हे तीर्थश्रव, हे श्रवणमङ्गलनामधेय, हे आपन्नलोकवृजिनोपशमोदय ! (आश्रितों के दुःख निवारक) हे ईश, हे भगवान् ! बड़ीभारी विपत्ति में प्राप्त हम लोगों को सुखी करो क्योंकि आप दीननाथ हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूम्ने महते नमः महत्त्वे हेतवः विश्वाय विश्वस्य भवनस्थितिसंयमार्थं स्वैरं गृहीताः पुरुशक्तेर्मायाया गुणा येन तस्मै तथाऽपि स्वस्थायाप्रच्युतस्वरूपाय कुतः, शश्वदुपबृंहितो नित्योर्जितो यः पूर्णबोधस्तेन व्यापादितं निरस्तमात्मनि तमो मायाकार्यं येन तस्मै ॥ ९ ॥

तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान् ।
प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥
इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ।
स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥
आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः ।
नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥ १५ ॥
प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि ! मे मतिः ।
यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्मदीयमनोरथपूरणमीषत्करमेव त्वयेति कैमुत्यन्यायेनाह, आयुः परं ब्रह्मायुः पुनरपि द्यौश्च भूश्च रसातलं च द्योभूरसाः द्यौरिति पृथक्पाठे भूश्च रसाश्च बिलस्वर्गा इति विग्रहः रसेति पाठे त्रीणि पदानि सकला योगगुणा अणिमादयः ॥ १० ॥

सर्वज्ञोऽन्तर्यामी ॥ ११ ॥

सपत्नैर्हृता श्रीर्येषां स्वधामतश्च्यावितानां च पुत्राणां सम्बन्धि यत्तत्त्वयाऽभिकाङ्क्षितं मया विज्ञातम् ॥ १२ ॥

काङ्क्षितमेवाह—तानिति त्रिभिः । प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सहोपासितुमेकत्र स्थातुमिच्छसि ॥ १३-१४ ॥

प्रत्याहृतं यशश्च श्रीश्च यैस्तान् ॥ १५ ॥

अपारणीया अनतिक्रमणीयाः यद्यस्मात् अनुकूल ईश्वरः कालो येषां तैर्विप्रैर्गुप्ता रक्षिताः अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च विश्वाय विश्वरूपाय अत एवात्माविर्भूतोऽसीति भावः हरये तुभ्यं नमः विश्वरूपत्वे हेतुः, विश्वेति । विश्वभवनस्थितिसंयमाय विश्वस्य सृष्ट्यादिकारणाय विश्वस्योपादानकारणत्वात्तदन्तरात्मतया वा विश्वाय तद्रूपायेत्यर्थः। कारणत्वमन्तरात्मत्वञ्च समानाधिकृतौ निबन्धनमिति भावः । निर्विकारस्य मम कथं विश्वकारणत्वम् ? अत आह—स्वैरं यथातथा गृहीताः उरुशक्तेर्विविधविचित्रपरिणामशक्तेः मायाया गुणाः सत्त्वरजस्तमांसि येन स्वैरमित्यनेन जीवस्येव न गुणावश्यत्वमित्युक्तं गृहीतेत्यादिना प्रकृतिपुरुषशरीरकस्य तव विश्वकारणत्वं न स्वरूपेणेत्युक्तेन निर्विकारत्वमंशेन सूचितं कारणत्वोपयुक्तं सार्वज्ञसर्वशक्तित्वादिकल्याणगुणयोगमाह—भूम्न इति । कल्याणगुणैर्भूम्ने महते यद्वा स्वैरं गृहीतेति प्रकृतिवैशिष्ट्यमुक्तम्. भूम्न इत्यनेन पुरुषवैशिष्ट्यमुच्यते भूमा व्यापकः जीवेष्वप्यन्तरात्मतया व्यापी तस्मै इत्यर्थः एवं प्रकृतिपुरुषवैशिष्ट्येऽपि तद्गतदोषास्पर्शमाह—स्वस्थायेति । स्वरूपेण गुणैश्च यथावस्थिताय तत्स्वन्यथाभावमापद्यमानाय;

तत्र हेतुं वदन् विशिनष्टि शश्वदिति । शश्वत् सदा उपबृंहितमाविर्भूतं पूर्णं कल्याणगुणपरिपूर्णमपरिच्छिन्नानन्दात्मकं यत्स्वरूपं तस्य बोधेन याथात्म्यदर्शनेन व्यापादितम् निरस्तम् आत्मतमः आत्मनां जीवानामाच्छादकं तमोऽज्ञानं येन तस्मै जीवानां स्वपरयाथात्म्यज्ञानाभावप्रयुक्ताज्ञानेन स्वभावान्यथात्वम् अचेतनस्य तु परिणामस्वभावत्वात्स्वरूपान्यथात्वम् परमात्मनस्तु तत्र नित्यासङ्कुचितापरिच्छिन्नज्ञानानन्दस्वरूपयाथात्म्यानुभवेन तदुभयं दूरतो निरस्तमिति भावः ॥ ९ ॥

अस्मदीयमनोरथपूरणमीषत्करमेव त्वयेति कैमुत्यन्यायेनाह—आयुरिति । हे अनन्त ! त्वत्तः प्रसन्नात्त्वत्तो नृणामायुरादय एव सुलभा भवन्ति । किमुत शत्रुविजयादिमत्प्रार्थितसुलभा भवन्तीत्यर्थः। तत्रायुः परं ब्रह्मायुरत्युत्तमं निरुपमं वपुः शरीरं बलपराक्रमसौन्दर्यादियुक्तं शरीरमिति भावः । सर्वाभीष्टधर्माः भोग्यभोगोपकरणादिसम्पत् द्यौश्च भूश्च रसातलञ्च द्योभूरसाः द्यौरिति पृथक्पाठे भूश्च रसाश्च बिलस्वर्गा इति विग्रहः सकला योगगुणा अणिमादयः त्रिवर्गो धर्मार्थकामाः केवलं निःसंशयं ज्ञानम् ॥ १० ॥

हे राजन् ! इत्थमदित्या संस्तुतो भगवान् पुष्करेक्षणः सर्वभूतानां सर्वज्ञः सर्वान्तर्भूततया वृत्तिज्ञः जीवशरीरको भा इति वक्ष्यमाणप्रकारेण उवाच हेति हर्षे विस्मये वा हे भारत ! ॥ ११ ॥

उक्तिमेवाह त्रिभिः—स्वस्य क्षेत्रज्ञत्वेन दर्शयन्निवाशितेहादिमाविष्कर्तुं प्रतिजानीते—देवमातरित्यर्धेन । हे देवमातः भवत्या चिरकाङ्क्षितम् तत् मे मया विज्ञातम् किन्तदित्यत्र तदाविष्करोति, यदिति सार्धैस्त्रिभिः। सपत्नैर्दैत्यैर्हृता श्रीर्येषां स्वस्थानाच्च्यावितानां विप्रवासितानां स्वपुत्राणां सम्बन्धि यदैश्वर्यं त्वया चिरकाङ्क्षितं तन्मया ज्ञातमित्यन्वयः ॥ १२ ॥

किञ्च तान्सपत्नान् दुष्टो मदो येषां तानसुरर्षभान् युद्धे विनिर्जित्य प्रतिलब्धो जयः श्रीश्च यैस्तैः पुत्रैः सह उपासितुम् एकत्र स्थातुम् इच्छसि ॥ १३ ॥

इन्द्रो ज्येष्ठो येषां तैः स्वतनयैर्युधि हतानां शत्रूणां स्त्रियो भर्तृसमीपमासाद्य रुदन्तीर्दुःखिताश्च द्रष्टुमिच्छसि ॥ १४ ॥

प्रत्याहृतमप्रत्यानीतं यशः श्रीश्च यैस्तान् सुसमृद्धान्नाकपृष्ठं

अथाप्युपायो मम देवि ! चिन्त्यः सन्तोषितस्य व्रतचर्यया ते ।
ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥
त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनाऽनुगुणं समीडितः ।
स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्तास्मि मारीचतपस्यधिष्ठितः ॥ १८ ॥
उपधाव पतिं भद्रे ! प्रजापतिमकल्मषम् ।
मां च भावयती पत्यावेवं रूपमवस्थितम् ॥ १९ ॥
नैतत्परस्मा आख्येयं पृष्टयाऽपि कथञ्चन ।
सर्वं सम्पद्यते देवि ! देवगुह्यं सुसंवृतम् ॥ २० ॥

श्रीशुक उवाच ।

एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ।
अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥
उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् ।
स वै समाधियोगेन कश्यपस्तदबुध्यत ॥ २२ ॥

भाषा टीका ।

विश्वरूप आपको नमस्कार होय, विश्व के सृष्टि पालन संहार करने वाले, तथा अपने इच्छा से बहुत शक्ति वाली माया के गुणों को ग्रहण करने वाले, वा महत्व के कारण रूप, तथा निरवच्छिन्न स्वरूप वाले, वा सर्व काल में निरवच्छिन्न ज्ञाना नन्द अपने परमात्म स्वरूप से माया रूप अन्धकार को दूर करने वाले ऐसे श्रीहरि आपको नमस्कार होय ॥ ९ ॥

हे अनन्त ! ब्रह्मा की आयु तथा उत्तम शरीर, मनो वांछित फल वा अव्याहत ऐश्वर्य, तथा स्वर्ग पृथ्वि रसातलादिकों का सुख और, सम्पूर्ण योगों से अणिमादि सिद्धियों की प्राप्ति, वा अर्थ धर्म काम तथा मोक्ष प्रापक ज्ञान ये सब कोई भी पदार्थ आपके प्रसन्नता से जीवों को दुर्लभ नहीं है, फिर हम लोगों के शत्रुओं का जयरूप मनोरथ तो कितनी है ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले कि—हे राजन् ! जब अदिति ने कमल सदृश नेत्र वाले भगवान् की इस प्रकार स्तुति करी, तब सब प्राणियों के अन्तः करण के अभिप्राय को जानने वाले श्रीहरि बोले ॥ ११ ॥

श्रीभगवान् उवाच ।

श्री भगवान बोले हे देवमातः ! शत्रुओं के बल बढ़ने से नष्ट स्थान तो नष्ट एश्वर्य वाले अपने पुत्रों का दुःख दूर करने के लिये बहुत दिन से तुम्हारी मनो कामना है सो मैं जानता हूं १२

उन दुरभिमानी असुरों को युद्ध से जीतकर यश ऐश्वर्य सहित अपने पुत्रों के साथ सुखी होकर रहना चाहती हो सो हमको ज्ञात है ॥ १३ ॥

और युद्ध में इन्द्रादि अपने पुत्रों के शस्त्रों से मरे हुए शत्रुओं की स्त्रियां अनाथ होकर रोती हुई फिरें सो तुम देखना चाहती हो ॥ १४ ॥

और यश ऐश्वर्य सहित अपने पुत्रों को अपने २ स्त्रियों के साथ विहार करते भये देखना चाहती हो ॥ १५ ॥

हे देवि ! प्राय करके तो इस समय तुम से असुर यूथों के नाथ ऐसे बलि प्रभृति दैत्यों का अति क्रमण नहीं होसका है, यह मेरा निश्चय है । क्योंकि ? वे लोग आज काल ईश्वर और ब्राह्मणों से रक्षित हैं और उनका काल भी अनुकूल है इस समय उनके विषे किया हुआ विक्रम सुखदाई नहीं होसका है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तम मया चिन्त्य एव तत्र हेतुः सन्तोषितस्येत्यादि श्रद्धाऽनुरूपमिच्छानुसारेण फलहेतुत्वात् ॥ १७ ॥

मारीचस्य तपस्यधिष्ठाय स्थितस्सन् गोप्ताऽस्मि पालयिष्यामि ॥ १८ ॥

अतः पतिमुपधाव भजस्व ॥ १९ ॥

देवानां गुह्यं रहस्यं सर्वं सुसंवृतं सुगुप्तं सत् सम्पद्यते सिध्यति ॥ २० ॥

प्रभोर्हरेरात्मनि जन्म लब्ध्वा ॥ २१ ॥ २२ ॥

त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्भविष्णुः ।
दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्याम् अष्टमस्कन्धे भगवदवतारः
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रजापतीनां च त्वमेव सम्भविष्णुरुत्पादनशीलोऽसि । अयं भावः न ह्येवम्भूतस्य तव जन्मादिसम्भवः किन्तु देवानां प्रजापतीनां प्रजानां च परमाश्रयत्वेन तत्कार्यसाधनायावतारोऽयमतस्तान्स्वर्गच्युतान्पुनः स्वर्गं स्थापयेति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणनामभिर्हरिस्वयगर्भकृतां स्तुतिमाह-जयेत्यादिना यावत्समाप्ति । हे षाड्गुण्यपूर्ण ! हे उरुक्रम उरवः क्रमाः पादविन्यासाः क्रियासमाख्याः यस्य तथाभूत इत्यर्थः । जय सर्वोत्कृष्टतां प्राप्नुहि ते तुभ्यं नमोऽस्तु ब्रह्मकुले साधवो ब्रह्मण्यास्तेषां देवाय तस्मै देवायेति वा त्रिगुणाय सृष्ट्याद्युपयुक्ताय रजआदिगुणत्रयनियन्त्रे इत्यर्थः ॥२५॥

अदितेरेव पूर्वजन्मनि पृश्निरिति नाम तस्या गर्भाय वेदा गर्भे यस्य वेदानां गर्भायेति वा वेधसे विधात्रे त्रयो लोका नाभ्यां यस्य त्रयाणां लोकानां पृष्ठे उपरि परमव्योम्नि स्थिताय शिपयो जीवास्तेष्वन्तर्यामितया प्रविष्टाय "यज्ञो वै विष्णुः' 'पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुतेः । यद्वा शिपयो रश्मयस्तैर्वेष्टितायेत्यर्थः । विष्णवे व्यापिने ॥ २६ ॥

भुवनस्य विश्वस्य त्वमेवादिमध्यान्तकारणभूतः यमपरिमितशक्तिं परमपुरुषमाहुः "परास्य शक्तिर्विविधैव श्रूयते' 'स्वाभाविकी ज्ञानबलक्रिया च" इत्यादयो वेदान्ताः स त्वमेव कालशरीरको भवानेव विश्वमाक्षिपति प्रवर्तयति यथान्तःपतितं तृणादिकं स्रोतः प्रवाहः आक्षिपति तद्वत् ॥ २७ ॥

प्रजानामस्मदादीनां प्रजापतीनां च त्वमेव सम्भविष्णुः उत्पादनशीलोऽसि अयं भावः नह्येवम्भूतस्य तव जीवस्येव कर्मणा जन्मादिसम्भवः किन्तु देवानां परमाश्रयत्वेन तत्कार्यसाधनायावतारोऽयं अतस्तान्स्वर्गच्युतान् पुनःस्वर्गे स्थापयेति आश्रयत्वे दृष्टान्तः अप्सु मज्जतः पुंसो नौर्यथा तद्वत् सुराणामाश्रयभूत इत्यर्थः ॥२८॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृश्न्यां गर्भो यस्य स तथा तस्मै वेदगर्भाय सद्यो जन्म स्तक्ये श्रीणि पृष्ठानि वैकुण्ठादीनि यस्य स तथा तस्मै ॥२६॥

गभीरं स्रोतो नदी आक्षिपति तीरं प्रति नयति ॥ २७ ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रयो लोका नाभौ यस्य तस्मै त्रयाणामूर्ध्वाधोमध्यवर्तिलोकानां पृष्ठरूपवैकुण्ठस्थितत्वात्त्रिपृष्ठाय शिपिष्टत्वेन पशवो जीवास्तेष्वन्तर्यामित्वेन प्रविष्टाय ॥ २६ ॥

गभीरं नद्यादिस्रोतःकर्तृ यथा स्वान्तः पतितं तृणादिकमाक्षिपति ॥ २७ ॥

सम्भविष्णुः आविर्भविष्णुस्सन् प्रजादीनां परायणं परमाश्रयः ॥ २८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमेऽयं सप्तदशः सङ्गतः सङ्गतः सताम् ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे उरुगाय जय स्वोत्कर्षमाविष्कुरु स्वरूपगुणाः शान्त्यादयः विग्रहगुणाः कान्त्यादयः शक्तिगुणाः सत्यादयः एवं त्रिप्रकारा गुणा यस्य तस्मै नमो नमः ॥ २५ ॥

अदितिरेव पूर्वजन्मनि पृश्निस्तस्याः गर्भाय तद्गर्भकाय वेदानां गर्भो विषय ते वा गर्भे यस्य तस्मै वेधसे विधात्रे त्रयो लोका नाभ्यां यस्य तस्मै त्रयाणां लोकानां पृष्ठे उपरि वैकुण्ठे स्थिताय शिपयः पशवो जीवास्तेषु अन्तर्यामितया प्रविष्टाय "यज्ञो वै विष्णुः" पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुतेः । विष्णवे व्यापिने ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्रोतः सरित् अन्तःपतितं तृणादिकमाक्षिपति आकर्षयति यथा तथा कालशक्तिः ॥ २७ ॥

हे देव ! त्वं संभविष्णुः आविर्भावकरिष्णुस्सन् प्रजानां प्रजापतीनां विबुधच्युतानां दिवौकसां च परायणं परमाश्रयः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशोऽध्यायार्थप्रकाशः ॥ १७ ॥

---

भाषा टीका।

ब्रह्मोवाच ॥

श्रीब्रह्माजी बोले, कि—हे उरुगाय ! हे भगवन् ! आपकी जय हो। हे उरुक्रम ! आपको नमस्कार हो ब्रह्मण्य देव त्रिगुणात्मक आपको नमोनमः ॥ २५ ॥

पृश्नि गर्भ वेद गर्भ वेधा और त्रिनाभ अर्थात् तीनों लोक नाभि में जिन के ऐसे, तथा तीनों लोक के ऊपर स्थित होने वाले और अनन्त किरणों वाले ऐसे श्रीविष्णु को नमस्कार हो ॥ २६ ॥

आपही भुवनके आदि अन्त और मध्यहो और हे ईश ! जिसको पुरुष कहते हैं वे अनन्तशक्ति वाले आपही हो। तथा कालरूप भी आपही हो जो काल, इस विश्वको खींचता जाता है जैसे गम्भीर स्रोतकाप्रवाह अपने गिरे हुए पत्र आदि को खींचता है ॥ २७ ॥

स्थावर जङ्गमात्मक प्रजाके और प्रजापतियों के उत्पन्नकरने वाले आपही हो। हे देव ! तथा स्वर्गसे च्युत देवताओं के भी परम आश्रय आपही हो, जैसे कि—डूबते हुए पुरुषको नौका ॥ २८ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, सप्तदश अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्त ॥ १७ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

## ॥ अष्टादशोऽध्यायः ॥

---

श्रीशुक उवाच।

इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम्।
चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः॥ १ ॥
श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान्।
श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः॥ २ ॥
मधुव्रतव्रातविघुष्टया स्वया विराजितश्रीवनमालया हरिः।
प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कण्ठनिविष्टकौस्तुभः॥ ३ ॥
दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः।
द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः सञ्जहृषुर्नगाश्च॥ ४ ॥
श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः।
सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणम्॥ ५ ॥
द्वादश्यां सविता तिष्ठन्मध्यं दिनगतो नृप।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः॥ ६ ॥
शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः।
चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत्॥ ७ ॥
प्रीताश्चाप्सरसोऽनृत्यन्गन्धर्वप्रवरा जगुः।
तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ततस्त्वष्टादशे भूत्वा वामनः सत्क्रमोऽखिलैः।
यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वराद् वृणु॥

इत्थं विरिञ्चेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं च प्रभावो यस्य स हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः। अमृतभूर्मृत्युजन्मशून्यः। शङ्खगदाब्जचक्राण्ययस्य सन्तीति तथा अर्श आदित्वेन मत्वर्थीयोऽच्प्रत्ययः। अविसर्गपाठे स चासौ पिशङ्गवासाश्च॥ १ ॥

झषराजो मकरस्तदाकारयोः कुण्डलयोस्त्विषा उल्लसन्ती श्रीर्वदनाम्बुजे यस्य श्रीवत्सो वक्षसि यस्य वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य॥ २ ॥

श्रीमत्या वनमालया विराजितः वेश्मगतं तमः॥ ३ ॥
अग्निजिह्वा देवाः नगाः पर्वताः॥ ४ ॥

तत्प्रादुर्भावसमयमाह—श्रोणायामिति। भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्याम् तत्रापि श्रोणायां श्रवणस्थे चन्द्रे इत्यर्थः। तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे तच्च श्रुत्या दर्शितम् "अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्तात् श्रोणायाः" इति. एवं विशिष्टे मुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः। किञ्च नक्षत्राण्यश्विन्यादीनि ताराशब्देन ग्रहा गुरुशुक्रादयस्ते आद्या येषां ते सूर्यादयोऽपि सर्वे तस्य जन्मदक्षिणमुदारं चक्रुः जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः॥ ५ ॥

विशेषान्तरमाह—यस्यां द्वादश्यां हरेर्जन्म तस्यामहन्येव

श्रीधरस्वामिकृतभावार्थदीपिका।

विष्णुः तदा च मध्यन्दिनगतः सविताऽतिष्ठत् सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः ॥ ६ ॥

शङ्खादयो ये तेषामन्येषां च चित्रतूर्याणां निर्घोषोऽभवत् ॥ ७ ॥

देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८—११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं ब्रह्मणा समीडितो भगवानवततारेत्याह मुनिः–इत्थमिति। इत्थं विरिञ्चेन स्तुतं कर्म देवकार्यसाधकं वीर्यम् उरुक्रमत्वादिप्रभावश्च यस्य सोऽमृतभूः कर्मायत्तमरणोत्पत्तिरहितः मोक्षप्रदो वा भगवान् अदित्यामाविर्बभूव, कथम्भूतः? चत्वारो भुजा यस्य शङ्खादयो यस्य सन्तीति तथा मध्ये आदित्यान्मध्यमयोरुच्च पिशङ्गे वाससी यस्य नलिनवत् सुन्दरे आयते चक्षुषी नेत्रे यस्य ॥ १ ॥

श्यामश्चासाववदातो निर्मलः झषराजो मकरस्तदाकारयोः कुण्डलयोः त्विषा उल्लसन्ती श्रीमद्वदनाम्बुजे यस्य श्रीवत्सो वक्षसि यस्य वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य ॥ २ ॥

मधुव्रतानां भृङ्गाणां समूहेन विघुष्टया स्वया ऽसाधारण्या श्रीमत्या वनमालया विराजितः विभुः सर्वज्ञः प्रजापतेः कश्यपस्य वेश्मगतं तमः स्वकान्त्या विनाशयन्नपनुदन् कण्ठ निविष्टः धृतः कौस्तुभो यस्य सः आविर्बभूवेति पूर्वेणान्वयः ॥ ३ ॥

तदा दिशः सलिलानि जनानामन्तःकरणानि च प्रसेदुः प्रसन्ना बभूवुः प्रजाः प्रसन्नाः ऋतवः प्रावृडादयः गुणान्विताः स्वस्वगुणयुक्ता बभूवुः तथा द्युप्रभृतयो नगाः पर्वताश्च यथानुरूपं प्रसेदुः सञ्जहृषुः हर्षयुक्ताबभूवुः तत्राग्निजिह्वा देवाः अग्नेर्जिह्वा शिखावा ॥ ४ ॥

प्रादुर्भावकालमाह–श्रोणायामिति। श्रवणद्वादशी भाद्रपदशुक्लद्वादशीतिप्रसिद्धा तस्यामपि श्रोणायां श्रवणर्क्षस्थे सति चन्द्र इत्यर्थः। तत्रापि श्रवणप्रथमांशोऽभिजिन्नामकं मुहूर्ते मध्यन्दिने तच्च श्रुत्या दर्शितम् "अभिजिन्नामनक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाः" इति एवंविशिष्टमुहूर्ते भगवान् प्रादुर्बभूवेति पूर्वेणान्वयः। किञ्च नक्षत्राण्यश्विन्यादीनि ताराः गुरुशुक्रादयः आदिशब्देन चन्द्रसूर्यादयः सर्वे तस्य भगवतो जन्म प्रदक्षिणमुदारं चक्रुः ॥ ५ ॥

द्वादश्यां तस्यां तिथौ अहनि सूर्यो मध्यन्दिनगतो बभूव सा च द्वादशी विजयेतिप्रसिद्धाऽभूत्, का? यस्यां द्वादश्यां हरेर्जन्म विदुरिति ॥ ६ ॥

तदा शङ्खादयो मृदङ्गादयश्च नेदुः दध्वनुः तथा विचित्रवादित्राणां तुमुलो निर्घोषश्चाऽभवत् ॥ ७ ॥

अप्सरसः प्रीता ननृतुः गन्धर्वश्रेष्ठाः जगुः मुनिप्रभृतयो यथायोग्यं तुष्टुवुर्जगुर्ननृतुः प्रशशंसुः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अमृतभूः मुक्ताभयो विष्णुः ॥ १ ॥

झषराजो मत्स्यश्रेष्ठः मकरस्तदाकारकुण्डलत्विषा ॥ २ ॥

वेश्मतमः गृहान्धकारः ॥ ३ ॥

सलिलाशयाः ह्रदाः अग्निजिह्वा देवाः ॥ ४ ॥

श्रोणायां श्रावणे मासि अभिजिति मध्यन्दिने ॥ ५ ॥

श्रवणद्वादश्यामतिष्ठत्तदा सा द्वादशी विजया नाम अनेन सत्कार्यान्तरं विधीयते ॥ ६ ॥

शङ्खादयो नेदुरिति शेषः ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इत्थमिति त्रिकम् ॥ १—४ ॥

श्रोणायामभिजिति नक्षत्रे मुहूर्त्ते चाभिजितीत्यन्वयः ॥ ५-६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अष्टादशे हरिर्भूत्वा वामनो ब्रह्मसूत्रभृत्।
बलेर्यज्ञं गतस्तेन वरान् वृणिवति भाषितः ॥

अमृतभूः प्राकृतानामिव न मृता न नाशवती भूरुत्पत्तिर्यस्य सः "जन्मकर्म च मे दिव्यम्" इत्युक्तेः। शङ्खगदाब्जचक्र इत्यर्श आद्यजन्तम् अविसर्गपाठे स चासौ पिशङ्गवासाश्च ॥ १ ॥

श्यामश्चासाववदातश्चेत्यमयत्वेन शुभ्रश्चेति सः झषराजो मकरः वलयैरङ्गदैश्च सह उल्लसन्ति किरीटादीनि यस्य सः श्रीमत्या वनमालया विराजितः ॥ २—३ ॥

अग्निजिह्वा देवाः नगाः पर्वताः ॥ ४ ॥

तत्प्रादुर्भावसमयमाह—श्रोणायामिति। भाद्रशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्यां तत्रापि श्रोणायां श्रवणर्क्षस्थे चन्द्र इत्यर्थः। तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे तच्च श्रुत्यादर्शितम् "अभिजिन्नाम नक्षत्रम् उपरिष्टादाषाढायाः श्रवणाय अधस्तात्" इति ज्योतिषेणा च "उत्तराषाढाशेषाङ्घ्रि श्रवणादौ लिप्तिका चतुष्कं च ॥ अभिजित्तत्र खचरं निज्ञेया रोहिणीविद्धा" इति मुहूर्ते स्वजन्मोचितशुभमुहूर्ते इत्यर्थः। यद्वा अभि सर्वतोभावेन जितं जयो यतस्तस्मिन् मुहूर्ते परमशुभलग्न इत्यर्थः जयलक्षणमेवाह—सर्वे इति। नक्षत्राण्यश्विन्यादीनि ताराशब्देन ताराः ग्रहाः गुरुशुक्रादयः ते अश्विन्यादयो ते सूर्यादयोऽपि सर्वे तज्जन्मप्रदक्षिणमुदारं, चक्रुरिति श्रीस्वामिचरणाः ॥ ५ ॥

मध्यन्दिनगतः सविता यदाऽभूत्तदा जन्मेति शेषः। यस्यां द्वादश्यां जन्म विदुः सा विजया प्रोक्ता ॥ ६ ॥

शङ्खादयो नेदुरिति शेषः ॥ ७ ॥

देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८—११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अष्टादशे वामनरूपेणाविर्भूतो हरिः प्राप्तोपनयनो बलियज्ञं गतो बलिना वरान् वृणिष्वेत्युक्तोऽभूदिति वर्णयति—इत्थं

सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः ।
चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥
गायन्तोऽतिप्रशंसन्तो नृत्यन्तो विबुधानुगाः ।
अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥
दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता ।
गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरिञ्चेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं प्रभावश्च यस्य सः हरिः प्रजापतेः घेश्मतमः स्वरोचिषा विनाशयन्नदित्यां प्रादुर्बभूवेति त्र्याणामन्वयः । अमृतभूः अमृतेन नित्यसिद्धेन मृत्युजन्मरहित-विग्रहेण भवतीति तथा नित्यविग्रहेणैवाविर्भूतत्वात् शङ्खगदा-ब्जचक्राण्यस्य सन्तीति तथा अर्शआदित्वेन मत्वर्थीयोऽच् प्रत्ययः ॥ १ ॥

श्यामश्चासाववदातः उज्वलः मकराजनिभयोः कुण्डलयोः त्विषा कान्त्या उल्लसन्ती श्रीवदनाम्बुजे यस्य सः श्रीवत्सो वक्षसि यस्य स तथा वलयैरङ्गदैश्च सह उल्लसन्ति किरीटादीनि यस्य स तथा ॥ २ ॥

मधुव्रतव्रातेन भ्रमरसमूहेन विघुष्टया श्रीमत्या वनमालया विराजितः कण्ठनिविष्टः कौस्तुभो यस्य स तथा ॥ ३ ॥

तदा प्रादुर्भावसमये प्रसेदुः प्रसन्ना बभूवुः अग्निजिह्वा देवाः ॥ ४ ॥

प्रादुर्भावसमयमाह—श्रोणायामिति । श्रवणद्वादश्यां श्रवणयुक्तायां भाद्रपदशुक्लद्वादश्यामित्यर्थः । तत्रापि श्रोणायां श्रवणस्थे चन्द्रे इत्यर्थः । तत्रापि श्रवणप्रथमांशेऽभिजिति नक्षत्रे तच्च श्रुत्या दर्शितम् "अभिजिन्नामनक्षत्रमुपरिष्टादाषाढानामवस्तात्छ्रोणायाः" इति एवं विशिष्टे मुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः । किञ्च नक्षत्राण्यश्विन्यादीनि तारा गुरुशुक्रादयस्तद्वाराःसूर्यादयः ते सर्वं तस्य भगवतो जन्म दाक्षिण्यमुदारं चक्रुः ॥ ५ ॥

यस्यां द्वादश्याम् अहनि हरेर्जन्म विदुः तदा च सविता मध्यंदिनगतोऽतिष्ठत् सा च द्वादशी विजया नाम प्रोक्ता ॥ ६ । ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीजानये नमः ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—जब इस प्रकार ब्रह्माजीने आपके पराक्रम और वीर्यगान कर स्तुति करी तब अमृतभू अर्थात् मृत्युजन्मशून्य अथवा अमृत वैकुण्ठ लोक है भूमिजिनकी ऐसे श्रीहरि अदितिजी में प्रकट हुए, तब चारों भुजाओं में शङ्खचक्रगदापद्म को धारण किये पीताम्बर पहिने और कमल दल सदृश विशाल लोचन हैं जिन के ऐसे दर्शन दिये ॥ १ ॥

और आपका वर्ण कैसा है कि—श्याम और अवदात नाम शुक्ल अर्थात् विचित्र ही वर्ण है जो श्याम और शुक्ल दोनों प्रकार का मालूम हो, तथा मकराकृत कुण्डलों की कान्ति से जिनके मुखकमल की शोभा होरही है । वक्षःस्थल में श्रीवत्स को धारण किये । हाथों में कङ्कण भुजाओंमें बाजूबन्द माथेपर किरीट कटि में कांचीगुण (कौंधनी) चरणों में नूपुर धारण किये हैं ॥ २ ॥

और भ्रमरों के समूह की गुञ्जार से शोभित सुन्दर माला से अति सुशोभित कण्ठ में कौस्तुभमणि कोधारण किये श्रीहरि अपने दिव्यमङ्गल विग्रह की कांति से प्रजापति श्रीकश्यप जी के घर के अँधेरे को दूरकरते हुए प्रकट हुए ॥ ३ ॥

श्री हरि के जन्म काल में सम्पूर्णदिशायें और जलाशय प्रसन्न होगये और प्रजा सम्पूर्ण बड़े हर्ष को प्राप्त हुई । और ऋतु अपने २ गुणों को धारण करती हुई, तथा स्वर्ग, अन्तरिक्ष, पृथिवी, देवतालोग, गायें, ब्राह्मणलोग, और पर्वत ये सब परम हर्ष को प्राप्त हुए ॥ ४ ॥

भाद्रपद मास की शुक्ल द्वादशी में श्रवण नक्षत्र पर चन्द्र जब स्थित रहा उस समय अभिजित मुहूर्तमें प्रभु प्रकट हुए, और श्रीहरिके जन्म को सब नक्षत्र और तारों ने दक्षिण किया ॥ ५ ॥

हे राजन् ! जब श्रीहरि का जन्म भया तब सूर्य भी मध्यान्ह में स्थित रहे, और जिसमें हरि का जन्म भया उस तिथिको विजया करके कहते हैं ॥ ६ ॥

जन्म समय में शङ्ख दुन्दुभि, मृदङ्ग, पणव, आनक तथा और बहुत से बाजे और तुर्यों का तुमल शब्द होता भया ॥ ७ ॥

प्रसन्न होकर अप्सरायें नृत्य करने लगीं, गन्धर्व प्रवर गाने लगे, मुनि, देव मनु, पितर अग्नि ये सब ही स्तुति करने लगे ॥ ८ ॥

यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ।
बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥
तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः ।
कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥ १३ ॥
तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् ।
बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥ १४ ॥
ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ।
कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥
कमण्डलुं वेदगर्भः कुशान् सप्तर्षयो ददुः ।
अक्षमालां महाराज ! सरस्वत्यव्ययात्मनः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विस्मयान्तरमाह—यत्तदिति । यत्तद्वपुर्हरिरधारयत्प्रकटितवांस्तेनैव वपुषा मातापित्रोः सम्पश्यतोरेव वामनो वटुर्बभूव दिव्यगतिरद्भुतचेष्टितः स्वयं कथम्भूतः अव्यक्तचिद्रूपः कथमधारयत् भातिर्दीप्तिर्विभूषणानि आऽऽयुधानि च तैर्व्यक्तं यथा भवति तथा ॥ १२ ॥

कर्माणि जातकर्मादीनि ॥ १३-१४ ॥

वनस्पतिर्वनानां पतिः सोमः ॥ १५—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अदित्याश्रमं कुसुमैरवाकिरंश्च ॥ ९ ॥ १० ॥

तं परमपुरुषं निजगर्भसम्भूतं दृष्ट्वाऽदितिर्विस्मिता सती नितरां मुदमवाप तथा प्रजापतिः कश्यपश्च निजयोगमायया सहजशक्तियोगयुक्तसङ्कल्परूपज्ञानेन यद्वा योग एव माया तथा आश्चर्यरूपशक्तियोगेनेत्यर्थः । गृहीतो देहो दिव्यविग्रहो येन तं दृष्ट्वा प्रजापतिर्जयेत्याह ॥ ११ ॥

विस्मयान्तरमाह—यत्तदिति । विभूषणैः कौस्तुभादिभिरायुधैः शङ्खचक्रादिभिश्च युक्तमिति शेषः । एवम्भूतं यद्वपुः स्वासाधारणत्वेन प्रकाशते नित्यविभूत्यादौ, तद्वपुरादावव्यक्तचिद्रूपः प्रकृतिपुरुषशरीरको भगवान् अधारयदाविष्कार ततस्तेनैव वपुषा पित्रोः संपश्यतोः सतोः स भगवान् दिव्यगतिरनितरसाधारणचेष्टो वामनो वटुर्बभूव वटुसंनिवेशाद्वामनशब्दवाच्यो बभूव यथा नटः पूर्वपूर्ववेषं विहाय वेषान्तरमुपादत्ते तद्वदित्यर्थः ॥ १२ ॥

तं भगवन्तं वामनशब्दवाच्यं वटुसंनिवेशं दृष्ट्वा महर्षयः संहृष्टास्सन्तः प्रजापतिं कश्यपं पुरस्कृत्य कर्माणि जातकर्मादीनि कारयामासुः ॥ १३ ॥

तस्य वामनस्योपनीयमानस्य उपनयनेन संस्क्रियमाणस्य सविता सावित्रीमुपदिष्टवान् बृहस्पत्यादयो ब्रह्मसूत्रादीनि ददुः ॥ १४ ॥

तत्र भूमिर्भूम्यधिष्ठात्री देवता वनस्पतिः सोमश्चन्द्रः द्यौस्तदभिमानिदेवता ॥ १५ ॥

हे महाराज ! अव्ययात्मनः अपक्षयादिरहितस्वरूपस्य सरस्वती अक्षमालामदात् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुपर्णाः भुजगोत्तमाश्च ॥ ९-११ ॥

यत्स्वभावतो व्यक्तमव्यक्तमेव तद्वपुरनुकम्पया विभूषणायुधैर्व्यक्तं भाति हरिस्तादृशं वपुरधारयत् यद्वपुरव्यक्तवज्ज्ञाति हरिस्तद्वपुर्विभूषणायुधैर्व्यक्तमधारयदिति वा स एव दिव्यगतिरनभिभूतज्ञानो हरिस्तेन विभूषणायुधविशिष्टेन रूपेण पित्रोः सम्पश्यतोः सतोर्वामनो वटुर्बभूवेत्यन्वयः । मूलरूपावतारूपयोरभेदज्ञापनायैवमुच्यते यथा नट इति तदभिप्रायेण ॥ १२—१६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विभूषणायुधैः सह यद्वपुर्भाति वर्तमाननिर्देशेन वपुषो नित्यत्वं व्यञ्जितं किञ्च यत् अव्यक्तं च चित्स्वरूपत्वं तदेव व्यक्तं रूपयेव व्यक्तीकृतम् अधारयत् मत्स्यभूतवत्मेव तज्ञ्जाहेत्यर्थः । पित्रोः सुखार्थमिति भावः, तेनैव नतु मायिकेन केनचिदित्यर्थः दिव्या दुर्गमाः वा गतयश्चेष्टा यस्य तथाभूतो महायोगेश्वरो नटः सहि स्वस्वरूपतः पृथग्भूतं स्वरूपं कुर्वन्नप्यपृथग्भूतमेव करोति तथैव हरिस्तेन चिन्मयवपुषैव वामनो वामनवपुर्बभूवेत्यर्थः ॥ १२ ॥

तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ।
भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥ १७ ॥
स ब्रह्मवर्चसेनैवं सभां सम्भावितो बटुः ।
ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः ॥ १८ ॥
समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ।
परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥ १९ ॥
श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ।
जगाम तत्राखिलसारसम्भृतो भारेण गां सन्नमयन् पदेपदे ॥ २० ॥
तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते [1]भृगुकच्छसंज्ञके ।
प्रवर्त्तयन्तो भृगवः क्रतूत्तमं व्यचक्षताऽऽरादुदितं यथा रविम् ॥ २१ ॥
त ऋत्विजो यजमानः सदस्या हतत्विषो वामनतेजसा नृप ।
सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्माणि चूडोपनयनादीनि ॥ १३—१६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहीतदेहमाविष्कृतविग्रहम् ॥ ११ ॥

दिव्या देवयानरूपा गतिर्यस्य सः अर्चिरादिमार्गगम्य इत्यर्थः अव्यक्तचित् दुर्दर्शचित्स्वरूपो हरिः भातिर्दीप्तिः विभूषणानि कौस्तुभादीनि आयुधानि चक्रादीनि तैरुपलक्षितं यत् व्यक्तं स्फुटं शास्त्रप्रसिद्धमित्यर्थः तद्वपुरधारयत् प्रकटितवान् तेनैव वपुषा अदितिकश्यपयोः पश्यतोः वामनो बटुः बभूव यथा नटः स्वेनैव रूपेण रूपान्तरं प्रकटयति तद्वदित्यर्थः । यद्वपुर्विभूषणायुधैरुपलक्षितं भाति शास्त्रे इति शेषः तद्व्यक्तं स्फुटमधारयदिति वान्वयः अम्बरसमानम् ॥ १२ ॥

प्रजापति कश्यपं कर्माणि जातकर्मादीनि ॥ १३ ॥ १४ ॥

वनानां पतिः वनस्पतिः सोमः ॥ १५ ॥ १६ ॥

भाषा टीका ।

सिद्ध विद्याधरों के गण, किंपुरुष, किन्नर, चारण, यक्ष, राक्षस, सुपर्ण, भुजगोत्तम, ॥ ९ ॥

ये सब लोग गाते हुए प्रशंसा करने लगे, नाचने लगे विबुधों के अनुचर और आदित्य अर्थात् और अदिति पत्र उस आश्रम में पुष्पों की वर्षा करने लगे ॥ १० ॥

अदितिजीभी आज उस परम पुरुष को निजगर्भ से उत्पन्न देखकर विस्मित होकर परम हर्ष को प्राप्त हुई आप की निज योगमाया से देह को ग्रहण किया है ऐसा जान कर विस्मित होकर जय२ शब्द करने लगे ॥ ११ ॥

जो शरीर आप को अव्यक्त है और जो भूषण आयुध सहित आपने व्यक्त धारण किया, बस आप उसी शरीर से उन दोनों के देखते२ अति छोटे वामन बटु होगये,जैसे नट क्योंकि ? आप की दिव्यगति है ॥ १२ ॥

बस उस छोटे वामन बटु को देखकर ऋषि लोग बड़े प्रसन्न हुए, और कश्यप जी आगे करके सर्व कर्म कराते हुए ॥ १३ ॥

जब आप का उपनयन होने लगा तब सूर्य ने सावित्री का उपदेश किया बृहस्पतिजी ने यज्ञोपवीत दिया और कश्यपजीने मेखला दीनी ॥ १४ ॥

और भूमिने कृष्णवर्ण का मृग चर्म दिया, वन के पति चन्द्रने दण्डदिया, और कौपीन आच्छादन माता श्री अदितिजीने दिया, और जगत्पति को छत्र स्वर्गने दिया ॥१५॥

ब्रह्माजीने कमण्डलुदिया, सप्त ऋषियोंने कुशदिये, हे महाराज ! और अव्यक्तात्माभगवान को अक्ष की माला श्रीसरस्वतीजीने दीनी यहां अक्ष माला से विष्णु के प्रकरण में पद्माक्ष माला ही जानना चाहिये क्योंकि द्वादशस्कन्ध के अष्टमअध्याय में श्रीनरनारायण के रूप वर्णन में भी "पद्माक्षमालामुतजन्तुमार्जनम्" ऐसा स्पष्ट कहा है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पात्रिकां भिक्षापात्रीम् ॥ १७ ॥

(१) भृगुकच्छ इति विज० ।

यजमानः प्रमुदितो दर्शनीयं मनोरमम् ।
रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥
स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ।
अवनिज्यार्चयामास मुक्तसङ्गं मनोरमम् ॥ २७
तत्पादशौचं जनकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्सुमङ्गलम् ।
यद्देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विवेकधैर्यपाणिडत्यादिभिः सम्भृतः पूर्णः भारेण रूपैश्वर्यादि गरिम्णा गां पृथ्वीं सम्यक्नमस्कारं कारयन् ॥ २० ॥

तम् ऋत्विगादय एवं व्यतर्कयन्निति शेषः ॥ २१—२२ ॥

इत्थमिति यथा ऋत्विजादयो व्यतर्कयन् इत्थं भृगुषु भृगुभिरपि वितर्क्यमाणः हयमेधवाटम् अश्वमेधमण्डपम् ॥ २३ ॥

वीतं युक्तम् उपवीतवद्धृतमजिनमेवोत्तरमुत्तरीयं यस्य तं मायया स्वरूपेणैव माणवकं बालं स्वरूपभूतया "नित्यशक्त्या मायाख्यया युतः" इति श्रुतेः । प्रत्यगृह्णन् यथाविधिमतिविनया दिपाद्यार्घ्यादिदानेन सम्मानयामासुः "प्रतिग्रहः स्वीकरणे सैन्य-पृष्ठे पतद्ग्रहे द्विजेभ्यो विधिवद्देये" इति मेदिनी ॥ २४—२६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पात्रिकां भिक्षापात्रं यक्षराट् कुबेरः ॥ १७ ॥

स वटुः एवं सम्भावितो मारिषः सर्वश्रेष्ठः ब्रह्मर्षिगणैर्जुष्टां युक्तां सभां ब्रह्मवर्चसेन अत्यरोचत ॥ १८ ॥ १९ ॥

भृगूणां भृगुभिः कल्पितैः प्रवर्तितैः अश्वमेधैर्यजमानं यजन्तं बलिं श्रुत्वा अखिलेन सारेण बलेन सम्भृतः पूर्णः ॥ २० ॥

भृगुकच्छसंज्ञके क्षेत्रे व्यचक्षत अपश्यन् ॥ २१ ॥

ते ऋत्विगादयो वामनतेजसा हततिषः सन्तः किम किं सूर्यः उत विभावसुः अथवा सनत्कुमार आयातीति वितर्कयामासुरिति शेषः ॥ २२ ॥

हयमेधस्य वाटं मण्डपम् ॥ २३ ॥

मेखलया वीतं युक्तम् उपवीतवद्धृतमजिनमेवोत्तरमुत्तरीयं यस्य स तथा मायया अदित्यादिविषयकया कृपया माणवकं बालम् ॥ २४ ॥

धर्षिताः अभिभूताः सन्तः समुत्थाय प्रत्यगृह्णन् स्तुवन्तः ॥ २५ ॥

———

भाषा टीका ।

इस प्रकार उपनयन के अनन्तर उनभी वामन जी को कुबेरजी ने भिक्षा का पात्र दिया, अम्बिका जी उमादेवी भिक्षादीनी ॥ १७ ॥

वह वटु इस प्रकार ब्रह्म तेज से जगमता हुआ सम्भावित ब्रह्म चारी, ब्रह्मर्षि लोगों की सभा में सब से अधिक तेजस्वी होकर प्रकाशित होता भया ॥ १८ ॥

फिर विप्र वटुने आधानकरी हुई दीप्त अग्नि का परिसमूहन परिस्तरण करके अग्नि का आर्चना कर समिधों से हवन किया ॥ १९ ॥

बहुत भृगु लोगों के उपकल्पित अश्वमेधों से यजन करने वाले बड़े भारी यजमान बलि को सुनकर वहां जाते हुए और जाने समय में अखिलसार से भरे होने से मारे बोझ के पग २ पर पृथिवी को नवाते हुए गये ॥ २० ॥

नर्मदा के उत्तर तट में भृगु कच्छ नामक स्थल में बलि के ऋत्विक् भृगु लोग यज्ञकी प्रवृत्ति में लगे हुए थोड़ी दूर से श्री वामनजी को देखते हुए जैसे कोई दूसरा सूर्य का उदय भया हो ॥ २१ ॥

वे सब ऋत्विग् लोग तथा यजमान और सभा के सब वामन जी के तेज से नष्ट कांति वाले होगये और कहने लगे कि यह सूर्य आते हैं अथवा अग्नि किंवा यज्ञ देखने को सनत्कुमारजी तो नहीं आते हैं ? ॥ २२ ॥

इस प्रकार शिष्यों सहित भृगु लोग अनेक प्रकार तर्क करते रहे इतने में भगवान् श्रीवामनजी महाराज, दंड, छत्र, और सजल कमंडलु को धारण करते हुए यज्ञ की वाट में प्रवेश करते हुए ॥ २३ ॥

और मूंज की मेखला को धारण किये, तथा यज्ञोपवीत और यज्ञोपवीत के नाईं मृगचर्म को भी धारण किये हैं और छोटी २ जटाओं को धारण किये हुए ऐसे ब्राह्मण ब्रह्मचारी रूप श्री हरि को ॥ यज्ञ के विषे प्रविष्ट देखकर शिष्यों सहित भृगु लोग और कुंडों के अग्नि सब ही उनके तेज से आक्षिप्त होकर उठकर श्रीवामनजी को अभ्युत्थान देते हुए ॥ २४—२५ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूपस्यानुरूपा अवयवा यस्य तम् इष्टेति शेषः ॥ २६ ॥ २७ ॥

बलिरुवाच ।

स्वागतं ते नमस्तुभ्यं ब्रह्मन्! किङ्करवाम ते ।
ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वाऽऽर्यवपुर्धरम् ॥ २९ ॥
अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ।
अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ॥ ३० ॥
अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज! त्वच्चरणावनेजनैः ।
हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥
यद्यद्बटो! वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ।
गां काञ्चनं गुणवद्धाममृष्टं तथाऽन्नपेयमुत वा विप्रकन्याम् ।
ग्रामान्समृद्धांस्तुरगान् गजान्वा[1] रथांस्तथाऽर्हत्तम सम्प्रतीच्छ ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे बलिवामनसम्वादे
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चन्द्रमौलिश्चेत्यन्वयः अप्यर्थे चकारः चन्द्रमौलिरपि गङ्गारूपं यन्मूर्ध्ना दधारेत्यर्थः ॥ २८ ॥

हे आर्य! त्वां साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तप एव मन्ये कथम्भूतं? वपुर्धरं मूर्तिधारि ॥ २९ ॥ ३० ॥

त्वच्चरणावनेजनैर्वार्भिर्हतमंहो यस्य तस्य मे पुनीता पवित्री कृता ॥ ३१ ॥

मे मत्तः प्रतीच्छ गृहाण हे अर्हत्तम पूज्यतम ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह-यजमान इति । रूपस्यानुरूपा अवयवा यस्य अत एव मनोरमं द्रष्टुमत एव दर्शनीयं वामनं दृष्ट्वेति शेषः । यजमानो बलिस्तस्मै आसनं समर्पितवान् ॥ २६ ॥

अथ बलिस्तं स्वागतेनाभिनन्द्य स्वागतं पृष्ट्वा तस्य भगवतः पादाववनिज्य प्रक्षाल्य मुक्तसङ्गानां योगिनां मनस्सु क्रीडन्तं मधुवन्तम् समर्चयामास ॥ २७ ॥

ततः स्वधर्मवित् स्वानुरूपधर्मज्ञो बलिः कलिकल्मषस्यापहन्तृ अत एव सुमङ्गलं तस्य भगवतः पादाववनिज्य पादयोः सम्बन्धि शौचं पवित्रं प्रक्षालनोदकं मूर्ध्न्यधात् पादशौचं विशिनष्टि, देवदेवो ब्रह्मा चन्द्रमौलिः गिरिशो रुद्रश्च परया उत्कृष्टया भक्त्या मूर्ध्ना यत्पादशौचं गङ्गारूपं दधार ततस्तमुवाचेति शेषः ॥ २८ ॥

तदेवाह—स्वागतमिति सार्धैश्चतुर्भिः । हे ब्रह्मन्! ते त्वया स्वागतं तुभ्यं नमः, किं ते करवाम? किङ्करा वयमित्यर्थः आर्यवपुर्धरं श्रेष्ठदेहधरं त्वा साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तपो मन्ये तप एव मूर्तिभूतं मन्ये ॥ २९ ॥

यत् यस्माद्भवानस्माकं गृहानागतस्ततोऽस्माकं पितरस्तृप्ता बभूवुः कुलं च पवित्रमभूत् अयं क्रतुश्च यथावदनुष्ठितो बभूव ॥ ३० ॥

अद्य मे अग्नयश्च यथाविधि सुहुता बभूवुः हे द्विजात्मज! त्वच्चरणावनेजनैर्वार्भिर्जलैर्हतमंहः पापं यस्य तस्य मम सम्बन्धिनी इयं भूर्भूमिस्तनुभिरस्मच्छरीरैः सह पदैः पादन्यासैः पुनीता पवित्रीकृतासीत् ॥ ३१ ॥

हे विप्रसुत! त्वामर्थिनं याचितारमनुतर्कये आलक्षये अतो हे बटो वामन! यद्यद्वाञ्छसि कामयसे तत्तन्मे मत्तः प्रतीच्छ प्रतिगृहाणेत्यर्थः ॥ ३२ ॥

यद्यदिति । यद्वाञ्छसीति यदृच्छयाभिप्रेतानेव कांश्चिद्दर्शयति गामिति । भूमिं धेनुं वा गुणवद्भोग्यभोगोपकरणादिमन्मृष्टं गृहं धाम

---

(१) रथांस्तथामानर्हत्तमप्रतीच्छ इति वीर०।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गृहं तथा मृष्टमन्नं वा हे विप्र उत वाथवा हे अर्हत्तम गवादिश्योऽन्यद्वा यत्किञ्चित् कामयसे तन्मत्तः प्रतिगृहाण ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तनुभिः रेणुभिः कोमलैर्वा ॥ ३१ ॥
प्रतीच्छ गृहाण ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मुक्तसङ्गानामपि मनोरमं यथा स्यात् ॥ २७ ॥

देवदेव ! सर्वाराध्याराध्योऽपि गिरौ शेते गिरिशः परमानासक्तोऽपि चन्द्रमौलिः स्वभावत एवामृतसारासिक्ततनुरपि ॥२८॥२९॥ ३० ॥ ३१ ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मुक्तसङ्गानामात्मारामाणां मनोरमयतीति तम् ॥ २७ ॥

चन्द्रमौलिर्ललाटे धृतचन्द्रोऽपि मूर्ध्ना चन्द्रस्याप्युपरि दधारेति भावः ॥ २८ ॥

त्वा त्वां वपुर्धरं मूर्तिमत्तप एव मन्ये साक्षान्मत्प्रत्यक्षीभूतम् ॥ २९ ॥

त्वच्चरणावनेजनैर्वार्भिः पदैश्चरणचिह्नैरियं भूः पुनीता पवित्रीकृता आर्षप्रयोगः ॥ ३०—३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमेऽष्टादशोऽध्यायस्सङ्गतः सङ्गतः सताम् ॥१८॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यजमानो बलिः रूपस्यानुरूपा अवयवा यस्य तं दृष्ट्वा तस्मै आसनमाहरत् समर्पयत् ॥ २६—२८ ॥

हे आर्य ! वपुर्धरं मूर्तिमत्तपः त्वा त्वां मन्ये ॥ २९ ॥ ३० ॥

मे मम अग्नयो यथाविधि सुहुताः कथम्भूतस्य त्वच्चरणावनेजनैर्वार्भिः हतमंहो यस्य तत्तया तस्य किञ्च तनुभिः पदैः इयं यज्ञभूमिः पुनीता पवित्रीकृता ॥ ३१ ॥

प्रतीच्छ गृहाण ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाऽध्यायार्थप्रकाशः ॥ १८ ॥

———

भाषा टीका ।

उस समय पर यजमान राजा बलि, रूप के अनुरूप संपूर्ण अवयव वाले अति दर्शनीय मनोहर रूप को देखकर बड़े हर्षित हुए, और अपने हाथ से श्रीवामनजी को आसन लाकर समर्पण किया ॥ २६ ॥

तदनंतर बलि महाराज ने स्वागत पूछकर श्रीभगवान् के चरण प्रक्षालन करके मुक्त समस्त संग और मनोरम ऐसे श्रीवामनजी की पूजा करी ॥ २७ ॥

फिर धर्म वेत्ता ऐसे राजा बलि ने समस्तजनों के पापों के हरने वाले परम मंगल आपके चरणारविन्द के प्रक्षालन किये हुए जल को माथे से धारण किया, जिस चरण शौच जलको साक्षात् देवों के देव कैलास वासी चन्द्र ललाम श्रीशंकर ने परम भक्ति से अपने मस्तक पर धारण किया रहा ॥ २८ ॥

बलिरुवाच ॥

राजा बलि बोले, कि—हे ब्रह्मन् आप का बड़ा सुन्दर आगमन हुआ आपको नमस्कार है, अब हम आपकी कौनसी परिचर्या करें, हे आर्य ! हम तो ऐसे जानते हैं कि—मानो कोई बड़े बड़े ब्रह्मर्षि लोगों के तपने ही साक्षात् यह वपु धारण कर लिया है ॥ २९ ॥

बस अब हमारे पितर तृप्त हुए और अब हमारा कुल पवित्र हुआ और इस यज्ञ का भी इसी समय सुन्दर यजन भया है, कि—जो आप हमारे घरों में आयो ॥ ३० ॥

हे द्विज पुत्र ! और आज हमारी अग्नि भी विधि पूर्वक सुन्दर हवन करी गई। तथा आपके चरण प्रक्षालित जलों से नष्ट हुआ पाप जिसका ऐसे हमारे यज्ञों सहित यह पृथिवी आपके चरणों से पवित्र होगई ॥ ३१ ॥

हे विप्र सुत ! अब तो मेरी यही प्रार्थना है, कि—जो जो आप चाहते हो सो सो सब मुझ से लेने की इच्छा करो, क्योंकि इस समय पर मैं तुमको अर्थीसा देखता हूं इस लिये गौ कांचन

भाषा टीका।

और बड़े गुण वाले धाम [ स्थान ] अथवा मिष्ट अन्न वा मिष्ट पेय [ पीने के योग्य पदार्थ ] जो चाहो सो लीजिये, यदि आप की विवाह की इच्छा हो तो कोई आपके योग्य छोटी सी विप्र कन्या ढूंढें। यदि सम्पन्न ग्राम चाहो तो अथवा हे अति पूजनीय विप्र ! आपको घोडा हाथी रथ जो कुछ चाहिये सोई लीजिये ॥ ३२ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में अष्टादश अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत
भाषा टीका समाप्ता ॥ १८॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

---

## ॥ एकोनविंशोऽध्यायः ॥

श्रीशुक उवाच ।

इति वैरोचनेर्वाक्यं धर्मयुक्तं ससूनृतम् ।
निशम्य भगवान्प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥

श्रीभगवानुवाच ।

वचस्तवैतज्जनदेव ! सूनृतं कुलोचितं धर्मयुतं यशस्करम् ।
यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः ॥ २ ॥

न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान् ।
प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥ ३ ॥

न सन्ति तीर्थे युधि चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः ।
युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥

यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ।
प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥

यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ।
(१)नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥

निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ।
हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥

तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ।
चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे तु हरिणा याचिते च पदत्रये ।
प्रतिश्रुते च बलिना जातग्भृगुरवारयत् ॥ १ ॥

॥ १ ॥

"दातुः स्तुतिः स्वयं तुष्टिः" इत्यादिप्रस्तुतोचितम् वक्तव्यमिति शिक्षयन्निवाह वामनः—वचस्तवैतदिति षोडशभिः । हे जनदेव ! साम्पराये पारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणम् ॥ २ ॥

निःसत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्ता कृपणस्य लक्षणं प्रथमं प्रतिश्रुत्य यो ऽदातेति ॥ ३ ॥

तीर्थे- दानावसरे यद्यस्मिन्युष्मत्कुले ॥ ४ ॥

यतो यस्मिञ्जातः ॥ ५ ॥

क्ष्मोद्धारे भूम्या उद्धरणे ॥ ६—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं याच्ञायै चोदितो भगवान् स्वपदत्रयपरिमितां भूमिम

---

(१) नात्मानमिति वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

बिप्रायाभिप्रुत्तदप्रत्याख्यानाय प्रतिश्रुतं दृढीकर्तुं बलिं प्रशंसन्नाह-त्याह,मुनिः–इत्युक्तविधं धर्मयुक्तं सूनृतं सत्यं मधुरं च बलेर्वचः श्रुत्वा प्रीतस्तं प्रतिनन्द्येदं वक्ष्यमाणमुवाच ॥ १ ॥

तदेवाह–वच इत्यादिना यावदर्थपरिग्रह इत्यन्तेन। हे जनदेव! तव वचः सूनृतत्वादियुक्तं युक्तञ्चैतत्कुतः यतः यस्य भगवतः साम्पराये परलोकसाधनधर्मनिर्णये तव पितामहः कुलवृद्धः प्रशान्तश्च प्रह्लाद एव प्रमाणं तद्वृत्त्यैव तत्सन्तानरूपाणां भवतामपि वृत्तिस्तादृश्येवेत्यनुमीयत इति भावः ॥ २ ॥

तदेवाभिव्यनक्ति–नहीति। अस्मिन्त्वदीये कुले कश्चिदपि पुमान् निःसत्त्वः कृपणश्च न हि न जातः न जनिष्यते नाधुना वर्तते च, तत्र निःसत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्तेति, कृपणस्य लक्षणं प्रथमं प्रतिश्रुत्य यो वाऽदातेति ॥ ३ ॥

हे नृप! तीर्थे दानावसरे सति अर्थिना याचकेन अर्थिना याचितास्तथा युद्धे पराङ्मुखा ये चाऽमनस्विनोऽस्वतन्त्राः अस्मिन् कुले। त्रिपुरुषेण सन्त्येव तीर्थे याञ्चां विनापि ददतीत्यर्थः। यद्यस्मिन्कुले खे आकाशे चन्द्र इवामलेन यशसा प्रह्लादः उद्भाति नितरां प्रकाशते ॥ ४ ॥

युधि पराङ्मुखा न सन्तीत्येतदुपपादयति–यतइत्यादिना। यतो यस्मिन्कुले जातो हिरण्याक्ष एकोऽसहायो दिग्विजयनिमित्तं इमां कृत्स्नां महीं चरन् गदायुधं यस्य तादृशः प्रतिपक्षं वीरं न लेभे ॥ ५ ॥

क्षमोद्धारे भूम्युद्धरणे, विष्णुर्वराहरूपो यं हिरण्याक्षं कृच्छ्रेणातिप्रयासेन निर्जित्य हत्वा जयिनमात्मानममन्यत अतस्तस्य हिरण्याक्षस्य वीर्यं भूयोऽनल्पविक्रमम् इत्यनुस्मरन् अभिजानीहि ॥ ६ ॥

तथा तस्य हिरण्याक्षस्य वधं श्रुत्वा तस्य भ्राता हिरण्यकशिपुः पुरा क्रुद्धो भ्रातुर्हन्तारं विष्णुं हन्तुं हरेर्निलयं स्थानं जगाम ॥ ७ ॥

शूलपाणिं मृत्युमिवापतन्तं तं हिरण्यकशिपुं निरीक्ष्य दुर्जयं ज्ञात्वा मायाविनां श्रेष्ठः तत्तत्कालप्रयोजनकर्तव्याभिज्ञो विष्णुरित्थं चिन्तयामास ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनेनाध्यायशेषेण बलेर्भक्तिविशेषं दर्शयति–इतीति। इति शब्देन हरिमाहात्म्यसूचकं वाक्यमुक्तमिति सूचयति ॥ १ ॥

जनदेव नृप! सांपराये पितामहः प्रमाणम् ॥ २ ॥

सर्वे दातुनिप्रमत्ता एवार्भाष्टं कुर्वन्तीत्यतस्तत्सिद्धिप्रकारं वचनं वक्ति–नहीति। यः पुमानिति प्रत्येकमभिसम्बध्यते प्रत्याख्याता नास्तीति वक्ता अदाता ॥ ३ ॥

तीर्थे पात्रे अर्थिना धनं युद्धे चार्थ्यमानेन पराङ्मुखा अमनस्विन इत्यनीदृशपराक्रमं यथायोग्यं सम्बन्धनीयम अमनस्विनो हीनमनस्का यद्यस्मात् उद्भाति उत्कृष्टतया द्योतते उडुपश्चन्द्रः ॥ ४ ॥ ५ ॥

कृच्छ्रेणेति मोहवचनं कुतः कीर्तनस्तान् भयते यत्नेन पराक्रमेणेत्यर्थ इति वा, क्षमायाः भूमेः उद्धारे उद्धरणकाले कृच्छ्रेण गते प्राप्ते सति भूरि तस्य वीर्यं पराक्रममनुस्मरन्नपि आत्मानं जयिनं तदानीमेवात्मजयं न मेने किन्तु नित्यजयिनं मेन इत्यर्थः। यद्वा क्षमाया उद्धारो येन स तथा स विष्णुर्नापरमपुरुषोऽयं विनिर्जित्य तत्सकाशं वीर्यं तद्भूयोऽनन्तमनुस्मरन्नात्मानं जयिनं जयशीलोऽपि न मेन इति ॥ ६ ॥ ७ ॥

मायाविनां ज्ञानिनां वरः मोक्षादिवरदाता ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—१० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पदत्रयमितां भूमिं विष्णुना प्रार्थितं बलिम्।
विस्मन्तमस्मै शुक्रस्तु न्यषेधीदुन्निशाकं ॥
॥ १ ॥

दातुः स्तुतिं स्वल्पयाञ्चां सन्तोषत्रयमुतां धृतिं भिक्षून् बहुतरं लिप्सून् शिक्षयन्नाह वामनः—वच इति षोडशभिः। यस्य तव ऐहिके धर्मे भृगवः प्रमाणं, साम्पराये पारलौकिके पितामहः प्रह्लादः ॥ २ ॥

निःसत्त्वस्य लक्षणं प्रत्याख्यता निःसत्त्वविशेषस्य कृपणस्य लक्षणं प्रतिश्रुत्य योऽदाता स्यात् शङ्कात् प्रत्याख्याता च ॥ ३ ॥

तीर्थे दानावसरे अर्थिना ब्राह्मणयाचकेनार्थिता नृपा दानपराङ्मुखा युधि युद्धावसरे अर्थिना क्षत्रियादिना अर्थिना युद्धपराङ्मुखास्ते ये अमनस्विनः अनुदारचित्ता नृपा अनुत्साहचित्ताश्च युष्मत्कुले न सन्तीत्यर्थः येषां यशसा ॥ ४ ॥

यतो यत्र कुले ॥ ५—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्थं पदत्रयपरिमितां महीं विस्मयं नयन् शुक्रोऽवारयत् दित्यकानिवेशं दर्शयति—इतीति। सूनृतं सत्यं प्रियं च ॥ १ ॥

साम्पराये पारलौकिके धर्मे भृगवः पितामहः प्रह्लादश्च प्रमाणं प्रवर्तकाः ॥ २ ॥

निःसत्त्वलक्षणं प्रत्याख्यातेति कृपणलक्षणं प्रतिश्रुत्याऽदातेति ॥ ३ ॥

तीर्थे दानावसरे पात्रे, समीति वा ॥ ४ ॥

यतः यस्मिन् युष्मत्कुले ॥ ५ ॥

क्षमोद्धारे भूम्युद्धरणे ये विनिर्जित्य आत्मानं जीवमात्रं जयिनं तज्जेतारं न मेने ॥ ६ ॥ ७ ॥

मायाविनः आश्चर्यशक्तिधरास्तेषां मध्ये वरः श्रेष्ठः ॥ ८ ॥

यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ।
अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥
एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र ।
श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः ॥ १० ॥
स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद ।
क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः ॥ ११ ॥
अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् ।
भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥ १२ ॥
वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ।
अज्ञानप्रभवो मन्युरहंमानोपबृंहितः ॥ १३ ॥
पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः ।
स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात्स याचितः ॥ १४ ॥

भाषा टीका।

श्रीरुक्मिणीप्रियवल्लभो जयति ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—वैरोचनि राजा बलि के धर्म युक्त मधुर वाक्य को सुनकर बड़े प्रसन्न हुए, और श्लाघा करके यह वचन बोले ॥ १ ॥

श्रीभगवान उवाच ॥

श्रीभगवान् बोले कि—हे नर देव ! यह आपकी वाणी बहुत सुन्दर और कुलके उचित धर्मयुक्त तथा यश करने वाली है, जिसके पारलौकिक धर्म में भृगुवंशी ये ब्राह्मण लोग ही प्रमाण हैं तथा कुल वृद्ध और प्रशान्त तुमारे पितामह प्रह्लाद भी प्रमाण हैं ॥ २ ॥

बस इस कुल में आज तक कोई इस कुल में ऐसा नहीं हुआ जो पराक्रम शाली न भया हो, अथवा कृपण भया हो, और ऐसा तो कोई भया ही नहीं, कि—जो ब्राह्मण को देने की प्रतिज्ञा करके फिर पल जावे ॥ ॥ ३ ॥

और आप के कुल में ऐसे अनुत्साही भी कोई नहीं हुए, कि जो दान के अवसर में किसी याचक की याचना करने पर देने से विमुख होजावें—अथवा संग्राम के समय पर वैरी के युद्ध मांगने पर विमुख होजावें । क्योंकि ? जिनके कुल में अमल यश वाले प्रह्लाद शोभा देरहे हैं, जैसे आकाश के तारागणों में चन्द्रमा ॥ ४ ॥

जिस तुमारे वंश में हिरण्याक्ष ऐसे प्रतापी भये, कि—हाथ में गदा लेकर दिग्विजय करने को जब इकले ही निकले तब उन को समग्र पृथिवी पर उनके साथ युद्ध करने वाला कोई दूसरा वीर नहीं मिला ॥ ५ ॥

जिन हिरण्याक्षजी को रसातल से पृथिवी के लाने के समय में विष्णु ने जैसे तैसे बड़े कष्ट से किसी तरह जीता पर जीतकर भी हिरण्याक्षजी के पराक्रम का स्मरण करने पर अपने लिये विजयी नहीं माना ॥ ६ ॥

तदनंतर पहिले उनके भ्राता हिरण्यकश्यपजी उनके वधको सुनकर भ्राता के मारने वाले विष्णु को मारने के लिये विष्णु के घर गये ॥ ७ ॥

विष्णु ने भी दूर से त्रिशूल हाथ में लिये बड़े विकराल काल सदृश हिरण्यकश्यपजी को आते देखकर बड़ा विचार किया। क्योंकि—विष्णुभी तो समय को जानने वाला है और बड़ा मायावी ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

पराग्दृशो बहिर्दृष्टेः ॥ ९ ॥

अतो हृदये स्थितं मां न द्रक्ष्यतीत्येवं निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मो देहो यस्य सः विविग्नमतिकम्पितं चेतो यस्य अनुकम्पितचित्त इति वास्तवोऽर्थः ॥ १० ॥

न ददर्श अन्तः प्रविष्टत्वात् ॥ ११ ॥

पुमान्यतः सकाशान्नावर्तते तद्धामैव नूनं गतो निर्लेपुकस्थादिति वास्तवोऽर्थः ॥ १२ ॥

कथं नामाऽसौ शूरशिरोमणिर्जीवलेन कातरवद्वैरमुपेक्षितवानित्याशङ्क्याऽऽह, वैरानुबन्ध एतावानामृत्योर्भवति देहिनां देहे

भवानाचरितान्धर्मानास्थितो गृहमेधिभिः ।
ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥
तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात् ।
पदानि त्रीणि दैत्येन्द्र ! सम्मितानि पदा मम ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्णदेहाभिमानवतां शूराणां तथाऽहम्मानेनोपबृंहितो मन्युश्च भवत्येव यतोऽज्ञानप्रभवः अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मान्द्यमेवेत्यर्थः ॥ १३ ॥

तदेवं पूर्वजान्स्तुत्वा तत्पितरं स्तौति-पितेति । द्विजवेषधारिणो महेरिणो देवा एते न तु द्विजा इति तद्विद्वानपि स याचितः सन् स्वीयमायुर्देवेभ्यो ददौ ॥ १४ ॥ १५ ॥

मम पदा सम्मितानीति त्रिविक्रमपदाभिप्रायेण न चानृतवादः तथाऽपि स्वपदत्वाऽनपगमात् ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्कृतां चिन्तामेव दर्शयति-यत्रयत्राहं गमिष्यामि तत्रतत्र सर्वत्राऽसौ हिरण्यकशिपुः प्राणभृतां मृत्युरिवानुगच्छतेऽतोऽधुना पराग्दृशः बहिर्दृश्यमानोऽहमस्य दैत्यस्य । हृदयमेव प्रवेक्ष्यामि ॥ ९ ॥

इतीत्थं स विष्णुर्विनिश्चित्य । हे असुरेन्द्र ! आधावतः तदर्थं तत्र सञ्चरतो रिपोर्हिरण्यकशिपोः शरीरं निर्विविशे प्रविवेश तत्रापि हृदये प्रविष्टं मां ज्ञास्यतीति एवं निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मदेहो यस्य तस्य घ्राणरन्ध्रेण विविग्नमतिकातरं चेतो यस्य तादृशो बभूव तत्रापि प्रविष्टं ज्ञास्यतीति विनिश्चित्य घ्राणरन्ध्रसञ्चारिश्वसता वायुना सह सञ्चलन्नविभक्तो बभूवेत्यर्थः ॥ १० ॥

ततः स दैत्यस्तन्निलयं शून्यं परितोऽन्विष्य तमपश्यमानः कुपितेमनाः जितं मयेति सिंहनादं कृतवान् ततः पुनः इमां पृथिवीं गां दिवं दिशः खमन्तरिक्षं विवरमतलादिकं समुद्रांश्च विचिन्वन्नपि दैत्यो विष्णुं न ददर्श ॥ ११ ॥

अपश्यन्नित्थमुवाच. तदेवाह-इदं कृत्स्नं जगत् मयान्विष्टमन्वेषितं मम भ्रातृहन्ता तु क्वापि न दृश्यते स तु यतः ये प्राप्य न पुनरावर्तन्ते तत्र नूनं गतः तद्याभिप्रायेणानु मृतोऽभवदिति भावः ॥ १२ ॥

अधुना न मद्विषयवैरानुबन्धस्तस्यास्तीत्याहेत्याह, वैरानुबन्ध इति । इह लोके देहिनां वैरानुबन्ध एतावानेव, कियान् ? यत आमृत्योः मरणपर्यन्तम् इयानेवायानेव, कुतः ? यतो मन्युः क्रोधोऽज्ञानप्रभवः देहविलक्षणात्मस्वरूपाज्ञानजः स देहात्माभिमानेषु उपबृंहितः प्रकटीकृतो भवति देहे विनष्टे सति मन्युरपि प्रशाम्यतीति मृत्युपर्यन्त एव वैरानुबन्धस्ततः स उपेक्षणीय इति भावः ॥ १३ ॥

एवं पितामहप्रपितामहयोस्तीर्थादाचार्येतत्त्वपराङ्मुखत्वादिगुणयोगमभिधायाथ पितुर्गुणानाह—पितेति । प्रह्लादस्य पुत्रस्तव पिता विरोचनस्तु तद्विद्वान् पितृपितामहयोर्वृत्तिं विद्वांस्तद्वत्स्वर्गीभ्रंशः किं च द्विजवत्स्वयं द्विजरूपधारिषु देवेषु वत्सलः अत एव द्विजलिङ्गेभ्यः द्विजवेषधारिभ्यो देवेभ्यो याचकेभ्यः स्वकीयमायुः समाहितो ददौ यद्वा द्विजरूपधारिणो देवा एते न तु द्विजा इति तद्विद्वानपि स याचितः सन् स्वीयमायुर्देवेभ्यो ददौ इत्यन्वयः ॥ १४ ॥

एवं पित्रादीन् स्तुत्वाथ तं प्रशंसति-भवानिति गृहमेधिभिर्ब्राह्मणैर्भृगुप्रभृतिभिस्तथा पूर्वजैर्विरोचनादिभिर्विपुलकीर्तिभिः शूरैश्चाचरितानऽनुष्ठितान् धर्मान् भवानास्थितः ॥ १५ ॥

तदेवं प्रतिश्रुताऽप्रत्याख्यानाय पित्रादीनस्मद् तं स्तुत्वाथ याचते, तस्मादिति । तस्मात्त्वत्तो दैत्येन्द्रकुलप्रसूतत्वादुक्तगुणाढ्यत्वाच्च त्वत्तोऽहम् ईषन्महीं पृथ्वीं वृणे याचे कियतीमित्यत्राह, पदानि त्रीणि त्रिपदपरिमितामित्यर्थः । कस्य त्रिपदपरिमिताम् ? इत्यत्राह-हे दैत्येन्द्र ! मम पदा पादेन सम्मितानि परिच्छिन्नानि इति, इदं त्रिविक्रमपदाभिप्रायेण नचायमनृतवादः, तत्रापि स्वपदत्वाऽनपायात् ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पराग्दृशः बाह्यदृष्टेः "पराञ्चि खानि व्यतृणत्" इति श्रुतेः । परं दुरमश्नातीति परादृग्दृश्यं वस्तु पश्यति इति पराग्दृक्तस्य दुरस्थवस्तुदर्शिन इत्यर्थ इति वा ॥ ९ ॥

तद्घ्राणरन्ध्रेण तस्य घ्राणद्वारेण ॥ १० ॥

निकेतं जगतामिति शेषः । तस्य हरेर्वैकुण्ठं परिमृश्यति वा ॥ ११ ॥

यतो गतस्ततः ॥ १२ ॥

क्रोधहेतुको वैराऽनुबन्ध इत्याह—अज्ञानेति ॥ १३ ॥

प्रह्लादस्य यः पुत्रः स तव पिता विरोचनः तान् द्विजरूपिणो देवान्विद्वान्द्विजानां लिङ्गं वेषो येषां ते तथा तेभ्यो देवेभ्यः स्वमायुरदादित्यन्वयः ॥ १४ ॥

किञ्च यद्ब्राह्मणैरनुष्ठितं तन्ममापीष्टमिति प्रकटनाय भवानप्याचरतीत्याह—भवानिति । आचरिता ऽनुष्ठिता अन्ये राजादिभिः ॥ १५ ॥

यस्मात्त्वं पुण्यवतां कुले जातो धर्मकर्ता तस्मात्, पदानीति बहुवचनोक्त्या भीतिर्माभूदित्याह—त्रीणीति । तेषां च महत्त्वेन भयशङ्का तदपस्यति तत्राह, सम्मितानीति ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्य निकेतं स्वर्गस्थं स्थानविशेषम् ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वं बालः हेतुगर्भमिदम् अत एव बालिशमतिः बालिशानामज्ञाना-मिव मतिः यस्य सः अत एव स्वार्थप्रति यथावदबुधः ॥ १८ ॥

अबुधत्वमेवाह—मामिति । लोकानामेकमद्वितीयम् ईश्वरं मां वचोभिर्सूक्तमस्मैराराध्य प्रसाद्य यो भवान्पदत्रयमत्यल्पस्वकीयपदत्रयपरिमितं भूभागं वृणीते द्वीपस्य जम्ब्वादेर्दाशुषं दातारं मामविद्वान् अतो बालिशमतिर्भवानित्यर्थः ॥ १९ ॥

मामुपव्रज्य मां याचित्वा पुमान्कश्चिद्भूयोऽन्यं याचितुं नार्हति तस्मात्, हे वटो ! कामं यथेच्छं वृत्तिकरीं विपुलां भूमिं मे मत्तः प्रतीच्छ प्रतिगृहाण ॥ २० ॥

पुनर्याचिताधिकानिःस्पृहत्वमेवाविष्कुर्वन्नाह वामनः—यावन्त इति सप्तभिः । हे नृप ! त्रिलोक्यां यावन्तो विषया देशास्ते सर्वेऽपि प्रतिगृह्यमाणाः सन्तोऽजितेन्द्रियात्पूरयितुं नालम् अर्थागतः कर्तुं न शक्नुवन्ति ॥ २१ ॥

यदुक्तं द्वीपदाशुषमविद्वानित्यत्राह, त्रिभिः क्रमैः पादैरसन्तुष्टः पुमान्नववर्षयुक्तेन जम्बुद्वीपेनापि न पूर्यते. अपूर्तौ हेतुमाह, सप्तद्वीपवरेच्छया सप्तानां द्वीपवराणामिच्छया हेतुना द्वीपेनापि न पूर्यते ॥ २२ ॥

तर्हि सप्तद्वीपां महीं दास्ये प्रतीच्छेत्यत्राह—सप्तेति । वैन्यः पृथुः गयश्चादिर्येषां ते नृपाः सप्तानां द्वीपानामधिपतयोऽप्यर्थैः कामैश्च तृष्णाया अन्तं न गताः अर्थकामतृष्णाया अन्तमवधिं न प्राप्ताः इति नोऽस्माभिः श्रुतम् उत्तरोत्तरमसन्तुष्टस्यार्थकामतृष्णाया अनुवृत्तेरिति भावः ॥ २३ ॥

एवमसन्तुष्टस्य सुखञ्च नास्तीति यदुक्तं तामसंतुष्टस्य सुखमस्तीत्याह, यदृच्छयेति । दैवाल्लब्धेन सन्तुष्टस्तु सुखं यथाऽऽस्ते अजितात्माऽजितेन्द्रिय अत एवोपसादितैः प्राप्तैस्त्रिभिर्लोकैरसन्तुष्टस्तु न सुखं वर्तते ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि महत्तरं कामं नवस्व दास्यामीति तत्राह—नेति, वदान्याद्दानशीलात् । राजप्रतिग्रहात्तव दोषो न स्यात्किम् ? नेत्याह,नेति । यावता प्रतिग्रहेण स्वप्रयोजनं सिद्ध्यति तावतः प्रतिग्रहात् आदानात् "अजीविष्यामिमामत्यदन्" इति श्रुतेः । विद्वान्प्रतिग्रहदोषदहनपटुज्ञानवान् ॥ १७ ॥

अवृद्धसम्मताः कुतोऽत्राह—त्वमिति । बुद्धिवैशद्ये यावत्त्वसप्रयोजकमत्राह—बालिशेति । अल्पमतिः स्वप्रयोजनं ज्ञातुं न शक्यत इत्यर्थः ॥ १८ ॥

कथमेतदवगतमत्राह—मां वचोभिरिति । अबुद्धिमान् दाशुषं दानशीलं बुद्धिमानिति व्यतिरेको वा ॥ १९ ॥

कुतो मामपहससीति तत्राह—न पुमानिति ॥ २० ॥

यदुक्तं वृत्तिकरीं भूमिं प्रतिग्रहाणेति तदजितेन्द्रियं प्रति व्यर्थमित्याशयेनाह—श्रीभगवानिति । अजितेन्द्रियमलम्बुद्धिरहितं पुरुषमितिशेषः ॥ २१ ॥

एतदेवोपपादयति—त्रिभिरिति । न नदी द्वीपोऽत्र कथ्यत इत्याह,नवेति. कुतोऽत्राह, सप्तेति ॥ २२ ॥

नैतावतापि पूर्तिरित्याह—सप्तेति । अन्तमवसानम् अर्थैः कामैः अर्थसम्पादितकामैर्वा ॥ २३ ॥

सन्तोषशब्दाभिप्रायं यदलब्धबुद्धिरेव सुखसाधनमित्याह, यदृच्छयेति । व्यतिरेकमाह, नासन्तुष्टइति. उपसादितैरवाप्तैः सुखं न वर्तत इति पूर्वेणान्वयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहो ब्राह्मणदायाद ! इत्यादिकं तस्येदृक् वक्तुर्बन्धनं लोकस्य व्यवहारोऽपि नासमञ्जसमिति बोधनार्थं परमार्थतस्तु कृपैव कृतेति तत्रतत्र स्फुटमेवेति भावः ॥ १८—१९ ॥

कामं यथेष्टमिति यावत्या वृत्तिः सिद्ध्यति तावतीमित्यर्थः ॥ २०—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यावता अर्थः प्रयोजनं तावत एव प्रतिग्रहो यस्य सः तावत एवेति पदद्वयस्य वृत्तावन्तर्भावः । पक्षे, यावन्तस्तावन्तोऽर्थास्तेषां सर्वेषामेव प्रतिग्रहो यस्य स मल्लक्षणोऽयं विद्वान् न एनः दुष्कृतं प्राप्नोति ॥ १७ ॥

ब्राह्मणदायाद हे विप्रसूनो ! ब्राह्मणत्वाद्ब्राह्मणोऽभ्यो दायं आ सम्यक् तथा ददातीतिवक्तव्यर्थः सरस्वती प्रयुक्तः किन्तु त्वं बालः यथान्यो बालिशमतिस्तथैव स्वार्थप्रति त्वम् अबुधः वस्तुतो महाबुधो भवन्नपीति भावः । तत्त्वार्थस्तु त्वं भक्तवत्सलत्वाद्भक्तार्थमेव बुध्यसे स्वार्थं प्रतितु न बुध्यसे इत्यबुधः परिपूर्णस्य तव भक्तप्रयोजनव्यतिरेकेण स्वप्रयोजनाभावादिति ॥ १८ ॥

यो भवानिति शेषः । बुद्धिमान् सन्नपि द्वीपदायिनम् ॥ १९॥२०॥

सन्तुष्टं मामेतावतैव दानेन पूरय नह्यसन्तुष्टं त्वमपि पूरयितुं समर्थोऽसीत्याह—यावन्त इति ॥ २१ ॥

नववर्षसमेतेनापि द्वीपेन सप्तानां द्वीपवराणाम् इच्छया ॥ २२ ॥ २३ ॥

अजितात्मा अजितेन्द्रियः उपसादितैः प्राप्तैः ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यावदर्थं यावत्प्रयोजनं प्रतिग्रहो यस्य स एनः पापं न प्राप्नोति ॥ १७ ॥

ईश्वरस्याप्यविस्यादिमनोरथपूर्त्यर्थं याञ्चाकारणं याञ्चाप्रकारं चोक्त्वा बलेर्बन्धनप्रश्नस्योत्तरत्वेन बलेर्गुर्वतिरेकेणाधिक्षेपप्रकारं गुर्वाज्ञातिवर्तित्वं धीरमानित्वं चाह—अहो ब्राह्मणदायाद ! इत्यादिना, शयीत निहतो मयेत्यन्तेन ग्रन्थेन । वाच एव केवलं वृद्धानां सम्मताः त्वन्तु बालः बालिशमतिश्च बालिशानामज्ञानामिव मतिर्यस्य अत एव स्वार्थप्रति यथावदबुधः ॥ १८ ॥

द्वीपदाशुषं द्वीपस्य जम्ब्वादेर्दायिनम् ॥ १९ ॥

पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः ।
यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५ ॥
यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ।
तत्प्रशाम्यत्यसन्तोषादम्भसेवाऽऽशुशुक्षणिः ॥ २६ ॥
तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् ।
एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥

श्रीशुक उवाच ।

इत्युक्तः स हसन्नाह वाञ्छातः प्रतिगृह्यताम् ।
वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥
विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ।
जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदाम्वरः ॥ २९ ॥

शुक्राचार्य उवाच ।

एष वैरोचने ! साक्षाद्भगवान्विष्णुरव्ययः ।
कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतोक्तं किञ्चित् प्रसारितेन पादेन परिमितानि त्रीणि पदानि महीं याचे बलिरप्याह—कामं यथेष्टं प्रतीच्छ ॥२०॥२१॥

द्वीपेनापि न पूर्यते पूरणार्थो न भवति तत्र हेतुः सप्तद्वीपवरेच्छयेति ॥ २२ ॥ २३ ॥

उपसादितैरुपलब्धैः ॥ २४ ॥ २५ ॥

भाषा टीका ।

हे राजन् ! [illegible] वदान्यहो और जगत् के एक ईश्वरहो तो भी हम आपसे और कुछ नहीं चाहते हैं क्योंकि ? विद्वान् पुरुष जितना प्रयोजन होवे उतने मात्रके परिग्रह करने में अपराधको नहीं प्राप्त होता है ॥ १७ ॥

बलिरुवाच ।

राजा बलि बोले, कि—अहो ब्राह्मणपुत्र ! तुमारीबातें तो वृद्ध सम्मत हैं परन्तु तुमतो बालक हो । जैसे कोई मूर्ख बुद्धि अपने स्वार्थ में न सुझता हो ऐसे ही तुमभी नहीं समुझते हो ॥ १८ ॥

देखो मैं सबलोकों का एक ईश्वर और मेरे लिये तुमने बातों से प्रसन्न करके और ऐसे बुद्धिमान् होकरभी द्वीपपर्यन्तदेनेयोग्य ऐसे हमसे तीन पग पृथिवी मांगते हो ॥ १९ ॥

पुरुष मेरे समीप आकर फिर किसीसे याचना करने के योग्य नहीं रहता है तस्मात् हे बेटा ! यथेष्ट जीविका के लायक भूमि मांगलो ॥ २० ॥

श्रीभगवान् उवाच ।

श्रीभगवान् बोले, कि,—हे नृप ! त्रिलोकी में जितने प्रिय विषय हैं । वे सब भी अजितेन्द्रिय असन्तोषी को कभी पूर्ण नहीं कर सक्ते हैं ॥ २१ ॥

यदि तीन पगों से सन्तोष न भया तो नव खण्ड समेत द्वीप से भी पूरा न पड़ेगा, फिर उसके ऊपर भी सप्त द्वीप की चाहना बढ़ेगी ॥ २२ ॥

और हमने यह भी सुना है कि– सप्त द्वीप के अधिपति वैन्य गय आदिक नृप लोग, अर्थ और कामों से तृष्णा के अन्त को नहीं पहुचे हैं ॥ २३ ॥

यदृच्छा से प्राप्त वस्तु में सन्तोष करने वाला सुख से रहता है और अजितेन्द्रिय तथा असन्तुष्ट पुरुष तीनों लोक के प्राप्त होनेपर भी सुख को नहीं प्राप्त होता है ॥२४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आशुशुक्षणिरग्निः ॥ २६ ॥

सिद्धोऽहं कृतार्थः एतावतैव सर्वस्वापहारासिद्धेरिति गूढोऽभिप्रायः तदेवाऽऽह–वित्तं हि यावत्प्रयोजनमेव सुखम् अधिकस्य क्लेशावहत्वादित्यर्थः ॥ २७—३० ॥

प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ।
न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥
एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम् ।
दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनयोऽन्यायः ॥ ३१ ॥
अन्यायमेवाऽह, एष इति ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सन्तोषासन्तोषौ न केवलं सुखदुःखमात्रहेतू अपितु संसृतिमुक्त्योरपीत्याह—पुंस इति । अर्थकामयोर्विषययोर्योऽसन्तोषः स पुंसः संसारस्य हेतुः यस्य दैवाल्लब्धेन सन्तोषः स मुक्तये स्मृतः हेतुः इत्यर्थः ॥ २५ ॥

किञ्च दैवाल्लब्धेन तुष्टस्य विप्रस्य तेजो वर्द्धते असन्तोषात्तु तत्तेजः प्रशाम्यति नश्यति यथा जलेन आशुशुक्षणिरग्निः तद्वत् ॥ २६ ॥

तस्मात्सन्तोषस्यैव श्रेयस्करत्वात् । हे नृपोत्तम ! त्रीण्येव पदानि त्वां वृणे याचे एतावतैवाहं सिद्धः कृतार्थः । वित्तं हि यावत्प्रयोजनमेव सुखदम् इतिशेषः । अधिकं तु दुःखदमिति भावः ॥ २७ ॥

इति इत्थमुक्तो बलिः प्रहसंस्तर्हि प्रतिगृह्यतामित्याह—एवमुक्त्वा वामनाय भूमिं दातुं जलपात्रं गृहीतवान् ॥ २८ ॥

तदा वामनाय पृथिवीं दास्यन्तं दातुमुद्युक्तमसुरेश्वरं शिष्यं बलिं विष्णोः चिकीर्षितं कर्तुमिष्टं जानन् उशनाः शुक्रः विदां कालत्रयविदां श्रेष्ठ उवाच ॥ २९ ॥

तदेवाह—वावदूकाय समादिश, एष इति । हे वैरोचने एष वामनः साक्षाद्भगवानव्ययो विष्णुरेव देवानां कार्यसाधकः कार्यं साधितुमित्यर्थः । कश्यपात्प्रजापतेरदितेरवतीर्णः पदत्रयव्याजेन लोकत्रयं प्रतिगृह्य देवेभ्यो दातुमवतीर्णः इति भावः ॥ ३० ॥

एवंविधाय तस्मै अनर्थमजानता त्वया यत्प्रतिश्रुतं तत्साधु न मन्ये, कुतः ? यतो दैत्यानां महाननयोऽन्याय उपगतः उपस्थितः ॥ ३१ ॥

अन्यायमेवाह—एष इति । एष मायामाणवक आत्मसङ्कल्पोपात्तमाणवकसंनिवेशो हरिर्भवतस्तव स्थानादिकं विपुलं यशश्चाच्छिद्याऽपनीय इन्द्राय दास्यति ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि सन्तोष एवापायः सुखहेतुत्वादन्यस्यानर्थहेतुत्वाच्चेत्याह-पुंस इति । अर्थकामयोरसन्तोषः ॥ २५ ॥

तेजो बलादिकम्—

"तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि ।
नवनीतेऽमले धर्मे दाने हस्तिमदेऽपि च" ॥

इति. तत्तेजः आशुशुक्षणिः अग्निः "आशुशुक्षणिरर्कोऽग्नौ पवने स्यादश्रुतावपि" इति ॥ २६ ॥

यतः सन्तुष्टोऽहं तस्माद्यावत्प्रयोजनं वित्तं स्वीकुर्यामिति शेषः ॥ २७—२८ ॥

उशनता विदुषा गुरुणा शिष्याय हितोपदेशः कर्तव्य इति शिक्षयन्नाह, विष्णुर इति ॥ २९—३० ॥

यन्मनाघमनर्थमजानता त्वया एतस्मै वामनाय प्रतिज्ञातं तत्साधु न मन्य इत्यन्वयः । कुतोऽत्राह—दैत्यानामिति । अनयो-दुःखहेतुरनीतिः ॥ ३१ ॥

तदुपपादयति-एष इति । विश्वकायः ॥ ३२ ॥ ३३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आशुशुक्षणिः अग्निः ॥ २६ ॥

सिद्धोऽहं कृतार्थ इत्येतावतैव सर्वस्वापहारसिद्धेरिति गूढोऽभिप्रायः यावत् यत् प्रमाणकं वित्तं प्रयोजनकं भवेत्तावदेव ग्राह्यमित्यर्थः ॥ २७ ॥ २८ ॥

विदांवरः इति वामनमपरोक्षं प्राहेत्यर्थः ॥ २९ ॥ ३० ॥

उपगतः प्राप्तः ॥ ३१ ॥

हरिः सर्वस्वं हरिष्यतीत्यर्थः । मनःपर्यन्तश्च इति वास्तवम् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अम्भसा जलेनाऽऽशुशुक्षणिरग्निरिव ॥ २६ ॥

त्रीणि पदान्येव वृणे याचे एतावतैव अहं सिद्धः कृतार्थः वित्तं यावत्प्रयोजनमेव सुखदमिति शेषः ॥ २७—३० ॥

अनयोऽन्याय उपगतः प्राप्तः ॥ ३१ ॥

मायया स्वसंकल्पेन सङ्कल्पेन माणवको बालः ॥ ३२ ॥

---

### भाषा टीका ।

यह जो अर्थ और कामों के विषय में पुरुष का जो सन्तोष नहीं होता है यही संसार का हेतु है, और यदृच्छा से प्राप्त वस्तु से सन्तोष ही मुक्ति के लिये समर्थ किया है ॥ २५ ॥

त्रिभिः क्रमैरिमाँल्लोकान्विश्वकायः क्रमिष्यति ।
सर्वस्वं विष्णवे दत्त्वा मूढ ! वर्तिष्यसे कथम् ? ॥ ३३ ॥
क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ।
खं च कायेन महता तार्तीयस्य कुतो गतिः ? ॥ ३४ ॥
निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ।
प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५ ॥
न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ।
दानं यज्ञस्तपः कर्म्म लोके वृत्तिमतो यतः ॥ ३६ ॥
धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥ ३७ ॥
अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम ! ।
सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥
सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते ।
वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥
तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् ।
एवं नष्टाऽनृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥

भाषा टीका ।

और यदृच्छा लाभ से सन्तुष्ट ब्राह्मण का तेज वृद्धि को प्राप्त होता है फिर वही विप्रतेज असन्तोष से शान्त होजाता है जैसे, कि—जल से अग्नि ॥ २६ ॥

तो फिर हम बडे उदार के समीप पहुंचकर अपना स्वभाव क्यों बिगाडें ? तस्मात् आप बडे दानी लोगों में श्रेष्ठ हैं तो भी हम आप से तीन ही पग पृथिवी मांगते हैं बस इतने ही से हम कृतार्थ हैं क्योंकि ? जितना प्रयोजन पडे उतना ही वित्त चाहिये ॥ २७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेव जी बोले, कि—जब भगवान् ने ऐसा कहा तब बलिराजा बोले, कि—जितनी इच्छा हो उतनाही ग्रहण करो इतना कहकर बलिने वामन जी को भूमि देने के लिये जल का पात्र ग्रहण किया ॥ २८ ॥

बस जब राजा बलि विष्णु के लिये पृथिवी देने को उद्यत हुए, तब दीर्घ दर्शी शुक्राचार्य जी विष्णु के चिकीर्षित [ इच्छित ] कर्म को जानकर अपने शिष्य असुरेश्वर [ बलि ] से कहने लगे ॥ २९ ॥

शुक्राचार्य उवाच ॥

शुक्राचारीजी बोले, कि हे वैरोचने ! हे राजन् ! यह साक्षात् भगवान् विष्णु हैं। और देवों के कार्य साधने के लिये कश्यप से अदिति में उत्पन्न हुए हैं ॥ ३० ॥

और जो तुमने अनर्थ नहीं जानकर इन को पृथिवी देने की प्रतिज्ञा करी है। उसको हम अच्छा नहीं समझते हैं, बडी दैत्यों को बडा अन्याय प्राप्त हुआ ॥ ३१ ॥

यह तुमारे स्थान, ऐश्वर्य, श्री, तेज, यश, श्रुत, इन सबों को छुडाकर इन्द्र को देवेगा और इस का नाम हरि है अर्थात् यह सब हरण करने वाला है, पर कपट से ब्रह्मचारी बना है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राऽह–त्रिभिरिति, क्रमतामिति चेत्तत्राऽह, सर्वस्वमिति ॥ ३३ ॥

तथाऽपि प्रतिश्रुतं सम्पादनीयमेवेति चेत्तत्राह–क्रमत इति द्वाभ्याम्। एकेन पदा पादन्यासेन भूमिं क्रममाणस्येत्यर्थः। तार्तीयस्य तृतीयपादन्यासस्य ॥ ३४—३५ ॥

तथाऽपि सर्वस्वदानात्कीर्तिस्तावद्भविष्यतीति चेत्तत्राऽह, न तद्दानमिति। तपश्चिर्त्तेकामयम कर्म पूर्त्तम् ॥ ३६—३७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, तर्हि प्रतिश्रुत्य नेति कथमनृतं वाच्यम् ? तत्राऽह—अत्रापीति सार्धैः षड्भिः । अत्रापि सत्यानृतव्यवस्थायाम् बह्वृचश्रुत्या हि प्रथममोमिति सत्यं नेत्यनृतमित्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितमनृतं च निषिद्धम् अनन्तरञ्च "पराग्वा एतद्रिक्तमक्षरम्" इत्यादिना सत्ये दोषाननृते च गुणाननुक्त्वा "तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिष्वनृतमप्यनुज्ञातम् तमिमं श्रुत्यर्थं दर्शयन्नाह—ओमित्यङ्गीकारेण यत्प्रोक्तं तत्सत्यम् । नेति यदाह तदेवानृतम् ॥ ३८ ॥

तत्तु सत्यमीषदनृतं विना न सिध्यतीत्याशयेनाऽह, सत्यं पुष्पफलं विद्याज्जानीयात् आत्मवृक्षस्य देहरूपस्य वृक्षस्य कुतः गीयते श्रुत्योच्यते इत्यर्थः । पाठान्तरं तु सुगमम् । यद्यपि श्रुत्या "वाचः सत्यं पुष्पफलं च" इत्युक्तं तथापि वाचो देहनिर्वाहाधीनत्वादात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तम् भवतु पुष्पफलस्थानीयं सत्यं ततः किमत आह—वृक्षे देहेऽजीवति तत्पुष्पफलं न स्यात् सा न स्यादितिपाठे श्रुत्युक्ताया वाचः परामर्शः देहश्चानृतेन रक्षणीय इत्याह, अनृतं त्वात्मनो देहस्य मूलम् ॥ ३९ ॥

एतदेव दृष्टान्तेन स्पष्टयति, तद्यथा वृक्ष उत्पाटितमूलः शुष्यत्यचिरादेवोद्वर्तते पतति च. एवं नष्टमनृतं यस्य सः आत्मा देहः शुष्येत यद्यपि च श्रुत्या 'एवमेवानृतं वदन्नात्मानमाविर्मूलं करोति' इत्येवं निन्दयानृतं निषिद्धं तथाप्युपसंहारानुसारेण तत्केवलानृतविषयमित्यभिप्रत्यैवं व्याख्यातम् "दयेतत्त्वेनेन" इति च तथैवोक्तेः तथा च श्रुतिः "ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं सहेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेनेन" इति एतेनानेन त्वनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदिति श्रुत्यर्थः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह—त्रिभिरिति । विश्वकायो विश्वरूपोभूत्वेत्यर्थः । त्रिभिः पादविन्यासैरिमांस्त्रीन् लोकान् क्रमिष्यते परिच्छिद्य गृहीष्यतीत्यर्थः । क्रमतामितिचेत्तत्राह—सर्वस्वमिति । हे मूढ ! सर्वस्वं विष्णवे वामनरूपायास्मै दत्वा कथं वर्तिष्यसे ? तव स्थितिरपि कुलेनेति भावः ॥ ३३ ॥

तथापि प्रतिश्रुतं संपादनीयमेवेत्यत्राह—क्रमत इति द्वाभ्याम् । एकेन पदा पादविन्यासेन गां भूमिं द्वितीयेन दिवं हे विभो ! महता कायेन खमन्तरिक्षञ्च क्रमतः क्रममाणस्य भगवतस्तृतीयपादविन्यासस्य का गतिः ? तृतीयपादस्यास्पदाभावात्तथापि प्रतिश्रुतं न संपादितमेव स्यादित्यर्थः ॥ ३४ ॥

अतएव प्रतिश्रुतमप्रदातुः तव नरके निष्ठामवस्थितिं मन्ये, कुतः ? यो भवान् प्रतिश्रुतस्य प्रतिश्रुतं पूरयितुमसमर्थः ॥ ३५ ॥

तथापि सर्वस्वदानात्कीर्तिस्तावद्भविष्यतीत्यत्राह—नेति । येन दानेन वृत्तिर्जीविका विपद्यते विप्लुता भवति तद्दानं न प्रशंसन्ति आर्याः, कुतः ? यतो लोके वृत्तिमतः जीविकावत एव पुंसः सम्बन्धीन्येव दानादीनि धर्मादिहेतवः जीविकाविपत्तिकरदानादिभिर्धर्मोदयः प्रत्युत नश्यंतीत्यर्थः ॥ ३६ ॥

तत्र स्वजनाय स्वस्वजनतुष्ट्यै अतो वित्तानुवित्तं पञ्चधा धर्मादिपञ्चकार्यतया विभजन्नेवेहामुत्र च लोके मोदते ॥ ३७ ॥

ननु, तर्हि प्रतिश्रुत्य नेति कथमनृतम् वाच्यम् ? तत्राह—सार्द्धैः षड्भिः । अत्रापि सत्यानृतव्यवस्थायां बह्वृचैर्गीतं वस्तत्कथयतो मत्तः शृणु बह्वृचश्रुत्या हि प्रथमम् "ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं सहीश्वरो यशस्वी कल्याणकीर्तिर्भवतोरीश्वरः" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितम् अनृतञ्च निषिद्धम्. अनन्तरं "पराग्वा एतद्रिक्तमक्षरम्" इत्यादिना सत्ये दोषाननृते च गुणाननुक्त्वा "तस्मात्काल एव दद्यात्कालेन दद्यात्सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिष्वनृतमप्यनुज्ञातम्. तमिमं श्रुत्यर्थं दर्शयन्नाह—सत्यमिति । ओमित्यङ्गीकारेण यत्प्रोक्तं तत्सत्यं नेति यदाह तदेवानृतम् ॥ ३८ ॥

तत्सत्यमीषदनृतं विना न सिद्ध्यतीत्याशयेनाह—सत्यं पुष्पफलं विद्याज्जानीयात् आत्मवृक्षस्य देहरूपस्य प्रवृक्षस्य कुतः गीयते श्रुत्योच्यते इत्यर्थः । जीवत इति पाठान्तरं तु सुगमं यद्यपि श्रुत्या "वाचः सत्यं पुष्पंफलञ्च" इत्युक्तम् तथापि वाचो देहनिर्वाहाधीनत्वादात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तं भवति पुष्पफलस्थानीयं सत्यं, ततः किमत आह—वृक्षे देहे अजीवति तत्पुष्पफलं न स्यात् सानस्यादिति पाठे श्रुत्युक्ताया वाचः परामर्शः देहश्चानृतेन रक्षणीय इत्याह, अनृतं चात्मनो देहस्य मूलं तथा च श्रुतिः "दयेतत्वेनेन" इति एतेन त्वनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदित्यर्थः ॥ ३९ ॥

एतदेव दृष्टान्ततः स्फुटयति—तद्यथा वृक्ष उत्खातमूलः शुष्यत्यचिरादेव उद्वर्तते पतति च एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत्सर्वस्वदाने देहः शुष्येदिति भावः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिपदक्रमणप्रकारं स्पष्टयति—क्रमत इति । तार्तीयस्य तृतीयपदस्य ॥ ३४ ॥

प्रतिश्रुतमदातुः निष्ठान्तं प्रतिश्रुतदानपर्यन्तं नरकं दुःखं मन्ये नरकमेवोपपादयति—प्रतिश्रुतस्येति ॥ ३५ ॥

तस्य तव दानं कुतो न प्रशंसन्तीति तत्राह—येनेति । वृत्तिर्जीवनं विपद्यते नश्यतीति येन तस्माद्दिति शेषः । "अकस्माद्वितस्य चाकीर्तिमरणाद्वातिरिच्यते" इति स्मृतेर्वृत्तिर्जीवनसाधनं वा नष्टं स्यात् तस्याः किञ्चिद्धनम् ? अत्राह, दानमिति ॥ ३६ ॥

अर्थाय कोशवृद्ध्यर्थे क्रियादिव्यवहाराय वा ॥ ३७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमन्यस्यदुक्तेः प्रमाणमित्याशङ्क्य बहृचां वाक्यं प्रमाणमित्याह—अत्रापीति । बहृचैः ऋग्वेदिभिः किन्तद्गीतमित्यर्थतः प्रतीकयति—सत्यमिति । ओमिति यत्प्रोक्तम् अर्थिनं प्रति तत्सत्यं तथेति संवेदनीयमित्यर्थः । नेति यद्वदाह अर्थिनं प्रति तदनृतं हिशब्द उभयोर्विरोधमाह, ॥ ३८ ॥

कुतोऽत्राह—सत्यमिति । पुष्पमेव फलं यस्य तत्पुष्पफलं जीवतः प्राणधारकस्यात्माख्यवृक्षस्य सत्यं पुष्पफलं विन्द्यात् पुष्पञ्च फलञ्च पुष्पफलमिति वा यथाऽशुष्कस्य वृक्षस्य पुष्पफले स्यातां तथात्मनः सत्यलक्षणे पुष्पफले विन्द्यादित्यर्थः तदुक्तं "पुष्पं हि फलं वाचः सत्यं वदति" इति आत्मवृक्षेऽजीवति शुष्कलक्षणमरणे सति तत्सत्यलक्षणं पुष्पफलं न स्यात् आत्मनः आत्मवृक्षस्य अनृतं सर्वस्वादानलक्षणं मूलं स्थिति कारणं "अथैतन्मूलं वाचो यदनृतम्" इति च ॥ ३९ ॥

विपक्षे बाधकमाह—तद्यथेति । तद्यथा तथोदाहरिष्यामः उन्मूलः उत्खातशिफः वृक्षः शुष्यति अचिरादुद्वर्तते नश्यति च एवं नष्टानृतः नष्टमूलः सद्यस्तत्क्षणमेव शुष्येत् शुष्यति नश्यति तद्यथावृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति "स उद्वर्तते तस्मादनृतं न वदेत्" इति च ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह—त्रिभिरिति । क्रमैः पादविन्यासैः क्रमतामिति चेत्तत्राह सर्वस्वमिति ॥ ३३ ॥

प्रतिश्रुतं कथं न सम्पादनीयमिति चेत्तत्र सर्वस्वे दत्तेऽपि तवैव प्रतिश्रुतं न सम्पत्स्यते इत्याह द्वाभ्यां, क्रमतः क्रममाणस्य आर्षीयस्य तृतीयस्य बद्धा तार्तीयस्य तृतीयसम्बन्धिनः तृतीय पदक्रम्यस्य वस्तुनः कुतो हेतोर्गतिः प्राप्तिस्ते भविष्यतीत्यर्थः ॥ ३४ ॥

निष्ठां नितरां स्थितिं प्रतिपादयितुं प्रतिपादने इत्यर्थः । तेन सर्वस्वदानेऽपि नरकदुःखावश्यकत्वश्रवणात् सर्वस्वदानमेव भद्रम् ऐहिकभोगासक्त्यर्थमिति भावः ॥ ३५ ॥

तदपि यथाशक्ति प्रतिश्रुतं कथं न दास्यामीति चेत्तत्राह नेति तपश्चिन्तैकाग्र्यम् ॥ ३६ ॥

दानादावपि शास्त्रीया व्यवस्था वर्तते इत्याह—धर्मायेति ॥३७॥

ननु, देयद्रव्यसत्वेऽप्यन्मे नास्तीत्यनृतवचनं विना मम कथमदानमुपपद्यतां तत्राह—सामः षड्भिः । अत्रापि सत्यानृतव्यवस्थायां ओमित्यङ्गीकारेण यत् प्रोक्तं तत्सत्यं नेति यदाह तदेवानृतम् "ओमिति सत्यं नेत्यनृतम्" इति श्रुतेः ॥ ३८ ॥

तत्तस्मादीषदनृतं विना न सिद्ध्यतीत्याशयेनाह—सत्यमिति । आत्मवृक्षस्य देहरूपवृक्षस्य सत्यं पुष्पफलं विद्यात् गीयते इति श्रुतिकर्तृक गानमित्यर्थः । तत्पुष्पफलं वृक्षेऽजीवति न स्यात्तस्माद्वृक्षो येन जीवति तत्र प्रयतनीयमिति भावः तदेवाह—अनृतं मूलं तेन सर्वथैवानृताभावे देहो न जीवतीत्यर्थः ॥ ३९ ॥

तत्तस्माद्यथा वृक्ष उत्पाटितमूलः शुष्यति अचिरादुद्वर्तते पतनादूर्ध्वगच्छति नष्टो भवति च एवमेव नष्टानृतः सर्वथैव अनृतरहितो देहः शुष्येदित्यर्थः । तथा च श्रुतिः "ओमिति सत्यं नेत्यनृतं तदेतत् पुष्पं फलं वाचो यत्सत्यं सहेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तते एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेतेन" इति । वाच इति वागुपलक्षितस्य देहस्येत्यर्थः । अनृतं वदन्निति प्रकटीकृत्येति शेषः मूलं यथा आविष्कृतमेव शुष्यति नतु गुप्तं तस्मादिति तस्माद्धेतोरपि अनृतं न वदेत् किन्तु दयेत त्वेतेन अनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदिति श्रुत्यर्थः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विश्वकायो विश्वरूपः ॥ ३३ ॥

तार्तीयस्य तृतीयपादन्यासस्य कुतो गतिः सिद्धिः ॥ ३४-३५ ॥

येन वृत्तिर्जीविका विपद्यते उच्छिद्यते तद्दानं न प्रशंसन्ति यतः वृत्तिमत एव दानं तप आदिकं च लोके प्रशस्यते इति शेषः ॥ ३६—३७ ॥

अत्रापि इहामुत्र प्रमोदार्थंवित्तविभागे बहृचैर्गीतं वर्णितं यत्सत्यानृतादिकं तन्मे मत्तः शृणु बहृचश्रुत्या प्रथमं "ओमिति सत्यं नेत्यनृतम्" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितमनृतं च निषिद्धम् अनन्तरं च पराग्वा एतद्रिक्तमक्षरमित्यादिना सत्ये दोषान् अनृते गुणानुक्त्वा "तस्मात्काल एव दद्यात् काले न दद्यात् तत्सत्यानृते मिथुनीकरोति" इत्युपसंहारेण वृत्तिसङ्कटादिषु अनृतमप्यनुज्ञातं तमिमं श्रुत्यर्थं दर्शयन्नाह—सत्यमिति । ओमित्यङ्गीकारेण यत्प्रोक्तं तत् सत्यं नेति यदाह तदेवानृतम् ओमिति सत्यं नेत्यनृतमिति श्रुतेः ॥ ३८ ॥

तत्सत्यं किञ्चिदनृतं विना न सिद्ध्यतीत्याशयेनाह—सत्यमिति आत्मवृक्षस्य देहरूपद्रुमस्य सत्यपुष्पफलं विद्यात् यतः गीयते तदेतत् पुष्पफलं वाचो यत्सत्यमिति श्रुत्योच्यते वाचः वाग्द्वारा शरीरस्यापीति मूलग्रन्थानुरूपा श्रुतिव्याख्या वृक्षे देहे अजीवति तत्पुष्पं फलं न स्यात् आत्मनः सपुष्पफलदेहद्रुमस्य अनृतं मूलम् तथा च श्रुतिः अथैतन्मूलं वाचो यदनृतमिति वाचः वागुपलक्षितस्य देहस्येत्यर्थः । ईषदनृतेन देहरक्षां कुर्यादिति भावः । तथा च श्रुतिः "दयेत त्वेतेन" इति एतेन त्वनृतेन दयेत सङ्कटेष्वात्मानं रक्षेदित्यर्थः ॥ ३९ ॥

एतदेव दृष्टान्तेन स्पष्टयति तस्मात् यथा वृक्ष उन्मूलः उत्पाटितमूलः शुष्यति अचिरात् शीघ्रमेवोद्वर्तते पततिच एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत् तथा च श्रुतिस्तद्यथा "वृक्ष आविर्मूलः शुष्यत्युद्वर्तते एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति" इति यद्यपि च श्रुत्या एवमेवानृतं वदन् आविर्मूलमात्मानं करो-

पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति ।
(१)यत्किञ्चिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ।
भिक्षवे सर्वमोङ्कुर्वन्नालं कामेन चात्मने ॥ ४१ ॥
अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ।
सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः ॥ ४२ ॥
स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नाऽनृतं स्याज्जुगुप्सितम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे वामनप्रादुर्भावे
एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नीत्येवं मिन्दयाऽनृतं निषिद्धं तथापि तत्केवलानृतविषयमित्यभिप्रेत्येवं व्याख्यातम् "दतेत स्वेनेन" इत्युक्तेः ॥ ४० ॥

भाषा टीका ।

और यह विश्वरूप को धारण कर तीनों लोकों को तीन पगों में नापलेगा तब हे मूढ ! सर्वस्व विष्णु को देकर तू कहां रहेगा ? ॥ ३३ ॥

और विभु व्यापक विष्णु, एक पग से पृथिवी को नांप लेगा दूसरे पगसे स्वर्ग को, और आकाश को बडे शरीर से नापलेगा, तब तीसरे पग पृथिवी देने की कहां से गति होगी ॥ ३४ ॥

फिर कहे हुए को जब तू न दे सकेगा तब तेरी नरक में स्थिति होगी । क्योंकि ? प्रतिज्ञा करी हुई वस्तु को तू संपादन नहीं करसकेगा ॥ ३५ ॥

जिससे अपनी जीविका नष्ट हो जावे, लोग उस दान की प्रशंसा नहीं कियाकरते हैं, क्योंकि ? लोक में वृत्ति वाले ही के दान, यज्ञ, तप, और सब कर्म है ॥ ३६ ॥

पुरुष धनके पांच विभाग करने से सुखी होता है, जैसे कि एक भाग धर्म में लगावै, दूसरा भाग यश में लगावे. अर्थात् कुछ कीर्ति करले, तीसरा भाग अर्थ में लगावै, चौथे भाग से काम भोगे, और पांचवा भाग स्वजनों में लगावे, इस प्रकार पांच विभाग करै ॥ ३७ ॥

हे असुर सत्तम ! इसमें भी बह्वृच लोगों ने जो गाथा है सो तुम हमसे सुनों ॥ बह्वृचोंने कहा है, कि—"ओम" अर्थात् मान लेने को सत्य कहते हैं । और "न" अर्थात् नहीं मानने को अनृत कहते हैं ॥ ३८ ॥

जहां आत्मारूप वृक्ष का सत्य तो पुष्प और फल जानों—और अनृत को मूल जानों, जब वृक्ष नहीं रहेगा तो पुष्प फल कहां से होंगे ॥ ३९ ॥

तस्मात् जैसे वृक्ष उन्मूल होकर अर्थात् मूल नष्ट होने पर थोडे काल में सूखकर उखड जाता है । इसी प्रकार आत्मा के अनृत ( झूंठ ) नष्ट होने पर आत्मा भी शुष्क होजाता है, इसमें संशय नहीं है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वथा सत्यवचनेन देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषाननृतस्य गुणानाह—परागिति द्वाभ्याम् । यदोमित्यक्षरं तत्पराक् दूरेऽर्थं गृहीत्वाऽञ्चतीति पराक् रिक्तमिति श्रुतिपदस्य व्याख्यानमपूर्णं वै इति तत्तस्मादर्थिने यत्किञ्चिदोमिति दास्यामीति ब्रूयात्तेन रिच्येत न्यूनो भवेत् । किञ्च भिक्षवे सर्वमोङ्कुर्वन्दास्यामीत्यङ्गीकुर्वन्नात्मने कामेन नालं पर्याप्तो न भवति तस्य भोगो न सिध्यतीत्यर्थः । तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं सकामेभ्यो नालं स्यात्" इति ॥ ४१ ॥

नेति यदनृतं वच एतत्पूर्णमर्थव्ययाभावात् अभ्यात्मञ्चेति चकारान्वयः । आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मम् यो हि नित्यं मम किञ्चिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन प्रेक्षमर्थानाकर्षतीति प्रसिद्धम् । ननु, तर्हीदमनृतमेव सर्वदा सेव्यं स्यान्नेत्याह, सर्वमिति. तथाच श्रुतिः "अथैतत्पूर्णमभ्यात्मं यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्" इति ॥ ४२ ॥

अतो वृत्तिसङ्कटादिष्वनृतं न दोषायेत्युपसंहरति—स्त्रीषु प्रोत्साहनेन वशीकरणे नर्मणि परिहासे विवाहे च वरादिस्तुतौ गवां ब्राह्मणानाञ्च हितार्थे हिंसायां च कस्यचित्प्राप्तायाम् तथा च

( १ ) यद्यत् किञ्च इति क्रमसन्दर्भः । चक्र० । पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

याज्ञवल्क्यः "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" इति. तथा च श्रुतिः "तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति" इति ॥ ४३ ॥

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वदा सत्यं वदतो देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषाननृतस्य गुणांश्चाह-परागिति द्वाभ्याम् । वदोमित्यक्षरं सर्वस्वं दास्यामीत्यङ्गीकारार्थकमक्षरं तत्पराक् पराक्शब्दव्याख्यानं रिक्तमिति तस्यापि व्याख्यानमपूर्णमिति तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोम्" इति सर्वस्वदाने कृते वृत्त्यभावेन देहस्यापि विनाशाद्दातुर्विपत्त्या दानसाद्गुण्याभावादोमित्यक्षरमसाद्गुण्यवद्दानप्रतिज्ञापरत्वेनापरिपूर्णं स्यादित्यर्थः । किञ्चिदोमितिब्रूयात् किञ्चिद्दास्यामीति यद्वाक्यं तेन वाक्येन पुमान् दाता रिच्येतावशिष्येतेत्यर्थः । दत्तावशिष्टेनात्मनो वृत्तिं कल्पयन् जीवेत् अतस्तद्वाक्यं साद्गुण्यवद्दानप्रतिश्रुतिपरत्वेन परिपूर्णं स्यादिति भावः । तथा च श्रुतिः "न वत्सर्वमोङ्कुर्याद्रिक्तं आत्मानं सकामेभ्यो नालं स्यात्" इति यत्सर्वमोङ्कुर्यात्स आत्मानं रिक्तं कुर्यादित्यर्थः । सकामेभ्यो नालं स्यादित्यस्य अर्थमाह—भिक्षव इति । भिक्षवे याचकाय सर्वमोङ्कुर्वन्दास्यामीति प्रतिशृण्वन् पुमानात्मने कामेन काम्यत इति कामो जीवनम् अध्ययनेन वसतीतिवत् हेत्वर्थे तृतीया । तस्मै नालं न समर्थः स्यादित्यर्थः । अतः किञ्चिदेव देयमिति भावः "अथैतत्पूर्णमभ्यात्मं यन्नेति यत्सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिर्जायेत स्यैनं तत्रैव हन्यात्" इति श्रुत्यर्थमाह-अथेति । नेति यदनृतं वचः एतत्पूर्णम् अर्थव्ययाभावात् अभ्यात्मञ्चेति चकारस्यान्वयः । आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मं यो हि नित्यं मम किञ्चिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धं तर्हि इदमनृतमसृतमिव सर्वदा सेव्यं स्यान्नेत्याह-सर्वमिति । सर्वं नेति यो ब्रूयात्स दुष्कीर्तिः अतः किञ्चिद्देयमित्यर्थः । यद्वा, किञ्चिद्दास्यामीति प्रतिश्रवणादपि किञ्चिदपि न दास्यामीत्यनृतवचनं तर्हि ज्यायः सुतरामर्थव्ययाभावादिति परिचोद्य तत्प्रतिक्षिपति—अथैतदिति । अथ नन्वभ्यात्मं याचकाभिमुखं यन्नेति किञ्चिदपि नेत्यनृतं यद्वचस्तदेतत्पूर्णं सति वित्तेनेति वचसो मिथ्यार्थपरत्वादनृतमित्युक्तं तदनृतं प्रतिक्षिपति—यदिति । यत्सर्वं नेति किञ्चिदपि नेति ब्रूयात्स दुष्टा कीर्तिर्यस्य तादृशः स्यात् श्रुतौ वाशब्दः पक्षविपरिवृत्त्यर्थकः । अथापीत्यत्राह-श्वसन् मृतः स जीवद्दशायामेव मृतप्राय इत्यर्थः । अनेन "स्यैनं तत्रैव हन्यात्" इति वाक्यविशेषो व्याख्यातः सा दुष्टा कीर्तिरेनं सति वित्ते किञ्चिदपि नेति याचकं प्रतिवक्तारं तत्रैव जीवद्दशायामेव हन्यादिति तदर्थः ॥ ४१ ॥ ४२ ॥

अतो वृत्तिसङ्कटादिष्वनृतं न दोषायेत्युपसंहरति-स्त्रीष्विति । स्त्रीषु प्रोत्साहनेन वशीकारे नर्मकर्मणि परिहासे विवाहे वरादिस्तुतौ वृत्त्यर्थे जीविकार्थे गवां ब्राह्मणानाञ्च हितार्थं हिंसायां कस्यचित्प्राप्तायामनृतं न निन्दितं भवेदित्यर्थः । तथा च याज्ञवल्क्यः "वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" इति तथा च श्रुतिः "तस्मात्काल एव दद्यात् सत्यानृते मिथुनीकरोति" ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्तदोमित्यक्षरमेतदपूर्णं सर्वस्वं पराक्परविषयं रिक्तं पृथक्कृतम् अर्थिने सर्वस्वं दत्तमित्यर्थस्य वाचकं वदेदित्यर्थः । "पराग्वा एतद्रिक्तमक्षरं यदेतदोम्" इति च फलितमाह—नेति । तस्मात्पुमान्याचकाय स्वजीवनातिरिक्तं धनम् ओन्दास्यामीति ब्रूयात् अर्थाति स न रिच्येत वै न नश्यतीत्यन्वयः । यद्यर्थिकञ्चोमित्याहाथैवास्मै तद्रिच्यत इति रिच्यते सम्पन्नो भवतीत्यर्थः । तात्पर्योक्तं वाक्यान्तरेण द्रढयति, भिक्षव इति । भिक्षवे याचमानाय सर्वमोङ्कुर्वन् सर्वस्वं ददन् कामेभ्यो विषयाणां दत्तत्वादात्मने नालम् आत्मनो भोज्याभावेन पर्याप्तो न भवति नष्टो भवतीत्यर्थः ॥ ४१ ॥

अथ तस्मान्नेत्यनृतं यद्वच एतदभ्यात्मम् आत्मानं प्रति पूर्णं सर्वस्वादाने स्वजीवनं सम्पन्नं भवतीत्यर्थः । अतिथिं प्रति सर्वं न दास्यामीति ब्रूयात्तर्हि आत्मानं पूर्णं सर्वस्वं जीवनं समृद्धं भवतीति पूर्वेण सम्बन्धः पूर्णं सपत्नम् किञ्च नेत्यतिथिं प्रति ब्रूयादिति योगविभागः कर्तव्यः तथाहि अतिथिं प्रति किञ्चन न दास्यामीति ब्रूयात्तर्हि सदुष्कीर्तिश्च सन्मृतो जीवन्मृतश्च भवति एतदुक्तं भवति याचकाय सर्वस्वदाने स्वजीवनाशः किञ्चिदप्यदाने च महदपकीर्त्या दुष्कीर्त्या जीवन्मृतत्वं स्यात्तस्माद्यावद्विहितं कर्तव्यमिति । "सयत्सर्वमोङ्कुर्याद्रिच्यादात्मानं सकामेभ्यो नालं स्यादथैतत्पूर्णमभ्यात्मं यन्नेतिब्रूयात्पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्तस्मात्काल एव दद्यात्तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात्प्रजायते भूयान्भवति यो वै तां वाचं वेद" इति आत्मानं रिच्यात् शून्यं कुर्यात् ॥ ४२ ॥

ननु प्रतिश्रुताऽप्रदाने महान्दोषः स्यादित्याशङ्क्यैव न स्यादित्याह—स्त्रीष्विति । नर्मं नर्मणि हिंसायां त्रैवर्णिकविषयायाम् "न स्त्रीषु राजन्न विवाहकाले प्राणात्यये सर्वधनापहारे" इत्यादि सिद्धमेतत् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रुतिपदार्थमाह—पराग्विति । श्रुतितात्पर्यार्थमाह तथापीति ॥ ४१ ॥ सर्वमित्यत्रोक्तम् ॥ ४२ ॥

तदेवमङ्गीकारानङ्गीकारविषयो पारिभाषिके सत्यानृते आम्नातौ प्रसिद्धेऽपि ते क्वचित् क्वचिद्विपरीतफलदे इत्याह, स्त्रीष्विति । अत्र इत्यादिषु चतुर्थ्येन धर्मतः प्राप्तेष्विति गम्यं प्राणसङ्कटे स्त्रीये सतीति गम्यते गोब्राह्मणार्थतत्तज्जातिमात्रहत्यादिलोपे प्राप्त इत्यर्थः । तदेतदेव वैष्णवानामप्युपलक्षणं गम्यं हिंसायामपि हि ते प्राणिमात्रघातेऽपीत्यर्थः "नानृतं स्याज्जुगुप्सितम्" इति किन्तु क्वचित्तद्घातकं सत्यमेव जुगुप्सितम् इत्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वथा सत्यवचने देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषान् अनृतस्य गुणानाह—पराग्गिति द्वाभ्याम् । यदोमित्यक्षरं तद् पराक् दूरे अर्थं गृहीत्वा अञ्चतीति पराक् रिक्तमिति श्रुतिपदस्य व्याख्यानम् अपूर्णा वै इति तत्तस्मादर्थिने यत् किञ्चिदोमिति दास्यामीति ब्रूयात्तेनैव रिच्येत ननु सर्वेणैव वित्तेन न्यूनो भवेत् भिक्षवे सर्वमोङ्कुर्वन् दास्यामीत्यङ्गीकुर्वन् आत्मने आत्मार्थे कामेन भोगेन मात्रं न पर्याप्तो भवति तस्य भोगो न सिद्ध्यतीत्यर्थः । तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत् किञ्चिदोमित्याहात्रैवास्मै तद्रिच्यते स यत् सर्वमोङ्कुर्यात् रिच्यादात्मानं स कामेभ्यो नालं स्यात्" इति ॥ ४१ ॥

नेति यदनृतं वचः एतत् पूर्णम् अर्थव्ययाभावात् अभ्यात्मं च आत्माभिमुखमन्यस्यार्थम् आनयतीत्यभ्यात्मं योहि नित्यं मम किञ्चिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धं ननु, तर्हीदमनृतममृतमिवाऽतिशयेन सेव्यमस्तु नेत्याह—सर्वमिति । तथा च श्रुतिः "अथैतत् पूर्णमभ्यात्मं यन्नेति यत्सर्वं नेति ब्रूयात् पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्" इति ॥ ४२ ॥

अतो वृत्तिसङ्कटादिष्वनृतं न दोषायेत्युपसंहरति—स्त्रीषु प्रोत्साहनेन वशीकारे नर्मणि यत्र क्वापि परिहासे विवाहे वरादिस्तुतौ गवां ब्राह्मणानां च हितार्थे हिंसायां च कस्यचित् प्राप्तायां तथा च याज्ञवल्क्यः "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" इति. तथा च श्रुतिः "तस्मात् काल एव दद्यात् काले न दद्यात् तत् सत्यानृते मिथुनीकरोति" इति ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
ऊनविंशोऽष्टमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सर्वदा सत्यं वदतो देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषाननृतस्य गुणांश्चाह—पराग्गिति द्वाभ्याम् । यदोमित्यक्षरं तद् दूरेऽर्थं गृहीत्वाञ्चतीति पराक् रिक्तमिति श्रुतिपदव्याख्यानमपूर्णा वै इति तत्तस्मात् अर्थिने यत्किञ्चित् वित्तं ओमिति दास्यामीति ब्रूयात् तेन वित्तेन पुमान् दाता रिच्येत न्यूनवित्तो भवेत् भिक्षवे सर्वमोङ्कुर्वन् सर्वस्वं दास्यामीत्यङ्गीकुर्वन् आत्मने आत्मार्थं कामेन भोगेन मात्रं पर्याप्तो न भवति तस्य भोगो न सिद्ध्यतीत्यर्थः । तथा च श्रुतिः "पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति यद्यत् किञ्चिदोमित्याह—नैवास्मै तद्रिच्यते यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं स कामेभ्यो नालं स्यात्" इति. अतः यत्किञ्चिद्देयमिति भावः ॥ ४१ ॥

सर्वस्वं प्रति गृहे याचमानं भिक्षुं प्रति नेति यदनृतं वचः एतद्वचनं पूर्णम् अर्थरक्षकम् अत एव अभ्यात्मम् आत्मनो वक्तुरभिमुखमनुकूलम् तथा च श्रुतिः "अथैतत्पूर्णमभ्यात्मं "यन्नेति" इति. ननु, तर्हि अनृतमेव सर्वदाऽऽचरणीयं स्यान्नेत्याह—सर्वमिति । यः सर्वं नेत्यनृतं ब्रूयात् किञ्चिदपि न दास्यामीति सम्पूर्णमनृतं वदेत्स दुष्कीर्तिः तथा च श्रुतिः "यत्सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्" इति ॥ ४२ ॥

अतः क्वचिदनृतं नातिदुष्टमित्युपसंहरति—स्त्रीषु प्रोत्साहनेन वशीकारे नर्मणि परिहासे विवाहे च वरादिस्तुतौ गवां ब्राह्मणानां च हितार्थं हिंसायां च निराक्रियमाणायाम् अनृतं जुगुप्सितं न स्यात् किञ्चिदनृतेनाऽपि ऐहिकसुखार्थं धनं रक्षेत् परलोकार्थं च तीर्थे दद्यादित्यर्थः । तथा च श्रुतिः "तस्मात्काल एव दद्यात्काले न दद्यात् तत्सत्यानृते मिथुनीकरोति इति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशोऽध्यायार्थप्रकाशः ॥ १९ ॥

———

भाषा टीका ।

"ओम्" यह जो अक्षर है अर्थात् हामी भरलेना जो है वह द्रव्य को दूर खिचाना है इसीसे अपूर्ण अर्थात् खाली है । क्यों कि ? पुरुष किसी से थोडी भी हामी भर लेवे तो उससे खाली होजाता । और यदि भिक्षु के लिये सब ही की हां करले तब तो फिर अपने लिये किसी कामना से पूर्ण नहीं होता है ॥ ४१ ॥

और जो "न" यह अनृत वचन है वही पूर्ण है और कुछ अपने तरफ को खींचने वाला है परंच सब ही बात के विषय में "न" ऐसा अनृत बोलना अर्थात् नहीं करना यह भी अच्छा नहीं जो सर्वथा नहीं करता है वह दुष्कीर्ति तो ऐसा है कि जैसे मृतक श्वास लेता है ॥ ४२ ॥

भाषा टीका ।

तस्मात् हे राजन् ! तूं नाहीं करदे । क्योंकि ? स्त्री के साथ परिहास में, विवाह के विषय में, जीविका के अर्थ, प्राणों के संकट आने पर, और गौ ब्राह्मण के निमित्त तथा किसी की हिंसा का प्रसंग आपड़ा हो तहां पर, बस इतने जगह अनृत (झूंठ बोलना) निंदित नहीं है ॥ ४३ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, एकोनविंश अध्याय की श्रीवृन्दावनस्थ भागवताचार्य कृत भाषा टीका समाप्ता ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## ॥ विंशोऽध्यायः ॥

श्रीशुक उवाच ।

बलिरेवं गृहपतिः कुलाचार्येण भाषितः ।
तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥

बलिरुवाच ।

सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ।
अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥ २ ॥
स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ।
प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥
न ह्यसत्यात्परोऽधर्म इति होवाच भूरियम् ।
सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥
नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ।
न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात् ॥ ५ ॥
यद्यद्धास्यति लोकेऽस्मिन् सम्परेतं [१]धनादिकम् ।
तस्य त्यागे निमित्तं किं [२]विप्रस्तुष्येन्न तेन चेत् ॥ ६ ॥
श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ।
दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥
यैरियं बुभुजे ब्रह्मन् ! दैत्येन्द्रैरनिवर्तिभिः ।
तेषां कालोऽग्रसील्लोकान्न यशोऽधिश्रितं भुवि ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः ।
ददावेव ततो विष्णुः सहसा ववृधेऽद्भुतम् ॥ १ ॥

॥ १ ॥

भगवता त्वया प्रोक्तं सत्यम्, किं तत्? योऽर्थकामादिकं न बाधेत स हि गृहमेधिनां धर्म इति ॥ २ ॥

कथं प्रत्याचक्षे? निराकरोमि ॥ ३—४ ॥

नन्वप्रत्याख्याने दोषा उक्तास्तत्राह—नाहमिति । अधन्याद्दारिद्र्यान्मृत्योरपि ॥ ५ ॥

यद्यद्धनादिकं तत्सर्वं सम्परेतं मृतं पुरुषं हास्यति त्यक्ष्यत्येव तत्किमिति जीवतैव स्वयं न देयमिति भावः । तथाऽपि तावद्वृत्तिसङ्कटपरिहारार्थमर्थं दीयतामिति चेत्तत्राह—तस्येति । विप्रश्चेत्तेनार्थेन दत्तेनापि न तुष्येत्तर्हि तस्यार्थस्य त्यागे दाने किं निमित्तम्? न किञ्चिदित्यर्थः । याचितादल्पस्य दाने विप्रस्यासन्तोषेण दानं व्यर्थमेव स्यादतस्तद्याचितं सर्वं देयं न किञ्चिदिति भावः ॥ ६ ॥

तर्हि न देयमेवेति चेत्तत्राह—श्रेय इति । दुस्त्यजैरसुभिरपि को विकल्पो विचारः ॥ ७ ॥

यैर्दैत्येन्द्रैर्युद्धेऽनिवर्तिभिरियं भूर्बुभुजे उपभुक्ता तेषामिह लोकान्

(१) धरादिकम् (२) विप्रस्तुष्येत—इति च विज० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

परलोकांश्च भोगानिति वा कालोऽग्रसीत्संहृतवानतु भुवि तैरधिगतं प्राप्तं यशोऽग्रसीत् अतः कीर्तिरेव साध्या नान्यदिति भावः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुशनसोक्तो बलिस्तमुवाचेत्याह मुनिः—बलिरिति । कुलाचार्येण शुक्रेणेत्थमुक्तो गृहपतिः यजमानो बलिः क्षणं तूष्णीमवस्थाय हे राजन् ! अवहितः प्रकृतमध्यवस्यन् गुरुमुशनसमाह ॥ १ ॥

तदेवाह—सत्यमिति । भगवता त्वया यदुक्तं तत् सत्यं सोऽयं गृहस्थानां धर्मः यस्त्वदुक्तो धर्मः कर्हिचिदपि गृहमेधिनामर्थादीन् न बाधेत न विहन्ति अतः सत्यं गृहमेधिनां धर्मः ॥ २ ॥

तथापि गृहस्थोऽप्यहं वित्तलोभेन प्रह्लादपौत्रः धूर्तवद्ददामीति प्रतिश्रुत्य अधुना द्विजं कथं निराकरोमि? ॥ ३ ॥

नन्वप्रत्याख्याने दोषा उक्तास्तत्राह—न हीति । असत्यात्परोऽन्योऽधर्मो नास्तीति इयं भूमिराह हि, किं तथाविधं भूमेर्वचस्त्वयोपलब्धम् ? इत्यत्राह—सर्वमिति । यत इयं भूरलीकपरमनृतवादिनमृते विना सर्वं मेरुमन्दरादिकमपि वोढुं भर्तुं समर्थमात्मानं मेने अमन्यत साक्षात्तस्यास्तथाविधोक्त्यभावेऽप्यलीकपरो नरस्तस्या दुर्भरत्वेनानुमत इति भावः । मन्ये इति पाठे अलीकपरं नरं विनाऽहं सर्वं वोढुमलं मन्ये अलीकपरन्तु न सहे कथमहं तत्सहे इत्यर्थः । सोढुमितिपाठः सुगमः ॥ ४ ॥

किञ्च यथा विप्रप्रलम्भनाद्विप्रविषयेऽनृतवदनाद्यथाहं बिभेमि तथा निरयादिभ्यो न बिभेमि तत्राधन्यं दारिद्र्यम् ॥ ५ ॥

किञ्च यद्यद्धनादिकं तत्सर्वं सम्परेतं मृतं पुरुषमस्मिँल्लोके हास्यति त्यक्ष्यति तत्किमिति जीवितैव देयमिति भावः । तथापि तावद्वृत्तिसङ्कटपरिहारार्थं किञ्चिद्दीयतामित्यत्राह—तस्येति । येनार्थेन दत्तेनापि न तुष्येद्विप्रस्तर्हि तस्यार्थस्य त्यागे दाने किं निमित्तं न किञ्चित्. याचितादन्यस्य दाने विप्रस्यासन्तोषात्तद्दानं व्यर्थमेव स्यादतस्तद्याचितं सर्वं देयं न किञ्चिदिति भावः ॥ ६ ॥

ननु, यदि किञ्चिद्दत्तेन न तुष्येद्विप्रस्तर्हि न देयमेवेत्यत्राह—श्रेय इति । साधवः परोपकारसाधनस्वभावाः दध्याङ्ङादयः दुस्त्यजैरसुभिः प्राणैरपि भूतानां श्रेयः प्रकुर्वन्ति धरादिषु को विकल्पः को विचारः ? ॥ ७ ॥

सर्वथा कीर्तिरेव संपाद्नीयेत्यभिप्रायेणाह—यैरिति । हे ब्रह्मन् यैर्दैत्येन्द्रैरस्मत्पितामहादिभिः युद्धेष्वनिवर्तिभिरियं भूमिर्बुभुजे उपभुक्ता तेषां लोकान् भोगान् कालोऽग्रसीत्संहृतवान् तैर्भुव्यधिगतं लब्धं यशः कीर्तिस्तु नाग्रसीत् सात्वधुनाप्यनुवर्त्तत इति भावः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिविधानार्थं त्रिविक्रमावतारमाहात्म्यं वक्त्यस्मिन्नध्याये, तत्रादौ बलेः सत्यसन्धानिश्चयमाह—बलिरिति ॥ १ ॥

यो दानादिधर्मार्थादिकं स्वजीवनसाधनं न बाधेत न नश्यति सोऽयं गृहस्थानां धर्म इति यदुक्तं तत्सत्यम् अबाधितमित्यन्वयः ॥ २ ॥

तथैवानुष्ठेयो धर्म इति नेत्याह—स इति । यो ददामीति प्रतिज्ञाय स्थितः सोऽहं प्रत्याचक्षे न दास्यामीति निषेधं करोमीति कुतः प्राह्लादिः कितवो धूर्तः ॥ ३—५ ॥

ननु, वित्तलोभाभावे स्वजीवनहानिः स्यादित्याशङ्क्य दानेन विप्रावबुद्धिरेव प्रयोजिका नान्येत्याशयेनाह—तस्येति । यत्प्रतिश्रुतं तेन वित्तेन विप्रो यदि तुष्येत तर्हि तस्य वित्तस्यात्यागे अदाने निमित्तं कारणं किं न किमपि ॥ ६ ॥

स्वजीवनं कारणञ्चेत्याह—श्रेय इति । के ते साधव इति तत्राह—दध्याङिति । दध्यङ्ङाथर्वणो देवेभ्यः स्वदेहं शिबिः कपोताय ततः प्रकृते किन्तत्राह—को विकल्प इति । वित्तादिषु धरादिषु विकल्पः दास्यामि न चेति संशयः कः ? न कोऽपीत्यर्थः ॥ ७ ॥

सति विभवेऽर्थिनि च प्राप्ते लोभाददातॄणामैहिकामुष्मिकसुखं न भवतीत्याशयेनाह—यैरियमिति । अनिवर्तिभिः युद्ध इति शेषः । कालो यमः स्वर्गादिलोकानग्रसीत् ग्रस्तवान् "ये लोका दानशीलानां स तानाप्नोति पुष्कलान्" इति स्मृतिसिद्धलोका न सन्तीत्यर्थः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विशे ज्ञात्वार्थिनं विष्णुमवज्ञाय गुरोर्वचः ।
ददौ हर्षाद्बलिः सोऽपि प्राप्त्या हर्षादिवैभवम् ॥

क्षणं तूष्णीमिति भगवदिच्छाप्रातिकूल्ये कृते गुरोर्गुरुत्वमतोऽस्याज्ञालङ्घने न दोष इति निश्चिकायेति भावः ॥ १ ॥

अर्थादिकं न बाधेतेति तेन विप्रस्यैतादृशप्रलम्भात्कर्म बाधेतैव भक्ति तु भजनीयस्य भगवतो ज्ञातस्यापि प्रलम्भनादृबाधेत मामिति भावः ॥ २ ॥

प्राह्लादिरिति प्रह्लादपौत्रस्य मम भगवदानुकूल्यमेव स्वधर्म इति गूढोऽभिप्रायः तेन प्रह्लादेनाऽस्यान्तःकरणे कृपया भक्तिबीजं पूर्वमुप्तमेव सम्प्रतितु श्रीवामनदेवकृपया प्राप्तेन प्रेम्णा स्निग्ध एवाभूत् यदुक्तं "कृपासिद्धा यज्ञपत्नीवैरोचनिशुकादयः" इति ॥ ३-४ ॥

अधन्यात् दारिद्र्यात् ॥ ५ ॥

यद्यद्धनादिकं कर्तृसम्परेतं मृतं हास्यति त्यक्ष्यत्येव तेन त्वद्राज्यया किञ्चिन्मात्रेण दत्तेन द्विजश्रेष्ठ तुष्यति नहि तस्य तावन्मात्रस्य त्यागे किं निमित्तं किं फलम् अतः सर्वमेव वित्तमेतत्प्रीत्यर्थं मया दातव्यम् एवेति भावः । अत्र स्वएवैवं विष्णुं ज्ञात्वापि प्रवृद्धभक्त्युत्थसम्भ्रमप्रणतिस्तुत्याद्यकरणं शुक्राचार्यस्यासुराणां च दुःखाभावार्थमेव ज्ञेयम् अत एव विप्रशब्दप्रयोगो भावगोपनार्थ एव ज्ञेयः ॥ ६ ॥

त्वं सर्वस्वमेव दित्ससीत्यत्रार्थे पूर्वाचारः प्रदर्शनामिति वक्तव्याह—श्रेय इति । भूतानामपि श्रेयः किमुत स्वगृहमागतस्य विष्णोः

सुलभा युधि विप्रर्षे ! ह्यनिवृत्तास्तनुत्यजः ।
न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥
मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम् ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

असुभिरहन्तास्पदैरपि धरादिषु ममतास्पदेषु को विकल्पः दास्ये न वा दास्यं इत्यात्मकः अपि तु नैव विकल्पः किन्तु दास्याम्येवेति निश्चय एवेति भावः ॥ ७ ॥

स्वकीर्त्यादिकमनपेक्ष्य नश्वरभोगार्थमेव न दातव्यमिति मतं तु नास्माकमभिमतमित्याह—येरिति । युद्धेऽनिवर्त्तिभिः इयं भूः तेषां लोकान् ऐहिकान् पारत्रिकांश्च कालोऽग्रसीत् नाश्नयाञ्चकार लोकान् लोकोत्थभोगानिति वा ननु भुवि तैरधिगतं प्राप्तं यशोऽप्यग्रसीत् अतः कीर्तिरेव साध्या नान्यदिति भावोऽपि शुक्राद्यनुरोधेनैव ज्ञापितः । वस्तुतस्तु तस्य कीर्त्याद्यपेक्षाऽपि मनसि नास्ति शुद्धभक्तत्वादिति भावः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वटुरूपेण विष्णुमागतं बुद्ध्वा बलिर्गुरुवाक्यमतिलङ्घ्य तस्मै ह्यर्थाङ्घ्रिपदपरिमितां भूमिं ददौ विष्णुरप्यवञ्चयदिति वर्णयति-बलिरेवमिति त्रिभिः ॥ १ ॥

योऽर्थकामादिकं न बाधेत स गृहमेधिनां धर्म इति भगवता त्वया प्रोक्तं सत्यम् ॥ २ ॥

अस्य गृहमेधित्वेऽपि किञ्चिद्विशेषमाह—सोहं प्राह्रादिः प्रह्लादस्य पौत्रः स कितवो धूर्तो यथा निराकरोति तद्वत् ददामीति प्रतिश्रुत्य द्विजं कथं प्रत्याचक्षे निराकरोमि ॥ ३ ॥

अलीकपरमसत्यवादिनमृते सर्वं गिरिवनसमुद्रादिकं वोढुं धर्तुमलं मन्ये इति इयं भूरुवाच ॥ ४—५ ॥

अस्मिन् लोके जने सत्यपि यद्धनादिकं हास्यति स्वामिनं त्यक्ष्यति यच्च सम्परेतं हास्यति तस्योभयविधस्य त्यागे किं निमित्तं फलम् ? न किञ्चिदपीत्यर्थः । तेन विप्रस्तुष्येच्चेत् तस्य निमित्तं फलं किं न भवति ? अपि तु भवत्येवेत्यर्थः । अतः सर्वस्वं विजानता पात्रे देयमेव ॥ ६ ॥

एतदेव कैमुतिकन्यायेनोपपादयति—श्रेय इति । को विकल्पः संशयः ॥ ७ ॥

ननु, दानाद्भोगो वरं इत्यत आह—येरिति । युद्धे अनिवर्त्तिभिरियं भूः बुभुजे भुक्ता न तु दत्ता तेषां लोकयन्ते कर्मफलानि भुञ्जन्ते यैस्ते लोका देहास्तान् कालः अग्रसीत् संहृतवान् अत एव भुवि यशोऽपि न अधिगतं न प्राप्तं धिक् तान् उदरम्भरादीनिति भावः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीजानये नमः ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—जब कुलाचार्य अर्थात् श्रीशुक्राचारीजी ने बलि को इस प्रकार समुझाये तब हे राजन् ! बलि क्षण भर चुप होकर गुरुजी से सावधान होकर बोला ॥ १ ॥

बलिरुवाच ॥

राजा बलि बोले, कि—अपने गृहस्थियों का, धर्म बहुत ही सत्य कहा जो धर्म अर्थ कामयश और जीविका का कभी भी बाधा नहीं करता है ॥ २ ॥

परंच मैं अब धन के लोभ से ब्राह्मण को कैसे ना करूं "अवश्य देवेंगे" ऐसी प्रतिज्ञा करके और प्रह्लाद के घराने में उत्पन्न होकर कपटी के तरह कैसे वचन को पलटूं ॥ ३ ॥

असत्य बोलने से आगे और कोई बडा अधर्म नहीं है। ऐसा इस भूमि ने भी कहा है, कि—मैं सब के भार सहन करने को समर्थ हूं परंच एक झूंट बोलने वाले के बिना ॥ ४ ॥

महाराज ! मै नरक से नहीं डरता हूं और अधन्य दुःख सागर से नहीं डरता हूँ न अपने स्थान से च्युत होने से डरता हूं ॥ ५ ॥

जो धनादिक मरे हुए पुरुषों को आपही छोड देते हैं उसको त्याग देना कौमनसी बडी बात है ? यदि उससे ब्राह्मण का संतोष होता हो तो ॥ ६ ॥

महज्जन प्राणियों का श्रेय अपने दुस्त्यज प्राणों से करते हैं जैसे दधीचि शिबि प्रभृति लोगों ने पराये अर्थ अपने प्राण भी देदिये फिर भूमि आदिक ऊपर के पदार्थों में क्या संकल्प विकल्प है ? ॥ ७ ॥

हे ब्रह्मन् जिन दैत्य राजाओं ने इस पृथिवी को भोगी वे फिर आज तक लौटकर नहीं आये, और काल ने उनको ग्रस लिये और उनको पृथिवी में यश भी नहीं मिला ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देहत्यागादपि धनत्यागे कीर्तिर्भवतीत्याह—सुलभा इति । तनुं त्यजन्तीति तनुत्यजः तीर्थे पात्रे अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः ॥ ९ ॥

तर्हि निर्धनत्वेन दैन्यं स्यादिति चेत्तत्राह-मनस्विन इति । वाढ्य

यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ।
स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ! ॥ ११ ॥
यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ।
तथाऽप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥
एष वा उत्तमश्लोको न जिहासति यद्यशः ।
हत्वा मैनां हरेद्युद्धे शयीत निहतो मया ॥ १३ ॥
श्रीशुक उवाच ।
एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ।
शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥
दृढं पण्डितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया ।
मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः ॥ १५ ॥
एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ।
वामनाय ददावेनामर्चित्वोदकपूर्वकम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।

तादृशानामभ्यर्थिनां कामोपनयेन कामपूरणेन दुर्गतिर्दैन्यमिति यत्तच्छोभनं भद्रमेव भवादृशानां तु कामोपनयेन दुर्गतिः शोभनमिति किं पुनर्वक्तव्यमित्यर्थः ॥१० ॥

ननु, नायं बटुः किन्तु विष्णुस्तव शत्रुरित्युक्तं तर्हि सुतरामेव दास्यामीत्याह--यजन्तीति । परः शत्रुर्वाऽस्तु ॥ ११—१२ ॥

यद्यपि यशो न जिहासति तर्हि युद्धेऽपि मां हत्वैनां भूमिं हरेत् शयीत वा सम्यग्ज्ञातः सन् मम चित्ते शयीतेति वास्तवोऽर्थः ॥१३॥

अश्रद्धितमजातश्रद्धम् ॥ १४—१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देहादपि प्रियस्य धनस्य त्यागादेव कीर्तिर्भवतीत्याह—सुलभा इति । हे विप्रर्षे ! युद्धे तनुं देहं त्यजन्तीति तथा तादृशाः सुलभाः बहवः अनुवृत्ताः जाता बभूवुरित्यर्थः । तथा तीर्थे सत्पात्रे श्रद्धया ये सर्वस्वं त्यजन्ति ते नाऽनुवृत्ताः अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः । अतिवृत्ता इत्यपि पाठः ॥ ९ ॥

तर्हि निर्धनत्वेन दैन्यं स्यादित्यत्राह—मनस्विन इति । अर्थिनां कामपूरणेन दुर्गतिर्दैन्यमिति यत्तन्मनस्विनो विवेकिनः कारुणिकस्य शोभनं भद्रमेव किंपुनर्भवादृशां ब्रह्मविदां तद्भद्रमेवेति वक्तव्यं ततोऽस्य बटोर्वाञ्छितं ददामि ॥ १० ॥

ननु, नायं बटुः किन्तु विष्णुस्तव शत्रुस्तर्हि तु सुतरामेव दास्यामीत्याह—यजन्तीति । वेदोक्तयज्ञाद्यनुष्ठानकुशलाः भवन्तः आदृताः सन्तः क्रतुभिर्यज्ञैश्च ससोमकैरसोमकैश्च यागैर्यं विष्णुं यजन्ति आराधयन्ति स एव बटुर्वरो विष्णुरधुना मम वरदो वा परः शत्रुर्वाऽस्तु सर्वथाऽस्मै भूमिमीप्सितां हे मुने ! दास्याम्येव ॥ ११ ॥

तर्हि तृतीयपादस्यास्पदाभावेन हेतुना त्वां बध्नीयादित्यत्र आह—यद्यपीति । अनागसं सर्वस्वसमर्पणेन निरपराधिनं मामसावधर्मेण यदि बध्नीयात्तथाप्येनं भूतब्राह्मणशरीरं न हिंसिष्ये न हनिष्यामि बन्धनमप्यनुमन्ये नाहं बिभेमीति पूर्वमेवोक्तत्वादिति भावः ॥ १२ ॥

किञ्चैष यद्युत्तमश्लोकः विष्णुस्तर्हि यशः कीर्तिं न जिहासति त्यक्तुं नेच्छति सर्वस्वं प्रतिगृह्य मां बध्वा स्वकीयं विपुलं यशः न विहन्तीति भावः । किन्तु मां युद्धे हत्वा एनां भूमिं हरेत् मां हन्तुमसमर्थश्चेत् मया निहतो युद्धे शयीत वा इति तु नार्थः । किन्तु शयीत इति तु काकुः किं शयीत पर्वतीति दिक् ॥ १३ ॥

इत्थमश्रद्धितं श्रद्धारहितं न सञ्जातश्रद्धितकं स्वस्याज्ञामस्वीकुर्वाणं शिष्यं बलिं शुक्रो दैवचोदितः शशाप शापानर्हत्वं सूचयन्विशिनष्टि—सत्यसन्धा अभिसन्धिः यस्य तं मनस्विनम् ॥१४॥

शापमेव दर्शयति—दृढमिति । त्वं दृढं नूनं पण्डितमात्मानं मन्यसे इति तथा वस्तुतस्त्वज्ञः अत एव स्तब्धः सर्वस्वनाशप्रसक्ताववलंबनं पटुत्वमिति गर्वयुक्तस्त्वं मच्छासनमतिक्रान्तवान् अतस्त्वं मम गुरोरुपेक्षयाऽचिरादेव श्रियस्त्रैलोक्याधिपत्याद्भ्रश्यसि ॥ १५ ॥

इति इत्थं गुरुणा शप्तोऽपि सत्यान्न चलितो महान् दृढसङ्कल्पो बलिर्वामनायार्चित्वोदकपूर्वकमेनां भूमिं ददौ ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पात्राभावाश्च दास्याम्ति तस्मिन् सति दातारः सुलभा इति तत्राह—युधीति । यथा युधि युद्धादनिवृत्तास्तनुत्यजः शरीरत्यागिनः सुलभास्तथा तीर्थे पात्रे प्राप्ते श्रद्धया धनत्यजः धनदातारो न सुलभा इत्यन्वयः ।—

"तीर्थं मन्त्राद्युपाध्याये शास्त्रेऽग्न्यभिमि पावने ।
पात्रोपायाम्नतारेषु स्त्रीपुंसे योनिवल्लयोः" ॥

इति यादवः "पराचैश्चकापांवनृजुन्त इन्द्रा यज्वानो यज्वभिः स्पर्धमानाः" इति ॥ ९ ॥

ननु, सर्वस्वदाने स्वजीवनहानिलक्षणाक्लेशः स्यादिति यदुक्तं तत्राह—मनस्विन इति । अर्थकामाय याचमानाय कामितार्थदानेनोपनयो गृहस्थति प्रस्थापनं यत्तेन दुर्गतिर्दारिद्र्यलक्षणा नाशो भवतीति यत्तत्कारुणिकस्य मनस्विनं उदारस्य शोभनमिहामुत्र सुखसाधनं स्यात् भवादृशां ब्रह्मविदां सर्वस्वदानात् क्लेशः सुखहेतुरिति किम्पुनः किमु वक्तव्यं फलितमाह—तत इति ॥ १० ॥

अयं बटुरपि यः कश्चन न भवतीति दर्शयन् स्वस्य हरिविषयं ज्ञानं सूचयन्नाह—यजन्तीति । क्रतुभिः सङ्कल्पैः समन्तसंबन्धैर्वा ॥ ११ ॥

ब्रह्मतनुं ब्राह्मणं बटुम् ॥ १२ ॥

जिहासति त्यक्तुमिच्छति मा मां एनां गाम् ॥ १३ ॥

अश्रद्धितं अभक्तयोपेतं प्रहितः प्रेरितः सत्यसन्धं सत्यप्रतिज्ञम् ॥ १४—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तर्हि युद्धेनैव प्राणास्त्यज्यन्तां तत्राह-सुलभेति । यद्यपि धनाद्यपेक्षया प्राणा अन्तरङ्गास्तथापि मोहात् सर्व एव धनादेरेवान्तरङ्गत्वं मन्यन्त इति भावः ॥ ९—११ ॥

शुक्राज्ञापनार्थमेव सन्तोषयन्नाह-यदीति द्वाभ्याम् । वास्तवार्थन्तु निर्दिशितः शिरसि पदार्पणप्रार्थनानन्तरमेव हि तादृशी भक्तिर्जातेति भक्तिरेवाभासत्वे समाधानञ्च ॥ १२ ॥

भीतत्वमेव दर्शयति एष इति ॥ १३—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च युद्धे निवृत्तिराहित्येऽपि दाने निवृत्तिराहिताः अधिकयशस्विन इत्याह-सुलभा इति । तीर्थे सर्वप्रदाने धनस्तनुत्यागादपि धनत्यागो दुष्करः स एव मया कर्तव्य इति भावः ॥ ९ ॥

ननु, तर्हि तव दारिद्र्यं भविष्यतीति तत्राह-मनस्विनो दानवीरस्य शोभनमेतदेव यत् अर्थिनां याचकानां यादृशानामपि कामोपनयेन कामपूरणेन दुर्गतिः दारिद्र्यं "दरिद्रा दुर्गतौ" इति दुर्गतिदारिद्र्ययोस्तुल्यार्थत्वात् भवादृशानां तु कामोपनयेन दुर्गतिः शोभनमिति किं पुनर्वक्तव्यमित्यर्थः ॥ १० ॥

ननु, नायं बटुः किन्तु विष्णुस्तव शत्रुरित्युक्तं तर्हि सुतरामेव दास्यामीत्याह—यजन्तीति । परः शत्रुर्वास्तु ॥ ११ ॥

भीतमिति विष्णुत्वेऽपि ब्राह्मण्यातनुत्वहेतुकम् । भयमस्यावश्यम्भावीति भावः ॥ १२ ॥

एष वै निश्चितमुत्तमश्लोक एव यद्यस्मात् स्वयशो न जिहासति अतो भूमिर्न दातव्येति मयोक्ते वाक्यामङ्गपराभवमसहमानेनानेन तर्हि युद्धं देहीति प्रार्थिते मयि चोमित्युक्तवति सति युद्धे मां हत्वा एनां भूमिं हरेदेव. ननु, महावीरास्त्वत्तो यस्य पराभवोऽपि सम्भवेदिति चेत्तत्राह-शयीतेति । मया निहतो युद्धे शयीतेति काकुः नैव शयीत विष्णोरवध्यत्वादिति भावः । यद्वा भेत्यस्यावृत्त्या मस्मदर्थे निषेधार्थे च वर्तमानाद्विनापि काका सङ्गतिः ॥ १३ ॥

अभक्त्या सञ्जाताऽस्येत्यश्रद्धितं दैवेन भगवत्प्रेमसुखप्रतिकूलप्राचीनापराधोत्थेनाभाग्येन प्रेरितबुद्धिः सत्यप्रतिज्ञम् उत्तममनस्कम् ॥ १४ ॥

पण्डितमानी पण्डितानां माननीयः न विद्यते ह्रो यस्मात्सः अस्मदुपेक्षया अस्मत्कर्तृकया उपेक्षयापि स्तब्धः भयाभावादनम्रः मच्छासनमतिक्रम्य गच्छासि विष्णुमिति भावः । तस्मात् न चिरादपि श्रियो भ्रश्यते भगवद्दत्तां नित्यां सम्पदं प्राप्स्यसीत्येवं वास्तवार्थः ॥ १५ ॥

एनां भूमिं उदकदानपूर्वकम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

युद्धशूरान् स्वार्थपराङ्मुखयित्वा दानशूरान् प्रशंसति-सुलभा इति । तीर्थे पात्रे ॥ ९ ॥

ननु, सर्वस्वदाने निर्धनस्य दुर्गतिर्भविष्यतीति आह—मनस्विन इति । यादृशतादृशामपि अर्थिनां कामोपनये कामपूरे कारुणिकस्य कामपूरकस्य दुर्गतिर्न भवति किन्तु शोभनं भवति "नहि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति" इति श्रीमुखवचनात् ॥ १० ॥

यज्ञैः क्रतुभिश्च असोमैः ससोमैर्यागैः ॥ ११ ॥ १२ ॥

यदि एष प्रसिद्धः लौकिको जनस्तर्हि मया निहतः शयीतः यदि भवेत्प्रोक्तो वै निश्चितम् उत्तमश्लोकस्तर्हि सर्वेश्वरत्वेन सर्वजगद्व्यापककीर्तिरूपं यशो न जिहासति त्यक्तुं नेच्छति पराजयं नाङ्गीकरोतीत्यर्थः । अतो दानं विनापि मा मां हत्वाऽपनाम भुवं हरेत् अतः कुतो दास्यामीति भावः ॥ १३ ॥

श्रद्धा संजाताऽस्येति श्रद्धितस्तद्विपरीतं दानप्रतिज्ञात्यागेऽजातश्रद्धामित्यर्थः । अत एवानादृतमाकरम् ॥ १४ ॥ १५ ॥ १६ ॥

---

भाषा टीका ।

हे विप्रर्षे युद्ध में शरीर त्याग करने वाले चाहे बहुत से मिल सकें पर पात्र के आने पर धन त्याग करने वाले दुर्लभ हैं ॥ ९ ॥

विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ।
आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥
यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा ।
अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥
तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ।
तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदाऽन्विताः ॥ १९ ॥
नेदुर्मुहुर्दुन्दुभयः सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः ।
मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम् ॥ २० ॥
तद्वामनं रूपमवर्धताऽद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् ।
भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत ॥ २१ ॥
काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ।
ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २१ ॥
रसामचष्टाङ्घ्रितलेऽथ पादयोर्महीं महीध्रान्पुरुषस्य जङ्घयोः ।
पतत्त्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्रसेनः ॥ २३ ॥
सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान् ।
नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि चर्क्षमालाम् ॥ २४ ॥

भाषा टीका ।

कारुणिक मनस्वी को यदि किसी भिक्षु की कामना पूरी करने में दुर्गति भी हो, तो वह भी शोभा ही है । और फिर आप सरश वेद वेत्ताओं के लिये दुर्गति हो तो क्या ही कहना ? तस्मात् इस बटुको जो वांछित होगा वह अवश्य ही दूंगा ॥ १० ॥

हे मुने ! आम्नाय के विधान में जो विद् आपलोग जिस को बड़े आदर पूर्वक यज्ञों से यजन करते हैं वह सम्पूर्ण वांछित देने वाले यदि विष्णुहीं हों अथवा और कोई दूसरा ब्राह्मण हो अब तो मैं इसको इच्छित भूमि दूंगा ही ॥ ११ ॥

यद्यपि वह पश्चात् निरपराधी मेरे को अधर्मही बांधे तो भी मैं इस भय भीत को पीड़ा नहीं दूंगा । क्योंकि ? वैरी भी हो तो भी ब्राह्मणही का शरीर तो है ॥ १२ ॥

और यदि यह उत्तम श्लोक अर्थात् विष्णु भगवान् हैं और अपने यश को चाहेंगे तब हमको मारकर भी पृथिवी को छुड़ा लेंगे । और जो विष्णु नहीं है और अन्याय करेगा तो मेरे से निहत होकर पृथिवी में शयन करेगा ॥ १३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–इस प्रकार गुरु वाक्य में नहीं श्रद्धा करने वाले और आज्ञा नहीं करने वाले शिष्य को प्रारब्ध के वश होकर शुक्राचारी ने शाप देदिया, पर शिष्य तो सत्य प्रतिज्ञा वाला और मनस्वी रहा कुछ न बोला ॥ १४ ॥

शुक्राचारीजी ने कहा कि—हे मन्द ! तू निश्चय आपको पंडित मानने वाला है और हमारी उपेक्षा से स्तब्ध है, जब तू ने हमारी आज्ञा का उल्लंघन कर दिया तो अब तू थोड़े ही काल में श्री से भ्रष्ट होजायगा ॥ १५ ॥

गुरुजी ने इस प्रकार शाप दिया तो भी राजा सत्य से चलायमान नहीं हुआ, क्योंकि ? महान् है, बस फिर वामन जी को पूजन करके जल से संकल्प पूर्वक इस पृथिवी को दिया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जालकं मुक्तामणिविशेषरत्नमालावती अवनेजनीनामपां कलशं भृतं पूर्णम् ॥ १७—२० ॥

अवर्धत वाञ्छातः प्रतिगृह्यतामिति बलिना पूर्वमुक्तत्वात् गुणत्रयमात्मनि यस्य तत् अत एव भूः खमित्यादयो यद्यस्मिन्नासत स्थितवन्तः ॥ २१ ॥

ऋत्विगादिसहितो बलिस्तस्य हरेः काये एतद्विश्वं ददर्श ॥२२॥ तदेव प्रपञ्चयति–रसामिति पादोनैः सप्तभिः । मारुतं गणं वायु-

श्रीधरस्वामिकृतभावार्थदीपिका ।

सङ्गम् इन्द्रस्य सेनेव सेना यस्य सः इन्द्रपदे स्थितत्वात् अचष्ट प्रेक्षत ॥ २३ ॥

आत्मा स्वयं बलिर्मुख्यो येषां तानसुरान् ऋक्षमालां नक्षत्रपंक्तिम् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति—विन्ध्यावलिरिति । बलेः पत्नी विन्ध्यावलिरिति प्रसिद्धा सा जालकमालिनी जालकं मुक्ताभरणविशेषः तन्मालिनी तदा आगत्यावनेजनीनां पादप्रक्षालनार्थानामपामद्भिःभूतं,पूर्णं हैमं कलशमानिन्ये आनीतवती ॥ १७ ॥

ततो यजमानो बलिः तस्य भगवतो वामनस्य श्रीमत्पादद्वन्द्वं मुदा प्रक्षाल्य तदपः प्रक्षालनीः अपः विश्वपावनीर्मूर्ध्न्यवहत् ॥ १८ ॥

तदा दिवि स्थिता देवगणाः गन्धर्वादयश्च निर्भयास्सन्तः सर्वे तस्य बलेर्दानरूपं कर्माभितः प्रशंसन्तः आदरादसुरेन्द्रं प्रसूनवर्षैर्मुदा युक्तास्सन्तो ववृषुः ॥ १९ ॥

दुन्दुभयः सहस्रशो नेदुः गन्धर्वादयो जगुः गानप्रकारमेव दर्शयति । मनस्विनाऽनेन बलिना कृतमितरैर्दुष्करं हि यतोऽयं विद्वान् त्रिपदे पादत्रयाय त्रिविक्रमाय वा जगत्त्रयमदात् ॥ २० ॥

इत्येवं सर्वेष्वभिगृणत्सु सत्सु तच्छरीरतत्तस्य वामनं रूपं तदद्भुतं यथा तथा अवर्द्धत याञ्चितं प्रतिगृह्यताम् इति बलिना पूर्वमुक्तत्वाल्लोकत्रयमपि याञ्चितं प्रतिगृहीतुमवर्द्धतेति भावः । तदेधितं रूपं विशिनष्टि, गुणत्रयं गुणत्रयात्मकं जगदात्मनि स्वस्मिन्यस्य तत् अत एव भूः खमित्यादयो यस्मिन्नासन स्थिताः ॥ २१ ॥

तदा ऋत्विगादिसहितो बलिर्महाविभूतेस्तस्य भगवतः काये गुणत्रयपरिणामात्मकजगदाश्रयभूते भूतपञ्चकादियुक्तमेतत्कृत्स्नं विश्वं ददर्श ॥ २२ ॥

तदेव प्रपञ्चयति—रसामिति पादोनैः सप्तभिः । पादतले रसां रसातलमधोलोकमचष्टापश्यत तथा पादयोः महीं पुरुषस्य भगवतो जङ्घयोर्महीध्रान् पर्वतान् जानुनि पतत्रिणः पक्षिणः विश्वमूर्त्तेर्भगवत ऊर्वोर्मारुतं गणं वायुमद्रागन्द्रसेनो बलिः इन्द्रस्य सेनेव सेना यस्य स इन्द्रपुरे स्थितत्वादचष्टेत्यनुषङ्गः । पतत्रिणः पक्षिणो वा ॥ २३ ॥

विभोर्वासिस वस्त्रे सन्ध्यां जघने आत्मा स्वयं बलिर्मुख्यो येषां तान् प्रजापतीनसुरान् नाभ्यां नभोन्तरिक्षं कुक्षिषु सप्तसिन्धून् समुद्रान् उरुक्रमस्य भगवत उरसि नक्षत्रपङ्क्तिम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जालकैः कुड्मलैः कृता मालाऽस्या अस्तीति जालकमालिनी "जालकं कोरकं कलिकाकुड्मलमुकुलानि तुल्यानि" इति हलायुधः अपां भृतं पूर्णजलं अवनेजनी प्रक्षालनमिच्छन्ती ॥ १७ ॥ १८ ॥

भार्ये आनिनम् असुरेन्द्रम् ॥ १९ ॥

विद्वान्दानफलं शम्भुरिति वा स्वजातिरिपवे वामनाय जगत्त्रयमदादिति यत्तस्मादनेन मनस्विना बलिना सुदुष्करं कृतमित्युक्त्वा जगुः ॥ २० ॥

भूम्यादयो यस्मिन् रूपे आसन् सावकाशं स्थिताः तद्वामनमगुतरं रूपमवर्धतेत्यन्वयः । गुणत्रयस्यात्माकृतिर्येन तत्तथा तत्—

"आत्मा जीवे कृतौ देहे स्वभावे परमात्मनि !

यत्नेऽर्केऽग्नौ मतौ वातेऽप्यग्नुः सूकरमूषकौ" ॥

इति यादवः ॥ २१ ॥

अर्थाः शब्दादयः आशयो बुद्धिर्वा ॥ २२ ॥

महीध्रान् पर्वतान् इन्द्रसेनो बलिः ॥ २३ ॥

स्वात्ममुख्यं भृत्येषु मुख्यम् ऋक्षमालां नक्षत्रपंक्तिम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणत्रययुक्त आत्मा यत्र यदिति गुणत्रयसम्वलितं यथा स्यात्तथाऽवर्द्धत इत्यर्थः ॥ २१ ॥

गुणा ऐश्वर्यादयः षट् तदात्मकैः ॥ २२ ॥

इन्द्रसेन इति नूनं बलेर्नामैव स इन्द्रसेनो भगवत् पदाम्बुजं इति श्रीदशमात् ॥ २३ ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परमलज्जावत्यसूर्यम्पश्यापि राज्ञी भर्तुर्भक्तिनिष्ठामवगत्यानन्दाश्रुस्तिमिता हर्षोत्थं चापल्यं निरोद्धुमशक्नुवती दासीष्वनपेक्षमाणा कलशं वहन्ती बहिर्निष्क्रम्यागत्याह—विन्ध्यावलिरिति । जालकं मल्लिकाद्यपक्वकोरक इति केचित् अपुष्पातिकोमलफलमित्यन्ये "क्षारको जालकं क्लीबे" इत्यमरः । जालकं मुक्ताभरणविशेष इति स्वामिचरणाः अवनेजनीनामपां कलशं भृतं पूर्णम् ॥ १७—१८ ॥

तत् तस्य कर्म आर्जवमकौटिल्यं च गृणन्तः स्तुवन्तः ॥ १९-२० ॥

अवर्द्धत याञ्चातः प्रतिगृह्यतामिति बलिना पूर्वमुक्तत्वात् गुणत्रयं मया तत्कार्यं च आत्मनि सर्वाधिष्ठानत्वात् स्वस्मिन्नेव यस्य तत् अत एव भूः खमित्यादयो यस्मिन् आसत स्थितवन्तः ॥ २१ ॥

गुणानाम् आत्मके उत्तमाधिष्ठानादि भूतानि च इन्द्रियाणि च अर्थाः शब्दादयश्च आशयोऽन्तःकरणानि च जीवांश्च तैर्युक्तम् ॥ २२ ॥

तदेव प्रपञ्चयति—रसामिति पादोनैः सप्तभिः । रसां भूतलं महीं भूतलोपरिस्थान् नगरगृहाट्टालादीनित्यर्थः । महीध्रान् तदुपरिगतान् पर्वतानित्यर्थः । पतत्रिणस्तदुपरिचरान् पक्षिणः मारुतं गणं वायुसङ्गम् इन्द्रस्य सेनेव सेना यस्य सः ॥ २३ ॥

आत्ममुख्यान् बलिप्रधानानसुरान् भूतलस्थितोऽपि बलिः स्वेषां तज्जघनाधिष्ठानत्वाज्जघन एवैक्षत इत्यर्थः । एवमग्रेऽपि ज्ञेयम् ॥ २४ ॥

---

हृयङ्ग ! धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेन्दुम् ।
श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान् ॥ २५ ॥
इन्द्रप्रधानानमरान्भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि ।
केशेषु मेघाञ्छ्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥ २६ ॥
वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ।
अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥
स्पर्शे च कामं नृप ! रेतसाम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ।
छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च ॥ २८ ॥
नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ।
प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि ददर्श वीरः ॥ २९ ॥
सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ! ।
सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जावकं मुक्ताभरणानिशेषकनकमयमालावती अवनेजनीनां चरणप्रक्षालनार्थानामपामद्भिः भृतं पूर्णम् ॥ १७—२० ॥

तद्वामनं रूपम् अत्यद्भुतं यथा भवति तथा अवर्द्धत मम दैत्यपदा सम्मितामित्युक्तत्वाद्ब्रह्मचारिणः प्रतिगृह्णतामिति विपुलाप्युक्तत्वात् लोकत्रयं गृहीतुं किञ्चिदेवावर्द्धत तदेतन्महत्त्वं तु "कदाचिद्ब्रह्माण्डगणितानाण्डपरानुचर्यावाताध्वरोमविवरस्य च ते महित्वम्" इत्यादौ द्रष्टव्यम् गुणत्रयं प्रधानमात्मनि यस्य अत एव इत्यादयः यद्यत्र आसत स्थितवन्तः ॥ २१ ॥

गुणात्मके स्वाभाविकगुणाश्रये तस्य कायेन ऋत्विगादिसहितो बलिः एतद्विश्वं ददर्श ॥ २२ ॥

तदेव वर्णयति—रसामिति, पादोनैः सप्तभिः। रसां भूविवरात्मिकां मही भुवि उपरि भागं तदुपरि गतान् महीध्रान् तदुपरिचरान् पतत्रिणः मारुतगणं वायुसङ्घम् पादतलादिषु यथाक्रमम् इन्द्रस्य सेनेव सेना यस्य स बलिः अचष्ट अपश्यत् ॥ २३ ॥

आत्मा स्वयं बलिस्तत्प्रधानान् ॥ २४ ॥

भाषा टीका।

उस समय पर रानी विन्ध्यावलि जी मुक्ताओं के आभरणों की माला पहिरे हुये श्रीवामनजी के चरण धोने के लिये जल के भरे हुये सोने के कलश को ले आई ॥ १७ ॥

और यजमान राजा बलि श्रीवामनजी के छोटे२ श्रीमच्चरणार विन्दों को आनन्द से प्रक्षालन कर उस भुवन पवित्र करने वाले जल को मस्तक पर धारण करते हुए ॥ १८ ॥

उस समय आकाश में देव गण, गंधर्व, विद्याधर, सिद्ध, चारण, ये सब ही बलि के इस आर्जव कर्म को गाते हुए बड़े हर्षित होकर बलि के ऊपर पुष्पों की वर्षा करते हुए ॥ १९ ॥

और बारंबार दुंदुभी बाजने लगी, तथा हजारों गंधर्व किंपुरुष, किन्नर लोग गाने लगे, कि—इस मनस्वीने बड़ाही दुष्कर किया, क्योंकि ? जानकर भी वैरी को तीनों जगत दे दिये॥ २० ॥

बस फिर तो वह अनंत हरि का अद्भुत वामन रूप गुणत्रयात्मक बढने लगा कि—जिसमें पृथिवी, आकाश, दिशायें, स्वर्ग, पताल, पयोधि, मनुष्य, देव, ऋषि, इत्यादि ये सब स्थित हैं ॥२१॥

उस समय पर राजा बलि ने महाविभूति श्रीहरि के गुणात्मक शरीर में ऋत्विक आचार्य और सभासदों के सहित त्रिगुणात्मक सम्पूर्ण भूत, इन्द्रिय, अर्थ, आशय, जीव, युक्त विश्व को देखा ॥ २२ ॥

रसातल को पुरुष के चरणतल में देखा, और चरणों में पृथिवी को देखा, और विश्वमूर्ति के जानुदेश में पक्षियों को, ऊरू अर्थात् जाँघों में मरुतसमूह को इन्द्रसेन ने देखा ॥ २३ ॥

तथा विभु के वस्त्रों में संध्या को देखा, गुह्यस्थल में प्रजापतियों, को और जघन में अपने से आदि लेकर सब दैत्यों को देखा, तथा नाभि में नभ, कुक्षि में सातों समुद्रों को, और उरुक्रम के वक्षस्थल में नक्षत्र माला को देखा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

अङ्ग, हे राजन् ! समस्तान् रेफांश्च शब्दान् ॥ २५ ॥
द्यौश्च द्यां च ॥ २६ ॥
रसे रसने ॥ २७ ॥

पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ।
विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥ ३१ ॥
सुनन्दमुख्या उपतस्थुरीशं(१) पार्षदमुख्याः सह लोकपालाः ।
स्फुरत्किरीटाङ्गदमीनकुण्डलः श्रीवत्सरत्नोत्तममेखलाम्बरैः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रेतसा रेतसि क्रमणेषु पादन्यासेषु ओषधिजातय ओषधिजातीः ॥ २८ ॥

प्राणेष्विन्द्रियेषु ॥ २९ ॥

सर्वात्मनीत्यादिवाक्यान्तरम् । सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणाऽन्वयः ॥ ३० ॥

विद्याधरसंज्ञोऽसिः ॥ ३१ ॥

मीनकुण्डले मकरकुण्डले स्फुरन्ति किरीटादीनि यस्य सः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अङ्ग हे राजन्! हृदि धर्मं मुरारेः स्तनयोः ऋतं च शब्दसत्यमर्थसत्यं च सत्यं च तदभिमानिदेवतामित्यर्थः । अथ मनसि चन्द्रमसं वक्षस्यरविन्दं च हस्ते यस्यास्तां श्रियं लक्ष्मीं कण्ठे सामानि समस्तान् रेफांश्च शब्दादीन् ॥ २५ ॥

भुजेषु इन्द्रः प्रधानो मुख्यो येषां तान् सुरान् तस्य भगवतः कर्णयोः ककुभः दिशः मूर्ध्नि द्यौः द्यां च केशेषु मेघान् नासिकायां श्वसनं श्वासात्मकं वायुं बाह्वान्तरयोरूरुक्रमस्याक्ष्णोर्नेत्रयोः सूर्यं वदने मुखे वह्निम् ॥ २६ ॥

वाण्यान्तु छन्दांसि वेदान् रसने रसनेन्द्रिये जलेशं वरुणं भ्रुवोर्निषेधं निवृत्त्यात्मकं शास्त्रार्थं विधिं प्रवृत्त्यात्मकं शास्त्रार्थं पक्ष्मसु अहश्च रात्रिञ्च परमपुरुषस्य ललाटे मन्युमधरोष्ठे लोभम् ॥ २७ ॥

स्पर्शे त्वगिन्द्रिये कामं रेतसा जलं पृष्ठे त्वधर्मं क्रमणेषु पादन्यासेषु यज्ञं छायासु मृत्युमन्तकं हसिते मायां तनूरुहेषु लोमसु ओषधिजातीः ॥ २८ ॥

नाडीषु नदीः नखेषु शिलाः बुद्धौ अजं ब्रह्माणं देवगणानृषींश्च प्राणेषु इन्द्रियेषु गात्रे चराचरात्मकानि भूतानि सर्वाणि परस्परावलक्षणान्यपश्यत् ॥ २९ ॥

इत्थं सर्वात्मनि कृत्स्नजगदाश्रयभूते भगवतीदं भुवनं विश्वं निरीक्ष्य अङ्ग हे राजन्! सर्वेऽसुराः कश्मलं किमेतदित्याश्चर्यं दुःखं वा प्रापुः सुदर्शनञ्चक्रमित्यादीनामीशं भगवन्तम् उपतस्थुरित्युत्तरेणान्वयः । चक्रं विशिनष्टि, सुदर्शनाभिधमसह्यं तेजो यस्य. धनुर्विशिनष्टि, शार्ङ्गाभिधं स्तनयित्नोरिव घोषो यस्य तत् ॥ ३० ॥

जलजं शङ्खं विशिनष्टि, पाञ्चजन्याभिधः पर्जन्यस्येव घोषो यस्य. गदां विशिनष्टि, कौमोदक्यभिधा तरस्विनी बलवती असिं खड्गं विशिनष्टि, विद्याधराभिधो या विद्यायाः आधारः तस्यैव नन्दक इति नामान्तरञ्च तं चन्द्राकाराणि मण्डलानि यस्य तेन चर्मणा खेटाख्येन युक्तः तूणोत्तमौ तूणश्रेष्ठौ विशिनष्टि अक्षयसायकाभिधो इषुसम्बन्धं नाम ॥ ३१ ॥

(१)सुनन्दनः मुख्यः आदिर्येषां ते हरेः पार्षदाश्च लोकपालैः सहिता ईशमुपतस्थुः ईशस्य समीपे स्वस्वस्थानेषु स्थितवन्त इत्यर्थः । तदा हे राजन् उरुक्रमो भगवान् स्फुरद्भिः किरीटादिभिः मधुव्रतानां स्रक् पंक्तिर्यस्यां तया वनमालया चावृतो व्याप्तो ऽलङ्कृत इति यावत् रराज तत्र मीनाकारे कुण्डले रत्नोत्तमः कौस्तुभः कुण्डले इत्यन्तस्य पृथक्पदत्वे स्फुरन्ति किरीटादीनि यस्य सः श्रीवत्सादिभिर्वनमालया चावृतो रराजेत्यर्थः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समस्तरेफान् सर्वशब्दान् ॥ २५ ॥ २६ ॥
रसे रसनायां मन्युं क्रोधाभिमानिनं देवम् ॥ २७ ॥
रेतस उद्भूतम् ॥ २८—३० ॥
वैद्याधरो विद्याधरसम्बन्धी ॥ ३१ ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इथमिति पञ्चकम् । तत्र अधर एवेत्यस्मादेवकारः सर्वत्र योज्यः अधरप्रकाशाप्रकाशयोर्लोभालोभावगमात्तस्मिन् लोभश्चैवं छायासु तत्प्रकाशप्रतिकूलेषु भावेषु हसिते कौतुकविशेषे तदाभितैव सेति भावः ॥ २५—३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऋतं प्रियवाक्यं समस्तान् रेफान् रेफोपलक्षितानकारादिसर्ववर्णान् ॥ २५ ॥

द्यौश्च द्याम् ॥ २६ ॥

रसे रसने पक्ष्मसु पक्ष्मोन्मीलननिमीलनयोः ॥ २७ ॥

रेतसा रेतसि क्रमणेषु पादविन्यासेषु ओषधिजातीश्च ॥ २८ ॥

प्राणेष्विन्द्रियेषु ॥ २९—३० ॥

तदेव प्रत्यक्षीभूय सुदर्शनादयः ईशमुपतस्थुरिति व्याख्यामन्वयः । विद्याधरसंज्ञोऽसिः शतचन्द्रं फलकं तद्युक्तः ॥ ३१ ॥

पार्षदेषु मुख्याः सुनन्दमुख्या इति तेष्वपि सुनन्दो मुख्य इत्यर्थः । कुण्डल इत्यन्तं पृथक् पदम् ॥ ३२ ॥

(१) स्वपार्षदमुख्याः इति वीर० ।

(१) अत्र ( ३२—३३ ) श्लोकयोर्व्याख्या एकान्वयेन द्रष्टव्या सुधीभिः ।

मधुव्रतस्रग्वनमालया वृतो रराज राजन् ! भगवानुरुक्रमः ।
क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ॥ ३३ ॥
पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे विश्वरूपदर्शनं नाम
विंशोऽध्यायः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अङ्ग हे परीक्षित् ! ऋतं प्रियवाक्यं सत्यं च समस्तरेफान् शब्दान् ॥ २५ ॥

शौर्याम् ॥ २६ ॥

रसे रसने ॥ २७ ॥

स्पर्शे त्वगिन्द्रिये रेतसा रेतसि क्रमणेषु पादन्यासेषु मायाम् अत्याश्चर्यरूपं विश्वमोहिनीचेष्टाविशेषम् ओषधिजातयः ओषधिजातीः ॥ २८ ॥

प्राणेषु इन्द्रियेषु किं बहुना गात्रे देहे सर्वाणि भूतानि ददर्श ॥ २९ ॥

सर्वात्मनि सर्वाश्रये इदं भुवनं निरीक्ष्य असुरा कश्मलमापुः सुदर्शनमित्यादीनामीशमुपतस्थुरित्यनेनान्वयः ॥ ३१ ॥

सुनन्दनमुख्याः पार्षदाः मुख्याः अग्रतः स्थिता येषां ते ऋषयः केचित् लोकपालैः सहिताः ईशमुपतस्थुः स्फुरन्ति किरीटादीनि यस्य सः श्रीवत्सादिभिः ॥ ३२ ॥

---

भाषा टीका ।

हे राजन् ! मुरारि के हृदय में धर्म को, स्तनों में ऋत और सत्य को, मन में चन्द्रमा को, वक्षस्थल में कमलहस्ता लक्ष्मीजी को, और कण्ठ में साम वेद और समस्त शब्दों को देखा ॥२५॥

और हरि के भुजाओं में इन्द्रादिक देव, कर्णों में दिशायें, मस्तक में स्वर्ग केशोंमे मेघ, नासिका में पवन नेत्रों में सूर्य, मुख में अग्नि को देखा ॥ २६ ॥

और परम पुरुष की वाणी में छन्दों को जिह्वामें वरुण को, भृकुटि में विधि निषेध, पलकों में दिनरात, ललाट में मृत्यु अधर ( नीचे के होट ) में लोभ को देखा ॥ २७ ॥

तथा स्पर्शमें काम, वीर्य में जल, पीठ में अधर्म, चाल में यज्ञ, छाया में मृत्यु, हसन में माया, रोमों में ओषधियों की जाति ॥ २८ ॥

नाडियों में नदी, नखों में शिला, बुद्धि में ब्रह्मा, प्राणोमें देवगण और ऋषि लोगोंको, गात्र में स्थावर जङ्गम सर्व भूत प्राणियों को वीर राजा बलि ने देखा ॥ २९ ॥

इस प्रकार । हे राजन् ! सर्वात्मा श्रीहरि में इस भुवन को देखकर सब असुर लोग घबडाये और इतने में ही असह्य तेजवाला सुदर्शन चक्र, और मेघगम्भीर घोषवाला शार्ङ्गधनुष, ॥ ३० ॥

मेघ की गर्जना के सदृश घोषवाला पांचजन्य शङ्ख तथा बडे वेग वालीविष्णुकी गदा कौमोदकी, शतचन्द्र नामक ढाल सहित विद्याधरखड्ग और अक्षय बाणों से भरे हुए दोनों तरकस इत्यादिक सब प्रभु के अस्त्र शस्त्र ॥ ३१ ॥

और सुनन्द से आदि कर जो पार्षद हैं वे सब तथा समस्तलोकपाल, ये सब ही प्रभु को उपस्थित हुए, और उस समय भगवान् भी स्फुरायमाणकिरीट, बाजूबन्द, मकरकुण्डल, श्रीवत्स, और बहुत से रत्न तथा मेखला [कौंधनी] और वस्त्रों से ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मधुव्रतानां स्रजो यस्यां तया वनमालया श्रीवत्सादिभिश्चावृतो व्याप्तः उरुक्रमत्वमेवाऽऽह–क्षितिमिति ॥ ३३ ॥

द्वितीयं पदं क्रमतो विस्तृण्वतस्त्रिविष्टपं तदीयं किञ्चिन्मात्रं जातं तृतीयाय तु न किञ्चिदपि तत्र हेतुः उरुक्रमस्याङ्घ्रिस्त्रिविष्टपादुपर्युपरि गच्छन्महर्जनाभ्यां तपसश्च परं गतः सत्यलोकं गत इति॥३४॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उरुक्रमत्वमेवाह–बलेः सम्बन्धिनीं क्षितिम् एकेन पदा शरीरेण नभोऽन्तरिक्षं बाहुभिर्दिशः विचक्रमे आक्रान्तवान् ॥३३॥

एवमाक्र[illegible] द्वितीयं पदं त्रिविष्टपं क्रमतः हरेस्तृतीयाय पादाय तदीयं [illegible] अण्व्यल्पमपि वस्तु नासीत्. तत्र हेतुस्त्रिविक्रमस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अङ्घ्रिस्त्रिविष्टपादुपर्युपरि गच्छन्महर्जनाख्यां तपसश्च परं सत्यलोकं गतः इति ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कियत्पर्यन्तमवर्धतेति तत्राह, क्षितिमिति ॥ ३३ ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एकेन दक्षिणेन पदा विक्षिप्यमाणाचरणेन ॥ ३३ ॥

द्वितीयं वामचरणं विक्षिपतस्तस्य त्रिविष्टपं तदीयं तत्पदसम्बन्धि सत् अणु यत् किञ्चिदेव जातं तृतीयाय पुनर्विक्षिप्यमाणायामचरणायातु अणवपि नावशिष्टमित्यर्थः । शरीरादिभिर्नभ आदिव्याप्तिश्च भिक्षितत्रिपदमात्रभूमेरपि तस्य नाऽन्यायत्वा तावद्भूमावूर्ध्वाधस्थितेरप्यपेक्षितत्वात् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मधुव्रतानां स्रक् मालाकारसमूहो यत्र तथाभूतया वनमालया वृतो व्याप्तः उरुक्रमत्वमेवाह—क्षितिमिति । द्वितीयं वामपदं क्रममाणस्य तस्य त्रिविष्टपं तदीयं प्राप्तमेवाभूदिति शेषः । तृतीयाय तृतीयपदन्यासार्थम् अणवपि अणुमात्रमपि नावशिष्टमित्यर्थः । अत्र त्रिपदमात्रभूमेः प्रतिगृहीतत्वेऽपि भुजाद्यङ्गैर्नभ आदिव्याप्तिश्च नाऽन्यायत्वा तावद्भूमावूर्ध्वाधस्थितेरप्यपेक्षितत्वादिति सन्दर्भः । नभ आदीनामपि पदद्वयान्तर्भूतत्वात् पदद्वयेनैव व्याप्तिरुच्यत इत्यपरे ॥ ३३ ॥

द्वितीयं पदं कियत्प्रवृद्धमभूदित्यपेक्षायामाह—महर्जनाभ्यां सकाशात् तपसश्च सकाशात् परं सत्यलोकं गतः तदीयो नखस्तु कटाहं बिभेदेति केचित् अष्टावावरणानि भित्वा विरजाजले प्रविष्ट इत्यन्ये ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
विंशोऽध्यायोऽष्टमे स्कन्धे सङ्गतः सङ्गतः सताम् ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मधुव्रतानां स्रजो यस्याः तया वनमालया च आवृतोऽव्याप्तः रराज बलेः क्षितिम् एकेन पदा शरीरेण नभः बाहुभिर्दिशश्च विचक्रमे आक्रान्तवान् ॥ ३३ ॥

एकेन पदा क्षितिमाक्रम्य तस्यां द्वितीयपादप्रसारणावकाशाभावात् द्वितीयं पदं तदीयं त्रिविष्टपं प्रतिक्रमतः विक्षिपतः उरुक्रमस्य अङ्घ्रिः त्रिविष्टपात्स्वर्गात् उपरि उपरि गच्छन्महर्जनाख्यां तपसश्च परं सत्यलोकं गतः लोकत्रयं तदीयं पादद्वयपरिमितमपि नासीत् अथो तृतीयपादन्यासार्थं तदीयमणवपि अणुमात्रमपि नावशिष्टम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशोऽध्यायार्थप्रकाशः ॥ २० ॥

---

भाषा टीका ।

और हे राजन् ! मत्त भ्रमर युत माला और वनमालाओं से भी भगवान् उरुक्रम बड़ी शोभा को प्राप्त होते हुए ॥ और उस समय बलि राजा की पृथिवी को एक पग से नापली और आकाश को शरीर से, दिशाओं को बाहुओं से माप लिये ॥ ३३ ॥

और दूसरा पग उठाकर स्वर्ग भी नाप लिये, अब तीसरे पद के लिये बलि का कुछ अणुमात्र भी बाकी नहीं रहा । और उरुक्रम भगवान् का श्रीचरण तो ऊपर २ बढ़ताही गया, फिर महर्जन और तप से भी परे चले गये ॥ ३४ ॥

इति श्रीमद्भागवत अष्टमस्कन्ध में विंश अध्याय की
श्रीवृन्दावनस्थ भगवताचार्यकृत
भाषा टीका समाप्ता ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे विंशोऽध्यायः ॥ २० ॥

## ॥ एकविंशोऽध्यायः ॥

——:*:——

श्रीशुक उवाच ।

सत्यं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ।
मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव ! योगिनः ॥ १ ॥
वेदोपवेदा[1] नियमान्विता यमास्तर्केतिहासाङ्गपुराणसंहिताः ।
ये चापरे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ २ ॥
ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम् ।
अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोऽर्हणोदकम् ।
समर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः स्वयम् ॥ ३ ॥
धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र ! ।
स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ४ ॥

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ।
सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये ॥ ५ ॥
तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धाऽनुलेपनैः ।
धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ६ ॥
स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः ।
नृत्यवादित्रगीतैश्च शङ्खदुन्दुभिनिःस्वनैः ॥ ७ ॥
जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः ।
विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकविंशे पदापूर्त्तिमिषेण बलिबन्धनम् ।
विष्णुना कृतमुत्कर्षं तस्य व्यापयितुं जगे ॥

उरुक्रमस्याङ्घ्रिरुत्तपसः परं गत इत्युक्तं ततः किं वृत्तं तदाह—सत्यं सत्यलोकं प्राप्तं तमङ्घ्रिं समीक्ष्याऽब्जभवोऽभ्यगात् तथा मरीचिमिश्रा ऋषयश्चेति द्वयोरन्वयः। कथम्भूतोऽब्जभवः हरेरङ्घ्रेर्नखा एवेन्दवस्तैर्हता स्वधाम्नो द्युतिर्यस्य सः स्वयं च तैरावृतश्च ; हे नरदेव ! बृहद्व्रता योगिनश्च ॥ १ ॥

अङ्गानि शिक्षादीनि पुराणानि तत्संहिताश्च योग [illegible] समीरस्तेन दीपितं ज्ञानमेवाग्निस्तेन रन्धितं दग्धं कर्मकल्मषं कर्ममलं येषाम् ॥ २ ॥

ते च सर्वे तमङ्घ्रिं ववन्दिरे यस्याङ्घ्रेः स्मरणाऽनुभावतः अकर्मकं कर्मभिरप्राप्यम् विष्णोरङ्घ्रये स्वयं यस्य नाभिपङ्केरुहसम्भवस्तस्य विष्णोरङ्घ्रिं समर्च्य ॥ ३ ॥

लोकत्रयं निमार्ष्टि पवित्रयति ॥ ४ ॥

संक्षिप्ता उपसंहृताऽऽत्मविभूतिः स्वविस्तारो येन तस्मै यथापूर्वं वामनरूपेण स्थितायेत्यर्थः ॥ ५—८ ॥

---

(१) नियमानवान्विताः । इति वीर० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रिविक्रमस्याङ्घ्रिस्तपसः परङ्गत इत्युक्तम् ततः किं वृत्तं तदाह—सत्यमित्यादिना । सत्यं सत्यलोकं गतमभ्यमङ्घ्रिं समीक्ष्याब्जभवो ब्रह्मा तदङ्घ्रिनखेन्दुभिर्हृता स्वधाम्नो द्युतिर्यस्य तादृशः आदरयुक्तोऽभ्यगात् तथा मरीच्यादय ऋषयः हे नरदेव ! ब्रह्मनिष्ठाः सनन्दनादयो योगिनश्च ॥ १ ॥

वेदादयस्तदभिमानिदेवताः अन्ये च तल्लोकवासिनः योग एव समीरो वायुस्तेन दीपितेन ज्ञानाग्निना रन्धितं दग्धं कर्म पुण्यपापरूपं कर्म तदेव कल्मषं येषां ते तत्र नयान्विताः मीमांसान्यायोपेताः वेदोपवेदरूपा निगमाः तत्र ऋगादयो वेदाः आयुर्वेदादयः उपवेदाः अङ्गानि शिक्षादीनि पुराणानि ब्रह्मादीनि संहिताः पञ्चरात्रादयःत एते तत्तदभिमानिनो देवगणाः मरीच्यादयश्च ये चाकर्मकं ज्ञानयोगप्रचुरं स्वायम्भुवं धाम सत्य लोकंगताः तत्रोपितवन्तः ते सर्वे ववन्दिरे, तमङ्घ्रिमितिशेषः । यत्स्मरणप्रभावतः यस्यभगवदङ्घ्रेस्स्मरणप्रभावात् स्वायंभुवं धाम गताः इत्यनेन विच्छिन्नभगवद्भक्तियोगानां केषाञ्चिन्तन्निष्पत्तये प्राक्तनाभ्यासयोगप्रभावाच्चतुर्मुखलोकप्राप्तिरित्यभिप्रेतम्. नत्विदं क्रममुक्त्यभिप्रायकं, तस्या अप्रामाणिकत्वादिति भावः । अथ शुचिश्रवाः विमलकीर्त्तिः पद्मभवो ब्रह्मा स्वयं यस्य नाभिकमलादुत्पत्तिस्तस्य विष्णोरङ्घ्रये प्रोन्नमिताय प्रकृष्टमूर्ध्वं प्रसृताय अर्घ्याविक्रमर्घ्यादिकम् उपाहरत् समर्पितवान् एवं सम्यगभ्यर्च्य भक्त्याऽभ्यगृणादस्तौत् ॥ २ । ३ ॥

तदा हे नरेन्द्र ! धातुः पद्मजस्य कमण्डलुजलं तद्भगवत्पादयोः प्रक्षालनार्थे निक्षिप्तं उरुक्रमस्य पादयोरवनेजनेन प्रक्षालनेन निमित्तेन पवित्रतया स्वर्धुनी द्युनद्यभूत् सा स्वर्धुनी भगवतः कीर्त्तिरिव विशदा निर्मला नभसि ध्रुवमण्डले पतन्ती नभसोऽधः स्रवन्ती लोकत्रयं निमार्ष्टि पवित्रीकरोति ॥ ४ ॥

ततः संक्षिप्तोपसंहृता आत्मविभूतिः स्वदेहविस्तारो येन तस्मै यथापूर्वं वामनरूपेण स्थिताय स्वनाथाय भगवते लोकानां नाथाः सानुगाः ब्रह्मादयः बलिं पूजां तोयादिभिः समाजह्रुः कृतवन्तः ॥ ५ ॥

तत्र समर्हणैः तोयैरर्घ्यादिजलैः सुरभिभिरिति स्रगादीनां विशेषणम् उत्कराः गन्धकुसुमादयस्तैः ॥ ६ ॥

स्तवनैः स्तोत्रैः भगवद्वीर्यमहिमाङ्कितैः ॥ ७ ॥

ऋक्षराजो जाम्बवान् मनोवेगेन आगत्य भेरीशब्दैः सर्वासु दिक्षु विजयसूचकं महोत्सवरूपं घोषं कारयामास ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वस्वापहरणेऽपि भगवद्भक्तस्यायत्नापि मनोदुःखं न स्यादिति दर्शयितुमुत्तराध्यायारम्भः, तत्रादौ ब्रह्मणोऽरिथरागमने पादावनेजनादिगाहंस्थ्यधर्मप्रदर्शनप्रकारं वक्ति—सत्यमिति । हृता स्वधाम्नः सत्यनाम्नो द्युतिर्यस्य स तथा नखेन्दुभिर्हरेरिति शेषः । आवृतः परिवारैरिति शेषः । अभ्यगात्पाददर्शनामिति शेषः ॥ १—२ ॥

यस्य हरेः स्मरणाऽनुभावः निरन्तरोपासितप्रभावस्तस्मात् "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" इति यादवः । स्वायंभुवं स्वयं भुवो ब्रह्मणो विद्यमानं धाम गृहं सत्यलोकं गताः मरीचिप्रधानास्तस्य अकर्मणा ज्ञानेन प्राप्यं यत्तत्पदं ववन्दिरे इत्यन्वयः । यस्य हरेस्तस्य विष्णोस्तत्कमण्डलुजलं स्वर्धुनी स्वर्गङ्गा नदी अभूत् निमार्ष्टि शुद्धं करोति ॥ ३—४ ॥

असंक्षिप्ता सङ्कोचरहिता अपरिमितात्मभूतिः स्वरूपश्रीर्येन स तथा तस्मै "भूतिः श्रीर्जन्म भस्मनि" इति च ॥ ५—६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सत्यामिति सार्द्धयुग्मकम् । संहिताः ब्रह्मसंहिताद्याः अकर्मकं कर्मबन्धरहितं यथास्यात्तथा गताः अनन्तरं ब्रह्मणा सह मोक्षात् ॥ १ ॥ २ ॥ ३ ॥

धातुरिति पञ्चमस्कन्धे तु वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहबहिस्थ जलनिर्झर एव गङ्गेयं जाता सा च सहस्रयुगक्रमेणैव सुमेरुपृष्ठमवततारेत्युक्तं तत्रैवं प्रतिपद्यामहे यथाधुना गङ्गाविर्भवति तथाऽन्यदापीति श्रूयते यद्यपि पुराणान्तरे वाल्कवित्वं बलिवत्मवत् श्रीवामनागमनादिकम् एवमेव धुन्धुच्छलनं तस्मात् पूर्वं तथा व्यवहारः सम्प्रतित्वेवमेवेति स्थिते सतीदेहत्यागानन्तरं कैलासे गङ्गायमीनं सङ्गमवतीति निष्पन्ना शुभ्रा ॥ ४ ॥

ब्रह्मादय इति त्रिकम् ॥ ५—१५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आनम्रं चरणं ब्रह्मा दैत्यान् युद्धाभ्यवारयत् ।
बलिस्तं गरुडो बध्नादेकविंशेऽर्थकोविदः ॥

अङ्घ्रिः ब्रह्मलोकं गत इत्युक्तं ततः किं वृत्तमित्यत आह—सत्यामिति । तथा एव इन्द्रवस्तैः सह सत्यं सत्यलोकं समीक्ष्याब्जभवो ब्रह्मा अभ्यगात् मारीच्यादयश्चाभ्यगुः ववन्दिरे अब्जभवश्च ववन्दे इत्युभयेषामुभयोरुभयक्रियाम्वयः । कीदृशः ? नखेन्दुभिर्हृतास्तिरस्कृताः स्वधामद्युतयो यस्य सः स्वयं च तैरावृतहृत्स्व इति नखद्युतिभिरित्यस्य त्रिष्वप्यन्वयः । तर्को न्यायशास्त्रम् इतिहासो भारतादिः अङ्गानि शिक्षादीनि. पुराणानि ब्राह्मादीनि संहिता ब्रह्मसंहिताद्याः ॥ १ ॥ २ ॥

अकर्मकं न विद्यन्ते कर्मकाणि निकृष्टकर्माणि साधनत्वेन यस्य तम् अभ्यगृणात् तुष्टाव ॥ ३ ॥

कमण्डलुजलं पादावनेजनेन पवित्रंभूत्वा गङ्गाऽभूत् पञ्चमस्कंधे तु सुमेरुवर्णाने वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहबहिर्जलधारैव गङ्गा कचित्तु साक्षात्कारायण एव द्रवरूपेण गङ्गेत्यतो जलत्रितयमेव मिलितं गंगा ऽभूदिति ज्ञेयं पतती पतन्ती निमार्ष्टि पवित्रयति ॥ ४ ॥

सङ्क्षिप्तात्मविभूतये त्रिविक्रमस्वरूपमन्तर्धाप्य वामनस्वरूपेणैव स्थितायेत्यर्थः । तदैव ब्रह्मादयस्तत्रैवागत्य तोयादिभिः पाद्यादिभिर्बलिं पूजाम् आजह्रुरुपकल्पयामासुः ॥ ५ ॥ १० ॥

---

मही सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया।
ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः॥ ९॥

दैत्या ऊचुः।

न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः।
द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति॥ १०॥
अनेन याचमानेन शत्रुणा वटुरूपिणा।
सर्वस्वं नो हृतं भर्त्तुर्न्यस्तदण्डस्य बर्हिषि॥ ११॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ब्रह्मादिभिः भगवच्चरणाब्जपूजनं नन्दादिभिरसुरनिवारणं भगवतो बलिबन्धनं च कृतमिति वर्णयति—सत्यमित्येकविंशेन। उरुक्रमस्याङ्घ्रिः तपसः परं गतः इत्युक्तं तमेवाङ्घ्रिम् अब्जभवः सत्यं समीक्ष्य यथार्थमालोच्य अगात्तत्समीपं गतः कथम्भूतः अङ्घ्रिनखेन्दुभिः हृता स्वधामद्युतिर्यस्य सः ये मरीचिमिश्राः सनन्दनादयश्च वेदादयश्च तैरावृत इति द्वयोरन्वयः॥ १॥

वेदाः मूलभूताः श्रुतयः उपवेदाः आयुर्वेदादयः नियमायमान्विताः निवृत्तरहस्यसंहितानि प्रवृत्तरहस्यानि तर्काः पूर्वपक्षशास्त्राणि इतिहासपुराणसंहिताः वेदार्थभूतानि सिद्धान्तशास्त्राणि अङ्गानि शिक्षादीनि ये चान्ये योगसमीरदीपितेन ज्ञानाग्निना रन्धितं कर्मकल्मषं येषां तत्रत्या जनाः॥२॥

पद्मभवादयो न विद्यन्ते कर्माणि क्षुद्रकर्माणि यत्र तत्स्वायम्भुवं धाम यत्स्मरणाऽनुभावतो गतास्तमङ्घ्रिं ववन्दिरे शुचिश्रवाः शुद्धकीर्तिः ब्रह्मा स्वयं यस्य नाभिपङ्करुहसम्भवः तस्य विष्णोः अङ्घ्रये अर्हणोदकम उपाहरत् तेन समभ्यर्च्य प्रगृणावस्तौषीत्॥ ३॥

धातुः कमण्डलुजलं पञ्चमस्कन्धोक्तपादाङ्गुष्ठनखानिर्भिन्नोर्ध्वाण्डकटाहबहिर्जलधारासहितं उरुक्रमस्य पादावनेजनपवित्रतया स्वर्धुन्यभूत् भगवतः विशदा कीर्तिरिव लोकत्रयं निमार्ष्टि पुनाति॥ ४॥

सङ्कुचिता आत्मविभूतिः देहविस्तारो येन तस्मै वामनत्वेन स्थिताय॥ ५॥

लाजाश्च अक्षतानि अखण्डितानि फलानि अङ्कुराश्च तैः॥ ६—८॥

भाषा टीका।

श्रीरुक्मिणीप्राणजीवनो जयति॥

श्रीशुक उवाच॥

श्रीशुकदेवजी बोले, कि—जब उरुक्रम का चरण तप लोक से आगे सत्य लोक में पहुंचा, तब तो उस चरण के नख चन्द्रों से अपने धाम को प्रकाशित देखकर कमल से उत्पन्न होने वाले ब्रह्माजी और मरीचि प्रभृति बड़े २ व्रतधारी लोग तथा हे नरदेव! सनंदनादिक योगीलोग तत्काल चरण के समीप आये॥ १॥

और हे राजन्! वेद, उपवेद, नियम, यम, तर्क, इतिहास, पुराण, संहितायें। और योग रूप पवन से प्रदीप्त होने वाले ज्ञान रूप अग्नि से पक किये हैं कर्मों के कल्मष जिनोंने ऐसे सब लोग॥ २॥

जिस चरण के स्मरण के प्रभाव से, कर्मों से नहीं प्राप्त होने वाले ऐसे स्वायंभुव धाम को प्राप्त हुए हैं उसी श्रीचरण को वन्दन करते हुए॥ तदनंतर प्रकृष्ट उज्ज्वलित श्रीविष्णु के चरण के लिये ब्रह्माजी अर्घ्योदक (पूजनार्थ जल) ले आये, और जिनके नाभि कमल से आप उत्पन्न हुए हैं उन श्रीविष्णु के चरण का बड़ी भक्ति से पूजनकर स्तुति करते हुए॥ ३॥

हे नरेन्द्र! ब्रह्माजी के कमंडलु का वह जल ही श्रीउरुक्रम के चरणारविन्द के प्रक्षालन करने से पवित्र होकर, स्वर्धुनी अर्थात् श्रीगंगाजी होगया, जो कि आकाश में गिरती हुई तीनों लोकों को पवित्र करती है। जैसे कि भगवान की विशद कीर्त्ति॥ ४॥

जब भगवान त्रिविक्रम रूप होकर दो पगों में पृथिवी और स्वर्गादि लोकों को मापचुके, तब फिर जैसे के तैसे वामन रूप धारण करने पर बड़े २ लोकों के साथ ब्रह्मादिक। अपने अनुचरों सहित बड़े आदर पूर्वक, अपने स्वामी श्रीहरि को बलि भेंट ले कर समर्पण करते हुए॥ ५॥

और जल माला, दिव्य गंध वाले चन्दन, सुगंध धूप, दीप, लाजा [ धान की खीलें ] अक्षत, फल, अकुंर,॥ ६॥

और भगवान् के वीर्य और महिमा के प्रतिपादक स्तोत्र, और जयशब्द, बाजे, गीत, शंख, दुंदुभि के शब्द इत्यादिक उपचारों से सब लोग भगवान की पूजा करते हुए॥ ७॥

इतने बीच में मनके तुल्य वेग वाला जांबवान् नाम वाला ऋक्षराज, भेरी के शब्द करके सर्व दिशाओं में महोत्सव और भगवान् के विजय की घोषणा करता हुआ॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

[illegible] ...त्रिपदविषया या व्याजयाच्ञा कपटयाच्ञा तया स्वभर्तुः [illegible] हृतां दृष्ट्वाऽत्यमर्षिताः सन्तः ऊचुः॥ ९॥

[illegible] ...मुक्तदाह—न वै इति सार्द्धैस्त्रिभिः॥ १०। [illegible]॥

सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ।
नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १२ ॥
तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ।
इत्यायुधानि जगृहुर्बलेरनुचराऽसुराः ॥ १३ ॥
ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः ।
(१)अनिच्छतो बलेराजन्! प्राद्रवञ्जातमन्यवः ॥ १४ ॥
तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप ! ।
प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १५ ॥
नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ।
कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुचराश्च ते असुराश्च ॥ १३—१८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्रिपदविषया व्याजयाच्ञा कपटयाच्ञा तया हृतामपहृतां सर्वां भूमिं दृष्ट्वा सर्वे दैत्या दीक्षितस्य अभर्तुरम इति शेषः । ऊचुः अभर्तुर्महीं हृतां दृष्ट्वेति वान्वयः ॥ ९ ॥

तेषामुक्तिमाह—नवाइति सार्द्धैस्त्रिभिः । अयं वामनो ब्रह्मबन्धुर्द्विजो न भवति किन्तु मायाविनां श्रेष्ठो विष्णुरेव द्विजरूपेणा तिरोभावितस्वरूपस्सन् देवानां कार्यं कर्तुमिच्छति ॥ १० ॥

याचमानेन बटुरूपिणाऽनेन विष्णुना बर्हिषि यज्ञे निमित्ते न्यस्तः त्यक्तो दण्डो दुरात्मा विषयो येन तस्य नोऽस्माकं भर्तुः सर्वस्वमपहृतम् ॥ ११ ॥

नेदमस्मद्भर्तुरनुचितं कृत्यं किन्तु वामनस्यैवेत्यभिप्रायेणाहुः सततं सत्यव्रतस्य तथापि विशेषतो दीक्षितस्य यज्ञदीक्षायां स्थितस्य ब्रह्मण्यस्य दयावतश्च भर्तुस्तेनानृतं भाषितुं न शक्यम् ॥ १२ ॥

तस्मादस्य वामनस्यैवानुचितकारित्वादस्य वध एव न्याय्यः तद्देवास्मद्भर्तुः परमधिकं शुश्रूषणम् इतीत्थं वदन्तो बलेर्भृत्या दैत्या आयुधानि गृहीतवन्तः ॥ १३ ॥

सर्वे तेऽसुराः शूलादयः पाणिषु येषां ते बलेः आज्ञामप्यनिच्छन्तो जात उत्पन्नो मन्युर्येषां ते वामनं हन्तुं प्राद्रवन् प्रदुद्रुवुः ॥ १४ ॥

हे नृप ! तान्वामनस्याभिमुखमागच्छतः दैत्यान् दृष्ट्वा नन्दादयो विष्णोः पार्षदाः उत् उद्यतानि आयुधानि येषां ते प्रहस्याहोऽस्मै पराक्रमं कर्तुमिच्छन्तीति परिहासं कुर्वन्तोऽर्थः । प्रत्यषेधयामासुः ॥ १५ ॥

सर्वे चैते नन्दादयो गजायुतबलाः नागायुतप्राणाः इति बलस्य न्यूनतानिवृत्तौ तात्पर्यम् अतिशयबला इतिभावः नन्दादयः विष्णुपार्षदाः आसुरीश्चमूः समाजघ्नुर्हतवन्तः नागायुतप्राणा इति चमूविशेषणं वा ॥ १९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नवं ब्रह्मबन्धुर्न वै किश्चिद्विष्णुः ॥ १०—१९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्द इत्यादि युग्मकम् । एषामकस्मादाविर्भावेन नित्यभगवत्पार्श्ववर्तित्वं बोधयति गुप्ततया व्यवस्थानात् जयविजयाविमौ वैकुण्ठान्तरसम्बन्धिनौ नागा अत्र वैकुण्ठस्था एव ज्ञेयाः अनुस्मरन् अनुस्मारयन् ॥ १६—१८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बर्हिषि यज्ञे ॥ ११—१५ ॥

जयविजय इति भगवतो ब्रह्मण्यस्य भक्तानामपराधविभीषिकायाश्च प्रदर्शनार्थमेवानयोः प्रकाशावेव वैकुण्ठाद्धः पेततुरिति तृतीये वैकुण्ठवर्णन एव व्याख्यातं नागा हस्तिनस्ते च लोकालोकोपरिवर्तिनो भगवद्विभूतिरूपा वैकुण्ठवर्तिनो वा ज्ञेयाः ॥ १६—२१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभर्तुर्बलेः ॥ ९—१२ ॥

अनुचराश्च तेऽसुराश्च ॥ १३—१५ ॥

(१) अनिच्छन्तो बलेराज्ञामिति वीर० ।

जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ।
सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीम् ॥ १७ ॥
हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः ।
वारयामास संरब्धान् काव्यशापमनुस्मरन् ॥ १८ ॥
हे विप्रचित्ते ! हे राहो ! हे नेमे ! श्रूयतां वचः ।
मायुध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ १९ ॥
यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ।
तं नाऽतिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २० ॥
यो नो भवाय प्रागासीदभवाय दिवौकसाम् ।
स एव भगवानद्य वर्तते तद्विपर्ययम् ॥ २१ ॥
बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभिः ।
सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २२ ॥
भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ।
दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः ॥ २३ ॥
एतान्वयं विजेष्यामो यदि दैवं प्रसीदति ।
तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २४ ॥

भाषा टीका ।

अब तो सम्पूर्ण पृथिवी को तीन पग के मांगने के छल से छली हुई देखकर अपने भर्ता दीक्षित राजा बलि के किंकर लोग अति असहन कर बोले ॥ ९ ॥

बलि के दैत्य लोग बोले, कि- भाई हो ! यह निश्चय कर ब्राह्मण-धम नहीं है किंतु मायावियों में श्रेष्ठ यह विष्णु है, परंच द्विज रूप से प्रतिच्छन्न होकर देवताओं के कार्य करने की इच्छा करता है ॥ १० ॥

इस याचना करने वाले बटुरूपधारी ने, यज्ञ में त्यक्त दंड ऐसे हमारे भर्ता का सर्वस्व हरण कर लिया ॥ ११ ॥

बलि महाराज तो सदा सत्यव्रत हैं तिसमें इस काल में विशेष करके यज्ञ की दीक्षा लिये हुए हैं और तिस पर भी ब्रह्मण्य हैं ब्राह्मणप्रिय हैं वह कभी झूठ बोल ही नहीं सके हैं ॥ १२ ॥

तस्मात् इसका इस समय पर वध करना ही धर्म है, और इसमें हमारे भर्ता की शुश्रूषा भी है, ऐसा कहकर बलि के अनुचर लोगों ने अपने आयुध लिये ही तो सही ॥ १३ ॥

हे राजन् ! वे सब राजा बलि की बिना इच्छा के भी बड़े क्रोधित होकर शूल और पट्टिश हाथों में लेकर वामनजी को मारने को दौड़े ॥ १४ ॥

हे नृप ! विष्णुके अनुचरों ने उन दैत्य सैनापतियों को सन्मुख दौड़े हुए आते देखकर हँसकर ऊँचे को आयुध उठाकर निषेध किया ॥ १५ ॥

नंद, सुनन्द, जय, विजय, बल, प्रबल, कुमुद, कुमुदाक्ष, विष्वक्सेन, गरुड, ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्थकरनुकूलः ॥ १९ ॥
पौरुषैस्तं कालमतिवर्तितुं पुमानीश्वरः समर्थो न भवति ॥ २०--२२ ॥
हरेरनुचरा देवाः दैवेन ऋद्धैः समृद्धैर्भवद्भिः ॥ २३ ॥
अर्थत्वायाऽऽनुकूल्याय ॥ २४ ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परमपुरुषपार्षदैर्हन्यमानान् स्वकीयान्दैत्यान् दृष्ट्वा बलिः [illegible] विराड्हृदयमे [illegible] इत्युक्तविधमनुस्मरन्नेव [illegible] वारयामास ॥ १८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वाक्यप्रकारमेवाह पद्भिः । हे विप्रचित्त्यादयः ! मद्वचः शृणुत । युष्माभिरिति शेषः । किमर्थं युद्धं न कुरुत किन्तु ततो निवर्तध्वं नोऽस्माकम् अयं कालोऽर्थकृदनुकूलो न भवति ॥ १९ ॥

हे दैत्याः ! यः कालरूपो भगवान् सर्वभूतानां प्रभुः यदा दुःखदस्तदा तद्दुःखस्य आनुकूल्याय सुखाय निमित्ताय चेति यावत । पुमान् कालग्रस्तः पौरुषैः स्वकीयबलपराक्रमादिभिरतिवर्तितुं नेश्वरो न समर्थः ॥ २० ॥

यः कालरूपो भगवान् पूर्वमस्माकं भवाय सुखायासीत् । स एवाधुना तद्विपर्ययमवस्माकं दुःखदो भूत्वा विबौकसां देवानां भवाय भवति ॥ २१ ॥

अतो अतो बलादिभिरुपायैः कालात्मकम् ईश्वरं नात्येति नातिक्रामति मन्त्रिभिर्मन्त्रिगणकृतकर्मभिरिति भावः ॥ २२ ॥

कालप्रभावं पश्यतेत्याह—भवद्भिरिति । दैवेनोऽसमृद्धैर्भवद्भिरेते हरेर्भगवत इन्द्रस्य वाऽनुचराः देवाः प्रायशो निर्जिताः त एवाधुना नोऽस्मान् युद्धे जित्वा नदन्ति सिंहनादान्कुर्वन्ति गर्जन्ति वा धातूनामनेकार्थत्वात् ॥ २३ ॥

यदि दैवमस्माकमनुकूलं भवति तर्हि तान्वयं विजेष्यामस्तस्मात्कालं प्रतीक्षध्वं, कं ? यः कालो नोऽस्माकमर्थत्वायानुकूलत्वाय भवति तं कालं प्रतीक्षध्वम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वांस्वां स्वस्य प्रायाम् असुरसेनाम् ॥ १७—१९ ॥
पौरुषैः पुरुषकारैः ॥ २०—२४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हे विप्रचित्ते ! इत्यादिवाक्यान्यपि तत्सान्त्वनतात्पर्याशयेन न तु परमार्थविचारतात्पर्याणि अतएवैतान् विजेष्याम इत्युक्तम् ॥ १९ ॥ २० ॥

तद्विपर्ययं तथाव्याख्यातम् ॥ २१ ॥ २२ ॥

दैवेन दैवात्मकेन कालेन ॥ २३—३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालं कालरूपिणां प्रभुम् ॥ २२ ॥

एवं तत्त्वोपदेशमनुकूलन्तः तमोग्रस्तानसुरानालक्ष्य प्रोत्साहनेन दैन्यानुकूलमत्रोपदेशेन निवर्तयितुमाह—भवद्भिरिति । दैवेन ऋद्धैः समृद्धैर्भवद्भिः ॥ २३ ॥

अर्थत्वाय अर्थसाधकत्वाय ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जयविजयौ असुरभावकृताभ्यां जयविजयाभ्यामन्यौ ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥

तं प्रभुम् अतिवर्तितुं पौरुषैः पुमानीश्वरो न स्यात् ॥ २० ॥ ॥ २१ ॥ २२ ॥

दैवेन ऋद्धः समृद्धैः हरेरनुचरा इन्द्रादयः ॥ २३ ॥

अर्थत्वाय आनुकूल्याय ॥ २४ ॥ २५ ॥

---

### भाषा टीका ।

जयन्त, श्रुतदेव, पुष्पदन्त, सात्वत, ये सब पार्षद लोग दश दश हजार हाथी के तुल्य बलवाले, अपने ऊपर टूटकर आने वाली उस असुरी सेना के ऊपर प्रहार करने लगे [ यद्यपि विष्णुपार्षद अपरिमित बल वाले हैं, तथापि जहां जितनी आवश्यकता वहां उतने ही दिखाने की रीति है ] ॥ १७ ॥

उस समय पर अपने दैत्यों को परम पुरुष के अनुचरों से हन्यमान ( ताडित ) देखकर, शुक्राचार्य के शाप का स्मरण कर बलि ने अपने अनुचरों को युद्ध निवारण किया ॥ १८ ॥

और बलि कहने लगे, कि-हे विप्रचित्ते ! हे राहो ! हे नेमे ! तुम लोग हमारा वचन तो सुनो-अभी यह काल अपना प्रयोजन सिद्ध करने वाला नहीं है, किन्तु विपरीत है इसी से युद्ध न करो निवृत्त होजावो ॥ १९ ॥

हे दैत्यो ! जो सर्व प्राणियों के सुख दुःख की सिद्धि करने को समर्थ है उस काल के पलटाने को पुरुष किसी प्रकार भी समर्थ नहीं ॥ २० ॥

जो काल प्रथम हम लोगों का अनुकूल रहा, और देवताओं का प्रतिकूल रहा, वही भगवान् कालरूप इस समय हमारा विपरीत हो रहा है ॥ २१ ॥

पुरुषको जानना चाहिये कि-बलसे मन्त्रियोंसे दुर्ग अर्थात् किला कोट आदि सामग्रीसे तथा मन्त्र औषधादि से वा सामाजिक उपायोंसे काल का अतिक्रमण कोई भी नहीं कर सक्ता है ॥ २२ ॥

प्रथमकाल मे इन हरि (इन्द्र) के अनुचर अर्थात् देव लोगों को परम समृद्ध तुम लोगों ने जीते थे आज वही लोग तुमको जीत कर गर्जते हैं ॥ २३ ॥

यदि फिर हम पर दैव प्रसन्न होगा तो हम लोग भी इनको जीतेंगे । तस्मात् समय की प्रतीक्षा करो कि जो समय हमारा अनुकूल आवे ॥ २४ ॥

---

श्रीशुक उवाच ।

पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ।
रसां निर्विविशू राजन्! विष्णुपार्षदताडिताः ॥ २५ ॥
अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् ।
बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतोः ॥ २६ ॥
हाहाकारो महानासीद्रोदस्योः सर्वतो दिशम् ।
गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २७ ॥
तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ।
नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ! ॥ २८ ॥
पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर! ।
द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ २९ ॥
यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ।
(१)यावद्वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३० ॥
पदैकेन मया क्रान्तो भूर्लोकः खं दिशस्तनोः ।
स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ॥ ३१ ॥
प्रतिश्रुतमदातुस्ते निरये वास इष्यते ।
विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विशु पार्षदु राजन इति विराट् प्रभोश्चिकीर्षितं ज्ञात्वा अयमर्थः अस्य सर्वस्वाऽपहारेण ममेत्यभिमानं मन्याऽजेदानीं देहस्वीकारेणाहङ्कारमपि त्याजयित्वा परमाऽनुग्रहं कर्तुमिच्छति नचानेन तुल्योऽन्यः कोऽपि सत्यसन्धो धीरो वाऽस्तीति तद्यशः-प्रख्यापनार्थं किञ्चित्पातयितुमपीच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबन्धेति. सौत्येऽहनि सोमाभिषवदिने ॥ २६ ॥

रोदस्योर्द्यावापृथिव्योः ॥ २७—२९ ॥

असौ सूर्यः ॥ ३० ॥

मया आत्मनेत्यन्वयः रूपापेनेत्यर्थः। खं च दिशश्च तनोः तथा ते स्वं स्वकीयं सर्वस्वम ॥ ३१ ॥

गुरुणा शुक्रेणानुमोदितस्सन् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रत्युर्बलेर्निगदितं श्रुत्वा विष्णुपार्षदैः पीडिताः दैत्या हे राजन् ! रसां रसातलं निर्विविशुः ॥ २५ ॥

अथ विमोचनमस्य चिकीर्षितं ज्ञात्वा विराट् विशेषेण रा[illegible]

इति तथा तार्क्ष्यसुतो गरुडः सौत्येऽहनि सोमाभिषवदिने वारुणैः पाशैर्बलिं बबन्ध विमोचिकीर्षितं ज्ञात्वेत्यस्यायमर्थः । अस्य सर्वस्वापहारेण ममेत्यभिमानं मत्वाऽधुनेदानीं देहस्वीकारेणाहङ्कारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति न चानेन तुल्योऽन्यः कोऽपि सत्यसन्धो धीरो वाऽस्तीति तद्यशःप्रख्यापनाय किञ्चित्पातयितुमपीच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबन्धेति ॥ २६ ॥

प्रभविष्णुना सर्वशक्तिना विष्णुना दैत्यानां पत्यौ बलौ निगृह्यमाणे बध्यमाने सति रोदस्योर्द्यावापृथिव्योः सर्वदिक्षु महान् हाहाकार आसीत् ॥ २७ ॥

अथ भगवान्वामनस्तं वारुणैः पाशैर्बद्धमित्युवाच, कथम्भूतम् ? नष्टा श्रीर्यस्य तं स्थिरचित्तं प्राज्ञं निश्चितमुदारं विपुलं यशो यस्य तम् ॥ २८ ॥

उक्तिमेवाह—पदानीति यावदध्यायसमाप्ति । हे असुर ! त्वया भूमेस्त्रीणि पदानि मह्यं दत्तानि दास्यामीति प्रतिश्रुतानि तत्र द्वाभ्यां पदाभ्यां सर्वा भूर्लोकादिसहिता भूमिः क्रान्ता परिच्छिद्य परिगृहीता अधुना तृतीयं पदम् उपकल्पय देहि ॥ २९ ॥

यावदसौ सूर्यः किरणैस्तपति तथेन्दुर्यावन्नक्षत्रैः सह [illegible] जन्यो मेघो यावद्वर्षति तावत्येव हि त्वसम्बन्धनीयं

(१) यावद्वर्षति पर्जन्यः इति वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सोयं कृत्स्नो भूर्लोकः मम मया आत्मनैकेनैव पदेन क्रान्तः खं दिशश्च तनोः तन्वा क्रान्ताः तथा ते तव पश्यतस्तत एव स्वः स्वकीयः स्वर्लोकस्तु द्वितीयेन पदेन क्रान्तः ॥ ३१ ॥

प्रतिश्रुतं तृतीयं पदमदातुस्तव नरके एव निवास इष्यते तस्मात्प्रतिश्रुताऽदानाद्गुरुणा शुक्रेणाऽनुमोदितश्च चशब्दो हेत्वर्थः गुरुणा शप्तत्वाच्चेत्यर्थः । नरकं प्रविश ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रसां रसातलम् ॥ २५ ॥

विराट् पक्षिराट् क्रतोस्सौत्येऽहनि क्रतोः सोमपानदिवसे ॥ २६—२९ ॥

पदत्रयमितं भूपरिमिताऽतः कथं तृतीयमुपकल्पय ? इत्युच्यते इति तत्राह, यावदिति ॥ ३० ॥

अस्तु भूमेरियत्ता तथापि त्वत्पादप्राक्कल्पितपदस्याणुत्वेन तन्मितत्वेन किमनुपपन्नमित्याशङ्क्यैवं पदमलौकिकमित्याशयेनापूर्तिमाह—पदेति ॥ ३१ ॥

आत्मना प्रतिश्रुतं स्ववित्तमदातुस्तव यतो नष्टप्रतिज्ञत्वात् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वमिति भूर्लोकादौ सर्वत्र योज्यम् ॥ ३१—३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रसां रसातलम् ॥ २५ ॥

विष्णु पार्षदेषु राजन् इति विराट् प्रभोश्चिकीर्षितं ज्ञात्वेति अस्य ममतास्पदं सर्वमङ्गीकृत्य अहन्तास्पदमप्यङ्गीकर्तुमिच्छति मत्प्रभुः प्रतिदानसामर्थ्याभावोत्याऽस्य ऋणी भवन् द्वारपालो बभूवेति अस्य भक्ताधीनत्वं भक्तस्य च सर्वोत्कर्षं लोकेषु ख्यापयितुमतो दण्डेनात्मनश्चरमस्य धैर्यं दर्शयामि सर्वलोकानिति बबन्ध सौत्येऽहनि सोमाभिषवदिने ॥ २६ ॥ २७ ॥

रोदस्योर्द्यावापृथिव्योः प्रणष्टश्रियं विगतसम्पत्कं तदपि स्थिरप्रज्ञम् अक्षुण्णश्रियं यत उदारयशसं सम्पत्तेरपचयेपि यशसोऽप्युपचयं प्राप्तुमित्यर्थः ॥ २८ ॥

महीन्तरस्वामिकं स्थानम् ॥ २९ ॥

असौ सूर्यः तमांस्तम्भा इदं त्वदीयं धनम् आत्मना स्वरूपेणैव मया त्रिविक्रमत्वमप्यदीयं स्वरूपमिति भावः । पदैकेन मया क्रान्त इति पूर्वतो लोकालोकः, एकेनैव पदा मया क्रान्त इत्यर्थः ॥ ३० ॥ ३१ ॥

तर्हि मया किं कर्त्तव्यमिति चेत् निरये वासः क्रियतामिति तस्य धीरत्वं निरुपाधिभक्तिनिष्ठां च लोके ख्यापयितुं प्रकटमाह—प्रतीति । निरये नरके गुरुणा अनुमोदित इति किमहं युक्तं प्रावोचमयुक्तं चेति त्वं स्वगुरुं विद्वांसं शुक्राचार्यमेव पृच्छेति भावः । वस्तुतस्तु भक्तानामसत्यापि नरकासम्भवात् प्रतिश्रुतमदातुरपि ते निरये त्वयोरैक्यात् निलये मदीये वैकुण्ठे वास इष्यते उचितो भवति । यद्यपि तदपि संप्रति निलयं मया दीयमानं वैकुण्ठाख्यं मदीयस्थानविशेषं विद्धि त्वदधिकारान्ते एव वैकुण्ठे त्वां वासयिष्यामीति भावः । गुरुणा शुक्रेणेति यद्यपि त्वं स्वगुरुं तं मद्विमुखं ज्ञात्वा संप्रत्यवमन्यसे तदपि स त्वद्विषयकस्नेहभरेणैव लुप्तविवेको ममातिप्रिय एव भवाऽव गतः अतस्तेन सहैव विशेत्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विराट् पक्षिराट् तार्क्ष्यसुतः कश्यपपुत्रः पदद्वयेनास्य सर्वस्वं मया गृहीतमथ तृतीयपदपूर्त्यर्थमात्मानमपि गृहीत्वा प्रतिश्रुतस्याप्रदानेन शुक्रोक्तनरकार्हत्वशङ्कां निराकरिष्यामि बन्धनक्षोभयैव शूरशिरोमणेरस्य निर्विकारत्वं स्वानन्यभक्तत्वं च ख्यापयिष्यामीति विभुचिकीर्षितं ज्ञात्वा क्रतोः सौत्येऽहनि सोमाभिषवदिने वारुणैः पाशैर्बबन्ध ॥ २६ ॥

निगृह्यमाणे बध्यमाने सति रोदस्योः द्यावापृथिव्योः सर्वतो दिशं सर्वासु दिक्षु ॥ २७—२९ ॥

असौ सूर्यः ॥ ३० ॥

मया आत्मना ते पश्यतः स्वं त्वदीयं सर्वं क्रान्तः तत्र पदैकेन भूर्लोकः क्रान्तः खं दिशश्च तन्वा क्रान्ताः द्वितीयेन पदेन स्वर्लोकः क्रान्तः ॥ ३१ ॥

गुरुणा शुक्रेण ॥ ३२ ॥

---

भाषा टीका ।

॥ श्रीशुक उवाच ॥

दैत्य दानव और यूथप लोगों ने अपने स्वामी का वाक्य सुनकर हे राजन् ! विष्णु पार्षदों से ताड़ित होकर भी रसातल में प्रवेश किया ॥ २५ ॥

तदनन्तर प्रभु का अभिप्राय जानकर गरुड़ जी ने यज्ञ के सोमपान के दिवस में ही बलिको वरुण के फांस में बांध लिया ॥ २६ ॥

जबकि प्रभविष्णु विष्णुने बलिको इस प्रकार निगृहीत किया तबतो पृथिवी आकाश और सर्वदिशाओं में बड़ा हाहाकार मचगया ॥ २७ ॥

हे नृप ! श्री के नष्ट होनेपरभी स्थिर प्रज्ञावाले और उदार यश वाले राजा बलिको इसप्रकार वरुण के पाशों से बंधे हुए पर भगवान बोले ॥ २८ ॥

वृथा मनोरथस्तस्य दूरे स्वर्गः पतत्यधः ।
प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते ॥ ३३ ॥
विप्रलब्धो ददामीति त्वयाहं चाऽऽढ्यमानिना ।
तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समाः ॥ ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे बलिनिग्रहो नाम
एकविंशोऽध्यायः ॥ १७ ॥

भाषा टीका ।

हे असुर ! तूने हमको तीन पग भूमि देने को कही रही तिसमें हमने दो पगोंमे सब भूमिको आक्रमण करली अब तीसरे पगको और भी सम्पादन करो ॥ २९ ॥

और तुमारी तो इतनी ही भूमि है ना ? कि जहां तक सूर्य किरणों से तपता है, और जहां तक तारों सहित चन्द्र प्रकाश करता है, और जहां तक मेघ वर्षते हैं ॥ ३० ॥

देखो, एक पग से तो हमने भू लोक माप लिया और आकाश तथा दिशाओं को शरीर से माप लिया और तेरा सर्वस्व जो स्वर्ग रहा सो तेरे देखते २ हमने दूसरे पग से माप लिया ॥ ३१ ॥

अब प्रतिज्ञा पूर्वक दिये हुए को जो तू नहीं देगा तब तेरा नरक में वास होगा तस्मात् तुम अब गुरुजी से अनुमोदित होकर नरक में प्रवेश करो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमुक्तेऽपि निरयपरिहारार्थं स्वर्गभ्रंशपरिहारार्थं च मनोरथं कुर्वन्तं प्रत्याह—वृथेति । यः प्रतिश्रुतस्यादानेन याचकं विप्रलम्भते तस्य मनोरथो वृथैव स्वर्गश्च तस्य दूर एव स चाधः पतत्येव ॥ ३३ ॥

त्वया चाहं विप्रलब्धस्तस्माद्व्यलीकस्यानृतस्य फलं निरयं भुङ्क्ष्वेत्यर्थः ॥ ३४ ॥

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तेपि निरयपरिहारार्थं स्वर्गभ्रंशपरिहारार्थञ्च मनोरथकुर्वन्तं प्रत्याह—वृथेति । यः पुमान् प्रतिश्रुत्य तदर्थितं प्रतिश्रुतं नार्पयते न ददाति तस्य मनोरथः प्रायशो व्यर्थ एव स्वर्गश्च तस्य दूर एव स चाधःपतत्येव ॥ ३३ ॥

त्वया च आढ्यमात्मानं मन्यत इति ताद्दशस्तेनाढ्य...



प्रतिश्रुतवताहं विप्रलब्धो वञ्चितः तस्माद्व्यलीकफलमनृतफलरूपं नरकं कतिचित्समाः संवत्सरान् भुङ्क्ष्व ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्च यः प्रतिश्रुतं न पूरयति तस्य स्वर्गमाप्नुयामीति मनोरथो मृषा भवति प्रतिश्रुतैकदेशदानेनापि मनोरथः स्यादिति चेत्सत्यं तत्फलं स्वर्गं प्राप्यापि पुनस्ततोऽदानदोषेण निकृष्टां तिरश्चां योनिमाप्नोतीत्याह—दूरमिति । अधः पतित्वा दूरं यातीत्यर्थः ॥ ३३ ॥

प्रतिश्रुतैकदेशदानात्फलप्राप्तिः स्यादित्यभ्युपगम्य चेदमुक्तं तत्तदपि न स्यात्किन्तु निरयनिवास एव विप्रलम्भदोषादित्याह—विप्रलब्ध इति । तत्तस्माद्व्यलीकफलमनृतफलम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निरये पाताल इत्यर्थः । अधोगमनसाम्यात् पूर्वोक्तमेव सामान्यनिरूपणेन द्रढयति—वृथेति युग्मकेन । तत्र "प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते" इति पद्यार्द्धं क्वचिन्नास्ति किन्तु स्वामिसम्मतमिति लक्ष्यतेच इत्यर्थः इत्यस्य वैयर्थ्यात् ॥ ३३—३४ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृथेति प्रकटार्थः कृपष्ट अग्रिमभगवद्वाक्यतत्फलदृष्ट्या ... व्याख्यायते तस्य प्रतिश्रुतस्य भवतः इत्यत्र-

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मद्भुपात्समिति मनोरथो वृथैव यतस्त्वसौ वैकुण्ठस्यात् सकाशात् दूरः स्वर्गोऽधः पतति संप्रत्यपि भवान् सुतलं प्रस्थाप्यमानोऽपि स्वर्गाद्दूरमधिरोहसि सुतलवश्यभोगस्य स्वर्गेऽप्यविद्यमानत्वादिति भावः । यो भवान् स्वदेहात्मसर्वस्वसमर्पणात् प्रतिश्रुतस्य मा सम्यक्प्रकारतो दानेन मामर्थिनं पुरुषार्थचतुष्टयवन्तमपि विशेषतः प्रकर्षेण लम्भते त्वदीयद्वारपालो भूत्वा स्थास्यामीति भावः ॥ ३३ ॥

ततः किमितिचेत् ? श्रूयतामित्याह–विप्रलब्ध इति । प्रकटार्थस्तु स्पष्टः वस्तुतस्तु मादृशेभ्यः शक्रादिभ्योपि मानिना लोकैर्दीयमानसम्मानवता त्वयाहं यतो विशेषतः प्रकर्षेण लब्धः तस्मात् इति ददामि स्वर्लोकं विगतार्तिकं मया दीयमानत्वात् परमश्रेष्ठं फलं यत्र तत् निलयं सुतलसम्बन्धिस्थलं कतिचित्समाः सम्वत्सरान् व्याप्य भुंक्ष्व ततोऽष्टमे मन्वन्तरे स्वामिन्द्रपदं प्रापय्य स्वधाम वैकुण्ठमेव नेष्ये इति भावः ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकविंशोऽष्टमस्कन्धे सङ्गतःसङ्गतःसताम् ॥२१॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यः प्रतिश्रुतस्य अदानेन अर्थिनं विप्रलभते तस्य मनोरथो वृथैव तस्य स्वर्गः दूरे एव स च अधः पतत्येव ॥३३॥३४॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशोऽध्यायार्थकाशः ॥ २१ ॥

---

### भाषा टीका ।

जो कहे हुए पदार्थ को नहीं देता है और बिचारे याचकों को व्यर्थ ठगता है उसका मनोरथ वृथा है और उसको स्वर्ग दूर है और वह पुरुष फिर नीचे पड़ता है ॥ ३३ ॥

ऐसे ही तूने भी अपने को बड़ा धनी मानकर "यथेच्छ पृथिवी ग्रहण करो" ऐसा कहकर हमको ठगा है । सो अब इस झूंठ का फल कित एक वर्षों तक नरक भोगो ॥ ३४ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में एकविंश अध्याय
की, श्रीवृन्दावनस्थ भागवताचार्यकृत
भाषाटीका समाप्ता ॥२१॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

---

## ॥ द्वाविंशोऽध्यायः ॥



श्रीशुक उवाच।

एवं विप्रकृतो राजन्! बलिर्भगवताऽसुरः।
भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः॥ १॥

बलिरुवाच।

यद्युत्तमश्लोक! भवान्ममेरितं वचो व्यलीकं सुरवर्य! मन्यते।
करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम्॥ २॥
बिभेमि नाहं निरयात्पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात्।
नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा॥ ३॥
पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम्।
यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि॥ ४॥
त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः।
यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत्॥ ५॥
यस्मिन्वैरानुबन्धेन रूढेन विबुधेतराः।
बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः॥ ६॥
तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा।
बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे॥ ७॥
पितामहो मे भवदीयसम्मतः प्रह्लाद आविष्कृतसाधुवादः।
भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वत्परमः स्वपित्रा॥ ८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

द्वाविंशे तु प्रसन्नः सन् प्रख्याप्य सुतलं बलिम्।
दत्त्वा वरान्हरिर्न्यूनं मत्वा तद्द्वारपोऽभवत्॥१॥
समर्पिततनूवित्तनिर्मलाचलभक्तितः।
छलितो बलिना चित्रं स्वमेवार्पयदच्युतः॥ २॥

विप्रकृतोऽपकृतः भिद्यमानः सत्याच्चाल्यमानः॥ १॥

हे उत्तमश्लोकेति कटाक्षः मम वच ईरितं प्रतिश्रुतं न तावद्व्यलीकम् त्वया कपटेन वामनतया भिक्षित्वा रूपान्तरकृताविष्कृतत्वात् एवमपि यदि भवान् व्यलीकं मन्यते तथाऽपि ऋतमेवाहं करोमि मदुक्तं विप्रलम्भनं न भवतु मे शीर्ष्णि निजं, तृतीयं पदं कुरु न च द्वाभ्यां विश्वं क्रान्तवतो मे तव शिरः पादपर्याप्तं न भवतीति मन्येथाः वित्तेन चेत्पदद्वयं जातं तर्हीदमधिकमेव स्यात् वित्तादपि वित्तवतोऽधिकत्वादिति भावः॥ २॥

ननु, च "आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि। आत्मानं सततं रक्षेद्दारैरपि धनैरपि" इत्यादि वचनादात्मभयपरिहाराय सर्वस्वं त्यज्यते त्वं तु कुतो भीतः स्वात्मानमर्पयसि? अत आह, बिभेमीति असाधु वादादपकीर्तेर्यथाऽहं भृशमुद्विजे निरयादिभ्यो [illegible] तथा बिभेमि॥ ३॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, मया निगृहीतस्य तवापकीर्तिर्जातैव नैवेत्याह—पुंसामिति। अर्हत्तमैरर्पितम् यं दण्डं मात्रादयोऽपि न ह्यादिशन्ति नैवार्पयन्ति हितैषिणा त्वया निगृहीतोऽहं श्लाघ्य एवाऽस्मीति भावः॥ ४॥

मन्वहं देवानां हितैषी नाऽसुराणां तत्राऽऽह—त्वं नूनमिति, पारोक्ष्यः शत्रुच्छद्मेन वर्त्तमानः॥ ५॥

शत्रुत्वं पुनर्भक्तानिवाऽस्माननुग्रहीतुमेवेत्याह—यस्मिन्निति। उ अहो ह प्रसिद्धम्॥ ६॥

अतो नात्र मम लज्जा नापि दुःखमित्याह, तेन गुरुणा भवता॥ ७॥

किंच योऽयं दंडरूपो ममानुग्रहस्त्वया कृतः सतु त्वद्भक्तपौत्रत्वेन न त्वहमनुग्रहस्य पात्रमित्याशयेनाऽऽह—पितामह इति। भवदीयानां संमतः यत आविष्कृतः साधुवादो यस्य त्वमेव परमः आश्रयो यस्य सः अतो भवतो विपक्षेण द्विषा हिरण्यकशिपुना विचित्रवैशसं हिंसां संप्रापितोऽपि देहादीनामसारतां निश्चित्याकुतोभयं ध्रुवं च भवतः पादपद्ममेव प्रपेदे अथ तस्मादहमपि दैवेन तस्यैव भाग्येन तवान्तिकं नीत इति चतुर्णामन्वयः॥ ८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं भगवतोपालब्धो बलिस्तमुवाचेत्याह मुनिः—एवमिति। हे राजन्! इत्थं भगवता विप्रकृतः विप्रलब्धः भिद्यमानः सत्याच्चाल्यमानोऽपि बलिरभिन्नमचलितं मनो यस्य सोऽविक्लवमदीनं गम्भीरं वचो भगवन्तं प्रत्याह॥ १

वच एवाह—यद्युत्तमश्लोकेत्यादिभिः दशभिः। हे उत्तमश्लोक! मे मयोक्तं वचो यदि यद्यपि भवान् व्यलीकमनृतं मन्यते तथापि हे सुरर्षभ! तत्सत्यमेवाहं करोमि तदुक्तं प्रलंभनं न भवतु मम शीर्ष्णि तृतीयं निजं पदं निधेहि॥ २॥

भवतो रक्षणीयमात्मानं मह्यं समर्पयन् बिभेषि किमित्यत आह, बिभेमीति। निरयान्निरयान्नाहं तथा बिभेमि, कथम यथा असाधुवादादनृतवचनादपकीर्तेर्वा भृशमुद्विजे तत्र पदच्युतिः स्थानभ्रंशः दुरत्ययादनतिक्रमणीयात् व्यसनाद्दुःखादर्थकृच्छ्राद्वर्णपञ्जयात्॥ ३॥

ननु,मयि निगृहीतस्य तवाकीर्तिरिव नेत्याह—पुंसामिति। योऽत्यन्तमेनाऽर्पितं कारितं दण्डमहं पुंसां श्लाघ्यतमं यशस्करमेवं मन्ये हि यस्माद्दण्डं मात्रादयोऽपि मयि नैवार्पयन्ति॥ ४॥

किंच त्वमस्माकमनुग्रहीतैवेत्याह—नूनमिति। त्वमस्माकं पारोक्ष्यो गुरुरसमक्ष हितकारी, कथमेतत् ज्ञातम्? इत्यत आह, यो भवाननेकैः श्रीयैश्वर्यादिप्रयुक्तैर्मदैरन्धानामस्माकं विश्रंशं तन्मदापनोदकं चक्षुर्व्यादिशत्॥ ५॥

किंच यस्मिन् त्वयि वैरानुबन्धेन बहवो दैत्याः सिद्धिं लेभिरे कां सिद्धिम? यां हि सिद्धिमेकान्तयोगिनोऽनन्यप्रयोजनत्वद्भक्तियोगिनश्च लभन्ते॥ ६॥

तेनैवम्भूतेन भूरिकर्मणा मच्चिन्त्याविविधचित्रचेष्टितेन भवता निगृहीतो वारुणैः पाशैर्बद्धश्चाप्यहं न व्रीडे नातिलज्जामि न दुःख्यामि च त्वत्कृतनिग्रहबन्धनयोर्नितरां मम यशस्करत्वादिति भावः॥ ७॥

किंचास्मत्पितामहः प्रह्लादः सद्गुणाश्रयः असुरतदनुबन्ध्यादिषु हेयतां निश्चित्य परमपुरुषार्थरूपं त्वत्पादारविन्दं शरणं गतः तथाऽहमपि दैवात्त्वत्समीपं नीतः त्वां प्रपद्य इत्याह—पितामहो इत्यादिभिश्चतुर्भिः। मे पितामहः प्रह्लादः भवदीयानां भागवतानां सम्मतः अतएवाविष्कृतः साधुवादः कीर्तिर्यस्य सः स्वापत्रा भवतो विपक्षेण शत्रुणा हिरण्यकशिपुना विचित्रवैशसं नानाविधं दुःखं सम्प्रापितोऽपि त्वमेव परमः सर्वविधबन्धुर्निरतिशयपुरुषार्थश्च यस्य तादृशः इत्यर्थः॥ ८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बलिः स्वात्मनोऽलीकं प्रकारान्तरेण परिहर्तुमाह—एवमिति॥ १॥

प्रलम्भनं वञ्चकफलं। विप्रलम्भनं कथं न भवेदिति तत्राह, पदमिति॥ २॥

स्थानतो ह्रीयमाणामप्रीमाह—बिभेमीति॥ ३॥

अभिमानमत्वं दर्शयति, पुंसामिति॥ ४॥

पारोक्ष्यं साक्षात्कारमन्तरेण तस्य मदस्य भ्रंशो येन तत्तथा॥ ५॥

ततो वैरानुबन्धेन वैरयुतस्नेहेन॥ ६—७॥

ननु, कुतो ऽयमाश्रमाग इत्याशङ्क्य श्रुतप्रह्लादमाहात्म्यानुस्मरणादित्याशयेनाह—पितामह इति। साधुरिति वादः साधुवादः स्तुतिलक्षणः विचित्रवैशसं नानाहिंसनं त्वमेव परमो यस्य स तथा॥ ८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—३॥

पुंसामिति नादिशन्ति न कुर्वन्ति मात्रादयो हि केवलमैहिकस्नेहा इति भावः यद्वा शिरश्चालने नञ् नादिशन्ति दिशन्त्येवेत्यर्थः॥ ४—७॥

पितामह इति चतुष्कम्॥ ८—९॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

बलिप्रह्लादयोर्विन्ध्यावलिब्रह्मजयोरपि।
सूक्तिर्वरानदाद्यस्मै द्वाविंशे करुणाम्बुधिः॥
बबन्ध कपटी यस्माद्बलिं निरपराध्वरः।
अतस्तद्द्वारि तत्प्रेमपाशैर्बद्धः सदावसत्॥

एवमनेन प्रकारेण विप्रकृतो लोकदृष्ट्याऽपकृतः भिद्यमानः सत्याच्चाल्यमानः॥ १॥

उत्तमश्लोकेति त्वप्रभो ममर्मोक्तिः स्वस्य वामनस्य त्रिभिः पदैः परिमितां भूमिं निर्मित्वा स्वरूपान्तरस्य त्रिविक्रमस्य

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिभिः पदैः प्रतिगृहीतुं प्रयतमानस्य निर्लोभस्य विप्रवटोस्तव निस्पृहत्वं व्यक्तीभूतमस्त्येतां कीर्तिसुधामेव तावत्पायं पायमेव भक्ता वयमानन्दमत्ता भवाम यद्दहो लक्ष्मीकान्तोऽपि मां तावद्धतिरक्तुमपि भूमिं भिक्षसे तत्रापि छलेनाधिकाजिघृक्षा तत्रापि वटुवशात्वेन वटुजनानां कपटमर्थस्पृहामशान्तिमप्राप्त्या कोपं दातरि दण्डं च स्वाभाविकंधर्ममभिव्यञ्जय मेषां विडम्बनं शास्त्राभिज्ञानां मद्गुरूणामपि बुद्धिलोपः स्वकृपापरमाणुमात्रस्पृष्टेष्विन्द्रादिषु स्वपक्षत्वव्यञ्जना स्वकृपामृतमहाब्धिमध्यमाज्जने मयि विपक्षत्वव्यञ्जनत्वमादृत एव तवोत्तमाः श्लोकाः कविभिः श्लोकैर्गीयन्त इति भावः । यदि भवान् मद्वचो व्यलीकं मिथ्या मन्यते इति स्वभक्तमन्यायेनापि जिगीषुणा त्वया तत्स्वभक्तवचो मिथ्याकर्तुमशक्यमेवेति भावः । हे सुरवर्य सुरैर्वरणीय ! त्रैलोक्यं भिक्षित्वा बलेः सकाशादानीय अस्मभ्यं भागार्थं देहीति सुरैर्मन्ये वरं प्रार्थितो भवानभूदिति भावः । तद्ब्रूत सत्यं करोमि मदुक्तं हि प्रलम्भनं न भवेत् यथा स्वचरणापेमामृतमद्दानस्य सुरैः स्तुतस्य तव मर्त्यास्वर्गमात्रप्रदायकत्वात्सुरप्रलम्भकामिति भावः मे शीर्ष्णि निजं तृतीयं पदं कुरु तत्र ब्रह्माण्डं विश्वं क्रान्तवतो मम तव शिरः पादपर्याप्तं नु भवतीति मन्येथाः वित्तेन चेत् पदद्वयं जातं तर्हि धर्मिकमेव स्यात् वित्तादपि वित्तस्वामिनोऽधिकत्वादिति भावः ॥ २ ॥

ननु, किं वारुणपाशबन्धभयात् नरकभयाद्वा आत्मानं दातुमिच्छसीति, तत्राह–बिभेमीति । अर्थकृच्छ्रात् द्रव्योपार्जनकष्टात् असाधुवादात् भगवद्भक्ताब्राह्मणावज्ञका भवन्ति यथा बलिरिति वैष्णवलोककृतदुष्कीर्तिवादात् ॥ ३ ॥

ननु, मया निग्रहात्तव दुष्कीर्तिर्जायते चेति तत्राह–पुंसामिति । अहितैषित्वाद्यद्यपि मात्रादयो यं दण्डम् आ मरणकप्रकारेण न दिशन्ति न ददति मात्रादयो हि ऐहिकहितैषिणः अर्हत्तमाद् पारलौकिकहितैषिणो मातृकोटिभ्योऽप्यतिवत्सला इति भावः ॥ ४ ॥

अस्माई देवानां हितैषी प्रसिद्धो नासुराणां तत्राह–त्वमिति । गुरुर्हितकारी परोक्षः शत्रुरूपेण वर्तमानत्वादिति भावः प्रत्यक्षहितकारित्वादपि परोक्षहितकारित्वं प्रीत्याधिकसूचकमत एव परमः देवानां स्वपरमः तत्कामितैश्वर्यप्रदत्वेन वास्तवहितैषित्वाभावादिति भावः । अस्माकं तु त्वं वास्तवहितकृदेवेत्याह–य इति । चक्षुरितिदेवानां त्वांध्यमिति भावः । आदिशादिति प्रथमपुरुष आर्षः ॥ ५ ॥

मादृशानां त्वदेकान्तभक्तानां खलु का वार्ता ये पुनरसुरास्त्वयि वैरमनुबध्नन्ति तेष्वपि तव तावद्वलौकिकपेवा दृष्टेत्याह—यस्मिन्निति ॥ ६ ॥

येन गुरुणा भूरिकर्मेणाति मत्प्रिग्रहस्ते बहुकार्यार्थः तथाहि देवलोकैश्वर्यप्रापणार्थः मादिभक्तानामपि श्रवणकीर्तनाद्यर्थः तव च प्रेमवद्दयत्वादिगुणाविष्कारार्थं इति मानि व्रीडे ह्यहं किं चिन्मात्री मे व्रीडा उत्पद्यते सा खलु मे चित्तशुद्ध्यभावादेवेति भावः ॥ ७ ॥

अस्मत्कुलदैवतत्वेनैव त्वद्गतो मत्पितामहः सन् एव त्वमपि मद्रूपपौत्रोऽयमिति बुद्ध्यैव मयि हितकर्ममीत्याह । पितामह इति । भवाद्बुपवर्गा हिरण्यकशिपुना विचित्रं विपत्तिं प्रापितः प्रापितोऽपि ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वाविंशे बलिना तृतीयं पदं मे शीर्ष्णि कुर्वित्यादि बलिवाक्यं प्रह्लादादिवाक्यं च श्रुत्वा प्रसन्नो भगवान् वरान् दत्त्वा बलिं सुतलं प्रस्थाप्य तद्वारपोऽभवदिति वर्णयतीति—एवकृतः अपकृत इव कृतो भगवता भिद्यमानः सत्याच्चाल्यमानः शुकोऽपीति शेषः ॥ १ ॥

हे उत्तमश्लोक ! ममेरितं यत् वचः पदत्रयभूदानविषयकं वाङ्मात्रं प्रतिगृह्यतामिति वाक्यं व्यलीकमपि पदद्वयेनैव त्वया मदीयस्य सर्वस्य गृहीतत्वात् तदृतं करोमीति यदि भवान् मन्यते तदेवाह—हे सुरवर्य ! मे शीर्ष्णि निजं तृतीयं पदं कुरु एवं सति मदुक्तं विप्रलम्भनं न भवेदित्यन्वयः ॥ २ ॥

एवं सति च ममापकीर्तिरपि न भविष्यतीत्याह—बिभेमीति–पदच्युतेः स्थानत्यागात् ॥ ३ ॥

त्वत्कृतेनास्मन्निग्रहेणापि मम कीर्तिरेव भविष्यतीत्याह–पुंसामिति ॥ ४ ॥

पारोक्ष्यः गूढः गुरुः हितकारी विभ्रंशं मदनाशं चक्षुरिव चक्षुर्यादिशत् ॥ ५ ॥

ननु, असुरवैरिणो ममासुरगुरुत्वं कथं घटेतेत्यत्र असुरा एव त्वयि वैरानुबन्धं कुर्वन्ति तेनैव वैरानुबन्धेनैकान्तिपुरुषोचितां सिद्धिं लभन्ते इत्याह यस्मिन्निति ॥ ६ ॥

तेन पारोक्ष्यगुरुणा ॥ ७ ॥

मम पितामहस्त्वत्पादपद्मं शरणं बहुगुणयोगेन गतस्तथाहमपि दैवेन तवान्तिकं नीतस्त्वां शरणं व्रजामीत्याह—चतुर्भिः । भवदीयानां श्रीनारदादीनां सम्मत आविष्कृतः साधुवादो यस्य सः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणी मधुसूदनो जयति ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् भगवान ने बलि को असुर जाति होने पर इतना अपमान किया और धैर्य से चलाय मान भी किया तौ भी धैर्य रखकर बलि इस प्रकार अनिकृत्य वचन बोले, ॥ १ ॥

बलिरुवाच ॥

[illegible], कि—हे उत्तम श्लोक ! हे सुरवर्य ! यदि आप

किमात्मनाऽनेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः ।
किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ९ ॥
इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ।
ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तमः ॥ १० ॥
अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ।
इदं कृतान्तान्तिकवर्तिजीवितं ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥ ११ ॥

श्रीशुक उवाच ।

तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ।
आजगाम कुरुश्रेष्ठ ! राकापतिरिवोत्थितः ॥ १२ ॥

तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ।
प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥
तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ।
ननाम मूर्द्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥
स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ।
उपेत्य भूमौ शिरसा महामना ननाम मूर्द्ध्ना पुलकाश्रुविक्लवः ॥ १५ ॥

भाषा टीका ।

मेरे कहे हुए वचन को सत्य मानते होवें, तब मैं जिस प्रकार बंधना न हो तैसे सत्य करता हूं बस आप मेरे मस्तक पर अपना तीसरा पग रखकर माप लीजिये यहां पर यदि ऐसी शंका हो, परमात्मा सर्व जनों के हित परायण हैं बलि का सर्व स्वहर कर भी फिर उसको वरुण पाश से क्यों बंधवाया ? तो उसका यह समाधान है, कि आपका बलि को अहंता ममता छुड़ाकर अपने परमैकांतिक भक्त बनाने का अभिप्राय है सो सर्वस्व लेकर ममतावलंबि कुछ न रहने दिया, परंच जब तक मैं बना हूं तब तक मेरा अहंता होसक्ता है इस लिये अहंतावलंबि पदार्थ जो मैं हैं सो भी जैसे अपना होजाय अर्थात् मैं और मेरा ये दोनों श्रीहरि के होजाय इसी से यह यत्न किया सो बलि के शरीर मापने की प्रार्थना करने पर सफल हुआ ॥ २ ॥

हे प्रभो ! मैं पद से भ्रष्ट होकर लोक से नहीं डरता हूं और न वरुण के फांस में बांधने से डरता हूं और न कोई बड़े भारी व्यसन [ दुःख ] से डरता हूं और न धन के दुःख से न आपके दंड देने से जैसा, कि—अपकीर्त्ति से अत्यन्त डरता हूं ॥ ३ ॥

हे पुरुषतम ! पुरुषों को दिये हुए दंड को मैं अच्छा मानता हूं, क्योंकि ? जो न माता न पिता न भ्राता और न सुहृद कोई भी नहीं देता है ॥ ४ ॥

आप हम असुर लोगों के परोक्ष होकर परम गुरु हैं जो आप अनेक मदों से अंध होने वाले हम लोगों को विवेक रूप चक्षु देते हो ॥ ५ ॥

जिस आपके विषे दृढ वैरानुबन्ध से बहुत से असुर लोक उस सिद्धि को प्राप्त हुए, कि—जिस सिद्धि को एकांत योगिजन प्राप्त होते हैं ॥ ६ ॥

तिन परम गुरु आपने मेरा निग्रह किया है और वरुण के पाशों से बांधा भी है पर इससे मेरे को न कुछ लज्जा और न कुछ व्यथा ॥ ७ ॥

हमारे पितामह प्रह्लादजी आपके भक्तों को संमत हैं जिनों ने बड़ा साधुवाद प्रकट किया, और आपके विपक्षी उनके पिता ने उनको बहुत ही पीडित किये परंच वह सदा आपही के परायण रहे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तत आयुषोऽन्ते रिक्थहारैः पुत्रैः इह गेहेषु केवलमायुषो व्यय एव नतु सुखं किञ्चित् ॥ ९ ॥

स प्रसिद्धो महान् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि ॥ १० ॥

प्रसभं बलात्त्याजिता श्रीर्यस्य यया श्रिया स्तब्धमतिः सन्

## प्रह्लाद उवाच ।

त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् ।
मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पुमानिदं जीवितमध्रुवं न बुध्यते कथंभूतम् कृतान्तस्यान्तिकवर्ति मृत्योः सन्निहितम् ॥ ११ ॥

राकापतिः पूर्णेन्दुः ॥ १२ ॥

अञ्जनत्विषं श्यामम् ॥ १३ ॥

स्वकृताहङ्कारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः ॥ १४ ॥

शिरसा समवेत्योपेत्य मूर्ध्ना ननाम बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विकलो विह्वलः ॥ १५ ॥

त्वयैवेति महेन्द्रं पदमेतदीयं त्वयापहृतं किन्तु त्वयैव पुनः स्वीकृतं तच्च शोभनमेव कृतं नत्र हेतुः, मन्य इति. यद्यस्माच्छ्रियैव यदात्ममोहनं तस्माद्विभ्रंशितः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मरणशीलस्य पुंसः आत्मादिभिर्देहादिभिः किम् ? न किमपि न कोऽपि पुरुषार्थः । किन्तु केवलमायुषो व्यय एवेति निश्चितवानिति शेषः अन्यथा पुनः पितामह इत्यस्यानन्वयापत्तेः यः अन्ततो जहाति देहिनं तेनानेनाऽऽत्मना देहेन किमित्यन्वयः । रिक्थहारैर्दायादैः स्वजन इत्याख्या व्यवहारो येषान्तैर्बन्धुभिर्दस्युतुल्यैः स्वजनैरित्यर्थः । संसृतिहेतुभूतया मायया किम् ? ॥ ९ ॥

सोऽहमपि पितामहो महान् सद्गुणाश्रयोऽगाधबोधः अपरिमितज्ञानसम्पन्नः सत्तमो भागवतश्रेष्ठः प्रह्लादः संसारिजनसङ्गाद्भीतः सन् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि भवतः नास्ति कुतापि भयं यस्मात्तत्पादपद्मं ध्रुवं नित्यपुरुषार्थरूपं प्रपेदे शरणं जगाम ॥ १० ॥

तथा अहमपि दैवात्प्रसभं बलात्त्वयाऽजिता श्रीर्यस्य तादृशः आत्मनो मम रिपोरन्तवान्तिकं समीपं नीतस्त्वत्पादपद्मं प्रपद्य इति शेषः । श्रियं विशिनष्टि, यया श्रिया स्तब्धमतिरपहृतज्ञानः पुमान् कृतान्तस्य मृत्योः सन्निधानवर्त्यशरीरं जीवितमध्रुवमस्थिरं न बुध्यते न मन्यते ॥ ११ ॥

तस्य बलेरित्थं भाषमाणस्य सतः हे कुरुश्रेष्ठ ! उदितो राकापतिश्चन्द्र इव प्रकाशमानो भगवत्प्रियः प्रह्लादस्तत्राजगाम ॥ १२ ॥

तथागतं स्वपितामहं प्रह्लादम् इन्द्रसेनो बलिः सन्नद्धः संयतः अपश्यत् कथम्भूतम् ? श्रिया कान्त्या विराजमानं कमलवदायते ईक्षणे यस्य तं प्रांशुं निर्मलमञ्जनत्विषं श्यामलं प्रलम्बावाजानुलम्बौ बाहू यस्य तं सुभगं सुन्दरम् ॥ १३ ॥

तस्मै महात्मने पूर्ववदर्घ्यादिपूर्वकमर्हणां न शक्तं तत्र बाहुभ्यां पाशैर्यन्त्रितः बद्धः किन्तु केवलं मूर्ध्ना ननाम नमस्कृतवान् ततोऽश्रुभिर्विलोले लोचने यस्य सः सव्रीडं नीचीनमधःकृतं मुखं यस्य तादृशो बभूव ॥ १४ ॥

ततः स महामनाः प्रह्लादः सतां भागवतानां पतिं सुनन्दनन्दादिभिः पार्षदैः सेव्यमानं तत्रोपविष्टं हरिं वामनं निरीक्ष्य पुलकैरश्रुभिश्च विकलो विह्वलस्सन् उपेत्य शिरसा भूमौ नमस्कृतवान् उवाचेति शेषः ॥ १५ ॥

तदेवाह–त्वयैवेति द्वाभ्याम् । ऐन्द्रं पदं त्वयैवास्मै दत्तं, कुतः ? यतस्त्वं तत्प्राप्तिसाधनेन विश्वजिता यागेनार्चित आराधितः यद्दत्तं तदिदानीमपहृतं तच्च शोभनमेव कृतं, शोभनत्वमेव व्यनक्ति–मन्य इति । यद्यस्मात् श्रियैवात्ममोहनं तस्मादयं विभ्रंशितः इति यत्सोऽयमस्य महाननुग्रह एव त्वया कृत इति मन्ये अन्यथाऽयं श्रीमदात्मपरयाथात्म्यज्ञानरहितो विनश्येदिति भावः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीप्रह्लादः कया चर्यया अतिप्रियदेहादिकमुत्सृज्य श्रीहरिचरणैकशरणमापेति तत्राह–किमिति । यो येनात्मना देहेन युक्तं जहाति तांश्च भागधेयमरणानेति शेषः । तस्य पुंसः तेन देहेन किम् ? न किमपि प्रयोजनमित्यर्थः । रिक्थहारैः पितृधनस्वीकारयोग्यैरभिरायुषो व्ययो नाश इति यत्तस्माद्दुर्जनसङ्गाद्भीतः स्वपक्षोऽसुरजनः तस्य नाशकस्य ॥ ९–१० ॥

ममाप्ययमेव निश्चय इति भावेनाह–मयेति । असुरजातित्वात् मम शत्रुभूतस्य त्वया त्याजितराज्यश्रीः बुभूषुणापि श्रीर्देवादपि त्याज्या अन्यथा अनर्थ योग एवेति भावेनाह–इदमिति । यया श्रिया स्तब्धमतिः कृतान्तान्तिकवर्तीदं जीवितं न जानातीत्यन्वयः ॥ ११ ॥

शुकः प्रह्लादस्य भक्त्यतिशयं दर्शयितुं बलेः स्तवनेन भगवद्भक्तिविशेषमाश्रायागमनमिति तदागमनमाह–शुक इति ॥ १२ ॥

प्रांशुमुन्नतम् ॥ १३ ॥

सव्रीडत्वेन नीचीनमर्वाचीनं मुखं यस्य स तथा ॥ १४–१५ ॥

आत्मनो मोहहेतुभूतया श्रिया विभ्रंशितो वियोजित इति यदयं महाननुग्रहोऽस्य कृत इति मन्ये तत्तस्मात्कः पुमानात्मनो गतिं यथावदभिचष्टे न कोऽपि यथात्मनः स्वस्य गतिं सर्वत्र व्याप्तस्वलक्षणामभिचष्टे तथा कः परमात्मनो गतिं स्थितिं स्वानन्दलक्षणाम् पश्यति श्रीमदान्ध्यत्वात् पश्यतीति वा ॥ १६–१९ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जनात् दैत्यादिदुर्जनसङ्घात्कीनः आत्मरिपोः आत्मरिपुत्वेन भ्रान्त्या प्रतीयमानस्यापीत्यर्थः । दैवेन श्रीप्रह्लादपौत्रत्वप्रापकेनानेन भाग्येन ॥ १० - १३ ॥

सव्रीडेति सहदर्शनं सति तदज्ञातस्यापि निजकुवृत्तस्य मनसि सङ्कोचावहत्वात् ॥ १४ ॥

स तत्र हासीनमिति वामनरूपेण पुनरवशिष्टतत्सङ्कल्पप्रापणे स्वायं प्रवृत्तत्वात् ॥ १५ ॥

त्वयैवेति यद्यस्मान्महानुग्रहादात्मना सुभगरूपगुणयुक्तेन स्वेन यन्मोहनं वशीकारः तस्मादेव हेतोः श्रियो विभ्रंशितः सत् बलात् नच दोषमयश्रीनिर्हरणपूर्वककर्मणात्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, सोऽपि पितरमनपेक्ष्य किमिति मां प्रपेदे, तत्राह-किमिति, अश्याम । आत्मना देहेन रिक्थं स्वरसेनार्थकमपि भनं हरन्तीति ते: ॥ ९ ॥

स्वपक्षं दैत्यकुलं क्षपयतीति तस्य ॥ १० ॥

आत्मरिपोरिति व्याजस्तुत्यैवोक्तिर्वस्तुतस्तु आत्मनः परमप्रियसुहृदः यद्वा आत्मनस्स्थूलसूक्ष्मदेहद्वयस्य रिपोर्नाशकस्य मोक्षप्रदस्येत्यर्थः । यद्वा आत्मनो मदहङ्कारस्य शत्रोस्त्वयाद्य मम त्रिभुवनाधीशत्वाहङ्कारमहारोगः साधु नाशित इत्यर्थः । दैवेन प्रह्लादपौत्रत्वप्रापकेन भाग्येन यया श्रिया ध्वस्तबुद्धिरयं मल्लक्षणो जनः इदं जीवितम् अदूध्रुवं न बुध्यत इत्यतो धन्वन्तरिमिव मत्सर्वरोगचिकित्सकं त्वामहं भाग्येन प्राप्त इति भावः ॥ ११-१२ ॥

सुभगर्षभं सर्वलोकप्रियम् ॥ १३ ॥

अपराधं विना कथं बन्धनमित्यपराधलक्षणस्य बन्धनस्य प्रह्लाददृष्टत्वात् सव्रीडं यद्वा प्रह्लादात्सदैव शिक्षितस्य निरभिमानत्वलक्षणस्य धर्मस्य भूमिदानप्रस्तावे सहसा विस्मरणात् तद्दर्शने सति सव्रीडं सव्रीडत्वादेव नीचीनं मुखं यस्य सः ॥ १४—१५ ॥

त्वयैवेति न हीन्द्रं पदमेतदीयं त्वया हृतं किन्तु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतं यतः संयतोऽपि जनस्तत् तस्यां सम्पदि सत्यां क आत्मनो गतिः सदर्थं यथावद्विचष्टे न कोपीत्यर्थः । न चात्र तव दत्तापहारलक्षणो दोषोऽपि स्नेहेन पुत्रहस्ते दत्तस्यापि मोदकादेर्गलितादिशङ्कया पुनराच्छिद्य नीतवतः पितुर्यथा तथेत्यर्थः ॥ ॥ १६—१७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मना देहेन रिक्थहारैर्दायादैः इह गेहेषु आयुषो व्यय एव ननु सत् ॥ ९ ॥

स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्य प्रपेदे शरणम् गतः ॥ १० ॥

अथाहमपि आत्मनामसुराणां रिपोरन्तवान्तिकं दैवेन नीतः अर्थात्त्वां शरणं गतोऽस्मि, कथम्भूतः ? प्रसभं बलात्पातिता, श्रीर्यस्य सः यया स्तब्धमतिर्जनः कृतान्तस्य मृत्योरन्तिकवर्ति निकटगम् एवंभूतमिममध्रुवं जीवितं न बुध्यते ॥ ११ ॥

राकापतिः पूर्णचन्द्रः ॥ १२ ॥ १३ ॥

सव्रीडं नीचीनं नतं च मुखं यस्य सः ॥ १४ ॥

पुलकैरश्रुभिश्च विह्वलः ॥ १५ ॥

यत् यस्मात् श्रियः सम्पदः आत्ममोहनात् अहमेवेन्द्रपदविजेतृत्वादिगुणवान् इत्यहङ्काराच्च ॥ १६ ॥

---

### भाषा टीका ।

इस शरीर से कौनसा प्रयोजन है जो अंत में छोड़ही जावगा, ऐसे ही हिस्सा बटाने वाले स्वजन नाम वाले इन चोरों से क्या प्रयोजन है, और संसार की हेतु रूप जाया में भी कौन कार्य है, और जब एक दिन मरने ही वाला है यह तब इनको गृहों से क्या प्रयोजन है क्यों कि ? जिन गृहों में लगकर व्यर्थ ही आयु चली जाती है ॥ ९ ॥

इस प्रकार अगाध बोध हमारे पितामह प्रल्हादजी ने जनों से भगकर निर्भय और ध्रुव ऐसे आपके चरणारविन्दों की शरण ली यद्यपि आप दैत्य कुल के नाशक रहे तो भी और की शरण नहीं ली ॥ १० ॥

अब इसी प्रकार अपने वैरी ऐसे आपके समीप में आ पहुंचा हूं और बलात्कार से मेरी संपत् भी दूर करदीनी है जिस संपत् के कारण पुरुष जड मति होकर सदा सन्निहित मृत्यु को नहीं जानता है ॥ ११ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे कुरु श्रेष्ठ ! राजा बलि जब तक ऐसे बोलते रहे तब तक जैसे चन्द्र का उदय भया हो इस प्रकार भगवत्प्रिय प्रल्हाद आये ॥ १२ ॥

वैराग्य श्री से देदीप्यमान कमल सदृश लोचन वाले, और बड़े उन्नत तथा अञ्जन सदृश कांति वाले, दीर्घ बाहु और परम सुभग ऐसे अपने पिता मह प्रल्हाद को बलिने देखा ॥ १३ ॥

उन प्रल्हादजी को वरुण के पाशों से बंधे हुए बलि ने पूर्व वत् सत्कार नहीं कर पाया किंतु मस्तक से नमस्कार मात्र किया और नेत्रों में अश्रुपात भर आये और लज्जा से नीचे को मुखकर लिया ॥ १४ ॥

प्रल्हादजी ने नन्द सुनन्द आदिक पार्षदों से उपासित अपने पति को देखा और समीप जाकर आनन्दाश्रुओं से विह्वल और और पुलकित होकर भूमि में मस्तक से प्रणाम किया ॥ १५ ॥

प्रह्लाद उवाच

प्रह्लादजी बोले, कि—हे प्रभो आपने ही इसको यह दीप्त समृद्ध पद दिया और उसको फिर आपने लेलिया यह बहुत ही अच्छा भया, और मैं तो यह जानता हूं कि—जो अपने को मोह करने वाली से आपने इसका वियोग किया यह परम अनुग्रह किया है ॥ १६ ॥

---

यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा।
तस्मै नमस्ते जगदीश्वराय वै नारायणायाऽखिललोकसाक्षिणे ॥ १७ ॥

श्रीशुक उवाच।

तस्याऽनुशृण्वतो राजन्! प्रह्लादस्य कृताञ्जलेः।
हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ १८ ॥
बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला।
प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप! ॥ १९ ॥

विन्ध्यावलिरुवाच।

क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश! कुर्युः।
कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥

ब्रह्मोवाच।

भूतभावन! भूतेश! देवदेव! जगन्मय!।
मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥
कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये।
निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥ २२ ॥
यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम्।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत्॥२३॥

श्रीभगवानुवाच।

ब्रह्मन्! यमनुगृह्णामि तद्विशो विधुनोम्यहम्।
यन्मदः पुरुषः स्तब्धो लोकं मां चाऽवमन्यते ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मोहकत्वमेवाह—यया श्रिया विद्वानपि यतः संयतोऽपि मुह्यति ततस्तस्यां सत्यां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति तस्मै महाकारुणिकाय ॥ १७ ॥

तस्य प्रह्लादस्याऽनुशृण्वत उवाचेति किञ्चिद्वक्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

तदैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता। तां च संगानयन् हिरण्यगर्भः क्षणं तूष्णीं स्थितोऽनन्तरस्या एव वाक्यं प्रथममवतारयति, बद्धं वीक्ष्येति ॥ १९ ॥

त्रिजगतः कर्तुः प्रभोः पालकस्याऽस्यतः संहर्तुश्चेश्वरस्य तवाऽन्ये किमावहन्ति किं समर्पयन्ति त्वयाऽवरोपितः कर्तृवादः कर्तारः स्वतन्त्रा वयमिति वादमात्रमपि येषां ते। अयं भावः लोकत्रयं मया-ऽर्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याभिमानिकारिणा युष्मयं कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वामी यतो मद्बुद्धिमेनं केवलं कृपया विमुच्य पालयेति ॥२०॥

तदेवं प्रह्लादस्य विन्ध्यावल्याश्च परमार्थोक्त्या प्रसन्नो हरिः ब्रह्मा तु लोकदृष्ट्यैव विज्ञापयति भूतभावनेति त्रिभिः ॥ २१ ॥

निग्रहानर्हत्वे हेतुः कृत्स्नेति सर्वस्वमेवाह—आत्मेति ॥२२॥

तदेव कैमुत्यन्यायेनाह—यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन उत्तमां गतिं प्राप्नोति, तस्मै तुभ्यमसौ बलिस्त्रिलोकीं दाश्वान् दत्तवान् स आर्तिं कथं प्राप्नुयात्२३

तस्य श्रियोऽर्थान् तत्सर्वापहारः कोऽयमनुग्रहस्तत्राह, यन्मदः यैरर्थैर्मदो यस्य सः स्तब्ध एव स्तब्धोऽनम्रः सन् मदस्तम्भहेतूनामर्थानामपहार एवानुग्रह इत्यर्थः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहंकारमूलकः कर्तृवादो येषां ते तस्मादपराधिनोऽस्य बन्धनमुचितमेवेति भावः ॥ २० ॥

तदेवं प्रह्लादस्य विन्ध्यावलेश्च परमार्तिरूपया प्रसादितमेव भगवन्तं ब्रह्मा लोकनयनरूपया प्रसादयति, भूतेति ॥ २१ ॥

ते तुभ्यमेव आत्मा अहंदस्य निवेदितः ॥ २२ ॥

निग्रहाऽनर्हत्वं कैमुत्येनाह—यदिति । असौ सर्वोऽपि जनः उत्तमां गतिं वैकुण्ठप्राप्तिं भजति बलिस्तु त्रिलोकीं दाश्वान् दत्तवान् कथमार्तिम् प्राप्नुयात् ॥ २३ ॥

तदेवविशोधनानि ननु, धनापहारः कोऽयमनुग्रहस्तत्राह—यन्मदः यैश्वर्यैरेव मदो यस्य सः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा श्रिया यतो येनाहङ्कारेण च विद्वानपि मुह्यते तत् तयोः सतोः यथा यथावदात्मनः गतिं को निचष्टे पश्यति न कोऽपीत्यर्थः । स्वरूपाहङ्कारो उपास्योपासकस्वरूपज्ञानविरोधिनावितिं भावः ॥ १७ ॥

हिरण्यगर्भो ब्रह्मा उवाच ॥ १८ ॥

ततोऽपि पूर्वं तत्पत्नी बलिभार्या बभाषे ॥ १९ ॥

ते त्वया आत्मनः क्रीडार्थम् इदं त्रिजगत् त्रिगुणात्मकं जगत् कृतं तत्र स्वाम्यं स्वामिभावं ममेदमिति मतिं कुधियः कुर्युः तत्र हेतुः त्वदुपरोपितः कर्तृभावो येषां ते तथा त्वत्प्रवर्तितमायया देहेन्द्रियादिभूतया स्वात्मन्यध्यस्तया वयमेव कर्तार इति वादो येषां ते त्वन्मायया मोहिता इत्यर्थः । अत एव त्यक्ताह्रियः ते तथाभूताः जगतः कर्तुः प्रभोः रक्षतुः अस्यतः संहर्तुः किमाहरन्ति किं समर्पयन्ति न किमपीत्यर्थः । त्वयैव कर्तास्त्याचार्येणोक्तं सत्यमेवेति ॥ २० ॥ २१ ॥

अनेन ते कृत्स्ना भूः दत्ता कर्मार्जिता लोकाः दत्ताः एवं सर्वस्वं निवेदितं पदं तृतीयं कुरु शीर्ष्णि मे निजमिति वदता आत्मा च निवेदितः ॥ २२ ॥

यस्य तव पादयोः सलिलमात्रमपि प्रदाय दूर्वाङ्कुरैरपि सपर्यां विधाय जनः उत्तमां गतिं भजते प्राप्नोति असौ बलिः तस्मै तुभ्यं त्रिलोकीं दाश्वान् दत्तवानतोऽयं कथमार्तिम् ऋच्छेत् प्राप्नुयात् ॥ २३ ॥

विशः अर्थान् विधुनोमि अपहरामि ॥ २४—२६ ॥

---

भाषा टीका ।

जिस संपत् के वश होकर विद्वान् भी मोह को प्राप्त होता है उस संपत के रहने पर कौन ऐसा पुरुष है जो अपने आत्मतत्त्व का विचार करसके उस परमश्रेय के प्रतिबंधकरूप संपत् विध्वंश करने वाले परम कारुणिक जगत् के ईश साक्षिलोक साक्षि ऐसे आप नारायण को नमस्कार हो ॥ १७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! इतने में कृताञ्जलि प्रह्लाद के सुनते २ बड़े ज्ञानवान् ब्रह्माजी ने श्रीमधुसूदन देव से बोलने की इच्छा करी ॥ १८ ॥

हे नृप ! इतने में अपने पति को बंधे हुए देखकर अति भय भीत बलि की पत्नी हाथ जोड़कर नीचे को मुखकर प्रणत होकर उपेन्द्र [ श्रीहरि ] से बोली ॥ १९ ॥

विन्ध्यावलिरुवाच ॥

विन्ध्या वलिश्री बोली, कि—हे ईश ! इस जगत् को आपने अपने क्रीडा के निमित्त किया है और उस जगत में शरीरादिक यावत्पदार्थ आपके रचे हैं परंच उस शरीरादिक के और भुवन के कुबुद्धि जन अपने आपही स्वामी बन जाते हैं । जगत् के उत्पत्ति कर्त्ता पालन कर्त्ता और संहार कर्त्ता तो आप हैं आपने उनके ऊपर स्वामी पने का आरोपण कर दिया है, वे फिर आप ही स्वामी बन बैठे । जब सब पदार्थ आपही का है तब वे निर्लज्ज लोग आपको क्या समर्पण करते हैं सो मैं नहीं जानती हूं । अर्थात् मेरे पति को यह अभिमान है कि—तीनो लोक मैंने समर्पण किये अब तीसरे पग में मैं अपने शरीर को समर्पण करके प्रतिज्ञा को सत्य करता हूं सो देह गेहादिक पहिले ही आपका है फिर वे समर्पण करने वाला कौन है तस्मात् मेरा पति निर्बुद्धि और निर्लज्ज है इसको आप अपनी निर्हेतुक केवल कृपा से छुडा कर पालन करो ॥ २० ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि—हे भूत भावन ! हे भूतेश ! हे देवदेव ! हे जगत्पते ! इसका सर्वस्व हरा गया अब इसको छोड़ दीजिये यह दंड देने योग्य नहीं है ॥ २१ ॥

हे प्रभो ! इसने समग्र भूमि आपको दीनी, और कर्म से जीते हुए सब लोक दिये, और स्थिर बुद्धि से सर्वस्व आपको निवेदन किया ॥ २२ ॥

जिसके चरणों में सौम्य होकर जल मात्र देकर, और दूर्वा के अंकुर मात्र से पूजा कर कर पुरुष उत्तम गति को प्राप्त होता है फिर इसने तो स्थिर मन से आपको त्रिलोकी समर्पण करी है यह कैसे दुःख पासका है ॥ २३ ॥

श्रीभगवान उवाच ॥

श्रीभगवान् बोले, कि ब्रह्मन् हम जिस पर अनुग्रह करते हैं उसका धन हर लेते हैं, जिसके मदसे मत्त होकर पुरुष सब लोक का और मेरा अपमान करता है ॥ २४ ॥

---

श्रीभगवानुवाच ।

यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ।
नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥
जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ।
यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥ २६ ॥
मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ।
सर्वश्रेयः प्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥
एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ।
अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥
क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ।
ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥
गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ।
छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥
एष मे प्रापितः स्थानं दुष्प्रापममरैरपि ।
सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥
तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ।
यत्राधयो व्याधयश्च क्लमस्तन्द्रा पराभवः ।
नोपसर्गा निवसतां सम्भवन्ति ममेक्षया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्लभं पुरुषजन्म कथंचिल्लब्धवतो जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरस्तस्य च नाशो मदनुग्रहादेवेत्याह—यदेति द्वाभ्याम् । अनीशः परतन्त्रः सन्निजैः कर्मभिर्नानायोनिषु कृमिकीटकादिषु संसरन् ॥ २५ ॥

तत्र पौरुष्यां गतौ जन्मादिभिरपि यस्य यदि स्तम्भो न भवेत्तर्ह्ययं मदनुग्रह एव ॥ २६ ॥

कथं तर्हि ध्रुवादिष्वप्ययमनुग्रहो नासीदिति चेत्तत्राह—मान एव स्तम्भो नम्रता तस्य निमित्तभूतानां समन्ततः सर्वशः सर्वश्रेयः प्रतिकूलानां जन्मादीनां सर्वेऽपि जन्मादिभिरिति वा हन्तेति खेदे हे ब्रह्मन् ! मत्परो न मुह्येत्ततो मद्भक्तस्येच्छया सम्पदोऽपि ददामि अभक्तस्तु मुह्येदिति तदपहाररूपमेव तस्यानुग्रहं करोमीति भावः ॥ २७ ॥

अस्य चेदानीं मत्परत्वादन्यैर्दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह—एष इति त्रिभिः ॥ २८ ॥ २९ ॥

"न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान्" इत्यादिना छलैरेव मया धर्म उक्तस्तथापि तं धर्ममयं न त्यजत्यतः सत्यवाक् ॥ ३० ॥

मे मया मदंमत्ताश्रयः पालको यस्य सः ॥ ३१ ॥

स्थानं प्रापित इति यदुक्तं तदेव स्थानमाह—तावत्सावर्णिमन्वन्तरपर्यन्तं सुतलमध्यास्तामधिवसत्वित्यर्थः । यत्रास्मिन् वसतामाध्यादयो ममेक्षया न सम्भवन्ति ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमवमानेनान्यैश्च कर्मभिरिह लोके नानायोनिषु संसरन् तिर्यक्स्थावरादिषु जन्म प्राप्नुवन्नयं जीवात्मा कर्मवश्यः यदा कदाचित् यादृच्छिकसुकृतविपाकात्पौरुषीं गतिं पुरुषजन्म प्राप्नुयात् ॥ २५ ॥

तत्रापि जन्मादिभिर्यस्य पुरुषस्य स्तम्भो मदः अनम्रता वा न भवेत्तत्र तद्विषये अयं स्तम्भाभाव एव मदनुग्रहो ज्ञेयः । तत्र जन्म-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

सत्कुले. कर्म भगवत्परिचर्यादि वयो यौवनादि । विद्या श्रोतस्मार्तादिः बुद्धिर्विवेकात्मिका धनं वित्तम् ॥ २६ ॥

कथं तर्हि ध्रुवादिभ्यः सम्पदो ददासि ? इत्यत्राह—मानेति । मानो गर्वः स्तम्भोऽनम्रता ऽविवेको वा तयोर्निमित्तानां जन्मादीनां पूर्वग्रन्थपरिगणितानां समन्ततः सर्वश्रेयःप्रतिकूलानां सद्भावेऽपीति शेषः । मत्परस्तेषु न मुह्येदित्यर्थः । हन्त हे ब्रह्मन्! ॥ २७ ॥

अस्य चेदानीं मत्परत्वाद्न्यैर्दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमनुगृह्णाति—एष इति त्रिभिः । एष बलिः दानवानां दैत्यानांच आधिपतिः कीर्तिवर्धनश्च अजयां दुर्जयाम् मम मायामजैषीज्जितवानित्यर्थः ॥ २८ ॥

कीर्तिवर्धनत्वमेव प्रपञ्चयति—क्षीणं रिक्थं धनं यस्य सोऽपि स्थानाच्च्युतोऽप्याधिपत्याद्भ्रष्टोऽपि शत्रुभिर्बद्धोऽपि बद्धोऽपि ज्ञातिभिः परित्यक्तोऽपि यातनां प्रापितोऽपि ॥ २९ ॥

गुरुणा उशनसा भर्त्सितोऽपि शप्तोऽपि सुव्रतः दृढसङ्कल्पः सत्यं न तत्याज तथा मया छलेनेव धर्म उक्तः तथाऽप्ययं सत्यवाक् धर्मं न त्यजति ॥ ३० ॥

अस्य मोक्षप्रदानं सङ्कल्पयति—एष इति । अमरैरपि प्राप्तुमशक्यं स्थानं मल्लोकं प्रापितः प्रापयिष्यत इत्यर्थः । देहावसाने मुक्तो भविष्यतीति भावः । जीवद्दशायाम् इन्द्राधिपत्यं भविष्यदनुगृह्णाति, सावर्णेरिति सावर्णेर्मनोरन्तरस्य सम्बन्धीन्द्रोऽयं बलिरहमेवाश्रयो यस्य स भविता भविष्यति सावर्णिमन्वन्तरेऽयमिन्द्रो भविष्यतीत्यर्थः ॥ ३१ ॥

आधुनिकं सुतललोकाधिपत्यमनुगृह्णाति, तावदधुना विश्वकर्मणा विनिर्मितं सुतलं लोकमध्यास्ताम् तत्राधिपतिर्भूत्वाधिवसत्वित्यर्थः । सुतलं विशिनष्टि—यत्र सुतले निवसताम् आध्यादयो मत्कटाक्षेण प्रभुणा न सम्भवन्ति तत्राधयो मनःपीडाः व्याधयो दैहिकाः क्लमः ग्लानिः तन्द्री अनवधानता पराभवः शीतोष्णादिभिरभिभवः उपसर्गोऽन्योऽप्युपद्रवः ॥ ३२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नानायोनिष्य उत्तमत्वेन मदोद्रेकहेतोरपि पुरुषयोनेर्यदृच्छया प्राप्तौ मदनुगृहीतस्य पुंसो मदो नैवोत्पद्यत इत्याह—यदा कदाचिदिति । अयं जीवात्मा निजकर्मभिर्नानायोनिषु संसरन् कदाचिद्दैववशात् पौरुषीं गतिमाव्रजेत् ॥ २५ ॥

तत्र पौरुषगतौ यद्यस्य जीवात्मनो मदर्चनादौ स्तम्भस्तन्द्रीलक्षणा नभवेत्तर्ह्ययं मदनुग्रहः मत्कटाक्षपातलक्षणा इति ज्ञातव्यम् ॥ २६ ॥

अभक्तलक्षणमाह—मानस्तम्भेति पञ्चम्यर्थे जन्मादीनामिति षष्ठी ॥ २७ ॥

एतल्लक्षणप्रदर्शनाय दवीयान्मार्गो न गन्तव्यः किन्त्वत्रैवेति भावेनाह—एष दानवेति । अजयाम् अजेयां न जयो यस्याः सा अजयेति ॥ २८ ॥

यातनाम् तीव्रवेदनाम् ॥ २९ ॥



सत्यत्यागनिमित्तक्षीणत्वादिकं प्राप्तोऽपि सत्यं न त्यक्तवानित्यन्वयः ॥ ३० ॥

भवतास्मै किमनुग्रहाते स्वद्भक्तायेति तत्राह—एषामिति । किं तत्स्थानमत्राह, सावर्णेरिति ॥ ३१ ॥

तर्हि तावत्पर्यन्तमसावयोद्भवद्देवंविधं क्लेशमनुभूय स्थेयतां किम् ? तत्राह—तावत्सुतलमिति । तत्रान्येषामपि क्लेशानुभवो नास्ति किम्पुनरस्येति भावेन वक्ति, यत्राधय इति । उपसर्गा उपद्रवाः ॥ ३२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीप्राप्तिर्द्विधा कर्मादिना भगवदनुग्रहेण च तत्र ब्रह्माणस्यादिना कर्मप्राप्तायाः एव श्रियो दोषा वर्णिताः मद्दत्तायास्तु नास्त्येव स इत्याह—जन्मेति । अतः सुतलाधिपत्येन पुनः स्वर्गाधिपत्येन च न मदो भवितेति भावः ॥ २६—३१ ॥

तन्द्रीति काचित् उषादावी प्रत्ययोऽयम् ॥ ३२—३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न च सर्वस्यैवाऽनुग्राह्यजीवस्य धनानि हरामि कस्यचिन्न हरामि च कस्मैचित् अतिशयेन ददामि च मदनुग्रहस्य लोकैरनवधार्यविविधजातीयत्वादतो जीवेषु मदनुग्रहलक्षणां प्रदर्शयन्नाह—यदेति । नानायोनिषु कृमिकीटादिष्वपि अनीशः परतन्त्रः संसरन्नेव यदा कदाचिदेव पौरुषीं गतिं मनुष्यजन्म प्राप्नुयात् ॥ २५ ॥

तत्र पौरुष्यां गतौ जन्मादिभिर्यदि भ्रंशोऽवहेलनादिर्हेतुर्गर्वो न भवेत्तदा तत्र पुंसि मदनुग्रहः अयं पूर्वोक्तात् धनहरणलक्षणादन्यः अनुमेय इत्यर्थः । तस्य धनादिकं नापहरामि अपकारकत्वाभावादिति भावः ॥ २६ ॥

किं च मानो गर्वस्तद्विशेषः स्तम्भोऽनम्रता तयोर्निमित्तभूतानां जन्मादीनां न मुह्येत "नाग्निस्तृप्यति काष्ठानाम्" इति वत् षष्ठी तैर्जन्मादिभिर्न मुह्येदित्यर्थः । समन्ततः सर्वथैव हन्त आश्चर्यमेतदिति पदद्वयप्रयोगात् पूर्ववत् यदि शब्दाप्रयोगाच्च कदाचिदपि न मुह्येदिति स च मत्परो मदेकान्तभक्त एवात्यन्तिकमदनुग्रहवानेव पूर्वोक्तादपि विशिष्यत एव तादृशेभ्यो ध्रुवादिभक्तेभ्यः सम्पदो ददाम्येवेति भावः । कर्मजन्मा हि सम्पदनर्थकारिणी तामेव प्रथमानुकम्प्यभक्तस्य भगवान् हरति न तु मद्दत्तामिति । केचित् अभक्तप्रेमवर्धनचतुरस्य हरेरयमपि नियमः पाण्डवादावपि सम्पदपहारदर्शनादित्यपरे ॥ २७ ॥

नन्वास्तामेतत् प्रस्तुतो बलिरयं तव कीदृशानुग्रहवान् भक्तो यस्य सम्पदो हरसीति तत्राह—एष इति । अजैषीत् न तु जेष्यति जयतीति वा प्रयुक्तं तेन पूर्वमेव मायां जितवानोऽयं स्तम्भादयो मायिकाः कुतः सम्भवेयुर्यन्निवर्तनार्थं मया धनैश्वर्यहरणं कार्यमिति ध्वनितं सीदन्नपि न मुह्यतीति मत्पादाम्बुजमुह्यन्नपि जनो विपत्स्वामिमत्वं [illegible]मुह्यन्नेव दृष्ट इति भावः ॥ २८ ॥

[illegible] अथापि विपत्सिन्धुमध्ये निक्षिप्तोऽपि न मुह्यतीति किं [illegible]छलमपि न त्यजतीत्याह—क्षीणेति ॥ २९ ॥

इन्द्रसेन महाराज ! याहि भो भद्रमस्तु ते ।
सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥
न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ।
त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति ॥ ३४ ॥
रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ।
सदा सन्निहितं वीर ! तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"न ह्यस्मिन् कुले कश्चिन्निःसत्त्वः कृपणः पुमान्" इत्यादिना मया प्रथमतश्छलेनैवं प्रायेणाधर्मोऽपि धर्म उक्तः तथैवान्ते "विप्रलब्धो ददामीति त्वयाहं चाधमानिता । तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समा" इत्यनेन धर्मोऽप्यधर्म उक्तः तदप्ययं सत्यवाक् सत्यं न त्यजति अन्यस्त्वेवं विधेऽर्थे "शठे शाठ्यं प्रकुर्वीत" इति नीत्या शाठ्यमेव कुर्यात् तस्मान्मया भक्तवात्सल्येनापि कृतमेतस्यैतादृशाकदर्थनं स्वभक्तानिष्ठानिःसीमधैर्यादिगुणप्रख्यापनार्थमेवेति भावः न चाऽस्य मत्पदो हरामीति त्वया भ्रमितव्यमित्याह—एष इति । अमरैर्दुष्प्रापमिति इन्द्रपदात्स्वर्गादपि सुतलस्याधिक्यं तदानीमेवाद्भुतं श्रीकृष्णाद्दत्तश्रीरामाभ्यामनुभवितुमिति ज्ञेयम् ॥ ३० ॥

नचैन्द्रं पदं त्वस्य गतमिति मन्तव्यमित्याह—सावर्णेरिति । न च तदापि तत्रापि देवा इमं कदर्थयिष्यन्तीति वाच्यं मदाश्रयः अहमस्य द्वारपालको भूत्वा आज्ञादेशस्या स्वामीति भावः विश्वकर्मणा विशेषेण स्वर्गीयामरावतीपुराद्रातिवैशिष्ट्येन निर्मितमिति भगवदभिप्रायेण तत्सुतलादेन स्वतोऽधिकं जातमिति भावः ॥ ३१ ॥

यत् यत्र ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानो आगमनः पूज्यत्वं स्तम्भः पूज्याऽपूजकत्वम् ॥२७॥२८॥
यातनां पीडां यापितः प्रापितः ॥ २९ ॥

"न ह्यस्मिन् कुले कश्चिन्निःसत्त्वः कृपणः पुमान्" इत्यादिना छलेनैवनृशंसत्वे उत्साहजनकैर्वाक्यैर्मया अयं बलिरकः प्रोत्साहितोऽपि सत्यं न जहौ यतः सत्यवाक् यतः धर्मं न त्यजति ॥ ३० ॥

मे मया ॥ ३१ ॥

अध्यास्तामधिवसतु यत्र यस्मिन् निवसतां ममेक्षया आध्यादयो न भवन्ति तत्र क्लमः ग्लानिः तन्द्रा अनवधानता उपसर्गाः अन्य उपद्रवाः ॥ ३२ ॥

---

### भाषा टीका ।

इस संसार में पड़ा हुआ जीवात्मा अपने कर्मों के परवश होकर नाना योनियों में भटकता हुआ किसी समय पर मनुष्य योनि को भी प्राप्त होता है ॥ २५ ॥

जन्म, कर्म, वय, रूप, विद्या, ऐश्वर्य, और धन आदिक से यदि इस मनुष्य जन्म में गर्व न होवे, तो यह हमारा अनुग्रह जानो ॥ २६ ॥

मान अनम्रता से होने वाले सर्व श्रेय कार्य के प्रतिकूल जन्म कर्मादिकों के मदसे मत्परायण जन कभी मोह को प्राप्त नहीं होता है ॥ २७ ॥

और यह बलि तो दैत्य दानवोंकी कीर्त्ति का बढ़ाने वाला है और इसने माया को भी जीत लिया है कि—जो यह इतना दुःख पाकर भी मोह को नहीं प्राप्त होता है ॥ २८ ॥

क्योंकि ? इसको द्रव्य के भाग से हीन कर दिया स्थान से च्युत होगया, शत्रुओं ने बांधा और फटकारा, और जाति के लोगों ने त्याग दिया और बहुत सी इसको यातनादी ॥ २९ ॥

और गुरुजी ने भी बहुतसा धमकाया और शाप भी दी तो भी इस सुव्रत ने सत्य नहीं छोड़ा, और हमने भी इससे छल की बातें करी पर यह सत्य वक्ता धर्म को नहीं छोड़ता है ॥ ३० ॥

और हे ब्रह्मन् ! अब हमने इसको देवताओं को दुष्प्राप्यस्थान दिया, और हमारा आश्रय लेने वाला यह सावर्णि मन्वन्तर का इन्द्र होगा ॥ ३१ ॥

तब तक तो यह सुतल में विश्वकर्मा के रचे हुए स्थान में निवास करें जहां रहने वालों को आधि, व्याधि, ग्लानि, तन्द्रा, सुख, दुःख इत्यादिक उपसर्ग हमारी इच्छा से नहीं होते हैं ॥ ३२॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं ब्रह्मणं प्रत्युक्त्वा करुणापरवशः साक्षाद्बलिं प्रत्याह, इन्द्रसेनेति, चतुर्भिः ॥ ३३ ॥

त्वच्छासनमतिगच्छन्त्यतिवर्तन्त इति तथा तान् ॥ ३४ ॥

तथाऽपि भवद्वियोगाच्छङ्कितं प्रत्याह, सदेति ॥ ३५ ॥

तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः।
दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनंक्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे बलिमोक्षणं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सङ्गाद्य आसुरो भावः स विनङ्क्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं ब्रह्माणमुक्त्वाऽथ बलिमुवाच. हे इन्द्रसेन महाराज !! ज्ञातिभिः परिवृतस्त्वं सुतलं स्वर्गिभिरपि प्रार्थ्यं लोकं याहि गच्छ तत्र तव भद्रमेव मेऽनुग्रहादस्तु ॥ ३३ ॥

तत्र वसन्तं त्वां लोकेशा इन्द्रादयोऽपि नाभिभविष्यन्ति किमु वक्तव्यमपरे नाभिभविष्यन्तीति, ये च तत्र त्वदाज्ञातिलङ्घिनो दैत्यास्तान् मम चक्रं सुदर्शनं सूदयिष्यति हनिष्यति ॥ ३४ ॥

सर्वेभ्योऽप्युपद्रवेभ्यस्त्वां सानुगं सपरिच्छदं सोपकरणमहं रक्षिष्ये, किञ्च हे वीर! तत्र सुतले सदा सन्निहितं त्वद्द्वारि वसन्तं मां भवान् द्रक्ष्यते ॥ ३५ ॥

किञ्च दैत्यानां सङ्गात्ततोऽन्यथ य आसुरो भावः स तत्र मम अनुभावं दृष्ट्वा सद्यः कुण्ठः प्रतिहतो विनङ्क्ष्यति। मदनुभावाद्भवानासुरं भावं त्यक्ष्यतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भवदाज्ञामन्तरेणेमं कथं गमिष्यामीति शङ्कामाभूदित्याह, इन्द्रसेनेति। मृतवदेकः कथङ्गमिष्यामीत्यत उक्तं ज्ञातिभिरिति ॥ ३३ ॥

स्वर्गस्थैरद्यं चेत्कपदं वा लोकेशा मामुपद्रविष्यन्तीति तत्राह, न त्वामिति। राज्यं त्यक्त्वा गतस्य तव शासने वयं न तिष्ठाम इति तिष्ठतां दण्डमाह-त्वच्छासनेति ॥ ३४ ॥

किं बहुनोक्तेन सर्वतो भद्रभावस्तवास्तीत्याह-सर्वत इति.

न केवलं सन्निधानविशेषाद्रक्ष्यामि किन्तु प्रत्यक्षत एवेत्यत उक्तं तत्र मामिति ॥ ३५ ॥

तत्राप्यवमनर्थस्तदवस्थ एव दानवादीनां संसर्गादिति च शङ्का माभूदित्याह-तत्र दानवेति। सद्यः कुण्ठ इत्येकं पदं सद्यः कुण्ठः क्लेशो यस्य स तथा प्रवनंक्ष्यतीति विनङ्क्ष्यतीति पाठे निर्मूलो भविष्यतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एवं ब्रह्माणं प्रत्युक्त्वा साक्षाद्बलिमाह-इन्द्रसेनेति। महाराजेति तव महाराजत्वं नापयाति यतः स्वर्गिभिः प्रार्थ्यमेव न तु लभ्यम् ॥ ३३ ॥

सूदयिष्यति खण्डयिष्यति ॥ ३४ ॥

मच्च मद्विरहदुःखमित्याह-सदासन्निहितमिति ॥ ३५ ॥

दुःसङ्गाच्च माभैषीरित्याह-तत्रेति। त्वादृशभक्तसङ्गाद्दुष्टा अपि शिष्टा भवन्तीति भावः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
द्वाविंशोऽष्टमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं ब्रह्माणं प्रत्युक्त्वाऽथ साक्षाद्बलिं प्रत्याह—इन्द्रसेनेति, [illegible] इन्द्रसेन! ते भद्रं भवतु भो महाराज! सुतलं [illegible] ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वच्छासनमतिगच्छन्ति नतिक्रामन्तीति तथा तान् ॥३४-३६॥
इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाऽध्यायार्थ प्रकाशः ॥ २२ ॥

भाषा टीका ।

फिर बलि से भगवान् बोले, कि—हे इन्द्रसेन ! हे महाराज ! तुमारा मंगल हो तुम अपने ज्ञाति परिकर सहित स्वर्ग वासियों से प्रार्थित सुतल को जाओ ॥ ३३ ॥

और बड़े २ लोकेश लोग भी तुमारा अभिभव (तिरस्कार नहीं करसकेंगे और बिचारों की तो बात ही क्या, दैत्यों में भी जो तुमारी आज्ञा को उलंघन करेंगे उन दैत्यों को हमारा चक्र नष्ट करदेवेगा ॥ ३४ ॥

तुमारे अनुग और परिकर परिच्छद सहित तुमारी हम रक्षा करेंगे ॥ हे वीर ! तुम हमको अपने वहां सदाही सन्निहित देखोगे ॥ ३५ ॥

और वहां भी दैत्यदानवों के संग से जो तुमारा आसुर भाव है वह हमारा प्रभाव देखकर तत्काल कुंठित होकर नष्ट होजायगा ॥ ३६ ॥

इति श्रीमद्भागवत अष्टमस्कन्ध में द्वाविंश अध्याय की
श्रीवृन्दावनस्थ भगवताचार्यकृत
भाषा टीका समाप्ता ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## ॥ त्रयोविंशोऽध्यायः ॥

——:*:——

श्रीशुक उवाच।

इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः।
बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराऽब्रवीत् ॥ १ ॥

बलिरुवाच।

अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः।
यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

श्रीशुक उवाच।

इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः।
विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥
एवमिन्द्राय भगवान् प्रत्यानीय त्रिविष्टपम्।
पूरयित्वाऽदितेः काममशासत्सकलं जगत् ॥ ४ ॥
लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम्।
निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

प्रह्लाद उवाच।

नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुताऽपरे ते।
यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः ॥ ६ ॥
यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः।
कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥
चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य।
सर्वात्मनः समदृशो विषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

त्रयोविंशे बलौ याते सुतलं सपितामहे।
उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदितो हरिः॥

बाष्पस्य कलाभिर्बिन्दुभिराकुले ईक्षणे यस्य भक्त्या उत्कल उत्कण्ठः॥ १ ॥

अहो त्वत्प्रणाममहिमा यदर्थं कृतः समुद्यम एव प्रपन्नानां [illegible] भक्तानां योऽर्थस्तस्य विधावभक्तेऽपि मय्य संपादने समाहितोऽप्रमत्तः स्थितः कुतः? यद्यनेनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वस्त्वदनुग्रहोऽस्मद्विधे नीचे राजसे मय्यर्पितः अयं भावः परमेश्वराय तुभ्यमहं वराकस्त्रिलोकीं दत्तवानित्येतावान् प्रणामोऽपि न मया कृतः किन्तु तदर्थमुद्यममात्रं कृतं [illegible] कर्मतपोज्ञानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः संपादितः [illegible] त्वत्प्रणामप्रभावाश्चर्यमिति ॥ २ ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जगच्छास्तुरुपेन्द्रः सन् पालयामास ॥ ४ ॥ ५ ॥

दुर्गपालोऽसि "रक्षिष्ये सर्वतोऽहं त्वाम्" इत्युक्तत्वात् ॥ ६ ॥

हे शरण्य आश्रयप्रद ! ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयश्च ते एवं तस्य भवतो दाक्षिण्यवदृष्टेः पदवीं कस्माज्जन्तोः प्रणीताः बहुमानेन चित्तानुवर्तनं दाक्षिण्यं तेन या दृष्टिस्तद्विषयतां प्रापिताः ॥ ७ ॥

भक्तप्रियत्वादिति चेत्तर्ह्येवं तवेहितमहो चित्रम् किन्तत् ? सर्वात्मनः समदृशश्च स्वभावो विषम इति यत् सर्वात्मत्वे चित्रचरितत्वे हेतुः अमिताऽचिन्त्या योगमाया तस्या या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य अहो इत्यत्र सन्धिरार्षः समदृक्त्वे हेतुः विशारदस्य सर्वज्ञस्य अथवा भक्तप्रियत्वेऽपि तव वैषम्यं नास्त्येव, यतः कल्पतरुस्वभावः सन् भक्तप्रियोऽसि नहि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः ॥ ८ ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमनुगृहीतो बलिर्भगवन्तं नमाहेत्याह मुनिः-इतीति । इतीत्थमुक्तवन्तं पुराणपुरुषं भगवन्तं गद्गदया गिरा अब्रवीत् कथम्भूतः ? भक्त्याऽऽवृतः उत्कण्ठः हर्षबाष्पबिन्दुभिराकुले ईक्षणे यस्य सः अखिलानां साधूनां सम्मतः महाननुभावः उक्तविधो यस्य सः ॥१॥

तदेवाह-अहो इति । अहो त्वत्प्रणामस्य प्रभाव इत्याह, प्रणामाय प्रणामार्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थोऽभिमतस्तस्य विधौ सम्पादने समीहितोऽप्रमत्तः स्थितः, कुतः? यत् येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वस्त्वदनुग्रहोऽपसदे नीचे असुरे मयि समर्पितः ॥ २ ॥

इत्थं हरिमुक्त्वा प्रणम्य ततो ब्रह्माणं रुद्रं च प्रणम्य मुक्तः पाशेभ्य इति शेषः । प्रीतो बलिरनुगैस्सह सुतलं लोकं विवेश प्रवेष्टुमुद्युक्तो बभूवेत्यर्थः ॥ ३ ॥

ततः इत्थं बलेर्गृहीतं त्रिविष्टपं भगवानिन्द्राय प्रत्यादिश्य प्रदाय एवमदितेः काममिष्टं पूरयित्वा सकलं जगच्छासदुपेन्द्रः सन् पालयामास ॥ ४ ॥

ततो लब्धो भगवत्प्रसादो येन तं पाशेभ्यो निर्मुक्तं पौत्रं वंशधरं बलिं निशाम्य दृष्ट्वा प्रह्लादः भक्तितत्परो भक्तिप्रेमसुधारससमुद्रे परिप्लुत इत्यर्थः । वक्ष्यमाणमुवाच ॥ ५ ॥

तदेवाह-नेति त्रिभिः । अहो तवेदं दुर्लभानुग्रहस्यापि सौलभ्यं परत्वं चानितरसाधारणमिति विस्मयपूर्वकं विज्ञापयति, नेति । इममनुग्रहविषयं भवदनुग्रहं चतुर्मुखब्रह्मरुद्रा अपि न लेभिरे येऽपरे इन्द्रादयो न लेभिरे इति किमु वक्तव्यम् । एवं मत्प्रसादस्य दौर्लभ्यं कचिद्विषयविशेषे सौलभ्यञ्चोक्तम्, कुतः? एतद्विपरीतमित्यत आह-यदस्मादसुराणां क्रूरस्वभावानामपि नोऽस्माकं दुर्गपालः दुःखाद्त्राता भवसि अथ परत्वमाह-विश्वाभिवन्द्यैः सकलजगत्पूज्यैर्ब्रह्मादिभिरप्यभिवन्दिताङ्घ्री यस्य सः त्वम् असुराणां नो दुर्गपालोऽसीत्यन्वयः

आत्मदृग्गुणादर्शनेनास्मासु तव प्रसादप्रवृत्तिः किन्तु केवलं कृपयैवेति सूचितम् ॥ ६ ॥

तदेव व्यञ्जयन्नाह-यदिति । हे शरण्य श्रेयःसाधनप्रद ! अनेन स्वहितमपि वयं न विद्म इति सूचितम् ! ब्रह्मादयो यस्य तव पादपद्मयोर्मकरन्दः तस्य सेवया विभूतिमैश्वर्यं सृष्ट्याद्यधिकारमश्नुवते प्राप्नुवन्त्यनेन परत्वं स्पष्टीकृतम् । ते एवम्भूतस्य तव दाक्षिण्यदृष्टिपदवीमनतिक्रमणीयताहेतुकृपादृष्टिविषयतां कस्माज्जन्तोर्वयं कुसृतयः कुमतयः खलयोनयः उग्रजातयश्च प्रणीताः प्रापिताः केवलं कृपयैवेति भावः । पूर्वं विरिञ्चादयोऽपीत्थं प्रसादं न लेभिरे इत्यनेन तत्सेवया विना तत्प्रसादाविषयत्वमुक्तमत्र तु तत्सेवया तद्विषयत्वमित्यतो न विरोधः ॥ ७ ॥

एवं तर्हि प्राकृतवत्कांश्चिदनुगृह्णन् कांश्चिच्च निगृह्णन् त्वमपि विषमस्वभाव एवेति किं मां प्रशंसतीत्यत्राह——चित्रमिति । तव ईहितं निग्रहानुग्रहादिरूपमहो विचित्रं न तु कर्मवश्यप्राकृतेहितसजातीयमित्यर्थः । वैचित्र्ये हेतुं वदन्कर्मवश्यतां व्यञ्जयन् विशिनष्टि——अमितेति । अमितशक्तियुक्तसङ्कल्पज्ञानेन निर्मितनानाविधसृष्टभुवनस्येत्यर्थः । विशारदस्य सृष्ट्युपयुक्तसार्वज्ञ्यादिकल्याणगुणगणयुक्तस्य कृत्स्नचिदचिदन्तरात्मनः अत एव समदृशः वैषम्यनैर्घृण्यादिरहितस्यैव तव भक्तप्रियो भवसीति यदयमविषम एव स्वभावः न तु विषमः तत्र दृष्टान्तं वदन्विशिनष्टि, कल्पतरोः स्वभाव इव स्वभावो यस्य स त्वम् इति न हि कल्पतरोराश्रितार्थापूरणे न वैषम्यापादनं युक्तमिति भावः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवति भक्तिमतः पुरुषस्य किमपि दुःसाध्यं नास्ति इत्येतत्प्रपञ्चयत्यनेनास्मिन्नध्याये, तत्र बलेर्हर्षोद्रेकतामं वक्तुमाह, इत्युक्तवन्तमिति । भक्तेरुत्कर्ष उद्रेको यस्य स तथा ॥ १ ॥

समुद्यतः ऊर्ध्वं वर्धमानस्याऽस्य तव प्रणामो अहो कुतो विस्मय इत्यत उक्तं, कृत इति. त्वयेनेति शेषः । इतोऽपि विस्मय इत्याह, प्रपन्न इति. समाहितः एकाग्रीकृतोऽन्यत्रानवसरत्वुल इत्यर्थः । त्वमपि तत्त्वेकः किं न स्यादित्यत आत्मानं धिक्करोति, यल्लोकेति. असुरजातावप्यपसदे अधमे अलब्धपूर्वं इति यथायोग्यमिति ज्ञातव्यम् ॥ २—४ ॥

लब्धप्रसादश्च निर्मुक्तश्च तम ॥ ५ ॥

विश्वाभिवन्द्यैर्ब्रह्मादिभिरभिवन्दिताङ्घ्रिः श्रीकान्तोऽसुराणामपि नो दुर्गपालो द्वारपाल आसीदिति यदिमं प्रसादं विरञ्चादिभिर्न लभ्यते इत्यन्वयः ॥ ६ ॥

कुसृतयः कुत्सितमार्गास्तत्र हेतुमाह, खलयोनय इति. तस्य ते तव कस्माज्जन्तोर्दाक्षिण्यवदृष्टिपदवीं प्रणीताः भक्तानुकम्पित्वमन्तरेणेति शेषः । "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः ॥७ ॥

भगवत्स्वरूपस्यानादाहितमपि लोकविलक्षणमिति भावेनाह चित्रमिति । तव चित्रं नानाविधमीहितं चेष्टितमहो "अहो हीह-विस्मये" इति यादवः । तत्कथमिति तत्राह-विषमेति । विषमस्वभावोसि भक्तप्रियोऽसि कल्पतरुस्वभावोऽसि यस्मात्त्वम

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तथैव त्वं भक्तत्वेन प्रीणासि नत्वाभक्तत्वेनेति भजनतारतम्यमात्र एव तव प्रीतितारतम्यं वस्तुतस्ते साम्यमेवायातं यदुक्तं त्वयैव "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति ॥ ८ ॥ ९ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

बल्यादीनां सुतलस्थानगमनं यज्ञसमाप्तिं च वर्णयति—इत्युक्तवन्तमिति, त्रयोविंशेन। उद्गद्गः उत्कण्ठः ॥ १ ॥

पूर्वोक्तप्रह्लादादिवाक्यश्रवणेन भगवदनुग्रहेण च सर्वं भगवदीयमिति कृत्वा मया किमपि भगवते न दत्तमिति च ज्ञात्वा मया तु प्रणामोऽपि न कृतः किन्तु तत्समुद्यमः कृतस्तेनैव कृतार्थोऽस्मि तत्प्रणामार्थोद्यमस्यैव महिमा तु किं वर्ण्यते इत्याह—अहो इत्यव्ययम् अत्र कैमुतिकन्यायद्योतकः प्रणामाय प्रणामार्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थस्तस्य विधौ सम्पादने समाहितः अप्रमत्तः स्थितः अहो किमुत प्रणामस्तत्र समाहितः किमुततराम् अर्चनध्यानादिस्तत्र समाहित इति वक्तव्यम्. ननु, कुत एतदवगम्यते इत्यत्राह—यत् येन समुद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरपि अलब्धपूर्वः त्वदनुग्रहः "सहामात्यैः प्रविश्य सुतलं त्वं भवेर" इति पूर्वोक्तः असत्सु नीचे दानवे मयि अर्पितः ॥ २ ॥

मुक्तः पाशेभ्यः ॥ ३ ॥

प्रत्यानीय प्रत्यर्प्य शशास तत् उपेन्द्रः सन् पालयामास ॥ ४ ॥

भक्तिप्रवणः भक्तितत्परः निर्मुक्तं पाशेभ्यो विमुक्तं निशाम्य ज्ञात्वा ॥ ५ ॥

विश्वाभिवन्द्यैर्विरिञ्चादिभिः दुर्गपालोऽसि "रक्षिष्ये सर्वतोऽहं त्वाम्" इत्युक्तेः ॥ ६ ॥

हे शरण्य आश्रयप्रद! ब्रह्मादयः बहुगुणयुक्ताः यस्य तव पादपद्मयोर्यो मकरन्दः कीर्तिः तन्निषेवया विभूतीः ऐश्वर्याणि अश्नुवते प्राप्नुवन्ति तथाभूतस्य ते दाक्षिण्यदृष्टेः कृपावलोकस्य पदवीं विषयतां कुसृतयः कुत्सिता सृतिरासुरो मार्गो येषां ते खलयोनय उग्रजातयो वयं कस्मात् कुतः प्रणीताः प्रापिताः ॥ ७ ॥

तं हेतुं स्वयं वदन् अत्यद्भुतचेष्टितं तवेति स्तौति-चित्रमिति। यत् यस्त्वं भक्तप्रियोऽपि भक्तपक्षपात्यपि अविषमस्वभावोऽसि तस्य तवेहितं चेष्टितम् अहो चित्रम् अत्यद्भुतमित्यन्वयः। भक्तपक्षपातित्वेऽपि अविषमस्वभावत्वम् स्फुटीकर्तुं विशिनष्टि—कल्पतरुस्वभाव इति। कल्पतरुस्वभाववत्स्वभावो यस्य सः यथा कल्पतरुः आश्रितजनानामेव सुखदोऽप्यविषमो भवति तथा त्वमसीत्यर्थः। कथम्भूतस्य सिनः स्वल्पोऽपि यो युज्यते इति योगः सङ्कल्पः "एकोऽहं बहुस्याम्" इत्यादिश्रुतिप्रसिद्धः तस्य वशवर्तिनी माया तया सह या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य ॥ ८—९ ॥

———

### भाषा टीका।

श्रीरुक्मिणीदेवीसमेतश्रीदेवकीनन्दनाय नमः।

#### श्रीशुक उवाच।

श्रीशुकदेवजीबोले, कि—पुरातन पुरुष के पूर्वोक्तवचनों को सुनकर अखिल साधुजनों के संमत महाप्रभावबलि और आंसुओं से व्याकुल नेत्र जिन का तथा भक्तिसे उत्कण्ठित होकर राजा बलि हाथ जोड़कर गद्गद्वाणी से बोले ॥ १ ॥

#### बलिरुवाच।

बलि बोले, कि—प्रभो! आपको प्रणाम करने की महिमा तो किससे कही जाय परञ्च प्रणाम के लिये किये हुए उद्यम का यह प्रभाव है, कि— वह उद्यम ही अभक्तों को भी शरणागतभक्तजनों का जो अर्थ है उसके सम्पादन में सदा जागरूक रहता है क्योंकि? जो आपका अनुग्रह बड़े २ लोकपालों को भी नहीं प्राप्त हुआ सो अनुग्रह मेरे सदृश नीच असुर पर आपने किया ॥ २ ॥

#### श्रीशुक उवाच।

श्रीशुकदेवजीबोले, कि— राजाबलि, इतना कहकर श्रीहरि को नमस्कार कर तथा महादेवजी सहित ब्रह्माजी को नमस्कार कर वरुणपाश से छूटकर असुरों से सहित प्रसन्न होकर सुतल में प्रवेश करते हुए ॥ ३ ॥

हे राजन्! भगवान् इस प्रकार इन्द्रको स्वर्ग देकर अदिति के मनोरथको पूर्णकर सकलजगत् का अच्छी तरह शासन करते हुए ॥ ४ ॥

भगवत्प्रसाद को प्राप्त होने वाले वरुण के पाश से विनिर्मुक्त हुए अपने पुत्रवंश को धारण करने वाले बलिको देखकर भक्तिप्रवण प्रह्लादजी भगवान से यह बोले ॥ ५ ॥

#### प्रह्लाद उवाच।

प्रह्लादजी बोले, कि—हे भगवन्! ऐसी कृपा आप की ब्रह्माजी के ऊपर भी नहीं हुई, तथा महादेवजी को भी यह प्रसाद नहीं मिला, जो कि— विश्ववन्दनीयों से अभिवन्दितचरणकमल जिन के ऐसे आप साक्षात् हमारे असुरों के द्वारपाल हुए ॥ ६ ॥

हे शरणदायक! जिन आपके चरणकमल के मकरन्द की सेवा से ब्रह्मादिक अपनी २ विभूति को प्राप्त होते हैं फिर हे प्रभो! कुत्सित मार्गवाले खलयोनि हम असुर लोग आप की कृपा कटाक्ष के पात्र कैसे हुए? ॥ ७ ॥

आप अपनी अमित योगमाया से जब लीला करते हैं तब अनेक भुवनों की सृष्टि होजाती है इस प्रकार की तो परम विशारद ऐसे आपकी चेष्टा है परंच सर्वात्मक और समदर्शी होकर भी आपका स्वभाव है, कि—भक्तों पर प्रीति करते हो उसका भी कारण यही है, कि आपका स्वभाव कल्प वृक्ष सदृश है। जैसे कल्प वृक्ष के आश्रय लेने वालों की कामनाओं को ही पूर्ण करता है तो भी उसका विषम स्वभाव नहीं कहा जाता ॥ ८ ॥

———

श्रीभगवानुवाच ।

वत्स ! प्रह्लाद ! भद्रं ते प्रयाहि सुतलाऽऽलयम् ।
मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥
नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ।
मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥

श्रीशुक उवाच ।

आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ।
बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥
परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ।
प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥
अथाहोशनसं राजन् ! हरिर्नारायणोऽन्तिके ।
आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥
ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ।
यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

शुक्र उवाच ।

कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ।
यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥
मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रमनुसङ्कीर्तनं तव ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मद्दर्शनेन यो महाह्लादस्तेन ध्वस्तं कर्मनिबन्धनमज्ञानं यस्य ॥ १०-१३ ॥

कर्म वितन्वतः शिष्यस्य यच्छिद्रमन्तरं न्यूनं जातं तत्सन्तनु विस्तारय सन्धत्स्व यजमानं विना कथं सन्धातव्यमिति न वाच्यमित्याह—यत्तदिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् किम्पुनरनुष्ठितमित्यर्थः ॥ १४ ॥

भवान् यस्य कर्मणामपि भावेन वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यम् कथम्भूतः कर्मणामीश्वरः प्रवर्तकः यज्ञेशो यज्ञफलदः यज्ञमयश्च पुरुषः ॥ १५ ॥

आस्तां तावत् पूजा यस्मान्मन्त्रतः स्वरादिभ्रंशेन तन्त्रतो व्युत्क्रमादिना देशतः कालतश्च अर्हतः पात्रतः वस्तुतश्च दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव नामाऽनुकीर्तनमात्रमेव निश्छिद्रं करोतीति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विज्ञापितस्तं भगवानुवाच—वत्सेति । हे प्रह्लाद ! तव भद्रमस्तु सुतलाख्यं बिलस्थानं प्रयाहि गच्छ, तत्र स्वपौत्रेण बलिनासह मोदमानः ज्ञातीनां मुदं हर्षम् प्रापय ॥ ९ ॥

तत्र सुतले नित्यं मदा अवस्थितं सन्निहितं गदा पाणौ यस्य तं मां द्रष्टासि द्रक्ष्यसि नित्यं द्रष्टासि इति वा स्वरूपः नित्यं मद्दर्शनेन यो महानाह्लाद आनन्दस्तेन ध्वस्तं कर्मरूपं निबन्धनं संसृतिहेतुर्यस्य तादृशो भविष्यसीति ॥ १० ॥

[illegible] भगवत आज्ञां शिरसा बाढमित्याधायानुपेत्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे राजन् ! अमला प्रज्ञा स्वात्मपरमात्मयाथात्म्यविषया यस्य सः प्रह्लादो बलिना सह बद्धाञ्जलिः सन् ॥ ११ ॥

आदिपुरुषं प्रदक्षिणीकृत्य प्रणतः कृतप्रणामः सर्वेषामसुराणां चमूनां सेनायाः अधिपतिर्भूत्वा तेन भगवता अनुज्ञातो महाबिलं सुतलं विवेश ॥ १२ ॥

अथ तत्प्रवेशानन्तरं हे राजन् ! भगवान्नारायणः समीपे सभायां ब्रह्मवादिनामृत्विजाम्मध्ये आसीनमुपविष्टम् उशनसं शुकमुवाच ॥ १३ ॥

तदेवाह—ब्रह्मन्निति । हे ब्रह्मन् ! वितन्वतो यजमानस्य शिष्यस्य बलेः यत् यज्ञस्य छिद्रं कर्मसु वैषम्यं वैगुण्यरूपं तद्ब्रह्महष्टं नेवर्योधितं समं वैषम्यरहितमविगुणं यथाभवेत् तथा सन्तनु कुरु ॥ १४ ॥

एवमुक्तः शुक्रस्तावत्प्रकृतकर्मणि वैगुण्यमेव नास्तीति विज्ञापयति—कुत इति श्लोकाभ्याम् । तस्य बलेः कर्मणो वैगुण्यं कुतः ? न कस्मादपीत्यर्थः । वैषम्याभावे हेतुमाह—यस्य येन बलिना कर्तरि षष्ठी सर्वभावेन करणत्रयेण सर्वकर्मणामीश्वरः यज्ञेशः यज्ञपुरुषश्च भगवान् त्वं पूजितो ऽतो न वैषम्यमित्यर्थः । कर्मेश्वरः इति सर्वकर्मप्रवर्तकत्वमुक्तं, यज्ञेश्वर इति यज्ञफलप्रदत्वं, यज्ञपुरुष इति यज्ञ शरीरकत्वं, तद्भोक्तृत्वं चेत्यपौनरुक्त्यम् ॥१५॥

किं वक्तव्यम् एतत् यत्तव पूजनम् अवैषम्यावहमिति यतस्त्वन्नामकीर्तनेन तद्वाहमित्याह—मन्त्रत इति । मन्त्रतन्त्रवैशकालवस्तुभिर्यत् यच्छिद्रं मन्त्रादीनां यद्वैगुण्यमित्यर्थः तत्सर्वं तव नामसङ्कीर्तनमेव निश्छिद्रं करोति ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बलिप्रह्लादयोर्भगवद्भक्तत्वेपि बलेर्बन्धनादिदुःखमभूत्प्रह्लादेर्नेति शङ्का—

"बलिरप्यसुरावेशात् स्तुत्यश्चापि जनार्दनम् ।
आक्षिपत्यन्तरा क्वापि प्रह्लादो नित्यभक्तिमान्" ॥

इत्यनेन परिहर्तव्या । आक्षेपफलं दुःखमित्यर्थः ॥ ६—१३ ॥

कर्म वितन्वतोऽस्य यत्तद्ब्रह्मणैर्ब्राह्मणैर्दृष्टं निरूपितं कर्मसु वैषम्यमन्तरायोऽपहानिः यथासमं विहितफलदत्वेन समर्थं भवेत्तथा तव शिष्यस्य बलेः कर्मणो वैषम्यलक्षणमपराधं सन्तनु परिहृतं कुरु कर्मरन्ध्रं समुन्नतं कुरु वा "छिद्रं रन्ध्रापराधयोः" इत्यभिधानं ब्रह्मणा दृष्टं वा ॥ १४ ॥

सति छिद्रे तत्परिहारस्तत्तदैव नास्ति अस्ति चेदपि तव नामसङ्कीर्तनं निश्छिद्रं करोतीति वक्तुमुक्तमित्याह—शुक इति, यज्ञपुरुषो भवान्यस्य बलेः कर्मेश्वरः अतः यज्ञेश इति अनेन सर्वयज्ञस्वामित्वं तव विद्यते किमुतैतद्यज्ञस्वामित्वं बलेरात्मकस्मादिति सूचितम् । तस्य बलेः कर्मवैषम्यं कुतो हेतोः स्यादित्यन्वयः । सर्वभावेन सर्वदानेन पूजित इत्यस्माच्च ॥ १५ ॥

तवानुसङ्कीर्तनम् मन्त्रतस्तन्त्रतश्छिद्रं सर्वं देशकालोचितवस्तुनो यथा तथा निश्छिद्रं पूर्णं करोतीत्यन्वयः ॥ १६—२३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वमेव मद्दर्शनेत्यादि स्वरूपस्त्वम् इतस्तु तत्र नित्यमेव मां द्रष्टासीत्यर्थः ॥ १०-३१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्मबन्धक्षयः संसारस्तु मत्परमदर्शनाह्लादातिशयक्षयः एव पूर्वमेव ध्वस्त इत्याह, मद्दर्शनेति ॥ १०—१२ ॥

हरिः बलिसम्बन्धेन तस्यापराधदोषं हरतीति हरिः ॥ १४ ॥

कर्म वितन्वतः शिष्यस्य यत् छिद्रमन्तरं न्यूनं जातं तच्छन्तनु विस्तारय सन्धत्स्व यजमानं विना कथं सन्धातव्यमिति न वाच्यमित्याह—यत्तदिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् किंपुनरनुष्ठितमित्यर्थः ॥ १४—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मद्दर्शनमहाह्लादेन ध्वस्ताः कर्मनिबन्धनाः मदितरपदार्थविषयकाः रागादयो दोषा यस्य सः ॥ १०—१३ ॥

यत् कर्मसु वैषम्यं तत् यद्यपि ब्रह्मदृष्टं ब्राह्मणैर्दृष्टं सम भवेत्तथापि हे ब्रह्मन् ! कर्म वितन्वतः शिष्यस्य छिद्रं कर्मन्यूनत्वं सन्तनु पूरय ॥ १४ ॥

सर्वेण सम्पूर्णेन भावेन भक्त्या पूजितो भवान् यस्य कर्मेश्वरः कर्मणामीश्वरः कारयिता भोक्ता फलदाता च तस्य कर्मसु वैषम्यं कुतः ? न कुतोऽपीत्यर्थः ॥ १५ ॥

किंबहुना मन्त्रतः स्वरादिभ्रंशेन तन्त्रतो ऽयुक्तक्रमादिना देशतः कालतश्च अर्हतः पात्रतश्च वस्तुतो दक्षिणादितश्च यच्छिद्रं वैषम्यं तत्सर्वं तव नामसङ्कीर्तनमेव निश्छिद्रं करोति ॥ १६ ॥ १७ ॥

भाषा टीका ।

श्रीभगवानुवाच ॥

श्रीभगवान बोले, कि—हे वत्स ! हे प्रह्लाद ! तुमारा मंगल हो तुम भी सुतल को जाओ और वहां अपने पौत्र के सहित ज्ञाती लोगों को सुख प्राप्त करो ॥ ९ ॥

और वहां पर अपने दरवाजे पर हमको गदा हाथ में लिये हुए देखोगे, और हमारे दर्शनके आह्लाद से तुमारे सर्व कर्म बन्धन छूटने जांयगे ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! राजा बलि के सहित सर्व असुरों की सैना के पति अमल बुद्धि श्री प्रल्हादजी भगवान् की आज्ञा को शिर पर धारण कर हाथ जोडकर आदि पुरुष को परिक्रमा देकर श्रीहरि की आज्ञा पाकर प्रणाम करते हुए २ महाबिल ( सुतल ) में प्रवेश करते हुए ॥ ११—१२ ॥

हे राजन् ! तदनंतर श्रीहरि ब्रह्म वादियों की सभा में ऋत्विज लोगों के समीप बैठे हुए शुक्राचारीजी से बोले, कि—॥१३॥

तथाऽपि वदतो भूमन् ! करिष्याम्यनुशासनम् ।
एतच्छ्रेयः परं पुंसां यत्तवाज्ञाऽनुपालनम् ॥ १७ ॥

श्रीशुक उवाच ।

अभिनन्द्य हरेराज्ञामुशना भगवानिति ।
यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥
एवं बलेर्महीं राजन् ! भिक्षित्वा वामनो हरिः ।
ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥
प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ।
दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥
कश्यपस्याऽदितेः प्रीत्यै सर्वभूतभवाय च ।
लोकानां लोकपालानामकरोद्वामनं पतिम् ॥ २१ ॥
वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥
उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्वविभूतये ।
तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ! ॥ २३ ॥
ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् ।
लोकपालैर्दिवं निन्ये ब्रह्मणा चाऽनुमोदितः ॥ २४ ॥

भाषा टीका ।

हे ब्रह्मन् ! यज्ञरूप कर्म के विस्तार करने वाले अपने शिष्य के यज्ञ में जो कुछ छिद्र रहा हो उसको पूरा करो, क्योंकि ? जो कुछ कर्म के विषय में विषमता होवे तो वह ब्राह्मण के देखने से ही सम होजाती है ॥ १४ ॥

शुक उवाच ॥

शुक्राचारीजी बोले, कि—हे प्रभो ! उसके कर्म में विषमता कैसी होसक्ती है, जिसके कर्म के आप स्वामी है और जिसने यज्ञेश यज्ञ पुरुष ऐसे आपकी सर्व प्रकार पूजा करी है ॥ १५ ॥

मंत्र, तंत्र, देश, काल, पात्र, और वस्तुओं से जो कर्म में छिद्र ( न्यूनता ) भया हो तो केवल आपका नाम संकीर्त्तन ही सब को निश्छिद्र कर देता है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेराज्ञां प्रतिनन्द्य बलेर्यज्ञच्छिद्रं समाधत्त सन्धत्ते पाठान्तरे समाधाय तदाज्ञां सम्पादितवानिति शेषः ॥ १८–१९ ॥

देवाश्च ऋषयश्च भूमिपाश्च मनवस्तैः सहितः ॥ २०–२१ ॥

ननु, लोकादीनां पतिरिन्द्रोऽस्त्येव सत्यम् तथाऽपि वेदादीनां कल्पं पालने दक्षं वामनमुपेन्द्रं कल्पयाञ्चक्रे ॥ २२–२३ ॥

देवयानेन मार्गेण विमानेनेति वा ॥ २४—२७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यप्येवं नास्त्येव वैषम्यं तथापि हे भूमन् ! वदतस्तव अनुशासनं करिष्याम्येव यतस्तव आज्ञानुपालनमिति यदेतत्पुंसां परमं श्रेयः ॥ १७ ॥

इतीत्थं हरेराज्ञां प्रतिनन्द्य भगवानुशनाः शुक्रः बलेर्यज्ञस्य छिद्रमृषिभिः सह समाधत्त समादधे ॥ १८ ॥

इत्थमुपवर्णितं भगवतो वामनस्य चरित्रमुपसंहरति—एवमिति । हे महाराज ! यत्परैरपहृतं तांत्रिदिवमित्थं बलेः सकाशाद्याचित्वा वामनरूपो हरिः भ्रात्रे महेन्द्राय ददौ ॥ १९ ॥

तदा प्रजापतिर्ब्रह्मा चतुर्मुखः देवैः ऋषिभिः पितृभिर्भूमिपैः मनुतत्पुत्रैर्दक्षादिभिश्च सह कश्यपस्य अदितेश्च प्रीत्यै सर्व-

प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः ।
श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥
ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ! ।
पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥
सुमहत्कर्म तद्विष्णोर्गायन्तः परमाद्भुतम् ।
धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतानां भवाय विभवाय योगक्षेमार्थं च लोकानां तत्पालकानां च पतिं वामनमकरोत् ॥ २० ॥ २१ ॥

वेदादीनां कल्पं समर्थं पालन इति शेषः । उपेन्द्रं सर्वभूतानां विभूतये पतिं कल्पयाञ्चक्रेऽकरोत् ॥ २२ ॥

तदा सर्वाणि भूतानि नितरां मुमुदिरे "मुद हर्षे" इति धातुः ॥ २३ ॥

ततो ब्रह्मणाऽनुमोदित इन्द्रो लोकपालैः सह वामनं भगवन्तं देवयानेन देववाह्ययानेन दिवं प्रतिनिन्ये प्रापयामास॥२४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

ततः बलियज्ञशालायाः ॥ २४—२८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समाधत्त सन्दधे समाधायेति पाठे तामाज्ञां सम्पादितवानिति शेषः ॥ १८ ॥ १९ ॥

भूमिपा मनवः ॥ २० ॥ २१ ॥

कल्पं पालने समर्थम ॥ २२ ॥ २३ ॥

पुरस्कृत्वा अनर्घवस्त्रालङ्कारादिभिः सम्मान्य देवयानेन विमानेन देवमार्गेण वा ॥ २४—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इतीत्थं हरेराज्ञामभिनन्द्य बलेर्यज्ञच्छिद्रं समाधत्त सन्दधे ॥१८॥

महीं यत् त्रिदिवं परैर्हृतं तत् बलेः सकाशाद्गृहीत्वा महेन्द्राय ददौ ॥ १९ ॥

ब्रह्मा देवादिभिः सह कश्यपस्य अदितेश्च प्रीत्यै सर्वभूतभवाय च लोकानां लोकपालानां च वामनं पतिमकरोदिति द्वयोरन्वयः । भूमिपाः मनवस्तत्पुत्राश्च ॥ २२ ॥ २१ ॥

किञ्च वेदादीनां कल्पं पालने दक्षं सर्वविभूतये पतिं तमेव वामनमुपेन्द्रं कल्पयाञ्चक्रे अकरोत् इति सार्द्धश्लोकान्वयः । महीं त्रिदिवं च महेन्द्राय ददावित्युक्तत्वात् "प्राप्यत्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः" इति वक्ष्यमाणत्वाच्च श्रीवामनेन त्रिभुवनपतिरिन्द्रः कृत इन्द्रस्योपरि इन्द्र उपेन्द्रः श्रीवामनः ब्रह्मणा कृत इत्यर्थः ॥ २२ ॥ २३ ॥

इन्द्रो वामनं पुरस्कृत्य कनिष्ठभ्रातृत्वेनाग्रे आरोप्य देवस्य स्वस्य यानेन रथेन गजेन वा दिवं निन्ये प्रापयामास ॥ २४ २८॥

---

भाषा टीका ।

हे भूमन् ! तथापि आपकी आज्ञा अवश्य करूंगा क्यों कि ? पुरुषों को आपकी आज्ञा परि पालन करना यही बड़ा श्रेयः कारी है ॥ १७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि परमज्ञानी श्रीशुक्राचार्य जी भगवान की आज्ञा का इस प्रकार अभिनन्दन कर विप्रर्षियोंके सहित बलि के यज्ञ के छिद्र का संधान करने हुए ॥ १८ ॥

हे राजन् ! श्रीहरि ने वामन रूप धारण कर इस प्रकार से राजा बलि से पृथिवी को मागकर जो शत्रुओं ने स्वर्ग छुड़ा लिया रहा उसको फिर अपने भ्राता महेन्द्र को देदिया ॥ १९ ॥

तब मरीच्यादि प्रजापतियों के पति श्रीब्रह्मा जी ने, देवर्षि पितृलोग और दक्ष आदिक राजा लोग तथा भृगु अंगिरा सनत्कुमार अथवा स्वामि कार्तिक और महादेवजी ॥ २० ॥

इन सब को साथ लेकर कश्यप और अदितिजी की प्रसन्नता के लिये तथा सम्पूर्ण प्राणियों के मंगल के लिये श्रीवामनजी को लोक और लोकपालों के पति करदिये ॥ २१ ॥

वेद, सम्पूर्ण देवता, धर्म, यश, श्री, कल्याण, व्रत, स्वर्ग, अपवर्ग [ मोक्ष ] इन सबों के पालन करने में चतुर ॥ २२ ॥

ऐसे श्रीवामनजी को सर्व समृद्धि के लिये उपेन्द्र बनाये हे राजन् ! तब सब प्राणियों को बड़ा आनन्द प्राप्त हुआ ॥ २३ ॥

तब तो इन्द्र श्रीवामनजी को विमान में बैठाकर ब्रह्माजी के अनुमोदन से लोक पालों सहित स्वर्ग में ले गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतच्चरितमाख्यातामिति विशेषोक्त्याऽन्यान्यपि सन्तीत्युक्तम् ॥ २८ ॥

सर्वमेतन्मयाऽऽख्यातं भवतः कुलनन्दन ! ।
उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥
पारम्महिम्न उरुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ।
किञ्जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥
य इदं देवदेवस्य हरेरद्भुतकर्मणः ।
अवताराऽनुचरितं शृण्वन्याति परां गतिम् ॥ ३० ॥
क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ।
यत्र यत्राऽनुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे वामनावतारचरिते
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानि तर्हि निःशेषाणि वर्णनीयानीत्यपेक्षायामाह–पारमिति । उरु बहुधा विक्रमतो विष्णोर्महिम्नः पारं यो गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् यथा पार्थिव परमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्यमित्यर्थः तथा च मन्त्रः "विष्णोर्नुकं वीर्याणि" इति एतदेव मन्त्रान्तरार्थं सूचयन्नाह–यस्य पुरुषस्य पूर्णमहिम्नः पारं मन्त्रदृगृषिर्वसिष्ठ इति एवमाह, कथम् किञ्जायमानो जातो वा उपैति न कोऽपीति यद्यनन्तत्वेनैवाऽऽहेत्यर्थः । तथा च मन्त्रः "न ते विष्णो ! जायमानो न जातो देवमहिम्नः परमं तमाप" इति ॥ २९ ॥

य इदं शृण्वन् भवति स पराङ्गतिं याति ॥ ३० ॥

सुकृतं यथावत्कृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत उपेन्द्रस्य भगवतः भुजपालितं त्रिभुवनं प्राप्य त्रिभुवनाधिपतिर्भूत्वा इन्द्रः निर्भयः परमया श्रिया सम्पदा जुष्टो मुमुदे ॥२५॥

ततो हे नृप ! सर्वे ब्रह्मादयो वैमानिका विमानारूढाश्च तद्विष्णोर्वामनस्य सुमहदतिनरसाधारणमत एव परमाद्भुतं कर्म चरित्रं गायन्तः स्वस्वस्थानानि जग्मुः अदितिश्च शशंसिरे तुष्टुवुश्च ॥ २६ ॥ २७ ॥



हे कुरुनन्दन ! श्रोतॄणां शृण्वतां दुरितहरं सर्वमस्मद्बुद्धिगोचरमेतदुरुक्रमस्य चरितं भवतो मया कथितं सर्वं मयाऽऽख्यातमित्यनेन स्वमतिविषयं मयाऽऽख्यातमित्यभिप्रेतं न तु उरुक्रममहिम्नः परिच्छिन्नत्वमित्यर्थः ॥ २८ ॥

तदेव व्यञ्जयितुं तन्महिम्नोऽनवच्छिन्नत्वमाह–पारमिति । यो मर्त्यः पुमानुरुक्रमस्य महिम्नः पारमवधिं गृणानो भवति स मर्त्यः पृथिव्या इमानि पार्थिवानि रजांसि विममे गणयेत् यथा पार्थिवानां रजसां गणना कर्तुमशक्या तथोरुक्रमस्य गुणानामपीत्यर्थः । पार्थिवानि रजांसि वा बुद्धिमान् महता कालेन गणयेत् न तु उरुक्रमस्य गुणानिति भावः । तथा च श्रूयते "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति तथा हि यस्य पुरुषस्योरुक्रमस्य महिम्नः पारं जातः जायमानो जनिष्यमाणो वा मर्त्यः उपैति किं नोपैत्येवेति*मन्त्रद्रष्टा ऋषिः वसिष्ठादिराह ॥ २९ ॥

प्रकृतावतारचरितश्रवणादिफलमाह–य इति । यः कश्चिदिदमद्भुतकर्मणो देवानां ब्रह्मादीनामपि देवस्य वामनस्यावतारानुचरितं शृण्वन् परां गतिं मुक्तिरूपां याति प्राप्नोति ॥ ३० ॥

यत्रयत्र देवमनुष्यपित्रादिसम्बन्धिनि क्रियमाणे कर्मणि इदमवतारानुचरितं कीर्त्येत तत्तेषां सम्बन्धि कर्म सुकृतं सुष्ठु अविगुणं यथा भवति तथा कृतं विदुस्तद्विदः इति शेषः । अतस्मात्सर्वकर्मसाद्गुण्यापादकत्वमेतच्चरित्रश्रवणादिकमित्यर्थः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

* न ते विष्णो जातो जायमानो देव महिम्नः परमन्तमाप इति मन्त्रोऽनुसन्धेयः ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मादिमहिमातिरिक्तमहिमत्वे मुरारेश्चरितस्य संसाराख्याघ-सङ्घातविघातकत्वं घटनामपि तत्कथमित्याशङ्क्य, प्रमाणपूर्वकं तदाह-पारं महिम्न इति। "विष्णोर्नुकम् वीर्याणि प्रवोचम्" "न ते विष्णो जायमानो न जातः" इति मन्त्रद्वयवद्द्रष्टा ऋषि-रित्याह यस्य पुरुषस्य यो मर्त्यः पार्थिवानि रजांसि पार्थिवपरमाणूनिवमन मानङ्गान्यपि छन्दसि "व्यत्ययो बहुलम्(३।१।८५।७७")इति वचनाल्लुडर्थे लिट् जातो जायमानः उत अनिष्पमाणो वा समर्थः महिम्नः पारं समाप्तिम् उपैति किम् ? नैवोपैतीत्यन्वयः। पुरुषः क इति तत्राह-मुरारेरिति । स यदुतिलक इति नेत्याह, उरुविक्रमत इति. उरु महत्तया भवति तथेति क्रियाविशेषणं कविरत्यतिक्रान्तः वृद्धर्षीति वा ॥ २६ ॥

यस्त्वत्याद्भुतकर्मणो देवदेवस्य हरेरवताराऽनुचरितं शृण्वन् वर्तते स परां गतिं वैकुण्ठाख्यां यातीत्यन्वयः ॥ ३० ॥

अन्यविषयकर्मसमयेऽपि कीर्त्यमानमिदं भगवत्कर्म पूर्णफलप्रदं करोतीत्याह-क्रियमाण इति । अथ मङ्गले दैवप्रभृतिकर्मणि क्रियमाणे सतीदमवताराऽनुचरितं यत्र यत्र कर्मणि कीर्त्येत तेषां पुंसां तत्तत्कर्म सुकृतं पूर्णफलदानसमर्थं विदुर्ज्ञानिन इति शेषः ॥३१॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥२३॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतत् उरुक्रमस्य चरितं सर्वं मया आ ईषदेव माख्यातं सर्व-स्यैवाद्यन्तमध्यभागस्याल्पमल्पमुक्तमित्यर्थः । नन्वेतत् कथामृतं निःशेषमेव वर्णयितुमर्हसीत्यत आह-पारमिति। उरुक्रमत उरुक्रमस्य महिम्नः पारं गृणानो भवति स मर्त्यः पार्थिवानि रजांसि विममे यथैव पार्थिवपरमाणुगणनमशक्यं तथैव विष्णोर्गुणगणनमपीत्यर्थः । यस्य पुरुषस्य पूर्णस्य महिम्नां पारं किं जायमानो मर्त्यं उत जातो वा उपैति न कोऽपीत्यर्थः । इति मन्त्रद्रष्टा वसिष्ठः ऋषिराह-तथा च मन्त्रः "विष्णोर्नुकं वीर्याणि प्रवोचम्" इत्यादि. मन्त्रान्तरं च "न ते विष्णो जायमानो नजातो देवमहिम्नः परमं तमाप" इति ॥ २९ ॥

य इदं शृण्वन् भवति स परां गतिं याति ॥ ३०—३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमस्य त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मादयो विष्णोः सुमहत्कर्म गायन्तः स्वानि धिष्ण्यानि स्थानानि जग्मुरदितिं च शशंसिरे इति द्वयोरन्वयः ॥२६।२७॥

यथामति सर्वं श्रीवामनचरितं मया तुभ्यं वर्णितं कार्त्स्न्येन तु कोऽपि न वक्तुं शक्त इत्याह-सर्वमिति द्वाभ्याम् ॥ २८ ॥

उरु बहुधा विक्रमतो विष्णोः महिम्नः पारम् अवधिं यो मर्त्यः गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे, गणितवान् यथा पार्थिवरजोगणनमशक्यं तथा विष्णुगुण-गणनमशक्यमित्यर्थः । मर्त्य इत्यनेन मरणधर्मः कालपरिच्छेद्यः ब्रह्मादिभिरपि त्रिविधपरिच्छेदशून्यस्य विष्णोः स्वरूपगुणादिकं साकल्येन वक्तुं नैव शक्नुयादिति सूच्यते तथा च मन्त्रः "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति एतदेव मन्त्रान्तरार्थं सूचयन्नाह—यस्य पुरुषस्य महिम्नः पारं जायमानः उत अथवा जातो मर्त्यः उपैति किम् ? नैवोपैति इति मन्त्रदृक् ऋषिर्वसिष्ठादिराह—तथा च मन्त्रः "न ते विष्णो जायमानो न जातो देवस्य महिम्नः परमं तमाप" इति ॥ २९ ॥

इदमवतारानुचरितं यः शृण्वन् भवति स परां गतिं याति ॥ ३० ॥

सुकृतं सुष्ठु कृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाऽध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषा टीका ।

उस समय इन्द्र त्रिभुवन को प्राप्त होकर श्री उपेन्द्र की भुजाओं के बल से पालित हुआ सर्व भय को छोड़कर परम श्री अर्थात् बड़ी भारी सम्पत्ति से मोद को प्राप्त होता भया ॥ २५ ॥

हे नृप! तब श्री ब्रह्माजी, श्री महादेवजी, कुमार, भृगु आदिक मुनि, पितृगण, विमानों से संचार करने वाले सिद्ध लोग तथा और सर्व प्रजा ॥ २६ ॥

श्रीविष्णु के परमाद्भुत उस त्रिविक्रमावतार के महान् कर्म को गाते हुए अपने २ गृहों को गये और अदिति की भी बहुत प्रशंसा

हे कुरु नन्दन ! यह उरुक्रम [ लंबी पगों वाले ] का चरित्र हमने तुमसे कहा यह चरित्र श्रोताओं को पाप से छुड़ाने वाला है ॥ २८ ॥

जो अनन्त पराक्रम वाले श्रीहरि की महिमा के पार को कथन करता है उसमनुष्य ने जानों कि पृथिवी के रजों की गणना कर लीनी । मंत्र द्रष्टा ऋषि वसिष्ठ जी ने भी ऐसा कहा है, कि उत्पन्न हुआ और उत्पन्न होने वाला मनुष्य परम पुरुष की महिमा का पार पा सका है क्या ? ॥ २९ ॥

भाषा टीका ।

जो पुरुष देवदेव अद्भुत कर्म्मा श्रीहरि के अवतार के चरितों को सुनता है वह सुनते२ पर गति को प्राप्त होता है ॥३०॥ देव सम्बन्धि पितृ सम्बन्धि अथवा मनुष्य सम्बन्धि कर्म करते समय पर जहाँ२ इस चरित्र का कीर्त्तन किया जाय वहाँ पर उस कर्म को विधि पूर्वक किया हुआ महात्मा जन जानते हैं ॥ ३१ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, त्रयोविंशतितम अध्याय की श्रीवृन्दावनस्थ भागवताचार्य कृत भाषा टीका समाप्त ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥



## ॥ चतुर्विंशोऽध्यायः ॥

—०:०:०—

राजोवाच ।

भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥
यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ।
तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥
एतन्नो भगवन् ! सर्वं यथावद्वक्तुमर्हसि ।
उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

सूत उवाच ।

इत्युक्तो विष्णुरातेन भगवान्बादरायणिः ।
उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ ॥

श्रीशुक उवाच ।

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥
उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः ।
नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥
आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ७ ॥
कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ।
मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः ।
लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥ १ ॥
तनुं तनुं बिभ्रदर्वाग्वै निजैश्वर्यनिदर्शनात् ।
मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥ २ ॥

मायया मत्स्यविडम्बनं मत्स्यरूपानुकरणं यस्यां निरूप्यते ताम् ॥ १ ॥

ननु, कस्मादकस्मादेव मत्स्यावतारप्रश्नो राज्ञः ? श्रीवामनसादृश्यादित्याह–यदर्थमिति द्वाभ्याम् । दुर्मर्षं दुस्सहम् ॥ २ ॥

बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं धृतवानिति युक्तमुक्तं यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयदेतन्नो यथावद्वक्तुमर्हसीत्यर्थः ॥ ३—४ ॥

सामान्येनावतारप्रयोजनमाह—गोविप्रेति ॥ ५ ॥

जुगुप्सितत्वं परिहरति–धियो गुणैर्यान्युच्चावचानि भूतानि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो हे भारत ! द्रविडदेशाधिपः सत्यव्रतः तां शफरीमञ्जलिगतां तोयेनाञ्जलिस्थेन सह नदीतोये तत्याज ॥ १३ ॥

तं त्यक्तवन्तं महाकारुणिकं नृपं सत्यव्रतं सा शफरी अतिकरुणा यथा भवति तथोवाच. तदेवाह–कथमस्य इति । हे राजन् ! ज्ञातीनस्मान् घातयन्तीति तथा तेभ्यः ज्ञातयश्च ते घातिनश्च तेभ्य इति वा यादोभ्यो जलचरेभ्यो भीतामतएव दीनां मां हे दीनवत्सल ! कथमस्मिन्सरिज्जले बहुजलचराकान्ते विसृजसे त्यजसि ॥ १४ ॥

इत्येवमुक्तः स राजा सत्यव्रतः आत्मनः स्वस्यानुग्रहार्थं प्रीत्या मत्स्यमूर्तिं बिभ्राणं साक्षाद्भगवन्तमजानन् शफरीरक्षणार्थं मतिं दधे मनश्चक्रे ॥ १५ ॥

ततस्तस्याः शफर्याः दीनतरमुक्तं वाक्यमाकर्ण्य स महीपतिः सत्यव्रतः दयालुरेनां शफरीं कलशाप्सु कमण्डलुजले निधाय स्वाश्रमंप्रति निन्ये प्रापयामास ॥ १६ ॥

तं प्रसिद्धं देवदेवं विष्णुमेव मत्स्यवपुर्धरमजानन् ॥ १५–१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शफरीरूपं मात्स्यं रूपं दधार धृतवान् ॥ ९ ॥

नारायणः परः उपास्यो यस्य सः ॥ १० ॥

हरिणोपास्येन मर्पितो निहितः ॥ ११ ॥

कृतमालायां नद्याम् ॥ १२ ॥ ॥ १३ ॥ १४ ॥

मत्स्यवपुर्धरं हरिमिति शेषः ॥ १५ ॥

कलशाप्सु कमण्डलुजलेषु ॥ १६ ॥ ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोऽसौ सत्यव्रत इति तत्राह, योसाविति ॥ ११—१२ ॥

मञ्जलितोयेन ॥ १३—१४ ॥

सः मनुः शफर्याः रक्षणार्थाय ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शफरीरूपं दधारेति । तत् प्रलयान्ते तत् प्रकटितवानित्यर्थः अतीतप्रलयापाय इत्यादि वक्ष्यमाणात् ॥ ९ ॥

तदेवमतीतकल्पस्य वृत्तान्तमुक्त्वा साम्प्रतकल्पस्य वृत्तमाह—तत्रेति । तत्र तस्मिन् वृत्तान्ते सतीत्यर्थः ॥ १० ॥

महाकल्प इत्यनेनास्य ब्राह्मदिनरूपस्य कल्पस्यादरविशेषो दर्शितः तच्च मनोरस्य स्तुत्यर्थमिति ध्येयम ॥ ११–२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शफरीरूपं दधारेति तेनैव रूपेण हयग्रीवं हत्वा स्वायम्भुवमन्वन्तरारम्भे वेदानाहरदित्यग्रिमोक्तेर्ज्ञेयं तेन मत्स्यरूपं विना वेदाहरणासम्भवात् ब्रह्मविस्मरणकारितार्थं मत्स्यरूपं दधारेति प्रथमो मत्स्यावतार उक्तः ॥ ९ ॥

पुनरपि मत्स्यः सत्यव्रताभिधनिजभक्तानुग्रहार्थमवतीर्ण इत्याह–तत्र मत्स्यस्वरूपे स्वदेवे भक्तिमानिति शेषः ॥ १० ॥

महाकल्पः इति दैनं दिनकल्पोऽयं महाकल्पशब्देनोक्तस्तत्रत्यविकसत्यव्रतमनोरादरविशेषार्थं इति सन्दर्भः एतन्महाकल्पान्तर्गत एव ब्रह्मदिने स विवस्वत्तनयो मनुर्नात्यत्रेत्यन्वे ॥ १०—१४ ॥

---

भाषा टीका ।

उस हयग्रीव नामक दानवेन्द्र की चेष्टा को जानकर भगवान् श्रीहरि ने शफरी [ मत्स्य ] के रूपको धारण किया ॥ ९ ॥

उस समय कोई एक नारायणपरायण सत्यव्रत नामक महान् राजर्षि जलमात्र पानकर तप करते रहे ॥ १० ॥

वह राजर्षि कौन रहे कि–जो विवस्वान् के पुत्र श्राद्धदेव नामसे प्रसिद्ध इस महाकल्प में श्रीहरि ने मनु बनाये ॥ ११ ॥

वे सत्यव्रत राजर्षि एक समय कृतमाला नदी में जल से तर्पण करते रहे, उस काल में उनके अंजली में एक छोटी सी शफरी [ मछली ] आगई ॥ १२ ॥

हे भारत ! द्रविडेश्वर राजा सत्यव्रत ने उसको जलके सहित नदी के जल में छोड दीनी ॥ १३ ॥

वह मछली परम कारुणिक राजा से बडे करुणा पूर्वक बोली, कि–हे दीन वत्सल ! जातिघातक जल जन्तुओं से डरी हुई ऐसी दीन मुझको हे राजन् इस नदी के जल में क्यों छोडते हो ? ॥ १४ ॥

अपनी रक्षा और अनुग्रह के लिये प्रीति से मीन रूप धारण करने वाले श्री हरिको न जानकर राजा ने उस मीनके रक्षा करने में चित्त लगाया १५ ॥

उन महीपति ने उस मछली का अति दीन वाक्य सुनकर परम दयालु राजा सत्यव्रत कलश के जलमें उसको डालकर अपने आश्रम में ले आये ॥ १६ ॥

---

सा तु तत्रैकरात्रेण वर्द्धमाना कमण्डलौ ।
अलब्ध्वात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥
नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविपुलं यत्राह[illegible]न् ॥ १८ ॥
स एनां तत आदाय [illegible]के ।
तत्र क्षिप्ता मुहूर्तेन [illegible] ॥ १९ ॥
न म एतदलं राज[illegible]मुदञ्चनम् ।
पृथु देहि पदं म[illegible]णां गता ॥ २० ॥
तत आदाय सा[illegible]राजन् ! सरोवरे ।
तदावृत्यात्मना[illegible]ऽन्ववर्द्धत ॥ २१ ॥
नैतन्मे स्वस्त[illegible]सलिलौकसः ।
निधेहि र[illegible]मविदासिनि ॥ २२ ॥
इत्युक्तः [illegible]तत्र तत्राविदासिनि ।
जलाशये[illegible]समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥
क्षिप्यमाण[illegible]मिह मां मकरादयः ।
अदन्त्य[illegible]वीर ! मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपि[illegible]

यत्राहं सुखं निवसामि तदोकः स्था[illegible] ॥ १८ ॥
औदञ्चनोदके मांसाक्षत्य जले ॥ १९—[illegible]
रक्षायोगेन रक्षाया योगेनोपायेन यथा महाह्रदप्राप्तेर्वाक् जलं विना न शुष्येयं तेनोपायेन निधेहि अविदासिनि अनुपक्षये ॥ २२ ॥
संमितं तत्तज्जलाशयपरिमितम् ॥ २३—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सा शफरी तत्र कमण्डलावेकरात्रेण वर्द्धमाना सती कमण्डलोरात्मनाऽपूर्णत्वादलब्ध आत्मनः अवकाशो यया सा च महीपतिं सत्यव्रतं प्रतीदं वक्ष्यमाणमुवाच ॥ १७ ॥

तदेवाह—नेति । नाहमत्र कमण्डलावहं कृच्छ्रं सङ्कटं यथा भवति तथा वस्तुं वासं कर्तुं नोत्सहे अतः सुविपुलमोकः स्थानं कल्पय यत्राहं सुखं निवसामि तादृशमोकः कल्पयेत्यर्थः ॥ १८ ॥

एवमुक्तः स सत्यव्रतः ततः कमण्डलोरेनां शफरीमादायौदञ्चनोदकं विपुलकटाहोदकं मणिकोदकं वा स्वधान्निहितवान् तत्रौदञ्चनोदके क्षिप्ता सा शफरी मुहूर्तेन कालेन हस्तत्रयमवर्द्धत ॥ १९ ॥

तथा वर्द्धमाना पुनरप्याह—हे राजन् ! मे मम सुखं वस्तुम् एतदुदञ्चनं नालं न पर्याप्तं ततो मह्यं पृथु विपुलं पदं स्थानं देहि कल्पय यतः त्वामहं शरणागता ॥ २० ॥

इत्युक्तेन सत्यव्रतेन तत उदञ्चनादादाय सरोवरे क्षिप्ता सती हे राजन् ! तत्सरोवरमावृत्य कृत्स्नमभिव्याप्य महामीनरूपेणाऽन्ववर्द्धत ॥ २१ ॥

पुनस्तथा वर्द्धमान उवाच—हे राजन् ! सलिलमेवौकः स्थानं यस्य तस्य मम स्वस्तये सुखाय सुखं वस्तुमेतत्सारसं जलं नालं सलिलौकसः सरसः सम्बन्ध्येतदुदकं मम स्वस्तये न भवतीति वाक्यशेषः । अतो रक्षाय योगेनोपायेनाऽविदासिनि अनुपक्षयजले महाह्रदे रक्षां विधेहीति ॥ २२ ॥

इत्युक्तः स सत्यव्रतः तं मत्स्यमुत्तरोत्तरविपुले तत्र तत्र जलाशये अनन्यरूपमस्तत्तज्जलाशयेन संमितं परिमितं तं मत्स्यं समुद्रे प्राक्षिपत् ॥ २३ ॥

समुद्रे च क्षिप्यमाणो झषः तं सत्यव्रतमिदमाह—हे वीर ! इह समुद्रे मकरादयोऽतिबलाः जलचरा मामदन्ति भक्षयन्ति अतो मामिह समुद्रे त्वं त्यक्तुं नार्हसीति ॥ २४ ॥

एवं विमोहितस्तेन वद ा वल्गुभारतीम् ।
तमाह को भवानस्मा न्मत्स्यरूपेण मोहयन् ॥ २५ ॥
नैवं वीर्यो जलच रो दृष्टोऽस्माभिः श्रुतोऽपि च ।
यो भवान्योजनश तमह्नाऽभिव्यानशे सरः ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भलब्धात्मावकाशमिति क्रियाविशेषणम् ॥ १७—१८ ॥

उदञ्जनं माणिकं हस्तत्रयं व्यामत्रयम् ॥ १९ ॥

पदं स्थानम् ॥ २० ॥

तत्सरोवरं आत्मना शरीरेणावृत्य व्याप्य ॥ २१ ॥

अविदासिनि अगाधे अभिन्नसेतौ वा ॥ २२ ॥

अनन्तरं किमकरोदिति तत्राह-इत्युक्त इति जलाशये दूरे असम्मितमसमानं सम्मितं समानं वा ॥ २३—२५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमिति तस्या मनुष्यवद्वाक्यमाधुर्याऽपि मत्स्यरूपत्वं तन्मायायैव विमोहितत्वात् ॥ २३-३३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

औदञ्जनोदके कूपजले ॥ १९ ॥ २० ॥

तत् सरोवरं आत्मना देहेन आवृत्य ॥ २१ ॥

रक्षायोगेन जलं विना यथा न म्रियेत तथोपायेनेत्यर्थः, अविदासिनि उपक्षयशून्ये ॥ २२ ॥

तत्र जलाशयेऽप्यसम्मितममान्तमित्यर्थः ॥ २३-२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृच्छ्रं कष्टं यथास्यात्तथाऽस्मिन्कमण्डलौ वस्तुं नोत्सहे अतः हास्मिन्काले यत्राहं सुखं निवसे निवसामि तदोकः स्थानं कल्पय ॥ १८ ॥

औदञ्जनोदके मणिकस्थे जले ॥ १९ ॥

नालं न पर्याप्त पृथु विपुलं पदं स्थानम् ॥ २० ॥

तत्सरोवरमात्मना देहेनावृत्य सर्वमभिव्याप्य महामीनरूपेणावर्धत ॥ २१ ॥

एतदुदकं मे स्वस्तये क्षान्त्यै नालम्, अतः रक्षायाः योगेनोपायेन मां अविदासिनि अनुपक्षये निधेहि ॥ २२ ॥

तस्मिन्नस्मिन् जलाशये अमयत पुनरसम्मितं तज्जलाशयपरिमाणातीतं समुद्रं प्राक्षिपत् ॥ २३ ॥ २४ ॥ २५ ॥

भाषा टीका ।

वो तो एक रात में बढती हुई उस कमंडल में अव न होकर राजासे इस प्रकार बोलती हुई ॥ १७ ॥

ा, कि—मैं इस कमंडलु में दुःख पूर्वक बसना न ता हूँ मेरे लिये बडे निवास की कल्पना करो जहाँ कि सुख पूर्वक रहूं ॥ १८ ॥

तब राजा ने भी कम निकालकर उसको [ मणिक ] माठ के बिषे जल में छोडने पर भी एक मुहूर्त्त में तीनि ॥

और राजा से बोली, कि—हे राजन् ! यह माठ मेरे लिये सुख पूर्वक रहने के लायक नहीं है तस्मात् मेरे लिये बडा ठिकाना बताओ क्योंकि ? मैं तुमारे शरण आई हूं ॥ २० ॥

हे राजन् ! फिर राजा सत्यव्रत ने उस पात्र में से निकाल कर सरोवर में छोडी तब उस समय पर सब जल को घेरकर बडा भारी मत्स्य बढ गया ॥ २१ ॥

और राजा से बोला, कि—हे राजन् ! जलमें रहने वाले ऐसे मेरे सुख पूर्वक रहने के योग्य यह जल नहीं है जिसमें मेरी अच्छी रक्षा होसके और जो कभी नहीं क्षीण हो ऐसे बडे हृद में मुझको छोडो ॥ २२ ॥

जब राजा से इस प्रकार कहा तब वह सत्यव्रत एक, से एक बडे बडे जलाशय में लेजाकर छोडने लगे, तब वह जलाशय परिमिति ही ता गया कोई भी जलाशय अधिक न हुआ तब, राजा ने उस म त्य [ मच्छ ] को समुद्र में लेजाकर छोडा ॥ २३ ॥

समुद्र में छोडने लगे तब वह मत्स्य फिर राजा से बोला, कि हे वीर इसमें बडे २ मकर आदिक जंतु मेरा भक्षण करलेंगे आप मेरे को इसमें छोडने को योग्य नहीं हो ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिव्यानशेऽभितो व्याप्तवान् ॥ २६—२७ ॥

नूनं त्वं भगवान् साक्षाद्धरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥
नमस्ते पुरुषश्रेष्ठ ! स्थित्युत्[illegible]श्वर ! ।
भक्तानां नः प्रपन्नानां [illegible]गतिर्विभो ! ॥ २८ ॥
सर्वे लीलावतारास्ते भू[illegible]वः ।
ज्ञातुमिच्छाम्यदो रूपं [illegible]तम् ॥ २९ ॥
न तेऽरविन्दाक्ष ! पदोपसर्प[illegible]सुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सत[illegible]द्भुतं हि नः ॥ ३० ॥
श्री[illegible]
इति ब्रुवाणं नृपतिं जग[illegible]मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रलयार्णवे[illegible]कान्तजनप्रियः प्रियम् ॥ ३१ ॥
[illegible]
सप्तमेऽद्यतनाद्[illegible]दम ! ।
निमंक्ष्यत्यप्य[illegible]यं भूर्भुवादिकम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुख्यः सत्य आत्मा च गतिश्चाऽभयः ॥ २८ [illegible]

हे अरविन्दाक्ष ! पृथगात्मनां देहाद्यभिमानिन[illegible] पदोपसर्पणं यथा मृषा भवेत्तथा सर्वसुहृत्प्रिय[illegible] पसर्पणं मृषा न भवेत्, यदस्मासु भक्तानाम[illegible] दर्शितवानसि पाठान्तरे पृथगात्मनो भेददर्शिनः [illegible] परिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः ॥ [illegible]

एकान्तजना भक्ताः प्रियाः यस्य ॥ ३१ [illegible]

अप्यगाऽम्भोधौ प्रलयार्णवे भूर्भुव आदि[illegible]

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्र[illegible]

इत्येवं वल्गुभारतीं सुन्दरवाचं वदता ते[illegible] भगवता विमोहितः सत्यव्रतस्तं मत्स्यमाह—को [illegible] इति ब्रुवाणमित्यन्तः प्राकृतेन ग्रन्थेन । अस्मान्मत्[illegible] यन् भवान् क इति प्रश्नः ॥ २५ ॥

कश्चिन्मत्स्यविशेष एवाहमिति चेत्त्याह—नेति[illegible] विभ्रमभाववान् कश्चिदपि जलचरोऽस्माभिर्न दृष्टः मा[illegible] एवं वीर्यं इत्युक्तं वीर्यं दर्शयन् विशिनष्टि—य इति । यः [illegible] अह्ना काले योजनशतमभिव्याप्तो गमितो व्याप्तवान् ॥ २६ [illegible]

मतस्त्वं न केवलं मत्स्यः किन्त्वमरो देवः तत्रापि न ब्रह्मा[illegible]ध्वमरेषु कश्चिदपि तु साक्षादव्ययः निर्विकारो भगवान् हरि[illegible]नारायणस्त्वं नूनं निश्चितमेवेत्यर्थः । तर्हि नारायणस्य मम [illegible]र्थविध आकारः किन्तु चतुर्भुजत्वाद्याकारः इत्यत आह—अनुग्रहा[illegible]ति । भूतानामनुग्रहाय देवमनुष्यादिभूतान्यनुग्रहीतुं जलौकसां मत्स्यानां रूपं धत्से मात्स्यं रूपं बिभर्षीत्यर्थः ॥ २७ ॥

कोऽसौ नारायणः ? इत्यपेक्षायां तं बद्धाञ्जलिर्नमस्करोति—नम इति । हे पुरुषोत्तम ! हे जगदुत्पत्तिस्थितिलयकारणभूत ! हे विभो ! भक्तानां प्रपन्नानां चास्माकं मुख्यः नायकोऽन्तरात्मा गतिः प्राप्यभूतः उपायभूतः "स तत्र पर्येति" सउत्तमः पुरुषः, यतो वा इमानि भूतानि जायन्ते, स कारणं करणाधिपाधिपः, य आत्मनि तिष्ठन्, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, अमृतस्यैष सेतुः, नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यादि वेदान्तवेद्यो निखिलजगदुदयविभवलयलीला आत्मेश्वरः सर्वान्तर्गतः सिद्धोपाय[illegible]तः पुरुषोत्तमो यः स नारायणः स एवाधुना मत्स्यरूपेणावतीर्णः [illegible] भावः । एवम्भूताय ते तुभ्यं नमः भक्तानां प्रपन्नानाम् इति [illegible]कृतभक्तियोगनिष्ठानामित्युक्तम् ॥ २८ ॥

[illegible]रसाधारणप्रभावेण त्वं नारायण एवेति निश्चिनोमि [illegible]तारा अपि सर्वे लोकहितार्था एवेति वेद्मि । किन्त्वेतदव[illegible]र्णं विशेषतो ज्ञातुमिच्छामीत्याह—सर्वे इति । ते तव सर्वे [illegible] लीलयोपात्ता अवताराः लीलावताराः लीलार्थेनाव[illegible]

(१) विकीर्षितं कान्तजनप्रियः प्रभुः । इति वीर० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दयात्मककर्ममूलत्वमुक्तं भूतानां देवादीनां भूतिर्विभवस्तदर्थमेव इति सामान्यतोऽवतारप्रयोजनं जानाम्येवेति भावः । किन्तु यदर्थं यस्मै प्रयोजनविशेषाय अत्र एतन्मात्स्यं रूपं भगवता धृतं तत्प्रयोजनं ज्ञातुमिच्छामि ॥ २९ ॥

अनीश्वरमजनवन्मञ्जनं न मुधेति दर्शयितुमिदं मात्स्यं रूपं प्रदर्शि भवतेति जानामीत्यभिप्रायेणाह-नेति । हे अरविन्दाक्ष ! तव पादोपसर्पणं श्रीपादारविन्दभजनं पृथगात्मनामात्मभ्रमक-ज्ञानरात्माभिमानिनां सताम् इतरेषां पादोपसर्पणमिव न यथा भवेत् न व्यर्थं भवेत् अवैयर्थ्ये हेतुं वदन् विशिनष्टि-सर्वसुहृत्प्रियात्मनः सर्वेषां सुहृदः प्रियस्वात्मनश्च,यद्वा,सतां सर्वसुहृत्प्रियात्मन इति वान्वयः तत्पक्षे सतां साधूनां सर्वप्रकारेण सुहृत् प्रियश्च आत्मा स्वरूपं यस्य योवेति किञ्च एतद्विपरीतत्वात् इतरेषां पादोपसर्पणं मुधेतिभावः कुत एतद्विपरीतं न मुधेत्यत आह-हि यस्मात्यदिदमद्भुतं मात्स्यं वपुर्नोऽस्माकं भजतामदीदृशः दर्शितवान् ॥ ३० ॥

इतीत्थं भाषमाणं सत्यव्रतं प्रति मत्स्यवपुर्जगदीश्वरो भग-वांश्चिकीर्षितमब्रवीत् कथम्भूतः ? प्रलयार्णवे विहर्तुकामः विहार-प्रयोजनं दर्शयन्विशिनष्टि कान्तजनप्रियः कान्तजनानां भक्तजनानां प्रियः प्रभुश्च भक्तजनानां प्रीतिं कर्तुमवतीर्ण इति भावः ॥ ३१ ॥

एवं पृष्टावतारप्रयोजनविशेषो मत्स्यमूर्तिर्भगवांस्तत्प्रयोजन-विशेषमाह—सप्तम इति नवभिः । हे अरिन्दम ! अद्यतनादह्नः सप्तमेऽहनि मदवतारः तस्मादह्न आरभ्य सप्तमेऽहनीदं भूर्भुवादिकं त्रैलोक्यमप्यर्वांभोधौ प्रलयोदधौ विनङ्क्ष्यति मग्नं भविष्यति ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवंविधं वीर्यं यस्य सः एवं वीर्यः अह्ना झटिति व्यानशे व्याप्तः ॥ २६ ॥

विशेषमन्वन्वित्याकारं ग्रामं सदनं यस्य स तथा आना-श्रयः कश्चिदेव एव नारायणः किं न स्यादित्यतः साक्षाद्धरि-रिति तुरीयमूर्तिः ॥ २७—२८ ॥

यदर्थं यत्प्रयोजनाय भवता आदौ मात्स्यरूपं धृतं तत्प्रयोजन-पूर्वकं ज्ञातुमिच्छामीत्यन्वयः ॥ २९ ॥

अहं त्वत्स्वरूपज्ञाने योग्य इत्याह—नत इति । हे अरविन्दाक्ष ! यथा पृथगात्मनां भिन्नविषयबुद्धीनाम् इतरेषां ते तव पादोपस-र्पणं मुधा वृथा भवेत्तद्वत्सेवाविषम्महत्पुण्यं कर्म करोति "तत्प्राप्यं ततः क्षीयते„ इति श्रुतिरतएव पृथगित्युक्तं सतां तथा न स्यात्तत्र हेतुमाह—यदीदृश इति. तथाद्भुतं नोऽस्माकम् इतरमत्स्यविलक्षणत्वादाश्चर्यं यद्वपुः "इत्थम् बीजसन्ताने„ इति-श्रुतेः अनुत्पादनसमर्थं रूपम् अदीदृशः दर्शितवानिति हि यस्मात्सन्त एतद्रूपज्ञाने योग्या इत्यर्थः । तव विषमसमावस्था-सद्भावन्नां ति नेत्याह, सर्वेति ॥ ३० ॥

विषमसुखप्रेरकत्वात्प्रियः "तदेतत्प्रेयम्" इति श्रुतेः ॥ ३१ ॥

अद्यतनादह्न ऊर्ध्वं सप्तमे ऽहनि लिंग इष्यति निमग्नं भविष्यति अल्पवार्यम्भोधौ प्रलयसमुद्रे ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अह्ना एकेनैव व्यानशे व्याप्तवान् ॥ २६–२८ ॥

आत्मनां गतिर्यस्मात् स मुक्तप्रभुरित्यर्थः ॥ २९ ॥

इतरेषां देवेन्द्रादीनां पृथगात्मनाम् आत्मनः पृथग्देह एव आत्मा येषां तेषां देहाध्यासवतामित्यर्थः । तव तु नास्ति देहाध्यासः देहात्मनो पार्थक्याभावादिति भावः यद्यस्मान्नोऽस्माकं सतां त्वद्भक्तानां विस्ताराय अद्भुतमिदं वपुरदीदृशः दर्शितवान् पृथगात्मनोऽस-तामिति पाठे पृथगात्मनः पुंसः असतां पादोपसर्पणं यथा मुधेत्यर्थः ३०—३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यो भगवान् अह्ना अल्पेन कालेन सरः समुद्रं योजनशतम् अभि-व्यानशे अभिव्याप्तवान् ॥ २६ ॥ २७ ॥

मुक्तः आत्मा आश्रयः अंशभूतस्यात्मनोऽशित्वेन स्थिति-प्रदाता इत्यर्थः । गतिः पुरुषार्थप्रदश्च ॥ २८ ॥ २९ ॥

हे अरविन्दाक्ष ! पृथग्भूते त्वद्भिन्ने उपास्ये आत्मा मनो येषां तेषामितरेषामसतां यथा पादोपसर्पणं त्वद्भिन्नतत्तद्देवचरणो-पासनं मुधा भवति परमपुरुषार्थत्वाभावादिति भावः तथा सतां साधूनां पादोपसर्पणं तव चरणोपासनं मुधा न भवेत् यद्यस्मात् नोऽस्माकमुपासकानाम् अद्भुतं वपुः अदी-दृशः दर्शितवानसि फलमस्माकं त्वच्चरणोपासनं त्वद्वपुर्दर्शन-मात्रमेवेति भावः ॥ ३० ॥

एकान्तजनाः प्रिया यस्य सः प्रियं कर्तुमिच्छुः नृपतिं प्रत्य-ब्रवीत् ॥ ३१ ॥

अद्यतनात् सप्तमेऽह्नि अल्पवार्यम्भोधौ नैमित्तिकप्रलयार्णवे निमङ्क्ष्यति निमग्नं भविष्यति ॥ ३२ ॥

---

भाषा टीका ।

इस प्रकार मधुरभाषी बोलने वाले उस मत्स्य ने राजा को मोहित कर दिया, तब राजा मत्स्य से बोले, कि- आप मत्स्य रूप धरकर मुझको मोह कराने वाले कौन हैं ? ॥ २५ ॥

ऐसी रीति का जलचर जंतु तो आज तक हमने न कभी देखा और न कभी सुना, जो कि-आपने सौ योजन का सरोवर एक दिन में अपने शरीर से बढ़कर ढंक लिया ॥ २६ ॥

यह निश्चय है कि आप साक्षात् अव्यय हरि नाम से प्रसिद्ध, नारायण ही हैं । प्राणियों के अनुग्रह के निमित्त आप जल जंतुओं का रूप धारण किये हुए हैं ॥ २७ ॥

त्रिलोक्यां लीयमानायां सम्वत[illegible]

उपस्थास्यति नौः काचिद्विशा[illegible]ला ॥ ३३ ॥

त्वं तावदोषधीः सर्वा बीजान्[illegible]च ।

सप्तर्षिभिः परिवृतः सर्वस[illegible] ॥ ३४ ॥

आरुह्य बृहतीं नावं विच[illegible]ः ।

एकार्णवे निरालोके ऋ[illegible]ा ॥ ३५ ॥

दोधूयमानां तां नावं स[illegible]ा ।

उपस्थितस्य मे शृङ्गे [illegible]ऽहिना ॥ ३६ ॥

अहं त्वामृषिभिः स[illegible]न्वति ।

विकर्षन्विचरिष्यामि [illegible]शा प्रभो ! ॥ ३७ ॥

मदीयं महिमानं [illegible]ब्दितम् ।

वेत्स्यस्यनुगृहीतं [illegible]ं हृदि ॥ ३८ ॥

इत्थमादिश्य [illegible]धीयत ।

सोऽन्ववैक्षत [illegible]केशा आदिशत् ॥ ३९ ॥

आस्तीर्य द[illegible]र्षिः प्रागुदङ्मुखः ।

निषसाद ह[illegible]न्मत्स्यरूपिणः ॥ ४० ॥

भाषा टीका।

हे पुरुषश्रेष्ठ ! हे जगत के उत्पत्ति पालन [illegible] ईश्वर ! हे विभो ! हमारे सदृश प्रपन्न भक्तजनों [illegible] प्रिय गति आप ही हो ॥ २८ ॥

सब आपके लीलावतार, प्राणियों के [illegible] मैं यह जानने की इच्छा करता हूं कि-यह [illegible] प्रयोजन के लिये धारण किया है ॥ २९ ॥

हे अरविन्दाक्ष ! सब लोगों के सुहृत प्रिय और आत्मा [illegible] आपके चरणों के शरण में आना व्यर्थ नहीं होता है [illegible] इतर पृथक् देहात्माभिमानी बहिर्मुख जनों का व्यर्थ [illegible] कि-आपने तो मुझको अति अद्भुत रूप से दर्शन दिया [illegible]

श्रीशुक उवाच।

श्रीशुकदेव जी बोले, कि—उस युग के क्षय काल [illegible] कहने वाले सत्यव्रत राजा को मत्स्य रूपधारी [illegible] बोले, कैसे आप हैं, कि उस प्रलय काल के [illegible] विहार की कामना वाले, और परमैकान्ती जनों [illegible] हैं इसी से अपने भक्त के प्रिय करने की इच्छा [illegible] है ॥ ३१ ॥

श्रीभगवान् उवाच।

श्रीभगवान् बोले, कि-हे अरिन्दम ! आज से सातवें दिन में प्रलय के समुद्र में भूः भुवः आदिक त्रिलोकी डूब जायगी ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सम्वर्तोऽस्मिन् प्रलयोदके त्वामुपस्थास्यति प्राप्स्यति ॥ ३३ ॥ [illegible]ओषधीः आदायेति शेषः ॥ ३४ ॥ [illegible]अप्रतीयामेवालोकेनविचरिष्यसि ॥ ३५ ॥ महाहिना वासुकिना ॥ ३६—३७ ॥ [illegible]मे मयाऽनुगृहीतं प्रसादीकृतं हृदि अपरोक्षं वेत्स्यसि त्वया [illegible]सम्प्रश्नैर्मया विवृतं प्रकाशितं सन्तम् ॥ ३८—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

[illegible]स्मिन् प्रलयोदके त्रिलोक्यां लीयमानायां मत्प्रेरिता [illegible] प्रेरिता उपकल्पिता विशाला विपुला नौः नौका [illegible]स्यति त्वत्समीपे ह्युपस्थास्यतीत्यर्थः ॥ ३३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा त्वं सर्वा ओषधीर्बीजानि च नानाविधानि नाव्यारोप्येति शेषः । सप्तर्षिभिः सहितः सर्वैः सत्त्वैर्जन्तुभिरुपबृंहितः उपाश्लिष्टः ॥ ३४ ॥

बृहतीं विपुलां नावमारुह्याविक्लवः वैक्लव्यरहितो विचरिष्यसि निरालोके सूर्याद्यालोकरहिते एकार्णवे ऋषीणां वर्चसैवोपलक्षिताम ॥ ३५ ॥

बलीयसा प्रचण्डेन समीरेण प्रलयवायुना दोधूयमानां नितरां कम्पमानां तां महतीं नावमुपस्थितस्य सन्निहितस्य मम शृङ्गे वासुकिना सर्पेण उपस्थितेनेति शेषः । तेन बन्धनेन साधनेन बिबध्नीहि ॥ ३६ ॥

तदाऽहमुदन्वति प्रलयार्णवे ऋषिसहितां महतीं नावं विकर्षन् यावद्ब्रह्मणश्चतुर्मुखस्येयं ब्राह्मी निशा रात्रिः प्रवर्तते तावद्विचरिष्यामि ॥ ३७ ॥

परं ब्रह्मेति शब्दितं परब्रह्मशब्दाऽभिहितं मदीयं महिमानं च वेत्स्यसि महिम्नः ब्रह्मशब्दवाच्यत्वं तस्य ब्रह्मशब्दप्रवृत्तिनिमित्ताश्रयत्वेन निरतिशयबृहत्वं हि ब्रह्मशब्दार्थः, कथम्भूतम ? मयानुगृहीतं मयोपादिष्टमित्यर्थः । संप्रश्नैस्त्वत्कृतैर्हृदि विवृतम । अत्र केचिद्व्याचक्षते, ( अत्रोक्तः प्रलयः किं महाप्रलयः ? उत दैनन्दिनो वेति ? तत्र तावद्ब्रह्मलोकलय इति " यो सावस्मिन्महाकल्पे" इति चोक्तेर्महाप्रलय इति तावत्प्राप्तं नोत भूमः महाप्रलये पृथिव्यादीनामवशेषासंभवात् यावद्ब्राह्मी निशेत्याद्युक्तिविरोधाच्चातो दैनं [illegible] इति युक्तं नचैतदपि सङ्गच्छते सांवर्तकैरनावृष्ट्यादिभिर्विनाऽकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः यथोक्तं प्रथमस्कन्धे—

"रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्" ॥

इति तदपि तदा दुर्घटं नहि प्रलयत्रयेऽपि महीमय्यां नाव्यारोहः सम्भवति न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् "त्वं तावदोषधीः सर्वाः" इत्यादिनिर्देशोऽपि न सङ्गच्छते न हि तदा ओषध्यादीनां सत्त्वानां चावशेषः संभवति तस्मादन्यथा वर्ण्यते नैवायं वास्तवः कोऽपि प्रलयः किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास यथा अस्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान् तत्पक्षयैव च महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते तथा च "ततः समुद्र उद्वेलः सर्वतः समदृश्यत" इति तस्यैव तथादर्शनमुक्तमित्येषा दिगिति. ) अत्रेदं वक्तव्यं यदि वैराग्यजननद्वारा ज्ञानोपदेशार्थमाविर्भूतो भगवान् वैराग्यार्थं सत्यव्रतायैवाकस्मात्प्रलयदर्शनं तर्हि "आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः" इत्यादेः "कालेनागतनिद्रस्य धातुः शिशयिषोर्बली मुखतो निःसृतान्वेदान्" इत्यादेश्च अवतारकालप्रदर्शनपरस्यावतारप्रयोजनप्रदर्शनपरस्य चोपक्रमस्य ग्रन्थस्यासाङ्गत्यापत्तेः तत्र "कालेनागतनिद्रस्य धातुः शिशयिषोः" इति स्वरसतः सुव्यक्तं दैनन्दिनप्रलयावगमात्सत्यव्रतस्यैव प्रलयप्रदर्शने हयग्रीवाख्यासुरेण वेदापहारस्य कथनानुपपत्तेश्च तत्र राजर्षिः कश्चिदित्यादिनाऽतीतकल्पे सत्यव्रतस्य सतः पुनरस्मिन्कल्पे "योऽसावस्मिन्महाकल्पे" इत्यादिना वैवस्वतमनुत्वकरणकथनानुपपत्तेश्च न हि चाक्षुषपन्वमन्वन्तरे सत्यव्रतत्वेनावस्थितस्य तस्मिन्नेव मन्वन्तरे वैवस्वतमनुत्वेन अवस्थानकथनमुपपन्नम नहि सत्यव्रतस्याऽकस्मात् प्रलयप्रदर्शनमात्रेण धातुर्शिशयिषोर्मुखतो वेदानां निस्सृतिरसुरेण तदपहृतिश्च सम्भवति तस्मादतीतदैनन्दिनकल्पाऽवसानिक एव प्रलयोऽत्र विवक्षितः न च श्रीमत्स्योक्तिविरोधः सांवर्तकानाम अनावृष्ट्यादीनां शब्दतो ऽनुपात्तानामप्यर्थतोऽत्र विवक्षितत्वात्माभूद्वा कल्पविशेषात्तस्मिन्ननावृष्टिः वृष्टिस्तु "वर्षमाणो महामेघैर्वर्षद्भिः समदृश्यत" इत्युक्तैव न च प्रथमस्कन्धवचनस्य दौर्घट्यं दैनं दिनकल्पविशेषावसाने महीमय्यां नाव्योषध्यादीनामारोपसंभवात् चाक्षुषान्तरशब्देन चाक्षुषमन्वन्तरयुक्तो वर्तमानो दैनन्दिनकल्पो लक्ष्यते तस्मात्प्राक्तनो यः संप्लवः अतीतकल्पाऽवसानिकस्तस्मिन्नाव्यारोप्येत्यर्थः । न चौषध्यादीनामवशेषासम्भवः तद्विशेषस्यैतत् ग्रन्थादेवावगमात्कल्पविशेषे तदवशेषोपपत्तेश्चेति ॥ ३८ ॥

एवं राजानं सत्यव्रतमादिश्य हरिर्मत्स्यरूपस्तत्रैवान्तर्हितवान् ततः सत्यव्रतो यं कालं हृषीकेशो मत्स्यमूर्तिर्गादिशत् "सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम!" इति निर्दिष्टवान् तमेव कालम् [illegible] प्रतीक्षितवान् ॥ ३९ ॥

राजर्षिः सत्यव्रतः दर्भान्प्रागग्रानास्तीर्य तेषु प्रागुदङ्मुखः ईशा[illegible]भिमुखो निषसाद उपविष्टवान् कथम्भूतस्सन् श्रीमत्स्यरूपि[illegible] हरेर्भगवतः श्रीपादौ चिन्तयन्, ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्वर्ता[illegible]सि प्रलयजले उपस्थास्यति समीपमागमिष्यति ॥ ३३ ॥

सर्वैः स[illegible]ः प्राणिभिः उपबृंहितः पूरितः ॥ ३४ ॥

निरा[illegible] तमःप्राये ऋषीणां वर्चसा प्रकाशेनैव नाऽन्येन ॥ [illegible] ॥

[illegible] नाम् इतस्ततोऽत्यन्तं कम्पमानां निबध्नीहि निबन्धनमहाऽ[illegible] णेन ॥ ३६ ॥

प्रा[illegible] [illegible] ॥ ३७ ॥

तव [illegible]त्कप्रश्नैः हृदि विवृतं स्पष्टीकृतं मयाऽनुगृहीतं मदीयं [illegible]ब्रह्मेति शब्दितं महिमानं ज्ञास्यसि ॥ ३८ ॥

[illegible] प्रतीक्ष्याऽऽस्थितः ॥ ३९—४२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वमिति युग्मकम् सर्वसत्त्वैश्चान्यैः सुष्ठ्वपेक्षितैरुपबृंहितः ॥ ३४-४० ॥

---

ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम् ।
वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥
ध्यायन्भगवदादेशं ददृशे नावमागताम् ।
तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥
तमूचुर्मुनयः प्रीता राजन् ! ध्यायस्व केशवम् ।
स वै नः सङ्कटादस्मादविता शं विधास्यति ॥ ४३ ॥
सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ।
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥
निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ।
वरत्रेणाऽहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥

राजोवाच ।

अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥
जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः ॥ ४७ ॥
यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मशब्दप्रयोगो वनपर्वणि प्रसिद्धः "ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् । शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः" इति एवं चतुर्मुखादौ ब्रह्मशब्दप्रवृत्तिः तथा भगवदीयमहिम्नो निरतिशयबृहत्त्वेन ब्रह्मशब्दत्वमिति ॥ ३८—४४ ॥

भाषा टीका ।

प्रलय के जल में त्रिलोकी डूबने के समय हमारी प्रेरणा से तुम को एक बड़ी भारी नौका उपस्थित होगी ॥ ३३ ॥

तब तुम सर्व ओषधि और ऊँचे नीचे सर्व बीजों को लेकर सप्त ऋषियों के साथ और सर्व जन्तुओं सहित ॥ ३४ ॥

उस बड़ी भारी नौका पर बैठ कर अविक्लव होकर आनन्द से विचरोगे। जब सब जगत् एकार्णव होजायगा और अन्धकार से व्याप्त होजायगा तब तुमारी नौका में बैठे हुए जो सप्त ऋषि है उनके प्रकाशसे ही विचरोगे ॥ ३५ ॥

और उस समय बड़े बलवान् पवन से अत्यन्त ही चल होने वाली उस नौका को जल में तुम्हारे स आकर उपस्थित होजाऊँ तब वासुकी सर्प से मेरे शृङ्ग में बांध दे ॥ ३६ ॥

हे राजन् ! ऋषियों सहित और तुमारे सहित उस नौका को हम समुद्र में खींचते हुए जब तक ब्रह्मा की रात्रि रहेगी तब तक विचरेंगे ॥ ३७ ॥

जो परब्रह्म शब्द से कही जाय उस हमारी महिमा को प्रश्नों से अपने हृदय में हमारे अनुग्रह से जानोगे ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रज्जुरूपेण ॥ ४५ ॥

सागरं तारयिष्यन्तं तरिष्यन्निव सागरम् ।
सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टभिः ॥

अत्रेदं चिन्त्यम् किमयं महाप्रलयो दैनं दिनो वेति तत्र तावत् ब्राह्मो लय इति योऽसावस्मिन्महाकल्पे इति चोक्तेर्महाप्रलय इति प्राप्तम्, नेति ब्रूमः महाप्रलये पृथिव्यादीनामवस्थानासम्भवात् बाधकाभावनिश्चयाद्युक्तिविरोधाच्च अतो दैनं दिन इति युक्तम

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु साधनादिना मलं जह्यान्निजवर्णं स्वात्मस्वरूपं वा भजेत च गर्हादिति हद्रुरोदगमस्यापि मस्पर्शाभ्यां पाकमवर्णोपस्थितत्वात्कथंभूतमात्मनो गमस्यापि भगवत्सेवेतरानपेक्षत्वमभिप्रेतं स ईश्वरो नोऽस्माकं गुरुर्भूयादित: स एव गुरोरपि परमो गुरुरस्तु चीनगुरूणामपि "आचार्यं मां विजानीयात्" इति स्मृतेस्तत्प्रथमभगवदाख्यानगुर्वातिरिक्तो न कश्चिद्गुरुरस्तीति भावः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविनाशं विनाशविरोधिजीविनं शं सुखम् अविनाशं सुयुक्तं परं विधास्यतीति वा ॥ ४३-४४ ॥

यदन्यथा पाशेन मधुवन्मधु संसारं सूदितवानिति मधुसूदनः तम् ॥ ४५ ॥

अनाद्यविद्योपहतात्मसंवित्परमात्मज्ञानं येषां ते तथा या विद्यामूलं कारणं यस्य स तन्मूलः स च संसारस्तन्मूलसंसारस्तस्मिन् परिश्रमस्ततो आतुराः क्लिष्टाः यदृच्छया पूर्वजन्मार्जितपुण्याभिमुखीभूतदैवेच्छया इह लोके विशिष्टजन्मोपसृताः पुरुषाः यमाप्नुयुः स परमो गुरुर्भगवान् विमुक्तिदोऽस्त्वित्यन्वयः ॥ ४६ ॥

कर्मनिर्मूलनं भगवत्सेवनमेवेत्याह—जन इति । आत्मीयकर्मणा बन्धनं यस्य स तथा अयमबुधो जनः सुखमाप्नुयामितीच्छया कर्म समीहते ततो सुखं दुःखमाप्नोति इति यस्तो बुधो जनो यदीश्वरस्य सेवया कर्मविपर्यासमतिं विधुनोति अतः कर्मनिर्मूलनं चाप्नोति गुरुज्ञानोपदेष्टा स नो हृदये स्थितां ग्रन्थिं कर्मपाशकृतां भिद्यादित्यन्वयः ॥ ४७ ॥

एष पुमान्यत्सेवया आत्मनस्तमोऽलक्ष्मीं मलं विजह्याज्जहाति निजं वर्णं परमात्मगतिम् आनन्दस्वरूपं च भजेत भजेत, कथमिव? अग्निवाहलवणासेवया रुद्ररोदनं हिरण्यं स्वमलं यथाविधं जहाति निजवर्णं चार्वासिद्धं स्वरूपं भजति यथा तथेत्यर्थः । किञ्च स जीवः पुनरव्ययोऽसत्पूतः आवरणरहितो भवति "ध्वंसम् सरवरणं" इति धातोः गुणोगुरुः स परमो नो मुक्तिदो भूयादित्यन्वयः । ईशः मुक्तिदानसमर्थः ईश्वरमीः तस्याः शं यस्मात्स इति वा "जातरूपं श्रीमुकटं हिरण्यं रुद्ररोदनम्" इत्यभिधानं, स भवागव्यय इति वा ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मदीयमिति, महिमानमैश्वर्यं विभूतिनिर्विशेषमिति यावत् समैव सम्यक् प्रकाशत्वात् मत एव मे मया अनुग्रहीतमनुग्रहेण प्रकाशितं यद्यपि मदनुभवान्तःपूत एव प्रज्ञानुभव इत्यतो नास्ति मत्तः पृथगनुभवापेक्षा तथापि मत्कृतप्रकाशितसाक्षात्मदनुभवे तस्मात्ताऽनुभवो न स्फुटो भवति यदि तदीय स्फुटताया सवेच्छा कथञ्चित्तत्र तदा साऽपि भवेदिति भावः । मनःज्ञामितमेकादशे विशिष्यवर्णयिष्यति ॥ ३९ ॥

प्राक्कृतान् प्राचीनाप्राय ॥ ४० ॥

ततः मधुरिति, चाक्षुषमन्वन्तरान्तेय अवन्नाकस्मिकप्रलयोऽयं यथोक्तं "रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे" इति प्रतिमन्वन्तरान्तमपि तच्छ्रवणात् अत्र प्रमाणानि तत्रैव दर्शितानि किन्त्वस्य प्रलयस्य दैवेन षष्ठमन्वन्तरमध्य एव निर्भरजातत्वात् न तदन्ते पृथक् जातत्वमित्येव विशेषः न चायं मन्वन्तरप्रलयो नैमित्तिकविशेष एवेति, नच प्रलयस्य चतुर्विधत्वहानिः तदेव मन्वन्तरप्रलये त्रैलोक्यमग्नानादिनन्दिनसाऽयन प्रज्ञापि किञ्चित् कालं सुष्वाप तदनुसारेण गौण्या वृत्त्या ब्राह्मी निशेत्युक्तामिति सति पुराणान्तरेणोपचिते श्रीभागवतमते कल्पनान्तरं न कृतम् ॥ ४१-४५ ॥

अत्राविद्या तन्माया ॥ ४६—४७ ॥

गुरोरपि परमो गुरुरिति साक्षात्परमात्मा नाऽन्योऽन्वेष्य इति भावः ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदन्येन दोरकरूपेण ॥ ४५ ॥

अनादिर्या अविद्या तया उपहृता आवृता आत्मसंवित् येषां ते अत एवाऽविद्यामूलसंसारपरिश्रमेणातुराः इह संसारे भ्रमन्त एव यदृच्छया याद्द्गिच्छया भक्तकृपयेत्यर्थः । उपसृता आश्रिताः यं प्राप्नुयुः [illegible] ग्रन्थिं भिन्द्यादित्युत्तरेणान्वयः । परमो गुरुरिति मद्विधानामुद्धारकरूपावन्तो भक्त्युपदेशकाः सन्तश्च ये गुरवस्तेषामपि [illegible] उपदेशकस्त्वं मत्परमगुरुरित्यर्थः । यद्वा त्वमवतीर्य कदाचित् याचितः केषांश्चित्परमगुरुश्च भवसीति कश्चिदवतार एव सूचितः प्रतिश्लोकमेव गुरुपदप्रयोगादवसीयते ॥ ४६ ॥

न च [illegible] विना प्रकारान्तरेण निस्तार इत्याह, जनो जीवः न विद्यते यत्नः सुखं यतस्तत् तां सुखेच्छां हृदयं हृदयस्थं ग्रन्थिमज्ञानं भिन्द्याद् ॥ ४७ ॥

नच [illegible] ज्ञानं मद्येदिति वाच्यमित्याह—यस्य सेवयैव पुमान् जीवः आत्मनः स्वस्य तमोऽज्ञानरूपं मलं विजह्यात् यथा रुद्ररोदनं रजतं स्वर्णं च "यद्रोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रु अशीर्यत तद्रजतं हिरण्यममभवत्" इति श्रुतेः । तत् अल्पाग्नेः सम्पर्कादेव मलं जहाति स्वरूपञ्च भजेत ननु स्नाध नादिभिर्ज्ञानादिभिस्तथा स्नानादिभिर्मल [illegible] इत्यर्थः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible]येण दोरकरूपेण अहिना महाहिना नावं निबध्य मधु- [illegible] तुष्टाव स्तोत्रं चकार ॥ ४५ ॥

स्तोत्रमेवाह—अनाद्यविद्योपहतात्मसंविद इत्यादिभिः । भगवता स्वानुग्रहेणैव मे स्वीभूय प्रलयाब्धिमोचितोऽस्मीत्यवधार्य संसारादपि विमुक्तये तमेव प्रार्थयते अनादिर्या अविद्या अज्ञानं तया उपहता तिरोहिता आत्मसंवित् जीवात्मपरमात्मविषयकं ज्ञानं येषां ते अत एवाविद्यामूले संसारे यः परिश्रमस्तेनातुराः व्याकुलाः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्येतु स्वतन्त्रमन्यामस्थतीर्वाकिञ्चित्करा इत्याह—न यदिति ॥ ४९ ॥

प्रागजन्मनि गुरुप्राप्तभक्तस्तस्य चिकीर्षितुः संस्काराज्जात: श्रीगजनुषत: सोऽयमाशय: स्वयमाविद्य कश्चिद्गुरा सत्यमेव गुरुमंगेत् मतो भगवन्तमामाद्य भवन्तं गुरुमर्थये न स्वमर्कं-दृक् त्वदभिज्ञानां सर्वेषामपि श्रेष्ठ इत्यर्थः ॥ ५०—५१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनन्यां विहाय झटिति प्रमादा अपि देवादयो नैव सेव्या इत्याह–नेति । यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमप्यन्यं देवा गुरवः पित्रादयः जनाः सुखादिरसवो नृपादयश्च सर्वे समेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति ॥ ४९ ॥

यतस्त्वत्सेवया विना पुमान् न भवं विजह्यादित्युक्तमतस्त्व-त्सेवानुपदेष्टा गुरुरपि न सेव्य इत्याह–अचक्षुरिति । अविज्ञो अज-स्यात्तुधोऽपण्डितः पण्डितो बन्धमोक्षविदिति "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति त्वदुक्तभक्त्युपदेष्टैव बुधः स एव गुरुरन्य-स्त्वनर्थहेतुरित्यर्थः । अत एव नाऽस्माकं सुगतिं भक्तिं बुभुत्सतां गुरुर्नो वः स तु त्वमेव साक्षादित्यर्थः । अर्कदृक् अर्क इव दृश्य इत्यर्थः । सर्वदृशां सर्वनेत्राणां सर्वेन्द्रियाणां सर्वज्ञानां च समी-क्षया: प्रकाशक इति पदत्रये द्रष्टव्यम् ॥ ५० ॥

दृष्टान्तव्यङ्ग्यमर्थं स्पष्टमाह–जन इति । आदिश्यते उपदिशति अत: प्राकृतगुरुरनर्थहेतुर्दूरं परिहरणीय इत्यर्थः । त्वन्तु गुरुरूप एवा-वतीर्णः अव्ययं ज्ञानं भक्त्युत्थं ज्ञानमेव उपदिशसि नतु केवलं विद्यामयं यत् फलमुत्पाद्य वेतीत्यर्थः । निजं पदं त्वच्चरणारविन्दं वैकुण्ठं वा ॥ ५१ ॥

नन्वेवं गुरुभूतं मां किमिति सर्वे न प्रपद्यन्ते दुर्बुद्धित्वादित्याह त्वामिति । सुहृदादिरूप इत्यन्ये सुहृदादयो वस्तुतः सुहृदादयो नैव भवन्तीत्यर्थः । यद्वा सुहृत् स प्रियः कान्तभावविषयः ईश्वरः दास्य भाव विषयः आत्मा शान्तभावविषयः गुरुर्वात्सल्यविशेषविषयः यद्वा अगुरुः सुतादिरिति वात्सल्यभावविषयः ज्ञानं भक्तशून्यानां केवलमोक्षप्रदः अभीष्टसिद्धिः सकामानां सर्वकामप्रद इति सन्तं साधुरूपं त्वाम् अन्धधीरसाधुर्यतो हृदि निवसद्वासनः ॥ ५२ ॥

अहं तु त्वद्भक्तकृपासिद्धाज्ञनविगतान्ध्यस्त्वामेव गतिं पश्या-मीत्याह–तमिति । प्रतिबोधनाय संसारशय्यायां निद्राणं मां कृपया प्रतिबोधयेत्यर्थः सर्थदीपैः परमार्थप्रकाशकैः हृदयभवान् ग्रन्थीन् स्वगोक्तो वैकुण्ठं विवृणु तत्प्रापकधर्मं ब्रूहि ॥ ५३ ॥ ५४ ॥

पुराणसंहितां मत्स्यपुराणम् ॥ ५५ ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स एव भगवान् सेवार्हो नान्य इत्याह–न यदिति । यत्प्र-सादस्य अयुतभागस्तस्य लेशमात्रमपि अन्ये देवादयः सर्वे समेताः सङ्घीभूता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति दातुं न शक्नुवन्ति तं त्वां शरणं प्रपद्ये ॥ ४९ ॥

गुरोर्गुरुरित्यनेन त्वदनुवर्तित्वस्वभावो मुक्तिदाता गुरुराश्र-यणीय एव तत्त्वानभिज्ञस्त्वत्तो बहिर्मुखो गुरुस्तु अन्धमन्धो यथा गर्ते पातयति तथा संसारे पातयत्यतस्तमनादृत्यास्मा-भिस्त्वं गुरुर्वृतः इत्याह–अचक्षुरिति । अर्कदृक् अर्कवत् अन्य-प्रकाशानिरपेक्षं दृक् दृष्टिर्यस्य सः सर्वदृशां सर्वदृष्टीनां समी-क्षयाः प्रकाशकः ततः स्वगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिस्त्वं गुरुर्वृतोसि ॥ ५ ॥

एवमनात्मज्ञो हरिविमुखो गुरुः संसारे साशिष्यः पत-तीत्यर्थदृष्टान्तेनोक्तमथ सर्वथापि त्वद्ज्ञानभक्तिबहिष्कृतेन प्राकृ-तजनेनोपदिष्टा मतिः सुतरां संसारे पातयति अतस्त्वदुपदिष्टेन ज्ञानेन त्वत्पदलाभो भवेदित्याह–जन इति । असतीं अर्थकामादि-विषयाम् तमः संसारं त्वंतु अमोघज्ञानमादिशसे ॥ ५१ ॥

अथ भगवतः सर्वसुहृत्त्वादिगुणान् निरयबद्धस्य जीवस्य स्वभावं च वर्णयन् स्वयं मुमुक्षुर्भगवन्तं शरणं व्रजति त्वामिति द्वाभ्याम् । प्रियश्चासावीश्वरश्च ॥ ५२ ॥

प्रपद्ये शरणं व्रजामि. प्रतिबोधनाय त्वदुपदिष्टतत्त्वबोधाख्य सर्थदीपैः आत्मानात्मपरमात्मपदार्थप्रकाशकैः हृदय्यान् हृदये भवान् अहङ्कारादीन् स्वं स्वकीयमोकः वासस्थानं विवृणु वर्णय ॥ ५३ ॥

नृपं प्रति तत्त्वं तत्त्वप्रकाशकं पुराणम् अब्रवीत् ॥ ५४ ॥

एतदेवाह—दिव्यां देवस्य भगवतः सम्बन्धिनीं तत्प्रोक्तां तद्विषयां साङ्ख्यम् आत्मानात्मपरमात्मज्ञानं योगः परमात्म-भक्तिः क्रियायोगभक्तिसाधनं कर्म साङ्ख्ययोग क्रियाः सन्त्यस्यां सा तथा तां पुराणसंहितां मत्स्यपुराणरूपं संहिताम् आत्म-गुह्यं स्वरहस्यं च सत्यव्रतस्य सत्यव्रतंप्रति अब्रवीदित्यनु-षङ्गः ॥ ५५ ॥ ५६ ॥

---

भाषा टीका ।

अन्य सम्पूर्ण देव लोग गुरु लोग तथा पुरुष आप भी ये सब मिलकर भी जिन आपके प्रसाद का अयुत भाग [ दश हजार में हिस्से ] का लेश मात्र भी पुरुष के ऊपर नहीं कर सके हैं तिन आप ईश्वर के मैं शरण को प्राप्त हूं ४९

जैसे अंधे का अग्रगण्य अन्धा होवे, और मूढ का गुरु भी मूढ होवे, इसी प्रकार आपसे व्यतिरिक्त अन्य देवादिक स्वयं अपूर्ण हैं फिर और के ऊपर प्रसन्न होकर भी क्या आप सदृश उपकार करसके हैं ? कभ नहीं ॥ और आप सूर्य के तुल्य सर्व इन्द्रियों के प्रकाश हो अत एव अपनी उत्तम गति जानने की इच्छा वाले एसे हम लोगों ने आप ही को गुरु स्वीकार किये हैं ॥ ५० ॥

प्राकृत गुरु, शिष्य को एसी खोटी बुद्धि अर्थात् अर्थ कामादि विषयक मति का उपदेश करते हैं, कि—जिससे फिर

अतीतप्रलयापाय उत्थिताय [illegible]
हत्वाऽसुरं हयग्रीवं वेदान्प्रत्य[illegible]
स तु सत्यव्रतो राजा ज्ञानवि[illegible]
विष्णोः प्रसादात्कल्पेऽस्मिन्[illegible]ः ॥ ५८ ॥
सत्यव्रतस्य राजर्षेर्माया[illegible]।
सम्वादं महदाख्यानं [illegible]पात् ॥ ५९ ॥
अवतारो हरेर्योऽयं की[illegible]
सङ्कल्पास्तस्य सिद्ध[illegible]मां गतिम् ॥ ६० ॥
प्रलयपयसि धातुः सुप्तश[illegible]मपनीतं प्रत्युपादत्त हत्वा ।
दितिजमकथयद्यो ब्रह्मसत्य[illegible]लहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥
इति श्रीमद्भागवते महापुराणे [illegible] संहितायां वैयासिक्याम्
अष्टमस्कन्धे [illegible]नुवर्णनं नाम
चतु[illegible]॥
समा[illegible]॥ ८ ॥
[illegible]मस्तु ॥

---

भाषा टीका ।

भी सुस्तरतम को प्राप्त होवे, और आप [illegible] ज्ञान को देते हो कि जिससे पुरुष निजा[illegible]ाना है ॥ ५१ ॥

हे भगवान् ! आप संपूर्ण लोक के सुहृत[illegible] हो, आत्मा हो, गुरु हो, ज्ञान हो, और अभी[illegible] हो अर्थात् पुरुष को परम प्राप्य आपही हो [illegible] बंधा हुआ अंध बुद्धि यह लोक हृदय में रहने [illegible] नहीं जानता है ॥ ५२ ॥

देवों में श्रेष्ठ प्रिय तम होने से भी वरणीय [illegible] अपने ज्ञान के लिये मैं आश्रय लेता हूं, हे भगवान् [illegible] ध्यक ऐसे अपने वचनों से हृदय की ग्रंथियों का [illegible] दिकों का छेदन करो ॥ ५३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—इस प्रकार राजा स[illegible] स्तुति करचुके तब भगवान् आदि पुरुष मत्स्य रूप[illegible] समुद्र में विहरते हुए राजा को तत्त्व आपने कथा क[illegible] कहते हैं, कि—सांख्य योग, और क्रिया ( कर्म ) का प्र[illegible] जिसमें ऐसी दिव्य पुराण संहिता अर्थात् मत्स्य पुराण[illegible]

[illegible]जो आपकी गुप्त ज्ञान रहा सो भी सत्य व्रत राजर्षि को कहते भये ॥ ५५ ॥

ऋषियों के सहित निःसंदेह होकर नौका में बैठा हुआ आत्म तत्त्व ज्ञान और जो भगवान ने सनातन ब्रह्म को उपदेश किया सो राजा ने सब श्रवण किया ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतीतः पूर्वो यः प्रलयस्तस्यापायेऽवसाने ॥ ५७—५९ ॥

[illegible]ोऽयं हरेरवतारस्तं यः प्रकीर्तयेत् ॥ ६० ॥

[illegible]त्यव्रतानां सत्यव्रतस्य ऋषीणां च ज्ञानिनो गच्छन्तीति-
[illegible]समवायाद्धेतुर्वचनम् जिह्ममीनं मायामत्स्यम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्विंशोऽध्यायः ॥ २४ ।

समाप्तोयमष्टमस्कन्धः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननो हरिरनीतः पूर्वो यः प्रलयः कल्पान्ते अवसाने उषितवाय शयनादिति शेषः । वेधसे चतुर्मुखाय वेदान् हयग्रीवेणापहृतान् तमसुरं हत्वा प्रत्याहृत्य आदिशत् ॥ ५७ ॥

ततः स तु स एव सत्यव्रतो राजा ज्ञानविज्ञानाभ्यां संयुतः आगमोत्थविवेकोत्थज्ञानाभ्यां संयुतः विष्णोः प्रसादात् अनुग्रहादेव अस्मिन्कल्पे वैवस्वतो मनुरभूत् ॥ ५८ ॥

एवमुपवर्णितमत्स्यावतारचरित्रो मुनिस्तदाख्यानश्रवणफलमाह—सत्यव्रतस्येति । मायामत्स्यस्याद्भुतमत्स्यरूपिणः स्वसङ्कल्पोपात्तमत्स्यरूपिणो वा शार्ङ्गिणः हरेः सत्यव्रतस्य राज्ञः मनोज्ञ सम्वादरूपमिदमाख्यानं श्रुत्वा पुमान् किल्बिषात् स्वर्गापवर्गश्रेयोविरोधिनः पापात् मुक्तो भवेत् ॥ ५९ ॥

यो नरो हरेरमुमवतारं तच्चरित्रमन्वहमहरहः कीर्तयेत् तस्य नरस्य सर्वे सङ्कल्पाः मनोरथाः सिध्यन्ति जीवदशायामिति शेषः । देहावसाने तु स नरः परमां गतिं मुक्तिं यातीत्यर्थः ॥ ६० ॥

मत्स्यावतारचरित्रकथनान्ते सुखप्रतिपत्तये तदवतारप्रयोजनानि सङ्गृह्य नमस्करोति मुनिः—प्रलयेति । यः प्रलयपयसि प्रलयार्णवजले विहरन्निति शेषः । सुप्ता अप्रबुद्धा शक्तिः सृष्टिशक्तिर्यस्य तस्य निद्राभिभूतत्वादिति भावः । अत एव तस्य धातुः ब्रह्मणो मुखेभ्यः अपनीतं निःसृतं श्रुतिगणं हयग्रीवेणासुरेणापहृतं तं दितिजमसुरं हत्वा प्रत्युपादत्त प्रत्याहृत्य धात्रे ददावित्यर्थः तथा सत्यव्रतानां सत्यव्रतस्य ऋषीणां च सप्तर्षीणां गच्छतीति व्युत्पत्त्यनुसारात् बहुवचनं ब्रह्म तत्त्वार्थप्रतिपादकं पुराणमकथयत्तमखिलहेतुं सर्वकारणकारणभूतं जिह्ममीनं कपटमीनं हरिमहं नतोऽस्मि नत इति कर्तरि क्तः नमस्कृतवानस्मीत्यर्थः ॥ ६१ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवेदव्यासेन श्रीवात्स्यवीरराघवार्यविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीमद्भागवतव्याख्यायामष्टमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

श्रीमते रामानुजाय नमः ॥

अस्मिन् स्कन्धे मूलग्रन्थसंख्या ( १०३८ )
टीका सङ्ख्या ( ३६०० ) समग्रसङ्ख्या ( ४६३८ )

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रलयानामपाये अतीते सति ततः उत्थिताय वेधसे ब्रह्मणे प्रत्याहरत् वेदाहृतांस्तान् हत्वा प्रत्याहृत्य दत्तवानित्यर्थः ॥ ५७–५९ ॥

सम्वादस्य पापहरत्वे अवतारकथाकीर्तनेन किं प्रयोजनमत्राह—अवतारमिति । अस्तु श्रवणफलं कीर्तनेन किम्फलमित्यतो वाह—अवतारमिति ॥ ६० ॥

बुद्धिस्थं प्रहायमवतारकथां सङ्कलय्य कथयति—प्रलयेति. सुप्तशक्तेर्निद्रयोपरतेन्द्रियशक्तेः कार्यानभिमुखीभूतप्रकृतिशक्तेर्वा अपनीतं निःसृतं दैत्येन नीतं जिह्ममीनं मायामत्स्यम् ।—

"अनन्तशक्तिर्भगवान्मत्स्यरूपी जनार्दनः ।
क्रीडार्थं याचयामास स्वयं सत्यव्रतं नृपम्" ॥

इत्यनेन तमाह सानिकरुणं महाकारुणिकमित्यादिना ... क्रीडितामिति ज्ञातव्यम् ॥ ६१ ॥

पदरत्नावलिर्नाम अष्टमस्कन्धसङ्कृता ।
प्रीत्यै मत्स्यात्मनो विष्णोरस्तु निर्दोषदर्शिनाः ॥
इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥
* विजयध्वजतीर्थपाठरीत्या त्रयोविंशोऽध्यायः ( २३ )

समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीमत्स्यदेवस्य द्वयेऽवतारं पुनर्दर्शयति—अतीतेति । [illegible]ध्याम ॥ ५७ ॥

षष्ठे मन्वन्तरे विष्णोः प्रसादं लब्ध्वा सप्तमे वैवस्वतो [illegible]रमीदित्यर्थः ॥ ५८ ॥

[illegible] कृपा ॥ ५९—६० ॥

जिह्मं कुटिलहृदयेषु सामान्यमीनतया प्रकाशमानं नाहं प्रकाशः [illegible]स्येत्यादेः विराड्विदुषामित्यादेश्च ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥
समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मत्स्यावतारद्वयस्य समयद्वयं प्रयोजनद्वयं चाह—अतीतप्रलयस्य अपाये स्वायम्भुवमन्वन्तरारम्भे इत्यर्थः ॥ ५७ ॥

तु [illegible]पक्षमे सत्यव्रतस्तु चाक्षुषमन्वन्तरमध्य इति शेषो बोध्यः चाक्षुषोदधिसम्प्लवे अपात्रैवस्वतं मनुमिति वाक्यानुरोधात् [illegible]मत्स्यरूपस्य प्रसादात् ज्ञानविज्ञानसंयुत इति चाक्षुषीयमत्स्यावतारस्य प्रयोजनमुक्तम् ॥ ५८—६० ॥

सम[illegible]तन प्रयोजनद्वयं पुनः स्पष्टमाह—प्रलये दितिजं हत्वा सत्यव्रतानामिति गौरवेण बहुवचनं जिह्ममीनं कुटिलाकारं मीनं यस्य [illegible] गौर्निबद्धा सतु मीनः कुटिलाकार नाडिसंज्ञः प्रसिद्ध एव [illegible] इति तयोक्तम् ॥ ६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्विंशोऽष्टमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ २४ ॥
समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतीतप्रलयवदृपायं समाप्तौ ॥ ५७ ॥ ५८ ॥

मीमबा अमक्ताविषयिण्या कृपया आविर्भूतो यो मत्स्य-रूपस्तम ॥ ५९ ॥

योऽसैमवतारस्तमन्वहं प्रतिदिनं यः कीर्तयेत् ॥ ६० ॥

सत्यव्रतानां सत्यव्रतसहितानामृषीणां हृत्स्थो यान्तीति वदृषहुवचनम् जिह्मो दैत्यवधार्थं गूढरूपो विष्णुः स चासौ मीनश्च तम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
चतुर्विंशोऽध्यायार्थप्रकाशः ॥ २३ ॥
समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

---

भाषा टीका ।

पूर्व प्रलय के व्यतीत होने के अंत में वेद के चुराने [illegible] ग्रीव असुर का वध करके सोके उठे हुये ब्रह्माजी को [illegible] वेद लाकर दिये ॥ ५७ ॥

ज्ञान विज्ञान संयुत वही सत्यव्रत राजा इस कल्प [illegible] विष्णु के प्रसाद से वैवस्वत मनु हुए ॥ ५८ ॥

सत्यव्रत राजर्षि और कृपा से मीन रूपधारी श्री [illegible]

वह [illegible] श्रवण करे वह किल्बिष से मुक्त हो [illegible]

[illegible] इस अवतार का प्रति दिन कीर्तन करे [illegible] सिद्ध होते हैं और वह परमगति को [illegible]

[illegible] हुए ब्रह्माजी के मुखों से वेदों को जिस [illegible] मारकर, जिनने ऋषि लोग और सत्य व्रत [illegible] का उपदेश दिया ऐसे कृपा से मीन रूपधारी [illegible] कार करता हूं ॥ ६१ ॥

[illegible] विच भाता सो रहे—के मुखों से ।
[illegible] गो हरते ही दैत्य को मारके जो ॥
[illegible], कहदीना ज्ञान सत्यव्रतों को ।
[illegible] निमित माबी मीन को वन्दता हूं ॥
[illegible] द्भागवतेऽयं रुचिरको ह्यष्टमस्कन्धः ॥
[illegible] नायं विनिर्मितभाषाटीकासमन्वितो जयति ॥

[illegible] श्रीमद्भागवत अष्टम स्कन्ध में, चतुर्विंशोऽध्याय [illegible] श्रीवृन्दावनस्थ, श्रीसुदर्शनाचार्यान्तेवासि, [illegible] लराम स्वामि चरणाश्रित भागवताचार्य कृत [illegible] का समाप्त ॥ २४ ॥ अष्टमस्कन्धभी समाप्त हुआ ॥८॥

श्रीरुक्मिणीरमणो जयति ॥

---

इति श्रीमद्भाग [illegible] न्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

[illegible] स्कन्धः ॥

---

संशोधको चास्य ग्रन्थरत्नस्य का [illegible] तवर्ति 'काग्पूर' श्रीरङ्गाचार्य—'श्रीवृन्दावनस्थ' भागवताचार्यो ॥



# श्रीमद्भा[illegible]

नवमस्कन्धः ।

—○:✱:○—

[illegible]ोऽध्यायः ।

ॐ [illegible] वासुदेवाय ।

[illegible]ा ।

मन्वन्तरा[illegible]ोक्तानि श्रुतानि मे ।
वीर्याण्यन[illegible] कृतानि च ॥ १ ॥
यो ऽसौ स[illegible]र्षिर्द्रविडेश्वरः ।
ज्ञानं यो ऽत[illegible] पुरुषसेवया ॥ २ ॥
स वै विवस्व[illegible]ासीदिति श्रुतम् ।
त्वत्तस्तस्य सु[illegible]मुखा नृपाः ॥ ३ ॥
तेषां वंशं पृथ[illegible]ाऽनुचरितानि च ।
कीर्तयस्व मह[illegible] शुश्रूषतां हि नः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

॥ श्रीगणेशाय नमः ॥

गुणा यं गुणताऽवाप्त्यै वृणुते करुणानिधिम् ।
तमहं शरणं यामि परमानन्दमाधवम् ॥ १ ॥
त्रिगुणाद्यभिरध्यायैर्वैवस्वतसुतान्वयः ।
नवमे कृष्णसत्कीर्तिप्रसङ्गाय वितन्यते ॥ २ ॥
एवमुक्तो ऽष्टमस्कन्धे सद्धर्मः सत्त्वशोधकः ।
कर्तृपालकवक्त्रादिमन्वादीनां निरूपणैः ॥ ३ ॥
सद्धर्मशुद्धसत्त्वानामन्तरङ्गेशसत्कथा ।
सूर्यसोमान्वयाख्यानैरधुना सङ्गतोच्यते ॥ ४ ॥
[illegible]ादशभिरध्यायैः सूर्यवंशो ऽनुवर्ण्यते ।
[illegible]ादशभिरध्यायैः सोमवंशस्ततः परैः ॥ ५ ॥
[illegible]त्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ।
[illegible]वंशप्रवेशोक्तौ सुद्युम्नस्त्रीत्वमुच्यते ॥ ६ ॥
[illegible]पूर्वकं वैवस्वतमनोर्वंशं पृच्छति, मन्वन्तराणीति
१—७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

श्रीमते रामानुजाय नमः

पूर्वस्कन्धान्ते—

"सतु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः।
विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः" ॥

इति प्रक्रान्तस्य भगवत्पूर्णानुग्रहविषयस्य महाभागवतस्य वर्त्तमानस्य सप्तमस्य वैवस्वतमनोर्वंशं "सप्तमो वैवस्वतो यस्तदपत्यानि मे शृणु इक्ष्वाकुश्च नृगश्चैव" इत्यादिना सङ्ग्रहेणोक्तं विस्तरतो बुभुत्सुरुक्तानुवादपूर्वकं पृच्छति राजा—मन्वन्तराणीत्यादिभिः पञ्चभिः। यान्यष्टमादौ मया पृष्टानि मन्वन्तराणि तेष्ववतीर्णेन भगवता कृतानि वीर्याणि च तानि सर्वाणि त्वया वर्णितानि मे मया श्रुतानि च ॥ १ ॥

तथा योऽसावतीतकल्पे द्रविडदेशाधिपस्सत्यव्रताख्यो राजर्षिरतीतकल्पावसने परमपुरुषस्य सेवया हेतुभूतया स्वपरयाथात्म्यज्ञानं लेभे प्राप्तवान् ॥ २ ॥

स एव सत्यव्रतोऽस्मिन् विवस्वतः पुत्रो भूत्वा मनुर्वैवस्वताख्यः सप्तमो मनुरासीदिति च त्वत्तो मया श्रुतमित्युक्तानुवादः अथ पृष्टव्यं पृच्छति— तस्य वैवस्वतस्य मनोर्ये सुता इक्ष्वाकुप्रभृतयः त्वया कथिताः ॥ ३ ॥

मया श्रुताश्च तेषामिक्ष्वाक्वादीनां पृथक् पृथक् वंशं तद्वंश्यानां चरितानि चाधुना हे ब्रह्मन्! महाभाग सर्वज्ञ! श्रोतुमिच्छतां नोऽस्माकं कथय ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्री वेदव्यासाय नमः ॥

कमलाकान्तं कमलाक्षं विमलानन्दं प्रणम्य च ॥
नृपवंशस्कन्धविलासं नवमस्कन्धं विवृणोमि ॥०॥

अस्मिन्स्कन्धे राजवंशवर्णनेन श्रीनारायणे भक्तिविधानार्थं भगवन्माहात्म्यमेव प्रपञ्च्यते, तत्रवृत्तवर्तिष्यमाणस्कन्धयोः सङ्गतिप्रदर्शनाय वृत्तानुवादपूर्वकं वैवस्वतमनोः पुत्राणां तद्वंश्यानामनुवंशं तच्चरितानि च राजा शुकं पृच्छति, मन्वन्तराणीत्यादिना वद विक्रमानित्यन्तेन ॥ १—२—३—४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ओं नमः श्रीकृष्णाय॥

अथ नवमस्कन्धस्य क्रमसन्दर्भः ॥

नवमक्रमसन्दर्भे सन्दर्भाणां समाहृतिः।
क्रियते यन्निर्देशेन स मेऽनन्यगतेर्गतिः ॥

॥ १ ॥

योऽसाविति त्रिकम् ॥ २–३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम्।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥

गोपरामाजनप्राणप्रेयसेऽतिप्रभुष्णवे।
तदीयप्रियदास्याय मां मदीयमहं ददे।
उक्त्वा सद्धर्ममीशानुवर्त्तिनां कथ्यते कथा ॥
नवमे भक्तिविज्ञानवैराग्यस्याभिधित्सया।
अम्बरीषादिभिरिव भाव्यं भक्तैर्विचक्षणैः ॥
विषयाभिनिविष्टोऽपि विरक्तः स्याद्ययातिवत्।
इत्येवमर्थमुक्तास्ते सूर्यसोमान्वयान्विताः ॥
ब्रह्मास्तैव पुनस्तोऽपि स्वाचारैर्लोकशिक्षकाः।
अत्र त्रयोदशाध्यायाः सूर्यवंशनिरूपकाः ॥
एकाधिकादशस्युस्ते सोमवंशाभिधायकाः!
तदेवं नवमस्कन्धो राजते त्रिगुणाष्टभिः ॥
अध्यायैर्विविधैश्चर्यकथः कृष्णकथारथः।
तत्र तु प्रथमेऽध्याये सुद्युम्नो नृभ्यां गतः ॥
स्त्रीभूत्वाऽथ बुधात्पुत्रं पुरूरवसमाप्तवान्।

मत्स्यदेवप्रसादात् सत्यव्रतस्य भक्तश्रेष्ठस्य मनुत्वं श्रुत्वा तद्वंश्यानामपि वैष्णवत्वमभिप्रेत्य तत्कथासु जातश्रद्धः पृच्छति—योऽसाविति चतुर्भिः। अतीतकल्पान्ते अतीतमन्वन्तरान्ते ॥ १—७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ श्रीकृष्णाय नमः ॥

श्रीकृष्णं नियमानन्दं श्रीनिवासादिकान् गुरून्।
प्रणम्य नवमे स्वल्पः प्रदीपोऽयं विरच्यते ॥
त्रिगुणाष्टाभिरध्यायैर्निबद्धे नवमे स्फुटाम्।
क्रमादीशकथामाह—भगवान्बादरायणिः ॥

तत्र वैवस्वतपुत्राणामुत्पत्ति यस्य वैवस्वतपुत्रस्य चन्द्रवंशप्रवर्तकः पुरूरवाः पुत्रोऽभूत्तस्य सुद्युम्नस्य स्त्रीत्वं च निरूप्यते प्रथमाध्याये [illegible]ऽष्टमस्कन्धोक्तस्य सत्यव्रतस्य राजर्षेर्वैवस्वतमनुभावं गतस्य पुत्राणां पृथक् पृथक् वंशानुक्त्याऽनुवादपूर्वकं पृच्छति–मन्वन्तराणीति पञ्चभिः ॥ १-६ ॥

---

भाषा टीका।

श्रीमतेरामानुजाय नमः।

श्रीरुक्मिणीकृष्णाय नमः।

नत्वा श्रीरुक्मिणीकान्तं स्वान्तं निन्यस्य तत्पदे।
पूर्वाचार्यान्समस्कृत्य वेदवेदान्तपारगान् ॥ १ ॥
भाषां भागवताचार्यः श्रीमद्भागवतस्य वै।
नवमस्कन्धभाषार्थबोधनीं वितनोति हि ॥ २ ॥

राजोवाच।

राजा परीक्षित बोले, कि–हे श्रीशुकदेवजी महाराज! आपने जो सम्पूर्ण मन्वन्तरों की कथा कही सो मैंने श्रवण करी, और अनन्त पराक्रम वाले श्री हरि के जो जो उनमन्वन्तरों में आपने चरित्र कहे सो भी मैंने श्रवण किये ॥ १ ॥

परञ्च जो आपने कहा कि द्रविड देश का स्वामी सत्यव्रत नामक राजऋषि कि जिनने व्यतीत कल्पके अन्त में महापुरुष श्रीहरि की सेवा से ज्ञान प्राप्त किया ॥ २ ॥

ये भूता ये भविष्याश्च भवन्[illegible]
तेषां नः पुण्यकीर्तीनां सर्वे[illegible] ॥ ५ ॥

सूत उवाच।

एवं परीक्षिता राज्ञा स[illegible]मान् ।
पृष्टः प्रोवाच भगवाञ्छु[illegible]वित् ॥ ६ ॥

श्रीशुक[illegible]

श्रूयतां मानवो वंशः प्राचु[illegible] परन्तप ! ।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥
परावरेषां भूतानामात्मा यः पुरुषः परः ।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥ ८ ॥
तस्य नाभेः [illegible]त्पद्मकोशो हिरण्मयः ।
तस्मिन् [illegible] ! स्वयम्भूश्चतुराननः ॥ ९ ॥
मरीचि[illegible] तस्याऽपि कश्यपः ।
दाक्षायण्यां [illegible]ां विवस्वानभवत्सुतः ॥ १० ॥
ततो मनुः [illegible]ज्ञायामास भारत ! ।
श्रद्धायां [illegible] पुत्रान्स आत्मवान् ॥ ११ ॥
इक्ष्वाकु[illegible]करूषकान् ।
नरिष्यन्[illegible] च कविं विभुः ॥ १२ ॥

---

भाषा टीका ।

वही फिर सूर्य के पुत्र वैवस्वत मनु हु[illegible] आप से श्रवण किया, और यह भी सुना [illegible] इक्ष्वाकु प्रभृति राजा हुए ॥ ३ ॥

सो अब हे ब्रह्मन् ! हे महाभाग ! उन सबों[illegible] वंश और वंश के राजाओं के चरित्रों को आप [illegible] हम लोगों को इस विषय की श्रवण करने[illegible] इच्छा है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनुक्तं वंशं वक्तुं पूर्वोक्तमेव तावद्वंशं तत्प्रवर्तकं श्रीना[illegible] मारभ्यानुस्मारयति–परावरेषामिति पञ्चभिः ॥ ८—११ ॥ नाभागो चेति पाठे ऽपि नभग एव नाभागः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

[illegible]तस्यैव वैवस्वतस्य मनोर्वंशे ये भूता अतीता ये च भविष्या[illegible]मिनो ये चाद्यतना वर्त्तमानाश्च भवन्ति तेषां सर्वेषां पुण्या[illegible]वहा कीर्तिर्येषां पूर्वेषां सर्वेषां विक्रमान् वद चरित्राणि [illegible] पुण्यकीर्तीनामि[illegible]नेन तद्विक्रमाणामश्रोतव्यत्वशङ्का[illegible]स्ता ॥ ५ ॥

[illegible]वं राज्ञा पृष्टो भगवान् बादरायणिः वैवस्वतः मनुवंशं तद्वंश्य[illegible]रित्राणि च यथावद्वक्तुमुपचक्रम इत्याह सूतः—एवमिति । [illegible] ब्रह्मवादिनामृषीणां सदसि राज्ञा परीक्षिता पृष्टः परम[illegible]वित् भागवतगुणावर्णस्योत्कृष्टधर्मस्वामिको भगवान् शुकः [illegible]वाच ॥ ६ ॥

[illegible]–श्रूयतामित्यादिना तावद्वैवस्वतमनुवंशमाचिख्यासु[illegible]यानां चरित्राणां चानन्त्यात्कार्त्स्न्येन वक्तुं श्रोतुञ्चाशक्य[illegible]भावेन काञ्चिद्वंशपरम्पराः कथयामीत्यभिप्रायमाह–श्रूय[illegible] हे परन्तप ! मानवः मनोर्वैवस्वतमनोः सम्बन्धी

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वंशः प्राचुर्येण कथयतो मम भूयसां प्राचुर्येणेनेन साकल्येन वक्तुं श्रोतुं चाशक्य इत्यभिप्रेतं तदेवाह न शक्यत इति स्फुटार्थः ॥ ७ ॥

मनोरर्वाचीनां तद्वंशपरम्परां विवक्षुस्तावत्तस्य पूर्वपरम्परामाह—परावरेषामिति चतुर्भिः । इदं परिदृश्यमानं स्थूलचिदचिदात्मकं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् अतीतकल्पान्ते स एवासीत्. कोऽसौ ? यदात्मकं जगदासीदित्यत्राह—यः परावरेषामुच्चावचानां भूतानामात्मा अन्तः प्रविश्य धारकः परमपुरुषः स्थूलचिदचिच्छरीरकः परमात्मा प्रलयदशायां नामरूपविभागानर्हसूक्ष्मचिदचिच्छरीरकत्वेन कारणतयाऽवस्थितो बभूवेत्यर्थः । अन्यत्तत्समानं कारणं वस्तु नासीदित्यर्थः "स एवासीदिदं विश्वं कल्पान्ते" इत्यनेन "सदेव सोम्येदमग्र आसीत्" इति श्रुत्यर्थः प्रत्यभिज्ञापितः अन्यच्च किञ्चनेत्यनेन "एकमेवाद्वितीयम्" इत्यस्यार्थः । मनोः वंशस्य पूर्वावधिद्योतनाय पञ्चपुरुषान्तरितत्वेपि साक्षाद्भगवदंशप्रसूतत्वख्यापनाय च परावरेषामित्यादिश्लोकत्रयं प्रवृत्तम् ॥ ८ ॥

तस्य प्रलयदशायां सूक्ष्मचिदचिच्छरीरकत्वेनावस्थितस्य कारणभूतस्य "बहुस्यां प्रजायेय" इत्युक्तविधसिसृक्षानन्तरं महदादिपृथिव्यन्ततत्त्वोत्पत्तिद्वारा तैरारब्धे ब्रह्माण्डे गर्भोदकेषु शयानस्यानिरुद्धरूपिणो भगवतो नाभेः हिरण्मयः प्रकाशबहुलः पद्मकोशः त्रिभुवनात्मकः पद्मकोशः समभवदित्यर्थः । हे महाराज ! तस्मिन्नाभिपद्मे चतुर्मुखो ब्रह्मा बभूव ॥ ९ ॥

तस्य चतुर्मुखस्य मनसः मरीचिर्जज्ञे मानस इति पाठे तस्य मरीचिर्मानसः पुत्रो जज्ञे इत्यर्थः । तस्यापि मरीचेः कश्यपः पुत्रः सम्बभूव तस्य कश्यपस्य भार्यायां दक्षदुहितरि अदित्यां विवस्वान् सुतः समभवत् ॥ १० ॥

ततस्तस्य विवस्वतः संज्ञाख्यायां भार्यायां श्राद्धदेवो मनुर्वैवस्वतः समभवत् स च प्रशस्तमनस्को वैवस्वतो मनुः श्रद्धायां भार्यायां दश पुत्रान् जनयामास ॥ ११ ॥
तानाह—इक्ष्वाकुरिति । इक्ष्वाक्वादीन् दशपुत्रान् जनयामासेति पूर्वेणान्वयः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धिक्मान् वंशे जातानां पुरुषाणां चरितानि ॥ ५ ॥

राजाभिषिक्तानां प्रजापालनादिलक्षणः परमो धर्मस्तं वेत्तीति ॥ ६-७ ॥

आत्माऽन्तर्यामी इदं विश्वं स एवासीत्तदधीनमेवाभूत् न तु स्वतन्त्रं किञ्चन प्रधानादिकमपि "तस्माद्धान्यं न परः किंचनास" इति श्रुतेः ॥ ८ ॥

उदरस्तावुद्भूत स्वयंभूरित्यस्य विष्णावपि च वृत्तेरित्यत आह चतुरानन इत्युक्तं "विष्णुः स्वयंभूरण्यभुक् स्वभूर्विश्वपतिः पतिः" इत्यभिधानम् ॥ ९ ॥

मानसो मनोजातः ततः कश्यपात् ॥ १० ॥

तस्माद् विवस्वतो मनोः पुत्रानाह—श्रद्धायामित्यादिना । मतिमान् वशीकृतमनाः ॥ ११-१२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

कथासौष्ठवार्थं तं च मानवं वंशं सृष्टिमारभ्यैव प्रवृत्तया पूर्वमुक्तयैव कथया सह गुम्फन्नाह—परावरेषामिति पञ्चभिः ॥ ८-१२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राचुर्येण प्राधान्येन भूयसाम् ॥ ७ ॥

परावरेषामुच्चावचानाम् आत्माऽऽश्रयः इदं विश्वमासीत् कारणाभिन्नमासीदित्यर्थः । "सदेव सोम्येदमग्र आसीत्" इति । श्रुतेः ॥ ८ ॥

यस्य पुरुषस्य ॥ ९ ॥

तस्य चतुराननस्य मनसः सकाशात् तस्य मरीचेः कश्यपः सुतः ततः कश्यपात् विवस्वान् अभवत् ॥ १० ॥

स श्राद्धदेवः श्रद्धायां भार्यायाम् ॥ ११ ॥ १२ ॥

---

भाषा टीका ।

इन के वंश में जो हो चुके और जो होवेंगे तथा आज कल जो हैं, उन पुण्यकीर्ति लोगों के सबके चरित्र आप कहिये ॥ ५ ॥

सूत उवाच ।

सूतजी बोले, कि—इस प्रकार ब्रह्मवादि लोगों की सभा में राजा परीक्षित ने जब प्रश्न किया, तब परम धर्म को जानने वाले भगवान् श्रीव्याससनन्दन बोले ॥ ६ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे परन्तप ! वैवस्वत मनु महाराज के वंश को आप प्राचुर्य से श्रवण करो, और विस्तार से तो वह सैकड़ों वर्ष में भी वर्णन नहीं होसक्ता है ॥ ७ ॥

जो पर और अवर भूत प्राणियों का आत्मा और जो परम पुरुष हैं सृष्टि के आदि में यह देख पड़ने वाला विश्व वही परमात्मा था और कुछ भी नहीं रहा ॥ ८ ॥

उस परमात्मा के नाभि से एक हिरण्मय ( सुवर्णका ) कमल मुकुल उत्पन्न हुआ, हे महाराज ! उसमें स्वयंभू चतुरानन श्रीब्रह्माजी हुए ॥ ९ ॥

ब्रह्मा के मनसे मरीचि उत्पन्न हुए, उनके कश्यप और कश्यप के दक्ष की पुत्री अदिति से विवस्वान् पुत्र भये ॥ १० ॥

और विवस्वान् के श्राद्धदेव मनु संज्ञा नाम की पुत्री से उत्पन्न हुए उन श्राद्ध देव मनु की श्रद्धा भार्या से दश पुत्र भये ॥ ११ ॥

अप्रजस्य मनोः पूर्वं वसिष्ठो भ[illegible]
मित्रावरुणयोरिष्टिं प्रजार्थमकरो[illegible]
तत्र श्रद्धा मनोः पत्नी होतारं सम[illegible]
दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥
प्रेषितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः ।
हविषि व्यचरत्तेन वषट्कारं गृणन् द्विजः ॥ १५ ॥
होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ।
तां विलोक्य मनुः प्राह नाऽतिहृष्टमना गुरुम् ॥ १६ ॥
भगवन् ! किमिदं जातं ? कर्म वो ब्रह्मवादिनाम् ।
विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया ॥ १७ ॥
यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ।
कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥
तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ।
होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥
एतत्सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः ।
तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा ॥ २० ॥

भाषा टीका।

प्रथम इक्ष्वाकु, नृग, शर्याति, दिष्ट, धृष्ट, क[illegible]षन्न प्रषध्र, नभग, कवि ये दश पुत्र हुए ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधा[illegible] सोमवंशप्रचारं वक्तुं सप्रस्तावमिलोपाख्यानमा[illegible] पूर्वमित्यादिना यावदध्यायसमाप्ति । पूर्वमिक्ष्वा[illegible] प्राक् ॥ १३ ॥

दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति हो[illegible] गत्वा व्रत पय एव व्रतमाहारो नियतो यस्याः ॥ १४ ॥

अध्वर्युणा होतर्यजेति प्रेषितो होता तेन गृही[illegible] सति तत्तया प्रार्थितं ध्यायन् व्यचरदयजत पाठ[illegible] माध्यायत् वाचा वषट्कारं गृणन् वषडित्युच्चारयन् ॥ १५ ॥

ब्रह्मविक्रिया मन्त्राऽन्यथात्वम् ॥ १७ ॥ १८ ॥

प्रपितामहो वसिष्ठः ॥ १९-२८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात्पुरूरवःप्रभृति-सोमवंशप्रवृत्तिं वक्तुं सप्रस्तावमिलोपाख्यानमाह-अप्रजस्येति। पूर्व-मिक्ष्वाकुप्रभृतीनामुत्पत्तेः प्राक् अपुत्रस्य मनोः प्रजार्थं पुत्रार्थं मित्रावरुणदेवताकामिष्टिं मनोराचार्यो भगवान् वसिष्ठः अक-रोत् अयाजयदित्यर्थः ॥ १३ ॥

ततस्तत्र यागे क्रियमाणे सति मनोः पत्नी श्रद्धा पयो-[illegible] पयः क्षीरमेव व्रतम[illegible]रो नियमो यस्याः सा होतार-[illegible]गम्य होतुः समीपमुपेत्य प्रणिपत्य नमस्कृत्य च दुहित्रर्थं-[illegible]त कन्या मम यथा भवेत्तथा यजेति प्रार्थितवतीत्यर्थः ॥ १४ ॥

[illegible]तोऽध्वर्युणा प्रेषितः होतर्यजेतिप्रेषितो होता सुष्ठु समा-[illegible]तः तत्तया प्रार्थितं ध्यायन् वाचा वषट्कारं गृणन् वषडि-[illegible] गृहीतेन तेन हविषा अयजदिति शेषः ॥ १५ ॥

[illegible] होतुस्तद्व्यभिचारेण यजमानसङ्कल्पविपरीतसङ्कल्परूपेण [illegible]ारेण इलेति प्रसिद्धा सा कन्या बभूव या श्रद्धया याचिता [illegible] सम्बभूव न तु मनुना याचितः पुत्र इत्यर्थः। तां सम्भूतां [illegible] नातीव हृष्टं मनो यस्य तादृशः गुरुं वसिष्ठमाह॥१६॥

[illegible]—भगवन्निति द्वाभ्याम्। हे भगवन्! ब्रह्मवादिनां वो [illegible] युष्माभिरनुष्ठितमिदं कर्म विपरीतं जातं किम्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

सङ्कल्पितफलाद्विपरीतफलकं जातमित्यर्थः । अत्र को दोषः ? इत्यत्राह-महत् कष्टमिति । किं तत्कष्टम् ? तत्राह मैवमिति । ब्रह्मविक्रिया मन्त्रविकारः मन्त्रशक्तिविपर्यासः नैवं स्यात् एवं भवितुं नार्हतीत्यर्थः । मन्त्रशक्तिविपर्यय एव महत्कष्टमित्यर्थः ॥ १७ ॥

ब्रह्मवादिनां च इत्यनेनाभिप्रेतं विवृणोति—यूयमिति । यूयं मन्त्रविदः मन्त्रस्वरूपतद्विनियोगतदर्थविदः युक्ताः समाहितचित्ताः तपसा दग्धं किल्बिषं चिन्तितविपरीतफलकं येषां ते तद्वत्भूतानां युष्माकं कुतः कस्माद्धेतोः सङ्कल्पवैषम्यं चिन्तितवैषम्यमभूत तत्र विबुधेष्वनृतमिवेति दृष्टान्तः । यथा विबुधेष्वनृतं भवितुं, नार्हति तथा भवत्सु भवितुमनर्हं सङ्कल्पवैषम्यं कस्माद्धेतोर्बभूवेत्यर्थः ॥ १८ ॥

एवमुक्तस्तमाह वसिष्ठ इत्याह मुनिः—तदेवमुक्तं सनोर्वचो निशम्य श्रुत्वा नोऽस्माकं पितामहः मत्स्य प्रेत्यादिः प्रपितामहः भगवान्वसिष्ठः होतुर्व्यतिक्रमं सङ्कल्पविपर्यासं ज्ञात्वा रविनन्दनं मनुं वभाषे उवाच ॥ १९ ॥

तदेवाह-एतदिति । होतुर्व्यभिचाराद्विपरीतसङ्कल्परूपाद्धेतोः भवतस्सङ्कल्पवैषम्यं चिन्तितवैषम्यं यद्यप्यभूत् तथाप्यहं स्वतेजसा स्वतपोबलेन सुप्रजास्त्वं साधयिष्ये कन्याया एव पुंस्त्वं साधयिष्य इत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अप्रजस्य अपुत्रस्य इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेः पूर्वं मित्रावरुणयोरिष्टिं मित्रावरुणदेवत्याम ॥ १३-१४ ॥

सुसमाहितः एकाग्रचित्तः तच्छ्रद्धयोक्तं हृद्यौ वषट्कारं मन्त्रविशेषं वा गृणन् स्वकर्माकरोदिति शेषः ॥ १५ ॥

तस्य कर्मणो व्यभिचारेण विपक्षवर्तिना हेतुनाऽऽईडाकृतिमिलत्वादिला " वाणी सरस्वती भाषा वागिडेला प्रकीर्तिता" इति ॥ १६ ॥

इदं जातं किमिति तत्राह—कर्मेति । ब्रह्मवादिनां वः कर्म विपरीतं पुत्रार्थिनः कन्याफलमभूत्तः किमिदमिति कुतूहलयामि अत्रैवमभूतेऽप्यन्यत्र माभूदित्या) मैवमिति ब्रह्मविदां वः क्रिया मैवमभूदित्यर्थः ॥ १७ ॥

कश्चित् स्खलनेऽप्यत्रापि नियमो न स्यादित्याशङ्क्य कश्चिद्व्यत्यन्यथात्वं न युक्तं युष्माकमित्याह—यूयमिति । "मैत्रावरुणीं गार्हि कुर्यात्पुत्रकामः" इत्यादिमन्त्रहृदयज्ञाः यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायन्वषट् करिष्यामीति वचनान्मनोयोगयुक्ताः न च होतान्यथात्वं मतम इत्याह—तपसेति । यूयमेवंविधास्तेषु युष्मासु सङ्कल्पवैषम्यं चिन्तितस्यान्यथात्वं कुतो न कुतोऽपि सम्भाव्यते कुत इति तत्राह अनृतमिति न हि देवेष्वनृतं "तस्मादनृतं न वदेत्" इति श्रुतेः ॥ १८ ॥ १९ ॥

होतुर्व्यभिचारतः ध्यानस्यान्यथात्वलक्षणात् ॥ २०—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्वम् इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेः प्राक् ॥ १३ ॥

दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति ॥ १४ ॥

अध्वर्युणा हे होतः ! यजेति प्रेषितः होता हविषि गृहीते सति तत् राज्ञीप्रार्थितं ध्यायन् व्यचरत् अयजत वषट्कारं गृणन् वषडित्युच्चारयन् अध्यायत्तदिति वाचेति पाठे वाचा वषट्कारं गृणन् तद्राज्ञीप्रार्थितम् अध्यायत् ॥ १५ ॥

इलेति राज्ञैव हर्षेण ततत्पुत्र एव नामकृतमित्यवसीयते मातौत्यप्रजस्त्वापगमात् सामान्यतो हर्षोत्पत्तेः ॥ १६ ॥

ब्रह्मविक्रिया मन्त्रान्यथात्वम् ॥ १७ ॥ १८ ॥

प्रपितामहो वसिष्ठः ॥ १९—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इक्ष्वाकाद्युत्पत्तेः पूर्वम् मित्रावरुणयोः मित्रावरुणदेवताकामिष्टिमकरोत् ॥ १३ ॥

पयोव्रता पयः क्षीरमेव व्रतं नियताहारो यस्याः सा मम दुहिता यथा भवेत्तथा यजेति दुहित्रर्थं होतारं समुपगयाचत ॥१४॥

होतः ! यजेति अध्वर्युणा प्रेषितो होता तेन गृहीते हविषि सति तत् ध्यायन् श्रद्धया प्रार्थितं चिन्तयन् वाचा वषट्कारं गृणन् व्यचरत् अयजत ॥ १५ ॥

व्यभिचारेण यजमानसङ्कल्पविपरीतध्यानेन ॥ १६ ॥

ब्रह्मणो मन्त्रस्य विक्रिया अन्यथाऽर्थोत्पादकता ॥ १७ ॥ १८ ॥

शुकस्य पितृप्रपितामहत्वेन मनोर्मरीचिभ्रातृत्वेन च प्रपितामहो वसिष्ठः ॥ १९-२५ ॥

---

भाषा टीका ।

प्रथम में मनु को पुत्र रहित देखकर वशिष्ठ भगवान मित्रावरुण का यज्ञ किया ॥ १३ ॥

जब यज्ञ होने लगा उस समय केवल दुग्ध के आहार करके रहने वाली मनु की भार्या श्रद्धा ने पुत्री के निमित्त होता से याचना करी ॥ १४ ॥

होम करने के लिये होता को अध्वर्यु ने जब भेजा, तब होता ने श्रद्धा के वाक्यों को स्मरण करके हविष लेकर वषट्कार उच्चारण करने में पुत्री का ही सङ्कल्प किया ॥ १५ ॥

इस प्रकार होता के व्यभिचार से इला नाम वाली पुत्री उत्पन्न हुई उसको देखकर मनु प्रसन्न नहीं हुये, और अपने गुरु से वचन बोले कि ॥ १६ ॥

हे भगवन् ! आप लोग ब्रह्मवादियों के सङ्कल्प में विपरीतता क्यों हुई, ये बड़ी कष्ट की बात है, वेद का मन्त्र कभी अन्यथा नहीं होसक्ता है ॥ १७ ॥

तप के प्रभाव से आप लोगों का सब कल्मष दूर गया है, और आप सम्पूर्ण मन्त्रों के जानने वालों में मुख्य हैं, जैसे देवता लोग असत्य बोलें इस प्रकार आप लोगों का सङ्कल्प अन्यथा क्यों हुआ ? ॥ १८ ॥

एवं व्यवसितो राजन् ! भगवान् [illegible]
अस्तौषीदादिपुरुषमिलायाः पुंस्[illegible] ॥
तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ।
ददाविलाऽभवत्तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥
स एकदा महाराज ! विचरन् मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥ २३ ॥
प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥
स कुमारो वनं मेरोरधस्तात्प्रविवेश ह ।
यत्रास्ते भगवान् रुद्रो रममाणः सहोमया ॥ २५ ॥
तस्मिन्प्रविष्ट एवासौ सुद्युम्नः परवीरहा ।
अपश्यत्स्त्रियमात्मानमश्वं च वडवां नृप ! ॥ २६ ॥
तथा तदनुगाः सर्वे आत्मलिङ्गविपर्ययम् ।
दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥
राजोवाच ।
कथमेवङ्गुणो देशः केन वा भगवन् ! कृतः ।
प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ २८ ॥

भाषाटीका ।

इन सब बातों को सुनकर हमारे प्रपितामह वसिष्ठ जी होता के व्यभिचार को जानकर सूर्य के [illegible] से बोले ॥ १९ ॥

वसिष्ठजी बोले, कि–यह तुमारे ह[illegible] की [illegible] सङ्कल्प की विषमता हुई है, तौभी हम अपने [illegible] को पुत्र होने का उपाय करेंगे ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रतिज्ञाय भगवान् वसिष्ठः तथैव साधितवानित्या[illegible] एवमिति । हे राजन् ! इत्थं व्यवसितः निश्चययुक्तः स मह[illegible] एवं विपुलकीर्त्तिः भगवान् वसिष्ठः आदिपुरुषं भगवन्तम् [illegible] कन्यायाः पुंस्त्वकाम्यया पुंस्त्वसम्पादनेच्छया अस्तौषीत् [illegible]

तत ईश्वरो भगवान् हरिस्तत्कृतेन स्तोत्रेण तुष्टः प्रसन्न[illegible] वसिष्ठाय कामं वरमिडायामिलायाः पुंस्त्वरूपं वरं ददौ तत्तेन [illegible] वरेण हेतुना सा इला सुद्युम्नाख्यः पुरुषश्रेष्ठः बभूव ॥ २२ ॥

स वीरः सुद्युम्नः कदाचित् हे महाराज ! वने मृगयां चरन् मृगयां कुर्वन्नित्यर्थः । कतिपयैरमात्यैर्मन्त्रिभिः परिवृतः सैन्धवं सिन्धुदेशोद्भवमश्वमारुह्य रुचिरं सुन्दरं दृढं च चापं धनुस्तथा-द्भुतान्यतिशितान् शरांश्च प्रगृह्य दंशितः कवचितः उत्तरां दिशं प्रत्यनुमृगं प्रतिमृगं जगाम विचचार ॥ २३ ॥ २४ ॥

एवं विचरन् स कुमारः सुद्युम्नो मेरोः पर्वतस्याधस्तात्स्थितं वनं प्रविवेश इत्याश्चर्यं स्त्री[illegible] च तत्प्रदेशस्य पुनः स्त्रीत्वापत्तिहेतु-[illegible]त् स्वदः पराक्रमातिशयादाश्चर्यं च वनं विशिनष्टि–यत्रेति । यत्र [illegible] भगवान् शर्वो रुद्रः उमया सह रममाणा आस्ते तद्वनप्रविवेश [illegible]तवर्षस्थवनं प्राविवेशेत्यर्थः ॥ २५ ॥

परान् शत्रून् वीरान् हन्तीति तथा असौ सुद्युम्नस्तत्र वने प्रविष्ट एव [illegible]वेत्यर्थः । हे नृप ! आत्मानं स्त्रियमश्वं वडवां चापश्यत ॥ २६ ॥

[illegible] तस्य सुद्युम्नस्यानुगास्सर्वे आत्मलिङ्गं पुंस्त्वं तद्विपर्ययं [illegible]र्थः । तद्दृष्ट्वा परस्परं वीक्षमाणाः विमनस अहो [illegible] कं प्राप्तामिति खिन्नचित्ता बभूवुः ॥ २७ ॥

[illegible] वनं प्रविष्टस्य स्त्रीभाव आपद्यते तन्निमित्तं पश्चा-[illegible]तस्य स्त्रीत्वापत्तिनिमित्तोपपादनस्यावसरप्राप्तता-[illegible] तद्विस्तरतो बुभुत्सुः पृच्छति राजा–कथमेवमिति । हे

श्रीशुक उवाच ।

एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ।
दिशो वितिमिराभासाः कुर्वन्तः समुपागमन् ॥ २९ ॥
तान्विलोक्याम्बिका देवी विवासा व्रीडिता भृशम् ।
भर्त्तुरङ्कात्समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३० ॥
ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ।
निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ३१ ॥
तदिदं भगवानाह प्रियायाः प्रियकाम्यया ।
स्थानं यः प्रविशेदेतत्स वै योषिद्भवेदिति ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवन्! एवंविधो देशः यस्मिन् प्रवेशमात्रेण स्त्रीत्वापत्तिनिमित्तभूतो देशः कथमेवंविधं देशं न सम्भावयामीति भावः यदि कथञ्चित्सं-भवेत्तर्हि केनैवंविधः कृतः इति प्रश्नप्रकारः एवं मया कृतं प्रश्नं समाचक्ष्व प्रश्नशब्दः उपचारात्तदुत्तरे वर्त्तते प्रश्नस्योत्तरं वदेत्यर्थः। यद्वा, प्रश्नशब्देन तन्निमित्तमुक्तदेशनिष्ठं स्त्रीत्वापादकत्वं लक्ष्यते तदुपपादयेत्यर्थः ऽतच्छ्रवणेऽस्माकमतीव कौतूहलमुत्पन्नो वर्त्तते अतः समाचक्ष्वेति भावः ॥ २८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन वरेण हेतुना सैन्धवं सिन्धुदेशजातम् ॥ २३ ॥ २४ ॥
मान्ना सुकुमारवनम् अधस्तात्स्थितम् ॥ २५ ॥
वडवामश्वस्त्रियम् आत्मनो देहस्य लिङ्गविपर्ययं पुरुष-चिह्नविपरीतं स्त्रीचिह्नम् ॥ २६ ॥ २७ ॥ *
एवङ्गुणः पुरुषस्य स्त्रीत्वापत्त्यादकगुणयुक्तः ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वडवाम् अश्विनीम् ॥ २६ ॥ २७ ॥
यत्र प्रवेशमात्रेण पुंसः स्त्रीत्वापत्तिः एवङ्गुणः स देशः कथम् ॥ २८ ॥

———

भाषाटीका ।

हे राजन्! भगवान् वसिष्ठ ने इस प्रकार निश्चयकर इला कन्या के पुत्र होने के लिये आदिपुरुष श्रीमन्नारायण की स्तुति करी ॥ २१ ॥

श्रीहरि ने वसिष्ठजी के ऊपर प्रसन्न होकर यथेष्ट वर दिया उस से इला कन्या ही पुरुषों में श्रेष्ठ सुद्युम्न पुत्र होगया ॥ २२ ॥

हे महाराज! एक समय वह सुद्युम्न कितने एक मन्त्रियों के साथ घोड़े पर बैठकर शिकार खेलने को वनमें विचर-ने लगा ॥ २३ ॥

सुन्दर धनुष और अद्भुत-बाणों को हाथ में लेकर कवच पहिन कर वह वीर मृगों के पीछे दौड़ा हुआ उत्तर दिशा को चलागया ॥ २४ ॥

वह कुमार मेरु पर्वत के नीचे वनमें गया, जहां कि भगवान् श्रीरुद्र उमा देवी के साथ रमण करते हुए विराजते हैं ॥ २५ ॥

हे नृप! पराये वीर को हनन करने वाले उस सुद्युम्न को उस वनमें प्रवेश करते मात्र यह आश्चर्य हुआ कि सुद्युम्न राजकुमार स्त्री होगया और उसका घोड़ा भी स्त्री होगया और ऐसाही उसने आपको और घोड़ों को देखा ॥ २६ ॥

ऐसे ही उसके नौकर चाकर सब स्त्री होगये और परस्पर में एक दूसरे को देखकर दुःखित हुए ॥ २७ ॥

राजोवाच ।

राजा बोले, कि-हे भगवन्! वह देश ऐसे गुणवाला क्यों रहा? और किसने ऐसा किया, इस प्रश्न को आप कहिये हम लोगों को बड़ा कौतुक है ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

विगतं तिमिरमाभासः प्रकाशश्चाम्बरस्य यासु तथाभूता दिशः कुर्वन्तः ॥ २९-३० ॥

* अत्राध्यायसमाप्तिः क्रियते एतट्टीका ॥

तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जय[illegible]
सा चानुचरसंयुक्ता विचचार वनाद्वनम् ॥ [illegible] ॥
अथ तामाश्रमाभ्यासे चरन्तीं प्रमदोत्तमाम् ।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ३४ ॥
सा ऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।
स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ३५ ॥
एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ।
सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसङ्गं रत्यभिनिवेशं स्त्रीप्रसङ्गदर्शनकलुषितमनसः सन्त-स्तत्प्रसङ्गशून्यं नरनारायणाश्रमं ययुः ॥ ३१ ॥ ३२ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमनुवर्णयति—अनुचरीसंयुक्तेति च वक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः ॥ ३३–३६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमापृष्टो यथावदुपपादयितुं तत्प्रस्तावमाह मुनिः—एकदेति त्रिभिः । कदाचिद्व्रतधरास्तपोनिष्ठाः हरं रुद्रं द्रष्टुं तत्रेलावृतवर्षे वने समुपागमन् जग्मुः, कथम्भूताः सन्तः ? भासा स्वदीप्त्या दिशां वितिमिराः कुर्वन्तस्सन्तः विगतं तिमिरम् आ समन्तात् भासः प्रकाशश्च यासु तथाभूताः कुर्वन्त इति वा ॥ २९ ॥

अथ तान् तत्र समुपागतानृषीन्विलोकयाम्बिका देवी विवस्त्रा नग्ना सती अत एव नितरां व्रीडिता भर्तुः शर्वस्य अङ्कादाशु समुत्थाय नीवीं नीवीयुक्तं वस्त्रं पर्यधात् धृतवती ॥ ३० ॥

तथा ऋषयोऽपि रममाणयोस्तयोर्भवभवान्योः प्रसङ्गं रत्यभि-निवेशप्रसङ्गं वीक्ष्यालोच्य तस्मात्स्थानान्निवृत्तास्तत्प्रसङ्गरहितं नरनारायणाश्रमं जग्मुः ॥ ३१ ॥

तदा भगवान् रुद्रः प्रियायाः अम्बिकायाः प्रियं कर्तुमिच्छया एतदाह कथं यः कश्चित्पुमान् एतत्स्थानं प्रविशेत् स स्त्री भवेदिति ॥ ३२ ॥

ततो रुद्रशापानन्तरं तत्स्थानं सर्वे पुरुषा वर्जयन्ति तत्र न प्रविशन्तीत्यर्थः । हीति प्रसिद्धिं द्योतयति एवं तद्देशस्य स्त्रीत्वा-पादकत्वनिमित्तमभिधायाथ सुद्युम्नस्य स्त्रीत्वापत्त्यनन्तरं वृत्तान्त-माह—साचेति । सा च पूर्वमपि योषित् मध्ये पुंस्त्वम्प्राप्तापि पुनः स्त्रीत्वमापन्ना योषित् अनुचरसंयुक्ता अनुचरीभिः संयुक्ता अनु-चरी संयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः वनाद्वनं वनान्तरात्पुनःपुनर्वनान्तरं विचचार ॥ ३३ ॥

ततः स्वाश्रमसमीपे चरन्तीं तां स्त्रीभिः परिवृतां प्रमदो-त्तमामवलोक्य भगवान् बुधः सोमपुत्रः चकमे ॥ ३४ ॥

तथा सा च सुभ्रूः सोमराजसुतम्प्रति चकमे परस्परकामतया मिथुनीबभूवतुः स बुधस्तस्यां योषिति पुरूरवस्संज्ञकमात्मज-मुत्पादयामास ॥ ३५ ॥

एवं स्त्रीत्वमापन्नो मनोः पुत्रो नृपः सुद्युम्नः स्वकुलाचार्यं वसिष्ठं सस्मार दध्यौ इति शुश्रुम इत्यनेनोक्तवृत्तान्तस्यासत्यत्वा-शङ्कां निवारयति संस्मृतो वसिष्ठस्तस्य दशामवस्थान्तरा-पत्तिं दृष्ट्वा कृपया नितरां पीडितः पुनः सुद्युम्नस्य पुंस्त्वमाशा-सन् इच्छन् शङ्करमिति पाठान्तरं तदा पवमानात्पाद्यः शङ्कर-मुपाधावत सन्तोषितवानित्यर्थः ॥ ३६ ॥ ३७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भासा स्वतेजसा वितिमिराः निरस्तान्धकाराः ॥ २९ ॥

नीवीं वस्त्रं पर्यधात्परिधत्त कृतवती ॥ ३० ॥ ३१ ॥

भगवानाहेत्यन्वयः । कथम् ? य एतत्स्थानं प्रविशेत्स योषि-द्भवेदिति वा इत्यनेनागमवर्जमिति सूचयति ॥ ३२ ॥

तद्वै तदेव नान्यत् हि शब्दो हेतौ यतः स्त्रीत्वं स्यादत इति ॥ ३३ ॥ ३४ ॥

स बुधस्तस्यां स्त्रीत्वमापन्नायां सुद्युम्नाख्यायाम ॥ ३५—३६ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऋषयोऽपीति तत्र लीलातत्परत्वानुभवमानसाऽन्यत्रापि तदाशङ्क्य नितरां तत्प्रसङ्गशून्यं नरनारायणाश्रमं ययुः ॥ ३१–४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विगतानिनिरस्ताभासः प्रलयोऽपि यासु ताः ॥ २९—३२ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—साचेति । अनुचरी संयुक्तेति वक्तव्ये भूतपूर्वं गत्या पुंस्त्वनिर्देशः ॥ ३३–३६ ॥

स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ।
सुद्युम्नस्याशयन्पुंस्त्वमुपाधावत शङ्करम् ॥ ३७ ॥
तुष्टस्तस्मै स भगवानृषये प्रियमावहन् ।
स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते ! ॥ ३८ ॥
मासं पुमान्स भविता मासं स्त्री तव गोत्रजः ।
इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ ३९ ॥
आचार्यानुग्रहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाऽभ्यनन्दन् स्म तं प्रजाः ॥ ४० ॥
तस्योत्कला गयो राजन् ! विमलश्च सुतास्त्रयः ।
दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ ४१ ॥
ततः परिणते काले प्रतिष्ठानपतिः प्रभुः ।
पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे इलोपाख्याने
प्रथमोऽध्यायः ॥ १ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गिरिशं शिवम् तत्र देवं द्रष्टुं शोभनानि व्रतानि येषां । वितिमिरं निरस्तं तिमिरम् आभासः इतरप्रकाशश्च यासु तथा [भू]ताः कुर्वन्तः सन्तः समुपागमन् जग्मुः ॥ २९—३१ ॥

पूर्वं येऽनुचराः पुमांसः तैः स्त्रीरूपैः संयुक्ता ॥३२—३४॥

---

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-एकसमय सनकादिक बडे व्रतधारी ऋषि लोग अपने तेज से दिशाओं में उजेला करते हुए महादेव जी को देखने को वहां चले गये ॥ २९ ॥

वहांपर उमादेवी क्रीडाके समय में अपने भर्त्ता के गोदमें बिना वस्त्र के बैठी रहीं ऋषियों को देखकर बहुत लज्जित हुई और वहां से उठकर जल्दी वस्त्र धारण किये ॥ ३० ॥

ऋषिलोग भी उन्हीं के रमण का प्रसङ्ग देखकर लौट और वहां से नर नारायण के आश्रम ( बदरीनारायण ) को चलगये ॥ ३१ ॥

उस समय पर भगवान् श्रीशङ्करने अपनी प्यारी के प्रिय करने की इच्छासे ऐसा कह दिया कि-जो इस स्थानमें प्रवेश करेगा वह स्त्री होजावेगा ॥ ३२ ॥

उस समय से उस वनको पुरुष लोग वर्जन करते हैं फिर वह स्त्री अनुचरों सहित वन वन में विचरती हुई ॥ ३३ ॥

अब एक समय अपने आश्रम के समीप अन्य स्त्रियों के सहित विचरती हुई उस उत्तम स्त्री को देखकर श्रीमान् बुध ने उसके ऊपर इच्छा चलाई ॥ ३४ ॥

सुन्दर भृकुटी वाली उस स्त्री ने भी चन्द्र के पुत्र बुध की चाहना करी तब उसमें बुध ने पुरूरवा नामक एक पुत्र उत्पन्न किया ॥ ३५ ॥

इस प्रकार मनुवंशी सुद्युम्न राजा स्त्री भाव को प्राप्त होगये फिर कुछ दिन में अपने कुलाचार्य वसिष्ठ जी को याद किया हे राजन् ! ऐसा हमने सुना है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आशयन्निच्छन् ॥ ३७–३९ ॥

नाऽभ्यनन्दन् स्त्रीत्वे लज्जया मासं मासं निलीयावस्थानात् ॥ ४०–४२ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
प्रथमोऽध्यायः ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स भगवान् शङ्करस्तदुपधावनेन तुष्टस्तस्मै वसिष्ठाय प्रीतिमावहन् कुर्वन् स्वां स्वकीयां वाचं "स्थानं यः प्रविशेदेतस्य वै योषिद्भवेत्" इत्युक्तां वाचमृतां सत्यां च कुर्वन् हे विशाम्पते इदं वक्ष्यमाणमाह तव तपसा तपःप्रभावेनाऽयं सुद्युम्नो मासं पुमान् भविष्यति, मासान्तरे तु मासं योषिद्भविष्यति एवं सत्यावयोर्वचसोः सत्यतेति भावः ॥ ३८ ॥

इत्येवंविधया व्यवस्थयाऽयं सुद्युम्नः कामं यथेच्छं मेदिनीं पालयतु इति ॥ ३९ ॥

तेन एवमाचार्यस्य वसिष्ठस्यानुग्रहात् कामममिष्टं पुंस्त्वं व्यवस्थया एकैकमासान्तरितत्वरूपया व्यवस्थया लब्ध्वा जगतीं पालयामास तथापि तं सुद्युम्नं प्रजा नाऽभ्यनन्दन् स्म नाभिनन्दितवत्यः खलु, मासमासं स्त्रीत्वेन लज्जया संक्षोभावस्थानादिति भावः ॥ ४० ॥

तस्य राज्ञः सुद्युम्नस्य उत्कलादयस्त्रयः सुता बभूवुः ते च दक्षिणापथराजानः दक्षिणदेशाधीश्वराः समासान्तविधेरनित्यत्वाद्राजान इति टजभावः धर्मवत्सलाः धर्मानुकूलवात्सल्ययुक्ताश्च बभूवुः ॥ ४१ ॥

ततः काले परिणते सति कालवशाज्जरायां प्राप्तायामित्यर्थः । प्रतिष्ठानपतिः प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठानं भूमण्डलम्, अधिकरणे ल्युट् तस्याधिपतिः सुद्युम्नः यद्वा प्रतिष्ठानं प्रधाननगरं तस्याधिपतिः प्रभुर्जितेन्द्रियोभूत्वा पुरूरवसे बुधात्पुत्रोत्पन्नाय स्वपुत्राय गां पृथ्वीमुत्सृज्य दत्वा वनङ्गतः तपःकर्तुमिति भावः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दशां स्त्रीत्वलक्षणाम् आशयन् कामयन् उपाधावतासेवत ।३७।३८।

मासमिति द्वितीया त्रिंशद्दिनेष्वप्येकस्मिन् विभक्त्यनन्वयात्वं सूचयति "कालाध्वनोरत्यन्तसंयोगे (२।३।५) इति सूत्रात् ॥३९॥

पुंस्त्वलक्षणं कामम् जगतीं राजप्रधानभूमिम् ॥ ४० ॥

दक्षिणापथस्य देशस्य राजानः ॥ ४१ ॥

परिणतः वृद्धः प्रतिष्ठानाख्यपुरपतिः गां भूमिम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृत…

इति श्रीमद्भागवते महापुरा…
श्रीमज्जीवगोस्वामिकृत…
प्रथमोऽध्यायः ।…

---

श्रीमद्विश्वनाथचक्रवर्तिकृत…

आशयन् इच्छन् ॥ ३७ ॥

प्रियमावहन् प्रीतिं ददानः ॥ ३८ ॥ ३९ ॥

नाऽभ्यनन्दन् स्त्रीत्वे सति मासं निर्लीयावस्थानात् ॥ ४० ॥

तस्य सुद्युम्नस्य ॥ ४१ ॥

प्रतिष्ठानस्य पतिरिति तत्रैव तस्य राजधानी गामुत्सृज्य पृथ्वीं दत्वा ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आशयन् इच्छन् ॥ ३७-३८ ॥

तव गोत्रजः गोभिर्वेदवाग्भिस्त्रायते इति गोत्रं मित्रावरुणेष्टिरूपं कर्म तज्जः तव कर्मज इत्यर्थः ॥ ३९—४० ॥

दक्षिणापथराजानः दक्षिणापथदेशविशेषाधिपाः ॥ ४१ ॥

प्रतिष्ठानं भूमण्डलं तत्पतिः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
प्रथमाऽध्यायार्थप्रकाशः ॥ १ ॥

---

भाषा टीका ।

वसिष्ठजी ने अपने यजमान के पुत्र की उस दशा (स्त्री होने) को देखकर कृपा से बहुत पीड़ित हुए और सुद्युम्न के पुरुष होने की इच्छा से अब की बार भोलानाथ श्री शंकर से प्रार्थना करी ॥ ३७ ॥

हे राजन् ! तब भगवान् शिवजी वसिष्ठ जी का प्रिय करने के लिये और अपनी वाणी सत्य करने के लिये यों बोले ॥ ३८ ॥

महादेवजी बोले, कि-तुमारे गोत्र में उत्पन्न होने वाला यह सुद्युम्न, एक मास तक पुरुष रहेगा और एक मास स्त्री होकर रहा करेगा बस इस व्यवस्था से सुद्युम्न पृथिवी का पालन करे ॥ ३९ ॥

वसिष्ठ जी के अनुग्रह से इस व्यवस्था से पुरुषपने को प्राप्त होकर वह सुद्युम्न पृथिवी का पालन करता रहा परंतु राजा को मास भर स्त्री होना पड़ता रहा इस कारण से प्रजा को आनन्द नहीं हुआ ॥ ४० ॥

भाषा टीका ।

हे राजन् ! तब सुद्युम्न के उत्कल, गय, और विमल ये तीन पुत्र हुए, वे तीनों दक्षिणापथ के राजा हुए और बड़े धर्मात्मा हुए ॥ ४१ ॥

तब कुछ काल के परिणाम होनेपर परम समर्थ प्रतिष्ठान का पति पुरूरवस के ऊपर पृथिवी को छोड़कर वन को चलागया ॥ ४२ ॥

इति श्रीमद्भागवत नवम स्कन्ध में प्रथम अध्याय की, श्रीवृन्दावनस्थ भागवताचार्यकृत भाषाटीका समाप्ता ॥ १ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥



## ॥ द्वितीयोऽध्यायः ॥

श्रीशुक उवाच ।

एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ।
पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥
ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ।
इक्ष्वाकुपूर्वजान् पुत्राँल्लेभे स्वसदृशान्दश ॥ २ ॥
पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ।
पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥
एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति ।
शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥
एकां जग्राह बलवान्सा चुक्रोश भयातुरा ।
तस्यास्तत्क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥
खड्गमादाय तरसा प्रलीनोडुगणे निशि ।
अजानन्नहनद्बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥
व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ।
निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥
मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ।
अद्राक्षीत्स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये मनुपुत्राणां ब्रह्मपुत्रो विरागतः ।
करूषकादिपञ्चानां वंशानाह लघुक्रमात् ॥ १ ॥

वैवस्वतो मनुः श्राद्धदेवः ॥ १ ॥

इक्ष्वाकुः पूर्वजो येषां तान्दश पुत्रान्लेभे ॥ २ ॥

तत्र पृषध्रस्य वंशो नाभवदिति सहेतुकमाह—पृषध्रस्त्वित्या-दिना कविः कनीयानित्यतः प्राक्तनेन ग्रन्थेन, खड्गपाणिः सन्नद्धतनो जागरणं वीरासनं तदेव व्रतं यस्य यत्तोऽवहितः सन् गाः पालयामास ॥ ३ ॥

शार्दूलो व्याघ्रः ॥ ४ ॥ ५ ॥

प्रलीना उडुगणा यस्मिंस्तस्मिन् समये बभ्रोः कपिलायाः गोः ॥ ६ ॥

गां कामतो नज घानेति ख्यापयितुं वृक्णश्रवण इत्युक्तम् ॥ ७ ॥

व्युष्टायां प्रभातायाम् ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सोमवंशप्रवृत्तिमभिधायाथ सुद्युम्ने वनं प्रविष्टे सति पुनर्मनोः पुत्रार्थं तपश्चर्यां भगवदाराधनं तत इक्ष्वाकादिपुत्रलाभं तत्पुत्र-पौत्रादिपरम्परां तच्चरित्राणि चाह—एवमिति । इत्थं गते सुद्युम्ने वनं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गतवत्यथ मनुर्वैवस्वतः पुत्रान् कामयमानः यमुनायां नद्यां तत्तटे शतं समाः परं तपश्चकार ॥ १ ॥

ततोऽपत्यार्थं पुत्रार्थं देवं हरिं प्रभुं स्वतन्त्रं भगवन्तमयजत् आराधितवान् तस्य भगवतः प्रसादादात्मनस्तुल्यानिक्ष्वाकुप्रभृतीन् दश पुत्रान् प्राप इक्ष्वाकादयः पूर्वमेव निर्दिष्टाः ॥ २ ॥

तत्र पृषध्रकस्योक्तमन्वयाभावज्ञापनाय तच्चरितं तावदाह—पृषध्रस्तिव्त्यादिना करूषान्मानवानादित्यतःप्राक्तनेन ग्रन्थेन । मनोर्वैवस्वतस्य पुत्रः पृषध्रस्तु तुशब्दोऽन्येक्ष्वाक्वादिभ्यः सन्तत्यभावकृतवैलक्षण्यद्योतनार्थः गुरुणा वसिष्ठेन पित्रा वा गोपालः कृतः गाः पालयति नियुक्तः यत्तः अवहितस्सन् वीरासनमेव व्रतं यस्य तथाभूतो रात्र्यां खड्गपाणिः गाः पालयामास व्याघ्रादिभ्यो ररक्ष ॥ ३ ॥

एवं सत्येकदा निशि रात्र्यां वर्षति सति पर्जन्ये शार्दूलो व्याघ्रः गोष्ठं प्राविशत् तदा तं दृष्ट्वा ताः शयाना गावो भीता उत्थाय व्रजे गोष्ठे बभ्रमुः ॥ ४ ॥

तदा बलवान् शार्दूल एकां गां जग्राह सा गृहीता गौः आतुरा सती चुक्रोश आक्रन्दितवती तस्या गोस्तत्क्रन्दितं निशम्य पृषध्रः समीपमभियाय ॥ ५ ॥

निशि प्रलीना उडुगणा नक्षत्रगणा यस्मिंस्तस्मिन्समये मेघावृतत्वादम्बरस्य नक्षत्रप्रकाशेनापि वर्जिते समयेऽतएवाजानन् शार्दूलशङ्कया बभ्रोः कपिलायाः शिरः खड्गमादाय तरसा बलेन अच्छिनत् चिच्छेद ॥ ६ ॥

तदा निस्त्रिंशः खड्गस्तस्याग्रतः प्रहरणवेगात् समीपस्थो व्याघ्रः छिन्नकर्णोभूत्वा नितरां भीतः पथि रक्तं समुत्सृजन् ततो गोष्ठात् निष्क्रान्तः ॥ ७ ॥

ततः परवीरहा पृषध्रो व्याघ्रं हतं मन्यमानो निशि व्युष्टायामतीतायां सत्यां प्रभाते स्वेन हतां बभ्रुमद्राक्षीत् ततो नितरां दुःखितो बभूव ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुद्युम्ने सुते वैवस्वतः श्राद्धदेवो मनुः ॥ १ ॥

इक्ष्वाकुः पूर्वजो ज्येष्ठो येषां ते तथा तान् ॥ २ ॥

मनोः पुत्राणामप्रमः पुत्रो पृषध्रः गाः पालयामास, कीदृशः? गुरुणा वसिष्ठेन गोपालः कृतः तुशब्देन शूद्रान् धारयितुं योग्य इति निरुक्त्येति सूचयति, गोरक्षैकनिष्ठया नेत्रे उन्मील्य जाग्रदेव गोपरिजियांसं प्रतिष्ठानाद्वीरासनव्रतः ॥ ३ ॥

निशि मेघे वर्षति सति ॥ ४ ॥

सा गौः ॥ ५ ॥

बभ्रोर्गोः शिरोऽहनत् "बभ्रुर्गौः सौरभेयी च माहेयी गोमतल्लिका" इति । गोः शिरश्छेदने को हेतु? इति तत्राह—निशीति । निश्यपि नक्षत्रादिप्रकाशनेन विवेकज्ञानं सुलभमित्यत्राह—प्रलीनेति । मेघच्छन्नत्वाच्छादितनक्षत्रादिप्रकाशे च सति ॥ ६ ॥

निकृत्तश्रवणः छिन्नकर्णमूलः निस्त्रिंशस्य खड्गस्याग्रेण हतः प्रहतः ॥ ७ ॥

निशि व्युष्टायां प्रभातायाम् ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेनात्यन्तमर्मस्थितत्वादेव सहसा तरसं निर्यातुं न शशाक इत्याह—व्याघ्रोऽपीति ॥ ७ ॥

तस्य पश्चात्तापो जात इत्याह—मन्यमान इति ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पृषध्रो गुरुणा त्यक्तोऽप्याप पारं तमस्त्यजन् ।
लघुक्रमान्मनोर्वंशवर्णनं च द्वितीयतः ॥

तत्र पृषध्रस्य वंशो माऽभूदिति सहेतुकमाह—पृषध्र इत्यादिना, खड्गपाणिः सन्ततस्थितो जागरणं वीरासनं तदेव व्रतं यस्य सः यत्तः सावधानः ॥ ३—५ ॥

निशि रात्रौ तत्रापि मेघावृतत्वात् प्रलीने नक्षत्रगणे सति अत एवाजानन् व्याघ्रशङ्कया बभ्रोः कपिलाया गोः ॥ ६ ॥

वृक्णश्रवणः छिन्नकर्णो यतो निस्त्रिंशस्याग्रेण आहतः ॥ ७ ॥

व्युष्टायां प्रभातायां निशि ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुपुत्राणामिक्ष्वाकुप्रभृतीनां मध्ये पृषध्रस्य कवेश्चानपत्यस्यैव हरिभजनेन मुक्तिं करूषादीनां पञ्चानां वंशांश्चाह—द्वितीयेनाध्यायेन ॥ १ ॥

इक्ष्वाकुः पूर्वजो येषां तानिति तद्गुणसंविज्ञानबहुव्रीहिः ॥ २ ॥

गुरुणा वसिष्ठेन वीरस्य आसनं गृहीतायुधस्य सावधानतयावस्थानविशेषः तदेव व्रतं यस्य सः ॥ ३ ॥

पर्जन्ये वर्षति सति शार्दूलो व्याघ्रः ॥ ४ ॥ ५ ॥

प्रलीना मेघाच्छन्ना उडुगणा यस्मिन् तस्मिन् समये अत एवाजानन् बभ्रोः कपिलायाः गोः शिरः अहनत् ॥ ६ ॥

निस्त्रिंशस्य खड्गस्याग्रेण आहतः ईषत्ताडितः अत एव वृक्णश्रवणः छिन्नकर्णस्ततो निश्चक्राम ॥ ७ ॥

व्युष्टायां प्रभातायां स्वहतां बभ्रुमद्राक्षीत् ततो दुःखितोऽभूत् ॥ ८ ॥

भाषा टीका ।

श्रीवैदर्भीवासुदेवाभ्यां नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—अपने सुत सुद्युम्न के इस प्रकार

तं शशाप कुलाचार्यः कृतागसमकामतः ।
न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना ॥ ९ ॥
एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृताञ्जलिः ।
अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥
वासुदेवे भगवति सर्वात्मनि परेऽमले ।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः ॥ ११ ॥
विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः ॥ १२ ॥
आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ।
विचचार महीमेतां जडान्धबधिराकृतिः ॥ १३ ॥
एवं वृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ।
तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥
कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यं सह बन्धुभिर्वनम् ।
निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥
करूषान्मानवादासन् कारूषाः क्षत्रजातयः ।
उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥

भाषाटीका ।

से जानेपर वैवस्वत मनु पुत्र की कामना से यमुनाजी में सौ वर्ष तक तपकरते हुए ॥ १ ॥

तदनंतर मनुजीने सन्तान के अर्थ प्रभु श्रीहरि का यजन किया तब अपने सदृश इक्ष्वाकु से आदि लेकर दश पुत्र हुए ॥ २ ॥

पृषध्र नामक मनु पुत्र को वसिष्ठजी ने गायों की रक्षा में नियुक्त किया रहा वह भी रात्रि में वीरासन के व्रत से जागरूक होकर गौओं का पालन करता रहा ॥ ३ ॥

एक समय रात्रि में जब वर्षता रहा इतने में गोष्ठ में व्याघ्रने प्रवेश किया तबतो सोती हुई गायें उठ भयभीत होकर उस व्रज ( गौओं के बाडे ) में इधर उधर भागने लगीं ॥ ४ ॥

फिर उन गायों में से उस बली व्याघ्र ने एक गाय पकड़ी और वह रंभाने लगी, तब उसका शब्द सुनकर पृषध्र दौड़ा ॥ ५ ॥

मेघ से तारे भी लीन होरहे जिसमें ऐसी अन्धेरी रात में हाथ में खड्ग लेकर अनजान में व्याघ्रके धोखे में गौ का शिर हनन करदिया ॥ ६ ॥

उस खड्ग के अग्रभाग से व्याघ्र का भी कान कटगया और वह डर कर मार्ग में रुधिर गिराता हुआ भागा ॥ ७ ॥

शत्रुओं के वीर को मारने वाले पृषध्रने जाना के व्याघ्र मर गया, अपरञ्च प्रातः काल में आप से मरी हुई कपिला गौ को देखकर अति दुःखित हुआ ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षत्रबन्धुरपि त्वं न भविताऽपि तु शूद्रो भवितेति ९-१३ उपयुक्तकरणो दग्धदेहः ॥ १४ ॥

कवेरपि वंशो नास्तीत्याह—कविरिति । बन्धुभिः सहराज्यं विसृज्य ॥ १५ ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अमकामतः प्रमादात् कृतागसमपि पृषध्रं कुलाचार्यो वसिष्ठः शशाप, शापमेवाह—नेति । त्वं क्षत्रबन्धुरपि न भवितासि किन्तु अमुना पापेन कर्मणा केवलं शूद्रो भवेति ॥ ९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं कुलगुरुणा वसिष्ठेन शप्तः पृषध्रः कृताञ्जलिः शापं प्रत्यगृह्णात् प्रतिजग्राह ततो धीरः पृषध्रो जितेन्द्रियो भूत्वा मुनीनां प्रियं व्रतं भगवदुपासनात्मकमधारयत् भगवन्तमुपासांचक्र इत्यर्थः ॥ १० ॥

ततः कतिपयैर्दिनैः सर्वभूतान्तरात्मनि निरस्तनिखिलदोषे परस्मिन् ब्रह्मणि एकान्तित्वं "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः, ज्ञानी त्वात्मैव मे मतम्" इत्यादिवचनोक्तानन्यप्रयोजनसाक्षात्कारपर्यन्तभक्त्यात्मकज्ञाननिष्ठत्वं प्राप्तः सर्वभूतसुहृत् समः सुखदुःखयोरिति शेषः ॥ ११ ॥

विमुक्त ऐहिकेषु आमुष्मिकेषु च भोगेषु सङ्गो येन सः शान्तः रागादिभिरकलुषित आत्मा मनो यस्य संयतानि नियमितानि अक्षाणि इन्द्रियाणि येन न विद्यते परिग्रहः देहातिरिक्तमदनुबन्धी यस्य सः यदृच्छयोपपन्नेन दैवाल्लब्धेनान्नादिना आत्मनो देहस्य वृत्तिं कल्पयन् धारणं कुर्वन् ॥ १२ ॥

आत्मनि परमात्मनि आत्मानं मन आधाय निवेश्य यद्वा आत्मानं प्रत्यगात्मानमाधाय "ओमित्यात्मानं युञ्जीत" इति श्रुत्युक्तप्रकारेण तदङ्गतया तदावरणसत्त्वादिमत्त्वेन चानुसन्धायेत्यर्थः । ज्ञानतृप्तः निरतिशयानन्दरूपभगवदुपासनात्मकज्ञानेनैव तृप्तः तदन्यविषयानिःस्पृहः समाहितः अप्रकम्प्यः भगवद्भक्तियोगनिष्ठः जडान्धबधिराकृतिरिवाकृतिराकारो यस्य सः एतां महीं विचचार ॥ १३ ॥

यावत्प्रारब्धमेवंविधं वृत्तं वृत्तिर्यस्य स तदवसाने कदाचिद्वनं प्रविश्य तत्रोत्थितं दावाग्निं दृष्ट्वा तं प्रविश्य तेन दवाग्निनोपभुक्तानि दग्धानि करणानि करचरणादीनि यस्य तादृशो मुनिः पृषध्रः परं ब्रह्म प्राप प्राप्तवान् ॥ १४ ॥

अथ कवेर्वृत्तमाह—कविरित्येकेन । कनीयानिक्ष्वाकादीनां सर्वेषामवरजः कामविषयेषु शब्दादिषु, निःस्पृहः अत एव राज्यं बन्धुभिः सह गृहांश्च त्यक्त्वा स्वरोचिषं स्वाभाविकदीप्तियुक्तम् "आदित्यवर्णं तमसः परस्तात्" इति हि श्रुतिः । यद्वा स्वप्रकाशं ज्ञानस्वरूपं पुरुषं परमपुरुषं स्वान्ते निवेश्य चित्तं तस्मिन् स्थिरीकृत्येत्यर्थः । कैशोरवयस्क एव परां गतिमवाप ॥ १५ ॥

अथ करूषस्य वंशमाह—करूषादिति । कारूषसंज्ञाः क्षत्रियाः उत्तरदेशस्य गोप्तारः ब्रह्मण्याः ब्राह्मणेषु साधवः धर्मानुकूलवात्सल्ययुक्ताश्चाभवन् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अकामतः अबुद्धिपूर्वकमिच्छाभावतोऽपि कृतागसं कृतापराधम् अमुना क्रूरकर्मणा शूद्रो भविता न क्षत्रबन्धुरिति शशापेत्यन्वयः ॥ ९ ॥

तुशब्देन गुरावनसूयामानित्याह—कुतोऽवगतमेतदित्यत उक्तं—प्रत्यगृह्णादिति । यथा प्रतिग्रहः किं न स्यादित्यत उक्तं कृताञ्जलिरिति मुनिप्रियमूर्ध्वरेतस्त्वम् ॥ १० ॥

किं तन्मुनिप्रियं व्रतम्? इत्यत आह—वासुदेव इति । एकान्तित्वादिकं व्रतम् ॥ ११ ॥

संयतात्मा: नियमितेन्द्रियः यदृच्छया ऽसम्प्रार्थितागतेन ॥ १२ ॥ १३ ॥

तेन दवाग्निना उपयुक्तकरणाः स्वीकृतदेहः दग्धदेह इत्यर्थः । करणं साधकतमं शरीरेन्द्रिययोरपीति ॥ १४ ॥

उक्तमेव विवृणोति—कविरिति । यदा शापं प्राप तदा विषयेषु निःस्पृहः कविर्ज्ञानी अयं पृषध्रः बन्धुभिस्सह सङ्गं विसृज्य वनं विवेश स्वरोचिषं स्वयंप्रकाशं पुरुषं चित्ते निवेश्य कैशोरवया अल्पवयाः तत्प्रसादेन परङ्गत इत्यन्वयः ॥ १५ ॥

मानवात् मनुपुत्रात्करूषात् कारूषा इत्येवं प्रसिद्धा आसन्नित्यन्वयः । क्षत्रजातय इत्यनेन गोपालत्वादिजात्यन्तरं नाप्ताः किन्तु तज्जातय एव इति सूचयति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततश्च तस्य स्वल्पप्रायश्चित्तार्हस्यापि पातित्वे गोवधमात्रगुरोः शाप एव कारणमित्याह—तमिति त्रिकम् ॥ ९ ॥

तथापि तस्य सौभाग्यमेवानुवृत्तमित्याह—एवमिति ॥ १०—१३ ॥

वासुदेवभक्तत्वाच्छूद्रत्वेऽपि मुक्तिमाह—एवं वृत्त इति ॥ १४—१६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अकामतो अनिच्छातोऽपि कृतापराधं तं शशाप न तु कृपया प्रायश्चित्तमुपदिदेश अतिकोपेन विचारापगमादिति भावः । यतः कुलाचार्यः कुलपौरोहित्यस्य अधमत्वात् "कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः" इति विश्वरूपोक्तेः । शापमाह, क्षत्रबन्धुरपि त्वं न भविता अपि तु शूद्र एव ॥ ९ ॥

कृताञ्जलिः सन् शापं महाप्रसादमिव प्रत्यगृह्णादिति गुरुभक्तिलक्षणं न तु त्वमपरामृश्य मम किमिति वृथा शपसि इति प्रत्युवाचेति भावः । तेन पौरोहित्यकोऽपि गुरौ भक्तिमान् निष्प्रत्यूहं निस्तरतीति प्राकरणिकः सिद्धान्तो द्योतितः मुनिप्रियव्रतं ब्रह्मचर्यम् ॥ १०—१२ ॥

आत्मनि मनसि आत्मानं भगवन्तं ज्ञाने तृप्तः किन्तु भक्तितृप्त इति भावः ॥ १३ ॥

उपयुक्तकरणो दग्धदेहः परं ब्रह्म श्रीकृष्णम् ॥ १४ ॥

कवेरपि वंशो नाभवदित्याह—कविरिति । बन्धुभिस्सहितमेव राज्यं विसृज्य वनं विवेश ॥ १५ ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अकामतः असङ्कल्पतोऽज्ञानात् कृतागसमपि त्वममुना पापेन क्षत्रबन्धुर्न भविता किन्तु शूद्रो भविता भविष्यतीति शशाप ॥ ९ ॥

धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ ।
(१)नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः ॥ १७ ॥
वसोः प्रतीकस्तत्पुत्र ओघवानोघवान्पिता ।
कन्या चौघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥
चित्रसेनो नरिष्यन्ताद्दक्षस्तस्य सुतोऽभवत् ।
तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥
वीतिहोत्रस्त्विन्द्रसेनात्तस्य सत्यश्रवा अभूत् ।
उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥
ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः ।
कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥
ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ! ।
नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोऽयमेव गुरुणा शूद्रतां नीतस्तथापि हरिभक्त्या मुक्तिमाहृ-
तवानिति पञ्चभिः ॥ १०—१३ ॥

तेनोपयुक्तं सञ्चितं दग्धमित्यर्थः । करणं शरीरं यस्य सः परं ब्रह्म वासुदेवं भगवन्तं प्राप ॥ १४ ॥

बन्धुभिः सह राज्यं विसृज्य स्वर्ज्योतिषं स्वप्रकाशं पुरुषं चित्ते निवेश्य वनं विवेश तत्र पुरुषाराधनेन परं पुरुषमेव गतः प्राप्तः ॥ १५ ॥

उत्तरापथगोप्तार उत्तरापथदेशपालकाः ॥ १६ ॥

भाषा टीका ।

अनजान में अपराध होने वाले पृषध्र को कुलाचार्य वशिष्ठजी ने शाप दिया किन्तु क्षत्रियाधम भी नहीं किंतु शूद्र होजा ॥ ९ ॥

गुरूने ऐसा जब शाप दिया तब हाथ जोडकर प्रहण किया और फिर वीरने ऊर्ध्वरेता होकर मुनिजनों के प्रिय ब्रह्मचर्यव्रत को धारण किया ॥ १० ॥

वह सर्व भूतों का अतिसुहृद होकर परात्पर अमल सर्वात्मा भगवान् श्रीवासुदेव के विषय में भक्ति करके एकान्तभाव को प्राप्त होगया ॥ ११ ॥

सर्वसङ्गोंका परित्यागकर, शान्तचित्तवाला जितेन्द्रिय होकर सर्व परिग्रहको छोडकर हरि की इच्छासे प्राप्तपदार्थों से अपनी वृत्ति को चलाता हुआ ॥ १२ ॥

परमात्मामें मनको लगा कर ज्ञानसे तृप्त और समाहित होकर जड अन्ध बधिर सरीका इस पृथिवीपर विचरता हुआ ॥ १३ ॥

इस प्रकार की वृत्तिवाला पृषध्र एकवार वनमें गया और वहां लगीहुई दवाग्नि को देखकर उसी में देहको दग्धकर वह मननशील ब्रह्मको प्राप्त होगया ॥ १४ ॥

कनिष्ठ भ्राता कविने भी विषयों से स्पृहा को हटा कर बन्धुओं सहितराज्य को छोडकर अपने चित्तमे स्वयं ज्योति परम पुरुष को धारण कर किशोर अवस्था हीमें वन में प्रवेश किया और पर ब्रह्म को प्राप्तहो गया ॥ १५ ॥

और मनुजी के करूष पुत्र से कारूष नामक क्षत्रिय जाति वाले, उत्तरा पथके राजा लोग बडे ब्रह्मण्य और धर्मवत्सल हुए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मभूयं ब्राह्मण्यं नृगस्य वंशः पुत्रः सुमतिस्ततो भूतज्योतिस्ततो वसुः ॥ १७ ॥

ओघवतः पिता तत्पुत्रोऽप्योघवानेवेत्यर्थः ॥ १८ ॥

तदेवं त्रिभिः श्लोकैः करूषधृष्टनृगाणां वंशा उक्ताः, नरिष्यन्तस्य वंशमाह—चित्रसेन इति सार्द्धैस्त्रिभिः । तत इत्याद्येवंत्राधिक्यं व्याख्यानान्तर्यं तत इत्यादि पदं व्याख्येयम । यत्र तु न्यूनत्वं तत्र पूर्वस्य परस्य वाऽनुषङ्गादिभिर्व्याख्येयम ॥ १९—२० ॥

(१) नभपुत्रोऽभिबलवान् स्वातिभूतोऽभवद्वसुः ॥ इति विज० ॥

**नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।**
**(१)भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥ २३ ॥**
**वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः ।**
**खनित्रः प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥ २४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अग्निवेश्य एव कानीन इति जातूकर्ण्य इति च विख्यातः ॥ २१ ॥ २२ ॥

दिष्टस्य पुत्रो नाभागो वक्ष्यमाणान्नाभागादन्य इति भ्रान्ति-व्युदासार्थमनुवादमात्रम् ॥ २३—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ धृष्टस्य वंशं तद्वृत्तं चाह–धृष्टादित्यर्धेन । धृष्टान्मानवात् धार्ष्टं संज्ञं तत्र क्षत्रजात्याभ्यर्णाणि कानिचिदपत्यानि अभूवन्नित्यर्थः । तच्च क्षत्रं क्षितौ ब्रह्मभूयं गतं ब्रह्मणो भावो ब्रह्मभूयमपहतपाप्मत्वादि-गुणाष्टकसम्पत्तिः "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः"(४।४।५) इति हि शारीरकं सूत्रं तद्गतमस्मिन् लोके परब्रह्मोपासनया तद्ज्ञानं प्रापे-त्यर्थः अथ नृगस्य वंशमाह–नृगस्येति । नृगस्य मानवस्य वंश्यः वंशे भवस्तावत्सुमतिस्ततः सुमतेः भूतज्योतिस्ततश्च वसुः ॥ १७ ॥

वसोः प्रतीकस्तस्य प्रतीकस्य पुत्र ओघवान् ओघवान् पिता यस्य सोऽप्योघवानेव ओघवतः कन्या दुहिता ओघवतीति प्रसिद्धा तामोघवतीं सुदर्शन उवाह उपयेमे ॥ १८ ॥

अथ नरिष्यन्तस्य वंशमाह–चित्रसेन इति । नरिष्यन्तान्मानवाच्च चित्रसेनस्तस्य चित्रसेनस्य ऋक्षनामा सुतोऽभवत् तस्य ऋक्षस्य मीढ्वान् ततो मीढुषः कूर्चस्तत्सुतः कूर्चस्य सुतः इन्द्रसेनः ॥ १९ ॥

इन्द्रसेनात् वीतिहोत्रो ऽभवत् तस्य वीतिहोत्रस्य सुतः सत्य-श्रवाः अभवत् तस्य सत्यश्रवसः सुतः उरुश्रवाः ततः उरुश्रवसो देवदत्तस्सुतोऽभवत् ॥ २० ॥

देवदत्तस्य तु भगवानग्निः स्वयमेव पुत्रतां प्राप्तः सच कानीन इति प्रसिद्धः महानृषिरभूत् तस्यैव नामान्तरं जातू-कर्ण्य इति ह्यग्निवेश्य इति च ॥ २१ ॥

ततोऽग्निवेश्यजातूकर्ण्यापरनामधेयात् कानीनात् हे नृप ! आग्निवेश्यायनमाग्निवेश्यगोत्रम् एतत्कुलमित्येवंविधव्यवहार-विषयं ब्राह्मणकुलं जातं वृत्तानुवादपूर्वकं वर्णिष्यमाणकथनं प्रति जानीते, एवं नरिष्यन्त आदिर्येषां तत्पुत्रादीनां ते प्रोक्ताः अथ दिष्टस्य मानवस्य वंशं शृणु कथयतो मम इति शेषः ॥ २२ ॥

दिष्टस्य पुत्रो नाभागः स चायं नाभागः कर्मणा कृषि-गोरक्षणवाणिज्यादिकर्मणा वैश्यतां प्राप्तः, कर्मणा वैश्यतां गत इत्यनेन पूर्वकाले शमदमादिकर्मणैव विप्रत्वादिजात्याश्रयत्वमिति सूचितम्. मनुपौत्रान्नाभागादयमन्यो नाभागस्तस्य वंशश्चतुर्थे अध्याये वक्ष्यते तस्य नाभागस्य सुतो हलन्दनः हलन्दनाद्वत्सप्रीतिः सुतोऽभवत् ॥ २३ ॥

वत्सप्रीतेः सुतः प्रांशुः तत्सुतः प्रांशोः सुतः प्रमितिः हे विभो ! प्रमितेः खनित्रः तस्मात्खनित्राच्चाक्षुषः अथ चाक्षु-षाद्विविंशतिरभूत् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धृष्टान्मनुपुत्रात् नाम्ना धार्ष्टं क्षत्रमभूत् तद्वृत्तमाह—ब्रह्म-भूयमिति । ब्रह्मत्वं श्रोत्रियत्वं गतमित्यर्थः । नभस्य मनुपुत्रस्य पुत्रः स्वातिमूलः तस्य पुत्रः नाम्ना वसुरभवत् ॥ १७ ॥

तत्पुत्रः प्रतीकपुत्रः ओघवान् ओघवतस्तस्य सहोदर्योघवती कन्या चाभवत् सुदर्शनो नाम राजा ॥ १८ ॥

नरिष्यन्तान्मनुपुत्राच्चित्रसेननामा सुतोऽभूत्तस्य चित्रसेनस्य दक्षः ॥ १९–२० ॥

अग्निर्जातूकर्ण्य इति नाम ॥ २१ ॥

ततो जातूकर्णाद्ब्रह्मकुलं जातं तदेवाग्निवेश्यायनमिति नामा-न्तरेण प्रसिद्धं इक्ष्वाकुप्रभृतीनां चतुर्थं दिष्टवंशम् ॥ २२ ॥

अन्यः अन्यजातीयः कथं वाणिज्यादिकर्मणा वैश्यत्वं गतः दिष्टपुत्रो य इति केचित्पठन्ति वक्ष्यमाणादन्य इति वा ॥ २३–२४–२५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मभूयं ब्राह्मणत्वं वंश्यः पुत्रः नृगस्य वंश्यः पुत्रः सुमतिः ततो भूतज्योतिस्ततो वसुः ॥ १७ ॥

ओघवतः पितेति तत्पुत्रोऽप्योघवानित्यर्थः ॥ १८ ॥ २० ॥

अग्निवेश्य एव कानीन इति जातूकर्ण्य इति च ख्यातः ॥ २१ ॥ २२ ॥

अन्य इति भ्रान्तिवारणार्थं वक्ष्यमाणान्नाभागादन्य इत्यर्थः ॥ २३ ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मभूयं ब्राह्मण्यं गतं प्राप्तं वंश्यः पुत्रः सुमतिः ततः सुमतेः भूतज्योतिर्जातस्ततो वसुः ॥ १७ ॥

---

( १ ) हलन्दन इति पाठ० । ( २ ) खनित्र इति पाठ० ।

विविंशतिसुतो[1] रम्भः खनिनेत्रोऽस्य धार्मिकः ।
करन्धमो महाराज ! तस्यासीदात्मजो नृप ! ॥ २५ ॥
तस्यावीक्षित्सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ।
संवर्त्तोऽयाजयद्यं वै महायोग्यङ्गिरः सुतः ॥ २६ ॥
मरुत्तस्य यथा यज्ञो न तथाऽन्यस्य कश्चन ।
सर्वं हिरण्मयं त्वासीद्यत्किञ्चिच्चाऽस्य शोभनम् ॥ २
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥ २८ ॥
मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्द्धनः ।
सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥
तत्सुतः केवलस्तस्माद्बन्धुमान्वेगवांस्ततः ।
बन्धुस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥
तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ।
वराप्सरा यतः पुत्राः कन्या चेडविडाऽभवत् ॥ ३१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ओघवत्पिता ओघवतः पुत्रोऽप्योघवान् ॥ १८ ॥

त्रिभिः श्लोकैर्मनुपुत्राणां करूषधृष्टनृगाणां वंशानुक्त्वाऽथ नरिष्यन्तस्य दिष्टस्य च मनुपुत्रस्य वंशमाह—चित्रसेन इत्यादिना ॥ १९—२० ॥

ततस्तस्य देवदत्तस्य स्वयमग्निर्भगवान् अग्निवेश्यसंज्ञः सुतोऽभूत् स अग्निवेश्य एव महानृषिः कानीन इति जातूकर्ण्य इति च विख्यातः ॥ २१ २२ ॥

दिष्टपुत्रो नाभागोऽभूत् स च वक्ष्यमाणान्नाभागादन्यः कर्मणा कृषिवाणिज्यादिना ॥ २३-२५ ॥

---

भाषाटीका

धृष्टसे धार्ष्ट नामक क्षत्रिय वंश भया जोकि पृथिवी में ब्रह्मभाव को प्राप्त होगया। और नृग का पुत्र सुमति के भूतज्योति उन के वसु हुए ॥ १७ ॥

वसु के प्रतीक उनके ओघवान् और ओघवान् के पुत्र फिर ओघवान् हुए और कन्या ओघवती हुई जिसको सुदर्शन ने व्याही ॥ १८ ॥

अब नरिष्यन्त का वंश कहते हैं, कि-मनु पुत्र नरिष्यन्त के चित्रसेन हुए उनके दक्ष पुत्र हुए उनके मीढ्वान् उनके कूर्च उनके पुत्र इन्द्रसेन हुए ॥ १९ ॥

इन्द्रसेन के वीतिहोत्र हुए उनके सत्यश्रवा उनके उरुश्रवा उनके देवदत्त हुए ॥ २० ॥

तिन देवदत्तसे भगवान् अग्नि आप ही स्वयं अग्निवेश्य नाम से प्रसिद्ध पुत्र हुए, और वही कानीन इस नाम से और जातूकर्ण्य इस नाम से भी विख्यात एक महान् ऋषि हुए ॥ २१ ॥

हे नृप! तिन से आग्निवेश्यायन नाम से प्रसिद्ध ब्रह्मवंश हुआ, यह हमने नरिष्यन्त का वंश कहा। अब दिष्ट का वंश सुनो ॥ २२ ॥

दिष्ट के पुत्र नाभाग हुए वे दूसरे नाभाग हैं वे कर्म से वैश्य होगये, उनके पुत्र भलन्दन भये भलन्दन के वत्सप्रीति भये ॥ २३ ॥

वत्सप्रीति के पुत्र प्रांशु उनके प्रमति उनके खनित्र उनके चाक्षुष उनके विविंशति हुए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आङ्गिरसः सुतो महायोगी संवर्त्तो यमयाजयत्स मरुत्तः ॥२६॥

अस्य यत्किञ्चित्पात्रादिकमासीत् तत्तु सर्वं हिरण्मयं शोभनमासीत् ॥ २७ ॥

अमाद्यदहृष्यत् ॥ २८-३० ॥

(१) रम्भः । इति वीर०

यस्यामुत्पादयामास विश्रवा धनदं सुतम् ।
प्रादाय विद्यां परमामृषिर्योगेश्वरात्पितुः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतो यस्यां तृणबिन्दोः पुत्रा अभवन् ॥ ३१-३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विविंशतेः पुत्रो रम्भः अस्य रम्भस्य पुत्रः खनिनेत्रः स च धार्मिकः तस्य करम्भः तस्य करम्भस्यात्मजः करन्धमाख्यो महाराज आसीत् हे नृप ! ॥ २५ ॥

तस्य करन्धमस्य सुतोऽविक्षित् तत्पुत्रं वदन् तं विशिनष्टि-यस्याविक्षितः पुत्रो मरुत्ताख्यः चक्रवर्त्ती कृत्स्नभूमण्डलरूपं चक्रं यस्य वशे वर्त्तते स चक्रवर्त्ती तादृशो बभूव मरुत्तं विशिंषन् संग्रहेण तद्वृत्तमाह-मरुत्तं इति । यं मरुत्तमाङ्गिरसः सुतो महायोगी संवर्त्तः अयाजयत् ॥ २६ ॥

मरुत्तस्य यज्ञो यथा यादृशः तथा तादृशः कश्चिदप्यन्यो यज्ञो भुवि न—केनचित्कृत इत्यर्थः । मरुत्तस्य यज्ञमेव विशिनष्टि, यत्किञ्चिद्यज्ञोपकरणपात्रादिकं तत्सर्वं तत्कृतयज्ञे हि शोभनं हिरण्मयं सुवर्णमयमेवासीत् ॥ २७ ॥

तथा तस्मिन्यज्ञे इन्द्रः सोमेन रसेनाऽमाद्यत् अहृष्यत् तथा द्विजातयो ब्राह्मणाश्च दक्षिणाभिरमाद्यन् किञ्च तत्र यज्ञे मरुतः परिवेष्टारः भोजनपात्रेष्वन्नादीनां प्रदातारः सभायां सीदन्त्युपविशन्तीति सभासदः सभ्याः विश्वेदेवाः ॥ २८ ॥

मरुत्तस्य पुत्रो दमः तस्य पुत्रो राजवर्द्धनाख्यः समभवत् तस्य राजवर्द्धनस्य सुतः सुधृतिः जज्ञे बभूव तस्य नर इति प्रसिद्धः सुतः तस्यैव नामान्तरं सौधृतेय इति तत्सुतः सौधृतेयसुतः केवलः तस्मात्केवलाद्बन्धुमान् जज्ञे इत्यनुषङ्गः ततो बन्धुमतो वेगवान् तस्य वेगवतः बिन्दुः पुत्रोऽभवत् तत्पुत्रं दर्शयन् तं विशिनष्टि, यस्य बिन्दोस्तृणबिन्दुरिति प्रसिद्धो महीपतिः पुत्रो बभूव ॥ २९ ॥ ३० ॥

अजर्गीयाः समाश्रयणोपयुक्ता गुणा यस्य तं तृणबिन्दुम् अप्सरःश्रेष्ठा देवस्येन्द्रस्य सम्बन्धिनी अलम्बुषा भेजे अन्वसेवत यतः तस्यामलम्बुषायां तृणबिन्दोः पुत्रा अभवन् इडविडाख्या कन्या चाऽभवत् ॥ ३१ ॥

कन्यां विशिंषन् तस्याः सुतमाह-यस्यामिडविडायां विश्रवाः धनदं कुबेरं सुतमुत्पादयामास स धनदस्तृणबिन्दुर्यो योगेश्वरात्पितुर्विश्रवसो बिन्दोर्वा ऋषेः सकाशात्परमां विद्यामवाप अन्तर्धानविद्यां ब्रह्मविद्यां वाऽवापेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्य करन्धमस्य पुत्र अवीक्षित् यस्यावीक्षितो मरुत्तः सुतः मरुत्तं विशिनष्टि-संवर्त्तं इति । कोऽसौ संवर्त्तः ? इति तत्राह-महायोगीति ॥ २६ ॥

संवर्तो नामऋषिः कीदृशं यज्ञमकारयत् ? येन महायोगित्वं सम्भाव्यत इत्यतस्तं यज्ञं विशिनष्टि-मरुत्तस्येति । अनेन मरुत्तस्यापि महायोगित्वं श्रीनारायणानुग्रहपात्रत्वं सूचितम् ॥ २७ ॥

द्विजातयो दक्षिणाभिरमाद्यन् संहृष्टा इत्यन्वयः मरुतो देवाः "ऋभवोऽमराश्च मरुतो वृन्दारकाश्चनिर्जराः" इत्यभिधानं विश्वेदेवा इति विशेषणाद्वायवो वा परिवेष्टारः भोक्तॄणामपेक्षितान्नरसादिनिक्षेप्तारः सभायां सीदन्त्युपसंविशन्तीति सभासदः प्रत्यक्षं सभायामुपविश्य सर्वं विचारयन्त इत्यर्थः ॥ २८-३० ॥

अलम्बुषानाम वराप्सरास्तं तृणबिन्दुं भेजे ॥ ३१ ॥

कीदृशी इडविडेति तां विशिनष्टि, यस्यामिति । योगेश्वरो विश्रवा ऋषिश्च इडविडायाः पितुस्तृणबिन्दोः परमां विद्यां प्रदाय तामुद्वाह्य यस्यामिडविडायां धनाधिपं वैश्रवणमुत्पादयामासेत्यन्वयः ॥ ३२—३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्य यत् किञ्च किञ्चित् पात्रादिकमस्ति आसीत् तत् सर्वं हिरण्मयं शोभनमासीत् ॥ २७ ॥

द्विजातयो विप्रा अपि अमाद्यन् अहृष्यन् ॥ २८-३० ॥

यतः यस्यां तृणबिन्दोः पुत्रा विशालाद्याः ॥ ३१ ॥

पितुः सकाशात् विद्यां प्रादाय प्राप्य ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यं मरुत्तम् ॥ २६ ॥

मरुत्तस्य यथा यज्ञस्तथा तादृशः कश्चन अपि यज्ञः अन्यस्य यजमानस्य नासीत् अस्य यज्ञस्य सम्बन्धि यत्किञ्चिदपि पात्रादिकं तत्तु सर्वं हिरण्मयं शोभनमासीत् ॥ २७ ॥

इन्द्रः सोमेन अमाद्यत् अहृष्यत् द्विजातयो विप्राः दक्षिणाभिः अमाद्यन् परिवेष्टारः भोजनादिदातारः सभासदः सभ्याः ॥ २८ । ३० ॥

तं तृणबिन्दुम् अलम्बुषा भेजे अभजत् यतो यस्यां तृणबिन्दोः पुत्रा विशालादयस्त्रयो वक्ष्यमाणाः अभवन् इडविडा कन्या चाऽभवत् ॥ ३१ ॥

स धनदः ऋषेः विश्रवसः सकाशाद्विद्यामवाप ॥ ३२ ॥

विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ।
विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥ ३३ ॥
हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ।
तत्पुत्रात्संयमादासीत्कृशाश्वः सहदेवजः ॥ ३४ ॥
कृशाश्वात्सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम् ।
इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितः ॥ ३५ ॥
सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ।
एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां नवमस्कन्धे
द्वितीयोऽध्यायः ॥ २ ॥

---

भाषा टीका ।

विविंशति के सुत रम्भ हुए जिनके बड़े धार्मिक खनिनेत्र हुए हे महाराज! उन खनिनेत्र के करन्धम राजा पुत्र हुए ॥ २५ ॥

तिस करन्धम के अवीक्षित पुत्र हुए उनके मरुत्त भये जिन को महा योगी अङ्गिरा के पुत्र सम्वर्त्त ने यज्ञ कराया ॥ २६ ॥

राजा मरुत्त का जैसा यज्ञ भया ऐसा किसी का नहीं भया, क्योंकि? इनके यज्ञमें जो कुछ पात्रादिक रहे सो सब सुवर्ण के हुए और बड़े शोभा वाले हुए ॥ २७ ॥

उस यज्ञ में इन्द्र सोमपान से मत्त होगये, और द्विजाति लोग दक्षिणाओं से सन्तुष्ट भये, तथा मरुत देवता, परोसने वाले, विश्वेदेवा, और सभासद, ये सबही हर्ष को प्राप्त हुए ॥ २८ ॥

मरुत्त के पुत्र दम हुए, उनके राज्यवर्द्धन हुए, उनके सुधृति हुए, और सुधृति के पुत्र नरनाम से प्रसिद्ध हुए ॥ २९ ॥

नर के पुत्र केवल, उनके बन्धुमान् उनके वेगमान् उन के बन्धु हुए, जिन बन्धु के तृणबिन्दु महीपति उत्पन्न हुए, ॥ ३० ॥

बड़ी कान्ति वाली अलम्बुषा नामक अप्सरा ने पत्नी होकर उन तृणबिन्दु का सेवन किया, जिस अलम्बुषा में पुत्र भी हुए, और एक इडविडा नाम की कन्या भी हुई ॥ ३१ ॥

उस इडविडा में विश्रवा ऋषिने अपने पिता योगेश्वर से परम विद्या को ग्रहण कर कुबेर को उत्पन्न किया ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानेवाऽऽह—विशाल इति । तस्य तृणबिन्दोः सुताः ॥ ३३ ॥

सहदेवजः देवजेन सहितः पाठान्तरे नामान्यत्वमात्रमर्थस्तु स एव ॥ ३४-३५ ॥

वैशालभूपाला विशालस्याऽन्वये जाताः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तृणबिन्दोः सुतान्निर्दिशति । विशाल इति । तत्र विशालाख्यो राजा वंशवर्द्धनो वैशालीं पुरीं निर्ममे ॥ ३३ ॥

तस्यविशालस्य सुतो हेमचन्द्रः तस्य हेमचन्द्रस्यात्मजो धूम्राक्षः तत्सुतो धूम्राक्षस्य सुतस्तु सहदेवः सहदेवस्य पुत्रस्तु कृशाश्वः ॥ ३४ ॥

कृशाश्वात्सोमदत्तः पुत्रोऽभवत तस्य वृत्तमाह—यः सोमदत्तोऽश्वमेधैरिडस्पतिम् इडायाःपतिं परमपुरुषम् इष्ट्वा पृथिवी तदुपलक्षितजगत्पतिमिति वा पारस्करादित्वात्साधुः आराध्य योगेश्वरैः प्रार्थनीयां गतिमवाप मुक्तोऽभवदित्यर्थः ॥ ३५ ॥

सोमदत्तात्सुमतिः उद्भूत तत्सुतः सुमतिसुतो जनमेजयः य एते उक्ता वैशालभूपाला विशालान्वये जाताः तृणबिन्दोः कुटस्थस्य यशोधराः कीर्तिवर्द्धनाः एते॰ वैशालभूपाला इत्यनेन तद्वंशजा अन्येपि अगण्याः सन्तीत्यभिप्रेतम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इडस्पतिं यज्ञपतिम् वाक्पतिं वा ॥ ३५ ॥
वैशालभूपालाः विशालवंशे जाता भूपालाः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तस्य तृणबिन्दोः सुतः ॥ ३३—३६ ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
द्वितीयो नवमस्याभूत् सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्य विशालस्य हेमचन्द्रः सुतः तस्य हेमचन्द्रस्य आत्मजः धूम्राक्षः तत्पुत्रात् धूम्राक्षपुत्रात्संयमात् देवजेन भ्रात्रा सहितः कृशाश्वः आसीत् ॥ ३४ ॥

यः सोमदत्तः इडस्पतिं पुरुषमिष्ट्वा अग्र्यां गतिं मुक्तिमाप ॥ ३५ ॥
वैशालभूपालाः विशालवंशजाः भूमिपाः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये,
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाऽध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका।

हाँ अलम्बुषा में तृणबिन्दु के तीन पुत्र हुए विशाल, शून्यबन्धु, और धूमकेतु। इनमें से वंश बढ़ाने वाले वैशाल ने वैशाली पुरी निर्माण करी, ॥ ३३ ॥

उन वैशाल के हेमचन्द्र हुए तिनके, धूम्राक्ष हुए, तिन के पुत्र संयम हुए तिन से कृशाश्व हुए और सहदेवज हुए ॥ ३४ ॥

कृशाश्व से सोमदत्त हुए जोकि-अश्वमेधों से इडस्पति पुरुष का यजन करके, योगेश्वर का आश्रित होकर उत्तम गति को प्राप्त हुआ ॥ ३५ ॥

सोमदत्त के सुमति हुए, तिनके जनमेजय हुए ये तृणबिन्दु के यश को धारण करने वाले विशाल वंशी भूपाल हुए ॥ ३६ ॥

इति श्रीमद्भागवत नवमस्कन्ध में द्वितीय अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥



## ॥ तृतीयोऽध्यायः ॥

श्रीशुक उवाच ।

शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ।
यो वा अङ्गिरसां सत्रे द्वितीयमह ऊचिवान् ॥ १ ॥
सुकन्या नाम तस्यासीत्कन्या कमललोचना ।
तया सार्द्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥
सा सखीभिः परिवृता विचिन्वत्यङ्घ्रिपान्वने ।
वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥
ते दैवचोदिता बाला ज्योतिषी कण्टकेन वै ।
अविद्ध्यन्मुग्धभावेन सुस्रावासृक्ततो बहु ॥ ४ ॥
शकृन्मूत्रनिरोधोऽभूत्सैनिकानां च तत्क्षणात् ।
राजर्षिस्तमुपालक्ष्य पुरुषान्विस्मितोऽब्रवीत् ॥ ५ ॥
अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ।
व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥
सुकन्या प्राह पितरं भीता किञ्चित्कृतं मया ।
द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै ॥ ७ ॥
दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ।
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यते ऽन्वयः ॥
यत्र सौकन्यमाख्यानं रैवतं च महाऽद्भुतम् ॥ १ ॥

ब्रह्मिष्ठो वेदार्थतत्त्वज्ञः तदेवाऽऽह-यो वा इति । द्वितीयमहो द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवानुवाच तस्य वंशम् "उत्तानबर्हिरानर्तः" इत्यादिना वक्ष्यति ॥ १ ॥

आदौ तावत्तत्कन्यावृत्तान्तमाह—सुकन्या नामेत्यादिना ॥ २—३—४—५ ॥

भार्गवस्य च्यवनस्य अभद्रमपराधः ॥ ६—७—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिष्टवंशस्यातिविपुलत्वात्साकल्येन वक्तुमशक्यतामभिप्रेत्याथ शर्यातेर्मानवस्य चरित्रं वंशञ्चाह तृतीयेन—मनोः पुत्रः शर्यातिसंज्ञको राजा ब्रह्मिष्ठः वेदार्थनिष्ठो बभूव तदेवाह, यो वै शर्यातिरङ्गिरसां सत्रे आङ्गिरसकर्तृके द्वितीयेऽह्नि क्रियमाणं कर्मोचिवान्, भीतेऽतीव कुशल इति भावः ॥ १ ॥

तस्य शर्यातेः कमले इव लोचने यस्याः कन्या सुकन्येति प्रसिद्धा संबभूव उत्तानबर्हिरादयः पुत्रा वक्ष्यन्ते तावत्कन्यावृत्तान्तमाह-स कदाचित्तया सह वनङ्गतः तत्र च्यवनस्य ऋषेराश्रममगमत् ॥ २ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा कन्या सखीभिः परिवृता वने अङ्घ्रिपान् द्रुमान् विचिन्वन्ती वल्मीकबिले खद्योते इव स्थिते ज्योतिषी ददर्श ॥ ३ ॥

बाला मुग्धा चोदिता सखीभिरिति शेषः । मुग्धभावेन मौग्ध्येन च ते ज्योतिषी कण्टकेनाभ्यद्रताडयत् ततो वल्मीकबिलयोः सकाशात् बहु रुधिरं सुस्राव ॥ ४ ॥

तस्मिन्नेव काले सैनिकानाम् शकृन्मूत्रयोर्निरोधो बभूव तदा तान् निरुद्धशकृन्मूत्रान् सैनिकानालक्ष्य ज्ञात्वा राजर्षिः शर्यातिः विस्मितः स्वपुरुषान् अब्रवीत् ॥ ५ ॥

उक्तिमेवाह—अपीति । युष्माभिर्भार्गवस्य च्यवनस्याभद्रमपराधः विचेष्टितमपि अपिशब्दः प्रश्नद्योतकः अपराधः कृतः किमित्यर्थः । नोऽस्माकं मध्ये केनापि प्राणिना आश्रमदूषणं व्यक्तं कृतं नूनं कृतमन्यथैवमुपद्रवो न स्यादिति भावः ॥ ६ ॥

एवं शर्यातौ पृच्छति सति भीता सती सुकन्या पितरं प्राह किञ्चित् मयाऽभद्रं कृतमिति । किं तदभद्रम्? इत्यत आह, द्वे इति । ते वल्मीकरन्ध्रयोरन्तः द्वे ज्योतिषी अजानन्त्या इमे वल्मीकान्तर्हितस्य ऋषेः शरीरैकमूले इत्येवम् अजानन्त्या मया कदर्या कण्टकेन करयोन निर्भिन्ने ॥७॥

इतीदं दुहितुर्वचः श्रुत्वा शर्यातिः जातं साध्वसं भयं यस्य स वल्मीकान्तर्हितं मुनिं च्यवनं शनैः प्रसादयामास स्तोत्रादिभिः प्रसन्नमकरोत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आङ्गिरसः ब्राह्मणानिष्ठः वेदनिष्ठो वा तत्फलमाह—यो वा इति । द्वितीयेऽह्नि यो मन्त्रोऽध्येतव्यः मन्त्रकल्पोक्तफलमिच्छन्तं मन्त्रमध्यगादित्ययमर्थो द्वितीयमहरध्यगादित्युच्यते ॥१॥

तस्य शर्यातेः ॥ २ ॥

विचिन्वन्ती मृगयन्ती वल्मीकरन्ध्रे वल्मीकबिले खद्योते खद्योतरूपे ख एव द्योतत इति खद्योतः ॥ ३ ॥

सा सुकन्या मुग्धभावेन अज्ञानवस्तुस्वरूपतया बालभावेन वा कण्टकेन कण्टकाग्रेण ज्योतिषी ज्योतिराश्रये द्वे चक्षुषी इति यावत्, असृक् रुधिरं ततः छिन्नचक्षुषोः ॥ ४ ॥

सैनिकानां राजसेवकानां निरोधः स्तम्भनम् ॥ ५ ॥

युष्माभिर्भार्गवस्याभद्रममङ्गलं विचेष्टितं किमपि कृतमेव न तत्र संशय इत्याह—व्यक्तमिति । नो मध्ये केनापि पुरुषेण तस्य भार्गवस्याश्रमदूषणं व्यक्तं कृतमतः इदं सेनाशकृन्मूत्रस्तम्भनं भार्गवस्य विचेष्टितमिति व्यक्तमभूदिति पुनरावृत्त्या योजनीयम् ॥ ६ ॥

ते द्वे ज्योतिषी तत्त्वमजानन्त्या मया कण्टकेन निर्भिन्ने इत्यन्वयः ॥ ७—८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—४ ॥

शकृन्मूत्रस्यैव निरोधोऽभून्नतूपद्रवान्तरमित्यत्र कारणं प्राक् निजाश्रमसान्निध्यहानेच्छा या जाता तामनुसृत्यैव कन्येच्छाया मुनिकृतः क्षुद्रोपद्रवविशेष इति ज्ञेयम् ॥ ५—२६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शर्यातेर्मनुपुत्रस्य सुकन्या च्यवनं पतिम् ।
लेभे तृतीये शर्यातिवंश्या श्रीरेवती बलम् ॥

आङ्गिरसः वेदार्थतत्त्वज्ञः तदेवाह—य इति । द्वितीयमहः द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवान् तत्र व्यवस्थामुवाच ॥ १-५ ॥

विचेष्टितं कृतं नोऽस्माकं मध्ये केनापि वा न कृतम् ॥ ६—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुपुत्रस्य शर्यातेर्दुहितुः सुकन्यायाः आख्यानम् उत्तानबर्हिर्भूर्तान्पुमांश्चाह—शर्यातिरिति तृतीयेन । ब्रह्मिष्ठः वेदार्थज्ञत्वेऽपि कर्मकाण्डेऽतिनिपुणः इति सूचयति, यः शर्यातिः अङ्गिरसां सत्रे द्वितीयमहः द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवान् उवाचेति ॥ १ ॥ २ ॥ ३ ॥

वने अङ्घ्रिपान् विचिन्वन्ति द्रुमान् विलोकयन्तीत्यर्थः ॥४।५॥

भार्गवस्य भृगुपुत्रस्य च्यवनस्य अभद्रम् अपराधः युष्माभिः न विचेष्टितं न कृतम्? नोऽस्माकं मध्ये केनापि तस्याश्रमदूषणं व्यक्तं निश्चितं कृतमेव ॥ ६ । ७ ॥

जातसाध्वसः उत्पन्नभयः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरामानुजो जयतः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—मनुके पुत्र शर्याति राजा बड़े वेदके अर्थ को जानने वाले हुए, जिनने आङ्गिरस ब्राह्मणों के यज्ञमें द्वितीय दिवस के करने के कर्म को बतलाया ॥ १ ॥

एक सुकन्या नाम वाली कमल नयनी उनकी कन्या रही उस कन्याको साथ लेकर एक समय वनमें गये वहां भी च्यवन ऋषिके आश्रम में जाते हुए ॥ २ ॥

वह कन्या भी सखियों सहित वनमें नानाप्रकार के वृक्षोंको देखती हुई एक वल्मीक में दो छिद्र देखे और उन उन दोनों छिद्रों में खद्योत की नाई दो ज्योती भी देखी ॥३॥

तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः ।
कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात्समाहितः ॥ ९ ॥
सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥
कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ।
तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥
ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः ।
क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥
बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ।
निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥
इत्युक्तो जरया ग्रस्तदेहो धमनिसन्ततः ।
ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविप्रियः ॥ १४ ॥
पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ।
पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥
तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ।
अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥

भाषा टीका ।

उस राजपुत्री ने दैव की प्रेरणासे भोलापनसे उन दोनों ज्योतियों को कांटेसे वेध दिया, तब उनमें से बहुत रुधिर बह निकला ॥ ४ ॥

बस तत्काल में सबराजा की सेना वालों के मलमूत्र का निरोध होगया, और पेटफूलने लगे, राजा शर्याति यह चरित्र देखकर बड़ा विस्मित हुआ और पुरुषों से बोला कि- ॥ ५ ॥

तुमलोग यहतो कहो कि—तुमलोगों ने महाराज भार्गव श्रीच्यवन ऋषिजी का कुछ अपराध तो नहीं किया । स्पष्ट कहो कि किसीने उनके आश्रम काभी कोई दूषण तो नहीं किया ॥ ६ ॥

इतने में राजपुत्री सुकन्या पिता से बोली, पिताजी मो अज्ञान से कुछ होगया है ॥ ७ ॥

बस राजा शर्याति पुत्री के वचन सुनकर बड़ा कम्पित होकर वल्मीक के भीतर में स्थित ऐसे च्यवन मुनिको धीरे २ प्रसन्न करने लगे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुग्धेयं मम कन्या सुन्दरयं त्वयेत्युच्यमाने कतिपयांगयवया:? विवाहः कृतो न वा? इत्यादिवाक्यैस्तदभिप्रायं ज्ञात्वा तस्मै तां दुहितरं प्रादात् ॥ ९-१० ॥

हे ईश्वरौ ! भवन्तौ युवां मह्यं वयस्तारुण्यं दत्तं संपादयतम् ॥ ११ ॥

असोमपोः सोमपानरहितयोरपि वां युवयोः सोमस्य ग्रहं सोमपूर्णं पात्रं ग्रहीष्ये दास्यामीति युवां सोमेन यक्ष्य इत्यर्थः । "ऐन्द्रवायवं गृह्णाति" इत्यादिषु द्रव्यदेवतासम्बन्धाऽनुपपत्त्या गृह्णातेर्दानपर्यवसायित्वात् ॥ १२ ॥

बाढमित्यभिनन्द्य भवानस्मिन्निमज्जतामित्यूचतुः ॥ १३ ॥

ह्रदं प्रवेशितः तावपि तमपि ह्रदं गृहीत्वा प्रविष्टावित्यर्थः ॥ १४-१५ ॥

अश्विनौ शरणं ययौ युवां पृथक् स्थित्वा मत्पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः ॥ १६-१७-१८-१९ ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ततस्तस्य च्यवनस्याभिप्रायं मुग्धेयं कन्या त्वया स्वस्त्ययमित्युक्ते सति कतिवयोऽवस्थाः? विवाहः कृतो नवा? इत्यादि तदाकर्ण्यैतदभिप्रायं ज्ञात्वा दुहितरं मुनेश्च्यवनस्य प्रादात् ततः कृच्छ्रात् भविष्यद्दुहितृविवर्जनमित्यात् कृच्छ्रान्मुक्तः "अर्थो हि कन्या परकीय एव" इत्यादिस्मरणानुसन्धानेन मुक्तः तं च्यवनमामन्त्र्य पृष्ट्वा सानुगः पुरीं ययौ ॥ ९ ॥

ततः सुकन्या परमार्थिकं कुप्यतीति परमकोपनकं तन्धा-दित्यात्मकर्तारं तु च्यवनं पतिं प्राप्य तदभिप्रायज्ञा सावधानचित्ता सती मनुवृत्तिभिः प्रीणयामास प्रीतमकरोत् ॥ १० ॥

अथ ततः कस्यचित्कालस्य कस्मिंश्चित्काले नासत्यावश्विनौ स्वाश्रमं प्रति गतौ सत्यकपूजावित्था च्यवनः प्राह, तदेवाह—वय इत्यादिना यादमित्यतः प्राक्तनेन ग्रन्थेन। हे ईश्वरौ ! युवां मे जरया ग्रस्ताय मह्यं वयस्तारुण्यं दत्तं यच्छतं "डुदाञ् दाने" इत्यस्य लोगमध्यमपुरुषद्विवचनं यच्छादेशस्तु पात एव तद्विधौ दाणानि-णानां निर्देशात् ॥ ११ ॥

तव वयःप्रदानेनावयोः कस्त्वत्कृत उपकारः ? इत्याशङ्कां निरा-कुर्वन्नाह—ग्रहमिति। यद्यप्यसोमपोः सोमपानरहितयोरनेन "अश्विनौ वै देवानामसोमपावास्ताम्" इतिश्रुत्यर्थ उक्तः। वां युवयोः सोमस्य ग्रहं ग्रहीष्ये सोमपूर्णं पात्रं दास्यामि युवां सोमेन यक्ष्यामीत्यर्थः। "ऐन्द्रवायवं गृह्णाति" इत्यादिषु द्रव्यदेवतासम्बन्धानुपपत्त्या गृह्णतेः योगपर्यवसायित्वात् अतो मम वयस्तारुण्यं स्त्रीणां यदीप्सितं तादृशं रूपं सौन्दर्यञ्च क्रियतां युवाभ्यां सम्पाद्यताम् ॥ १२ ॥

इत्थं तद्वच आकर्ण्य स्वगतावश्विनौ अभिनन्द्य विप्रं च्यवनं बाढमित्यूचतुः सङ्गीकृत्योचतुरित्यर्थः। उक्तिमेवाह—निमज्जतामिति। सिद्धैर्विनिर्मितेऽस्मिन् ह्रदे भवान् निमज्जतां निमग्नो भवतु ॥ १३ ॥

इतीत्थमुक्तश्च्यवनो जरया ग्रस्तदेहः अत एव धमनीसन्ततः धमनीभिर्नाडीभिर्देहोपरि दृश्यमानाभिः व्याप्तः वलिभिः पलितेन च उपलक्ष्यमाणो देहो यस्य सः अश्विभ्यां ह्रदं प्रवेशितः तावपि तमनिवृत्तं गृहीत्वा प्रविष्टावित्यर्थः ॥ १४ ॥

ततस्ततो ह्रदात् त्रयः पुरुषाः अपीव्याः कमनीयाः प्रम-दानां स्त्रीणां प्रियाः पद्मानां स्रक् येषां कुण्डलानि येषां सन्तीति तथा शोभनानि वासांसि येषां ते समानरूपाः पर-स्परमविभक्तनीयरूपाः उत्तस्थुः ॥ १५ ॥

सूर्यस्येव वर्चो येषां तान् समानरूपान् उत्थितान् त्रीन् पुरुषा-नवलोक्य तेषां मध्ये स्वपतिमजानती सुकन्या साध्वी हेतुगर्भमिदं पतिव्रतात्वादित्यर्थः। अश्विनौ शरणं ययौ युवां यथाकथञ्चित्त्वा मम पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तस्य मुनेः सुकन्यादानलक्षणमभिप्रायं ज्ञात्वा कृच्छ्रान्मुक्तः सुकन्यामुनिभ्यामिति शेषः ॥ ९ ॥

परमकोपनम् अत्यन्तकोपशीलं सोऽत्रसमयमन्तरेणाप्यस्मयं वृथा नमुञ्चतीत्यभिप्रायेण चित्तज्ञा आमरणेति सम्यग्भाव इति ज्ञायते ॥ १० ॥

कस्यचित्कालस्य समागमे दत्तं युवामिति शेषः ॥ ११ ॥

तत्र वयोदानेनावयोः किं फलमिति तत्राह—ग्रहमिति। ग्रह-माहुतिविशेषभागमसोमपोः सोमपानशून्ययोरपि ॥ १२ ॥

भिषक्तमौ वैद्यश्रेष्ठौ ॥ १३ ॥

धमनीभिः सिराभिर्व्याप्तो देह इति शेषः स्वयमश्विनौ च ॥ १४ ॥

अपीव्याः षोडशवर्षप्रायाः ॥ १५ ॥

वरारोहा योषित् सरूपान् योग्यरूपान् ॥ १६—१७–१८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

मुग्धेयं मम कन्या स्वस्त्ययनमित्युक्तमाने, कीदृशी ते कन्या ? तस्या विवाहोऽभून्नवा ? इति सक्कुस्तस्याभिप्रायं ज्ञात्वा तस्मै मुनये दुहितरं प्रादात् ॥ ९ ॥ १० ॥

कस्याञ्चित् कस्मिंश्चित् प्रोवाच च्यवनः हे ईश्वरौ ! यौवन-दाने समर्थौ ॥ ११ ॥

सोमस्य ग्रहं सोमपूर्णपात्रं ग्रहीष्ये युवां सोमेन यक्ष्ये इत्यर्थः ॥ १२ ॥ १३ ॥

अश्विभ्यां प्रवेशित इति तमनिवृत्तं गृहीत्वा तावपि प्रवि-ष्टावित्यर्थः ॥ १४ ॥

अपीव्या अतिसुन्दराः ॥ १५ ॥

अस्मासु मध्ये स्वपतिं परिचित्य गृहाणेति तैरुक्ते युष्मासु मध्ये यावश्विनौ तौ मां कृपयतां मत्पतिं ज्ञापयतामित्यश्विनौ शरणं ययौ ॥ १६–१९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्य मुनेरभिप्रायं पाणिग्रहणोत्कामाशय ज्ञात्वा तस्मै तां दुहितरं प्रादात् ॥ ९—१० ॥

आश्रमागतौ आश्रमप्राप्तौ तौ पूजयित्वा वयो मे इत्यादि प्रोवाच हे ईश्वरौ ! स्वैर्यौ मे मह्यं वयस्तारुण्यं दत्तं सम्पा-दयतम् ॥ ११ ॥

असोमपोः "अश्विनौ वै देवानामसोमपौ" इति श्रुतेः। सोमपान-रहितयोरपि वां युवयोः सोमस्य ग्रहं सोमपूर्णपात्रं गृहीष्ये युवां सोमेन यक्ष्य इत्यर्थः। "ऐन्द्रवायवं गृह्णाति" इत्यादिषु द्रव्य-देवतासम्बन्धानुपपत्त्या गृह्णातेर्योगपर्यवसायित्वात् तस्मात्स्त्रीणां यदीप्सितं वयस्तारुण्यं रूपं च मे युवाभ्यां क्रियतां सम्पा-द्यताम् ॥ १२ ॥

बाढमित्यङ्गीकारेण विप्रमभिनन्द्य आनन्दितं कृत्वा भवान-स्मिन् ह्रदे मज्जतामित्यूचतुः ॥ १३ ॥

दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ।
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥
यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ।
ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥
राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ।
आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥
चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ।
यत्त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥
कथं [1] मतिस्तेऽवगताऽन्यथा सतां [2] कुलप्रसूते ! कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥ २१ ॥
एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।
उवाच तात ! जामाता तवैष भृगुनन्दनः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

असतिमिस्वन्तः असतीभिः सर्वतो व्याप्तः सतीभिः पालितम् सोपलक्षणाणां निम्नो देहो यस्य सः अश्विभ्यां ह्रदं प्रवेशित इत्यनेन तत्रापि तर्मनिष्कं गृहीत्वा ह्रदं प्रविशाभिति सूच्यते ॥ १४ ॥

अत एव ह्रदात् त्रयः पुरुषाः अपीच्याः कमनीयाः उत्तस्थुः ॥ १५ ॥

अपरिज्ञानाश्विनौ शरणं ययौ ॥ १६-१९ ॥

———

भाषा टीका ।

तब मुनिका उसी पुत्री के लिये अभिप्राय देखकर राजाने पुत्री को मुनिके लिये समर्पण करदी और बड़े भारी दुःखसे छूटकर मुनिसे आज्ञा मांगकर अपने पुरको सावधानहो कर गये ॥ ९ ॥

राज पुत्री सुकन्या भी परम क्रोधी च्यवन मुनि रूप पति को प्राप्तहोकर, बड़े सावधान होकर चित्तके जानने वाली नाना प्रकार के अनुवर्त्तन करने से मुनिको प्रसन्न करती हुई ॥ १० ॥

कितने एक समयके बीते पर कभी अपने आश्रममें स्वर्ग के वैद्य अश्विनी कुमार आये ऋषिनेभी उनकी पूजा करी और बोले, कि-आपदोनों समर्थ हो हमको युवा अवस्था दीजिये ॥ ११ ॥

और बोले, कि—यदि हमारे रूप और वयस् को ऐसा करदो कि—जैसा प्रमदाजन ( स्त्री लोग ) चाहती हैं । तो यज्ञ में जो तुमको सोमका भाग नहीं मिलता है उसको हम दिलावेंगे ॥ १२ ॥

दोनों वैद्यों ने इनके वचन को सुनकर और "आप बहुत अच्छा कहते हैं" इस प्रकार ऋषिके वचन का अभिनन्दन कर दोनों वैद्य ऋषिसेबोले, कि—आप इस सिद्ध निर्मित तटाक में गोता लगाओ ॥ १३ ॥

इतना कहकर दोनों अश्विनीकुमारों ने जरा ग्रस्त और नसों से व्याप्त देहवाले, तथा त्वचा की सलवटें और सफेद केश अत एव विरूप उस ऋषिका तटाक में प्रवेश किया और साथमें आपभी प्रविष्ट हुए, ॥ १४ ॥

तदनन्तर उस कुण्डमें से बड़े सुन्दर स्वरूप वाले, स्त्रीजनों के प्रिय कमलों की माला पहिने कुण्डलधारणकिये तुल्यरूप और सुन्दर वस्त्रवाले तीन पुरुष निकले ॥ १५ ॥

श्रेष्ठ आरोह ( जघन ) वाली राजपुत्री ने कुण्डसे निकले हुए सूर्य सदृश कान्ती वाले, तीनों पुरुषों को समान देख कर अपने पति को न पहचान कर विचारी साध्वी अश्विनी-कुमारों के शरणा हुई अर्थात् हाथ जोड़ कर बोली, कि—हे वैद्यो आप तीनों में मेरे पति कौन है सो कृपा करके आप दोनों अलग कर दीजिये ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रलम्भितो वञ्चितः हे असति ! असत्सम्मतमनभीष्टम् ॥ २० ॥

(१) मतिस्तेऽवगता इति विज० । (२) मार्गेन्त्विदं सत्कुलदूषणम् ।

शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ।
विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥
सोमेन याजयन्वीरं ग्रहं सोमस्य चाग्रहीत् ।
असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे सतां कुलप्रसूते ! तव मतिरन्यथा तद्विपर्ययेण कथमवगताऽवसन्नाऽध्यवसितेति वा तदेवाऽऽह—कुलदूषणं त्विदमित्यादि ॥ २१-२२-२३-२४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽश्विनौ तत्पानिग्रस्येन तोषितौ तस्यै सुकन्यायै पतिं दर्शयित्वा ऋषिमापृच्छ्य तेन स्तूयमानौ त्रिविष्टपं दिवं ययतुः ॥ १७ ॥

अथ ततः कदाचित् यक्ष्यमाणो यागं करिष्यमाणः शर्यातिः च्यवनस्य जामातुराश्रमं गतः तत्र दुहितुः पार्श्वे सूर्यवर्चसं पुरुषं ददर्श ॥ १८ ॥

तदा कृतं पादयोरभिवन्दनं यया तां दुहितरं राजा शर्यातिः प्राह, कथम्भूतः ? नाशिषः अकुर्वन् नातिप्रीतं मनो यस्य तादृशः तदवस्थितः ॥ १९ ॥

उक्तिमेवाह—चिकीर्षितमित्यादिना । ते त्वया किमिदं चिकीर्षितं किमिदं कृतमित्यर्थः । सकलसर्वलोकनमस्कृतः न किञ्चिदप्यकृत्यं मया कृतमित्यत आह—लोकनमस्कृतो मुनिश्च्यवनस्तव पतिस्त्वया प्रलब्धो वञ्चितः इदमेवाकृत्यं कृतमिति भावः । प्रलोभनं कथं जातमित्यत्राह—हे असति ! या त्वं जराग्रस्तमतएवासम्मतमनभीष्टं पतिं विहाय कञ्चिदमुं पार्श्ववर्तिनमध्वगं पान्थं जारं भजसे असौ न तव भर्ता जराग्रस्तस्यैव त्वद्भर्तुर्मया दृष्टत्वादिति भावः ॥ २० ॥

हे सतां कुलप्रसूते ! ते तव मतिरन्यथा तद्विपर्ययेण कथमवगता अवसन्ना अध्यवसितेति वा तदेवाह, कुलदूषणं त्विदमित्यादि । अपत्रपा निर्लज्जा सती जारं बिभर्षि अनुवर्तसे इति इदं कुलदूषणं कृतम् किञ्च पितुः पत्युः भर्तुश्च कुलमधस्तमो नयसि अधस्तनं तमः प्रायं नरकं नयसि ॥ २१ ॥

इत्येवं ब्रुवाणां पितरं शुचिस्मिता सुकन्या स्मयमाना सत्युवाच—उक्तिमेवाह—हे तात ! एषः मत्पार्श्ववर्ती तव जामाता भृगुनन्दनश्च्यवन एव ॥ २२ ॥

कथं तर्हि तेन प्रथमरूपेण एवं विधवयोरूपादिकं प्राप्तमिति पृच्छते पित्रे तद्वयोरूपादिप्राप्त्यादिकं सर्वं शशंस कथयामास ततो विस्मितः शर्यातिर्नितरां प्रीतस्तनयां परिषस्वजे ॥ २३ ॥

ततश्च्यवनो वीरं शर्यातिं सोमेन द्रव्येणायाजयत् सोमयागं कारितवानित्यर्थः । तस्मिन्यागे च्यवनः स्वतेजसा स्वतपो बलेन सोमपानरहितयोरप्यश्विनोः सोमस्य ग्रहमग्रहीत्सोमग्रहेणाश्विनौ राजा याजयामासेत्यर्थः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे असति, दुर्वृत्ते ! जरया ग्रस्तत्वादसम्मतम् अध्वगं पान्थम् ॥ २० ॥

अंब पुत्रिके ! इयं मतिरन्यथा गता अन्यथोक्तं बिभर्षीति असतामिति असतां मार्गं गतेत्यर्थः । इदं त्वत्कर्म मत्कुलदूषणं त्वेव किं तत्कर्मेति तत्राह—बिभर्षीति । निर्लज्जाभूत्वा जारं उपपतिमुभयकुलमिति उपपतिं बिभर्षि यत्तस्मात् तदेव दूषयति, कुलमिति । नयसि प्रापयसि ॥ २१-२३ ॥

सोमेन हविषा असोमपोः सोमपानरहितयोः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रलब्धो वञ्चितः यत् त्वं जराग्रस्तं पतिं विहाय असत्यसम्मतम् अमुं जारं भजसे ॥ २० ॥

हे सतां कुलप्रसूते ! कथं तव मतिरन्यथा भूता सती अवगता अधः पतिता अपत्रपा अतिनिर्लज्जा तमो नरकम् ॥ २१ ॥

स्मयेन साध्वीत्वगर्वेण मानाञ्चित्तसमुन्नतिर्यस्याः सा ॥ २२-२३ ॥

सोमेन सोमसञ्ज्ञकेन यज्ञेन वीरं शर्यातिम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वया पतिः प्रलब्धो वञ्चितः यत् यतस्त्वं जराग्रस्तं तं विहाय असम्मतम् अयुक्तं यथा भवति तथा जारं भजसे अनुवर्तसे हे असति ! इदं ते किञ्चिकीर्षितं भवति कर्तुमिष्टं भवति नैवेत्यर्थः ॥ २० ॥

हे सतां कुलप्रसूते ! ते मतिः अन्यथा असत्कुलप्रसूताया इव कथमवगता अध्यवसिता यतः अपत्रपा निर्लज्जा सती जारं बिभर्षि इदं कुलदूषणं जातम् किञ्च पितुर्भर्तुश्च कुलमधस्तमो नरकं नयसि ॥ २१ ॥ २२ ॥ २३ ॥

वीरं शर्यातिं सोमेन अयाजयत् सोमयागं तेन कारितवान् तस्मिन् यागे असोमपोरप्यश्विनोः सोमस्य ग्रहं सोमपूर्णपात्रञ्च अग्रहीत् ॥ २४ ॥

हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ।
स वज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥
अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ।
भिषजाविति यत्पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥
उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ।
शर्यातेरभवन् पुत्रा आनर्ताद्रेवतोऽभवत् ॥ २७ ॥
सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ।
आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम ! ॥ २८ ॥
तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ।
ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥
कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ।
आवर्त्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥
तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ।
तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥
अहो राजन्निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ ३२ ॥

भाषाटीका ।

तब तो सुकन्या के पतिव्रत पने से सन्तुष्ट होकर पति को बतलाकर दोनों स्वर्ग के वैद्य ऋषि से आज्ञा लेकर विमान पर बैठ स्वर्ग को गये ॥ १७ ॥

फिर एक समय राजा शर्याति, यज्ञ करने की इच्छा करके च्यवन ऋषि के आश्रम को गये, और वहां अपनी पुत्री के समीप एक सूर्य समान कान्ति वाले पुरुष को देखते हुए ॥ १८ ॥

पुत्रीने भी पिता को देखकर समीप आकर चरणों में दण्डवत् करी परन्तु राज ने तो दूसरे पुरुष की शङ्का करके पुत्री को आशीर्वाद भी नहीं दिया और न मनसे प्रसन्न होकर बोले, ॥ १९ ॥

राजा शर्याति बोले, कि-यह तूने क्या किया? जोकि लोकनमस्कृत च्यवन सदृश पति को तूँने ठगा। हे दुष्टे! जरा प्रस्त होने से उनको तूने अपने इष्ट नहीं समुझे तबही तो इस रस्ता चलते जार पुरुष की सेवा करती है ॥ २० ॥

हे सत्कुल में उत्पन्न होने वाली! तेरी मति कैसी अन्यथा फिर गई। अरी यह तो बड़ा कुलका दूषण है जोकि-जार पुरुष को तूने स्वीकार किया है और इसी से तू पिता और भर्त्ता के कुल को नरक में गिरावेगी ॥ २१ ॥

पिताजी तो इस प्रकार कहते ही रहे पर सुन्दर स्मित वाली वह सुकन्या हंसती २ पिताजी से बोली, कि-हे पिता जी! यही तो आप के जामाता भृगुनन्दन ( च्यवन ) हैं ॥ २२ ॥

सुकन्या ने पिता से इतना कह कर जैसे अपने पति को सुन्दर रूप और नवीन अवस्था प्राप्त हुई सो सब समाचार सुनाये, पिताभी सुन कर बड़े विस्मय को प्राप्त हुए और पुत्री पर परम प्रसन्न होकर उसका आलिङ्गन करते हुए ॥ २३ ॥

बस फिर च्यवन ऋषि ने राजा को यज्ञ करवाया और उस यज्ञ में सोमके भाग को नहीं पानेवाले ऐसे अश्विनी कुमारों को अपने तेजसे सोमका भाग ग्रहण करवाया ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सद्यस्तत्क्षणमेव मन्युर्यस्य स इन्द्रः ॥ २५-२६-२७ ॥
विषयान्देशानानर्त्तादीनभुङ्क्त अपालयत ॥ २८ ॥
ककुद्मी ज्येष्ठो यस्मिंस्तत् विभुं ब्रह्माणम् ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न लब्धः क्षणो ऽवसरो येन ॥ ३० ॥
आद्यं ब्रह्माणम् ॥ ३१ ॥
ते त्वया हृदये ये कृतास्ते सर्वे कालेन निरस्ताः संहृताः ॥३२॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं सोमेनाश्विनौ यजन्तं शर्यातिं हन्तुममर्षितः क्रुद्धः जातमन्युरिन्द्रो वज्रमादत्ते तदा भार्गवश्च्यवनः सवज्रं वज्रेण सहितमिन्द्रस्य भुजं स्तम्भयामास प्रतिबबन्ध ॥ २५ ॥

यावश्विनौ भिषजाविति बुद्ध्या पूर्वं सोमाहुत्यां बहिष्कृतौ सर्वेऽपि भिषजोरश्विनोः सोमस्य ग्रहं ततःप्रभृति सर्वं अन्वजानन् अनुज्ञातवन्तः ॥ २६ ॥

एवं शर्यातेः कन्याया वृत्तान्तमभिधायाथ पुत्रपौत्रादिपरम्परां तद्वृत्तान्तञ्चाह—उत्तानबर्हिरित्यादिना । उत्तानबर्हिरादयः त्रयः शर्यातेः पुत्राः संबभूवुः तत्रानर्तात्रैवतः संबभूव ॥ २७ ॥

स च समुद्रमध्ये कुशस्थलीसंज्ञां नगरीं निर्माय तस्या एवाधुना द्वारवतीति व्यवहारः तस्यामधिवसन् आनर्तादीन् विषयान् देशान् अभुंक्त पालयामास अरिन्दमः विरोधिनो निरस्यात्र भुङ्क्तेत्यर्थः ॥ २८ ॥

कुकुद्मीति प्रसिद्धो ज्येष्ठो यस्य तत्पुत्राणां शतं तस्य रैवतस्य समभूत् एका कन्या च जज्ञ इत्यर्थः अथ स रैवतो रेवत्याख्यां स्वां कन्यामादाय एतस्याः वरं भर्तारं परिप्रष्टुं विभुं ययौ किमिन्द्रलोकं गतः ? नेत्याह, ब्रह्मलोकमपावृतं स्वस्य गतिप्रतिबन्धकरहितं सत्यलोकं ययावित्यर्थः ॥ २९ ॥

तत्र ब्रह्मणः सन्निधौ गान्धर्वे गाने आवर्तमाने समन्तात्प्रवर्तमाने सति अलब्धः न प्राप्तः प्रश्नावसरो येन स रैवतः क्षणमात्रं तूष्णीं स्थितः तदन्ते गानावसाने आद्यं ब्रह्माणमानम्य स्वाभिप्रायं कोऽस्याः पतिरित्येवं रूपं न्यवेदयत् व्यजिज्ञपत् तद्रैवतस्य वचः श्रुत्वा प्रहस्य तं रैवतं ब्रह्मोवाच ॥ ३० ॥ ३१ ॥

तदेवाह–अहो इत्यादिना इत्यादिषु इत्यतः प्राक्तनेन ग्रन्थेन । अहो इति प्रश्नानुपपत्तिकृतविस्मयद्योतकः आगमनवेलायां त्वया ये जनाः हृदि कृताः हृदये कृताः दृष्टाः मनसा चिन्तिताश्च ते सर्वे कालेन चिरं निरस्ताः उपसंहृताः तदुपसंहरानन्तरमपि महान्कालो व्यतीत इत्यर्थः । तेषां त्वया हृदि कृतानां ये पुत्रादयस्तेषां गोत्राणि वंशाश्चाधुना न श्रूयन्ते, मम क्षणमात्रकालेन तत्र महान्कालो व्यतीतः इति भावः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तं च्यवनं सद्यो मन्युस्तत्क्षणे जातक्रोधः सवज्रं भुजम् ॥२५॥
अन्वजानन् अनुज्ञातवन्तः पूर्वं सोमग्रहाभावः कथं स्यात् ? इति तत्राह, भिषजाविति ॥ २६-२७ ॥
कुशस्थलीं द्वारवतीम् ॥ २८ ॥
विभुं ब्रह्माणम् ॥ २९ ॥
अपावृतं प्रकाशितं गान्धर्वे गाने अलब्धप्रश्नायाः अलब्धावसरः ॥ ३० ॥
तदन्ते गीतावसाने ॥ ३१ ॥
ये हृदि कृतास्ते पुरुषः कालेन निरस्ताः मृताः, न केवलं त एव न सन्ति तत्पुत्रादयोऽपि न सन्तीत्याह–तत्पुत्रेति । न श्रूयमहे न शृणुमः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आवर्तत्यत्र क्षणमिति तस्य पश्चादेव तस्य तत्र गमनात् ॥ ३०–३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सद्योमन्युरविचारात्क्षणजातकोपः ॥ २५—२८ ॥
विभुं ब्रह्माणम् ॥ २९ ॥
अपावृतं रजस्तमोगुणावरणशून्यं न लब्धः क्षणोऽवसरो येन सः ॥ ३० ॥
तदन्ते गान्धर्वसमाप्तौ आद्यं ब्रह्माणम् हृदि ये कृताः जामात्रर्थं मनसि विचारिताः निरस्ताः संहृताः ॥ ३१—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सद्योमन्युः सद्यस्तत्क्षणमेव मन्युर्यस्य सः तं च्यवनं हन्तुं वज्रमादत्ते ॥ २५-२७ ॥
स रैवतः अन्तःसमुद्रे समुद्रमध्ये नगरीं निर्माय तस्याम् आस्थितः आनर्तादीन् विषयान् देशान् अभुङ्क्त पालयामास ॥२८॥
ककुद्मी ज्येष्ठो यस्मिन् तत्पुत्राणां शतं जज्ञे ककुद्मी तु रेवतीं कन्यामादाय विभुगुणां ब्रह्माणं गतः ॥ २९ ॥
प्रयोजनमाह–कन्यावरमिति । अपावृतं तादृशानां प्रवेशे प्रतिबन्धरहितम् ब्रह्मलोकं सत्यलोकं गत इत्यनुषङ्गः । न लब्धः क्षणः प्रश्नावसरो येन सः क्षणं तूष्णीं स्थितः ॥ ३० ॥
तदन्ते गान्धर्वावसाने आद्यं ब्रह्माणम् ॥ ३१ ॥
के अहो राजन् ये त्वया हृदि कृतास्ते सर्वे कालेन निरस्ता उपसंहृताः ॥ ३२ ॥

---

भाषाटीका ।

इस बात को देखकर तत्काल में इन्द्रने क्रोधित होकर उनके मारने को वज्र लिया, भृगुनन्दन च्यवन मुनि ने भी इन्द्र के वज्र को भुजा सहित स्तम्भन करदिया ॥ २५ ॥

तब तो अश्विनी कुमारों को वैद्य होने के कारण जो सोमाहुती से बहिष्कृत किये रहे, सो सब लोग उनके भाग देने को अनुज्ञा देते हुए ॥ २६ ॥

*(मुहूर्त्तं शृण्वतोऽध्याय्यं प्रतियातस्य तेऽनघ । )
कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ।
तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥ ३३ ॥
कन्यारत्नमिदं राजन्नररत्नाय देहि भो ।
भुवो भारावताराय भगवान् भूतभावनः ॥ ३४ ॥
अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ।
इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ॥ ३५ ॥
त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ।
सुतां दत्त्वाऽनवद्याङ्गीं बलाय बलशालिने ॥
बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे
तृतीयोऽध्यायः ॥ ३ ॥

भाषा टीका ।

उत्तानबर्हि आनर्त्त और भूरिषेण ये तीन पुत्र शर्याति के हुए, और आनर्त्त से रेवत हुए ॥ २७ ॥

हे अरिन्दम ! उस आनर्त्त ने समुद्र के भीतर एक कुशस्थली ( द्वारका ) नगरी का निर्माण कराकर उस में स्थित होकर आनर्त्त देशों को भोगा ॥ २८ ॥

उन राजा आनर्त्त के सौ पुत्र हुए, उन सबों में ज्येष्ठ होने के कारण ककुद्मी बडे रहे, जब ककुद्मी राजा के कन्या हुई तब अपनी कन्या रेवती को लेकर ब्रह्मलोक चलेगये ॥ २९ ॥

क्यों गये कहे तो–ब्रह्माजी से अपनी कन्या के वरको पूछने के लिये गये पर उस अपावृत ब्रह्म लोकमें ब्रह्माजी की सभा में कोई गन्धर्व गान कररहाथा तब अवकाश न मिलने पर राजा क्षण भर वहां बैठ गये ॥ ३० ॥

उस गान के अन्त में ब्रह्माजी को नमस्कार कर राजा ने अपना अभिप्राय निवेदन किया उस बात को सुनकर ब्रह्माजी भी हंस कर राजा से बोलने लगे ॥ ३१ ॥

ब्रह्माजी बोले, कि–अहो राजन् ! आपने अपने हृदय में जिन को देने का विचार किया रहा उन सबों का कालने संहार कर दिया सो उनही का नहीं उनके पुत्र पौत्र नाती पानातियों के गोत्र भी सुनने में नहीं आते हैं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिणवसप्तविंशतिचतुर्युगानि तैर्विकल्पितो विभक्तः यो देवदेवस्यांशोऽस्ति तस्मै नररत्नाय देहि ॥ ३३ ॥
तदेवाऽऽह भुव इति ॥ ३४—३५ ॥
पुण्यजनत्रासाद्राक्षसभयात्पूर्वमेव चिरं पुरं तद्भ्रातृभिस्त्यक्तम् ॥३६॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र कीयान्कालो व्यतीत इत्यत्राह–काल इति चतुर्युगविकल्पितः चतुर्युगभेदभिन्नकालस्त्रिनवः व्यतीयात् चतुर्युगानि सप्तविंशति वारमावृत्तानीत्यर्थः । तर्ह्यधुना कस्मै देयेत्यत आह–तदिति । तत्तस्मात्त्वया दृष्टानां जनानामधुना अभावाद्विदानीं देवदेवस्य विष्णोः योंऽशोऽनन्तो महाबलः स एव बलदेवः बलरामरूपेण अवतीर्णो वर्त्तते ॥ ३३ ॥

तस्मै नरदेवायेदं कन्यारत्नं हे राजन् ! देहि, ननु, भगवतो निवासशय्यासनादिभिर्व्यवस्थापितकरसोऽनन्तः तां विहाय कस्मादवतीर्ण इत्याशङ्कायां भगवानपि भुवो भारापहरणाय तेन सहावतीर्ण इत्याह–भुव इति । भगवान् षाड्गुण्यपूर्णो

* श्लोकार्द्धोऽयमधिकः पठ्यते विज०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भारावतारणाय भुवो भारापहराय प्रयोजनाय स्वांशेन स्वापृथक्सिद्ध-विशेषणभूतेनानवधिकातिशयैश्वर्यवीर्यतेजोगुणजातेन ज्ञानादिगुणजात-मजहदेवेत्यर्थः । अवतीर्णः नन्वेवंविधस्य सङ्कल्पमात्रेणापि भूभारा-पनोदनसंभवात्किमवतारेण ? इतिशङ्कां निराकुर्वन् विशिनष्टि भूतभावनः पुण्यश्रवणकीर्त्तन इति च भूतानि साधुभूतानि भावयति पालयति इति भूतभावनः साधुपरित्राणायावतीर्ण इति भावः । पुण्ये श्रवणकीर्त्तने यस्य सः तथा चरितं शृण्वतां कीर्त्तयतां च पुण्यसम्पदनेनानन्तस्थिरफलरूपब्रह्मानन्दसाम्राज्यप्रदाना-र्थंञ्चावतीर्ण इत्यर्थः । इत्यमाविष्टो नियुक्तो नृपो रैवतोऽजं ब्रह्माणं प्रणम्य स्वपुरं कुशस्थलीं ययौ ॥ ३४ ॥ ३५ ॥

पुण्यजनत्रासात् यक्षभयात् हेतोः दिक्षवस्थितैस्तत्रतत्रा-वस्थितैर्भ्रातृभिः पूर्वमेव त्यक्तां स्वां कन्यां रेवतीमनवद्याङ्गीं शोभनाङ्गीं बलशालिने बलरामाय दत्वा हे राजन् ! रैवतस्तपस्तप्तुं तदा बदर्याख्यं नरनारायणाश्रमं ययौ ॥ ३६ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रतियातस्यागतस्य ते तवाश्राव्यं नरस्य श्रोतुमयोग्यं गानं मुहूर्तं मत्वा शृण्वतः कालो यातः अतिक्रान्त इत्यन्वयः । कियानिति तत्राह, त्रिनवेति । त्रिनवभिः चतुर्युगैः विशिष्टत्वेन कल्पितः सप्त-विंशतिचतुर्युगभेदभिन्न इत्यर्थः । तर्हि किं करोमि कन्या चावश्यं दातव्याऽस्त इमां कस्मै दास्यामीति तत्राह तदिति ॥ ३३-३४ ॥

पुण्यजनत्रासाद्राक्षसभयाद्दिक्षवस्थितैर्भ्रातृभिस्त्यक्तं स्वपुरं निजपुरीमागतः ॥ ३५ ॥

ककुद्मीत्यनवद्याङ्गीं शोभनावयवां सुतां बाहुशालिने बलाय दत्वा तपस्तप्तुं बदर्याख्यं नारायणाश्रमं ययावित्यन्वयः ॥३६॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिणवसप्तविंशतिचतुर्युगानि तैर्विशेषतः कल्पितो गणितः ॥ ३३—३५ ॥

त्यक्तमित्यादिप्राक्तनवृत्तान्तः ॥ ३६ ॥

इतिसारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयो नवमस्यायं सङ्गतः सङ्गतः सताम् ॥ ३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिनवचतुर्युगैः सप्तविंशतिचतुर्युगैर्विकल्पितो विभक्तः ॥३३॥३४॥

निजांशेन बलदेवेन सह अवतीर्णः ॥ ३५ ॥

पुण्यजना यक्षास्तत्त्रासात् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयोऽध्यायप्रकाशः ॥ ३ ॥

भाषा टीका ।

हे राजन् ! इतने में ही सप्तविंशति २७ चतुर्युगी परिमित काल व्यतीत होगया, तस्मात् अब तुम जल्दी जाओ और जो देवदेव आदि पुरुष के अंश से महा बली श्रीबलदेवजी हैं ॥ ३३ ॥

हे राजन् ! नरों में रत्न रूप उन बलदेवजी का तुम अपना कन्या रूप रत्न देदो । और वे तो साक्षात् भूतभावन भगवान् ही पुण्य रूप हैं श्रवण और कीर्त्तन जिनका ऐसे स्वयम् निज अंश से भूमि के भार उतारने के लिये अवतार लेकर प्रकट हुए हैं जब ब्रह्माजी ने राजा को इस प्रकार आज्ञादी तब राजाभी ब्रह्माजी को नमस्कार कर के अपने पुर में आये ॥ ३४—३५ ॥

उस पुर को तो बहुत काल से यक्षों के भय से इनके भ्राता लोग छोड़कर दिशाओं में जाय के रहे, राजा ककुद्मीने भी अपनी सुन्दर कन्या को बलशाली श्रीबलदेवजी को समर्पण करदी और आप तप करने के लिये बदरीनारायण आश्रम को जाते हुए ॥ ३६ ॥

इति श्रीमद्भागवत नवम स्कन्ध में प्रथम अध्याय
की, श्रीवृन्दावनस्थ भागवताचार्यकृत
भाषाटीका समाप्ता ॥ ३ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

## ॥ चतुर्थोऽध्यायः ॥

—○:०:○—

श्रीशुक उवाच ।

नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ।
यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् ॥ १ ॥
भ्रातरोऽभाङ्क्त किं मह्यं (१) भजाम पितरं तव ।
* ( नाभागस्तु पिता पुत्रं प्राह तं ब्रह्मचारिणम् । )
(२) त्वां ममार्यास्तताभाङ्क्षुर्मा पुत्रक ! तदादृथाः ॥ २ ॥
इमे अङ्गिरसः सत्रमासतेऽद्य सुमेधसः ।
षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥
तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ।
ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥
दास्यन्त्यथ ततो गच्छ तथा स कृतवान्यथा ।
तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥ ५ ॥
तं कश्चित्स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ।
उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥
ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः ।
स्यान्नौ ते पितरि प्रश्नः पृष्टवान् पितरं तथा ॥ ७ ॥
यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते ।
तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः ॥

नभगस्य वंशमाह—नभगस्यापत्यं नाभागः नाभागादम्बरीषो महाभागवतोऽभूदिति वक्ष्यंस्तद्धेतुत्वेन वंशप्रवर्त्तकस्य नभगस्य निष्कपटं चरितं तेन तु श्रीरुद्रप्रसादमाह—यं ततमित्यादिना। ब्रह्मचारिणं बहुकालं गुरुकुले वसन्तं नैष्ठिकोऽयमिति मत्वा विभागसमये तस्मै भागमप्रकल्प्यैव भ्रातरः सर्वं दायं विभज्य गृहीत्वा पश्चाद्गुरुकुलादागतं यं भागार्थिनं कविं विद्वांसं यविष्ठं प्रति ततं तातं पितरं दायं व्यभजन्नित्यर्थः ॥ १ ॥

एतदेव प्रश्नोत्तराभ्यां दर्शयति—तत्र नाभागः पृच्छति, हे भ्रातरो मह्यं किमभाक्त व्यभजन्त कं भागं मदर्थं यूयं प्रकल्पितवन्तः ? भ्रातर आहुः तदा विस्मृतमस्माभिरिदानीं तु तव पितरं विभजाम त्वं पितरं गृहाणेत्यर्थः । स च पितरं गत्वाऽऽह तत हे तात ! आर्याः ज्येष्ठाः मे मम त्वामभाक्षुर्भागमकुः मदीयोभाग-

* श्लोकार्द्धोयमधिकः पठ्यते वीरराघ० (१) भजामेति विज० (२) ममत्वार्या इति पाठान्तरं वीररा० ।

## श्रीधरस्वामिकृतभावार्थदीपिका ।

स्त्वमित्यर्थः। पाठान्तरे हे तात ! किमिदं ममाभाक्षुः भजाम पितरं तवेत्यु(क्त)वन्त आर्यास्त्वां मह्यं किमर्थं ददुरित्यर्थः। पिताऽऽह हे पुत्रक ! तत्तैरुक्तं माऽऽदथाः प्रतारणमात्रं तैः कृतं तस्मिन्नादरं माकार्षीः न ह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥

तथाऽपि तैर्भागत्वेन दत्तोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह—इमइति सपादाभ्यां द्वाभ्याम् । अभिप्लवः षडहो भवति पृष्ठ्यः षडहो भवतीति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसोऽपि ते सूक्तविशेषाज्ञानेन मुह्यन्ति कवे हे विद्वन् ! ॥ ३ ॥

तान्महात्मनोऽपि त्वम् "इदमित्थारौद्रम्" इति च "ये यज्ञेन दक्षिणाया" इति च वैश्वदेवे द्वे सूक्ते शंसय पाठय ततः कर्मणि समाप्ते सति ते स्वर्यन्तः स्वर्गं गच्छन्तः स्वसत्रे परिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यन्ति अथ तस्मात्तानाच्छ गच्छेति तथेत्यादि शुकवाक्यम् यथावत्कृतवान् सत्रपरिशेषितं सत्रावशिष्टं धनम् ॥ ४—५ ॥

पुरुषः श्रीरुद्रः दृश्यत इति दर्शनं शरीरं कृष्णं दर्शनं यस्य सः वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥ ६ ॥

तर्हि स्म तदेव ममेदमिति मानवो नाभाग उवाच, पुनश्च रुद्र उवाच नौ आवयोरस्मिन्विवादेति ते पितरि प्रश्नः स्यादिति पृष्टवानिति शुकोक्तिः ॥ ७ ॥

पृष्टस्य मनोर्वाक्यं यज्ञवास्तुगतमिति उच्छिष्टमृषीणाम् कचिदिति दक्षाध्वरे "उच्छेषणभागो वै रुद्रः" इति श्रुतेश्च किं च स देव ईश्वरः सर्वमप्यर्हति किम्पुनर्यज्ञावशिष्टमित्यर्थः ॥ ८ ॥ ९ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ नभगस्य मानवस्य वंशं तद्वृत्तान्तं चाह—नाभाग इति । नभगस्य मानवस्यापत्यं नाभागः अनुशतिकादित्वादुभयपदवृद्धिः शिवादित्वादण् उभयोराकृतिगणत्वादार्षत्वाद्वा अन्यान्यपत्यानि नभगस्य बभूवुरित्यर्थस्तो द्रष्टव्यं भ्रातरो दायं व्यभजन् इत्युत्तरग्रन्थानुगुण्यात् नाभागस्य वृत्तान्तं वदन् तं विशिनष्टि—यमित्यादिना । यं नाभागं यविष्ठं कनीयांसं भ्रातरस्तज्ज्येष्ठभ्रातरः बहुकालं गुरुकुले वसन्तं पश्चादागतमपि ब्रह्मचारिणं कविं ज्ञानिनं मत्वा दायं व्यभजन्, विभागकाले तस्मै भागमप्रकल्प्यैव स्वं स्वं पित्र्यं वस्तु विभागं कृतवन्त इत्यर्थः ॥ १ ॥

ततो भ्रातॄन्प्रति नाभाग आह—हे भ्रातरः ! मह्यं किमभाक्त व्यभजत मदंशकं भागं यूयं प्रकल्पितवन्तः इति । ततस्ते भ्रातरः आहुः भजाम, पितरं तवेति तदा विस्मृतमस्माभिरिदानीं न वयं विभागं प्रभवः, यदि तवापेक्षा तर्हि तव पितरं "जीवन्पुत्रेभ्यो दायं विभजेत्" इत्युक्तविधं विभाजकं भजाम प्राप्नुयाम तत्सन्निधिं गच्छामेत्यर्थः । यदि पिता भागं प्रयच्छेति तर्हि दास्याम इति भावः भजाम इति पाठान्तरमप्यस्ति तथा भजाथेत्यपि पाठान्तरम् अस्मिन्पाठे भजाथ (स)ेवध्वम् पितरं भागत्वेन गृहाणेत्यर्थः। ह्रस्वदीर्घयोरपपत्यय आ(र्ष)ः

निवृत्तप्रेषणात् भजेर्णिचि लोपमध्यमैकवचनम् ततो नाभागः पितुस्सकाशमेत्य तमुवाच मम त्वार्या तदा मांक्षुरिति । हे तत तात पितः ! मदार्याः ज्येष्ठभ्रातरः अभांक्षुः विभक्तवन्तः मां विनेति शेषः । मम त्वामेव भागं चक्रुरित्यर्थः । किं म आर्यास्तता भाङ्क्षुरिति पाठान्तरं तदा आर्याः ज्येष्ठभ्रातरः किं मे भाग विभक्तवन्तः इत्यर्थः । किं ममार्यास्तता भाङ्क्षुरिति पाठेऽप्ययमेवार्थः ततस्तं पिता नभग आह—मा पुत्रक तदादृथा इति । हे पुत्रक ! तस्मिन् दाये आदरं माकृथा इत्यर्थः ॥ २ ॥

कथं तर्हि मम जीविकेति पुत्रेण पृष्टः पितोवाच—इम इति । भजाथ पितरं तवेति पाठपक्षे मा पुत्रकेत्यादेरयमर्थः हे पुत्रक ! तत्तैरुक्तं माऽऽदथाः प्रतारणमात्रं तैः कृतं तस्मिन्नादरं मा कार्षीः नह्यहं दाय इव भोगसाधनमित्यर्थः । तथापि तैर्भागत्वेन कल्पितोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह—इमे इति । इमे आङ्गिरसः सुमेधसः सुबुद्धयोऽधुना सत्रमासते द्वादशाहाख्यं सत्रमनुतिष्ठन्ति तत्र द्वादशाहे सत्रे षष्ठं षष्ठमहः कर्मप्राप्य तेऽङ्गिरसो मुह्यन्ति प्रयोगस्य दुरवबोधत्वात्सूक्तविशेषाज्ञानाच्च मुह्यन्ति इत्यर्थः। षष्ठं षष्ठमुपेत्याह इति द्विर्वचनेन षडहस्य पुनः पुनः प्रयोगोऽपि वेद्य इति प्रतीयते अतएव हि पूर्वतन्त्रे "अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् आवृत्तिस्तु व्यवाये कालभेदात् स्यात्" इत्यधिकरणद्वये षडहस्य पुनः पुनः प्रयोगमाश्रित्य मध्यमस्य तावृत्तिः कर्त्तव्या न वेत्याशंक्य कर्मान्तराव्यवहितषडहावृत्तौ न कर्त्तव्या गवामयानादावभिप्लवादावभिव्यवधानावृत्तौ तु कर्त्तव्येत्युक्तं तत्र कर्मणि वैश्वदेवे कर्मणि विश्वदेवताप्रकाशके "इदमित्था रौद्रम्" इति च "ये यज्ञेन दक्षिणाया" इति च द्वे सूक्ते तैरङ्गिरोभिरपरिज्ञाते शंसय ॥ ३ ॥

ते सूक्ते एवं महात्मनोऽपि तान्प्रति शंसय स्तुतिहि ततः कर्मणि समाप्ते सति स्वर्यन्तः स्वर्गं गच्छन्तोऽङ्गिरसस्स्वसत्रपरिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यन्ति अतोऽद्य तान् गच्छेति, ततः स नाभागो यथा स्वपित्रोक्तं तथैव कृतवान् ततस्तेऽङ्गिरसः सत्रपरिशेषितं धनं तस्मै नाभागाय दत्त्वा स्वर्गं ययुः ॥४॥५॥

ततस्तद्धनं स्वीकरिष्यन्तं तं नाभागं कश्चित्पुरुष आगत्य उत्तरतो दिशाभागत्योवाच, पुरुषोऽत्र रुद्रः उत्तरग्रन्थानुगुण्यात् तं विशिनष्टि—कृष्णदर्शनः दृश्यत इति दर्शनं शरीरं कृष्णं दर्शनं यस्य स कृष्णदर्शनः उक्तिमेवाह—ममेदं वास्तुकं वास्तवाति वास्तुकं यज्ञभूमिगतं यज्ञावशेषितं वसु धनं मम मदीयम्॥६॥

इत्येवं रुद्रेणोक्ते सति तर्हि स्म तदेव मानवो नाभागः ऋषिभिरङ्गिरोभिर्ममैवेदं धनं दत्तमित्युवाच ततः पुना रुद्र उवाच स्यान्नौ ते पितरि प्रश्न इति नौ आवयोरस्मिन् विवादे ते तव पितरि प्रश्नः स्यात् तव पितैव तस्मिन् विवादपदे प्रष्टव्य इत्यर्थः । ततो नाभागः पितरमेत्य तथा पृष्टवान् ॥ ७ ॥

पृष्टः पिता तमाह—यज्ञेति । यज्ञभूमिगतमुच्छिष्टं यज्ञावशेषितं सर्वं वसु ऋषयः कश्चिद्दक्षाध्वरे रुद्राय भागं चक्रुः ततः स एव देवो रुद्रः सर्वं वास्तुकं वस्तु अर्हति तदीयमेव तत्सर्वमित्यर्थः "उच्छेषणभागो वै रुद्रः" इति श्रुतेरिति भावः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभाक्ष्णु: मदीयो भागस्त्वमभूरित्यर्थः। किं ममाऽर्यास्तताभाङ्क्षुरिति पाठे हे तात ! किमिदं ममाभांक्षुः भजाम पितरं तवेत्युक्तवन्तः आर्य्याः त्वां मह्यं किमर्थं ददुरित्यर्थः। पिताचाह,हे पुत्रक मद्नुकत्स्यसूनो ! नैतत्कं तत् मा आदृथाः नह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥

सरलबुद्धिना मया न पुनस्तेषां पार्श्वे गन्तव्यमिति चेत् तर्हि स्नेहेन तव जीवनोपायमहमेवोपदेक्ष्यामीत्याह–इमे इति सपादाभ्यां त्र्यभ्याम् । अभिप्लवः षडहो भवतीति विहितेषु षडहेषु आवर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसोऽपि सूक्तविशेषाज्ञानेन मुह्यन्ति हे कवे विद्वन् ॥ ३ ॥

तान् महात्मनोऽपि "इदमित्थारौद्रम"इति च "ये यज्ञेन दक्षिणया"इति च द्वे वैश्वदेवे द्वे सूक्ते शंसय पाठय ततश्च ते स्वर्यन्तः स्वर्गं गच्छन्तः तथेति शुकवाक्यम् ॥ ४।५॥

पुरुषः श्रीरुद्रः कृष्णदर्शनः श्यामवर्णः यद्वा स्फूर्तिप्राप्तं कृष्णं सदा पश्यन्तीति सः वास्तुकं यज्ञवास्तुगतम् ॥ ६ ॥

तर्हि तवैव ममेदमिति मानवो नाभाग उवाच पुनश्च रुद्र उवाच नौ आवयोरस्मिन् विवादे ते पितरि प्रश्नः स्यात् पृष्टवानिति शुकोक्तिः ॥ ७ ॥

पिता उवाच–यज्ञेति । कस्मिंश्चिदिति दक्षाध्वरे "उच्छेषणभागो वै रुद्रः" इति श्रुतेश्च किञ्च स देव ईश्वरः सर्वमप्यर्हति किम्पुनर्यज्ञावशिष्टमित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुपुत्रस्य नभगस्य नाभागो निष्कपटः पुत्रो जातस्तस्य अम्बरीषो महाभागवतः पुत्रोऽभूदिति नाभाग इति चतुर्भिर्वर्णयति–नभगस्य बहवः पुत्रा जाताः तेभ्यः पश्चान्नाभागोऽपत्यमभूदित्याह–नाभागो नभगापत्यमित्यादिना–यं नाभागं ब्रह्मचारिणं बहुकालं विद्यालाभार्थं गुरुसमीपे वसन्तं नैष्ठिकोऽयमिति मत्वा भ्रातरः पितृवित्तं सर्वं विभज्य गृहीत्वा पश्चात्कविं प्राप्तविद्यं गुरुसमीपादागतं भागार्थं यविष्ठं कनीयांसं प्रति ततं पितरं नभगं दायं भागं व्यभजन् ॥ १ ॥

एतदेव प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति, भ्रातर इति । तत्र नाभाग आह–हे भ्रातरः ! मह्यं किमभाङ्क्त व्यभजत ते आहुः तदा विस्मृतोऽस्माभिस्तव भागोऽधुना तव पितरं भजाम विभजाम, स पितरमाह–हे तत ! हे पितः ! आर्याः त्वां मम अभाङ्क्षुः मम भागं चक्रुः पिताऽऽह तत् नैतत्कं हे पुत्रक ! मा आदृथाः न हि अहं वित्तविभागभूत् तव भोग इत्यर्थः ॥ २ ॥

एवमुक्त्वापि तस्य जीविकोपायमाह–इमे इति सपादद्वयेन । हे कवे विद्वन् ! इमे समीपगाः आङ्गिरसः सत्रम् आसते अनुतिष्ठन्ति तत्र अभिप्लवः षडहोभवति पृष्ठ्यः षडहो भवतीति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसः सुबुद्धयोऽपि ते सूक्तविशेषापरिज्ञानान्मुह्यन्ति ॥ ३ ॥

महात्मनोऽपि तान्प्रति "इदमित्थारौद्रम"इति च"ये यज्ञेन दक्षिणया" इति च वैश्वदेवे द्वे सूक्ते शंसय ब्रूहि ततः कर्मणि समाप्ते सति ते स्वर्यन्तः स्वर्गं गच्छन्तः सत्रपरिशेषितं स्वसत्रावशिष्टम् आत्मनो धनम् ॥ ४ ॥

दास्यन्ति तुभ्यमिति शेषः अथ तस्मात् गच्छ स नाभागः तथा पितृवाक्यानुसारेण यथावत्कृतवान् ते आङ्गिरसोऽपि सत्रपरिशेषितं धनं तस्मै दत्त्वा स्वर्गं ययुः ॥ ५ ॥

तं नाभागं कृष्णमञ्जनप्रभं दृश्यते इति दर्शनं शरीरं यस्य सः श्रीरुद्रः वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥ ६ ॥

नाभाग आह–ममेदमृषिभिर्दत्तमिति, रुद्र आह हे मानव ! तर्हि इम स्यान्नौ ते पितरि प्रश्न इति नाभागोऽपि तथा पितरं पृष्टवान् ॥ ७ ॥

तत्पिता आह—ऋषयः कस्मिंश्चिद्दक्षाध्वरे यज्ञवास्तुगतं यज्ञभूमिगतम् उच्छिष्टमुर्यरितं रुद्राय भागं चक्रुः अतः स देवः सर्वमर्हति "उच्छेषणभागो वै रुद्रः "इति श्रुतेः ॥ ८—६ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरामानुजौ जयतः
श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–नभग के पुत्र नाभाग 'हुए जिन नाभाग को बहुत काल पर्यन्त ब्रह्मचर्य से गुरुकुल में वास करने से नैष्ठिक ब्रह्मचारी जानकर भ्राता लोगों ने धन के विभाग करते समय उनका भाग नहीं लगाया, जब कुछ दिन पीछे गुरु कुल से आये और भ्राताओं से अपना भाग मांगा तब सब भाइयों ने, इनको छोटे जानकर इनके हिस्से में पिता को देदिये ॥ १ ॥

उस समय नाभाग ने भाइयों से पूँछा, कि–हे भ्राताओं ! आपने हमको हिस्से में क्या दिया, तब भ्राता लोग बोले, कि–हमलोगों ने तुमको तुमारे भाग में पिताजी कोदिये । तब नाभाग पिता के पास जाकर बोले, कि–हे पिता जी ! बड़े भाइयों ने हमारे हिस्से में तुमको दिये हैं तब पिता बोले, कि–हे पुत्र ! उनके उस खोटे कहने पर आदर न करो उन्हों ने तो केवल प्रतारणा ( ठगाई ) करी है, क्योंकि ? मैं कुछ धनादि के सदृश भाग का वस्तु नहीं हूँ ॥ २ ॥

हे पुत्र ! तौभी कुछ चिन्ता नहीं, तुम देखो आंगिरस ब्राह्मण लोग अबही यहां यज्ञ करते हैं और हे कवे ! ये लोग बड़े बुद्धि वाले हैं तौभी छै दिनका जो अभिप्लव कर्म है उस में छटवें दिन का सूक्त भूलजाने से जब २ छटवें दिन का कर्म उपस्थित होता है तब २ वे लोग उस कर्म में मोहित होते हैं ॥ ३ ॥

वहां जाकर उस समय पर जो वे लोग दोसूक्त विश्वेदेव सम्बन्धि भूलें उनको तुम बोलदेना तब वे लोग स्वर्ग के जाने वाले अपने यज्ञ में बचे हुये धनको तुम को दे जांयगे ॥ ४ ॥

नाभागस्तं प्रणम्याह तवेश ! किल वास्तुकम् ।
इत्याह मे पिता ब्रह्मन् ! शिरसा त्वां प्रसादये ॥ ९ ॥
यत्ते पिताऽवदद्धर्मं त्वं तु सत्यं प्रभाषसे ।
ददामि ते मन्त्रदृशे ज्ञानं ब्रह्मसनातनम् ॥ १० ॥
* ( तस्मादसत्यं न ब्रूयात् परस्वं चापदि क्वचित् ।
सत्येन परिसन्तुष्टो भवामीष्टस्स मे भवेत् ) ॥ ० ॥
गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ।
इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥
य एतत्संस्मरेत्प्रातः सायं च सुसमाहितः ।
कविर्भवति मन्त्रज्ञो गतिं चैव तथात्मनः ॥ १२ ॥
नाभागादम्बरीषोऽभून्महाभागवतः कृती ।
नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥

राजोवाच ।

भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ।
न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥

श्रीशुक उवाच ।

अम्बरीषोमहाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् ।
विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥

---

भाषा टीका ।

इतना कह कर पिता ने कहा कि–तौ अब तुम वहां जाओ । बस इतना सुनकर नाभाग ने भी वहां जाकर जैसा पिता ने सिखाया रहा वैसाही किया, वे आंगिरस ब्राह्मण लोगभी यज्ञ के अन्त में यज्ञ में बचे हुए धनको नाभाग के लिये दे कर स्वर्ग को चले गये ॥ ५ ॥

यज्ञावशिष्ट उस धनको नाभाग के स्वीकार करते समय उत्तर दिशा से एक काले वर्ण का पुरुष आकर बोला, कि यह यज्ञावशिष्ट वास्तुक द्रव्य तो हमारा है ॥ ६ ॥

तब उस पुरुष से नाभाग बोला, कि हमको यह ऋषियों ने दिया है । तब वह पुरुष नाभाग से बोला, कि–अच्छा तो हमारे तुमारे इस विवाद में तुमारे पिताही से तुम पूछो तब नाभागने भी पिता के समीप जाकर प्रश्न किया ॥ ७ ॥

पिताने कहा कि पहिले ऋषि लोगों ने दक्ष के यज्ञ में, यज्ञवास्तुगत यज्ञ का उच्छिष्ट जो कुछ है उसका भाग श्रीरुद्र के लिये किया है इस लिये वही श्रीरुद्रदेव यज्ञ का उच्छिष्ट सर्व वस्तु लेने के योग्य हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीरुद्र आह यत्त इति ॥ १० ॥

इदमाख्यानं श्रुतिप्रसिद्धम् तथाहि बह्वृचब्राह्मणम् "नाभाने-

---

* इहश्लोकोऽयमधिकः पठ्यते वीर० रीत्या ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दिष्टं शंसति नाभानेदिष्टं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीत्" इत्यादि ॥ ११ ॥

अस्याख्यानस्य स्मरणे फलमाह–य एतदिति । आत्मनो गतिं च प्राप्नोतीति शेषः ॥ १२ ॥

कुत्रचिदपि न प्रतिहतो ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मितः कृत्यानलोऽपि यं नास्पृशत् अतोऽसौ महाभागवतोऽतएव कृती पुण्यवान् ॥ १३ ॥

तस्य श्रोतुमिच्छामि चरितमिति शेषः । ब्रह्मदण्डः कृत्यानलो न प्राभूत समर्थो बभूव ॥ १४ ॥

श्रियं सम्पदम् विभवमैश्वर्यम् अतुलं निरुपमम् ॥ १५ ॥

पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवस्त्वन्तुनं निरूपितमनुपादेयं मेने. तत्र हेतुः, विभवस्य निर्वाणं नाशं विद्वान् यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति मोहे निमज्जति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो नाभागः पितुर्वच आकर्ण्य वास्तुकं वसुग्रहणार्थमुपायान्तरमपश्यत्, रुद्रं प्रणम्येदमाह–किं हे ईश! यद्यपि मे पिता वास्तुकं वसु तवैव त्वत्सम्बन्ध्येवेत्याह–तथापि; हे ब्रह्मन्! शिरसा त्वां प्रार्थये प्रणतेन शिरसा त्वां वास्तुकवसुप्रदानाय प्रसन्नं कुर्यामिति वदन् प्रणतो बभूव ॥ ९ ॥

ततो रुद्र आह–यदिति । यद्यस्मात्ते तव पिता धर्ममेवाह तथा त्वमपि सत्यमेव प्रभाषसे तत्तस्मान्मन्त्रदृशो वैश्वदेवमन्त्रद्रष्टे ते तुभ्यं सनातनं ब्रह्म ब्रह्मविषयकं ज्ञानं ददामि ॥ १० ॥

तथा यज्ञपरिशेषितं द्रविणं मया दत्तं गृहाण द्वादशाहस्य सत्रस्यायागत्वाच्च यज्ञवास्तुगतं यत्सत्रपरिशेषितमिति यज्ञसत्रपदयोः प्रयोगः इतीत्थमुक्त्वा भगवान् सत्यव्रतमजः सत्यभाषणनिमित्तवात्सल्ययुक्तो रुद्रः तत्रैवान्तरधे ॥ ११ ॥

एतदाख्यानसंस्मरणफलमाह–यः पुमानेतदाख्यानं प्रातः सायञ्च समाहितचित्तः संस्मरेत्स कविः शास्त्रजन्यज्ञानी भवति मन्त्रज्ञश्च भवति तथा आत्मनः स्वस्य परस्य च गतिं याथात्म्यं च वेदेति शेषः ॥ १२ ॥

एवं नाभागवृत्तान्तमभिधायाथ तत्पुत्रं तच्चरित्रं चाह–नाभागादित्यादिना यावत्पञ्चमाध्यायसमाप्ति । नाभागादम्बरीषः संबभूव स च महाभागवतः कृती सापराधेष्वप्युपकारकरणशीलः शिशोषेण तच्चरित्रप्रश्नावसरप्रदानाय सर्वेशेण तद्वृत्तं वदन् तं विशिनष्टि, नास्पृशदित्यर्धेन । कुत्रचिदपि न प्रतिहतः प्रतिहतिशून्यो विप्रशापोऽपि यमम्बरीषं नास्पृशत् यद्यपि दुर्वासा न तस्मै शापं ददौ नाप्युत्कृत्य जटोत्पादितकृत्यायाः शापरूपत्वं तथापि शापवत्कृत्यायास्तत्प्रहार्थत्वात्कृत्यायां शापशब्द औपचारिको द्रष्टव्यः ॥ १३ ॥

एवमुक्ते लब्धप्रश्नावसरः पृच्छति राजा–भगवन्निति । हे मुने! राजर्षेर्धीमतस्तस्याम्बरीषस्य श्रोतुमिच्छामि चरित्रमिति शेषः । यत्राम्बरीषे विनिर्मुक्तः प्रयुक्तो दुरत्ययोऽपि ब्रह्मदण्डः कृत्यारूपो न प्राभूत् न समर्थो बभूव तं बाधितुमिति शेषः ॥ १४ ॥

एवमापृष्टो ब्रह्मदण्डस्याप्रभुत्वमाविष्कर्तुं तस्य महाभागवतः कृतीत्युक्तं महाभागवतत्वं प्रपञ्चयति–अम्बरीष इत्यादिना आरिराधयिषुरित्यतः प्राक्तनेन ग्रन्थेन । अम्बरीषो महाभागः श्रीमानतएव सप्तद्वीपयुक्तां महीमव्ययां निरुपद्रवां श्रियं सम्पदम् अतुलमसमानमनितरसाधारणां विभवं भोग्यभोगोपकरणादिसमृद्धिमैश्वर्यं वेत्यन्तत्सर्वमितरेषां दुःखेनापि लब्धुमशक्यं लब्ध्वापि त्रिभुवनवर्तिनां विभवस्य निर्वाणमवसानं नाशं विद्वान् तत्सर्वं स्वप्नसमितं स्वाप्नवस्तुतुल्यं मेने हेयममन्यतेत्यर्थः । तत्र हेतु, यद्यस्मात् विभवसङ्गात् पुमान् तमो नरकं विशति ॥ १५ ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मया त्वद्विचार्योक्तमित्युक्तो नाभागो गत्वा तं रुद्रं प्रणम्याह–हे ईश! वास्तुगतं तव किलेति मे पिता प्राह, तस्मादहं शिरसा त्वां प्रसादये क्षमस्वेति वाचा स नाभागः प्रत्याह ॥ ९ ॥

स पुरुषो नाभागं प्रत्याह–यत्त इति । ते पितुः सत्यवचसां धर्ममवदत् त्वं च सत्यं यथा तथ्यं वदसीति यत्तस्मान्मन्त्रदृशः वैश्वदेवसूक्तं दृष्टवतः ते तव सनातनं सदातनं वेदप्रमाणकं वा ब्रह्मनिरपेक्षम् अन्योपदेशाकाङ्क्षारहितं ब्रह्मविषयं वा ज्ञानं ददामि ॥ १० ॥

किञ्च यत्सत्रपरिशेषितं द्रविणं तच्च ददामि गृहाण तमप्रणीत तद्धि नौ सदैव पितरि प्रश्न इति स पितरमेनं पिता अब्रवीत्तनु ते पुत्रकादुरित्यदुरत्यम इत्यब्रवीत्तत्तु मे पुरुषः "कृष्णशवास्युपारत उपोदतिष्ठन्मम वा इदं ममैवास्तुहमित्यावितेति" तं पिताऽब्रवीत्तस्यैव पुत्रक तत्तु स तुभ्यं दास्यतीति स पुनरेत्याब्रवीत् तव ह वाव किल भगव इदमिति मे पिताहेतिसोऽब्रवीत्तदहं तुभ्यमेव ददामि य एवं सत्यमवादीः" इति । तस्मात्त्वं विदुषां सत्यमेव वदितव्यमिति हे पुत्रक! तेऽङ्गिरसस्तवास्तुमेनु दत्तवन्त एव किमिति पृष्टे स नाभागः स अङ्गिरस्त्वं न तत्र सन्देह इत्यब्रवीत् नर्हि किमत्र बाधकमिति तत्राह तत्तु म इति सत्रपरिशेषितं यद्धनं तदिदं ममैवेत्युक्त्वा पिता दत्तवान् स्वीकृतवानित्यर्थः । इत्युक्ते पिता नाभागं प्रत्याह तं पितेति ॥ ११ ॥

फलमाह–य एतदिति । कविस्तत्त्वविज्ञानी मन्त्रज्ञः ऋग्वेदतात्पर्यार्थज्ञानी आत्मनः स्वपरलक्षणस्य वस्तुनो गतिं स्थितिं ज्ञानं वा प्राप्नोतीति शेषः " स एष सहस्रसनिर्मन्त्रोयं नाभानेदिष्ठमुपैनं सहस्रं नमति प्रपद्येनाह्ना स्वर्गं लोकं जानाति य एवं वेद" इत्यनेनापि फलश्रुतेरर्थः सूचित इति । यद्वाह नाभानेदिष्टः सहस्रसनिः " वनषण सम्भक्तौ " इति धातोः सहस्रेत्युपलक्षणमनेकजनाय धनदाता "सन दाने" इतिधातोरनेक

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयज्ञानलाभोपेतः मन्त्रो मन्त्रज्ञानी पुरुषः एवमुक्तमितिहासार्थं वेद एनं पुरुषमुद्दिश्य सहस्रम् उपनमति पश्चनाम्ना पशुर्विमापेक्षितमुक्तपूर्वककृतकर्मणां स्वर्गं सुखं ज्ञानात्मकं लोकं सर्वाधारं हरिं प्रजानातीति भावः ॥ १२ ॥

कृतं पूर्णं ब्रह्मास्यास्तीति कृती सुकृती वा चक्रेण सुदर्शननाम्ना प्रतिहतो निरस्तः ॥ १३ ॥ १४ ॥

प्रथमतस्तस्य विरक्तिमाह—अम्बरीष इति । मह्यादिकं तत्सर्वं स्वप्नसंमितं स्वप्नवद्दर्शनत्वं मेन इत्यन्वयः । अत्ययां दीर्घकालीनां विभवं हिरण्यादिलक्षणाम् अनेनाम्बरीषशब्दार्थोऽपि सूचितः स आविष्करिष्यते अम्बरादिकं शीघ्रं नश्वरमिति ज्ञानमस्यास्तीत्यम्बरीषः "रुषरिषहिंसायाम्" मत्वर्थे अच्प्रत्ययः अम्बरचरीषा इच्छा यस्य स तथा आकाशवद्बहुलज्ञान इत्यर्थः व्यत्यासदृष्टान्तः सः अं ब्रह्म तस्य परिचरणे तत्रेच्छा यस्य स तथा ॥ १५ ॥

एतदेव स्पष्टयति विद्वानिति । विभवनिर्वाणं हिरण्यादिसम्पदां नाशं क्षणिकं विद्वान् पुमान्यद्यस्माद्विभवान्मुग्धस्तमो विशति ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शिरसा प्रणम्य ॥ ९ ॥

रुद्र उवाच-यत्ते इति । इदं चाख्यानं श्रुतिप्रसिद्धं तथाच बहवृचब्राह्मणं "नाभानेदिष्ठं शंसतीत्यादि ॥ १०-११ ॥

गतिं च प्राप्नोतीति शेषः ॥ १२ ॥

यो ब्रह्मशापः क्वचिदपि न प्रतिहतः अमोघत्वात् सोऽत्र त्वामुसोढहतियाति वागवज्रसहितकृत्यानलप्रच्छपरूपे श्रेयः ॥ १३ ॥

श्रोतुं चरितमिति शेषः ॥ १४ ॥

पुंसामतिदुर्लभं विभवं च स्वल्पतया तत्सर्वं स्वप्ने संस्तुतमिव मेने यतो विभवस्य निर्वाणं नाशं विद्वान् यत् यतो विनवासक्तेः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रुद्र आह-यदिति । मन्त्रदृशो मन्त्रद्रष्टे ते तुभ्यं ब्रह्म बृहत् सनातनं वेदसिद्धं ज्ञानं ददामि ॥ १० ॥ ११ ॥

आत्मनो गतिम् आत्मविद्यामित्यर्थः । प्राप्नोतीति शेषः ॥ १२ ॥

कृती पुण्यवान् क्वचिदपि न प्रतिहतो न निराकृतः ब्रह्मशापो ब्राह्मणनिर्मितः कृत्यानलरूपः शापः यं नास्पृशत् ॥१३॥

यत्राम्बरीषे निर्मुक्तः ब्राह्मणप्रयुक्तो दण्डः कृत्यानलः न प्राभूत न समर्थो बभूव तस्य श्रोतुमिच्छामि चरित्रमिति शेषः ॥ १४ ॥

सप्तद्वीपवतीं महीं श्रियं सम्पदं विभवमैश्वर्यम् अतुलम् अनुपमम् ॥ १५ ॥

पुंसां दुर्लभमपि तथापि यतः पुमान् तमो विशति तत् सर्वं स्वप्नवद्दर्शनत्वतया संस्तुतं निरूपितं मेने यतो मर्त्यनिर्वाणम् ऐश्वर्यं नाशं विद्वान् यद्वा विगतो भवः संसारो यतः स विभवो वासुदेवस्तस्मात्तज्जनीयान्निर्वाणं मोक्षं विद्वान् ॥ १६ ॥

---

भाषाटीका ।

नाभाग इतना पिता का वचन सुनकर फिर श्रीरुद्र के समीप जाकर प्रणाम कर बोला, कि हे ईश ! हमारे पिताने कहा है यज्ञ शेष वस्तु सब आपही का है तस्मात् हे ब्रह्मन् ! आपको मैं शिर से प्रणाम कर प्रसन्न करता हूं कि आप मेरा अपराध क्षमा करें ॥ ९ ॥

तब श्रीरुद्र बोले, कि—जो तुमारे पिता ने धर्मही कथन किया और तुम भी सत्य बोलते हो इसी कारण मंत्र दृष्टा ऐसे तुमारे लिये अब हम सनातन ब्रह्म विषयक ज्ञान देते हैं ॥ १० ॥

और यज्ञ में बचा हुआ वह जो हमारा द्रव्य है इसको भी तुम ग्रहण करो । सत्य वत्सल भगवान् श्रीरुद्र इतना कहकर अन्तर्ध्यान होगये ॥ ११ ॥

जो पुरुष इस आख्यान को सावधान होकर प्रातःकाल सायंकाल स्मरण करता है वह कवि ( ज्ञानी ) होता है और मंत्रज्ञ होता है और अपने आत्मा की गति को भी प्राप्त होता है ॥ १२ ॥

उसनाभाग से अंबरीष महाराज हुए जो बड़े सुकृती और महा भागवत हुए । जिनको ब्रह्म शापने भी स्पर्श नहीं किया, जो कि—ब्रह्म शाप कहीं भी प्रति हत ( व्यर्थ ) नहीं भया ॥१३॥

राजोवाच ॥

राजापरीक्षित बोले, कि—हे भगवान् ! परमज्ञानी उन राजर्षि श्रीअंबरीष के चरित्र के श्रवण करने की इच्छा करता हूं-कि जिसके ऊपर दुरत्यय ब्रह्मदंड का भी प्रभाव न चला ॥ १४ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-हे राजन् ! महाभाग अंबरीष सप्तद्वीपवती पृथिवी अचल श्री और अतुलविभव को प्राप्त होकर भी उस सबको स्वप्न सदृश मानते हुए, जो वैभव पुरुष को अति दुर्लभ है, क्योंकि वैभव के परिणाम को जानते रहे, कि-जिसके कारण से पुरुष नरकादि में प्रवेश करता है ॥ १५—१६ ॥

वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम् ॥ १७ ॥
स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ १९ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥ २० ॥
एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥
ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥
यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥
स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ।
शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं जानन्तोऽपि विषयैषिणो दृश्यन्ते, तत्राह—वासुदेव इति । भावं भक्तिं प्राप्तः येन भावेनेदं विश्वं लोष्टवदति तुच्छं स्मृतम् ॥ १७ ॥

भक्तिमेव सर्वेन्द्रियाणां भगवत्परत्वकथनेन प्रपञ्चयति—स वा इति त्रिभिः । श्रुतिं श्रोत्रमच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वयः ॥ १८ ॥

मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शने दृशौ नेत्रे श्रीमत्याः तुलस्याः तत्पादसरोजेन यत्सौरभं तस्मिन् तदर्पिते तस्मै निवेदितान्नादौ ॥ १९ ॥

कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय न तु कामकाम्यया विषयेच्छया, कथं चकार ? उत्तमश्लोकजनाश्रया रतिर्यथा भवेत्तथा, अनेन तद्भक्तेषु च परमभावं प्राप्त इत्येतत्स्फुटीकृतम् ॥ २० ॥

सर्वत्राऽऽत्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति विदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितः सन् महीं शशास पालयामास अनेनाधिकृतो धर्मोऽपि यथावद्दर्शितः ॥ २१ ॥

किं च यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास महाविभूत्योपचितान्यङ्गानि दक्षिणाश्च येषु तैः वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः धन्वनि धन्वदेशे निरुदके सरस्वतीमभिस्रोतम् तस्याः प्रतिलोममित्यर्थः ॥ २२ ॥

किं च यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूषणादिभिस्तुल्यरूपा व्यदृश्यन्त स इत्थमिति चतुर्थेनान्वयः न च देवानां निमेषाभावाद्वैलक्षण्यं यतोऽनिमिषाश्च व्यदृश्यन्त न निमिषन्तीति तथा आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमादिति भावः ॥ २३ ॥

यस्य यज्ञीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का वार्ता ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं विरक्तो बभूव अपितु भगवति वासुदेवे तद्भक्तेषु साधुषु भगवदाश्रितेषु च परमभावं भक्त्यात्मकमभिप्रायं गतः प्राप्तः, भावं विशिनष्टि, येन भावेनेदं विश्वं लोष्टवदनुपादेयममन्यतेत्यर्थः ॥ १७ ॥

वासुदेवे परं भावं गत इत्येतदेव प्रपञ्चयति—स वा इति । तावन्मनुष्यदेहस्य सर्वविधभगवत्सेवोपयुक्ततामावेद्य तथैव कृतवान्

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

येन परमभावेन प्रेम्णा इदं विश्वं लोष्ट्रवत्स्मृतं परामृष्टं भवेत् ॥ १७ ॥

तस्य प्रेम्णः साधनं भक्तियोगमाह—सवा इति त्रिभिः । मन आदीनां चकारेत्यनेनान्वयः, राज्ये स्वपुरुषानिव मन आदीनि स्वान्यपि स यत्रयत्र न्ययुङ्क्त तत्रतत्रैव तानि तदाज्ञां शिरसा निधायैवासन्निलसाधारणं तस्य राज्ञः साम्राज्यमिति भावः । श्रुतिं श्रोत्रं अच्युतस्य विष्णोः सतां तद्भक्तानां कथोदये च कथोत्कर्षे न तु ज्ञानकर्माद्युत्कर्षे इत्यर्थः । मुकुन्दस्य लिङ्गानां प्रतिमानां च आलयानां मन्दिराणां च मथुरादिनित्यसिद्धधाम्नां च वैष्णवानां च दर्शने श्रीमत्याः तुलस्याः तत्पादसरोजसम्पर्केण यत्सौरभं तस्मिन् भगवच्चरणार्पिततुलसीगन्ध इत्यर्थः । तदर्पिते महाप्रसादाऽन्ने रसनां जिह्वां हरेः क्षेत्रं मथुरादिपदमन्यत्रापि तन्मन्दिरादि तदनुसर्पणे तत्र तत्र पुनःपुनर्गमने हृषीकेशस्य पदयोश्चरणयोः पदानां भक्तानां चापि वन्दने काममभिलाषं दास्ये हरेरहं दासो भूयासमित्येवं न तु कथं कामकाम्यया विषयभोगेच्छायां सप्तम्यर्थे तृतीया, कथं चकार ? उत्तमश्लोकजनाः प्रह्लादादय आश्रयो यस्यास्तथाभूता निष्कामैव रतिर्यथा येन प्रकारेण स्यात् भवद्भा तथा चकारेत्येतत् स वै मन इत्यादिषु सर्वत्रैवान्वितं ज्ञेयम् ॥ १८–२० ॥

तस्य तादृशसाम्राज्यसम्पत्तावपि भक्ताचारस्य प्रतिनिष्ठ्यं नाभूदित्याह—एवमिति । सदा प्रतिदिनमेव आत्मनः स्वस्य एवं कर्मकलापं स्मरणकीर्तनमन्दिरमार्जनादिकं विदधत्स्वयमेव कुर्वन् महीं, अशास्, कर्मकलापं कीदृशम् ? परमेश्वरे कृष्णे सर्वेण श्रोत्रादीन्द्रियवृत्तिसहितेनैवात्मना मनसा भावो रतिर्यतस्तम् अधियज्ञे तपोज्ञानादिभ्योऽप्यधिको यज्ञः पूजा यस्य तस्मिन् हरिभक्तिनिष्ठब्राह्मणैः अभिहितः स्वमप्याश्रित्य यामान् निर्विक्षेपमेव सर्वात्मना हरिं भज राज्यकर्माणि स्वनियुक्तैर्योग्यपुरुषैरेव महीं शाधि चेति शिक्षितस्सन्नित्यर्थः ॥ २१ ॥

तथैव राज्याधिकारोचिताश्वमेधादियज्ञकरणं च आदिभरतवसिष्ठरभिमानस्य तस्य प्रतिनिवृत्तिरित्याह—ईजे इति । महासम्पत्त्यैव हेतुना उपचितानि सम्यगेव निर्व्यूढानि अङ्गानि दक्षिणाश्च येषु तैः वसिष्ठादिभिः अप्रतिनिर्मितैस्तैर्विस्तृतैः धन्वनि धन्वदेशे सरस्वती सरस्वत्याम् अभिस्रोतं स्रोतोऽभिमुखमभिलक्ष्यते न स्वयन्तु ततो विदूरे स्वराजधान्यां निर्विक्षेपं परिचर्यां कुर्वन्नेवाऽतिष्ठदिति व्यञ्जितम् ॥२२॥

गीर्वाणैः सह तुल्यरूपाः तत्रानिमिषत्वेन देवानां वैलक्षण्यं वाच्यं यतो मनुष्या अपि अद्भुतयज्ञदर्शनादनिमिषा व्यदृश्यन्त दृष्टाः ॥ २३ ॥

यस्य मनुजैः तत्पालयमानलोकैः स्वर्गो न प्रार्थितः किं स्वर्गीयभोगादधिकभोगप्राप्त्या ? नेत्याह—स्वर्गयज्ञैरित्यादि ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भावं भक्तिं परफलाभिसन्धिरहितं येन भावेन ॥ १७ ॥

तस्य वासुदेवे भक्तिमेव निरूपयति—स इति त्रिभिः । अच्युतसत्कथानामुदये भवणे श्रुतिं भवणं चकार ॥ १८ ॥

मुकुन्दस्य लिङ्गानां विग्रहाणां यानि आलयानि तेषां स्थानानां दर्शने दृशौ नेत्रे तद्भक्तानां गात्राणि चरणादीनि तत्स्पर्शने अङ्गसङ्गमं मस्तकादिमङ्गमम् श्रीमत्याः तुलस्याः तत्पादसरोजेन यत्सौरभं तस्मिन् घ्राणम् तदर्पिते तस्मै निवेदितेऽन्नादौ रसनां रसनेन्द्रियं चकार ॥ १९ ॥

हरेः क्षेत्राणि श्रीमथुरादीनि तीर्थानि तदर्थं यत्पदानुसर्पणं शिबिकादियानं विहाय पद्भ्यामेव गमनं तत्र पादौ चकार हृषीकेशपादयोरभिवन्दने शिरः कामं सङ्कल्पं दास्ये चकार न तु कामकाम्यया विषयेच्छया किं बहुना उत्तमश्लोकस्य विष्णोर्ये जनाः पूर्वे भागवताः तदाश्रया तत्कर्तृका यथा रतिस्तथा तस्येति शेषः ॥ २० ॥

तन्निष्ठैर्भागवतैर्विप्रैरभिहित उपदिष्टः एवमुक्तप्रकारेण सर्वं संपूर्णम् आत्मभावं परमात्मभक्तिम् आत्मनः कर्मकलापं नित्यनैमित्तिकक्रियासमूहं च भगवति सदा विदधत् महीं शशास पालयामास ॥ २१ ॥

किञ्च असौ अम्बरीषः महाविभूत्या उपचितानि अङ्गानि दक्षिणाश्च येषु तैः ततैर्विततैः अश्वमेधैरयजत् यज्ञाधिष्ठातारं वसिष्ठादिभिर्हेतुभूतैरीजे आराधयामास धन्वनि निरुदके देशे सरस्वतीमभिस्रोतं स्वप्रवाहस्याः प्रतिलोमम् ॥ २२ ॥

किञ्च यस्य क्रतुषु सदस्यादयः अद्भुतदर्शनवशान्निमिषोपरमात् निमिषाः गीर्वाणैः तुल्यरूपा व्यदृश्यन्त स इत्थं भक्तियोगेन हरिं प्रीणयन् सङ्गान् जहाविति चतुर्थेनान्वयः ॥ २३ ॥

तस्य निष्कामहरिभक्तत्वं कैमुतिकन्यायेनाह—स्वर्ग इति द्वाभ्याम् ॥ २४ ॥

---

### भाषा टीका ।

वह अंबरीष भगवान् श्रीवासुदेव के विषय तथा उनभक्त साधुजनों के विषय परमभाव को प्राप्त होगये जिस भाव के प्राप्त होने पर यह विश्व लोष्ठ सदृश जान पड़ता है ॥ १७ ॥

तब तौ—

> वाने हरी चरण में मन को लगायो ।
> वाणी हुते हरि हि के गुण को जु गायो ॥
> हाथों हु से सदन की करते बुहारी ।
> कानों सु नित्य सुनते हरि कीर्ति भारी ॥ १८ ॥

और इसी प्रकार श्रीमुकुन्द के मूर्त्ति और मंदिरों के दर्शन में नेत्रों को लगाया, और अपने अंग के संगम को भागवान के भक्तों के गात्रस्पर्श में लगाया, और इन्द्रियों को श्रीहरिके चरणकमल के सौरभ में अर्थात् चरणाब्ज में समर्पित तुलसी के गंध में लगाई इसी प्रकार रसना इन्द्रिय को आपके निवेदित प्रसाद अन्नादिकों में लगाई ॥ १९ ॥

और अपने पगों को श्रीहरि के क्षेत्र गमन में, शिरको हृषीकेश के पदाभिवन्दन में, और अपनी चाहना को आपके दास्य रस की चाहना में लगाई विषयों की इच्छा में नहीं लगाई, कि जिसमें उत्तम श्लोक [ श्रीकृष्ण ] के जनों में प्रीति हो ॥ २० ॥

(१)समर्द्धयन्ति तान्कामाः स्वाराज्यपरिभाविताः ।
दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ २५ ॥
स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ।
स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वान् शनैर्जहौ ॥ २६ ॥
गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ।
अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ २७ ॥
तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ।
एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥
आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ।
युक्तः साम्वत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥
व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ।
स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥
महाऽभिषेकविधिना सर्वोपस्करसम्पदा ।
(२)अभिषिच्याम्बराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥
तद्गतान्तरभावेन पूजयामास केशवम् ।
ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥

भाषा टीका ।

इस प्रकार राजा अंबरीष अपने सर्व कर्म कलापों को अधियज्ञ भगवान अधोक्षज परब्रह्म के विषय सर्वात्मभाव से समर्पण करता हुआ ब्राह्मणों के कहने से इस पृथिवीको भगवन्निष्ठ होकर पालन करते रहे ॥ २१ ॥

और धन्वदेश में सरस्वती जल का उद्देश्य करके बड़ी विभूति से वृद्धि को प्राप्त हुए, अंग और दक्षिणादिकों से और वसिष्ठ असित गौतमादिकों के विधि विधान द्वारा विस्तारित ऐसे उत्तम आश्रम में अश्वमेध यज्ञों से यज्ञपति ईश्वर श्रीगोविन्द का यजन करते हुए ॥ २२ ॥

जिन अम्बरीष महाराज के यज्ञों में सुन्दर वस्त्र पहिने हुए सभासद और ऋत्विक् जन देवताओं के साथ में तुल्य रूप वाले देख पड़ते हुए यदि कहो कि देव लोग तो अनिमिष रहे ? तो ये सब लोग भी आश्चर्य से दर्शन में उत्सुक होने से निर्निमेष रहे ॥ २३ ॥

जिन अम्बरीष महाराज के राज्य में मनुष्यों को भी स्वर्ग की इच्छा नहीं होती रही क्योंकि वे लोग सदा उत्तम श्लोक श्रीहरि के चरित्रों को सुनते रहे और गान करते रहे ॥२४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्तां स्वर्गप्रार्थनशङ्काऽपि यद्यतः मुकुन्दं हृदि पश्यतस्तान् जनान्कामा विषया न समर्द्धयन्ति न हर्षयन्ति, कथम्भूताः स्वाराज्येन स्वरूपसुखेन परिभाविता अतिशयिताः अतएव सिद्धानामपि दुर्लभाः नानीति पाठे यान्मनुजान् स्वाराज्येत्यत्रापि द्वितीयान्तपाठे मनुजानां विशेषणम यमिति पाठे यमम्बरीषं पश्यतामिति पाठे सिद्धानां विशेषणम ॥ २५ ॥

एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति स इत्थमिति द्वाभ्याम ॥ २६ ॥२७ ॥

नन्वेवम्भूतोऽसौ कथं प्रतिपक्षान् जयेत्तत्राह–तस्मा इति ॥ २८॥

तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदण्डो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह–आरिराधयिषुरित्यादिना यावदध्यायसमाप्ति ॥ २९ ॥

अर्चयत् आडागमाभाव आर्षः ॥ ३० ॥ ३१ ॥

ब्राह्मणांश्च पूजयामास सिद्धार्थानासकामान्पूजानपेक्षानपि ॥ ३२ ॥

(१) नयर्द्धयन्ति यान् कामाः इति वीर० । (२) अभिषिच्य वराकल्पैः इति विज० पाठः ।

गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ।
पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्यैकादशीव्रतनिष्ठया दर्शितयैव सर्वभक्तिनिष्ठां ज्ञापयन्नाह, आरिराधयिषुरित्यादि ॥ २९ ॥

तस्य स्वायुःपर्यन्तमेकादशीव्रतनिष्ठत्वेपि संवत्सरमात्रन्तु मधुरायामेकादशीव्रतं कर्त्तव्यमित्यभिलाष आसीदस्तस्तत्पूर्त्तो सत्यां व्रतान्त इति । दशमीद्वादश्योर्विहितेतरभोजनाभावेन एकादश्यां निराहारत्वेन त्रिरात्रमुपोषितः ॥ ३० ॥

सर्वेषामुपस्कराणां सर्वौषध्यादीनां सम्पद्यत्र तेन आकल्पैः विभूषणैः ॥ ३१ ॥

तद्गतान्तरभावेन तदेकमनस्त्वेन ॥ ३२ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भक्तानां स्वर्गप्रार्थनशङ्कापि यतः तान् अम्बरीषमनुजान् स्वाराज्यं क्षेत्रज्ञस्वरूपप्राप्तिलक्षणो मोक्षस्तेन भाविता अतिशायिताः अत एव सिद्धानामपि दुर्लभाः काम्यन्त इति कामाः सर्वक्लेशविनिर्मुक्तत्वकालादिभयशून्यत्वस्वरूपानन्दत्वमरत्वादयो गुणाः न समर्द्धयन्ति, तत्र हेतुः मुकुन्दं हृदि पश्यतः अनेन संसारिभ्यः सिद्धानां सिद्धेभ्यः क्षेत्रज्ञस्वरूपप्राप्तिलक्षणमोक्षवतां तेभ्यो मुकुन्दध्याननिष्ठानामधिकं सुखं ततोपि मुकुन्दध्यानफलभूततद्भावापत्तिलक्षणमोक्षवतां निरतिशयं सुखमिति द्योत्यते ॥ २५–२८ ॥

महिष्या तुल्यशीलया सह कृष्णमारिराधयिषुः साम्वत्सरं व्रतं षष्ठस्कन्धप्रसिद्धं दधार, तथा—

"सम्पूर्णैकादशी यत्र द्वादशी च तथा भवेत् ।
त्रयोदश्यां मुहूर्त्तार्द्धं वञ्जुली सा हरिप्रिया ॥
शुक्ले वा यदि वा कृष्णे यदा भवति वञ्जुली ।
एकादशीदिने भुक्ता द्वादश्यां कारयेद्व्रतम ॥
पारणं द्वादशीमध्ये त्रयोदश्यां न कारयेत्" ।

इति पाद्मोक्तं द्वादशीव्रतं च शुक्लं साम्वत्सरव्रतान्ते कालागत्या योजितं दधार चकारेत्यर्थः ॥ २९ ॥

तदेवाह-व्रतान्ते इत्यादिना। कार्त्तिके मासि व्रतस्य साम्वत्सरव्रतस्य योऽन्तः समाप्तिः कार्त्तिकशुक्लत्रयोदशीगतायां द्वादश्यामित्यर्थः, त्रिरात्रं समुपोषितः दशम्यां मध्यान्हे समये एकभुक्तः यद्यपि "एकादशीदिने भुक्ता द्वादश्यां कारयेद्व्रतम" इति पाद्मोक्तिस्तथाप्यशक्तविषयमेतद्वाक्यमिति मत्वा भक्त्यातिशयेन एकादश्यां द्वादश्यां च अनोपवास एवं त्रिरात्रं सम्यगुपोषितः कृतोपवासः कालिन्द्यां स्नातः कचित् कस्मिंश्चित्स्थाने मधुवने हरिमर्चयदित्यन्वयः ॥ ३०—३१ ॥

सिद्धार्थान् अवाप्तकामांश्च पूजयामास ॥ ३२ ॥

---

भाषा टीका ।

स्वर्ग तो क्याही वस्तु है परन्तु जो लोग अपने हृदय में मुकुन्द को देखने वाले हैं ऐसे लोगों को तो, बडे २ सिद्धों को दुर्लभ जो विषय भोग हैं वेभी नहीं हर्षजनक होते हैं क्योंकि ? वे सब विषय सुख स्वरूप सुख से तिरस्कृत हो गये हैं ॥ २५ ॥

वह पार्थिव राजा अम्बरीष इस प्रकार तपयुक्त भक्तियोग से और अपने धर्म से श्रीहरि को प्रसन्न करता हुआ धीरे २ सर्व सङ्गों को छोडता भया ॥ २६ ॥

गृह, दारा, सुत, बन्धु, उत्तम हाथी, रथ, अश्व, और पदाति इत्यादिक सेनाओं, तथा अक्षय रत्न, आभरण, आयुधों में और अटूट खजानों में से भी राजा अपनी खोटी बुद्धि अर्थात् ममता को छोडता भया ॥ २७ ॥

राजा अम्बरीष के भक्ति एकान्त भाव से प्रसन्न होकर श्रीहरि ने शत्रुओं की सेना को भय प्राप्त करने वाला अपना सुदर्शन चक्र अपने दास की रक्षा के लिये दिया ॥ २८ ॥

एक समय राजा अपने सदृश स्वभाव वाली रानी सहित श्रीकृष्ण के आराधन की इच्छा से सावधान होकर एक वर्ष तक द्वादशी का व्रत धारण करते हुए ॥ २९ ॥

कार्तिक मास में व्रत के अन्त में तीन रात्रि पर्यन्त उपवास किया और श्रीयमुनाजी में स्नान करके मधुवन में हरि पूजन करते रहे ॥ ३० ॥

सर्व सामग्री और सम्पत्तियों से महा अभिषेक की विधि से श्रीकृष्ण को अभिषेक कराया और उत्तमोत्तम वस्त्र पहनाये गन्ध धूप दीप मालाओं से पूजा करी ॥ ३१ ॥

और परमात्मा में आन्तरिक भाव से श्रीकेशव का पूजन किया। और समृद्ध ब्राह्मणों को भी फिर अपनी भक्ति से पूजन करते हुए ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूप्याङ्घ्रीणां रूप्यखुराणाम पयःशीलादिसम्पदो यासां तासाम् ॥ ३३ ॥

प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥
लब्धकामैरनुज्ञातः पारणायोपचक्रमे ।
तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ ३५ ॥
तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥
प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ।
निममज्ज बृहद्ध्यायन् कालिन्दीसलिले शुभे ॥ ३७ ॥
मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे ॥ ३८ ॥
ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ।
यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ ३९ ॥
अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ।
प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न्यर्बुदानि षट् षष्टिकोटीः ॥ ३४ ॥

तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥

आनर्च अर्चितवान् अभ्यवहाराय भोजनाय ॥ ३६ ॥

आवश्यकं नैयमिकं माध्याह्निकं कर्म कर्तुं गतः बृहद्ब्रह्म ॥ ३७-३८ ॥

धर्मसङ्कटमेवाह—यद्यतो ब्राह्मणातिक्रमे दोषो धर्मः द्वादश्यामपारणेऽपि दोषो व्रतवैगुण्यं यत्कृत्वा यस्मिन्कृते ॥ ३९ ॥

एवं द्विजैस्सह विचार्य निश्चिनोति—अम्भसेति । व्रतस्य पारणं समाप्तिं तदशितमाहुरशितं नेति चाहुः श्रुतिश्च "अपोऽश्नाति तन्नैवाशितं नैवानशितम्" इति ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः षड्गवां न्यर्बुदानि षष्टिकोटिं साधु यथा तथा विप्रेभ्यः प्राहिणोत्प्रददौ कथम्भूतानाम् गवां रुक्मशृङ्गीणां स्वर्णकवचितविषाणयुक्तानां राजताङ्घ्रिकृतपादानां शोभनानि वासांसि यासां पयः क्षीरं च शीलं सुखभावश्च वयः अपूर्वप्रसवत्वं च रूपं चाङ्गशृङ्गखुरविषाणादिसौष्ठवं च वत्साश्च उपस्कराः दोहनपात्रादीनि च तेषां सम्पत्समृद्धिर्यासां तासां ततः स्वादु मृष्टं गुणवत्तरं षड्रसोपेतमन्नमग्रे ब्राह्मणान् भोजयित्वा ॥ ३३—३४ ॥

लब्धाः कामाः दक्षिणादयो यैस्तैर्द्विजैरनुज्ञातः पारणायोपचक्रमे, तर्हि तदैव भगवान् दुर्वासास्तस्याम्बरीषस्यातिथिः साक्षादभूत्प्रत्यक्षो बभूव ॥ ३५ ॥

तमागतमतिथिं सम्यक्प्रत्युत्थानादिभिरभ्यर्च्य तस्य पादयोर्मूलमुपागतः प्रणतोऽभ्यवहाराय भोजनाय ययाचे भवताऽत्र भोक्तव्यमिति प्रार्थयामासेत्यर्थः ॥ ३६ ॥

ततः स दुर्वासाः तस्याम्बरीषस्य याच्ञां प्रतिनन्द्यावश्यकं नैयमिकं माध्याह्निकं कर्तुं गतः शुचौ शुद्धे कालिन्द्याः यमुनाया जले बृहत् ब्रह्म ध्यायन् निममज्ज स्नातवानित्यर्थः ॥ ३७ ॥

तदा धर्मज्ञोऽम्बरीषो द्वादश्यां मुहूर्तार्धेन घटिकामात्रेणावशिष्टायां सत्यां पारणंप्रति सङ्कटं पारणाविषयकं सङ्कटं द्विजैः सह चिन्तयामास ॥ ३८ ॥

सङ्कटमेवाह—ब्राह्मणातिक्रम इति । ब्राह्मणातिक्रमे ब्राह्मणस्यातिथेरतिक्रमे दोषः अतिथिं निमन्त्र्य तमनाहूयैव भोजने महान्प्रत्यवायस्तथा द्वादश्यामपारणे च दोषः व्रतवैगुण्यादित्येवंविधं सङ्कटं प्राप्तं तत्र यत्कृत्वा साधु मे भूयात् यत्कृत्वेत्यव्ययमनुवादो यथाचेत्यर्थः । यथा च मे साधु भूयादित्यर्थः यथा चाधर्मो मां न स्पृशेत् तथा ब्रूतेति शेषः ॥ ३९ ॥

एवं द्विजैर्विचार्य निश्चिनोति—अम्भसेति । केवलेनाम्भसा व्रतस्याङ्गभूतपारणं करिष्ये एवं चेत्पारणस्य कृतत्वान्न व्रतवैगुण्यं नाप्यतिथ्यतिक्रमणदोषः अनशनादित्याह—प्राहुरिति । हे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्राः ! यैदपां भक्षणं तदशितं नाशितं चाहुः श्रुतय इति तथा च श्रुतयः "अपोऽश्नाति तन्नैवाशितं तन्नैवाशितम्" इत्याद्याः ॥४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शतकोटिसङ्ख्यान्यर्बुदम् ॥ ३४ ॥ ३५ ॥

अभ्यवहाराय भोजनाय ॥ ३६ ॥

आवश्यकं नित्यकर्म बृहत् ब्रह्म बृहदेव ध्यानोद्दिष्ट् ब्रह्मवः ॥ ३७ ॥

धर्मसङ्कटे धर्मापदि प्राप्तायां सत्याम् ॥ ३८ ॥

आमन्त्रितब्राह्मणातिक्रमे दोषोऽस्ति द्वादश्यामपारणे श्रीहरिप्रियद्वादशीभोजनाकरणे च दोषोऽस्ति यत्तस्मायत्कृत्वा मे साधु भूयादुभयदोषपरिहारेण श्रेयः स्यात् उभयोरेकातिक्रमलक्षणो अधर्मो वा मां न स्पृशेदिति तद्विजैः सह चिन्तयामास ॥ ३९ ॥

एवं सञ्चिन्त्य द्विजानां हार्दं स्वहार्दं चैकमेवेत्याशयेनाह—अम्भसेति । केवलेन श्रीहरिप्रसादरहितेन; तत्र किं प्रमाणम् ? इति तत्राह—आहुरिति । हे विप्राः अम्भसत्रं अम्भसां पारणम् अशितं भुक्तं पूर्वव्रतपारणार्थं भुक्तं भवति उत्तरकर्मार्थम् अनशितमभुक्तं भवतीत्याहुर्वेदाः इति हि यत्तदिदं युष्माकं च सिद्धं तस्मात्तेनैव व्रतपारणां करिष्ये इत्यन्वयः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षट् न्यर्बुदानि षष्टिकोटीः ॥ ३४—३६ ॥

बृहत् ब्रह्म ॥ ३७ ३८ ॥

यद्यस्मात् ब्राह्मणातिक्रमे द्वादश्यामपारणे च दोषः तस्मादत्र धर्मसङ्कटे यत् कृत्वेत्यादिभूयात् भवेत् ॥ ३९ ॥

ततश्च विप्रांस्तूष्णीं स्थितान् समाधातुमशक्नुवतो ऽभिलक्ष्य स्वयमेव ,विचार्य्य स निश्चयमाह—अम्भसेति । हेविप्राः तत् अशितमिति द्वादश्या अनतिक्रमः नाशितमिति ब्राह्मणस्याप्यनतिक्रम इति अत्र श्रुतिश्च "अपोऽश्नाति तन्नैवाशितं नैवानाशितमिति ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रुक्मःशीखाविसम्पदो यासाम् ॥ ३३ ॥

न्यर्बुदं दशकोटयः—

"एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।

न्यर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥

जलधिश्चान्त्यं मध्यपरार्द्धमिति दशगुणोत्तरासंज्ञा ।

संख्यायाः किल लोके व्यवहारार्थं यथा कृता पूर्वैः ॥

इति वाक्यात् ॥ ३४ ॥

तस्य पारणाय प्रवृत्तस्य तर्हि तदैव दुर्वासा अतिथिः साक्षात्स्वयमागतो ऽभूत् ॥ ३५ ॥

बहून् सम्पूज्य व्रतपारणाय प्रवृत्तोपि भूयः नमानच अर्चितवान् अभ्यवहाराय भोजनाय च यथा प्रार्थयामास ॥ ३६ ॥

आवश्यकमवश्यं करणीयं कर्म कर्तुं गतः बृहद्ब्रह्म ॥ ३७ ॥

एवमल्पां द्वादशीं दृष्ट्वा शीघ्रमुत्थाय आवश्यकाः क्रियाः समाप्यापि पारणार्थं प्रवृत्तः दुर्वाससि अनागते पारणां प्रति मुहूर्तार्द्धावशिष्टायां द्वादश्यां सत्यां तस्मिन्धर्मसङ्कटे द्विजैः सह चिन्तयामास ॥ ३८ ॥

धर्मसङ्कटे चिन्तामेवाह—ब्राह्मणातिक्रमे दोषः निमन्त्रितविप्रोपेक्षणं प्रत्यवायरूपो दोषः द्वादश्यामपारणेऽपि व्रतवैगुण्यरूपो दोषः अस्मिन्सङ्कटे यत्कृत्वा मे साधु भूयात् अधर्मो वा मां न स्पृशेत् तच्चिन्त्यताम् ॥ ३९ ॥

एवं द्विजैः सह विचार्य निश्चिनोति—अम्भसेति । व्रतस्य पारणं समाप्तिं केवलेनाम्भसा करिष्ये तत्केवलाम्भक्षणं हे विप्राः ! अशितमाहुः अशितं नेति चाहुः शिष्टाः शिष्टव्यवहारमूला श्रुतिः "अपोऽश्नाति तन्नैव प्राशितं तन्नैवाप्राशितम्" इति ॥ ४० ॥

---

भाषाटीका ।

और गायों के सुवर्ण से सींग मँढाकर चांदी से खुर मंढाकर ऊपर सुन्दर रेशमी झूल उढाकर बहुत दूध वाली सीधी थोड़ी अवस्थाकी बछड़ा और ऊपरके उपकरण सहित ॥ ३३ ॥

ऐसी २ साठ कोटि गायें, ब्राह्मण और साधुओं को खाद्य और गुणवत् अन्नभोजन कराकर उनके घर पहुँचादीनी ॥ ३४ ॥

ब्राह्मणों ने भोजन कर दक्षिणालेकर राजा को भोजन की आज्ञा दीनी । इतने हीमें साक्षात् दुर्वासा भगवान् अतिथी पधारे ॥ ३५ ॥

राजा ने उनको उठकर आसन देकर पूजा करी और दण्डवत् प्रणाम कर भोजन के लिये प्रार्थना करी ॥ ३६ ॥

दुर्वासाने भी राजाकी याचना को स्वीकार करके श्री यमुनाजी में अपना आवश्यक कर्म करने को गये और वहां पर स्वच्छ कालिन्दी के जल में गोता लगाकर ब्रह्म ध्यान करने लगे ॥ ३७ ॥

जब द्वादशी आधे मुहूर्त अवशिष्ट रही राजा धर्म सङ्कट में होकर ब्राह्मणों को बुलाकर विचार करने लगे ॥ ३८ ॥

राजा ब्राह्मणों से बोले, कि—निमन्त्रित ब्राह्मण के अतिक्रमण का दोष जैसे न हो और द्वादशी में नहीं पारण कामी जो दोष है वहभी नहीं हो, हे ब्राह्मणों ! ऐसा उपाय करो कि—जिसमें मेरेलिये, दोष न हो और पारण भी होजावे ॥ ३९ ॥

इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाऽच्युतम् ।
प्रत्याचष्ट कुरुश्रेष्ठ ! द्विजागमनमेव सः ॥ ४१ ॥
दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ।
राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥
मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ४३ ॥
अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ।
धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ४४ ॥
यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ।
अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ४५ ॥
एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ४६ ॥
तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ।
वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ४७ ॥
प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ।
ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥

भाषा टीका ।

ऐसा कहकर बोला, कि-अथवा केवल जल मात्र से व्रत का पारण करूंगा हे विप्रो ! जल भक्षण भोजन किया सा भी है और नहीं किया सा भी है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रत्याचष्ट प्रत्यैक्षत ॥ ४१-४२ ॥

प्रचलत्कम्पमानं गात्रं यस्य भ्रुकुटिभ्यां कुटिलमाननं यस्य ॥ ४३—४७ ॥

क्रुद्धमहिं पावको दावाग्निरिव ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं विनिश्चित्येति शेषः । स राजर्षिरम्बरीषोऽच्युतं मनसा चिन्तयन् धर्मस्य सुसूक्ष्मत्वात् तदज्ञाननिमित्तबाधकपरिहाराया्च्युतं चिन्तयन्निति भावः अपः प्राश्य हे कुरुश्रेष्ठ ! द्विजस्य दुर्वाससः आगमनमेव प्रत्याचष्ट प्रत्यैक्षत ॥ ४१ ॥

ततः कृतमावश्यकं माध्याह्निकं येन स दुर्वासाः यमुनायाः कूलात्तीरादागतः राज्ञाऽम्बरीषेणाभिनन्दितोपि ऋषित्वाद्धिया सूक्ष्मया दृष्ट्या तस्य राज्ञः चेष्टितमशनरूपं बुबुधे विज्ञातवान् ॥ ४२ ॥

ततो मन्युना हेतुना प्रचलद्गात्रं शरीरं यस्य भ्रुकुटिभ्यां कुटिलमाननं यस्य सः सुतरां भृशं बुभुक्षितश्चेति क्रोधातिशयद्योतनार्थमुक्तं कृताञ्जलिं बद्धाञ्जलिमम्बरीषं प्रत्यभाषत ॥ ४३ ॥

अहो जनाः ! अस्य क्षत्रबन्धोर्धर्मव्यतिक्रमं पश्यत कथंभूतस्य ? क्रूरस्वभावस्य श्रिया सम्पदा गर्वितस्य विष्णोरभक्तस्यापि तस्यैवं भक्तमात्मानं मन्यमानस्य ॥ ४४ ॥

कोसौ धर्मव्यतिक्रमः? इत्यत्राह-य इति । योऽयं क्षत्रबन्धुरागतं मामातिथ्येन आतिथ्यार्थमभ्यर्थनेन वसतीतिवत् तृतीया निमन्त्र्यातिथये मह्यमदत्त्वैव भुक्तवानयमेव धर्मव्यतिक्रमः अतस्तस्य धर्मव्यतिक्रमस्य फलं सद्यं तव दर्शये दर्शयामि ॥ ४५ ॥

इत्येवं ब्रुवाणः रोषेण विदीपितां प्रज्वलितां जटामुत्कृत्य उच्छिद्योद्धृत्येत्यर्थः । स दुर्वासास्तया जटया तस्मा अम्बरीषाय तं हन्तुमित्यर्थः । कालाग्नितुल्यां कृत्यां निर्ममे मारिकां शक्तिं निर्मितवानित्यर्थः ॥ ४६ ॥

ततोऽसिः खड्गो हस्ते यस्याः पदा भुवं वेपयन्तीं कम्पयमानां तामभिमुखमागच्छन्तीं ज्वलितां दीप्तां सम्यगुद्वीक्ष्य नृपोऽम्बरीषः किञ्चिदपि न चचाल ॥ ४७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा भृत्यरक्षार्थी निमित्ते सप्तमी भृत्यस्याम्बरीषस्य रक्षार्थ-मित्यर्थः । महात्मना "प्रयातरक्षायां विलम्बमसहमिव सदा पश्चायुधी भिप्रत" इत्युक्तविधेन महात्मना परमपुरुषेण चक्रं सुदर्शनं प्राक्ष-माज्ञापितं सुदागत्य तां कृत्यां ददाह यथा क्रुद्धमहिं सर्पं पावको दवाग्निस्तद्वत् यथा दवाग्निरुपदर्थेदः क्रोधो निष्फलस्तथा कृत्या निष्फला बभूवेति दृष्टान्ताभिप्रेतार्थः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किङ्कृतमिति तत्राह—इतीति । प्रत्याचष्ट प्रत्यैक्षत ॥ ४१ ॥ ४२ ॥

भ्रुकुट्या कुटिलं वक्त्रमाननं यस्य स तथा ॥ ४३ ॥

विष्णोरीशमानिनः ॥ ४४ ॥

अदत्त्वा अन्नमिति शेषः ॥ ४५ ॥

जटामुत्कृत्य स्वशिरसीति शेषः । तस्मै अम्बरीषाय ॥ ४६ ॥

वेपयन्तीं कम्पयन्तीम् ॥ ४७ ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रत्याचष्ट प्रत्यैक्षत ॥ ४१ ४३ ॥

अहत्वर्थश्च नृभिः सर्वलोकैः शंसः स्तुतिर्यस्य श्रियाऽपि उन्मत्तस्य मत्तं मदस्तस्मादुन्मत्तस्य न विद्यते भक्तो यस्मात्तस्य ईशो ऽहमेवेति मानिनः द्वादश्यनतिक्रमादादरवतः ईश्वरैरिन्द्राद्यैरपि माननीयस्येति वा धर्मस्य व्यतिक्रमं विष्णवर्थेऽनतिक्रमं पश्यत ॥ ४४ ॥

अत्तीति अदः "नन्वादय" अदत्वेन भुक्तवत्त्वेनापि न भुक्तवान् तस्य द्वादशीब्राह्मणयोरनतिक्रमस्य फलं मदमोघजटानलस्य वैयर्थ्यं महातेजीयमोऽपि मम चक्रानलदह्यमानत्वं त्वदन्यतः कुतोऽप्यनिस्तारं ब्रह्मणयेनापि भगवता ब्रह्मवादिनोऽपि मम तिरस्काराविकं दर्शयामि ॥ ४५ ॥

तस्मै तं हन्तुम् ॥ ४६ ॥

पदाम् चचालेति ब्रह्मतेजसः प्रतिकर्तुमनर्हत्वं सर्वथा सहमानत्वं च विभाव्येति भावः ॥ ४७ ॥

चक्रं कर्तृकृत्यां ददाह । ननु, किं राज्ञा स्वरक्षार्थं निवेदितं सद्दाह ? न हि न हि. प्राक् अम्बरीषस्य भजनप्रारम्भदशामारभ्यैव क्वापि स्वापकारिलोकेऽप्यनपकरणस्वभावं तस्यालक्ष्य पुरुषेण भक्तवत्सलेनैव भगवतादिष्टं हे चक्र ! यदास्य प्राणसङ्कट-मापतति तदा त्वमेव स्वयमेवास्याभिहन्तारं जहीत्यादिष्टं पावको दवाग्निः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्विजागमनं दुर्वाससः प्रत्यागमनं प्रत्याचष्ट प्रत्यैक्षत ॥४१-४२॥

प्रवेपत् प्रकम्पमानं गात्रं शरीरं यस्य सः भ्रुकुटिभ्यां कुटिल-माननं यस्य सः सुतरामत्यर्थं बुभुक्षितश्च कृताञ्जलिं बद्धाञ्जलिं राजानमभाषत ॥ ४३ ॥

नृशंसस्य निर्दयस्य ॥ ४४ ॥

तस्य व्यतिक्रमस्य फलं सद्यस्ते दर्शये ॥ ४५ ॥

कालानलोपमां कालाग्नितुल्याम् ॥ ४६—४८ ॥

---

भाषा टीका ।

हे कुरुश्रेष्ठ ! राजा अम्बरीष इस प्रकार ब्राह्मणों की सम्मति लेकर थोड़ा सा जल मात्र पान करके मनसे गोविन्द का चिन्तवन करते हुए दुर्वासा जी की बाट देखते रहे ॥ ४१ ॥

इतने में दुर्वासा ऋषि भी आवश्यक कृत्य करके यमुनाकूल से आये और आने पर राजा ने उनका अभिनन्दन भी किया पर दुर्वासा ने अपनी बुद्धि से राजा की जल पान की चेष्टा को जान लिया ॥ ४२ ॥

बस फिर तो क्रोध से गात्र काँपने लगा और भृकुटी से कुटिल वदन हो गया और भूख भी अत्यन्त ही रहे, राजा तो हाथ जोड़ता रहा परंतु उसपर रुष्ट होकर बोले ॥ ४३ ॥

दुर्वासा कहने लगे, कि–अहो सम्पत्ति से उन्मत्त इस निर्दय का धर्म का व्यतिक्रम तो देखो, यह विष्णु का भक्त नहीं है और आप को बड़ा ईश मानी है ॥ ४४ ॥

जो कि मो आए हुए अतिथि को भोजन के लिये निम-न्त्रण देकर भोजन नहीं कराकर जो तू ने भोजन कर लिया उसका फल अबही तेरे लिये दिखाता हूं ॥ ४५ ॥

इतना कह कर रोष से जलते हुए दुर्वासा ने माथे से जटा उखाड़ कर उस जटा से प्रलय काल की अग्नि के सदृश एक कृत्या उत्पन्न करी ॥ ४६ ॥

वह कृत्या हाथ में खड्ग लिये हुए पग से भूमि को कम्पाती हुई राजा के ऊपर दौड़ी परन्तु राजा उस को देख कर एक पग भी पिछाड़ी को नहीं हटे ॥ ४७ ॥

परन्तु श्रीहरि ने पहिले अपने भृत्य अम्बरीष की रक्षा में जिस चक्रराज को नियुक्त किया रहा उस चक्र ने ही कृत्या को जलादी जैसे कि क्रोधित सर्प को अग्नि जला देवे ॥ ४८ ॥

---

तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ।
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ४९ ॥
तमन्वधावद्भगवद्रथाङ्गं दावाग्निरुद्धूतशिखो यथाऽहिम् ।
तथाऽनुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ५० ॥
दिशो नभः क्ष्मां विवरान् समुद्रान् लोकान् सपालांस्त्रिदिवं गतः सः ।
यतोयतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ५१ ॥
अलब्धनाथः स यदा कुतश्चित्सन्त्रस्तचित्तोऽरणमेषमाणः ।
देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोने ! ऽजिततेजसो माम् ॥ ५२ ॥

ब्रह्मोवाच ।

स्थानं मदीयं सह विश्वमेतत्क्रीडावसाने द्विपरार्द्धसंज्ञे ।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनो यस्य तिरोभविष्यति ॥ ५३ ॥
अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः ॥ ५४ ॥
प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ।
दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ५५ ॥

श्रीरुद्र उवाच ।

वयं न तात ! प्रभवाम भूम्नि यस्मिन्परेऽन्येऽप्यजजीवकोशाः ।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निष्फलमुद्वीक्ष्य ॥ ४९ ॥

अनुषक्तं पृष्ठतः संसक्तम् मेरोर्गुहां विविक्षुरधावत् ॥ ५० ॥ ५१ ॥

अरणमेषमाणः शरणमिच्छन् अजिततेजसो हरेश्चक्रात् ॥ ५२ ॥

एतत्सर्वं यस्य भ्रूभङ्गमात्रेण तिरोभविष्यति कदा क्रीडायां अवसाने तदपि कदा द्विपरार्द्धसंज्ञे काले ॥ ५३ ॥

अहं भवो वयं सर्वे यस्य नियममाज्ञां प्रपन्नाः प्राप्ताः सन्तो लोकहितं यथा भवत्येवं तन्नियमं मूर्ध्न्यर्पितं वहामः अतस्तद्भक्तद्रोहिणं त्वां रक्षितुं न समर्थोऽहमिति शेषः । यत्तदोर्नित्यसम्बन्धात् ॥ ५४—५५ ॥

श्रीरुद्रोऽपि प्रत्याचष्टे—वयमिति चतुर्भिः । भूम्नि महति महत्त्वमवाह यस्मिन्परमेश्वरे अजा ब्रह्माणोऽन्ये च जीवास्तेषां कोशा उपाधिभूता ब्रह्माण्डविग्रहा ईदृशा दृश्यमानब्रह्माण्डप्रमाणा अन्येऽपि भवन्ति जायन्ते नश्यन्ति च यत्र येषु ब्रह्माण्डेषु लोकेशाभिमानिना वयं भ्रमामः ॥ ५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽभिमुखं द्रवद्दुच्छरेक्षकं निष्फलं स्वप्रयासञ्च समुद्वीक्ष्य दुर्वासाः भीतः प्राणपरीप्सया प्राणान्प्राप्तुमिच्छया जीवनेच्छयेतिभावः । दिक्षु दुद्रुवे पलायितवान् ॥ ४९ ॥

तं धावन्तं दुर्वाससं भगवतो रथाङ्गं चक्रमन्वधावत् पृष्ठतोऽनुसृत्य दुद्रुवे यथा उद्भूता ऊर्ध्वं वेपमानाः शिखाः यस्य स दावाग्निरहिमनुधावति तद्वत् तदा अनुषक्तं पृष्ठतः संसक्तं चक्रम् ईक्षमाणो मुनिः दुर्वासाः मेरोः पर्वतस्य गुहां विविक्षुः प्रवेष्टुमिच्छुः प्रससार प्रदुद्राव ॥ ५० ॥

तदा दिशो नभोऽन्तरिक्षं क्ष्मां विवरान् अतलादिलोकान् समुद्रान् लोकपालैः सहितांल्लोकांश्च ससार त्वनुषक्तः । ततस्त्रिदिवं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गतः प्रदुद्राव एवं यत्र यत्र मेरुगुहादिष्वधावन्मुनिर्दुर्वासास्तत्र तत्र दुष्प्रसहं दुःखेनापि सोढुमशक्यं सुदर्शनं ददर्श ॥ ५१ ॥

ततः स दुर्वासाः यदा कुतश्चित्कुत्रचिदपि अलब्धो नाथो रक्षिता येन सः तदा सन्त्रस्तं भीतं चित्तं यस्य सः शरणं शरणं रक्षकमेषमाणो इच्छुर्वेधं विरिञ्चं कमलासनं समगात् तत्र गत्वा हे विधातः ! हे आत्मयोने ! अजितस्य भगवतस्तेजसश्चक्ररूपान्मां त्राहि पालयेति विज्ञापयामासेति शेषः ॥ ५२ ॥

तदाकर्ण्य मदन्तरात्मभूतभगवत्प्रसादलब्धसृष्ट्याद्यधिकारपारमेष्ठ्यस्थानस्तन्नियोज्योऽहं तच्चक्रादनतिक्रमणीयात्पातुमसमर्थः इत्याह ब्रह्मा—स्थानमिति । हे द्विज ! एतन्मदीयं स्थानमिदं जगच्च स्थानस्य जगदन्तर्भूतत्वेऽपि तन्नित्यत्वबुद्धिनिरासाय पृथगुक्तिः यद्यपि तदनित्यत्वोक्त्यैव तदधिपसृष्टविश्वस्यापि भगवता संहार्यत्वं प्रतीयते इति विश्वस्य पृथक्संहार्यत्वं न वक्तव्यं तथापि यथा विश्वं तत्संहार्यं तथैतन्मदीयं स्थानमपीति दृष्टान्तार्थमुक्तं तदेतत्सर्वं सन्दिधक्षोः सन्दग्धुमिच्छोः संजिहीर्षोः यस्य कालशरीरकस्य भगवतो भ्रूविक्षेपमात्रेण तिरोभविष्यति क्षयमेष्यति तस्य तेजसस्त्रातुमहं न प्रभुरिति शेषः । यद्वा तमेव शरणं व्रजेति शेषः । एवमुत्तरत्रापि कदा सन्दिधक्षोः क्रीडावसाने जगद्व्यापाररूपक्रीडाया अवसाने तदपि कदा द्विपरार्धसञ्ज्ञे द्विपरार्धाख्यपरिमाणपरिच्छिन्नकालावसान इत्यर्थः ॥ ५३ ॥

न केवलमहमेव त्वां त्रातुं प्रभुरपितु रुद्रादयोऽपीत्याह—अहमिति । यथाहं न प्रभुस्तथा भवादय इति दृष्टान्तार्थं पुनरहमित्युक्तं भवो रुद्रः दक्षभृगुप्रधानाः दक्षभृगू प्रधानौ मुख्यौ येषां ते तान् विशिंषन्बहुव्रीहिगर्भभूतान्यपदार्थानाह—प्रजेशेति । प्रजेशाः प्रजापतयो मरीचिप्रभृतयः भूतेशाः भूतपतयः एकादश रुद्रप्रभृतयः सुरेशाः सुरपतय इन्द्राद्या एते मुख्या येषां ते अत्रापि तन्नियोज्या अन्येऽन्यपदार्थतया विवक्षिताः यद्वा दक्षभृगुप्रधाना इति तद्गुणसंविज्ञानबहुव्रीहिणा दक्षभृगुसन्तानजा अन्यपदार्थत्वेन ग्राह्याः प्रजेशशब्देनेतरेषां सप्तानां मरीच्यादीनां सङ्ग्रहः भूतेशशब्देन रुद्रप्रभवाणां सुरेश इन्द्र एते मुख्या येषां ते तत्सन्तानप्रभवास्तन्नियोज्याश्चेत्यर्थः । एते सर्वे वयं त्वां त्रातुं न प्रभव इत्यत्रापि शेषः तत्र हेतुमाह—यस्य भगवतो नियममशेषनियमनं प्रपन्नाः प्राप्ताः सन्तो लोकहितं यथा भवत्येवं मूर्ध्नार्पितं तन्नियममाज्ञां वहामः कुर्मः ॥ ५४ ॥

एवं विरिञ्चेन प्रत्याख्यातो भगवच्चक्रेणोपतापितश्च दुर्वासाः कैलासगिरिवासिनं शर्वं शरणं गतः शर्व त्वमवितां भवेति प्रार्थितवानित्यर्थः ॥ ५५ ॥

एवं प्रार्थितः शर्वस्ततो हरिचक्रात्त्रातुमसामर्थ्यं वक्तुं चतुर्मुखप्रभृतीनां भगवन्महिमार्णवविप्रुट्त्वं तत्सृज्यत्वं तत्संहार्यत्वं तन्मायामोहितत्वेन तच्चिकीर्षितानभिज्ञत्वं चाह—वयमिति । हे तात ! वयं न प्रभवामः भगवतश्चक्रात्त्रातुमिति शेषः । कुतः ? हि यस्माद्भूयसे अस्माभिरपि वरणीये यस्मिन्भगवति यस्मिन् ब्रह्माण्डे वयं लोकेशाभिमानिनो भ्रमामः "क्षुद्रा रुद्रपितामह प्रभृतयः कीटाः समस्ताः सुराः" इत्युक्तरीत्या कीटवद्भ्रमाम

ईदृशा एतद्ब्रह्माण्डसदृशा अजा ब्रह्माणस्त एव जीवास्तेषां कोशाः ब्रह्माण्डरूपाः सहस्रशः काले "बहुस्याम्" इत्युक्तविधसिसृक्षाकाले भवन्ति उत्पद्यन्ते पुनः संजिहीर्षाकाले न भवन्ति तस्मिन् क्षयं यान्ति ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृत्यां दन्दह्यात्मानम् अभिद्रवत् तच्चक्रं स्वप्रयासं स्वप्रयत्नं प्राणपरीप्सया स्वजीवनरक्षणेच्छया ॥ ४९ ॥

तं दुर्वाससं विविक्षुः प्रवेष्टुमिच्छुः ॥ ५० ॥

चक्रानुयातो दुर्वासा एतानि स्थानानि बभ्रामेत्याह—दिश इत्यादिना ॥ ५१ ॥

अलब्धो नाथो पालनसमर्थो येन स तथा शरणं शरण्यं एषमाणः अन्वेषमाणः अजिततेजसः हरेस्तेजोरूपाच्चक्रात् त्राहि रक्ष ॥ ५२ ॥

ब्रह्मणा किमवादीति तत्राह—स्थानमिति । द्विपरार्धसंज्ञे ममायुःपूर्तिलक्षणे हरिक्रीडावसाने आत्मप्रलय इति यावत् । सह विश्वं चराचरलक्षणप्रपञ्चेन सहितमेतन्मदीयं स्थानं भ्रूभङ्गमात्रेण सन्दिधक्षोः सन्दग्धुमिच्छोः कालात्मनः कालरूपस्य हरेर्यद्दुर्विष्यत्कर्म को वा पुरुषस्तत्पश्यति, अपरोक्षीकर्तुं समर्थः न कोपीत्यन्वयः । त्वामुपलक्षीकृत्य महादिकं सर्वं संहरिष्यतीति ज्ञातुं न शक्यत इति भावः ॥ ५३ ॥

अतो महादीनां तदनुमतमेवानुकर्तुं प्रयतनं न स्वस्वातन्त्र्यमित्याशयेनाह—अहमिति । यन्नियमं यस्याज्ञालक्षणां प्रेरणां तस्येति पूर्वेणान्वयः अर्पितं तेनेयति शेषः ॥ ५४ ॥

यद्यप्यनेन शङ्करोऽपि प्रत्याख्यातस्तथापि मन्दजनशङ्कानिरासाय दुर्वाससः शङ्करशरणप्राप्तिमाह—प्रत्याख्यात इति । "सर्वः शर्वः शिवः स्थाणुः भर्गः संरोनभाःस्मरः" इत्यतो विष्णुशङ्कानिरासायाह—कैलासेति ॥ ५५ ॥

शङ्करोऽपि स्वाशक्तिमेव वक्तीत्याह—वयमिति । हे तात ! वयं न प्रभवाम त्वां रक्षितुं न समर्थाः स्याम: आद्यन्तवत्त्वादित्याह—भूम्न इति । ईदृशा मादृशा भूम्नः पूर्णानन्दाद्धरेः सृष्टिकाले भवन्ति संहारकाले न भवन्ति हि यस्मात्तस्मात् यदा चेतनस्य भगवदधीनत्वं स्पष्टं तदा किं वक्तव्यमचेतनस्य ? इत्याशयेनाह—यत्कोशमिति । यत्र येषु अजजीवकोशेषु वयं बभ्राम ते अन्ये अचेतना अपि महदादयो जीवकोशाः अजो ब्रह्मा स एव जीवः तस्य कोशाः शरीरस्थानीयाः ब्रह्माण्डकोटयो यस्मिन्परे सन्ति स ईशानः स्वदापदः परिहर्तास्माकं नयामिति वाक्यशेषः ॥ ५६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वे वयमिति स्वस्य गुणावतारत्वेऽप्यंशावतारत्वमेव मन्यते ॥ ५४—५५ ॥

वयमिति चतुष्कम् तस्येत्यादि पूर्ववत् ॥ ५६—६१ ॥

---

अहं सनत्कुमारश्च नारदो भगवानजः ।
कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥ ५७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तच्चक्रं कृत्यां दग्ध्वापि मम अभिमुखं स्वमपि दग्धुं द्रवत् धावत् वीक्ष्य ॥ ४९ ॥

अनुषक्तं पृष्ठतः भँलग्नमित्यर्थः ॥ ५० ॥ ५१ ॥

अरणं शरणं एषमाणः अन्विष्यन् ॥ ५२ ॥

द्विपरार्द्धसंज्ञे काले यस्य कालात्मनः कालरूपं यत्स्वरूपं तस्मात् ॥ ५३ ॥

प्रपन्ना वयं लोकहितं यथा स्यात्तथा यन्नियमं यदाज्ञां वहामः अतस्तद्भक्तद्रोहिणं त्वां रक्षितुं असमर्थोऽहमिति शेषः । यत्त दोर्नित्यसम्बन्धात् ॥ ५४–५५ ॥

यस्मिन् परमेश्वरे अजा ब्रह्माण एव जीवास्तत्सांकोशा उपाधिभूताः ब्रह्माण्डानि अन्यान्यपि एवं भवन्ति जायन्ते नश्यन्ति च यत्र येषु ब्रह्माण्डेषु लोकेशाभिमानिनो वयं भ्रमामः ॥ ५६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तच्चक्रमभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलं ज्ञात्वा दिक्षु दुद्रुवे पलायितवान् ॥ ४९ ॥

अनुषक्तं पृष्ठतः संसक्तं चक्रं निरीक्षमाणः मेरोर्गुहां विविक्षुः प्रवेष्टुमिच्छुः प्रससार दुद्रुवे ॥ ५० ॥

तदनन्तरं दिगादिकं गतः सः यतो यतो मेरुगुहादिषु धावति अधावत् तत्र तत्र दुष्प्रसहं सुदर्शनं ददर्श ॥ ५१ ॥

अरणं शरणम् एषमाणः अन्वेषमाणः विरिञ्चं समगात् तत्र हे विधातः ! आत्मा परमात्मा योनिर्जनको यस्य सः तथा हे आत्मयोने ! अजितस्य विष्णोस्तेजस्तच्चक्रात् मां पाहि पालयेत्युवाच ॥ ५२ ॥

कालात्मनः कालशक्तेस्सह विश्वम् एतत्सत्यलोकाख्यं मदीयं स्थानं सन्दिधक्षोः दग्धुमिच्छोः यस्य भ्रूभङ्गमात्रेण तिरोभविष्यति लयमेष्यति कदा क्रीडायाः जगद्व्यापाररूपाया अवसाने तदपि क्व द्विपरार्द्धसंज्ञे प्रलयकाले ॥ ५३ ॥

प्रजेशभूतेशसुरेशमुख्यानेव नामत आह—अहं भवः दक्षभृगुप्रधानाश्च एतदादिनामकाः सर्वे वयं यस्य लोकहितं लोकानामस्माकमेव सुखकरं नियममाज्ञां प्रपन्नास्सन्तः मूर्द्ध्न्यर्पितं वहामः कुर्मः अतः तद्भक्तद्रोहिणं त्वां रक्षितुं नाहं प्रभवामीत्यर्थः ॥ ५४ । ५५ ॥

हे तात ! वयं न प्रभवाम त्वद्रक्षां कर्तुं न शक्नुमः यतः यत्र भूम्नि व्यापके परे सर्वोत्कृष्टे वयं ब्रह्मशिवादयः प्रत्येकं सहस्रशः भ्रमामः एतदेवाह-एतद्ब्रह्माण्डस्यात् अजात् अन्ये अजाः चतुर्मुखाः त एव जीवाः तेषां कोशाः ब्रह्माण्डात्मकाः ... ईदृशा एतद्ब्रह्माण्डतुल्याः सहस्रशः यस्मिन् काले सृष्टिकाले भवन्ति जायन्ते प्रलयकाले न भवन्ति प्रलीयन्ते अतस्तमेव शरणं याहीति चतुर्थेनान्वयः ॥ ५६ ॥ ५७ ॥

———

भाषा टीका ।

दुर्वासाने प्रयास को निष्फल देखकर और चक्र को अपने ऊपर दौड़ते देखकर दुर्वासा प्राण बचाने की इच्छा से दिशाओं में भागे ॥ ४९ ॥

भगवान् का चक्र उसके पीछे कैसे दौड़ा कि—जैसे जलती हुई लपटों वाली दवाग्नि सर्प के पीछे दौड़े, दुर्वासा भी पीछे को देखें तो चक्र भी पछाड़े से चला आरहा है ऐसा देखकर दुर्वासा मेरुकी गुहा में घुस जाने की इच्छा कर दौड़ा ॥ ५० ॥

दुर्वासा दौड़ते २ दिशायें आकाश, पृथिवी सप्तपाताल, समुद्र, लोकपालों सहित लोकों में तथा स्वर्ग में गया परंच जहां २ दौड़ा गया तहां २ दुःसह सुदर्शन चक्र को देखता हुआ ॥ ५१ ॥

जब दौड़ते २ कोई दुर्वासा को रक्षक नहीं मिला तब बड़ा संत्रस्त चित्त होकर शरण की इच्छा से श्रीब्रह्माजी के निकट गया और बोला कि—हे विधातः ! हे आत्मयोने ! अजित [ श्रीकृष्ण ] के तेज से मेरी रक्षा करो ॥ ५२ ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले कि—क्रीड़ा के अन्त में द्विपरार्द्ध पूरे होने पर संहार की इच्छा वाला कालात्मा ऐसे जिसके भ्रूभंग मात्र से मेरा स्थान अर्थात् सत्यलोक सहित यह विश्व क्षण में नष्ट हो-जायगा ॥ ५३ ॥

और ब्रह्माजी कहने लगे, कि—मैं, महादेव, दक्षभृगु इत्यादिक प्रजापति, तथा प्रजेश भूतेश सुरेशों में मुख्य ये सबही लोग जिसके नियम में बंधे हुए अपने माथे परसौंपे हुए लोक हित को चला रहे हैं अर्थात हमसे तुम्हारी रक्षा न होगी ॥ ५४ ॥

इस प्रकार ब्रह्माजी निराश होकर विष्णुचक्र से तपा हुआ दुर्वासा कैलासवासी श्रीसदाशिव की शरण गया ॥ ५५ ॥

श्रीरुद्र उवाच ॥

श्रीरुद्र बोले, कि—हे तात ! उस भूमा पुरुष के ऊपर हम प्रभु नहीं हैं, जिस परमेश्वर में अन्य ब्रह्मा से चतुर्मुख रूप जीवों के विग्रह अर्थात अनन्त कोटि ब्रह्माण्ड काल २ में होते हैं और लीन भी होजाते हैं और जिसमें हम लोग हजारहों भ्रम रहे हैं ॥ ५६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, सर्वज्ञस्य तव भ्रमः कुतस्तत्राह—अहमिति ॥ ५७ ॥

मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः ।
विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ५८ ॥
तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ।
तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ५९ ॥
ततो निराशो दुर्वासाः पदं भगवतो ययौ ।
वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ६० ॥
सन्दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त ! सदीप्सित ! प्रभो ! कृतागसं माऽव हि विश्वभावन ! ॥ ६१ ॥
अजानता ते परमानुभावं कृतं मयाऽघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ६२ ॥
श्रीभगवानुवाच ।
अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ! ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ६३ ॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् ! येषां गतिरहं परा ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पारदर्शनाः सर्वज्ञा अपि यस्य मायां न विद्मः ॥ ५८—६० ॥

हे सतामीप्सित ! मा मामव पाहि ॥ ६१ ॥

अपराधं निवेदयन् प्रार्थयते—अजानतेति । अघं दुःखम् अपचितिं निष्कृतिम् मद्भक्तद्रोहे निष्कृतिं न पश्यामीति चेत्तत्राऽऽह, यस्य तव नाम्नि कीर्तिते नरकस्थोऽपि मुच्यते तस्य तव किमशक्यमिति भावः ॥ ६२ ॥ ६३ ॥

न आशासे न स्पृहयामि ॥ ६४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहं शर्वः अस्मदादयः सर्वे तथाऽन्ये पारदर्शिनः सर्वज्ञाः सिद्धेशाश्च यस्य भगवतो मायां सङ्कल्पं चिकीर्षितमिति यावत् न विदामः न जानीमः तत्र हेतुर्मायया वृताः ॥ ५८ ॥
तस्यैवंविधमहिमशालिनो विश्वेश्वरस्य भगवत इदं शस्त्रं नोऽस्माकमपि दुर्विषहं वयं तस्मोढुमेव न प्रभवः कुतस्तन्निग्रह इति भावः । अतस्तमेवाचिन्त्यविविधविचित्रानन्तमहिमशालिनं शरणागतवत्सलं दीक्षितं भगवन्तं शरणं याहि स हरिः शरणागतार्तिहरो भगवांस्ते शं सुखं विधास्यति करिष्यति ॥ ५९ ॥
इत्युक्तो दुर्वासाः निराशस्सन् ततः कैलासाद्भगवतो वैकुण्ठाख्यं पदम् अण्डान्तर्गतं श्रीविष्णुलोकं ययौ, यद् त्रिशतविंशत्यंशं स्थानं श्रिया लक्ष्म्या सह श्रीनिवास अध्यास्ते श्रीनिवास इत्यनेन भगवतो लक्ष्म्यनपायित्वमुक्तम्. श्रिया सहाध्यास्त इत्यनेन पुरुषकारभूतया लक्ष्म्या सह तस्मिँल्लोके ऽवस्थानमुक्तम्. यद्यपि श्रीनिवासोऽध्यास्त इत्येतावतैवाखं श्रीशब्दप्रवृत्तिनिमित्तस्य पुरुषकारत्वस्य निवासशब्दाभिप्रेतस्य तदनपायित्वस्य च लाभात् तथापि श्रीनिवास इत्येतावन्मात्रे उक्ते रामकृष्णाद्यवतारेषु वैवाहिकविवाहात्प्रागमूर्तिमत्या इतरैरलक्ष्यमाणया वा लक्ष्म्या सहावस्थानेनानपायित्ववदत्रापि तदुपपत्तेस्तत्र साक्षात्परिदृश्यमानपुरुषकारसान्निध्याभावशङ्कानिमित्तशरणवरणानुद्देशकत्वशङ्कापनोदनार्थं श्रिया सहाध्यास्त इत्युक्तम्. तावत्युक्ते कादाचित्कसाहित्यशङ्कानिमित्तशरणवरणासमर्थसान्निध्यशङ्कानिमित्तानुद्देशकत्वशङ्का स्यादिति तदपनोदनाय श्रीनिवास इत्युक्तम् ॥ ६० ॥

एवं शर्वेणाभिहितोऽजितस्य भगवतो शस्त्रवह्निना चक्रज्वालया सन्दह्यमानो दुर्वासास्तत्र गत्वा तस्याजितस्य पादयोर्मूले पतितः सवेपथुस्सन्नाह—किम् ? हे अच्युत आश्रितान् च्यावयतीति तथाभूत ! हे अनन्त अपारमहिमशालिन् ! हे सदीप्सित सतां भक्तानां निरतिशयेष्ट ! हे प्रभो आश्रितार्तिहरणसमर्थ ! हे विश्वभावन विश्वं शरणागतवर्गमपराधानवेक्षणेन भावयति सुखयतीति तथाभूत ! यद्वा, विश्वं निर्द-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नारको नरकस्थोपि किं पुनस्तवाग्रत एव शरणागत इत्यर्थः । यथोक्तं नारसिंहे "यथा यथा हरेर्नाम कीर्त्तयन्ति स्म नारकाः । तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुः" इति ॥ ६२ ॥

आत्मनः सर्वथा भक्तवशत्वं स्थापयति षड्भिः—तत्र तत्प्रतिज्ञानीते—अहमिति । साधुभिः प्रोज्झितकैतवैः मोक्षपर्यन्तकामनारहितैरित्यर्थः । भक्तानां ये जनास्तेपि प्रिया यस्य तामिति कैमुत्यं दर्शितम् ॥ ६३ ॥

तदेव स्थापयति पञ्चभिः—तत्र स्वानुभवमेव प्रमाणयन् स्वरूपानन्दानुभवस्य भक्तभावनानन्दानुभवाद्गौणत्वं दर्शयति तेन च भक्तभावस्याह्लादिनीसारत्वमभिप्रैति—नाहमिति ॥ ६४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, सर्वज्ञस्य तव कुतो भ्रमस्तत्राह—अहमिति । पारदर्शिनः सर्वज्ञा अपि यस्य मायां न विद्मः ॥ ५७-५८ ॥

निराश इति । शिवशिव मद्ब्रह्मतेजस्वित्वाभिमानो रसातलं गतः अन्येनापि ब्रह्मादिना केनाप्यहं न त्रातः महादेवः शम्भुर्मां रक्षिष्यतीत्याशा आसीत् सापि व्यर्था बभूव सम्प्रति यस्य भक्तेन एतां दुर्दशामहं प्रापितस्तस्यैव विष्णोः सन्निधिर्मम स्वप्राणरक्षार्थं गन्तव्यो बभूव धिङ् मे लज्जां प्राणांश्चेति निर्वेदो ध्वनितः॥६०॥

मा माम् अव पाहि ॥ ६१ ॥

अघमपराधः अपचितिं निष्कृतिम ॥ ६२ ॥

यथा मदधीनत्वेनास्वातन्त्र्याद्ब्रह्मरुद्रादयस्त्वां त्रातुं नाशक्नुवन् तथैवाहमपि पराधीनस्त्वां त्रातुं न शक्नोमीत्याह—अहमिति । ननु, त्वं स्वयमेव भक्तपराधीनीभवसि नतु भक्तैस्त्वं पराधीनीकर्तुमिष्टोऽतस्त्वं स्वतन्त्र एवासीत् सत्यं स्वतन्त्रोऽप्यहं स्वेच्छयैव भक्तपरतन्त्रो भवामीति स्वस्वभावकथनं प्रायो दुस्त्यजत्वादिवशब्दः एतादृशमद्दुःखदर्शनेऽपि तव करुणा नोदयते इतिचेत् सत्यं करुणा खलु यस्य धर्मस्तन्मन एव मम नास्तीत्याह—साधुभिर्मोक्षपर्यन्तकामनाशून्यत्वात्शुद्धैर्भक्तैर्ग्रस्तमात्मवशीकृतं हृदयं यस्य सः दित्सितं मोक्षादिकं तेषामरोचकत्वादयोग्यमालक्ष्य मया स्वहृदयमेव बलाद्दत्तं तैरपि तद्दृत्वा स्वहृदयेनैकीकृत्य सादरं स्थापितमिति ध्वनिः । अत एव तेषामनुकम्प्ये एव ममानुकम्पेति भक्तकृपानुगामिनी भगवत्कृपेति सर्वलोकप्रसिद्धिस्त्वया ज्ञायत एवेत्यनुध्वनिः । भक्तानां जना अपि प्रिया यस्य किमुत ते इति हे द्विज विप्रबटो इदमपि न किमपि परामृशसीति भावः ॥ ६३ ॥

भक्तास्ते कियत्प्रीतिविषया इति चेत् शृणु तत्वमित्याह नाहमिति । यत्र आत्मनि रमणादहमात्मारामः इति प्रसिद्धस्तमात्मानमपि भक्तैर्विना नाशासे नाकाङ्क्षे इति मत्स्वरूपभूतानन्दादपि मद्भक्तस्वरूपानन्दोऽतिस्पृहणीय इति द्वयोरपि चिद्रूपत्वेऽपि भक्तवर्तिन्या भक्त्यनुग्रहाख्यायाश्चिच्छक्तिवृत्तिरूपायाः सर्वाधिष्ठानभूतत्वान्ममानन्दस्वरूपस्याप्यानन्दकत्वाद्धाकर्षकत्वाच्च श्रियं षड्-ऐश्वर्यसम्पत्तिम् आत्यन्तिकीं नित्यामपि यैर्विना वन्ध्यामिव वेद्मीति भावः । येषां भक्तानामहमेव गतिरेक उपादेय इत्यर्थः ॥ ६४ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पारदर्शिनः लोकरक्षा बहुधा अपि यस्य मायामपि न विदाम न विद्मः यं न विद्म इति का कथा तत्र हेतुः यस्य मायया आवृताः ॥ ५८-६० ॥

अच्युतेत्यादिपञ्चभिः पदैः सम्बोध्य हि निश्चये कृतागसं मा माम् अव रक्ष इत्याह ॥ ६१ ॥

अघमपराधः तस्य अघस्य अपचितिं निष्कृतिं नारको नरकस्थोपि ॥ ६२ ॥ ६३ ॥

भक्तजनाः प्रियाः यस्य सोऽहम् आत्यन्तिकीम् अत्यन्ततः समाश्रितां श्रियं रमाम् आत्मानं श्रीविग्रहं च मद्भक्तैर्विना नाशासे न स्पृहयामि भक्तहितायैव श्रिया सह श्रीविग्रहेणाविर्भवामीत्यर्थः ॥ ६४ ॥ ६५ ॥

———

### भाषा टीका ।

फिर शंकर कहने लगे, कि—मैं, सनत्कुमार, नारद, और भगवान् ब्रह्माजी, कपिल, अपांतरतम, देवल, धर्म, और आसुरि ॥ ५७ ॥

और मरीचि से आदि लेकर अन्यपार दर्शन वाले सिद्धेश्वर ये सबही जिसकी माया से घिरे हुए उसकी माया को नहीं जान सके हैं ॥ ५८ ॥

उन विश्वेश्वर का यह शस्त्र हम लोगों को भी दुर्विषह है इससे उनही श्रीहरि के तुम शरण जाओ वे तुम्हारा कल्याण करेंगे ॥ ५९ ॥

तब तो वहां से भी निराश होकर दुर्वासा श्रीहरि के वैकुंठ में लोकालोक पर्वत पर गये जहां श्रीजी सहित श्रीनिवास विराजे हैं ॥ ६० ॥

दुर्वासा श्रीहरि शस्त्र के तेज से जलाजाता रहा ऐसा कंपित होकर भगवान के चरण के समीप में पड़ गया और बोला, कि हे अच्युत ! हे अनंत ! हे सज्जनों के इच्छा के विषय ! हे प्रभो ! हे विश्व भावन ! मो अपराधी की रक्षा करो ॥ ६१ ॥

हे भगवन् ! मैंने आपका परम प्रभाव को नहीं जानकर आपके प्रिय भक्त का अपराध किया है सो हे विधातः ! उस अपराध का निस्तार आप करो । क्योंकि ? आपके नामोच्चारण से नारकी पुरुष भी नरक से मुक्त होजाता है ॥ ६२ ॥

श्रीभगवान् उवाच ॥

श्रीभगवान् बोले, कि—हे द्विज ! मैं भक्तों के पराधीन रहता हूं और इसी से परतन्त्र सा हूं भक्त साधुजनों ने मेरे हृदय को

ये दारागारपुत्राप्तान् प्राणान्वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ६५ ॥
मयि निर्बद्धहृदयाः साधवः समदर्शनाः ।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ६६ ॥
मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥ ६७ ॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ६८ ॥
उपायं कथयिष्यामि तव विप्र ! शृणुष्व तत् ।
अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ।
साधुषु प्रहितं तेजः प्रहर्तुः कुरुते ऽशिवम् ॥ ६९ ॥
तपो विद्या च विप्राणां निःश्रेयसकरे उभे ।
त एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ७० ॥
ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम् ।
क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे ऽम्बरीषचरिते
चतुर्थोऽध्यायः ॥ ४ ॥

भाषा टीका ।

पकड रक्खा है और मेरे लिये स्वयं भी भक्तजन बहुत ही प्रिय हैं ॥ ६३ ॥

मैं अपने भक्त और साधुजनों के बिना तो अपने आपको भी नहीं चाहता हूं, और उनके बिना मेरी आत्यंतिक श्री की भी चाहना नहीं करता हूं क्योंकि ? उनकी तो परम गति मैं ही हूँ ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इमं परं च लोकं हित्वा ॥ ६५ ॥ ६६ ॥

प्रतीतं प्राप्तमपि ॥ ६७ ॥ ६८ ॥

आत्मनस्तवैवाभिचारो हिंसा यतोभूत्तमेव यातु प्रशिवमन- र्थम् ॥ ६९ ॥

तपोविद्यासम्पन्नस्य मम कथमनर्थः समजनि?इति मास्म विस्मयं कार्षीरित्याह—तप इति ॥ ७० ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येषां गतिरहं परेति स्वस्यैव तत्परगतित्वमुक्तं तदुपपादयन् स्वस्य तन्निमित्तां तत्त्यागानर्हतामाह—य इति । ये साधवः प्राणान् प्राणयन्ति जीवयन्ति इति प्राणास्तान् जीवनहेतून् प्राणान् तदनुबन्धिदारादींश्च हित्वा संसृतिहेतव एवैते न तूज्जीवनहेतव इति विमर्शेनोज्जीवनोपायताबुद्धिं परित्यज्य मां शरणमुज्जीवनोपायं गताः तदेवाध्यवसितवन्त इत्यर्थः । अतस्तान् कथं त्यक्तुमुत्सहे शक्नोमि ?

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न हि कृतज्ञस्य विश्वस्तत्यागउचित इति भावः । यद्यपि भक्तजनत्यागाय न दुर्वासाः, शरणं गतोऽपि तु स्वप्राणरक्षायै अतस्तंप्रति कथं तांस्त्यक्तुमुत्सहे इत्युक्तिरसंगता तथापि निरतिशयप्रियवस्तुविश्लेषपरिहाराय देहतदनुबन्ध्यादिपरित्यागस्य प्राक् प्रस्तुतत्वात् देहादिपरित्यागेनाप्यविनाशाद्यान् साधून् कथं विनाभूय वर्तेयमित्येतदभिप्रायेण कथं तांस्त्यक्तुमुत्सहे इत्युक्तम्. यद्वा, भक्तजनप्रतिपक्षत्वद्वेषणे कृते आश्रितविपक्षपक्षपाती भगवानिति बुद्ध्या मां त्यजेयुर्भक्ताः अतस्तान् सर्वभावेन भजतः कथं त्यक्तुमुत्सहे इत्यभिप्रायेणोक्तम् ॥ ६५ ॥

एवमात्मानं विशिष्याथ भक्तान् विशिनष्टि—मयीति । मयि निरतिशयप्रीतिविषये निर्बद्धमनन्यविषयत्वेन स्थिरीकृतं हृदयं येस्ते अत एव समदर्शिनः सर्वस्य मदात्मकत्वदर्शिनः साधवः भक्त्या परस्परप्रीत्यावहया स्वयमपि प्रीतिरूपया अनन्यप्रयोजनया भक्त्या मां वशे कुर्वन्ति यथा सत्स्त्रियः पतिव्रताः सत्पतिं परदारपराङ्मुखमन्याहंशेषत्ववत्स्त्रीपराङ्मुखं वा वशे कुर्वन्ति तद्वत् ॥ ६६ ॥

अनन्यप्रयोजनभक्तिनिष्ठत्वमेव व्यनक्ति—मत्सेवयेति । ते साधवः मत्सेवया मत्कृताः प्रतीतं सालोक्यमाविर्भवस्य तत् चतुष्टयं चतुर्विधं सालोक्यसामीप्यसायुज्यसार्ष्टिरूपां मुक्तिमेव नेच्छन्ति कुतोऽन्यत् कालेन विप्लुतो नाशो यस्य तदिन्द्रादैश्वर्यमिच्छेयुः तत्र हेतुः सेवया मच्छेषतैकरसानन्दानुभवरूपया भक्त्या पूर्णा निर्वृतान्तःकरणाः ॥ ६७ ॥

किं बहुना साधवो मह्यं मम हृदयं मद्धृदयानुवर्तिहृदयाः साधव इत्यर्थः । तथाऽहं साधूनां हृदयं साधुहृदयानुवर्तिहृदयोहं ते साधवः मत्तः अन्यत्प्रियं वस्तु न जानन्ति तथाहमपि तेभ्यः साधुभ्योऽन्यन्मनागपि ईषदपि प्रियं न जानामि एवं परस्परहृदयानुवर्तिहृदयत्वात्परस्परप्रियत्वाच्च भक्तपारतन्त्र्यं मम युक्तमिति न तद्विषयापराधो मया सोढुं शक्य इति भावः ॥ ६८ ॥

एवं स्वभक्तविषयापराधस्य स्वेनासह्यत्वं सहेतुकमुपपाद्य स्वसन्निधौ तत्कृतप्राणरक्षणार्थंशरणागमनैर्विफल्यपरिहारायोपायमाह—उपायमिति । हे विप्र ! तव प्राणरक्षणोपायं तत्साधनं कथयिष्यामि तच्छृणुष्व, कोसौ ? तत्राह—ते तवायमात्मापचारः स्वयं कृतापराधः स यतो यद्विषये जातस्तमेवाम्बरीषम्प्रति भवान् गच्छत्विति आत्माभिचार इति पाठान्तरं तत्राम्बरीषहिंसार्थं कृतोऽयमुद्यमः आत्मन एवाभिचारः स्वहिंसार्थमेवाभूदित्यर्थः । तथा हि, लोके साधुषु भक्तेषु प्रहितं प्रयुक्तं तेजः सामर्थ्यं कर्तुः प्रहर्तुरेवाप्रियमनर्थं कुरुते ॥ ६९ ॥

तपोविद्यादिसम्पन्नस्य मम कथमनर्थः समजनि ? इति माविस्मयं कार्षीरित्याह—तप इति । तपोविद्या च एते उभे विप्राणां विनीतानां निःश्रेयसकरे निरतिशयपुरुषार्थसाधने दुर्विनीतस्य कर्तुर्निरपराधेष्वपराधकर्तुर्विप्रस्य तु त एव तपोविद्ये एवान्यथा कल्पेते अनर्थाय भवेतामित्यर्थः ॥ ७० ॥

तत्तस्मात् हे ब्रह्मन् ! नाभागतनयमम्बरीषं प्रत्येव गच्छ तमेव महाभागमपराधानामविज्ञातारं क्षमापय ततः शान्तिर्भद्रं तव भविष्यतीति ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं भूस्थानं परं स्वर्गादिकम् ॥ ६५ ॥

तदत्यागे भक्त्या वशीकरणमेव कारणं नान्यदित्याह—मयीति ॥ ६६ ॥

इदं त्यागे कारणमित्याह—मत्सेवयेति ॥ ६७ ॥

इतोपि मदन्यापेक्षा तेषां नास्तीत्याशयेनाह—साधव इति । मह्यं मम हृदयं प्रियं तुशब्दो हेतौ साधवो मम हृदयम् अहं साधूनां हृदयमिति यस्मात्ते मदन्यं प्रियं न जानन्ति अहमपि तेभ्यः साधुभ्यो मनागल्पमपि प्रियमन्यन्न जानामीत्यन्वयः ॥ ६८ ॥

प्रकृते किमनेनायातमिति तत्राह—अथमिति । आत्मना त्वया कृतोभिचारः कृत्याप्रयोगः यतः यस्मै तस्मै प्रयुक्तमात्मानं कथं बाधते ? इति तत्राह—साधुष्विति । प्रहितं प्रयुक्तं वृद्धापद्रवलक्षणं तेजोर्चिः“ तेजो बले प्रभावेऽग्ने ज्योतिष्यर्चिषि रेतसि” इत्यभिधानं प्रहर्तुः प्रयोक्तुरपि भयं कुरुते ॥ ६९ ॥

* विनयशून्यस्य तव विद्यातपसी अनर्थकरं एवाभूतामिति भावेनाह—तप इति । अन्यथा अनर्थकरे ॥ ७० ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषु कालत्रयेपि कारणं दर्शयन् अन्यथा स्वस्मिन् कृतघ्नत्वापातं योजयति—ये दारेति । परं सालोक्यादिप्राप्तिपर्यन्तं तदुभयं दृष्टान्तेन च स्थापयति मयीति यतो मयि निर्बद्धहृदयाः अतः साधवः प्रोज्झितकैतवाः अत एव समदर्शनाः अन्यत्र रागद्वेषरहिताश्च ॥ ६५ ॥ ६६ ॥

तदेवातिशयेन दर्शयति—मत्सेवयेति । कुतोऽन्यदिति सालोक्यादीनां कालेनाविप्लुतत्वं दर्शितम् ॥ ६७ ॥

* अत्र न समाप्यते ऽध्याय एवञ्चोक्त्या ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं परस्परहृदयस्य तादात्म्यमाह—साधव इति ॥६८—७१॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो ब्रह्मण्यदेव ! ब्राह्मणं मां नोपेक्षस्वेतिचेत्सत्यं तर्हि किं भक्तानुपेक्षे ? भक्तापकारकस्य तव रक्षणेन स्वत एव भक्तास्त्यक्ता भवेयुस्तत्तु नोपपद्यत एवेत्याह-ये इति । भक्ताः खलु ते मदर्थे परमप्रेमास्पदं दुस्त्यजदाराद्यासक्तिमत्यजन् ब्राह्मणस्त्वं मदर्थं किमत्यजस्तद् ब्रूहीति भावः । न चाम्बरीषेण किमपि त्यक्तामिति वक्तव्यं यदा त्वया ऽम्बरीषवधार्थं कृत्या विनियुक्ता तदा तेन स्वदेहरक्षापेक्षया पदमात्रमपि नाभिद्रुतं त्वयात्मारामेण महाविरक्तेन स्वदेहरक्षार्थं जगदेव परिक्राम्यता ब्रह्मरुद्रादयोऽपि प्रार्थिताः एतेनैव स्वस्य तस्य च मूल्यं जानीहि किमधिकं त्वमबोधो बोधयितव्य इति ॥ ६५ ॥

युष्माभिर्ब्रह्मादिभिरप्यहं दुर्वास एव तैस्तु वशीकृत एवाहमस्मीत्याह—मयीति । मय्येव हृदयस्य निबद्धत्वात् साधवः निष्कामाः समदर्शनाः स्वस्य परेषां च दुःखादिकं समं पश्यन्तः ॥ ६६ ॥

तेषां निष्कामस्य परमकाष्ठामाह—मत्सेवयेति । प्रतीतं स्वतः प्राप्तमपि कुतोऽन्यदिति सालोक्यादीनां कालेनाविप्लुतत्वं दर्शयति कालविप्लुतत्वं पारमेष्ठ्यादि ॥ ६७ ॥

किञ्च मां सन्तापयते तुभ्यं समुचितं फलं दित्सन्नपि यन्न ददामि एतामेव मे परां ब्रह्मण्यतामवेहीत्याह—साधव इति । यद्वा मम अम्बरीषं ज्वालयितुमिच्छंस्त्वं मद्धृदयमेव ज्वालयितुं प्रवृत्तोऽभूरित्यर्थः । तर्हि त्वदपराध एवायं चेत्त्वच्चरणे पतामि प्रसीदेत्यत आह, साधूनां हृदयन्त्वहं साधूनां हृदयप्रसादे सत्येव मत्प्रसाद इत्यतो याहि तमम्बरीषमेव प्रसादयेति भावः । नन्वम्बरीषो मां निमन्त्र्याभोजयित्वैव भुक्तवानतस्तद्दोषमपि किं न पश्यसीति तत्राह—मदन्यत्ते न जानन्तीति मद्विकीर्षितमेवाम्बरीषेण कृतमिति भावः । तर्हि त्वामेवाहं पृच्छामि ब्रूहि ब्राह्मणद्वादश्योर्मध्ये कस्यादरो धर्म इति चेत् याहि तमम्बरीषमेव पृच्छ स एव त्वां धर्मशास्त्रतत्त्वज्ञानभिज्ञं बोधयिष्यति मात्र लज्जां कामपि कार्षीस्तादृशो नाहमपि विप्र इत्याह—नाहं तेभ्यः सकाशात् मनागपि अधिकं जानामीत्यर्थः । तेन भुक्तौ पानीयस्याशितत्वानशितत्वयोस्तुल्यदर्शनात् द्वादशीब्राह्मणयोस्तुल्य एवादरः कुतो मद्भक्तेनाम्बरीषेण त्वमवमानितस्तर्ह्यासीरिति ध्वनिः दुर्वासास्तु फलदर्शनेन द्वादश्या एव भक्तित्वात् सर्वधर्माधिकत्वं निर्धारयन्नम्बरीषं किमपि न पृष्टवानित्यनुध्वनिः ॥ ६८ ॥

किञ्च तदपि तव निस्तारोपायं स्पष्टमेव ब्रवीमि श्रूयतामित्याह—ब्रह्मन्निति । यस्य वधार्थं त्वया अभिचारः कृतः तमम्बरीषमेव याहि स एव कृपालुस्त्वां त्रास्यते नान्य इति भावः नचाम्बरीषं त्वं स्वदुःखदं मन्येथा इत्याह साधुष्विति ॥ ६९ ॥

तपोविद्यासम्पन्नस्य मम कुतस्तरामम्बरीषात् क्षत्रियात् परित्राणं युज्यते ? इति चेदपात्रस्य तव तपोविद्ये नैव इतः प्रत्युत ते विपरीते एवेत्याह—तप इति । दुर्विनीतस्य कर्त्तुस्तदाश्रयस्य अन्यथा कल्पेते विपरीतफले भवतः ॥ ७० ॥ ७१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमस्य चतुर्थोऽयं सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मयि निबद्धं स्थिरीकृतं हृदयमन्तःकरणं यैस्तैः ॥ ६६ ॥

प्रतीतं प्राप्तमपि नेच्छन्ति कालविप्लुतम् ऐहिकामुष्मिकं प्राकृतं पदार्थं नेच्छन्तीति किमुत वक्तव्यं सालोक्यादीनां व्याख्या तृतीयस्कन्धव्याख्याने द्रष्टव्या ॥ ६७ ॥ ६८ ॥

मां शरणीकृतस्य तव सन्तापहरमुपायं कथयिष्यामि हि यस्मात् आत्माभिचारः आत्मना त्वया कृतोऽभिचारः हिंसा यतो निमित्तभूतादभूत्तमम्बरीषं याहि गच्छ भद्रमस्तु ॥ ६९ ॥
७० ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका

जो लोग अपने दारा, अगार, [ गृह ] पुत्र, बन्धु, प्राण, वित्त, और परलोक को भी छोड़कर मेरे शरण आये हैं भला मैं उनको कैसे छोड़ने का उत्साह करूं ॥ ६५ ॥

समदर्शनसाधुजनों का हृदय मेरे विषय में बन्धा रहता है और वे लोग भक्ति से मेरे लिये वश में कर लेते हैं जैसे साध्वी स्त्री अपने सत्पति को वश में कर लेती है ॥ ६६ ॥

और मेरी सेवासे प्राप्त होने वाले सालोक्यादि चतुर्विध मोक्ष को भी नहीं चाहते हैं, केवल मेरी सेवामात्र से पूर्ण रहते हैं फिर और काल कृत परिणाम वाले पदार्थ की क्यों ! चाहना करेंगे ॥ ६७ ॥

साधुजन मेरे हृदय हैं और मैं साधुजनों का हृदय हूं मेरे से औरको वो लोग नहीं जानते हैं, !उनलोगों से और को मै भी किञ्चित् भी नहीं जानता हूं ॥ ६८ ॥

हे विप्र ! मैं उपायबताऊं सो तुम सुनो वे तुमारी हिंसा जहां से है वहीं तुम जाओ ॥ और एक बात का ध्यानरखो कि—साधुजनों पर चलाया हुआ तेज चलाने वाले काही अमङ्गल करता है ॥ ६९ ॥

भाषाटीका।

तप और विद्या ये दोनो ब्राह्मणों के नितरां श्रेय कारक हैं पर दुर्विनीत के येही दोनो कर्त्ता को अन्यथा फल दायक होजाते हैं॥ ७०॥

हे ब्रह्मन्! तस्मात् अब तुम नाभागतनय (अंबरीष) के समीप जाओ। और महाभाग से अपने अपराध को क्षमा करा ओ तब शांति होगी॥ ७१॥

इति श्रीमद्भागवत नवमस्कन्ध में चतुर्थ अध्याय की श्रीवृन्दावनस्थ पं० भागवताचार्यकृत- भाषा टीका समाप्ता॥ ४॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चतुर्थोऽध्यायः॥ ४॥

## ॥ पञ्चमोऽध्यायः ॥

—○:०:○—

श्रीशुक उवाच ।

एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ।
अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥
तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ।
अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ २ ॥

अम्बरीष उवाच ।

त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ।
त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ३ ॥
सुदर्शन ! नमस्तुभ्यं सहस्राराच्युतप्रिय ।
सर्वास्त्रघातिन् ! विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥
त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ।
त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥
नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥
त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् ।
दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम् ॥ ७ ॥
यदाविसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजितदैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे विष्णुचक्रं तु प्रसाद्य पार्थिवसत्कृतात् ।
दुर्वासा रक्षितस्तेन तथा तत्कृतमीर्यते ॥ ० ॥

॥ १ ॥

स उद्यममिति छेदः सुलोपः पादपूरणार्थः ॥ २ ॥

ज्योतिषां नक्षत्राणां पतिः सोमस्त्वम् मात्राणीन्द्रियाणि च त्वच्छक्त्यैवाऽन्यादृशः स्वं स्वं कार्यं कुर्वन्तीत्यर्थः ॥ ३ ॥

सहस्रम् आरा यस्य हे सहस्रार ! स्वस्ति शरणं भूयाः इडस्पते पृथ्वीपते ॥ ४ ॥

ब्राह्मणरक्षणं तव युक्तमेवेत्याह-त्वं धर्म इति । न च मदीयमतिस्तुतिरित्याह-पौरुषं पुरुषस्येश्वरस्य परं तेजः सामर्थ्यं त्वम् अयं भावः "स ऐक्षत" इत्यादिश्रुतिप्रसिद्धं भगवतः शोभनं दर्शनं सुदर्शनं तत एव च सर्वं जातमतस्त्वमेव सर्वात्मेति ॥ ५ ॥

हे सुनाभ ! अद्भुतकर्माणं त्वां कः स्तोतुं समर्थोऽतस्तुभ्यं केवलं नमो गृणे इत्यन्वयः अद्भुतकर्मत्वमेवाऽऽह-अखिलानां धर्माणां सेतवे मर्यादारूपाय अनपेक्षाधर्मशीलानामसुराणां धूमकेतवे दाहकाय त्रैलोक्यं गोपायतीति तथा तस्मै विशुद्धमत्युज्ज्वलं वर्चस्तेजो यस्य तस्मै ॥ ६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेव प्रपञ्चयति–त्वत्तेजसेति द्वाभ्याम् । सूर्यादीनां प्रकाशश्च त्वयैव रूप्यते प्रकाश्यत इति त्वद्रूपम् ॥ ७ ॥

हे अजित ! अनञ्जनेन श्रीहरिणा यदा विसृष्टस्त्वं तदा दैत्यदानवानां बलं प्रविष्टः संस्तेषां बाह्वादीनि भिन्दन्भ्राजसे पाठान्तरे ऊर्जिता दैत्यदानवा यस्मिन् तदूर्जं पूर्वपदेन सान्धरार्थः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवतोपदिष्टोपायश्चक्रतापितो दुर्वासा अम्बरीषमुपेत्य दुःखितस्तस्याम्बरीषस्य पादावग्रहीत् ॥ १ ॥

तस्य दुर्वाससस्तथाविधं व्यसनं समीक्ष्य पादस्पर्शविलज्जितोऽम्बरीषः कृपया नितरां तापितस्तद्द्विजस्य पूर्वतोऽनुपक्तं हरेश्चक्रमस्तौषीत्तुष्टाव ॥ २ ॥

स्तुतिमेवाह–त्वमग्निरित्यादिना सत्त्वमित्यतः प्राक्तनेन । तावत् सुदर्शनं प्रसादयितुं सर्वतेजःकारणभूतस्य सर्वात्मकस्य तव तेजसोऽयं द्विजस्त्वदात्मा विषयो न भवतीति सूचनाय च सर्वतेजःकारणत्वेन सर्वात्मकत्वेन च स्तौति–त्वमग्निरिति । यद्यपि "एतदात्म्यमिदं सर्वं "सर्वं खल्विदं ब्रह्म" इत्यादिभिः "न तत्र सूर्यो भाति न चन्द्रतारकम्" इत्यादिभिश्च ब्रह्मण एव सर्वात्मकत्वं सर्वतेजसामाच्छादकत्वं सर्वतेजःकारणत्वं सर्वतेजसामनुग्राहकत्वमित्यादयो धर्माः श्रुताः न तु ब्रह्मनियाम्यस्य सुदर्शनस्य क्वापि श्रुतास्तथापि तस्मिन् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (१।१।३५) इति शारीरकन्यायेन "अहमेवासमहमेव वर्त्तामि भविष्यामि च तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः" इत्यादौ ब्रह्मात्मकत्वेन ब्रह्मविशेष्यकत्वाद्विशेषणबुद्धिशब्दादीनां विशेष्यपर्यन्तस्याकृतितथासिद्धत्वाद्विशेष्यपर्यन्तसाक्षात्कारनिमित्ततत्तादात्म्यव्यवहारवद्ब्रह्मविशेषणभूतसुदर्शनविषयबुद्धिशब्दानां ब्रह्मपर्यन्ततानिमित्ततत्तादात्म्यव्यपदेशाद्वा भोदर्शनस्य पुरुषस्य परमात्माभिन्नस्यात्मा तस्य सर्वात्मकत्वादिभिर्धर्मैः प्रवृत्तेयं स्तुतिरित्यदोषः । त्वमेवाग्न्यादितेजसामनुग्राहकस्तत्कारणभूतश्चेत्यर्थः । ज्योतिषां नक्षत्राणां पतिर्यः सोमश्चन्द्रः स त्वमेवेत्यर्थः । अप्पृथिव्याकाशवायुगन्धादितन्मात्रोभयेन्द्रियात्मा त्वमेवेत्यर्थः । त्वमग्निरिति तेज आत्मकत्वं पूर्वमुक्तमित्यवादिभिर्न तस्य सह पाठः ॥ ३ ॥

हे सुदर्शनसहस्रारेत्यसाधारणनामाभ्यां सम्बोधनं हे अच्युतप्रिय! भक्तानामिष्टमेवाच्युतस्येष्टं तदिष्टमेव तत्रापि प्रियमतो मादृश्द्विजप्राणरक्षणं तत्रापीष्टमेवेति प्रसन्नो भवेत्यच्युतप्रियेति सम्बोधनाभिप्रायः! हे सर्वास्त्रघातिन् ! न तु शरणागतघातिन्नित्यभिप्रायः। हे इडस्पते! पृथिवीपते हे जगत्पालक ! जगत्पालकस्य तव शरणागतद्विजरक्षणं युक्तमेवेति भावः। विप्राय स्वस्ति भूयाः मङ्गलरूपो भव प्रसन्नो भवेत्यर्थः ॥ ४ ॥

किञ्च सुर्वधर्मरक्षकस्य तव शरणागतद्विजरक्षणं युक्तमेवेति सूचयितुं धर्मादिनिर्वाहकत्वेन तदात्मकतया स्तौति–त्वं धर्म इति । ऋतिर्वैर्य नित्या धृतिः त्वमेव यज्ञो यज्ञनिर्वाहको यज्ञाराध्यश्च त्वमेव हे सर्वात्मन् ! पौरुषं परमपुरुषसम्बन्धि तेजस्त्वमेव पौरुषं परमपुरुषसम्बन्धियच्चक्षुस्तज्जिह्वीर्यात्मकसङ्कल्परूपमीक्षणापरपर्यायं सामर्थ्यं त्वमेवेत्यर्थः । तथाचाभियुक्तोक्तिः—

वाणी पौराणिकीयं प्रथयति महिमं प्रेक्षणं कैटभारेः–

शक्तिर्यस्य पुरं ग्रानलपरशुमुखव्यापिनी तद्विभूषाम् ॥

इति ॥ ५ ॥

हे सुनाभ ! शोभना नाभिर्यस्य तथाभूतः ते तुभ्यं केवलं नमः न तु त्वां स्तोतुमहं समर्थः अतः केवलं नमस्करोमि इति भावः । कथम्भूताय ? ते अखिलानां धर्माणां सेतवे मर्यादापालकाय अधर्मशीला ये असुरास्तेषां धूमकेतवे धूमकेतुवद्दनर्थहेतवे त्रैलोक्यपालकाय विशुद्धवर्चोयस्य मनोजवाय मनस इव वेगो यस्य अद्भुतं कर्म यस्य ॥ ६ ॥

अद्भुतकर्मकत्वमेव प्रपञ्चयन् स्तौति–त्वत्तेजसेति । धर्मनिर्वाहकत्वेन तत्प्रचुरत्वात्तन्मयेन तव तेजसा महात्मनां साधूनां दृशो ज्ञानस्यावारकत्वमोऽज्ञानं संहृतं निरस्तं प्रकाशः सूर्यादिप्रकाशश्च त्वद्रूपं त्वयैव रूप्यते प्रकाश्यते इति तद्रूपं तथा परावरं उच्चावचं चिदचिदात्मकमेतज्जगच्च त्वद्रूपं त्वच्छरीरकं हे गिरांपते ! एवंभूतस्य तव महिमा दुरत्ययः यद्वा महात्मनां दृशः आच्छादकं तमस्त्वत्तेजसा संहृतं तथा दृशः प्रकाशः प्रसरश्च कृत इति शेषः । सदसदात्मकं जगत् त्वच्छरीरभूतमेवेत्यर्थः ॥ ७ ॥

महिम्नां दुरत्ययत्वमेव दर्शयन् स्तौति—यदेति । यदावेत्यर्थः। यदा तु त्वमनञ्जनेन निरञ्जनेनाविद्यारूपाञ्जनरहितेन परमपुरुषेण विसृष्ट आदिष्टस्तदा ऊर्जिताः मज्ञातबला दैत्याः दानवाश्च यस्मिन् तत्तद्बलं प्रविश्याजस्रं बाह्वादीन् वृक्णान् छिन्दन् प्रधने युद्धे विशेषेण राजसे ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १–२ ॥

मात्राः शब्दादयः ॥ ३ ॥

सहस्राणि अराणि दलानि यस्य स तथा हे सहस्रार ! विप्राय दुर्वाससे इडस्पते भवपते ॥ ४—६ ॥

सुनाभ सुदर्शन धूमकेतुरग्निः ॥ ६ ॥

त्वत्तेजसा तमः संहृतं महात्मनां दृशोः प्रकाशश्च संहृतः स्तम्भितः एतत्परावरं सदसत्स्वरूपं त्वत्प्रतिमा ॥ ७ ॥

अनञ्जनेन निर्लेपेन ऊर्जितदैत्यदानवं बलं बाह्वादीन् वृक्णान् छिन्दन् प्रधने युद्धे ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

तद्वदति तैः तत्र सुलोपः पादपूरणा इत्यस्य भावः "सोऽचि लोपे चेत् पादपूरणम्" (६।१।२३४) इति षष्ठाध्यायप्रथमपादगतसूत्रेणेत्यर्थः अन्यथा "लोपः शाकल्यस्य" (८।३।१९) इति तत् स्थानीयस्य यस्य लोपे त्रिपादीगतत्वात् "पूर्वत्रासिद्धम्" (८।२।१) इति न्यायेन सन्धिर्न स्यात् ॥ २—६ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्ममयेन तत्तेजसा ऽस्तमः संहतं महात्मनां सूर्यादीनां प्रकाशश्च त्वत्तेजसैव भवति अत एव ते तव महिमा दुरत्ययः यत एतत् सदपि त्वद्रूपं त्वत् प्रकाश्यमेव ॥ ७८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पादौ स्पृशन् मुनिश्चक्रं पश्चाद्धेवान्वितः स्तुवन् ।
भीजितश्चाम्बरीषेण पञ्चमेऽन्ते वनं गतः ॥ ० ॥

॥ १ ॥

तस्य दुर्वाससोऽम्बरीषः उद्यमनं स्तवाद्यर्थमुद्यमं "सोचिलो-पेचेत् पादपूरणम् ॥६।१।१३४॥ इति सलोपे सन्धिः ॥ २ ॥ ३ ॥

हे सहस्राचार ! हे इडस्पते ! पृथ्वीपते ॥ ४ ॥

"ऋतं च सूनृता वाणी सत्यं च समदर्शनम्" पौरुषं वैष्णवं तेजः ॥ ५ ॥

तर्हि भक्तिधर्मसेतुपालाय तुभ्यं द्रुह्यन्तमेनमधार्मिकं विप्रमवश्यमहं तापयामीत्यत आह—अधर्मशीला ये असुरास्तेषां धूमकेतवे इति धर्मशीला असुरा अधर्मशीला विप्राश्च व्यावृत्ताः हे सुनाभ ! तुभ्यं नमो गृणे स्तोतुं सामर्थ्याभावादिति भावः ॥ ६॥

ननु, तेजस्विमानिनोऽस्य विप्रस्य चिकित्सा अवश्यकर्तव्येत्यत आह—त्वत्तेजसा त्वत्तेजो विभूतिरूपेण सूर्यादिना दृशः सर्वचक्षुरूपतया महात्मनां दृशो ज्ञानस्य च प्रकाशस्त्वत्तेजसैव भवति त्वद्रूपमेतत् तवैव परमेश्वरत्वान्महीश्वरः स्वतेजोऽन्यस्मिन् तेजांसि न दर्शयेदिति भावः ॥ ७ ॥

ननु, तद्रूपेनेन सह विहर्तुकामोऽस्मीति चेन्मैवं तवासुरसङ्ग्राम एव विहाररङ्गभूमिरित्याह—यदेति । अनङ्गेन श्रीहरिणा हे अजित ! प्रविष्टोऽर्जितदैत्यदानवामिति——पाठे ऊर्जिता दैत्यदानवा यत्र तदूवलं सन्धिरार्षः ! वृक्णान् छिन्दन् प्रधने सङ्ग्रामे ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अम्बरीषस्य महाभागवतस्य प्रकुपितभगवदस्त्रशान्तिकरत्व-विप्रदोषादर्शित्वविप्रभक्तत्वादीन् गुणान् वर्णयति-एवं भगवतादिष्ट इति पञ्चमेन ॥ १ ॥

स उद्यमनमिति छन्दः "सोऽचिलोपेचेत्पादपूरणम्" (६।१।१३४) इत्यनेन सलोपः पादपूरणार्थः तस्य दुर्वाससः स अम्बरीषः उद्यमनं हरिचक्रात्प्राणरक्षार्थं स्वपादग्रहणं वीक्ष्य पादस्पर्शेन विशेषतो लज्जितः कृपया भृशमत्यन्तं पीडितः अस्तावीत् तुष्टाव ॥ २ ॥

सर्वस्य विश्वस्य भगवतो भिन्नस्यापि तदात्मकत्वात्तदभिन्नत्वं "एतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म" "तदनन्यत्वमारम्भणशब्दादिभ्यः"(२।१।१५) इत्यादिश्रुतिसूत्रप्रसिद्धम भगवच्चक्रं तु सुतरां भगवदभिन्नमिति सिद्धान्तविद्राजर्षिः भगवच्चक्रं भगवत्तया भगवत्प्रियायुधतया च स्तौति—त्वमित्यादिना । त्वं भगवानेव अतः अग्न्यादिश्च मात्राणि च इन्द्रियाणि च त्वमेव ॥ ३ ॥

शोभनं दर्शनं यस्य हे सुदर्शन! सहस्रम् आरा यस्य हे सहस्रार ! हे इडस्पते भूमिपते विप्राय स्वस्ति शरणं भूयाः भव ॥ ४ ॥

त्वं धर्मः त्वमृतं सूनृतवाक्यं त्वं सत्यं त्वं यज्ञः क्रियारूपः यज्ञभुक् त्वमेव लोकपालः । ननु, एतत्सर्वं मयि कथं घटेत? इत्यत आह त्वं सर्वात्मा सर्वाश्रयभूतः परमात्मा ननु, परमात्मनोऽस्त्रमात्रे मयि परमात्मत्वं कथं घटेत ? इत्यत आह परं सर्वोत्कृष्टं पौरुषं पुरुषसम्बन्धि पुरुषात्मकमित्यर्थः । तेजस्त्वं यद्यदात्मकं तत्तदभिन्नं यथा सूर्यात्मकं प्रभारूपं तेजः सूर्याभिन्नमिति भावः ॥ ५ ॥

हे सुनाभ ! अद्भुतकर्मणे तुभ्यं नमो गृणे अखिलानां धर्माणां सेतवे विधारकाय अत एव अधर्मे शीलं येषां तेषामसुराणां धूमकेतवे दाहकाय त्रैलोक्यं गोपायति रक्षतीति तथा तस्मै विशुद्धं वर्चस्तेजो यस्य तस्मै ॥ ६ ॥

महात्मनां मुमुक्षूणां दृशः दृष्टेः तमः अज्ञानं धर्ममयेन मुमुक्षुकर्तृकफलाभिसन्धिरहितलक्षणधर्मजातेन त्वत्तेजसा त्वदनुग्रहेण अपहृतं भवति प्रकाशश्च भवतीत्यर्थः । सदसत् कार्यकारणं परावरं चिदचिदात्मकं त्वद्रूपम् । हे गिरांपते ! एवंभूतस्य ते महिमा दुरत्ययः अनवगाह्यः ॥ ७ ॥

अनङ्गेन अजय्येन इत्यङ्गनं शेषः स्वभावतोऽपास्तसमस्तदोषेण हरिणा वृक्णान् भिन्दन् ॥ ८ ॥

---

### भाषा टीका ।

श्रीरुक्मिणीवसुदेवनन्दनौ जयतः

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—जब भगवान ने भी दुर्वासा को ऐसी आज्ञा दीनी तब वह भी चक्र से तापित होने वाला, अंबरीष के शरणजाकर चरण पकड़लिये ॥ १ ॥

अंबरीष ने उनका यह उद्यम देखकर अपने पग के स्पर्श करने से अति लज्जित होकर और कृपा से भी अति पीड़ित होकर श्रीहरि के अस्त्र की स्तुति करने लगे ॥

अंबरीष उवाच ॥

राजा अंबरीष जी बोले, कि— हे चक्रराज ! आप अग्नि हो भगवान् हो सूर्य हो और आप चन्द्र हो । ज्योतियों के पति हो आप जल हो आप क्षिति हो आकाश हो वायु हो तन्मात्रा हो इन्द्रियें हो ॥ ३ ॥

हे सुदर्शन ! हे सहस्रार ! हे अच्युत के प्यारे ! आपको नमस्कार हो । हे सर्वास्त्रों के नाशक ! हे इडस्पते ! आप विप्र के लिये कल्याण कारक होवो ॥ ४ ॥

आप धर्म हो ऋत सत्य आप हो आप यज्ञ हो और यज्ञ भोक्ता भी आपही हो लोक के पालने वाले और सर्व के आत्मा भी आप ही हो तथा पुरुष संबन्धि पर तेज आप ही हो ॥ ५ ॥

हे सुनाभ ! अखिल धर्म के सेतु ऐसे आपको नमस्कार हो

स त्वं जगत्त्राण ! खलप्रहाणाये निरूपितः सर्वसहो गदाभृता ।
विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ९ ॥
यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ।
कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥ १० ॥
यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ११ ॥

श्रीशुक उवाच ।

इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ।
अशाम्यत्सर्वतो विप्रं [1]प्रदहद्राजयाच्ञया ॥ १२ ॥
स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ।
प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ १३ ॥

दुर्वासा उवाच ।

अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे ।
कृतागसोऽपि यद्राजन्मङ्गलानि समीहसे ॥ १४ ॥
दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ।
यैः सङ्गृहीतो भगवान् सात्वतामृषभो हरिः ॥ १५ ॥
यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ १६ ॥

भाषा टीका।

आप अधर्म स्वभाव वाले असुरों के जलाने को अग्नि हो त्रिलोक की रक्षा करने वाले ! विशुद्ध तेजस्वी मनके तुल्य वेग वाले और अद्भुत कर्म वाले आप हैं ॥ ६ ॥

आपके धर्म मय तेज से तमका संहार होगया और महात्माओं को प्रकाश प्राप्त हुआ है वाणी के पति, हे प्रभो ! आपकी महिमा बड़ी दुरत्यय है, और यह जो कार्य कारण पर अवर है वह आपही का रूप है ॥ ७ ॥

हे अजित ! जिस समय निरंजन हरि तुमको छोड़ते हैं तब दैत्य दानवों की सेना में प्रविष्ट होकर उनके बाहु, उदर, ऊरु, चरण, शिर, धड़, इन सबों को काटते हुए संग्राम में आप अच्छे विराजते हो ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च त्वया भगवन्नियुक्तेन खलानामेव दण्डः कार्यः साधवस्तु रक्षणीया अतो विप्रस्य रक्षणेनास्माननुगृहाणेत्याह—स त्वमिति। हे जगत्त्राण ! स एवम्भूतस्त्वं खलानामेव प्रहारार्थं निरूपितो नियुक्तः अतोऽस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि तदेव नोऽनुग्रहः ॥ ९ ॥

सर्वसुकृतार्पणेन विप्रस्वास्थ्यं प्रार्थयते—यद्यस्तीति द्वाभ्याम्। विप्रो दैवं देवता यस्मिंस्तत् ॥ १० ॥ ११ ॥

राज्ञस्तस्यैव याच्ञया ॥ १२ ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स एवंविधदुरत्ययमहिमा त्वं साधुलोकपरित्राणदुष्कृद्विनाश-नयोर्निमित्तयोः गदाभृता भगवता निरूपितः नियुक्तः सर्वसहः शरणागतानां सर्वविधापराधसहः अस्मत्कुलस्य दैवहेतवे भाग्य-

[1] अजहादिति वीर० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

हेतवे अन्यथा विप्रहिंसयाऽस्मत्कुलं विनश्येदिति भावः । अस्य विप्रस्य भद्रं मङ्गलं प्राणरक्षणरूपं विधेहि कुरु तद्विप्रभद्रविधानमेवाऽस्माकमस्मद्विषये त्वत्कृतो महाननुग्रहः ॥ ९ ॥

सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते-यद्यस्तीति द्वाभ्याम्, दत्तं दानमिदं स्मार्तस्य कर्मण उपलक्षणम् इष्टं यागादिकमिदं श्रौतस्य स्वनुष्ठितः स्वधर्मः स्ववर्णाश्रमोचितधर्मश्च यदि नोऽस्माकमस्ति यदि वा ऽस्माकं कुलं विप्रा एव दैवं यस्य तथाभूतं चेत्ततो द्विजो विज्वरो भवतु अस्मदीयदत्तादिभिः प्रसन्नो भगवान् सुदर्शनः द्विजं निर्दुःखं कुर्यादिति भावः ॥१०॥

एकः निरसमाऽभ्यधिकः सर्वेषां कल्याणगुणानामाश्रयो भगवानोऽस्माकं यदि सर्वभूतात्मभावेन सर्वात्मकब्रह्मोपासनेन प्रीतोऽस्ति ततो द्विजो विज्वरो भवतु ॥ ११ ॥

इतीत्थं राज्ञो ऽम्बरीषस्य सम्यक् स्तुवतस्ततस्तद्विष्णोश्चक्रं सुदर्शनाभिधं सर्वतो ऽशाम्यत् प्रशान्तमभूत् राज्ञो ऽम्बरीषस्य याच्ञया चिप्रं दुर्वाससमजहात् तत्याज ॥ १२ ॥

अस्त्राग्नेः सुदर्शनाग्नेः तापेन मुक्तः स दुर्वासाः स्वस्तिमान् विज्वरः तमुर्वीशमम्बरीषं परमा आशिषो युञ्जानः कुर्वन् प्रशशंस तुष्टाव ॥ १३ ॥

प्रशंसामेवाह--अहो इत्यादिना राजन्नित्यतः प्राक्तनेन। अहो आश्चर्यमेतत् अनन्तस्य दासानां महत्त्वमधुना मया दृष्टं किं तत् ? यत्कृतापराधस्याऽपि मम। हे राजन् ! अम्बरीष ! मङ्गलानि समीहसे इच्छसीति तत् ॥ १४ ॥

साधूनां भगवद्भक्तानां दुष्करं कर्तुमशक्यं किं क्वचित् निग्रहाऽनुग्रहादिकं सर्वं सुकरमेवेतिभावः । यद्यस्ति दत्तमित्यादिश्लोकद्वयोक्तप्रार्थनामाक्षिपन्नाह——महात्मनां साधूनां दुस्त्यजं किम्वस्ति सर्वं सुत्यजमेवेति भावः । तत्र हेतुं वदन् तान् विशिनष्टि-यैः साधुभिः महात्मभिः सात्वतां भक्तानामृषभः प्रियो हरिरङ्घ्रिनाऽहं भगवान् संगृहीतो वशीकृतः वशीकृतनिरतिशयानन्दरूपभगवतां भागवतानां न किञ्चिद्दुष्करं दुस्त्यजं वाऽस्तीति भावः ॥ १५ ॥

तथा मनागपि तेषां नास्तीत्याह-यन्नामेति । यस्य हरेर्नाम श्रवणमात्रेण पुमान् निर्मलो निष्पापो भवति तस्य तीर्थपदः गङ्गादिपुण्यतीर्थाश्रयपादारविन्दस्य भगवतो दासानां किं वा अवशिष्यते सर्वं सम्पन्नमेवेतिभावः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधुजनत्राणाय खलप्रहाणाये दुर्जननिग्रहाय च अस्मत्कुलस्य दैवहेतवे देवताभक्तयुत्पत्तिनिदानाय ॥ ९—१३ ॥

महित्वं महिमा ॥ १४—१८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रहाणाये प्रकृष्टहान्यर्थम् ॥ ९ १० ॥

तत्र भगवत्प्रीतिमात्रार्थं यद्यत् कृतं तत्तद्बुद्धिं परीक्षते-द्विज इति । द्विजस्य विज्वरीभावं कुर्वीथा इत्यर्थः । अन्यथाऽयं महानत्ययः स्यादिति भावः ॥ ११—२१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वहं त्वद्विद्वेषिसंहाराय भगवता नियुक्तस्तत्र न केवलमेतदेवेत्याह-हे जगत्त्राण खलानां प्रहाणाये संहाराय सर्वसहः सर्वबलस्वरूपः यद्वा वात्सल्यात् सर्वमप्यपराधमस्माकं सहस इति सर्वसहः अस्य विप्रस्यापराधः क्षम्यतामिति भावः । न चाऽस्य मद्विद्वेषित्वमित्याह-अस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि ॥ ९ ॥

तदपि विप्रमत्यजन्तमालक्ष्य शपथं कुर्वन्नाह-यद्यस्तीति, विप्रदैवं विप्रदेवताकम् ॥ १० ॥

तं शपथममानयन्तमालोक्यासाधारणं शपथमाह-यदीति, सर्वेषु भूतेषु आत्मन इव यो भावस्तेन यदि प्रीतः ॥ ११ ॥

क्षिप्रं सर्वतः प्रदहद्व्यशाम्यत् ॥ १२ ॥ १३ ॥

कृतागसोऽपि त्वदमङ्गलमीहमानस्यापीत्यर्थः ॥ १४ ॥

दुष्करोऽनुग्रहः दुस्त्यजोऽपराधः सङ्गृहीत इति यथान्येभ्यनानि सङ्गृह्यन्ते तथेत्यर्थः। हरिः सङ्गृहीतोऽपि तद्वशं चेतश्चोरयतीत्यर्थः ॥ १५— १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वसहः शरणागतानां सर्वापराधसहः हे जगत्त्राण ! स त्वं गदाभृता खलप्रहाणाये अस्मच्छत्रुनाशाय निरूपितः अर्थादनुग्रहार्थे नियुक्तः अतः अस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि कुरु तदेव नोऽनुग्रहः ॥ ९ ॥

सर्वभूतात्मनि तस्मिन्नेव यो भावो भक्तिस्तेन ॥ ११ ॥

राजयाच्ञया अशाम्यत् शान्तमभूत् ॥ १२—१९ ॥

---

### भाषाटीका ।

हे जगत् की रक्षा करने वाले ! श्रीहरि ने आपको सर्व बल रूप समझकर खलों के नाश करने को नियुक्त किये हैं । इसी से आप हमारे कुल को बड़भागी बनाने के लिये इस ब्राह्मण का कल्याण करो बस हमारे ऊपर यही बड़ा अनुग्रह है ॥ ९ ॥

और जो हमने दान किया हो जो यजन किया हो और जो सुन्दर धर्म का अनुष्ठान किया हो और यदि हमारे कुल में ब्राह्मण ही देवता माने जाते हों तो यह द्विज विगत ज्वर वाला होजावे ॥ १० ॥

राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ।
मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः १७ ॥
राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ।
चरणावुपसङ्गृह्य प्रसाद्य समभोजयत् ॥ १८ ॥
सोऽशित्वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम् ।
तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ १९ ॥
प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ।
दर्शनस्पर्शनालापैरातिथ्येनाऽऽत्ममेधसा ॥ २० ॥
कर्मावदातमेतत्ते गायन्ति स्वःस्त्रियो मुहुः ।
कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ २१ ॥

श्रीशुक उवाच ।

एवं सङ्कीर्त्य राजानं दुर्वासाः परितोषितः ।
ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥ २२ ॥
संवत्सरोऽत्यगात्तावद्यावता नागतो गतः ।
मुनिस्तद्दर्शनाकाङ्क्षो राजाऽब्भक्षो बभूव ह ॥२३ ॥
गते च दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरत् ।
ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च पराऽनुभावम् ॥ २४ ॥

---

भाषा टीका ।

जो भगवान् सर्व गुणाश्रय एक श्री हरि मेरे ऊपर सर्व भूतात्मभाव से प्रसन्न हों तो यह द्विज विगत ज्वरवाला होजावे ॥ ११ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी, बोले, कि–राजा के इस प्रकार स्तुति करते करते विष्णु का सुदर्शन चक्र राजा की प्रार्थना से शांत होगया जो कि–सर्व जगत् को जलाये देता रहा ॥ १२ ॥

वह दुर्वासा सुदर्शनचक्र के ताप से मुक्त होकर स्वस्तिमान् हुआ, तब तो राजा को आशीर्वाद देते हुए राजा की प्रशंसा करने लगे ॥ १३ ॥

दुर्वासा उवाच ॥

दुर्वासाजी बोले, कि–अहो ! अनंत के दासों का अब मैंने महत्त्व देखा, कि हे राजन् ! मैंने तुमारा अपराध भी किया तो भी आप मेरे कल्याणों की चेष्टा करते हो ॥ १४ ॥

ठीक ही है साधु लोगों को क्या दुष्कर है ? और महात्माओं को क्या दुस्त्यज है ? क्योंकि जिनने सात्वतों के पति श्रीहरि को सम्यक् ग्रहण किया है ॥ १५ ॥

जिनके नाम श्रवण मात्र से पुरुष निर्मल होजाता है उन तीर्थ पाद श्रीहरि के दासों को क्या अवशिष्ट रहता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

राजेत्यादिश्लोकद्वयं शुकोक्तिः ॥ १८ ॥ १९ ॥

प्रीतोऽस्मीति श्लोकद्वयं पुनश्च विप्रोक्तिः आत्मनि मेधा येन तेनातिथ्येन ॥ २० ॥

भूरियं तत्रत्यो जनः कीर्तयिष्यति ॥ २१ ॥ २२ ॥

तस्य धैर्यातिशयमाह–गतो मुनिर्यावता नागतस्तावत्संवत्सरोऽतिक्रान्त इति ॥ २३ ॥

द्विजस्योपयोगेन भोजनेनातिपवित्रमाहरद्बुभुजे स्ववीर्यं च धैर्यादिलक्षणं पराऽनुभावं भगवतः प्रभावं मेने ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रशस्य स्वस्य कृतज्ञतासूचनाय तत्कृतमुपकारमावेदयति, राजन्निति । हे राजन् ! निरतिशयकरुणानुकम्पितेन त्वया ऽहमनुगृहीतः, कोऽसौ मत्कृतोऽनुग्रहः? तत्राह ममाघमपराधं पृष्ठतः कृत्वा विस्मृत्येत्यर्थः । मे प्राणा अभिरक्षिता इति यदेष एव महाननुग्रहः ॥ १७ ॥

राजा तमित्यादिश्लोकद्वयं शुकोक्तिः । द्विजस्य प्रत्यागमनप्रतीक्षया अकृत आहारो भोजनं येन स राजा अम्बरीषः तं दुर्वाससं चरणावुपसङ्गृह्य प्रसाद्य प्रसन्नं कृत्वा तं द्विजमभोजयत् भोजयामास ॥ १८ ॥

सर्वे कामाः काम्यन्त इति कामः षड्रसाः यस्मिन् तदाहृतं सादरं यथा भवति तथा आनीतम् प्रीतीव समर्पितमातिथ्यं भुक्त्वा तृप्तात्मा सन्तुष्टचित्तः स दुर्वासाः नृपमम्बरीषं भुज्यतां भुज्यतामित्युवाच ॥ १९॥

प्रीतोऽस्मीत्यादिश्लोकद्वयं दुर्वाससः उक्तिः । आत्मनि परमात्मन्येव मेधा बुद्धिर्यस्य अनन्यमेधसेति पाठे विपुलबुद्धेस्तवातिथ्येनाहं नितरां प्रीतः सन्तुष्टोऽस्मि तथा तव भागवतस्य दर्शनादिभिरनुगृहीतश्चास्मि ॥ २० ॥

तवैतद्यवदातं निर्मलं कर्म स्वःस्वर्गे लोके स्त्रियो मुहुर्मुहुर्गीर्वाणा गास्यन्ति तथा तव परमपुण्यां कीर्तिमियं भूर्भूलोकस्थो जनः कीर्तयिष्यति ॥ २१ ॥

इत्येवं राजानं प्रस्तुत्य राजानमम्बरीषमामन्त्र्य पृष्ट्वा परितोषितो,राज्ञेति शेषः । दुर्वासा विहायसा मार्गेणाहैतुकं दैन्यं विनयादिभिरनिवर्त्यं द्विपरार्द्धावस्थायिनमित्यर्थः । ब्रह्मलोकं चतुर्मुखलोकं ययौ तत्राम्बरीषस्य गुणान् स्तोतुमिति शेषः ॥ २२ ॥

अम्बरीषस्य धैर्यं दृढसङ्कल्पं चाह–संवत्सरेति । आगतो मुनिर्दुर्वासाः यावता कालेन पुनः दिक्षु भ्रमन्नागतस्तावत्संवत्सरात्मकः कालोऽत्यगात् व्यतीयाय प्रथमागमनादारभ्य पुनरागमनपर्यन्तः कालः संवत्सरो बभूवेत्यर्थः । तावन्तं च कालं राजाम्बरीषः तस्य मुनेर्दर्शनमेवाकाङ्क्षमाणोऽप एव भक्षयन् बभूव तस्थौ ॥ २३ ॥

दुर्वाससि गते सत्यथाम्बरीषः द्विजोपयोगातिपवित्रं द्विजोपयोगेन द्विजभुक्तावशेषणात्यन्ततः परमं पवित्रमन्नमाहारन् बुभुजे ततः ऋषेर्दुर्वाससो व्यसनं चक्रजं तस्माद्विमोक्षणं स्वस्य वीर्यं धैर्यादिलक्षणं चेत्येतत्सर्वं परस्य परमात्मनः प्रभावं प्रभावकृतमेव मेने अमन्यत ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आतिथ्यम् अतिथिप्रियम् अन्नं सार्वकामिकम् अपेक्षिताखिलभोजनम् ॥ १९ ॥

आत्ममेधसा आत्मज्ञानेन ॥ २० ॥ २२ ॥

इतो गतो मुनिर्यावत्तं नृपं नागतः तावत्संवत्सरोऽत्यगात् मुनिदर्शनाकाङ्क्षी राजा च तावदब्भक्षोऽभूत् ॥ २३ ॥

सोऽम्बरीषो बुद्ध्या मुनेर्व्यसनान्मोक्षं स्ववीर्यं च परमात्मनोऽनुभावः प्रभावः सामर्थ्यं यस्मिंस्तत्तथा भगवन्महिमोपेतं मेन इत्यर्थः ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहैतुकमिति । न विद्यन्ते हैतुकाः शुष्कतर्कनिष्ठवेदबहिर्मुखा यत्र तमित्यर्थः ॥ २२ ॥

अब्भक्षः पूर्वमब्मात्रं भक्षितवान् राजा तद्दर्शनाकाङ्क्ष एव बभूव न तु तावन्मात्रमपि भक्षितवानित्यर्थः । द्विजोपयोगादिति पवित्रमिति द्विजानां भगवत्प्रभावानामुपयोगेन श्रीभगवतः प्रीत्यतिशयात् ॥ २३—२५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स दुर्वासाः आदृतं यथा स्यात्तथा आनीतमातिथ्यमातिथ्यरूपं सार्वकामिकम् ॥ १९ ॥

तव दर्शनादिभिः कर्तृभिरनुगृहीतः अत एव प्रीतः अस्मीति वर्तमाननिर्देशात् पूर्वं तु त्वद्दर्शनादिभिर्नैवाऽनुगृहीतोऽहमप्रीत एवाभूवं यतस्त्वां निरागसमपि क्षपयितुं महाक्रोधान्धः कृत्यामसृजं तेन भक्तकर्मकारकत्वेन तद्विपक्षकभगवद्वत्सलत्वाच्चैव दर्शनादीनि यदि क्वचित्स्युस्तदैव तानि तपस्विज्ञानिविप्राननुगृह्णन्ति नान्यथेत्यत्राऽहमेव दृष्टान्त इति सिद्धान्तो ध्वनितः तथा आत्ममेधसा आत्मनो मम मेधसा ईदृश्या बुद्ध्या यद्यम्बरीषचरणग्रहणं प्रति पावनीयं मे बुद्धिर्नाभविष्यत्तदा कथमतरिष्यं तेन चक्रदत्तमहातापोऽपि मम परमोपकारकः संसारतारकभक्तिमार्गज्ञापकोऽभूदिति भावः ॥ २० ॥

अवदातं शुभ्रम् ॥ २१ ॥

ब्रह्मलोकमिति तत्रत्य ब्रह्मानुभाविनः स्वबन्धून् प्रति स्वीयस्वादृष्टं हरेर्भक्तवत्सलतां भक्तानां भक्तेश्च महाप्रभावं वक्तुमिति भावः न विद्यन्ते हैतुकाः शुष्कतर्कनिष्ठा यत्र तम् ॥ २२ ॥

गतो मुनिर्यावता कालेन नागतः तावत् तावता सम्वत्सरः अत्यगात् निष्क्रान्तः ॥ २३ ॥

द्विजस्य उपयोगेन भोजनेन अतिपवित्रम् आहरत् आहारं कृतवान् स्ववीर्यं च धैर्यादिलक्षणं परस्य भगवत एवानुभावं प्रभावं न तु स्वस्य ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनि परमात्मनि मेधा बुद्धिर्यस्य तेन भगवता अहमनुगृहीतः चक्राद्रक्षितत्वात् तवातिथ्येन दर्शनादिना च प्रीतः प्रसन्नोऽस्मि ॥ २०—२३ ॥

द्विजस्य उपयोगेन भोजनेनातिपवित्रम् आहरत् बुभुजे स्ववीर्यं धैर्यादिकं परानुभावं भगवदनुग्रहकृतम् ॥ २४ ॥

———

एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं(१) ययाऽऽविरिञ्च्यान्निरयांश्चकार ॥ २५ ॥
अथाम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः ।
वनं विवेशात्मनि वासुदेवे मनो दधद्ध्वस्तगुणप्रवाहः ॥ २६ ॥
इत्येतत्पुण्यमाख्यानमम्बरीषस्य भूपतेः ।
सङ्कीर्तयन्ननुध्यायन्भक्तो भगवतो भवेत् ॥ २७ ॥
* ( अम्बरीषस्य चरितं ये शृण्वन्ति महात्मनः ।
मुक्तिं प्रयान्ति ते सर्वे भक्त्या विष्णोः प्रसादतः ॥ ० ॥ )

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे अम्बरीषचरितं नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

भाषा टीका ।

हे राजन् ! अति करुणा वाले आपने मेरे ऊपर बड़ा अनुग्रह किया क्योंकि ? मेरे अपराध को भूल कर आपने मेरे प्राणों की रक्षा करी ॥ १७ ॥

राजाने भी ऋषि के प्रत्यागमन की आकांक्षा करके आहार भी नहीं किया और आने पीछे चक्रराज के ताप से निर्मुक्त कराकर दुर्वासा को दोनों चरण पकड़के प्रसन्न कर अच्छे प्रकार भोजन कराये ॥ १८ ॥

दुर्वासा भी आदर से लाये हुए अतिथि के सत्कार योग्य गुणवत् अन्नका भोजन कर तृप्तहोकर बड़े आदर से राजा से बोले, कि–हे राजन् ! तुम भी भोजन करो ॥ १९ ॥

हे राजन् ! परमभागवत ऐसे आपके दर्शन, स्पर्शन, आलाप, और भगवत् बुद्धि से किया जो आतिथ्य इस से हम बहुत ही प्रसन्न हैं और आपने हमारे ऊपर बड़ा अनुग्रह किया ॥ २० ॥

इस तुमारे उज्वल कर्मको स्वर्गकी स्त्रियें वारम्वार गान करेंगी और तुमारी परमपुण्य कीर्ति का यह पृथिवी कीर्तन करेगी ॥ २१ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजीबोले, कि–दुर्वासा राजा अम्बरीष की इस प्रकार बड़ाई कर बड़ाही सन्तुष्ट होकर राजासे पूछकर आकाश मार्गसे अहैतुक ब्रह्मलोकको गये ॥ २२ ॥

हे राजन् ! जब तक दुर्वासा भागकर फिर नहीं आया इतने में एक संवत्सर व्यतीत होगया पर राजा दुर्वासा के फिर भी दर्शना की आकांक्षा से यही जल पान किये हुए प्रतीक्षा करते रहे ॥ २३ ॥

दुर्वासा के जाने पर वह अंबरीष द्विज के उप योग में लगने से बचा जो अति पवित्र अन्न उससे आहार करते भये और ऋषि के दुःख को और दुःख की निवृत्ति को भी देखकर राजा अंबरीष इतने बड़े अपने धैर्य को परमात्मा का ही प्रभाव जानते हुए कि कितने बड़े भारी मेरे धीर्यादिक होने का कारण श्रीहरि का अनुग्रह ही है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवंविधा अनेके गुणा यस्य सः आविरिञ्चान्विरिञ्चपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः ॥ २५—२७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तविधा अनेके गुणा यस्य स राजाऽम्बरीषः परात्मनि परे-ब्रह्मणि वासुदेवे क्रियाकलापैः सह स्ववर्णाश्रमोचितक्रियासमुदायसहकृतामनन्यप्रयोजनां भक्तिं समुवाह चकारेत्यर्थः । भक्तिं विशिनष्टि, यया अनन्यप्रयोजनया वासुदेवभक्त्या आविरिञ्च्यान् विरिञ्चपर्यन्तभोगान्निरयान्निरयप्रायांश्चकार अमन्यत तथा च स्मर्यते "एतं वै निरयास्तात स्थानस्य परमात्मनः" इति "वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्" इति च ॥ २५ ॥

---

(१) यया विरिञ्च्यादिभयञ्चकार इति विज० पाठ० * श्लोकोऽयमधिकः पठ्यते विश्व० सारार्थदर्शिनी—पाठेन ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽम्बरीषः अनुरूपशीलेषु तनयेषु राज्यं विसृज्य निधाय धीरो जितेन्द्रियो वनं विवेश तत्रान्तरात्मभूते भगवति वासुदेवे मनो दधे एकाग्रचित्तो बभूव ततो ध्वस्तःगुणप्रवाहः संसारो यस्य तादृशः मुक्तो बभूवेत्यर्थः ॥ २६ ॥

एवमुपवर्णितमाम्बरीषोपाख्यानकीर्तनादिजं फलमाह–इतीति । इतीत्थमम्बरीषस्य राज्ञ एतद्वर्णितं पुण्यमाख्यानं भक्त्या सङ्कीर्तयन्ननुध्यायंश्च पुमान्भागवतो भवेत् ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां

पञ्चमोऽध्यायः ॥ ५ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विरिञ्चः आदिः कारणं यस्य स विरिञ्चादिस्तं प्रपञ्चं यथायोग्यम् अधश्चकार न तु सर्वं तथाहि—

"ब्रह्मादिभक्तिकोटयंशांशो नैवाम्बरीषके ।
नैवाहस्यन्यस्य कस्यापि तथापि हरिरीश्वरः ॥
तात्कालिकोपचेयत्वात्तेषां वचस आदिराट्" ।

इति नन्वम्बरीष एव स्तुतिं कृत्वा चक्रनिवर्तनं कृतवान् न ब्रह्मादय इत्यत आह–

"ब्रह्मादयश्च तत्कीर्तिं व्यञ्जयामासुरुत्तमाम् ।
मोहनाय च दैत्यानां ब्रह्मादेर्निन्दनाय च" ॥

अन्यार्थे चेति निन्दनाय असुरकृतायेति शेषः । अन्यार्थं अर्थवादार्थं किञ्च फलानिच्छुत्वज्ञापनाय च विष्णवादिभिश्चक्रं न निवर्तितमित्याह–अयं विष्णुर्ब्रह्माद्याश्च निराशिष इति अम्बरीषस्य मनुष्याधिकारिषु भक्त्यादिगुणैरुत्तमत्वज्ञापनार्थमपि मानुषेषूत्तमत्वाचेति ब्रह्मादीनां भक्त्यादिगुणाधिक्यप्रकटनाय च तेषां भक्त्यादिभिर्गुणैरिति अन्यच्च प्रयोजनं । ब्रह्मादेर्विष्णवधीनज्ञापनाय च केवलमिति तर्हि दुर्वासाः क इति चेद्रुद्रावतारः "दुर्वासाश्च अयं रुद्रः" इति तथापि रुद्रत्वेऽपि असुरावेशादन्यायवचनं तथाप्यन्यायमुक्तवानिति आज्ञाकारित्वेन तस्मिन्ननुग्रहविशेषाय भक्तजनमदविनाशनाय च विष्णुर्निवर्तनं नाकारि "तस्याप्यनुग्रहार्थाय दर्पनाशार्थमेव च" इति शास्त्राविरोधः स्यादतो भक्तिविधानार्थं तदयोग्यार्थं दुष्टजनमोहनार्थं चेति ज्ञातव्यम् ॥ २५ ॥ २६ ॥

आख्यानफलमाह–इतीति ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

पञ्चमोऽध्यायः ॥ ५ ॥

विजयध्वजमतेन षष्ठः ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तादृशोपद्रवान्तरमाशङ्क्य पुत्रस्य योग्यतां दृष्ट्वा च तत्र स्थितिं विहाय वने मानससेवायामेव मनश्चकारेत्याह—अथेति ॥ २६ ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

पञ्चमोऽध्यायः ॥ ५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परात्मनीति परमात्मा ब्रह्म भगवानित्येकतत्त्वो यो वासुदेवस्तस्मिन् क्रियाकलापैर्भगवदाराधनादिभिर्या भक्त्या आविरूढत्वात् भोगान् नरकतुल्यान् ॥ २५ ॥

मनोदधत् मनोधातुं वनं विवेश ॥ २६ ॥

ननु,"स वै मनः कृष्णपदारविन्दयोः" इत्युक्तेर्गार्हस्थ्येऽपि सम्पूर्णम् मनो भगवत्यासीदेव, सत्यम् ? भक्तावनुरागिणः खलु महाधनलुब्धवणिज इव स्वभावो भवेत् कोटीश्वरोऽपि वणिगात्मानं मल्पधनं मन्यमानो धनमुपार्जयितुं यथा समुद्रान्तमपि गच्छति तथैव भक्तोऽपि भक्तिमुपार्जयितुमिति ॥ २७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चमो नवमस्यायं सङ्गतः सङ्गतः सताम् ॥ ५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंविधाः अनेके गुणा यस्य सः क्रियाकलापैः तपोव्रतादिकर्मसमूहैः सह भक्तिं वासुदेवे उवाह यया भक्त्या आविरूढत्वात् विरिञ्चपदसहितान् निरयान् चकार निरयतुल्यान् अमन्यत ॥ २५ ॥

राज्यं विसृज्य वनं विवेश तत्र आत्मनि परमात्मनि मनो दधत ततः ध्वस्तः गुणप्रवाहः संसारो यस्य सः मुक्तो बभूवेत्यर्थः ॥ २६–२७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

पञ्चमाऽध्यायार्थप्रकाशः ॥५॥

———

भाषा टीका ।

इस प्रकार के अनेक गुण वाला वह राजा निखिल क्रिया कलापों से परमात्मा पर ब्रह्म श्री वासुदेव के विषे भक्ति योग को धारण करता हुआ जिस भक्ति योग से ब्रह्माजी के वैभव तक को नरक सदृश समुझता हुआ ॥ २५ ॥

तदनंतर बडे धैर्य युक्त राजा अम्बरीष ने अपने समान स्वभाव वाले पुत्रों के ऊपर राज्य छोडकर अपने आत्मा ऐसे भगवान् वासुदेव के विषे मनको धारण करते हुए । इसी से उनके प्राकृत गुणों का प्रवाह सब नष्ट होगया ॥ २६ ॥

यह अंबरीष भूपति का बड़ा पुण्य आख्यान है इसको जो पुरुष कीर्तन करै और ध्यान करै वह भगवान् का भक्त होता है ॥ २७ ॥

इति श्रीमद्भागवत नवम स्कन्ध में पंचम अध्याय की,
श्रीवृन्दावनस्थ पं भागवताचार्यकृत
भाषाटीका समाप्त ॥ ५ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥



## ॥ षष्ठोऽध्यायः ॥

—:*:—

### श्रीशुक उवाच ।

विरूपः केतुमान् शम्भुरम्बरीषसुतास्त्रयः ।
विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥
रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥
एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥
क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥
तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप ! ।
पञ्चविंशति पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥
स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ।
मांसमानीयतां मेध्यं विकुक्षे ! गच्छ मा चिरम् ॥ ६ ॥
तथेति स वनं गत्वा मृगान् हत्वा क्रियार्हणान् ।
श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥
शेषं निवेदयामास पित्रे तेन च तद्गुरुः ।
चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठारम्भेऽम्बरीषस्य वंशमुक्त्वा ततः परम् ।
षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥
तत्र षष्ठे शशादादिर्मान्धाऽन्तो निरूप्यते ।
प्रसङ्गात्सौभरेराज्या मान्धातृतनयापतेः ॥

॥ १ ॥

तन्तवे सन्तानार्थम् ॥ २ ॥

ये अङ्गिरसा जनिता एते रथीतरस्य क्षेत्रे प्रसूतत्वेन रथीतरगोत्राः सन्त आङ्गिरसा वीर्येण प्रसूतत्वादाङ्गिरसाश्च पुनरपि रथीतराणामन्येषां जातानां प्रवराः मुख्याः स्मृताः यतः क्षत्रोपेता ब्राह्मणा इत्यर्थः ॥ ३ ॥

तदेवं मनोर्वंशस्य पुत्रेषु पृषध्रश्च कविश्च विरक्तत्वान्न वंशप्रवर्तकौ करूषादीनां च सप्तानां वंशा अनन्तरक्रमेणोक्ताः इदानीमवशिष्टम् इक्ष्वाकोर्वंशमाह—क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावः । क्षुतं कुर्वतो मनोर्घ्राणतो जज्ञे "श्रद्धायां जनयामास दश पुत्रान्" इति पूर्वोक्तं बाहुल्याभिप्रायेणेति द्रष्टव्यम् पुत्राणां शते ज्येष्ठाः ॥ ४ ॥

"आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः" तस्मिन्पुरस्तात् समुद्रपर्यन्तं मण्डलविभागेन पञ्चविंशतिर्नृपा अभवन्, हे नृप ! तथैव पश्चाच्च पञ्चविंशतिः मध्ये तु ज्येष्ठास्त्रयः अपरे त्वन्यतो दक्षिणोत्तरादिषु ॥ ५ ॥

विकुक्षिरेव शशाद इति विश्रुत इति वक्ष्यति तत्र हेतुमाह—स एकदेति चतुर्भिः ॥ ६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

क्रियार्हणान् श्राद्धार्हान् अदनमचयत् ॥ ७ ॥
तद्गुरुर्वसिष्ठः प्रोक्षणाय आलोचितसंस्काराय ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तनयेषु राज्यं विसृज्य वनं विवेशत्युक्तम्, के ते तनयाः? इत्यत आह मुनिः—विरूपइति। विरूपादयस्त्रयोऽम्बरीषस्य सुताः तत्र विरूपात्पृषदश्वः सम्बभूव पृषदश्वस्य सुतस्तु रथीतरः ॥ १ ॥

तस्य रथीतरस्याप्रजस्य सन्तानरहितस्य सतस्तद्भार्यायां तन्तवे सन्तानार्थमङ्गिरा ब्रह्मर्षिर्ब्राह्मणो ब्राह्मणस्य वर्चः ब्रह्मवर्चसं ब्रह्महस्तिभ्यां वर्चस इति समासान्तोऽच्प्रत्ययः तदेवैषामस्तीति ब्रह्मवर्चस्विनः सुतान् जनयामास ॥ २ ॥

एते रथीतरस्य क्षेत्रप्रसूतत्वेन रथीतरगोत्रास्सन्तः आङ्गिरसो बीजेन प्रसूतत्वात् आङ्गिरसाश्च अतो रथीतराणां रथीतरपुत्राणां तत्सन्तानप्रसूतानां च प्रवराः क्षत्रोपेता द्विजातयः क्षत्रगोत्रान्वयिनो ब्राह्मणप्रवराः क्षत्रब्रह्मोभयगोत्रान्विताः बभूवुरित्यर्थः ॥ ३ ॥

तदेवं मनोर्दशसु पुत्रेषु पृषध्रकवी विरक्तत्वात् न वंशप्रवर्तकौ करूषादीनां च सतानां वंशास्तारतम्यक्रमेणोक्ताः इदानीमतिविततमिक्ष्वाकोर्वंशमाह—क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावम्। क्षुवतः क्षुतं कुर्वतो मनोः वैवस्वतस्य घ्राणादिक्ष्वाकुरिति प्रसिद्धः सुतो जज्ञे "श्रद्धायां जनयामास दश पुत्रान्" इति पूर्वं बाहुल्याभिप्रायेणोक्तमतो नानेन विरोधः तस्येक्ष्वाकोः पुत्रशतं बभूव तत्र ज्येष्ठा विकुक्ष्यादयस्त्रयः ॥ ४ ॥

एवं स्थिते तेषां शतपुत्राणां मध्ये पञ्चविंशतिसङ्ख्याकाः पुत्राः पुरस्तात् पूर्वस्यां दिशि य आर्यावर्तः विन्ध्याहिमपर्वतयोर्मध्यदेशः तस्य नृपा राजानो बभूवुः आर्यावर्तपुरस्तात्समुद्रपर्यन्तं मण्डलविभागेनाधिपतयो बभूवुरित्यर्थः। हे नृप! तथैव पश्चादार्यावर्ते नृपाः पञ्चविंशतिसङ्ख्याकाः बभूवुः आर्यावर्तमध्ये तु त्रयो ज्येष्ठा विकुक्ष्यादयोऽधिपतयो बभूवुः अपरेऽवशिष्टास्तु अन्यतः दक्षिणोत्तरादिषु नृपा अभवन् ॥ ५ ॥

विकुक्षेरेव शशाद इति नामान्तरं वक्ष्यते तत्र हेतुमाह—स एकदेति चतुर्भिः। कदाचिदिक्ष्वाकुरष्टकाश्राद्धे निमित्ते मांसमानीयतां हे विकुक्षे! शीघ्रं गच्छ विलम्बं माकार्षीरिति सुतमादिशत् आदिष्टवान् ॥ ६ ॥

ततः स विकुक्षिस्तथैवानेष्यामीत्युक्त्वा वनं प्रति गत्वा क्रियार्हणान् श्राद्धार्हान् मृगान् हत्वा श्रान्तो बुभुक्षितश्चापगतास्मृतिः श्राद्धार्थं हता इमे मृगा न मया भक्षितुं योग्या इति स्मृतिर्ज्ञानं यस्य स वीरो विकुक्षिः शशं मृगमादनमभक्षयत् "अदः सर्वेषाम्" इत्यपृक्तहलः आडागमः ॥ ७ ॥

शेषं स्वभुक्तावशिष्टं मांसं स्वपित्रे निवेदयामास स ततस्तेन पित्रा इक्ष्वाकुणा चोदितः प्रोक्षणाय प्रोक्षणेन मांसं संकुरु इत्यादिष्टस्तस्य इक्ष्वाकोर्गुरुर्वसिष्ठ आह—एतन्मांसं दुष्टमुच्छिष्टत्वादोषदुष्टमतोऽकर्मकं श्राद्धानर्हमित्याह ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

१ ॥
तन्तवे सन्तानाय आङ्गिरस उत्पत्तिनिमित्तत्वात्तन्नाम्ना आङ्गिरसः २
रथीतराणां रथीतरसन्तानजातानाम् ॥ ३ ॥
एकवंशं समाप्यान्यवंशं वक्तुं प्रारभते—क्षुवत इति। क्षुतं कुर्वतः घ्राणतः घ्राणेन्द्रियरन्ध्रात् ॥ ४ ॥

"आसमुद्रात्पुरस्तात्तु आसमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते" ॥

इत्येवंविध आर्यावर्ते पुरस्तात् पूर्वदिक्पालास्तेषां विकुक्ष्यादीनां मध्ये पञ्चविंशतिनृपाः पश्चात्पश्चिमदिक्पालाः पञ्चविंशतिनृपाः अभूवन् मध्ये विन्ध्यहिमवत्पर्वतयोर्मध्ये तेषां मध्ये त्रयः पालकाः अपरे च ये त्रिपञ्चाशदवशिष्टाः सप्तचत्वारिंशन्नृपाः ते अन्यतः दक्षिणत उत्तरतः पालका अभूवन्नित्यन्वयः ॥ ५ ॥ ६ ॥
अपस्मृतिः विवेकरहितः ॥ ७ ॥
अकर्मकं कर्मायोग्यम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षष्ठे शशादेन्द्रवाहयुवनाश्वकथोच्यते।
मान्धातुश्च चरित्रान्तः सौभर्याख्यानमद्भुतम् ॥ ० ॥

॥ १ ॥
तन्तवे सन्तानार्थम् ॥ २ ॥
रथीतरस्य क्षेत्रे भार्यायां प्रसूतत्वादाङ्गिरसो वीर्यजातत्वात् एते रथीतरप्रवरपुत्रत्वेन प्रसिद्धाः क्षत्रोपेताः द्विजातयो विप्राः द्वे जाती येषां ते इत्यन्वर्थसंज्ञाः ॥ ३ ॥
मनोर्ज्येष्ठपुत्रस्यातिविततामिक्ष्वाकोर्वंशमाह—क्षुवतस्त्वित्यादिना। क्षुतं कुर्वतो मनोर्घ्राणतो जज्ञे "श्रद्धायां जनयामास दशपुत्रान्" इति बाहुल्याभिप्रायेणेति स्वामिचरणाः ॥ ४ ॥
"आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः" तस्मिन् पुरस्तात् समुद्रपर्यन्तं पृथक्पृथङ्मण्डलेषु पञ्चविंशतिर्नृपा अभवन् पश्चाच्च तथैव पञ्चविंशतिः मध्ये ज्येष्ठास्त्रयः अपरे तु अन्यतः अन्यत्र दक्षिणोत्तरादिषु ॥ ५ ॥
विकुक्षिः शशादसंज्ञोऽभूत्तत्र हेतुमाह—स इति चतुर्भिः ॥६॥७॥
तद्गुरुर्वसिष्ठो दुष्टमित्यत्र आगस्त्यविकुक्षिणा भुक्तत्वात् ॥८॥९॥

---

ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ।
देशान्निःसारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥
स तु विप्रेण संवादं ज्ञापकेन समाचरन् ।
त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ॥ १० ॥
पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ।
शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अम्बरीषसन्ततिं तदनन्तरमिक्ष्वाकुवंशजान् शशादिमान्धात्रन्तनृपतीन् प्रसङ्गात्सौभर्युपाख्यानं चाह—विरूप इति षड्भिः ॥ १ ॥

तन्तवे सन्तत्यर्थम् ॥ २ ॥

एते पूर्वोक्ताः क्षेत्रे रथीतरक्षेत्रे प्रसूताः अर्थात् रथीतरगोत्राः सन्तः अङ्गिरसो वीर्येणोत्पन्नत्वादाङ्गिरसाः पुनरपि रथीतरगोत्रा अन्येषां जातानां प्रवराः मुख्याः स्मृताः यतः क्षत्रोपेताः द्विजातयः ब्राह्मणाः ॥ ३ ॥

क्षुवतः क्षुतं कुर्वतः घ्राणतो जज्ञे "अस्यां जनयामास दश पुत्रान्" इति तु बाहुल्याभिप्रायेणोक्तं तस्येक्ष्वाकोः पुत्रशते ज्येष्ठाः पूर्वजाः विकुक्ष्यादयस्त्रयः ॥ ४ ॥

हे नृप ! तेषां शतसङ्ख्याकानां मध्ये आर्यावर्ते विन्ध्यहिमाचलयोर्मध्ये पुरस्तात् पूर्वस्यां दिशि समुद्रपर्यन्तं मण्डलविभागेन पञ्चविंशतिनृपा अभवन् तथैव पश्चाच्च पञ्चविंशतिः मध्ये तु त्रयो ज्येष्ठा अन्यतो दक्षिणत उत्तरतश्च ॥ ५ ॥

विकुक्षेः शशाद इति नामान्तरं वक्तुमाह—स एकदेत्यादि । आदिशत् आदिष्टवान् ॥ ६ ॥

स विकुक्षिः क्रियार्हणान् श्राद्धयोग्यान् हत्वा श्रान्ततया श्राद्धार्थं हता न भक्षणार्थमिति स्मृतिर्यस्य सः आवृत् शशमभक्षयत् ॥ ७ ॥

तस्य गुरुर्वसिष्ठः प्रोक्षणाय श्राद्धोचितसंस्काराय चोदित आह—एतद्दुष्टं भुक्तशेषभूतम् अत एव अकर्मकं श्राद्धानर्हम् ॥ ८ ॥

---

भाषाटीका ।

श्रीरुक्मिणीवासुदेवाभ्यां नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–विरूप केतुमान् और शंभु ये तीन पुत्र अम्बरीष के हुए विरूप से पृषदश्व हुए और उनके पुत्र रथीतर हुए ॥ १ ॥

रथीतर के जब संतान नहीं हुई तब उनकी भार्या में प्रार्थना करने से नियुक्त होकर अंगिरा महर्षि ने ब्रह्मवर्चस्वी पुत्र उत्पन्न किये ॥ २ ॥

ये सब रथीतर के क्षेत्र [ भार्या ] में अंगिरा से उत्पन्न होने से और रथीतरों में श्रेष्ठ तथा आंगिरस कहाने लगे, क्योंकि ? ये तो क्षात्र धर्म युक्त ब्राह्मण हुए ॥ ३ ॥

( यहां तक मनु के पृषध्र आदिक सात पुत्रों का वंश कहा अब बड़े विस्तार वाला इक्ष्वाकु का वंश कहते हैं ) वैवस्वत मनुमहाराज के छींक आने पर नासिका से एक इक्ष्वाकु नामक पुत्र हुआ उन इक्ष्वाकु के सौ पुत्र हुए तिनमें विकुक्षि, निमि, और दंडक ये तीन जेष्ठ पुत्र हुए ॥ ४ ॥

हे नृप ! तिनमें से पंचविंशति ( २५ ) तो आर्यावर्त से समुद्र पर्यंत पूर्वदेश के राजा हुए और पंचविंशति ( २५ ) पश्चिम के राजा हुए, और ज्येष्ठ तीनों मध्य देश के राजा हुए और जो बचे सैंतालीस ( ४७ ) सो उत्तर दक्षिण के राजा होते हुए ॥ ५ ॥

इक्ष्वाकु महाराज ने एक समय इष्टका श्राद्ध में अपने ज्येष्ठ पुत्र विकुक्षि को आज्ञा दीनी, कि–हे विकुक्षे ! देर मत करो शीघ्र जाओ और श्राद्ध के अर्थ पवित्र मांस ले आओ ॥ ६ ॥

"बहुत अच्छा" इतना कहकर विकुक्षि वन को गया और वहां क्रिया योग्य बहुत से मृगों को मारा परंच परिश्रम से थका हुआ रहा और क्षुधार्त भी रहा इसी से स्मृति के न रहने से उस वीरने एक शशे को खा लिया ॥ ७ ॥

अब शेष (बाकी) जो बचा सो आकार पिता को सौंप दिया इक्ष्वाकुने पक कराकर श्राद्ध के लिये गुरुजी से श्राद्ध की प्रार्थना करी, श्रीवसिष्ठजी जब उस मांस से श्राद्ध करने को बैठे तब प्रोक्षण करते समय बोले, कि यह मांस दूषित है यह श्राद्धकर्म के योग्य नहीं है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्यक्तो विधिः सदाचारो येन तम् ॥ ९ ॥

स त्विक्ष्वाकुः ज्ञापकेन वसिष्ठेन राज्यभोगेन विरक्तो योगीसन् तेन योगेन कलेवरं त्यक्त्वा स यत्परं तत्त्वं तदवाप ॥ १० ॥

शासत्पालयन् हरिमीजे ॥ ११ ॥

पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥
कृतान्त आसीत्समरो देवानां सह दानवैः ।
पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥
वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ।
वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥
स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्छितान् ।
स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥
तेजसाप्यायितो विष्णोः पुरुषस्य परात्मनः ।
प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैत्यपुरस्य जयात्पुरञ्जयः इन्द्रो वाहो यस्येतीन्द्रवाहः ककुदि स्थितत्वात्ककुत्स्थ इति च शशादसुतस्य त्रीणि नामानि तत्तत्कर्मनिमित्तानि ॥ १२ ॥

तान्येव व्याचक्षाणो आह—कृतान्त इति सप्तभिः । कृतं निश्चमन्तयतीति तथा पार्ष्णिग्राहः सहायः ॥ १३ ॥

इन्द्रो यदि मम वाहनं स्यात्तर्हि दैत्यान् हनिष्यामीति तेन वाहनत्वेन वृतः सन्निन्द्रो लज्जया तदनङ्गीकुर्वन्विष्णोर्वचनात्तस्य वाहनत्वाय महान् वृषो बभूवेत्यर्थः ॥ १४—१६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो गुरुणाऽभिहितं पुत्रस्य विकुक्षेस्तत्कर्म ज्ञात्वा नृप इक्ष्वाकुस्त्यक्तो विधिः शास्त्रीयनियमरूपो येन तं सुतं रुषा देशान्निःसारयामास ॥ ९ ॥

ततस्तु स इक्ष्वाकुर्ज्ञापकेन तपसा सह संवादं भगवद्गुणासंवादं विप्रेण सह समाचरन् तपश्चर्यासहकृतं भगवद्गुणानुवादं गुरुणा सहाकरोदित्यर्थः । ततः स इक्ष्वाकुस्तेन आपकसहकृतेन संवादेन योगी राज्यभोगेषु विरक्तः प्रारब्धावसाने कलेवरं त्यक्त्वा परपदं ब्रह्म तदवाप ॥ १० ॥

एवं पितरीक्ष्वाकौ उपरते मृते सत्यथ विकुक्षिरेवागत्येमां पृथिवीं शासत्पालयन् यज्ञैर्हरिमीजे आराधितवान् ततः श्राद्धार्थशशभक्षणनिमित्तात् शशाद इति प्रसिद्धो बभूव ॥ ११ ॥

तस्य विकुक्षेः सुतः पुरञ्जयः स एव इन्द्रवाहः ककुत्स्थ इति चेरितः, कथमुतः कृत एतन्नामत्रयं प्रापदित्यत आह—कर्मभिः क्रियाविशेषैः प्राप्तानि नामानि शृणु कथयतो मम इति शेषः । नामानीति बहुवचनेन पुरञ्जयनामापि कर्मनिमित्तमेवेत्युक्तम् ॥ १२ ॥



पुरञ्जयादिनामनिमित्तानि कर्माणि वक्तुमितिहासमाह—कृतान्त इत्यादिना त्रिभिः श्लोकैः । दानवैः सह देवानां कृतान्तः समरः संग्राम आसीत् तस्य विश्वस्यान्तः कृतान्तः प्रलयः तत्कल्पः समर आसीदित्यर्थः । तदा वीरः पुरञ्जयः दैत्यैः पराजितैः देवैर्विश्वेश्वरस्य प्रभोर्विष्णोर्वचनात् पार्ष्णिग्राहः सहायः तत्वेन वृतः कृतः पुरञ्जयेनेन्द्रो वाहनत्वेन वृतो महान् वृषभ आसीत् ॥ १३ ॥ १४ ॥

ततस्तं महान्तं वृषभमारुह्य ककुदि स्थितः उपविष्टः देवैः स्तूयमानो योद्धुमिच्छुः सन्नद्धः कवचितः स पुरञ्जयो दिव्यं धनुर्निशितान् बाणांश्चादाय ॥ १५ ॥

महात्मनः परमपुरुषस्य विष्णोस्तेजसा आप्यायितः उपबृंहितः त्रिदशैर्देवैः सह प्रतीच्यां दिशि दैत्यानां पुरं समन्तात् निरुद्धवान् ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्यक्तविधिम् आचारशून्यम ॥ ९ ॥

नाम्ना आपकेन विप्रेण संवादं तत्त्वविषयं समाचरन् तेन संवादजनितेन ज्ञानेन योगी ज्ञानी स इक्ष्वाकुः परपदं ब्रह्म तदवाप सदेह आप किम् ? नेत्याह त्यक्तेति ॥ १० ॥

पुनर्विकुक्षिणा किमकारीति तत्राह—पितरीति । यज्ञास ईजे स हरिं यज्ञैः पुष्करवल्लियोरिति केचित्पठन्ति यज्ञास ईजे हरिं यज्ञैः शश्वत् इति विभूत इत्यत्र शशादमपीति शशादः पुष्करवल्लियोः पूर्वदायकः ॥ ११ ॥

तस्य विकुक्षेः इन्द्रो वाहो वाहनं यस्य स तथा कर्मभिर्विक्रमलक्षणैः प्राप्तानि ॥ १२—१४ ॥

इन्द्रात्मकवृषभककुदि स्थितः ॥ १५-१७ ॥

तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् ।
यमाय भल्लैरनयद्दैत्यान् येऽभिययुर्मृधे ॥ १७ ॥
तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ।
विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

समाचरन्, बभूवेति शेषः । समाचरदिति पाठेतु द्वितीयं स इति पदं सार्थकमेव क्वचित्तु टीकापाठः स यत् परं तत्त्वं तदवापेति ॥ १० ॥

इजे हरिमिति यजनप्रभावेनैव पितृत्यागदोषं चातिक्रान्तवानिति ज्ञेयम् ॥ ११—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स तु इक्ष्वाकुः ज्ञापकेन ज्ञानदात्रा वसिष्ठेन ॥ १० ॥

शासत् पालयन् सन् ॥ ११ ॥

दैत्यपुरस्य जयात् पुरञ्जय इन्द्रो वाहोऽस्येति इन्द्रवाहः ककुदि स्थितत्वात् ककुत्स्थ इति कर्मभिरिति यैः कर्मभिर्नामानि तानि शृणु इत्यर्थः ॥ १२ ॥

कृतस्य विश्वस्य अन्तो नाशो यस्मात्तादृशः समर आसीत् तत्र देवैः पार्ष्णिग्राहो वृतः ॥ १३ ॥

इन्द्रो यदि मम वाहनं स्यात्तदा दैत्यान् हनिष्यामीति तेन वाहत्वेन वृतः सन्निन्द्रो लज्जया तदनङ्गीकुर्वन् विष्णोर्वचनात् तस्य वाहनं महावृषो बभूवेत्यर्थः ॥ १४ ॥

स पुरञ्जयः वृषं समारुह्येतीन्द्रवाहः ककुदि स्थित इति ककुत्स्थश्चाभूत् ॥ १५ ॥
त्रिदशैः सहितः पुरं न्यरुणत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्यक्तो विधिः शास्त्रीयमार्गो येन तम् ॥ ६ ॥

स इक्ष्वाकुः ज्ञापकेन वासिष्ठेन सम्वादं भगवद्ध्यानसम्वादं समाचरन् योगी भगवति लब्धचित्तैकाग्र्यः सन् कलेवरं त्यक्त्वा परं भगवन्तमवाप ॥ ११ । १२ ॥

कृतानि सुरासुरशरीराणि यस्मिन्नन्तयतीति कृतोऽन्योन्यतोऽन्तो नाशो यस्मिन्निति वा कृतान्तः समरः सङ्ग्रामः आसीत्तदा वीरः शशादसुतः देवैः पार्ष्णिग्राहः सहायः वृतः ॥ १३ ॥

तदा च शशादसुतेनेन्द्रो वाहनत्वेन वृतो विष्णोर्वचनान्महावृषो बभूव ॥ १४ ॥

स पुरञ्जयः सन्नद्धो धृतकवचः ॥ १५ ॥

आप्यायितः उपबृंहितः ॥ १६ ॥

---

भाषा टीका ।

गुरु के कहे हुए अपने पुत्र के कर्म को सुनकर राजा इक्ष्वाकु ने मारे रोष के विधि को परित्याग करने वाले अपने पुत्र विकुक्षिको देश से निकाल दिया ॥ ९ ॥

तदनन्तर वे इक्ष्वाकु महाराज वसिष्ठजी के साथ संवाद करते २ सर्व विषयों से विरक्त होकर योगी होकर उस योग बल से कलेवर को छोड़कर परम तत्त्व श्रीहरि को प्राप्त हुए ॥ १० ॥

पिता के परलोक होने पर विकुक्षि ने आकर इस पृथिवी का पालन किया और यज्ञों से हरि का यजन किया तथा शशाद इस नाम से विख्यात हुए ॥ ११ ॥

विकुक्षि के पुत्र पुरंजय हुए उनका नाम इन्द्रवाह और ककुत्स्थ भी रहा अब जैसे कर्म से उनके नाम हुए सो सुनो ॥ १२ ॥

कृत युग के अंत में देवताओं का दानवों के साथ में बड़ा समर हुआ उस समय दैत्यों से पराजित ऐसे देवताओं ने इन पुरंजय महाराज को अपने सहायक बनाये ॥ १३ ॥

परंच पुरंजय ने कहा कि यदि इन्द्र हमारा वाहन होगा तो हम शत्रुओं को मारेंगे इतना सुनकर इन्द्र लज्जित हुआ तब फिर विश्वात्मा प्रभु श्रीविष्णु के समुझाने से वाहन होने को स्वीकार कर इन्द्र बड़े भारी बैल बन गये ॥ १४ ॥

तब राजा भी सन्नद्ध होकर दिव्य धनुष और तीक्ष्णबाण हाथ में लेकर युद्ध की इच्छा से उस वृषभ के ककुद [ कन्धे ] पर आरोहणकर के स्थित हुए उस समय सब लोगों ने बड़ी स्तुति करी ॥ १५ ॥

और उस समय परमपुरुष श्रीविष्णुके तेज से आप्यायित होकर देवताओं को साथ लेकर पश्चिम दिशा में जाकर दैत्यों के पुरों को रोकलिया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

येऽभिमुखं ययुस्तान् यमं दर्शयितुं स्वदेहादेव भल्लैरनयदित्यर्थः ॥ १७ ॥

तस्य इषुपाताभिमुखं स्वमालयं पातालम् ॥ १८ ॥

जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ।
प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥ १९ ॥
पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ।
विश्वरन्धिस्ततश्चन्द्रो युवनाश्वश्च तत्सुतः ॥ २० ॥
शावस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ।
बृहदश्वस्तु शावस्तिस्ततः कुवलयाश्वकः ॥ २१ ॥
यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली ।
सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥ २२ ॥
धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ।
धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २३ ॥
दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ।
दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति एतैः कर्मभिः पुरञ्जयादिनामभिः आहूतो व्याहृतः पाठान्तरे आहूत इत्यर्थः ॥ १९ ॥ २० ॥

शावस्तिः शावस्तस्य पुत्रः कुवलयाश्वक एव धुन्धुमार इति ख्यातः ॥ २१ ॥

तत्र कारणमाह—य इति । सुतानामेकविंशत्या सहस्रैर्वृतः सन् हतवान् ॥ २२ ॥

धुन्धुमार इति चेति चकारस्यान्वयः ॥ २३ ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तैर्देत्यैः पुरवासिभिः सह तस्य पुरञ्जयस्य तुमुलं रोमहर्षणां रोम्णां शृण्वतां पश्यतां च रोम्णां हर्षणमुद्धरणं यस्मात्तथा-विधं प्रधनं युद्धमासीत् तत्र भल्लैरिषुभिः पुरञ्जयो दैत्यान् यमायानयत् हतवानित्यर्थः । कान् दैत्यान् ? येऽभिमुख-माययुः ॥ १७ ॥

ततोऽन्ये हतावशिष्टा दैत्यास्तस्य पुरञ्जयस्येषूणां घातस्याभि-मुख्यमागत्येति शेषः । तं युगान्ताग्निमिवोल्बणां दुःसहं दृष्ट्वा तेन हन्यमानाः स्वकीयमालयं पातालं प्रति दुद्रुवुः ॥ १८ ॥

ततः स राजर्षिः पुरञ्जयो दैत्यान् जित्वा तेषां पुरं धनं सर्वं श्रीत्या वज्रपाणये इन्द्राय प्रयच्छत् ददौ इति शब्दो हेत्वर्थकः यतः पुरं जितवान् वृषभस्य ककुदि स्थितः इन्द्र-मेव वाहनत्वेन परिगृहीतवान् ततो हेतोर्नामभिः पुरञ्जयादि-नामभिः पुरञ्जयादिकर्मप्रवृत्तिनिमित्तकैराहूतो व्यवहृतः ॥ १९ ॥

पुरञ्जयस्यानेना इति प्रसिद्धः पुत्रो बभूव तस्यानेनसः सुतः पृथुः ततः पृथोर्विश्वगन्धः पुत्रो बभूव विश्वगन्धात् चन्द्रः तस्य सुतो युवनाश्वः ॥ २० ॥

तस्य युवनाश्वस्य सुतः शावस्तिः तं विशिनष्टि—येन शावस्तिना शावस्तीति प्रसिद्धा पुरी निर्मिता शावस्तेस्सुतो बृहदश्वः ततो बृहदश्वात्कुवलयाश्वकः पुत्रः संबभूव ॥ २१ ॥

कुवलयाश्वस्यैव धुन्धुमारेति नामान्तरं तस्य नाम्नः प्रवृत्तिनिमित्तं कर्माऽऽह—य इति । यः कुवलयाश्वकः बली बलवान् उतङ्कस्य ऋषेः प्रियार्थं प्रियं कर्तुं सुतानामेकविंशत्यासहस्रैरेकविंशतिसहस्र-संख्याकैः सुतैर्वृत इत्यर्थः । युद्धे धुन्धुं नामासुरमहनत् ॥ २२ ॥

अतः धुन्धुमार इति प्रसिद्धो बभूव तस्य कुवलयाश्वकस्य सुतास्ते सर्वे धुन्धुमारस्य मुखाग्निना जज्वलुः दग्धा बभूवुरित्यर्थः । तेषां मध्ये त्रय एव सुता अवशेषिताः ॥ २३ ॥

ते च सुताः हे भारत ! दृढाश्वादिनामानः तत्र दृढाश्वस्य पुत्रो हर्यश्वस्तस्य हर्यश्वस्य निकुम्भः सुतोऽभवत् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्य पुरञ्जयस्य इषोः शरस्य पातस्याभिमुखं प्रत्यक्षयानं स्वमालयं स्वगृहं च हित्वा दैत्याः दुद्रुवुरित्यन्वयः ॥ १८ ॥

स राजा पुरं जित्वा सर्वं पुरधनमपच्छद्रामात् पुनश्च तत्पुरधनं वज्रपाणये प्रत्ययच्छत् दत्तवान् स राजर्षिर्दैत्यपुर-जयात्पुरञ्जय इति नाम्नाऽऽहूतः वृषभरूपेन्द्रस्याश्व वाहनत्वाद् इन्द्रवाह इति नाम्नाऽऽहूतः वृषभककुदि स्थितत्वात्ककुत्स्थ इति नाम्नाऽऽहूतः ॥ १९-२१ ॥

बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित्।
युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥
भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः।
इष्टिं स्म वर्तयाञ्चक्रुरैन्द्रीं ते सुसमाहिताः ॥ २६ ॥
राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः।
दृष्ट्वा शयानान्विप्रांस्तान्पपौ मन्त्रजलं स्वयम् ॥ २७ ॥
उत्थितास्ते निशम्याथ व्युदकं कलशं प्रभो!।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥
राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते।
ईश्वराय नमश्चक्रुरहो दैवबलं अलम् ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दृढाश्व इति निकुम्भस्य बर्हणाश्वः कृशाश्वश्चेत्यर्थः ॥२४—५०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यमाय प्रनयत् यमस्मृत्युं प्रापयामास गत्यर्थकर्मणीति चतुर्थी ॥ १७ ॥

दैत्या अवशिष्टाः प्राद्रवं पातालम् ॥ १८ ॥

जित्वा पुराणि पुरञ्जयः स वज्रपाणिः प्रत्ययच्छत् पुनस्तस्य राजर्षे राजर्षेर्वै ददौ अत एव स राजर्षिः नामाभिः पुरञ्जयादिभि-राहूतः व्याहूतः आहूत इति पाठे आहूत इत्यर्थः ॥ १९२१ ॥

सुतानामेकविंशत्या सहस्रैर्युक्तः समहनत ॥ २२—२९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

येऽभिमुखं ययुस्तान् ॥ १७ १८ ॥

इत्येतैः कर्मभिः पुरञ्जयादिनामभिराहूतः व्याहूतः ॥१९-३२॥

धुन्धुमार इति च ख्यातः ॥ २३—२५ ॥

---

भाषा टीका।

उन दैत्यों के साथ राजा का लोमहर्षण बड़ा युद्ध संग्राम हुआ उस समय जो दैत्य लोग भी पुरञ्जय महाराज के सम्मुख स्थित हुए उनों को भाल वाले बाणों से यमराज के दिखाने के लिये देह सहित यमलोक को पहुंचा दिये। १७ ॥

रिपुंजय के बाणों के सम्मुख खड़े होने को उन दैत्यों का सामर्थ्य नहीं हुआ तब जैसे प्रलय काल के बलवान् अग्नि के सन्मुख न ठहर सकें इसी प्रकार सब दैत्य लोग अपने २ घर को छोड़कर भाग चले ॥ १८ ॥

राजा ने भी दैत्यों के पुर, धन, और लक्ष्मी को जीतकर इंद्र को दिया इसी से उन राजर्षि की पुरंजय इत्यादि नाम से प्रसिद्धि हुई ॥ १९ ॥

पुरंजय के पुत्र अनेनास् हुए उनके सुत पृथु हुए पृथु से विश्वरंधि तिनसे चन्द्र तिनके सुत युवनाश्व हुए ॥ २० ॥

युवनाश्व के सुत शाव हुए जिनने शावस्ती पुरी का निर्माण किया, शावस्त के पुत्र बृहदश्व हुए तिन से कुवलयाश्व हुए ॥ २१ ॥

जिनने उतंक के प्रिय करने को एक विंशति [ २१ ] हजार पुत्रों को साथ लेकर धुंधु नामक राक्षस को मारा ॥ २२ ॥

इसी से इन कुवलयाऽश्व का नाम धुंधमार भी हुआ मारते समय धुन्धु असुर के मुख से निकले हुए अग्नि से वे सब पुत्र जल उठे उनमें से तीन अवशिष्ट रहे ॥ २३ ॥

हे भारत ! उनका नाम दृढाश्व, कपिलाश्व, और भद्राश्व, है दृढाश्व के पुत्र हर्यश्व हुए निकुंभ उनके पुत्र हुए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अथ तस्मान्निकुम्भात्कृशाश्वः ॥ २५ ॥

भार्याणां शतेन सह वसन् पुत्रार्थमिन्द्रदेवत्यामिष्टिं वर्तयामासुः इत्येतावदर्थः ॥ २६ ॥

तदेवाऽह-राजेति षड्भिः। तर्षितस्तृषितः सन् जलार्थं प्रविष्टो मन्त्राभिमन्त्रितं जलं पात्रे स्थितं स्वयं पपौ ॥ २७ ॥

व्युदकं निरुदकम् पुंसवनं पुत्रोत्पत्तिकारणम् ॥ २८ ॥

ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥
कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ।
मां धाता वत्स ! मा रोदीरितीन्द्रो देशिनीमदात् ॥ ३१ ॥
न ममार पिता तस्य विप्रदेवप्रसादतः ।
युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो ! दैवबलमेव मुख्यं बलं पुरुषबलं तु न किञ्चिदिति वदन्त ईश्वराय नमस्कारं चक्रुः ॥ २९ ॥ ३० ॥

अयं कं धास्यति पास्यतीति दुःखितैर्विप्रैरुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रो मां धाता पाता हे वत्स ! मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमदादित्यर्थः ॥ ३१ ॥

तस्य पिता युवनाश्वो भिन्नकुक्षिरपि न ममार किन्तु कालान्तरे तपसा सिद्धिमन्वगात् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निकुम्भस्य सुतो बर्हणाश्वः तस्य सुतः कृशाश्वः तस्य कृशाश्वस्य सुतः सेनजित् तस्य सेनजितः युवनाश्वस्सुतः समभवत् युवनाश्ववृत्तान्तमाह—स इत्यादिना । युवनाश्वोऽनपत्यः सन्तानरहितो ऽत एव निर्विण्णो निर्वेदमापन्नो भार्याशतेन सह वनं प्रति गतः ॥२५॥

तत्र मुनयः अस्य कृपालवः तद्विषयकृपायुक्ता बभूवुः ते ऋषयः सुसमाहितास्सन्तः ऐन्द्रीम् इन्द्रदेवताकामिष्टिं पुत्रकामेष्टिं प्रवर्तयाञ्चक्रुः ॥ २६ ॥

तदा राजा युवनाश्वः तर्षितः निशि रात्रौ पिपासुः यज्ञसदनं प्रविष्टः शयानान् तान् विप्रान् दृष्ट्वा मन्त्रजलं मन्त्राभिमन्त्रितं जलं पत्न्यै देयं स्वयं पपौ पीतवान् ॥ २७ ॥

तत उत्थितास्ते विप्रा निरुदकं कलशं निशाम्य दृष्ट्वा हे प्रभो ! कस्येदं कर्म ? केनेदं पुंसवनं पुत्रोत्पादकारणं जलं पीतम् ? इति पप्रच्छुः ॥ २८ ॥

तत ईश्वरचोदितेन राज्ञा युवनाश्वेन पीतमिदं जलमिति विदित्वा ते ऋषयः अहो ! दैवबलमेव मुख्यं बलं पुरुषबलं तु न किञ्चिदिति, वदन्त ईश्वराय नमश्चक्रुः ॥ २९ ॥

ततः काले पुत्रोत्पत्तिकाले सन्निहिते सति युवनाश्वस्य दक्षिणं कुक्षिं निर्भिद्य तनयश्चक्रवर्ती सप्तद्वीपाधिपतिः संबभूव ॥ ३० ॥

अयं कुमारः स्तन्याभावेन नितरां रोरूयते रोदितीत्यतोऽयं कं धास्यति ? "धेट्पाने" कं पास्यतीत्येवं दुःखितैर्विप्रैरुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रो मामयं कुमारो धास्यति पास्यतीत्युक्त्वा हे वत्स ! मा रोदीरिति वदन् देशिनीं तर्जनीमङ्गुलिमदात् कुमारस्य वक्त्रे निहितवान् इन्द्रेणायं मां धातेत्युक्तत्वात् मान्धातेति प्रसिद्धो बभूव ॥ ३१ ॥

तस्य कुमारस्य पिता च युवनाश्वो विप्राणां दैवस्य चानुग्रहान्न ममार न मृतः ततः स तत्रैव वने तपसाऽनुष्ठितेन सिद्धिं मुक्तिमन्वगात् प्राप ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्षितः उदन्यया युतः मन्त्रपूतं जलम् ॥ २७ ॥

उदकं जलरहितं पुंसवनं पुत्रोत्पत्त्यर्थमभिमन्त्रितम् ॥ २८ ॥

ईश्वरप्रहितेन दैवप्रेरितेन ॥ २९ ॥ ३० ॥

स्तन्यः स्तनपानेच्छुरयं बालो भृशं रोरूयते पुनःपुनरत्यन्तं रोदनं करोति कं धास्यति कस्य स्त्रीजनस्य स्तनं धास्यतीति मत्वा इन्द्रो हे वत्स ! मा रोदीः रोदनं मा कार्षीरित्युक्त्वा देशिनीमङ्गुष्ठानन्तराङ्गुलिमदादतो मान्धातेति नाम ॥ ३१ ॥

तस्य मान्धातुः पिता युवनाश्वः ॥ ३२–३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तर्षितः तृषार्तः मन्त्रैरभिमन्त्रितं पत्न्यै देयं पपौ ॥ २७।२८ ॥

दैवबलमेव बलमिति वदन्तः ॥ २९।३० ॥

अयं कं धास्यति पास्यतीति विप्रैरुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रो मां धाता पाता हे वत्स ! मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमदात् ॥ ३१—३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स युवनाश्वः अनपत्यः अत एव निर्विण्णः भार्याशतेन वनं गतः ऐन्द्रीम् इन्द्रदेवताकाम् इष्टिम् अपत्यार्थं कर्म प्रवर्तयाञ्चक्रुः इत्यन्वयः ॥ २६ ॥

आश्चर्यमेवाह—राजेत्यादिना । मन्त्रजलं मन्त्राभिमन्त्रितं जलं पत्न्यै देयं स्वयं पपौ पीतवान् ॥ २७ ॥

त्रसद्दस्युरितीन्द्रोऽङ्ग ! विदधे नाम तस्य वै ।
यस्मात् त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३३ ॥
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाऽच्युततेजसा ॥ ३४ ॥
ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥
द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ।
धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥ ३६ ॥
यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥
शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥ ३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुंसवनं पुत्रोत्पादकम् ॥ २८ ॥

अहो दैवबलमेव बलमिति वदन्तः ईश्वराय नमश्चक्रुः ॥ २९ ॥

काले पुत्रजन्मसमये उपावृत्ते आसन्ने ॥ ३० ॥

अयं स्तन्यं प्रति भृशं रोरूयते रोदीति अतोऽयं कं धास्यति "धट्पाने" पाययतीत्यर्थः । इति ऋषिभिरुक्ते सति तस्यामिष्ट्या-माराधित इन्द्रः अयं मां धाता धास्यति वत्स ! मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमस्यास्तन्मुखे इति शेषः ॥ ३१-३२ ॥

---

### भाषा टीका ।

निकुंभ के पुत्र बर्हणाश्व हुए, तिनके कृशाश्व हुए तिनके सेनजित हुए तिनके युवनाश्व हुए यह युवनाश्व पुत्र न होने से वन को गये ॥ २५ ॥

वनमें सौ (१००) भार्याओं सहित इनको अति दुःखित देखकर परम कृपालु ऋषि लोगों ने सावधान होकर इन्द्र देवता की इष्टि [ याग ] कराई ॥ २६ ॥

राजा रात्रि में तृषित रहा उठकर जलके लिये यज्ञ शाला में गया वहां पर ब्राह्मणों को सोये हुये देखकर, जो मंत्रित जल पत्नी के लिये धरा रहा उसको आप स्वयं पीलिया ॥ २७ ॥

हे प्रभो ? राजन् ! उन ऋषियों ने उठ कर पात्र में जल न देखकर पूछा, कि-यह किसका काम है ? यह पुंसवन का जल किसने पिया ? ॥ २८ ॥

तदनन्तर ईश्वर की इच्छा से राजा ने पिया है ऐसा जान कर वो ऋषि लोग ईश्वर को नमस्कार करते हुए और कहने लगे, कि—अहो ! दैव का बल ही बल है ॥ २९ ॥

तब तो समय पूरे होने पर राजा युवनाश्व की दाहिनी कुक्षि का भेदन कर चक्रवर्ती पुत्र हुआ ॥ ३० ॥

उस कुमार के जन्म होने पर ऋषि लोग बोले, बिना माता का यह पुत्र किसको धायगा [ किसके स्तन को पियेगा ] तब इन्द्र बोला, कि "मुझे धायगा" इतना कहकर इन्द्र बोला, कि "हे वत्स ! मतरोओ" इस तरह उसे पुचकार कर उसके मुख में अपनी अमृत की वर्षा करने वाली तर्जनी अंगुली देदीनी ॥ ३१ ॥

और उसका पिता भी ब्राह्मण और देव के प्रसाद से नहीं मरा, फिर उसी जगह पर तप से सिद्धि को प्राप्त हुआ ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मान्धातुर्महिमानमाह—त्रसद्दस्युरिति षड्भिः । अङ्ग हे राजन् ! यस्मान्मान्धातुर्दस्यव उद्विग्नाः कम्पिताः सन्तस्त्रसन्त्यत इन्द्रो यस्य त्रसद्दस्युरिति नाम विदधे स मान्धाता ऽवनीमेकः शशासेत्युत्तरेणान्वयः ॥ ३३ ॥

अच्युतस्य तेजसा अप्रच्युततेजसेति वा ॥ ३४ ॥

आत्मविदपि सः यज्ञं विष्णुमीजे; तमेव विशिनष्टि-सर्वदेवमयमिति सार्धेन ॥ ३५ ॥ ३६ ॥

प्रतितिष्ठत्यस्तङ्गच्छति ॥ ३७ ॥

प्रसङ्गात्सौभरिचरितमाह—तेषामिति यावत्समाप्ति । तेषां स्वसारः मान्धातुः कन्याः ॥ ३८ ॥

**तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम् ।**
**यमुनान्तर्जले मग्नस्तप्यमानः परन्तपः ॥ ३९ ॥**
**निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ।**
**जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ॥ ४० ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, महातापसस्य कुतो विवाहप्रसङ्गः? कथं वा जराजर्जरं तं राजकन्या वव्रिरे? तदाह–यमुनान्तर्जल इति षड्भिः। ३९॥

नृपं मान्धातारम् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अङ्ग हे राजन्! अस्य कुमारस्य त्रसद्दस्युरिति नामधेयमिन्द्रश्चकार, तत्प्रवृत्तिनिमित्तमाह–यस्मात् यौवनाश्वात्कुमाराद्रावणादयो दस्यवो दुष्टाः उद्विग्नाश्चलन्तस्त्रसन्ति बिभ्यति अतस्सोऽयं त्रसद्दस्युरिति प्रसिद्धो भवितेति वदन् नाम विदधत इति पूर्वेणान्वयः ॥ ३३ ॥

मान्धातुश्चरित्रमाह–यौवनाश्व इत्यादिना । शतबिन्दोरित्यतः प्राक्तनेन । युवनाश्वस्यापत्यं पुमान् यौवनाश्वः मान्धाता प्रभुस्समर्थः सप्तद्वीपात्मकं भूचक्रं यस्य वशे वर्त्तत इति तथाभूत एक एवाच्युतस्य भगवतस्तेजसा अप्रच्युतेन तेजसेति वा सप्तद्वीपवतीमवनिं भूमिं शशास ॥ ३४ ॥

आत्मवित् देहविलक्षणात्मयाथात्म्यदर्शी सन् भूरयः बह्व्यः दक्षिणाः येषु तैः क्रतुभिर्यज्ञं विष्णुं "यज्ञो वै विष्णुः" इति श्रुतेः । ईजे इयाज यज्ञमेव किं विशेषणाराधितवानित्यतस्तं विशिनष्टि–सर्वदेवमयमिति सार्द्धेन ॥ सर्वदेवताप्रचुरं तत्प्राचुर्यं च तच्छरीरकत्वेन तथा च श्रूयते "स आत्मा अङ्गान्यन्या देवताः" इति देवं स्वतेजसा दीप्यमानं सर्वान्तरात्मानं प्राकृतेन्द्रियागम्यम् ॥ ३५ ॥

द्रव्यादिकमेतत्सर्वं यदात्मकं यद्यज्ञात्मकं तं यज्ञमीजे इति पूर्वेणान्वयः । द्रव्यादिभिः सह पठितो यज्ञशब्दः क्रतुपरः द्रव्यं चरुपुरोडाशादिकं मन्त्रो द्रव्यदेवताप्रकाशको वेदभागः विधिश्चोदनात्मको वेदभागः यजमानः कर्ता धर्मः अपूर्वाख्यो देवताप्रसादरूपो वा देशः "समे यजेत" इत्याद्युक्तः कालो वसन्तादिः ॥ ३६ ॥

यावद्भूमण्डलं सूर्य उदेति उदेत्य प्रकाशयति यद्वा, यावद्यत्र उदेति यत्र च प्रतितिष्ठति अस्तमेति तदवधीकृत्य सर्वमेतद्भूमण्डलं यौवनाश्वस्य मान्धातुः क्षेत्रं पालितं क्षेत्रमिति कथ्यत इत्यर्थः । आचक्रवालमाधिपत्यं कृतवानिति यावत् ॥ ३७ ॥

नृपः मान्धाता नृपेति पाठे हे नृप! शशबिन्दोर्दुहितरि बिन्दुमत्याख्यायां भार्यायां पुरुकुत्सादींस्त्रीन्पुत्रानुत्पादयामासेति शेषः । नृपेति पाठे मान्धातेति कर्तृपदमध्याहर्त्तव्यम् ॥ ३८ ॥

तेषां पुरुकुत्सादीनां स्वसारः भगिन्यः पञ्चाशत्सङ्ख्याकाः सौभरिमृषिं पतिं वव्रिरे परिजगृहुः । कथं वा तमृषिं वव्रिरे? इत्यपेक्षायां प्रसङ्गात्सौभरेश्चरित्रमाह–यावदध्यायसमाप्ति । परमुत्कृष्टं तपो यस्य स परन्तपः सौभरिः परन्तपेति पाठे हे परन्तप! यमुनायामन्तर्जले अन्तर्मध्ये निमग्नस्तप्यमानः परन्तप इत्यपि पाठान्तरं तत्र परन्तपः तप्यमानः कुर्वाणः पाकं पचतीतिवन्निर्देशः ॥ ३९ ॥

कदाचित् मैथुनमेव धर्मो यस्य तस्य मत्स्यश्रेष्ठस्य निर्वृतिं मैथुनसुखं दृष्ट्वा विप्रः सौभरिः जाता समुत्पन्ना स्पृहा मैथुनेच्छा यस्य सः नृपं मान्धातारमागत्यैकां कन्यामयाचत स मान्धाताप्यस्य वैरूप्यमालक्ष्यैवमाह—हे ब्रह्मन्! स्वयम्बरे कामं यथेच्छं कन्या गृह्यतामिति । या कन्या स्वयं त्वां वृणीते सा परिगृह्यतामित्याहेत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यज्ञं श्रीहरिं सर्वदेवप्रधानं सर्वात्मकं मन्त्रतन्त्रद्रव्यादिसर्वव्यापिनम् ॥ ३५ ॥

एतदेव स्पष्टयति–द्रव्यमिति । य आत्मा व्यापी यस्य तद्वात्मकम् ॥ ३६–३९ ॥

निर्वृतिमानन्दम् ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रतितिष्ठति अस्तं गच्छति ॥ ३७ ३८ ॥

ननु, महातपस्विना सौभरिणा कथं ता व्यूढाः कथं वा जराजर्ज्जरितं ता राजकन्या वव्रिरे तत्राह—यमुनेति ॥ ३९ ॥

ततो जलादुत्थाय मथुरामागत्य नृपं मान्धातारम् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अङ्ग हे राजन्! अतः तस्येन्द्रः त्रसद्दस्युरिति नाम विदधे चकार ॥ ३३ । ३४ ॥

उपास्योपासकभेदादुभयविधमात्मानं वेत्तीत्यात्मवित् यतो यज्ञं विष्णुम् ईजे यज्ञं विशिनष्टि–सर्वदेवमयमिति सार्द्धेन । ३५-३६ ।

सोऽप्याह गृह्यतां ब्रह्मन् ! कामं कन्या स्वयम्वरे ।
स विचिन्त्याप्रियं स्त्रीणां जरठोऽयमसम्मतः ।
वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥
साधयिष्ये तथात्मानं सुरस्त्रीणामपीप्सितम् ।
किं पुनर्मनुजेन्द्राणामिति व्यवसितः प्रभुः ॥ ४२ ॥
मुनिः प्रवेशितः क्षत्रा कन्याऽन्तःपुरमृद्धिमत् ।
वृतश्च राजकन्याभिरेकः पञ्चाशता नरः ॥ ४३ ॥
तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ।
ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥
स बह्वृचस्ताभिरपारणीयतपःश्रियाऽनर्घ्यपरिच्छदेषु ।
गृहेषु नानोपवनामलाम्भःसरस्सु सौगन्धिककाननेषु ॥ ४५ ॥
महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गवन्दिषु ॥ ४६ ॥
यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तम्भमजहात्सार्वभौमश्रियान्वितः ॥ ४७ ॥
एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः ।
सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यावत उदेति यावच्च प्रतितिष्ठति अस्तं गच्छति तावत्सर्वं मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥

अधात उत्पादितवान् ॥ ३८ ॥ ३९ ॥

निर्वृतिं मैथुनसुखं नृपं मान्धातारं सोऽपि मान्धाताऽपि स्वयंवरे कन्यां कामं यथेच्छं गृह्यतामित्याह ॥ ४० ॥

भाषाटीका ।

तदनन्तर इन्द्र ने उस पुत्र का नाम त्रसद्दस्यु ऐसा धरदिया क्योंकि ? जिससे रावणादिक दस्यु ( शत्रु ) लोग उद्विग्न हो कर त्रास पाते रहे ॥ ३३ ॥

युवनाश्व के पुत्र मांधाता चक्रवर्ती हुए, और अच्युत के तेज से सप्तद्वीप वाली पृथिवी का आप एक ही शासन (पालन) करते रहे ॥ ३४ ॥

और वह आत्मवेत्ता बड़ी दक्षिणा वाले यज्ञों से सर्व देव मय और सर्वात्मक अतीन्द्रिय यज्ञ पुरुष श्रीहरि का यजन करते हुए ॥ ३५ ॥

द्रव्य, मन्त्र, विधि, यज्ञ, यजमान, ऋत्विज, धर्म, देश, और काल, ये सब यज्ञात्मक हैं जिन परमेश्वर के शरीरभूत हैं ॥३६॥

जहां से सूर्य उदय होते हैं और जहाँतक अस्त को प्राप्त होते हैं वह सब युवनाश्व के पुत्र मान्धाता का क्षेत्र कहाजाता है ॥३७॥

शशबिन्दु की पुत्री बिन्दुमती नामवाली अपनी रानी में मांधाता महाराज के पुरुकुत्स, अंबरीष, और योगी मुचुकुंद ये तीन पुत्र हुए ॥ ३८ ॥

इनों की पचास बहिनों ने सौभरि ऋषि को वर लिया वह ऋषि यमुना जी में मग्न होकर परम तप करते रहे ॥ ३९ ॥

मैथुन धर्म वाले मत्स्य के मैथुन सुखको देखकर सौभरि को भी स्पृहा उत्पन्न हुई तब सौभरि मांधाता नृपति के समीप जाकर एक कन्या की याचना करते हुए ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सोऽपि मान्धाता स्वयंवरे कामं गृह्यतामित्याह—स विप्रः स्त्रीणामप्रियं मां विचिन्त्यानेनाहं प्रत्युक्तोऽत आत्मानं तथा साधयिष्यामीति व्यवसितो निश्चितवानिति द्वयोरन्वयः । अप्रियत्वे हेतुः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

जरठो वृद्धः वलीभिर्युक्तः पलितश्च एजत्कः कम्पमानशिराः तापसत्वादिष्टो वा असम्मतोऽहमिति कृत्वा ॥ ४१ ॥

तथेत्यस्य प्रपञ्चः सुरस्त्रीणामपीप्सितं किंपुनर्मनुजेन्द्राणां यः स्त्रियस्तासामिति ॥ ४२ ॥

ततः किं वृत्तं तदाह-मुनिरिति द्वाभ्याम् । क्षत्रा प्रतीहारेण पश्चादागताऽपि राजकन्याभिः स एक एव वरो वृतः ॥ ४३ ॥ ४४ ॥

तस्य गार्हस्थ्यं वर्णयति-स इति चतुर्भिः । बह्वृच इति मन्त्रसामर्थ्यमुक्तम्. ताभिः सह रेम इत्युत्तरेणान्वयः । क रेमे अपारणीयं दुरन्तं यत्तपस्तस्य श्रिया समृद्धया अनर्घ्याः परिच्छदा येषु तेषु गृहेषु तथा नानाविधोपवनेषु च अमलाम्भांसि येषां तेषु सरस्सु च कथम्भूतेषु सौगन्धिकानां कह्लाराणां च काननानि स्तोमा येषु ॥ ४५ ॥

कथम्भूतेषु गृहादिषु स्रक्कूलाः स्त्रियः पुरुषाश्च येषु अनुगायन्तो द्विजाश्च पक्षिणो भृङ्गाश्च वन्दिनश्च येषु कथम्भूतः महार्हशय्यादिभिरुपलक्षितः सन् ॥ ४६ ॥

स्तम्भं गर्वम् ॥ ४७ ॥

आज्यस्तोकैर्घृतबिन्दुभिः ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स विप्रः सौभरिः स्त्रीणामप्रियं मां विचिन्त्य अनेनाहं प्रत्युक्तः अत आत्मानं सुरस्त्रीणामप्यभीप्सितं साधयिष्यामि इति व्यवसितः निश्चितवान् इति द्वयोरन्वयः स्वस्य स्त्रीणामप्रियत्वे हेतुः जरठो वृद्धः वलिभिर्युक्तः पलितश्च एजत्कः कम्पमानशिराः एवम्भूतोऽयमिति बुद्ध्या राज्ञाऽहं प्रत्युक्त इत्यन्वयः ॥ ४१ ॥

अत आत्मानं सुरस्त्रीणामप्यभीप्सितं योगप्रभावेन साधयिष्ये किंपुनर्मनुजेन्द्राणां मनुजेन्द्रस्त्रीणामभीप्सितं साधयिष्य इति किमु वक्तव्यम् इत्यर्थः । इत्थं व्यवसितः व्यवसाययुक्तः प्रभुः समर्थो योगित्वादिति भावः ॥ ४२ ॥

मुनिः सौभरिः क्षत्रा सूतेन प्रयोज्यकर्त्रा राज्ञा प्रयोजकेन ऋद्धिमत् सर्वसमृद्धिमदन्तःपुरं प्रवेशितः पश्चादागता पश्चात्संगताभिः राजकन्याभिस्सर्वाभिरेक एव वरस्सन् वृतः ॥ ४३ ॥

तदा तासां कन्यानां तदर्थे वरनिमित्तमहमेवैनं वृणे ममैवायमनुरूपः पतिर्न तवेत्येवं सौहृदं सौन्दर्यत्वप्रयुक्तं सौहृदमपोह्य तस्मिन् नितरां सुन्दरे वरे गतं निहितं चेतो यासां तासां महान् कलिः कलह आसीत् योगमाहात्म्येन तादृशसुन्दररूपं धृतवानिति भावः ॥ ४४ ॥

तस्य गार्हस्थ्यं वर्णयति—स इति चतुर्भिः । स बह्वृचः आम्नायमनः सौभरिः यद्वा बह्वृच इति मन्त्रसामर्थ्यमुक्तं ताभिः स्त्रीभिस्सह रेम इत्युत्तरेणान्वयः । अपारणीयं दुरन्तं यत्तपः तस्य श्रिया समृद्ध्या हेतुभूतया अनर्घ्याः परिच्छदा उपकरणानि येषु तेषु गृहेषु उपकल्पितेषु तथा नानाविधेषु उपवनेषु अमलान्यम्भांसि येषु तेषु सरस्सु च, कथम्भूतेषु ? सौगन्धिकानां कह्लारादीनां काननानि स्तोमा येषु ॥ ४५ ॥

कथम्भूतेषु ? गृहादिषु स्रक्कूलाः स्त्रियः पुरुषाश्च येषु अनुगायन्तो द्विजाः पक्षिणो भृङ्गाश्च वन्दिनश्च येषु कथम्भूतः महार्हशय्यादिभिरुपलक्षितस्सन् ॥ ४६ ॥

यस्य सौभरेर्गार्हस्थ्यं सम्यगवलोक्य विस्मितः सार्वभौमसम्पदा युक्तः सप्तद्वीपसहिताया भूमेरधिपतिर्मान्धाता स्तम्भं गर्वं जहौ तत्याज किंचैतन्मदीयमैश्वर्यमित्यमन्यतेत्यर्थः । यद्वा दुहितॄणां सत्कारविषयचिन्तां जहौ ॥ ४७ ॥

इत्थं गृहेष्वासक्तः सौभरिः नानामुखैर्बहुमुखैर्बहुभिरिन्द्रियैरित्यर्थः । अनेनानेकशरीरपरिग्रहः प्रतिशरीरमिन्द्रियभेदश्च सूच्यते विषयान् शब्दादीन् सेवमानोऽनुभवन्नपि न तुतोष नाममन्यत यथाऽज्यस्तोकैर्घृतबिन्दुभिरग्निर्न तृप्यति तद्वत् ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स सौभरिरेवं मुनिः स्त्रीणामसम्मतो जरठः एजत्कम्पमानं कं शिरो यस्य स तथा वलीपलित एत एवमिव इति मत्वा अहं राज्ञा प्रत्युदाहृतः स्वयंवरे गृह्यतामिति प्रोक्तः । इत्थं विचिन्त्यात्मानं मां तथा साधयिष्ये यथा सुरस्त्रीणामभीष्टमिति व्यवसितः ॥ ४१ ॥ ४२ ॥

क्षत्रा कन्यान्तःपुरं प्रवेशितः एकः पश्चादागता राजकन्याभिर्वृतश्चाभूदिति शेषः ॥ ४३ ॥

कलिः कलहः तदर्थे सौभरिपतिपरिणयनार्थे सौहृदं सुहृद्भावम् अपोह्य परित्यज्य तस्मिन्वरे आसक्तचेतसाम् ॥ ४४ ॥

बह्वृचः सौभरिः गृहेषु ताभिः कन्याभिः रेमे इत्यन्वयः । कीदृशेषु गृहेषु अपारणीयश्रिया अनतिघातलक्ष्म्या विराजन्ति शोभमानानि च परिच्छदैरुपकरणैः सहितानि च विराजत्सपरिच्छदानि तेषु श्रिया अपारणीयः अनिर्वाच्यः तथापि परयायोग्य इत्यर्थः इति वा । अमलान्यम्भांस्यमलाम्भांसि प्रसूनानां सौगन्धिकानि सौरभ्ययुतानि नानाविधोपवनानि च अमलाम्भोभिर्युतानि च प्रसूनसौगन्धिकानि च काननानि येषु तानि तथा तेषु अनुगायन्ति द्विजवृन्दानि अनुगायद्द्विजवृन्दानि द्विजानां पक्षिणां वृन्दानि द्विजवृन्दानि तान्येव वल्गूनि येषु तानि तथा तेषु ॥ ४५ ॥ ४६ ॥

एतावदेवानुवर्णयितुं शक्यं नातोऽधिकमित्याशयेनाह-यदिति । स्तम्भमहङ्कारनिमित्तं कर्तव्याकरणलक्षणम् ॥ ४७ ॥

आज्यस्तोकैः घृतबिन्दुभिः ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एजत्कः कम्पमानशिराः प्रत्युदाहृतः प्रत्याख्यातः इति व्यवसितः निश्चितवान् ॥ ४१—४४ ॥

**स कदाचिदुपासीन आत्मापह्नवमात्मनः ।**
**ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ४९ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बह्वृच इत्येतादृशमस्य सौभरेर्मन्त्रसामर्थ्यमेव कारणमिति भावः । अपारणीयमन्यैरशक्यं यत्तपस्तस्य श्रिया समृद्धया सुष्ठेषु गृहेषु गृहोपस्कराश्रितेषु विविधपुरेषु महार्हशय्यादिभिरुपलक्षितो रेमे ॥ ४५ ४६ ॥—

स्मरं गर्वम् ॥ ४७ ॥

आज्यकणैः स्तोकैर्बिन्दुभिः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स सौभरिः स्त्रीणामप्रियं मां विज्ञाय मामयं राजा प्रत्युदाहृतः अतोऽहमात्मानं स्ववंहं सुरस्त्रीणामपीप्सितं भावयिष्ये इति व्यवसितो निश्चित इति द्वयोरन्वयः । अप्रियत्वे हेतुः, जरठो वृद्धः वलीभिर्युक्तः पलितश्च एजत्कम्पमानः कं देहलक्षणो आत्मा यस्य सः "को ब्रह्मणि समीरात्मकामग्रन्थिषु" इति मेदिनीकारकोशात् ॥ ४१ ॥ ४२ ॥

सुत्रा प्रतिहारेण पञ्चाशतापि राजकन्याभिः एक एव मुनिर्वृतः पतित्वेन स्वीकृतः ॥ ४३ ॥ ४४ ॥

तद्गार्हस्थ्यं संक्षेपतो वर्णयति—स इति चतुर्भिः । स बह्वृचः मन्त्रसामर्थ्यः युक्तः महार्हशय्यादिभिरुपलक्षितो गृहादिवृताभिः सह रेमे इत्युत्तरेणान्वयः कीदृशेषु अपारणीयं दुरन्तफलं यत्तपस्तस्य श्रिया समृद्धया हेतुभूतया अनर्घ्याः परिच्छदाः भोगोपकरणानि येषु तथा नानाविधपुष्पवनेषु च अमलाम्भस्सु सरस्सु च कल्हारभूतेषु सौगन्धिकानां कल्हारादीनां काननानि स्तोमा येषु ॥ ४५ ॥

कीदृशेषु गृहादिषु गृहेषु अलङ्कृताः स्त्रियः पुरुषाश्च येषु अनुगायन्तो द्विजाः पक्षिणश्च वन्दिनश्च येषु ॥ ४६ ॥

स्तम्भमहङ्कारं गर्वं तत्याज ॥ ४७ ॥ ४८ ॥

---

भाषाटीका ।

तब राजाने भी सौभरि को कहा कि—हे ब्रह्मन् ! आप स्वयंवर में कन्याओं यथेष्ट ग्रहण करो अर्थात् जो कन्या तुम्हारे ऊपर प्रसन्न होगी उनको देंगे इतना सुनकर सौभरि ने विचारा कि-राजा ने मुझको स्त्रियों के अप्रिय असंमत और जरठ तथा मेरे शरीर में वली [ सलवटें ] देखकर केशों को सफेद और शिर को हिलता हुआ देखकर एक बहाना बनाया है, कि न इस पर कोई प्रसन्न होगी न मैं किसी पुत्री को दूंगी ऐसा विचारा है ॥ ४१ ॥

इसलिये मैं भी अपने रूप को ऐसा बनाऊं कि जिससे मेरा रूप देवताओं की स्त्रियों को भी वाञ्छित होवे । और राजकन्याओं की तो बात ही क्या है ! ऐसा सौभरि ने अपने मनमें व्यवसाय किया और समर्थ तो रहेही वैसे ही बन भी गये ॥ ४२ ॥

राजा की आज्ञा से द्वारी ने कन्याओंके निवास स्थान में ऋषि का प्रवेश कराया तब तो पचास हु राजकन्याओं ने एक ही ऋषि को वर लिया ॥ ४३ ॥

और उनकन्याओं का ऋषि के लिये अपना सुहृदपने को छोड़कर भारी कलह हुआ. सब ही कन्याओं का चित्त ऋषि में लग गया और परस्पर में सभी बोलने लगी, कि—यह तो हमारे अनुरूप है तेरे योग्य नहीं है ॥ ४४ ॥

वो बहूवृच ( बहुतऋचाजाननेवाला ) सौभरि ऋषि, अपार तपकी समृद्धि से अनर्घ्य ( बहुमोल्य ) उपकरण युक्त गृहों में और नानाप्रकार के कमलों के समूह वाले और अमल जलवाले सरोवर जिनमें ऐसे उपवनों में उन पचास राजकन्याओं के साथ रमण करते हुए ॥ ४५ ॥

कैसे सौभरि के विहार स्थल हैं कि—जिनमें उत्तमोत्तम सेज, आसन, वस्त्र, भूषण, स्नान, उबटन, भोजन, और मालाओं से स्त्री और पुरुष सुन्दर अलंकृत होरहे हैं और नानाप्रकार के पक्षिगण और भ्रमर तथा बन्दीजन जहां गान कर रहे हैं । ऐसे उत्तम विभूति वाले गृहों में सौभरि नित्य रमण करते रहे ॥ ४६ ॥

और तो क्या कहें जिन सौभरि ऋषि की गृहस्थीको देखकर सप्तद्वीपवाली पृथ्वी के पति और सार्वभौम सम्पत्ति युक्त मांधाता ने भी गर्व छोड़ दिया ॥ ४७ ॥

इस प्रकार गृह में रत होकर विविध सुखों से विषयों को भोगते हुए भी सन्तोष को प्राप्त न हुए जैसे घृत के बिन्दुओं से अग्नि नहीं शान्त होती है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह-स कदाचिदिति सप्तभिः । आत्मनो मनसो हेतोरात्मनो ऽपह्नवं तपोहानिं ददर्श ॥ ४९ ॥

अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ।
अन्तर्जले वारिचरप्रसङ्गात्प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥
सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि ।
एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥ ५१ ॥
एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात्पञ्चाशदासमुत पञ्चसहस्रसर्गः ।
नान्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥
एवं वसन् गृहे कालं विरक्तो न्यासमास्थितः ।
वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥
तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्मवान् ।
सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥
ताः स्वपत्युर्महाराज ! निरीक्ष्याध्यात्मिकीं गतिम् ।
अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे सौभर्याख्याने
षष्ठोऽध्यायः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

संन्यासी चरितव्रतश्च योऽहं तस्य ब्रह्म तपः ॥ ५० ॥

मिथुनव्रतिनां दाम्पत्यधर्मवतां चेद्यदि प्रसङ्गस्तर्हि तद्व्रतिषु ईश्वराराधनधर्मपरेष्वेव कार्य इति शेषः ॥ ५१ ॥

सङ्गाज्जातं दोषं प्रपञ्चयति—एक इति । पञ्चाशता भार्याभिः सह स्वस्मात्पञ्चाशद्दासनभूवमित्यर्थः । ततश्च मुनेः पञ्चसहस्रसर्ग आसम् प्रत्येकं तासु पुत्रशतरूपेणोत्पत्तेः उभयकृत्यान्यैहिकपारत्रिकाणि कर्माणि तद्विषयाणां मनोरथानाम् अर्थभावः । पुरुषार्थबुद्धिमान् ॥ ५२ ॥

न्यासोऽत्र सङ्गत्याग एव वानप्रस्थधर्मे इत्यर्थः ॥ ५३ ॥ ५४ ॥

आध्यात्मिकीं गतिं ब्रह्मणि लयम् ॥ ५५ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह; तावदनुतापमाह—स इत्यादिना एवं वसन्नित्यतः प्राक्तनेन । बह्वृचानामाचार्यः स सौभरिः कदाचिदुपासीन उपविष्टः आत्मनः मनसा मीनस्य सङ्गाद्धेतोः समुत्थितमात्मापह्नवं स्वरूपानुसन्धानविरोधिनं विषयचापलं ददर्श आलोकितवान् ॥ ४९ ॥

दर्शनमेव प्रपञ्चयति—अहो इति । अहो हे लोकाः ! तपोनिष्ठस्य संन्यासी चरितव्रतश्च योऽहं तस्य ममेमं विनाशं पश्यतः, कोऽसौ विनाशः ? तत्राह—अन्तर्जले यो वारिचरो मीनस्तस्य प्रसङ्गात्सङ्गाच्चिरं धृतं ध्यानं ब्रह्मप्रच्यावितं विस्मृतमिति यदेव एव विनाशः ब्रह्मविस्मरणमात्मनो विनाशप्रायमेवेति मत्वा विनाशं पश्यतेत्युक्तं तथा च श्रूयते "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इति ॥ ५० ॥

अत एवंविधमनर्थं मयेत्यभिप्रायेण मुमुक्षोर्वृत्तिमाह—सङ्गमिति । मुमुक्षुः सर्वात्मना करणत्रयेण मिथुनव्रतिनां दाम्पत्यधर्मवतां सङ्गं त्यजेत् बहिः शब्दादिविषयेषु इन्द्रियाणि न विसृजेत् न प्रवर्तयेत् एकोऽसहाय एव चरेत् रहसि एकान्ते चित्तमनन्ते अपरिच्छिन्ने ईशे भगवति युञ्जीत कश्चिदपि सङ्गो न कार्य एव कश्चिच्चेद्यदि प्रसङ्गस्तर्हि तद्व्रतिष्वनन्त एव रतिर्येषां तेषु साधुष्वेव विधेयः ॥ ५१ ॥

स्वापत्यं प्रपञ्चयति—एक इति । प्रथममेकोऽसहाय एव

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न्यासं सङ्गत्यागरूपं वानप्रस्थधर्ममित्यर्थः ॥ ५३ ॥

सहैवाग्निभिरित्यग्निभिः सहैव देहं त्यक्त्वैवेति शेषः ॥ ५४ ॥

अन्वीयुरनुसस्रुः ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षष्ठोऽयं नवमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधुना तस्यानुतापपूर्वकं वानप्रस्थधर्ममाह–स इति सप्तभिः । आत्मनः स्वस्य आत्मापह्नवम् आत्मनो बुद्धेः अपह्नवं हानिबाधनं ददर्श ॥ ४९ ॥

बुद्धिलाघवमेवाह–अहो इति । यत् येन आत्मापह्नवेन सच्चासौ चरितव्रतश्च तस्य मे इमं विनाशं पश्यत, तदेवाह—चिरं धृतं बहुकालतो बुद्ध्या ध्यानं ब्रह्म प्रत्याविनं विस्मारितम् ॥ ५० ॥

मिथुनव्रतिनाम् औपस्थ्यसुखासक्तानां सङ्गं त्यजेत् बहिर्विषयेषु इन्द्रियाणि न विसृजेत् एकश्चरन् ईशे चित्तं युञ्जीत उक्तार्थे साधनमाह, तद्व्रतिषु ईश्वराराधनवृत्तिधारिषु प्रकृष्टः सङ्गः स्यात् ॥ ५१ ॥

सङ्गदोषं प्रपञ्चयति--एक इति । अप्स्वासि तपस्वी अहम् एक आसं पुनर्मत्स्यसङ्गात् पञ्चाशदासम् अभूवं पञ्चाशता भार्याभिः सम्बन्धात् पुनः पञ्चसहस्रसर्गः आसं तासु प्रत्येकं पुत्रशतरूपेणोत्पत्तेः एवं मायागुणैः रूपादिविषयकरागादिभिर्हृतमतिः अत एव विषये स्त्रीपुत्रादिदर्शनस्पर्शादौ अर्थभावः अर्थबुद्धिः अहम् उभयकृत्यमनोरथानाम् ऐहिकामुष्मिकसुखसाधनवासनानां अन्तं न व्रजामि ॥ ५२ ॥

एवं सङ्गदोषदर्शनेन विषयेभ्यो विरक्तः न्यासं भगवति आत्मसंन्यासमास्थितः ॥ ५३ ॥

अग्निभिराहवनीयादिभिः सह आत्मानं परमात्मनि युयोज इति चिन्तितवान् ॥ ५४ ॥

आध्यात्मिकीं गतिं परमात्मप्राप्तिम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठोऽध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका ।

बह बहुत सी ऋचाओंके आचार्य सौभरि ऋषि एक समय पर बैठे हुए मीन के संग से होने वाली अपनी बड़ी तपकी हानि को देखते हुए ॥ ४९ ॥

और सौभरि बोले, कि—अहो ! बड़ा सुन्दर चरित्र वाला व्रतधारी ऐसे मौनतपस्वी के तप के नाश को तो देखो ? कि–मैंने जल के भीतर जलचर [ मीन ] के प्रसंग को देखकर बहुत काल से जो तप धारण किया था उसे मैंने नष्ट कर दिया ॥ ५० ॥

मुमुक्षु पुरुष मिथुन व्रती लोगों का संग छोड़े और इन्द्रियों को किसी तरह भी बाहर विषयों में न छोड़े । एकाकी विचरता हुआ एकांत में स्थित होकर ईश्वर में चित्त लगावे अथवा उस श्रीहरि में जिनकी वृत्ति लगी हुई है ऐसे साधुजनों का प्रसंग करै यदि मिले तो ॥ ५१ ॥

देखो मै एकही तपस्वी जल में तप करता हुआ मीन के प्रसंग को देखकर पचास स्त्रियों के संग से पचास रूप वाला होगया और अपने पुत्र रूप से पंच सहस्र शरीर वाला भी होगया तो भी अन्त में दोनों मनोरथों के अर्थात् ऐहिलौकिक और पारलौकिक मनोरथों के अन्त को नहीं पहुंचता हूं क्योंकि ? माया के गुणों ने मेरी मति को हरण कर लिया है इसी से विषयों में मेरी अर्थ बुद्धि होरही है ॥ ५२ ॥

सौभरि ने इतना विचार किया और गृह में बसते २ ही विषयों से फिर विरक्त होगये तदनंतर सन्यास लेकर वन में चले गये । उनकी पचासों पत्नी भी पति ही में देवता बुद्धि वाली रहीं सब उनके साथ वन को गईं ॥ ५३ ॥

वहां पर शरीर को कृश करने वाला ऐसा बड़ा तीक्ष्ण तप करके अग्नियों के सहित अपने आत्माको परमात्मा में युक्त करते हुए ॥ ५४ ॥

तब तो हे महाराज ! वे पत्नी लोग भी अपने पति की इस प्रकार की आध्यात्मिक गति को देखकर उनके प्रभाव से अनुगमन करती हुईं । जैसे अग्नि के शांत होने पर अर्चि ( अग्नि की ज्वाला ) आपही शांत होजाती है ॥ ५५ ॥

इति श्रीमद्भागवत नवमस्कन्ध में षष्ठ अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत-
भाषा टीका समाप्त ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

———○:*:○———

## ॥ सप्तमोऽध्यायः ॥

—○:०:○—

श्रीशुक उवाच ।

मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ।
पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ।
हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ॥ १ ॥
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ २ ॥
गन्धर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक् ।
नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ ३ ॥
त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ।
हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ[१] निबन्धनः ॥ ४ ॥
तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ।
प्राप्तश्चण्डालतां शापाद्गुरोः कौशिकतेजसा ॥ ५ ॥
सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ।
पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ॥ ६ ॥
त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ।
यन्निमित्तमभूद्युद्धं पक्षिणोर्बहु वार्षिकम् ॥ ७ ॥
सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ।
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ! ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मान्धातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ।
पुरुकुत्सस्य चाख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥

पुत्रप्रवरः पुत्रश्रेष्ठः स पितामहेन युवनाश्वेन प्रवृतः पुत्रत्वेन स्वीकृतः अत एवाऽस्य मान्धातृप्रवरत्वं तत्सुतोऽम्बरीषस्य सुतः इमे यौवनाश्वाम्बरीषहारीता मान्धातृगोत्रस्य प्रवरा अवान्तरविशेषप्रवर्तकाः यद्वा यौवनाश्वविशेषणम् पितामहेन मान्धात्रा सह आर्षेयवरणे प्रवृतः मान्धाता प्रवरो येषां ते इमे अम्बरीषयौवनाश्वहारीताः यथाऽहाश्वलायनः "हरितकुत्सपिङ्गदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति मान्धातारं हैके ब्रुवते अतीत्याङ्गिरसं मान्धात्रम्बरीषयौवनाश्वेति" इति ॥ १ ॥

पुरुकुत्सस्य वंशं कथयिष्यन्नादौ तावत्तस्य विवाहं प्रभावं चाह—उरगैर्भ्रातृभिर्या दत्ता नर्मदा तया ॥ २ ॥

वध्यान्वधार्हान् स च पुरुकुत्सो नागाल्लब्धवरोऽभूत् वरम् आह, इदं नर्मदया रसातलानयनादिकं स्मरतां सर्पादभयम् इति ॥ ३ ॥

देहकृत्पिता त्रसद्दस्योः सुतोऽनरण्य इत्यर्थः ॥ ४ ॥

---

[१] त्रिबन्धुर इति वीर० विज० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयः शङ्कव इव दुःखहेतवो दोषा यस्याऽसौ त्रिशङ्कुः तदुक्तं हरिवंशे—

"पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।
अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः" ॥

इति परिणीयमानविप्रकन्याऽपहरणात्क्रुद्धस्य गुरोः पितुः शापात् कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेन ॥ ५ ॥

तेनैव कौशिकेन ॥ ६ ॥

पक्षिणोराडीबकयोः विश्वामित्रो राजसूयदक्षिणाच्छलेन हरिश्चन्द्रं सर्वस्वमपहृत्य यातयामास तच्छ्रुत्वा कुपितो वसिष्ठोऽपि विश्वामित्रं त्वमाडीभवेति शशाप सोऽपि त्वं बकोभवेति वसिष्ठं शशाप तयोश्च युद्धमभूदिति प्रसिद्धम् ॥ ७ ॥

"हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा पुत्र आस" इत्यादि श्रुतिप्रसिद्धं हरिश्चन्द्रस्य चरितमाह—सोऽनपत्य इत्यादि यावत्समाप्ति, कथं शरणं यातः? तदाह, पुत्रो मे जायताम् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रासङ्गिकस्सौभरिवृत्तान्तोऽनुवर्णितः अथ प्रकृतं मान्धातृवंशपरम्परां वृत्तान्तं चाह—मान्धातृपुत्रप्रवर इति । मान्धातुः पुत्राणां पुरुकुत्सादीनां मध्ये श्रेष्ठो योऽम्बरीष इति प्रसिद्धः पुत्रः स पितामहेन युवनाश्वेन प्रवृतः पुत्रत्वेन स्वीकृतः अत एव तत्सुतः अम्बरीषस्य सुतः युवनाश्वनामाऽभवत् पितामहस्य नाम दध्रे इत्यर्थः । यौवनाश्वस्तु तत्सुत इति पाठान्तरं तदा मान्धातृपुत्रश्रेष्ठोऽप्यम्बरीषः पितामहेन वृतत्वात् तत्पुत्र अम्बरीषादिशब्दाभिधेयतां विहाय यौवनाश्वशब्दाभिधेयो बभूव इत्यर्थः । युवनाश्वस्यानन्तरापत्यं यौवनाश्विरम्बरीषः "अत इञ्" तस्यापत्यं यौवनाश्वः तस्यापत्यमित्यौत्सर्गिकोऽण् प्रत्ययः तस्य यौवनाश्वस्य सुतो हरित इति प्रसिद्धो बभूव इमे अम्बरीषयौवनाश्वहरिताः मान्धातृप्रवराः मान्धातृसन्तानभूता इत्यर्थः । एवं मान्धातृसुतस्याम्बरीषस्य वंश उक्तः ॥ १ ॥

अथ पुरुकुत्ससन्तानं वक्ष्यन् तावत्तद्वृत्तान्तमाह—नर्मदेति । भ्रातृभिरुरगैर्नागैर्या नर्मदाख्या नागकन्यका पुरुकुत्साय दत्ता तया भुजगेन्द्रैर्भ्रातृभिः प्रचोदितया नर्मदया रसातलं नीतो यः पुरुकुत्सः सः विष्णुशक्तिधृक् भगवदाहितबलः अत एवावध्यानपि गन्धर्वानवधीत् हतवान्, ततो नागात् भुजगेन्द्राल्लब्धः प्राप्तो वरो येन तादृशो बभूव, वरस्वरूपं दर्शयति, सर्पादभयं स्मरतामिममिति, इमं नर्मदया रसातलगमनादिवृत्तान्तं स्मरतां जनानां सर्पादभयं भयाभाव इति मद्वृत्तान्तं स्मरतां सर्पाद्भयं माभूदित्येवंविधं वरं वृतवानस्तं लब्धवानित्यर्थः ॥ २ ॥ ३ ॥

पुरुकुत्सस्यापत्यं पौरुकुत्सस्त्रसद्दस्युस्तं विशिंषन् तत्पुत्रमाह— यस्त्रसद्दस्युरनरण्यस्य देहकृत् अनरण्यमुत्पादितवानित्यर्थः । तस्य अनरण्यस्य सुतो हर्यश्वस्तस्मात् हर्यश्वात् अरुणो जज्ञे इति शेषः अर्थात् अरुणात्त्रिबन्धुरः ॥ ४ ॥

तस्य पुत्रः सत्यव्रतः स एव त्रिशङ्कुरिति विख्यातः स च गुरोर्वसिष्ठस्य शापाच्चण्डालतां गतः प्राप्तः पश्चात्कौशिकस्य विश्वामित्रस्य तेजसा तपःप्रभावेन सशरीर एव स्वर्गं गतः अधुनापि दिवि नक्षत्ररूपेण दृश्यते, कथं चण्डालस्य स्वर्लोके अवस्थानम्? इत्यत्राह—पातित इति । कौशिकतेजसा स्वर्गं प्रापितस्तत्रत्यैर्देवैरवाक्शिराः पातितः पात्यमानः पुनस्तेनैव कौशिकतेजसैव बलात् स्तम्भितः स्वर्गान्तरनिर्माणपूर्वकं कौशिकतेजसा दिव्येव स्थापित इत्यर्थः ॥ ५ ॥ ६ ॥

त्रैशङ्कवः त्रिशङ्कोः पुत्रो हरिश्चन्द्रः, तद्वृत्तान्तमाह—यन्निमित्तं यो हरिश्चन्द्रो निमित्तं कारणं यस्य तद्बहुवार्षिकं युद्धं पक्षिणोः पक्षित्वं प्राप्तयोः विश्वामित्रवसिष्ठयोः बभूव विश्वामित्रो राजसूयदक्षिणाच्छलेन सर्वस्वापहारेण हरिश्चन्द्रं यातयामास तच्छ्रुत्वा कुपितो हरिश्चन्द्रगुरुर्वसिष्ठः विश्वामित्रं त्वमाडिर्भवेति शशाप आडिर्बलाका "शरारिराडिराटिश्च बलाका बिसकण्ठिका" इति कोशात्. विश्वामित्रोऽपि वसिष्ठं त्वं भासो भवेति शशाप तयोश्च युद्धमभूदिति श्रुतिप्रसिद्धम् ॥ ७ ॥

हरिश्चन्द्रस्यैव चरित्रान्तरमाह—स इत्यादिना यावदध्यायसमाप्ति । स हरिश्चन्द्रोऽनपत्यः अपुत्रः सन्नत एव विषण्णः दुःखितः आत्मा मनो यस्य स नारदस्योपदेशात् वरुणं शरणं गतः, कथं शरणं यातः? तत्राह—पुत्र इत्यादिना यजाइत्यन्तेन । वरुणं शरणमुपगम्य हे प्रभो ! मम पुत्रो जायतां तथा अनुग्रहाण ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मातामहेन मातुः पित्रा शशबिन्दुना तस्याम्बरीषस्य सुतः मान्धाता प्रवरो येषां ते तथा ॥ १ ॥

भ्रातृभिः उरगैः पुरुकुत्साय मान्धातृज्येष्ठपुत्राय दत्ता भुजगेन्द्रप्रेरितया तया नर्मदया रसातलं नीतः ॥ २ ॥

सः पुरुकुत्सः तत्र रसातले वध्यार्हान् गन्धर्वानवधीदित्यन्वयः । वधार्हाः अश्वा येषां ते तथा तेभ्यो नागाः किमस्मै वदुरिति तत्राह—सर्पादिति । इमं गन्धर्ववधलक्षणं पुरुकुत्सविक्रमं स्मरतां पुंसां सर्पादभयलक्षणं लब्धवर इत्यर्थः ॥ ३ ॥

पुरुकुत्सस्यापत्यं पौरुकुत्सः त्रसद्दस्युरनरण्यस्य देहकृत् पिता अनरण्यस्त्रसद्दस्युसुत इत्यर्थः ॥ ४ ॥

तस्य त्रिबन्धुरस्य सुतः सत्यव्रतः त्रिशङ्कुरिति नामधेयेन विश्रुत इत्यर्थः । गुरोर्वसिष्ठस्य शापात् कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेण ॥ ५ ॥

सशरीरः मानुषशरीरसहितः स्वर्गं गतः अद्यापि दिवि ज्योतिष दृश्यते सतु ज्वलतीति शेषः । स्वर्गं गतः कथं मानवैर्दृश्यत इति तत्राह—पातित इति । तेन विश्वामित्रेण बलात्तपः शक्तेः ॥ ६ ॥

त्रैशङ्कवः त्रिशङ्कोरपत्यं हरिश्चन्द्रो यो हरिश्चन्द्रो निमित्तं यस्य तद्यन्निमित्तं पक्षिणोः सहायिनोः—"पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति यादवः ॥ ७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"नापुत्रस्य लोकोऽस्ति" इति शास्त्रार्थज्ञानाद्विपद्यमानमना अनपत्यः स हरिश्चन्द्रो नारदोपदेशात् हे प्रभो ! मे पुत्रो जायतामिति निवेद्य वरुणं शरणं गत इत्यन्वयः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मान्धातुरिति सार्द्धकम् । पितामहेन प्रवृतो यौवनाश्वस्तु तत्सुत इत्येव पाठः दृश्यते चायं गौडदेशेषु अर्थस्तु तस्याम्बरीषस्य सुतो यौवनाश्वः अयमपि मान्धातृसनामेत्यर्थः । विष्णुपुराणे तु युवनाश्व इति नाम यथा गर्भश्च युवनाश्वस्योदरेऽभवत् ततो मान्धाता ऽभवत् इति पूर्वमुक्त्वा तत्रैव गद्यान्तरेणाह, अम्बरीष-मान्धातृतनयस्य युवनाश्वः पुत्रोऽभूत् तस्माद्धारितः यतोऽङ्गिरसो-हारीत इति टीकायामर्थान्तरं आर्षेयप्रवरेण प्रवृत इति ऋषिभिः स्वगोत्रत्वेन वृत इत्यर्थः । तेन सह तस्याम्बरीषस्य सुतो हारितः युवनाश्वेन प्रवृत इति ॥ १—३ ॥

त्रसद्दस्युरिति अयमपि मान्धातृसनामेत्यर्थः ॥ ४—७ ॥

श्रीभगवद्दैवतस्य श्रीभागवत एव सगतुमत्वं बोधयितुं हरिश्चन्द्रस्य चरितमाह—सोऽनपत्य इत्यादिना । एवमन्यत्रापि ज्ञेयं तत्र स इति युग्मकम् ॥ ८—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सप्तमे तु हरिश्चन्द्रो मान्धात्रन्वयसम्भवः ।
वरुणं वञ्चयन् पुत्रस्नेहाद्वीजं नृमेधगः ॥

पितामहेन युवनाश्वेन प्रवृतः पुत्रत्वेन स्वीकृतः तत्सुतः अम्बरीषपुत्रो यौवनाश्वः इमे अम्बरीषयौवनाश्वहारीताः मान्धातृप्रवराः मान्धातैव प्रवरो येषां ते ॥ १ ॥

मान्धातृपुत्रस्य पुरुकुत्सस्य वंशं वदन् प्रथमं तस्य विवाहमाह—नर्मदा खलु या उरगैर्दत्ता तया स पुरुकुत्सो रसातलं नीतः ॥ २ ॥

वधार्हान् अवधीत् इदं रसातलनयनादिकं स्मरतां जनानां सर्पाद्भयं स्यात् ॥ ३ ॥

देहकृत् पिता त्रसद्दस्युसुतोऽनरण्य इत्यर्थः ॥ ४ ॥

त्रयः शङ्कव इति दुःखहेतवो दोषा यस्य स त्रिशङ्कुः तदुक्तं हरिवंशे "पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः" इति पाणिग्रहमानविप्रकन्याहरणात् क्रुद्धस्य गुरोः पितुः शापात् कौशिकस्य विश्वामित्रस्य तेजसा ॥ ५ ॥

तेनैव विश्वामित्रेणैव स्तम्भितो नाधःपपात ॥ ६ ॥

पक्षिणोरिति विश्वामित्रो राजसूयदक्षिणाच्छलेन हरिश्चन्द्रस्य सर्वस्वमपजहार याजयामास तच्छ्रुत्वा कुपितो वसिष्ठः विश्वामित्रं त्वमाडिर्भवेति शशाप सोऽपि त्वं बको भवेति शशाप तयोस्तयोर्युद्धमभूत् ॥ ७ ॥

स हरिश्चन्द्रः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मान्धातृवंशं तत्र पुरुकुत्सस्य हरिश्चन्द्रस्य चाख्यानं चाह, मन्धातुरिति सप्तमेन । योऽम्बरीषः प्रकीर्तितः पूर्वत्र स/मान्धातुः पुत्रप्रवरः पुत्रेषु पुरुकुत्सादिषु मध्ये श्रेष्ठः स च पितामहेन युवनाश्वेन प्रवृतः पुत्रतया स्वीकृतः तत्सुतः तस्याम्बरीषस्य सुतः यौवनाश्वः तस्य यौवनाश्वस्य हारीतः पुत्रोऽभूत् इमे यौवनाश्वाम्बरीषहारीताः मान्धातृप्रवराः मान्धातृगोत्रस्य प्रवराः अवान्तरविशेषप्रवर्त्तकाः ॥ १ ॥

मन्धातुः पुत्रस्याम्बरीषस्य वंशमुक्त्वा अथ पुरुकुत्सस्य मान्धातुः पुत्रस्य वंशं कथयिष्यन् आदौ तद्विवाहमाह—नर्मदेति । नर्मदाख्या उरगभगिनी भ्रातृभिरुरगैः पुरुकुत्साय या दत्ता तया भुजगेन्द्रप्रयुक्तया पुरुकुत्सः रसातलं नीतः ॥ २ ॥

वध्यान् वधार्हान् अवधीत् स च पुरुकुत्सः इदमाख्यानं स्मरतां सर्पाज्ञानाधिकश्रवणं सर्पेभ्योऽभयं भवतु इत्येवं नागात् लब्ध वरोऽभूत् ॥ ३ ॥

पौरुकुत्सः पुरुकुत्सपुत्रः त्रसद्दस्युः स च अनरण्यस्य देहकृत् पिता त्रसद्दस्योः पुत्रो ऽनरण्य इत्यर्थः ॥ ४ ॥

तस्य निबन्धनस्य सत्यव्रतः पुत्रः स च सत्यव्रतः त्रिशङ्कुरिति विख्यातः त्रयः शङ्कव इव दुःखहेतवो दोषाः सन्त्यस्मिन् त्रिशङ्कुः हरिवंशे वसिष्ठवाक्यं "पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः" इति गुरोः शापाद्विति "येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै । बाल्यात्कामाच्च मोहाच्च प्रहर्षाच्चापलेन च ॥ जहार कन्यां कामात्सः कस्य चित्पुरवासिनः" इत्येवं कृतापराधः पितात्वेनमथोवाच श्वपाकैः वर्तेयति गुरोः शापात् चाण्डालतां प्राप्तः इत्यर्थः । तदनन्तरं तु सत्यव्रतः विश्वामित्रकलत्राणि रक्षां दुर्भिक्षे कृतवान् तदनन्तरं विश्वामित्रेण वरं वरयेत्युक्तः सशरीरो व्रजे स्वर्गमिति वरं वव्रे विश्वामित्रस्तं याजयित्वा सशरीरं दिवमारोपयामास देवैः सः स्वर्गात्पातितः पुनर्विश्वामित्रेण स्तम्भित इत्याह—कौशिकतेजसेत्यादिना ॥ ५ ॥ ६ ॥

त्रैशङ्कवः त्रिशङ्कुपुत्रः यो निमित्तं हेतुर्यस्य तत् यन्निमित्तं बहुवार्षिकं युद्धं पक्षिणोरन्योन्यशापवशात् आडीबकरूपयोरभूत् विश्वामित्रो राजसूयदक्षिणाच्छलेन हरिश्चन्द्रं सर्वस्वापहारेण यातयामास तच्छ्रुत्वा कुपितो वसिष्ठो विश्वामित्रं त्वमाडी भवेति शशाप विश्वामित्रोऽपि त्वं बको भवेति वसिष्ठं शशापेत्यन्यत्र प्रसिद्धम् ॥ ७ ॥

वरुणं पुत्रो मे जायतामित्येवं शरणं यातः ॥ ८ ॥

---

भाषाटीका ।

श्रीरुक्मिणीदेवीसमेतश्रीकृष्णाय नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–मांधाता का पुत्र श्रेष्ठ जो अंबरीष कथित हुआ उसको पितामह ने अर्थात् युवनाश्व ने गोद लेलिया

यदि वीरो महाराज ! तेनैव त्वां यजे इति ।
तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥
जातः सुतो ह्यनेनाङ्ग ! मां यजस्वेति सोऽब्रवीत् ।
यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ १० ॥
निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ।
दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥ ११ ॥
जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥ १२ ॥
पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ।
यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥ १३ ॥
पुनर्जातो यजस्वेति स प्रत्याहाऽथ सोऽब्रवीत् ।
सान्नाहिको यदा राजन् ! राजन्योऽथ पशुः शुचिः ॥ १४ ॥
इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ।
कालं वञ्चयता तन्तमुक्तो देवस्तमैक्षत ॥ १५ ॥
रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।
प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥

भाषा टीका

और उस अंबरीष का पुत्र यौवनाश्व हुआ ॥ तिसका पुत्र हारीत भया ये तीनों मांधाता के गोत्र में श्रेष्ठ हुए ॥ १ ॥

नर्मदा को उसके भाई लोग सर्पों ने पुरुकुत्स को दीनी, तब वह इनको भुजगेन्द्रकी प्रेरणा से रसातल को लेगई ॥ २ ॥

विष्णु शक्ति को धारण करने वाला पुरुकुत्स भी वहां पर वधके योग्य गंधर्वों को मारते हुए, तब नागलोगों ने उनको वर दिया, कि—जो तुमारे इस नर्मदा के द्वारा आनयन [ आगमन] आदि को स्मरण करेगा उसको सर्पों से भय नहीं होगा ॥ ३ ॥

उन पुरुकुत्स के पुत्र त्रसद्दस्यु हुए तिनके पुत्र अनरण्य हुए तिनके हर्यश्व तिनसे निबन्धन हुए ॥ ४ ॥

निबन्धन के सत्यव्रत हुए जिनका त्रिशंकु ऐसा नाम विख्यात हुआ । जो गुरू वशिष्ठजी के शाप से चंडालपने को प्राप्त हुआ परंच विश्वामित्र के तेज से शरीर सहित स्वर्ग को गया जो अब तक भी आकाश में देख पडता है स्वर्ग में जाने पर देवों ने बलात्कार ( बरजोरी ) से वहां ही वैसा ही स्तंभित कर दिया ॥ ५—६ ॥

त्रिशंकुका पुत्र हरिश्चन्द्र हुआ जिसके निमित्त विश्वामित्र और वशिष्ठ का पक्षि रूप से बहुत वर्षों तक युद्ध हुआ ॥ ७ ॥

वह संतान के बिना दुःखित होकर नारदजी के उपदेश से वरुण देवता के शरण गया और बोला, कि हे प्रभो ! मेरे पुत्र उत्पन्न होवे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदि वीरः पुत्रो मे जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजामीति प्रार्थया तथेत्युक्तवता वरुणेन निमित्तेनास्य रोहितो नाम पुत्रो जातः ॥ ९ ॥

जाते पुत्रे स वरुणो जातः सुतो मामनेन यजस्वेत्यब्रवीत् यदा पशुर्निर्दशो निर्गतदशाहिवसः स्यादित्यत्र स राजाऽब्रवीदित्यनुषङ्गः ॥ १०—१३ ॥

राजन् हे वरुण ! राजन्यः पशुर्यदा सान्नाहिकः कवचसन्नद्धस्त्राहैः सङ्ग्रामसमर्थः स्यात् तदा शुचिः ॥ १४ ॥

इत्येवं तं तं कालं वञ्चयता राज्ञोक्तः प्रार्थितो देवो वरुणस्तं तं कालं प्रत्यैक्षतेत्यर्थः ॥ १५ ॥

चिकीर्षितमात्मना पशुना वरुणयजनम् ॥ १६ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे महाराज वरुण ! यदि वीरः मम पुत्रो जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजानीति भाषाबन्धनेन वरुणं गतः ततस्तथैवास्त्वित्युक्तवता वरुणेन निमित्तनाम्येन हेतुनास्य हरिश्चन्द्रस्य पुत्रो जातः सच रोहित इति प्रसिद्धः ॥ ९ ॥

ततो वरुणस्तव पुत्रस्तु जातस्तेन पुत्रेण पुरुषपशुना मां यजस्वेत्यब्रवीत् एवमुक्तवन्तं वरुणं हरिश्चन्द्र आह—यदा पशुर्निर्दशः निर्गतदशादिनस्तदा मेध्यो भवेत् यागयोग्यो भवेदिति ॥ १० ॥

ततो वरुणस्तथैवास्त्वित्युक्त्वा निर्दशे दशाहस्सु व्यतीतेष्वागत्य यजस्वेत्याह—ततो हरिश्चन्द्रोऽस्य पुरुषस्य पशोर्दन्ता यदि जायेरन् तदा मेध्यो भवेदित्यब्रवीत् ॥ ११ ॥

ततो वरुणस्तथैवास्त्वित्युक्त्वा जातेषु दन्तेषु पुनरेत्य दन्ता अस्य जाताः यजस्वेत्युवाच, ततः स हरिश्चन्द्रो यदास्य पुरुषपशोर्दन्ताः पतन्ति तदाऽयं मेध्यो भवेदित्यब्रवीत् ॥ १२ ॥

ततस्तथैवेत्युक्त्वा वरुणःपतितदन्तं कुमारमवलोक्याऽस्य दन्तास्तु पतिताः मां यजस्वेत्याह—अथ हरिश्चन्द्रः पुनः पशोर्यदा दन्ता जायेरन् तदा पशुः शुचिर्मेध्यो भवेदित्याह ॥ १३ ॥

ततः पुनर्जातदन्तमवलोक्यास्य दन्तास्तु जाता यजस्वेत्याह वरुणः—ततः स हरिश्चन्द्रो हे राजन् वरुण ! अयं राजन्यः अत एव पुरुषपशुर्यदा सान्नाहिकः सान्नाहयोग्यः आयुधग्रहणयोग्यः युद्धयोग्य इति यावत् तदा शुचिर्मेध्यो भवेदिति ॥ १४ ॥

इति इत्थं पुत्रे अनुरागो यस्य पुत्रे यः स्नेहस्तेन यन्त्रितं वशीकृतं चेतो यस्यास एव तं तं निर्देशादिरूपं कालं वञ्चयता हरिश्चन्द्रेणोक्तो देवो वरुणस्तदस्य सन्नाहयोग्यत्वमैक्षत प्रत्यवेक्षमाणो बभूव ॥ १५ ॥

एवं स्थिते तदा रोहितः पितुस्तच्चिकीर्षितमात्मपशुना वरुणयजनमभिज्ञाय प्राणप्रेप्सुर्जिजीविषुर्धनुः पाणौ यस्य तथाभूतोऽरण्यं जगाम ॥ १६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विवृणोति—यदीति । हे महाराज ! यदि वीरः पुत्रो जायेत तर्हि तेन पुत्रेण त्वां यजे पुरुषपशुना त्वां यक्ष्ये इति हरिश्चन्द्रेणोक्ते वरुणेनापि तथास्त्वित्युक्ते नाम्ना रोहितः पुत्रो जात इत्यन्वयः । "अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वां यजा इति तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वायजा इति तथेति तस्य ह पुत्रो जज्ञे रोहितोनामा" इति श्रुत्यर्थं च दृष्टमेवार्थमनुवदति ॥ ९ ॥

अथ वरुण आगत्य हरिश्चन्द्रमवादीदित्याह—जात इति । अङ्ग ! ते सुतो जातोऽनेन पुत्रेण मां यजस्वेति । स हरिश्चन्द्रो यत्किञ्चिदब्रवीदिति "तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशोन्वस्त्वथ त्वा यजा इति ॥ १० ॥

तथेति इति निर्दशः दशाहातिक्रान्तः निर्दशे जाते "स ह निर्दश आस तं होवाच निर्दशोन्वभूद्यजस्व मानेनेतीति यद्यदा पशोर्दन्ता जायेरन् अथ तदा पशुः शुचिः स्यादनन्तरं त्वां यक्ष्य/ इत्यब्रवीत् हरिश्चन्द्रः स होवाचः यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्तान्वस्य जायन्तामथ त्वायजा इति 'तथेति' इति स वरुण प्रत्याह हरिश्चन्द्रं अस्य दन्ता जाता अथ मां यजस्वेति तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व मानेनेति अज्ञत अजायन्त यदास्य पुत्रस्य दन्ताः पतन्त्यथ स शुद्धोऽभवेदित्यब्रवीत् ॥ ११ ॥ १२॥

"स होवाच यदा वै पशोर्दन्ताः पद्यन्ते अथ स मेध्यो भवति दन्तान्वस्य पद्यन्तामथ त्वा निपतिताः अथ मां' यजस्वेति वरुण आह तं होवाचापत्सत वा अस्य दन्ता यजस्वेति मानेनेतीति यदा पशोर्दन्ताः पुनर्जायन्ते अनन्तरं पशुः शुद्धः स्यादिति स हरिश्चन्द्रोऽब्रवीत्स होवाच यदा वै पशोर्दन्ताः॥१३॥

पुनर्जायन्तेऽथ स मेध्यो भवति दन्तान्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति तस्य दन्ताः पुनर्जज्ञिरे इति अस्य दन्ताः पुनर्जाताः अथ मां यजस्वेति स वरुणो हरिश्चन्द्रमेत्याह तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति"। यदा राजन्यः क्षत्रियः सान्नाहुकः सन्नाहयोग्यः शस्त्रास्त्रग्रहणयोग्यः कवचवान्वाथ राजपशुः शुचिरिति स हरिश्चन्द्रोऽब्रवीत् ॥ १४ ॥

स होवाच यदा वै क्षत्रियः सान्नाहुको भवत्यथ स मेध्यो भवति, सन्नाहं तु प्राप्नोथ त्वा यजा इति तथेति स ह सन्नाहं प्राप तं होवाच सन्नाहं तु प्राप्तो यजस्व मानेनेति" इति. ननु, हरिश्चन्द्रः किमर्थं कालमक्षिपदिति तत्राह—इतीति । स्नेहपाशनद्धचेतसा दशाहादिलक्षणं तं तं कालं वञ्चयता हरिश्चन्द्रेणोक्तो वरुणो देवः तमैक्षत प्रत्याह—इत्यन्वयः । तथात्मयागकालमैक्षतेति वा ॥ १५ ॥

स तथेत्युक्त्वा पुत्रमामन्त्रयामास ततायं वै मह्यं त्वामददादन्त त्वयाहमिमं यजा इति स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ स संवत्सरमरण्ये चचार इति श्रुत्यर्थप्रसिद्धं पितुश्चिकीर्षितं वरुणमुद्दिश्यात्मयजनं कर्तुमिष्टं तत्कर्माभिज्ञाय प्राणप्रेप्सुरात्मजीवनेच्छुः रोहितो धनुरादाय वनं प्राप ॥ १६ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तथेति वरं दत्ता वरुणेन हेतुना ॥ ९ ॥

ततश्च स वरुणः जात इत्यादि अब्रवीत् ततश्च राजा पुत्रस्नेहात्तं वञ्चयन् यदेत्यादि अब्रवीत् निर्दशः निर्गतदशदिवसः स्यात् ॥ १०—१३ ॥

राजन् ! हे वरुण ! राजन्यः पशुः सान्नाहिकः कवचबन्धार्हः स्यात्तदा शुचिः ॥ १४ ॥

तं तं कालं वञ्चयता उक्तः प्रार्थितो वरुणस्तं तं कालं प्रत्यैक्षतेत्यन्वयः ॥ १५ ॥ १७ ॥

---

पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ १७ ॥
भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।
रोहितायादिशच्छक्रः सोऽप्यरण्ये वसत्समाम् ॥ १८ ॥
एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।
अभ्येत्याभ्येत्य स्थविरो विप्रोभूत्वाऽऽह वृत्रहा ॥ १९ ॥
षष्ठं सम्वत्सरं तत्र चरित्वा रोहितः पुरीम् ।
उपव्रजन्नजीगर्त्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥
शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ।
ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥ २१ ॥
मुक्तोदरोऽयजद्देवान् वरुणादीन्महत्कथः ।
विश्वामित्रोऽभवत्तस्मिन् होता चाध्वर्युरात्मवान् ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे महाराज । यदि वीरः पुत्रः स्यात् तेनैव पुरुषपशुना त्वां यजे इति हरिश्चन्द्रेणोक्ते तथेति वरुण आह, तदनन्तरमस्य हरिश्चन्द्रस्य रोहितः पुत्रो जातः ॥ ९ ॥

अङ्ग हे हरिश्चन्द्र ! पुत्रो जातः अनेन मां यजस्वेति स वरुणो ऽब्रवीत् यदा पशुः निर्दशो निर्गतदशदिवसः स्यादथ तदा मेध्यो भवेदिति हरिश्चन्द्रो ऽब्रवीत् ॥ १०-१३ ॥

हे राजन् वरुण ! सान्नाहिकः कवचसम्बन्धार्हः ॥ १४ ॥

तं तं कालं वञ्चयता स हरिश्चन्द्रेणोक्तो देवस्तं कालं प्रत्यैक्षत ॥ १५ ॥

रोहितः पितुश्चिकीर्षितं तत्कर्म पुत्रेण पशुना वरुणयजनरूपम् अभिज्ञाय अरण्यं प्रत्यपद्यत ॥ १६ ॥

---

भाषा टीका ।

हे महाराज ! यदि मेरे वीर पुत्र उत्पन्न होवे तो मैं तुमारा उसीसे यजन करूं । तब वरुण ने भी कहा कि तथाऽस्तु तब इसके रोहित नाम वाला पुत्र उत्पन्न हुआ ॥ ९ ॥

तब वरुण देवता बोला, कि—हे हरिश्चन्द्र ! पुत्र तो उत्पन्न हुआ अब इससे मेरा यजन कर, तब हरिश्चन्द्र बोला, कि-जब पशु [ पुत्र ] निर्दश होजावे अर्थात् दश दिवस के ऊपर होजावे तब यजनके योग्य पवित्र होगा ॥ १० ॥

दश दिन होने पर देव आकार बोला, कि-अब यजन करो तब हरिश्चन्द्र बोला, कि—जब इस पशु के दंत उत्पन्न होजांयगे तब पवित्र होगा ॥ ११ ॥

दंत आमने पर देव आकार बोला, कि-दंत आमग मे अब यजन कर, हरिश्चन्द्र बोला, कि-जब इसके दंत गिर जांवें तब पवित्र होवै ॥ १२ ॥

दंत गिरने पर देव बोला, कि—दांतों का पतन हुआ अब यजन कर, तब हरिश्चन्द्र बोला, कि-जब पशु के फिर दंत आवें तब पशु शुचि होवै ॥ १३ ॥

फिर दंत आमने पर देव बोला, कि—दंत फिर आम गये अब यजन कर तब फिर हरिश्चन्द्र बोला, कि-हे वरुण जब यह कवच पहिर ने के योग्य होजावैगा तब पशु शुचि होजावेगा ॥ १४ ॥

इस प्रकार स्नेह से बंधा हुआ चित्त जिसका ऐसा राजा हरिश्चन्द्र अपने पुत्रके अनुराग से तिस २ काल को बचाता जाता रहा और वरुणदेव भी उस २ काल की प्रतीक्षा करते रहे ॥ १५ ॥

रोहित ने अपने पिता के उस चिकीर्षित अभिप्राय को जानकर कि मैं घर रहूंगा तो कभी न कभी वरुण की बांध में जाऊंगा इस प्रकार विचारकर अपने प्राण बचाने की इच्छा से धनुष हाथ में लेकर वन की शरण लीनी ॥ १६ ॥

---

श्रीवंशीधरस्वामिकृतभावार्थदीपिका ।

ततश्च कुपितेन वरुणेन ग्रस्तमत एव जातं महदुदरं यस्य तं पितरं श्रुत्वा ॥ १७ ॥

समां वर्षम् ॥ १८ ॥

द्वितीये च वर्षे वृत्रहा अभ्येत्याभ्येत्य तथैव तं प्रतिषेधन् किञ्चित्किञ्चिदाह ॥ १९—२१ ॥

जमदग्निरभूद्ब्रह्मा वसिष्ठोऽयास्यसामगः ।
तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् ॥ २३ ॥
शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते ।
सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वरुणेन मुक्तमुदरं यस्य सः महत्सु कथा यस्य सः आत्मवान् जमदग्निरध्वर्युरभूत् ॥ २२ ॥

अयास्यो मुनिः सामग उद्गाता अभूदित्यर्थः ॥ २३ ॥

उपरिष्टाद्विश्वामित्रसुताख्यानप्रसङ्गेन ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः कुपितेन वरुणेन प्रस्तं ग्रामस्वरूपमेवाह—जातमहोदरमिति । क्रुद्धेन वरुणेनोत्पादितमहोदरमित्यर्थः । एवम्भूतं पितरं वरुणग्रस्तं श्रुत्वा रोहितः ग्राममयायागन्तुमुद्यतः तमिन्द्रः प्रत्यषेधत मागा इत्युक्तवान् ॥ १७ ॥

एवमुक्त्वा शक्रः पुण्यानां तीर्थानां क्षेत्राणां च निषेवणैः भूमेः पर्यटनं रोहितायादिशत् ग्रामम्मागाः किन्तु भूमण्डलपर्यटनेनोपायेनानुतर्षोत्पन्नं पितुर्महोदरं निवर्तयेत्याहेत्यर्थः । सोपि रोहितः शक्रेण यथोक्तं तथैवारण्ये पुण्यतीर्थक्षेत्रेषु कतिचिद्वत्सरान् अचरत् ॥ १८ ॥

एवं द्वितीये तृतीये चतुर्थे पञ्चमे चैवमं प्रतिवर्षे वृत्रहा इन्द्रः स्थविरो वृद्धो विप्रो भूत्वा अभ्येत्याभ्येत्य प्रत्यषेधत ग्रामं मागाः किन्तु भूमण्डलं पर्यटेत्युक्तवानित्यर्थः ॥ १९ ॥

ततो रोहितः षष्ठं संवत्सरं चरित्वा पुरीमुपगच्छन् अजीगर्तादाङ्गिरसवंशजान्मध्यमसुतं शुनःशेपमक्रीणात् ॥ २० ॥

तञ्च पित्रे हरिश्चन्द्राय प्रदाय स्वप्रतिनिधितया यागार्थं दत्वा नमस्कृत्य ग्रामं प्राप्य सुखं स्थितो बभूव इत्यर्थः । ततो महायशाः महारथो हरिश्चन्द्रः पुरुषमेधेन क्रतुना ॥ २१ ॥

वरुणादीन् देवानयजत् मुक्तोदरः मुक्तमुपगतमुदरं महोदरं यस्य तथाभूतश्च बभूवेत्यर्थः । तत्र पुरुषमेधे विश्वामित्रो होता बभूव भृगुवंशज आत्मवान् ॥ २२ ॥

जमदग्निरध्वर्युरभवत् वसिष्ठो ब्रह्मा बभूव अयास्यो मुनिः सामगः उद्गाता बभूव एवं महर्षिभिः कारितेन पुरुषमेधेनाऽऽराधित इन्द्रस्तुष्टस्तस्मै हरिश्चन्द्राय शातकुम्भमयं स्वर्णमयं रथमदात्, कथं शुनःशेफः पित्रा यज्ञे विक्रीतोऽध्वरमध्यगतोऽमुच्यत ? कथमनन्तरं विश्वामित्रस्यायं प्रवरोऽभूत् शुनःशेफमाजग्मवन्तः ? इत्यपेक्षायामाह—शुनःशेफस्येति । उपरिष्टात् षोडशेऽध्याये शुनःशेफस्य माहात्म्यं स्वप्राणत्राणाय विश्वामित्रवाक्याद्वरुणादीनां तेन संस्तुतानां वरुणादीनां देवतानामनुग्रहादनावरणमित्यादिकं सर्वं वक्ष्यते इत्यर्थः । ततः सभार्यस्य भूपतेः हरिश्चन्द्रस्य सत्यमनृतमेव सारो बलं यस्यां तां धृतिं दृष्ट्वा ॥ २३ ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदनन्तरं पितरं वरुणग्रस्तमित्याकर्ण्य प्रदाय समयान्तरेऽस्य तेन प्रयोजनाय ऐक्ष्वाकं वरुणाज्जग्राह तस्योदरं जज्ञे इत्यादि-ग्रामग्रामान्संचरन्योगीभूत्वा पथाय आजगाम प्रशंसायां रूपवर्णनाय विप्रामात् प्रशस्तपुरुषरूपः विप्र इति यावत् इन्द्रो वृद्धविप्रो भूत्वा तं रोहितमेत्य पर्युवाच अपरिवर्जेन इति सूत्राभिप्रायवचनं कृतवानागन्तव्यमित्युक्तवानित्यर्थः ॥ १७ ॥

तत्र युक्तिमाह—भो रोहित ! नानाभ्रान्ताय पुण्यतीर्थक्षेत्र-निषेवणेन नानाविधेन श्रान्तस्य जनस्य श्रीरेहिकामुष्मिक-मङ्गलवस्तूनि नृषद्वरः अनुक्तकारीगुर्वादिवचनमशृण्वन् स्वेच्छ-विहरन् धर्मकारो वा अतः पापः इति शुश्रुमः तर्हि सञ्चरमाणस्य एकाकिनश्चोरादिभयं स्यादिति नाशङ्कनीयं चरतः पुंसः इन्द्रः एव सखा भवतीत्यतः चरैव त्वं अटनं कुर्वित्येवं कश्चिद्ब्राह्मणोपमयाऽऽत्मरूपमभ्यवेति नृषद्वरोऽनुक्तकारी धर्मकृत् प्रकीर्तित इति इन्द्रेणोपदिष्टो रोहितः किं चकारेति तत्राह सोपीति समा वत्सरान् ॥ १८ ॥

एवं कतिवत्सरान् अरण्ये चचारेति तत्राह—एवमिति । द्वितीये संवत्सरमरण्ये चचारेति आदिशब्दाभ्यां चरिष्यत्यर्थे माले पुष्पिण्यौ जङ्घे चरतः पुष्पिण्यौ गर्भिण्यौ जङ्घयोर्वेत्याचरति अटति नैकत्रास्ते यथाभूष्णुर्भूभूषुः पुरुषः आत्मा सततं पर्यटनफलप्राप्तिः फलग्रहाति यथा किन्तत्फलमाप्नोतीति तत्राह शेरत इति । प्रपथे महामार्गे तीर्थयात्राश्रमेण हता अस्य पुंसः सर्वे पाप्मानः शेरं शीर्णा भवन्तीति अतस्त्वमपि चरन् फलं लभस्वेत्यर्थः । चरैवेत्युक्तार्थे आसीनस्य निरुद्योगस्य भगो भाग्य-मध्याप्त आसीनं भवति समृद्धं न भवति निष्ठन् उत्थानं कुर्वतो भग ऊर्ध्वस्तिष्ठति उत्थानं करोति दुरुपच्छायेन निपद्यमानस्य निकृष्टं गच्छतो भगः शेते निद्रां करोति निकृष्टो भवतीत्यर्थः । चरतः पुण्येन यथा सञ्चरमाणस्य पुंस भगश्चरति चरति प्राप्नोति तस्मिन् शेषः "भगो योऽस्यां भवो वस्तं वसोर्वीर्याकेभूतिषु" इति" कलिः शयान इत्यादिना कालगुणाः कार्यपरो योजनीयः तथाहि कलौ जनः शयानः तामसत्वेन शुभप्रवृत्तिशून्यो भवति द्वापरे जनः सञ्जिहानः संशयानः इदं वा सदो वेति तत्त्वं न निश्चिनोति सन्धानिपुणो ह्यासीद्

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

द्वापरो युगमंशयाविति त्रेतायां जात उत्तिष्ठन् धर्माधर्मकाल-लक्षणकार्योद्योगी भवति, कृतयुगे जातः कृतोऽभिहितं चरन् सम्पद्यते ज्ञानसम्पूर्णो भवतीत्यतस्त्वं चरको भवेत्यर्थः। "युगोक्ष-पातेपर्यास कृतं कृते हितेऽध्ववत्" इति भूमौ चरन् पर्यटन् मधु-सुखं विन्दति वै अशनक्लेशोऽपि नास्तीत्याह—स्वादुमुदुम्बरं फलविशेषं चरन् भक्षयन् भूमिपर्यटनं कुर्वन् इत्थं भावमाह-चरन्निति। अवशामननाभ्यां स्वादुपुनःपुनः सेवाबुद्धिजनकम् उदुम्बरम् अत्युत्तमं वरं वरणीयं सर्वगुणाभिरामं हरिञ्चरन् शरणं गच्छन् भवेति वा नित्यमटन्कोऽस्तीति तत्राह-सूर्य-स्येति "अश्वरन्नविरतमटन् न तन्द्रयते आलस्यं न करोति तस्य सूर्यस्य श्रेमणं अस्याहतगमनशिक्षां पश्य। तवाप्येवमरणं चरतः जीवनक्षेमस्स्यादिति वृत्रहा रोहितम् अशिक्षयतेत्यन्वयः॥ १९॥

एवं शिक्षितस्तत्रारण्ये षष्ठं संवत्सरं चरित्वा पुरीमुपग-च्छन् रोहितोऽजीगर्तान्मध्यमं सुतं शुनःशेपमक्रीणात् गवां शतं दत्त्वा स्वीकृतवान्॥ २०॥

स्वीकृत्य शुनःशेपाख्यं पशुं हरिश्चन्द्राय पित्रे प्रदाय पितरं समवन्दतेत्यन्वयः षष्ठं संवत्सरमरण्ये चचार सोऽजी-गर्तं सौयवसिमृषिमशनयापरीतमरण्यमुपेयाय तस्य ह त्रयः पुत्रा आसुः शुनः पुच्छः शुनः शेपः शुनो लांगूल इति तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणा इति स ज्येष्ठं पुत्रं निगृह्णात उवाच नन्विममिति नो एवममिति कनिष्ठं माता तौह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद्ग्राममेयाय स पितर-मेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाचेति ततः पुरुषपशुप्राप्त्यनन्तरं महा-यशा हरिश्चन्द्रः पुरुषमेधेन पुरुषपशुहिंसालक्षणयज्ञेन ॥२१॥

वरुणादीन् यजंस्ततः स राजा मुक्तोदरो जलोदररोगरहितो-ऽभवदित्यन्वयः। तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच तमेत-मभिषेचनीये पुरुषं पशुमालभे इति सोऽभिषेचनीय इति तादर्थ्ये सप्तमी वरुणमुद्दिश्येति आलभे आलम्भनम् उपक्रान्तवान् तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गातेति ब्राह्मणार्थत्वेनास्मिन् यज्ञे होत्रादीनाह विश्वामित्र इति॥ २२॥

* अयास्य एव सामगः अयास्यसामगः साम गायतीति सामग उद्गातेत्यर्थः। आत्मा परमात्मास्यास्तीति आत्मवान् तस्मै शुनः शेपाय॥ २३॥

उपरिष्टाच्चतुर्दशेऽध्याये भूपतेर्भार्यया सहितस्य सत्यसारं सज्जनहितकरं वाक्यं धृतिं लौकिकमार्गादचलनं दृष्ट्वा॥ २४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तादृशस्य चात्यन्तवैदिककर्मपरत्वं चेत् कथं विदुरप्रह्व केवल्य-मेव स्यात्, ननु, भगवत्सम्बन्ध इत्याद्य—सत्यसारामित्यादि" २४—२७॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

समां वर्षम्॥ १८॥

एवं द्वितीयेऽपि वर्षे पुनः क्रमेणैवागतः तं वृत्रहा पुनः प्रत्यषेधत् तथैवाह॥ १९॥ २१॥

महत्सु कथा यस्य सः॥ २२॥

अयास्यो मुनिः सामग उद्गाताऽभूदित्यर्थः॥ २३॥

उपरिष्टात् विश्वामित्रसुताख्यानप्रसङ्गे॥ २४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कुपितेन वरुणेन ग्रस्तमत एव जातं महदुदरं यस्य तथा-भूतं पितरं श्रुत्वा ग्राममेयाय गन्तुमुद्यतः तमिन्द्रः प्रत्यषे-धत॥ १७॥

प्रतिषेधप्रकारमाह-भूमेरिति। समां संवत्सरम्॥ १८॥

एवं द्वितीयादिषु संवत्सरेषु वृत्रहा आह॥ १९-२१॥

वरुणेन मुक्तमुदरं यस्य महत्सु कथा यस्य स तथा॥२२—२३॥

उपरिष्टाद्ग्रे वक्ष्यमाणाच्छलेनाऽपहृतसर्वस्वस्यापि सत्यसारां धृतिं वीक्ष्य॥ २४॥

---

भाषा टीका।

रोहित ने वन में सुना कि-हमारे पिता को वरुण ने कोपकर ग्रस्त लिया इसी से उदर की वृद्धि होगई है ऐसा सुन कर रोहित ग्राम को आने लगा तब इन्द्र ने आकर उसको रोक दिया॥ १७॥

और इन्द्र ने रोहित से कहा, कि—तीर्थ और क्षेत्रों की सेवा करते हुए भूमि के पर्यटन करने से बड़ा पुण्य है इतना सुनकर फिर रोहित एक वर्ष वन में रह गया, द्वितीय वर्ष लगने पर जब ग्राम में जाने की त्यारी करी तब फिर इन्द्रने आकर समुझाया॥ १८॥

इसी प्रकार तीसरे चौथे पांचमें वर्ष में वृद्ध ब्राह्मण का रूप लेकर वर्ष पूरे होने पर आय आय कर इन्द्र निषेध कर जाता रहा॥ १९॥

इस प्रकार रोहित छे (६) संवत्सर तक वन में विचर कर घर को आते समय में अजीगर्त से मध्यम (बीच का) पुत्र को मोल लिया॥ २०॥

उस पुत्र का नाम शुनःशेप रहा उसी को बलिका पशु बना कर पिता के भेटकर दंडवत करी, तब महायश वाले हरिश्चन्द्र ने पुरुषमेध याग से वरुणादि देवों का यजन किया और व्याधि से छूटा उस यज्ञ में बड़ी जिनकी कथा ऐसे विश्वामित्र जी होता अर्थात् (हवन करने वाले) हुए॥ २१-२२॥

(१) मुनिः।

विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ।
मनः पृथिव्यां तामद्भिस्तेजसापोऽनिलेन तत् ॥ २५ ॥
खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ।
तस्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥ २६ ॥
हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याऽप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे हरिश्चन्द्रोपाख्यानं नाम
सप्तमोऽध्यायः ॥ ७ ॥

### भाषा टीका ।

और बड़े मनस्वी जमदग्नि अध्वर्यु होते भये, वसिष्ठजी ब्रह्मा हुए, और अयास्य ऋषि सामगान वाले अर्थात् उद्गाता हुए, उस समय इन्द्र बड़े प्रसन्न हुए और प्रसन्न होकर उनको सुवर्णमय रथ देते हुए ॥ २३ ॥

शुनःशेप का माहात्म्य आगे कहेंगे । सत्यसार वाले भार्या सहित राजा हरिश्चन्द्र के धीरताको देखकर ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अविहताङ्गतिं ज्ञानम् तामेव गतिमाह—सार्द्धाभ्याम् । मनः-पृथिव्यां धारयन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहंस्तां च हित्वा मुक्तो मुक्तबन्धनस्तस्थावित्यन्वयः । मनोमूलो हि संसारः मनश्चान्नमयम् "अन्नमयं हि सोम्य ! मनः" इति श्रुतेः । अतोऽन्न-शब्दवाच्यायां पृथिव्यां मनो धारयन्नेकीकुर्वंस्तां पृथिवीमद्भि-रेकीकुर्वन्नपस्तेजसा तत्तेजोऽनिलेन ॥ २५ ॥

तच्च खे आकाशे तच्च भूतादावहङ्कारे तच्च भूतादिमहङ्कारं महात्मनि महत्तत्त्वे तस्मिन्विषयाकारं व्यावर्त्य ज्ञानकलां ज्ञानांश-मात्मत्वेन ध्यात्वा तया ध्यानवृत्तिरूपयाऽऽत्मावरकमज्ञानं विनिर्दहन् ॥ २६ ॥

निर्वाणसुखसंविदा तां च हित्वा मुक्तबन्धः सन्ननिर्देश्ये-नाऽप्रतर्क्येण स्वेन भावेन स्वस्वरूपेण तस्थौ ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
सप्तमोऽध्यायः ॥ ७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विश्वामित्रो नितरां प्रीतस्तस्मै अविहतां गतिं स्वात्मभावां गति-मात्मज्ञानरूपां ददौ स्वात्मपरमात्मयाथात्म्यज्ञानयोगमुपदिश्य तन्निष्ठमचीकरदित्यर्थः । अत्र सभार्यस्य सत्यसारां धृतिं दृष्ट्वेत्यनेन ब्रह्मसुताबन्धनप्रवृत्तहरिश्चन्द्रविषयककोपेन तद्यज्ञे आर्त्विज्यं प्राप्य दक्षिणाव्याजेन सर्वस्वमपहृत्य पीड्यमानस्यापि तस्य सत्यानुवर्तित्वं दृष्ट्वा प्रीत इतीतिहासार्थोऽभिप्रेतः । अविहतां गतिमेवाह--मन इति, सार्द्धाभ्याम् । हरिश्चन्द्रो विश्वामित्रोपदिष्टज्ञानयोगनिष्ठाप्रभावेन मन आदीन् पूर्वपूर्वानुत्तरोत्तरेषु पृथिव्यादिषु धारयन् ध्यायन् तया ज्ञानकलया अज्ञानं विनिर्दहन् निःशेषं दहन् ॥ २५ ॥ २६ ॥

तां ज्ञानकलां हित्वा निर्वाणसुखसंविदा अनिर्देश्याप्रतर्क्येण स्वेन भावेन ध्वस्तबन्धनस्तस्थावित्यन्वयः । मनःपृथिव्यामित्यादेरयमर्थः । "अन्नमयं हि सोम्य मनः" इति प्रकारेण मनसोऽन्नशब्दवाच्यपृथिव्या-प्यायितस्यैव व्यापारक्षमत्वान्मनोव्यापारः पृथिव्यायत्त इति मनोनि-यमनार्थं पृथिव्यां तत्संश्लिष्टमनुसन्दधे अथाप्ययक्रमानुसन्धानमाह तामिति । तां पृथिवीमद्भिः सह संश्लिष्टामापस्तेजसा तत्तेजोऽनिलेन वायुना तच्च खे आकाशे संश्लिष्टं तच्च खं भूतादौ तामसाहङ्कारे तमह-ङ्कारं महात्मनि महत्तत्त्वात्मनि तद्व्यापके प्रधाने कार्यं हि कारणा-त्मव्याप्यं महत्तत्त्वद्वारा तत्कारणे लयमनुसन्दधाम इत्यर्थः । तस्मिन् प्रधाने स्थितां ज्ञानकलां ज्ञानशब्दवाच्यस्य जीवस्य कलां विद्यां ध्यात्वा उपासनात्मकविद्याविशिष्टं प्रत्यगात्मानमनुसन्धायेत्यर्थः । तया विद्यया अज्ञानं देहात्माभिमानस्वतन्त्रात्माभिमानरूपं विनिर्द-हन् अपनयन् तां हित्वा उपासनरूपकलां हित्वा स्मृतिसन्ततिरूपो-पासनविशिष्टवेषस्य स्वाभाविकत्वाभावादुपायभूतकलाविशिष्टत्वं न स्वरूपान्तर्भूतमिति मत्वेत्यर्थः । ध्वस्तं पुण्यपापात्मकं बन्धनं यस्मात्तथाभूतः निर्वाणसुखसंविदा निर्दुःखसुखरूपज्ञानात्मकेना-निर्देश्येन दृष्टवस्तुसजातीयतया निर्देष्टुमशक्येनाप्रतर्क्येण देवोऽयं मनुष्योऽयमिति तर्कितुमशक्येनानेन पदद्वयेन प्राकृतनामरूपाभ्या-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनिर्देश्यत्वमुक्तम् स्वेन भावेन भावशब्दस्तत्परः अपहतपाप्मत्वादिस्वभावविशिष्टेन स्वरूपेणेत्यर्थः । तस्थौ मुक्तो बभूव ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविहतां अप्रतिषिद्धां गतिं ज्ञानलक्षणां विद्यां मायाया: एतद्युगमध्यक्तीति प्रकाशनाय सभार्यस्यायुक्तम् उपासनाकाले मन आदितत्त्वानां जडानां स्वस्वकारणे विलयस्तदभिमानिदेवतानां भिन्नानां भिन्नेषु प्रवेशलक्षणो विलयः स्वरूपाणां स्वस्वरूपैकीभावलक्षणोऽभिमननीय इत्यतस्तं प्रकारमाह–मनः पृथिव्यामिति "अन्नमयं हि सौम्य! मनः आपोमयः प्राणस्तेजोमयी वाक्"इति श्रुतेः अन्नं पृथिवीत्यतः पार्थिवस्मनः पृथिव्यां विलीयतेति चिन्तनं मनो धारयन्तीं पृथिवीमद्भिरप्सु अम्भस्तेजसा संह्रियते तत्तेजोऽनिलेन ग्रस्यते तं वायुं खे आकाशे लीनं तच्च खं शब्दादावहङ्कारे तमहङ्कारं महात्मनि महत्तत्त्वे तदभिमानिनं तदभिमानिन्यात्मनि चतुर्मुखे ब्रह्मणि प्रविष्टम् ॥ २५ ॥

तस्मिन्महत्तत्त्वे ज्ञानकलां बुद्धितत्त्वं लीयते तदभिमानिनी सरस्वती तत्सायुज्येन वर्त्यते इति ध्यात्वा तया बुद्धिकलया ज्ञानस्वरूपत्वेनान्यं निर्दहन् ॥ २६ ॥

तामबुद्धिमस्वरूपविषयां हित्वा विध्वस्तं बन्धनं येन स तथा हरिश्चन्द्रः स्वभावेन स्वमहिम्ना निर्वाणे शरीररहिते सुखसंविदो यस्य स तथा तेन सच्चिदानन्देन अनिर्देश्यं चाप्रतर्क्यं च तत्तथा तेन ब्रह्मणा सह तस्थौ "सहब्रह्मणा विपश्चितेति" इति श्रुतिः "आत्मन आकाशस्सम्भूतः" इति च श्रुतेः । शब्दादौ शब्दकारणे महति आत्मनि हरौ ज्ञानकलां ज्ञानलक्षणां कामधेनुं ज्ञानपूर्णं इति ध्यात्वा तया तथा ध्यानया अज्ञान तन्निमित्तसंसारं भस्मीकुर्वन् तां संसृतिं हित्वा परित्यज्य निर्वाण सुखसंविदा अशरीरानन्दज्ञानलक्षणेन मादृशैरनिर्देश्याप्रतर्क्येण स्वेन स्वभावेन स्वरूपभूतैश्वर्येण तस्थाविति वा ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गतिं ज्ञानम् ॥ २५ ॥

गतिमेवाह–मन इति । "अन्नमयं हि सौम्य ! मनः" इति श्रुतेः । मनसोऽन्नवर्तित्वादन्नशब्दवाच्यायां पृथिव्यां धारयन् तां पृथिवीम् अद्भिरप्सु धारयन् ता अपस्तेजसा तेजसि तत्तेजः अनिलेन अनिले तं वायुं खे तच्च खं भूतादावहङ्कारे तं चाहङ्कारं महात्मनि महत्तत्त्वे तस्मिंस्तच्च महान्तं ज्ञानकलायां विद्यायां ध्यात्वा तयैव विद्यया अज्ञानमविद्यां विनिर्दहन् तां विद्यां च हित्वा स्वेन भावेन स्वस्वरूपेण तस्थौ कीदृशेन निर्वाणसुखस्य सम्पदन्तेन ॥ २६ ॥ २७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अविहतां गतिमात्मविद्यां दत्तो तया स मुक्तोऽभूदित्याह–मन इति सार्द्धत्रयेण । "अन्नमयं हि सौम्य ! मनः" इति श्रुतेः । पृथिवीविकारभूतान्नभोजने मनोऽतिचपलं भवति अतः मनसोऽन्नमयत्वं तच्चापल्यविघातार्थं पृथिव्यां मनो धारयन् मनश्चापल्यसंयुतं अन्नमयं देहं पृथिव्यां कारणभूतायामभिन्नतया ध्यायन्नित्यर्थः तामद्भिरेकीकुर्वन् अपस्तेजसा तत्तेजोऽनिलेन ॥ २५ ॥

तं च खे तच्च भूतादावहङ्कारे तं च महात्मनि महतीति वक्तव्ये आत्मशब्दग्रहणं महान्तं तस्य आत्मनि कारणे प्रधाने इति द्योतयति ज्ञानकला बुद्धिः सा जडरूपाऽपि ज्ञानस्य ज्ञानस्वरूपस्य जीवस्य कलया ज्ञातृत्वरूपया अन्वितत्वया ज्ञानकलेत्युच्यते तां ध्यात्वा ध्यातृव्यवधिभावेन स्वप्रकाशस्वरूपात् जीवात्मनः सकाशात्पृथक् चिन्तयित्वा तयैव कारणभूतया अज्ञानम् अनात्मसु देहेन्द्रियमनोबुद्ध्यादिषु आत्मभ्रान्तिं विनिर्दहन् ॥ २६ ॥

तामपि बुद्धिम् अनात्मभूतां तस्मिन् महात्मनि हित्वा निर्वाणसुखसंविदा निरस्तदुःखसुखात्मकज्ञानेन भावेन स्वस्वरूपेण निर्देश्यं कार्यरूपं प्रधानं तद्भिन्नतयाऽप्रतर्क्यं कारणरूपं प्रधानं तद्भिन्न कार्यकारणप्रकृतिविलक्षणेनेत्यर्थः । मुक्तबन्धनस्तस्थौ मुक्तोऽभूदित्यर्थः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाऽध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषाटीका ।

विश्वामित्रजी बहुत ही प्रसन्न हुए, और अविनाश वाली गति को देते हुए ॥ तबतो मनको पृथिवी में लगाया पृथिवी को जलोंके साथ एकीभाव किया, जलोंको तेजके साथ मिलाया, तेजको पवन के साथ, मिलाया ॥ २५ ॥

भाषा टीका ।

पवनको आकाशमें, आकाश को तामस अहंकारमें उसको महतत्त्व में उसको प्रधान में भावना करके उसी महत्तत्त्व मे ज्ञानकी कालका ध्यानकरता हुआ उस ध्यानकी वृत्तिसे अज्ञान को दूर करता भया ॥ २६ ॥

फिर उस ध्यानकी वृत्तिको मोक्षसुखरूप निज ज्ञान से, छोडकर मुक्तबन्धन होकर अनिर्देश्य (जो जनाने में न आवे) तथा अप्रतर्क्य ( जो तर्क करने में न आवे ) ऐसे अपने स्वरूपसे स्थित होता भया ॥ २७ ॥

इति श्रीमद्भागवत नवम स्कन्ध में सप्तम अध्याय की,
श्रीवृन्दावनस्थ पं भागवताचार्यकृत
भाषाटीका समाप्ता ॥ ७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥



## ॥ अष्टमोऽध्यायः ॥

—:*:—

श्रीशुक उवाच ।

हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्मिता ।
चम्पापुरी सुदेवोऽतो विजयो यस्य चाऽऽत्मजः ॥ १ ॥
(१) भरुकस्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः ।
सोऽरिभिर्हृतभूराजा सभार्यो वनमाविशत् ॥ २ ॥
वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ।
और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ॥ ३ ॥
आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह ।
सह तेनैव सञ्जातः सगराख्यो महायशाः ॥ ४ ॥
सगरश्चक्रवर्त्यासीत्सागरो यत्सुतैः कृतः ।
यस्तालजङ्घान्यवनान् शकान् हैहयबर्बरान् ॥ ५ ॥
नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ।
मुण्डान् श्मश्रुधरान्कांश्चिन्मुक्तकेशार्द्धमुण्डितान् ॥ ६ ॥
अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ।
सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥
और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ।
तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ।
सागरः कपिलक्रोधाग्निदग्धा यस्य सूनवः ॥

चम्पस्तस्मादभूत् येन चम्पापुरी निर्मिता अतश्चम्पात्सुदेवः ॥ १ ॥
हृता भूर्यस्य ॥ २ ॥
और्वेण ऋषिणा आत्मानं देहम् प्रजावन्तं सगर्भम् ॥ ३ ॥
गरो विषम् तेन गरेण सहैव जातः ॥ ४—५ ॥
गुरुवाक्यमौर्ववचनेन कांश्चिद्धत्वैव विकृतवेषिणश्चक्रे वेषाऽऽह-मुण्डानिति, मुक्तकेशानर्धमुण्डितांश्च ॥ ६—७ ॥
और्वेणोपदिष्टो योग उपासनं तेन ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रोहितस्य सुतो हरितः तस्माच्चम्पो, जज्ञ इति शेषः । तं विशिनष्टि-चम्पापुरी विनिर्मितेति चम्पेनेति शेषः । अथ चम्पात्सुदेवो जज्ञे तस्य सुतं वदन् तं विशिनष्टि-यस्य सुदेवस्याऽऽत्मजो विजयः ॥ १ ॥
तस्य विजयस्य सुतो भरुकः तस्माद्भरुकाद्वृकः तस्यापि वृकस्यापि बाहुकः पुत्रस्तस्य वृत्तान्तमाह-स बाहुकः शत्रुभिर्हृतभूर्हृतराज्यश्च सभार्यो वनं प्राविशत् ॥ २ ॥

---

(१) भेरुक इति वीर० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रैव वृक्षं स्थविरं पञ्चतां मरणं प्राप्तं बाहुकं तत्पत्नी अनुमरिष्यन्ती अनुमरणं कर्तुमुद्युक्ता सती आत्मानं स्वदेहं प्रजावन्तं सगर्भं जानता औरवेण ऋषिणा निवारिता ॥ ३ ॥

ततस्तामन्तर्वत्नीमाज्ञाय प्रत्यभिज्ञाय अस्यै सपत्नीभिर्गरो विषमन्धसा अन्नेन सह दत्तः ततस्तेन गरेण सहैव सञ्जातः सगराख्यः पुत्रः गरेण सह जातत्वात्सगर इति प्रसिद्धः स च महायशा यस्य तथाभूतः ॥ ४ ॥

चक्रवर्ती सप्तद्वीपाधिपतिरासीत् तं विशिंषन् तद्वृत्तान्तमाह—यस्य सगरस्य सुतैः सागरः समुद्रः कृतः करणं खननं ननु निर्माणं प्रियव्रतरथचरणनेमिकृतत्वस्य पञ्चमे कथितत्वात् सागरैः कृतत्वात् समुद्रोऽपि सागराख्यो बभूव किञ्च यः सगरस्तालजङ्घादिसंज्ञान् यवनान् म्लेच्छान् गुरुवाक्येन गुरोरौर्वस्य वचनगौरवेणेत्यर्थः। नावधीत् न हतवान् किन्तु विकृतवेषिणः विरूपिणः चक्रे,तदेवाह-मुण्डानिति। कांश्चिन्मुण्डान् कांश्चित् श्मश्रुमात्रधरान् कांश्चिच्च मुक्तकेशान् अर्द्धमुण्डितान् ॥ ५ ॥ ६ ॥

कांश्चिच्च न विद्यतेऽन्तर्वासोऽभ्यन्तरीयवस्त्रं येषां तान् कांश्चिच्च विद्यते बहिर्वासो बहिः परिधानीयं वासो येषां तथाभूतांश्चक्रे इति पूर्वेणान्वयः ॥ ७ ॥

किञ्च स सगरः औरवेणोपदिष्टो योग उपायस्तेनाश्वमेधैः सर्ववेदात्मकं सर्वदेवतात्मकं सर्वान्तरात्मानं सर्वस्य नियन्तारञ्च हरिमयजत आराधितवान् तस्य सगरस्य यज्ञे शततमे उत्सृष्टं पशुमश्वमिन्द्रो जहार हृतवान् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्माद्धरिताच्चम्पः । तस्माच्चम्पाद्विनिर्मिता पुरी चम्पा नाम अतश्चम्पात् यस्य सुदेवस्य ॥ १ ॥

स बाहुकः ॥ २ ॥

अनुमरिष्यन्ती अनुमरणं कर्तुमिच्छन्ती प्रजावन्तं पुत्रवन्तं तस्या आत्मानं देहं जानता इयमन्तर्वत्नीति विदुषेत्यर्थः ॥ ३ ॥

सहसा हन्तीति साहसो गरोऽत्र गर्भे पुत्रमाज्ञाय सपत्नीभिरस्यै बाहुकपत्न्यै दत्त इत्यन्वयः । तेन गरेण विषेण सह यतेन इति सगरः ॥ ४ ॥

"यस्य स्याद्वादशा पृथ्वी चक्रवर्ती स ईयते" इति सगरपुत्राः सागराख्यैः कृतत्वात्सागरः समुद्रः तालजङ्घादयो द्वीपान्तरवासिनो निर्दिष्टाः ॥ ५ ॥

पामरान् मावधीरिति गुरोर्वाक्यतः उत्सृष्टं मन्त्रविरवेति शेषः उपाकृतमित्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—४ ॥

सगर इति सार्द्धयुग्मकम् ॥ ५ ॥

अवधीदित्यत्र नावधीदिति पाठस्तु स्वामिसम्मतः ॥ ६ ॥

कांश्चिदन्त्यैर्वेति व्याख्यानात् । मत्र श्रीपराशरस्य तथाहि तद्वृत्तं प्रावाञ्च हैहयं जघानेत्यादि गुरुवाक्येन वसिष्ठवचसेत्येव विष्णुपुराणमतम् ॥ ७—९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमे सगरः सम्राट् तत्पुत्राः कपिलागसा ।
हतास्तस्य प्रसादाच्चांशुमानानयत् पुरीम् ॥

विनिर्मिता चम्पापुरी येनेति शेषः अतश्चम्पात्सुदेवः ॥ १ ॥ २ ॥

औरवेण ऋषिणा आत्मानं महिष्या देहं प्रजावन्तं सगर्भम् ॥ ३ ॥

अन्धसा अन्नेन सह ॥ ४ ॥

तालजंघाद्या जातिविशेषाः ॥ ५ ॥

गुरोरौर्वस्य वाक्येन विकृतवेषिणः चकार मुण्डानित्यादि ॥ ६—८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रोहितवंशे उत्पन्नस्य सगरस्य वृत्तान्तं तस्य पुत्राणां कृतकपिलापराधानां नाशं पौत्रस्यांशुमतो लब्धकपिलप्रसादत्वं च वर्णयति-हरित इत्यष्टमेन । तस्माद्धरिताच्च यः येन चंपापुरी विनिर्मिता ॥ १ ॥

हता भूर्यस्य स तथा ॥ २ ॥

पञ्चतां मरणं प्राप्तं तन्महिषी अनुमरिष्यन्ती अनुमरणं कर्तुमुद्यता तदा आत्मानं तद्देहं प्रजावंतं सगर्भं जानता औरवेण निवारिता ॥ ३ ॥

अन्धसा अन्नेन सह गरो विषं दत्तः तेनैव गरेण सहजातः ॥ ४ ॥ ५ ॥

गुरुवाक्येन औरवाक्येन ॥ ६ ॥ ७ ॥

औरवोपदिष्टेन योगेन उपायेन ॥ ८ ॥ ९ ॥

### भाषा टीका ।

श्रीरुक्मिणीदेवीसमेतश्रीदेवकीनन्दनाय नमः ।

॥ श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-रोहित के पुत्र हरित हुए तिनके चंप हुए जिनने चंपा पुरी बसाई चंप से सुदेव हुए तिनके विजय पुत्र हुए ॥ १ ॥

विजय के भरुक, तिनके वृक, तिनके बाहुक, जब शत्रुओं ने भूमि छुड़ाली तब भार्या सहित राजा बाहुक वन में प्रवेश करते हुए ॥ २ ॥

राजा वृद्ध होकर पंचता ( देहके अन्त ) को प्राप्त हुए

सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ।
हयमन्वेषमाणास्ते समन्तान्न्यखनन्महीम् ॥ ९ ॥
प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके ।
एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥ १० ॥
हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ।
उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥
स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥
न साधु वादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्त्वधामनि ।
कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥
यस्येरिता साङ्ख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ।
भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥
योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः ।
तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥
असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ।
जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः ॥ १६ ॥

भाषा टीका।

इसके पीछे रानी भी मरने लगी तब और्व ऋषि ने रानी को गर्भवती जानकर अनुमरण से वर्जे दिया ॥ ३ ॥

और ऋषि यह भी जानगये कि-इसकी सपत्नियों ने इस रानी को गर (जहर) दिया है सो भी अन्न के साथ दिया है तब तो उस रानी के जो बालक उत्पन्न हुआ वह भी गर (-विष) सहित ही उत्पन्न हुआ इसी से उस महा यशस्वी का नाम सगर हुआ ॥ ४ ॥

सगर महाराज चक्रवर्ती हुए जिनके पुत्रों ने सागर को खनडाला और जिन सगर ने तालजंघ, यवन, शक, हैहय, और बर्बरों को ॥ ५ ॥

गुरू जी अर्थात् और्व ऋषि के वाक्य से नहीं मारा किन्तु उनका विकृत वेष करदिया, किसी २ का मूड तो मूंड दिया और डाढ़ी रहने दी कितने एक लोगों के केश छोड़दिये किसी २ को अर्द्धमुंडित करादिये ॥ ६ ॥

और कोई लोगों को विना भीतर के वस्त्र वाले करदेवे फिर उन सगर ने अश्वमेध यागों से सर्व वेदात्मक और सुरात्मक ऐसे ॥ ७ ॥

तथा अपने आत्मा और नियन्ता ऐसे भी हरि का और्व ऋषि के उपदेश किये हुए योग से यजन किया । परन्तु उस समय पर उनके जो यज्ञ में पशु (घोड़ा) छोड़ा उस घोड़ा को इन्द्र ने चुरा लिया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य द्वे भार्ये सुमतिः केशिनी च तत्र सुमत्याः पुत्राणां प्रमाद मृत्युं चाऽऽह—सुमत्या इति षड्भिः ॥ ९—१० ॥

एष वाजिहर इति ब्रुवन्तोऽभिययुः षष्टिसहस्राणि परिचक्रर्कनया सन्ति येषाम् उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥ १२ ॥

केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयन्ति, तान्निराकरोति । नेति । कुत इत्यत आह—सत्त्वधामनि शुद्धसत्त्वमूर्तौ जगतः पवित्रः शुद्धिकर आत्मा यस्य तस्मिन्कथं विभाव्यते सम्भाव्यते असम्भावनायां दृष्टान्तः भुवो रजः खे कथं सम्भाव्यते इति ॥ १३ ॥

किञ्च यस्य येनेरिता, प्रवर्तिता तस्य विपश्चितः सर्वज्ञस्य कथं पृथङ्मतिरमित्रादिभेददृष्टिः ॥ १४ ॥

तदेवं सुमत्याः पुत्रेषु मृतेषु केशिन्याः पौत्राणाञ्च

### श्रीधरस्वामिकृतभावार्थदीपिका ।

समानीतः पितृव्यांशुमताप्रयत्नश्च कृत इति दर्शयितुमाह—योऽसमञ्जस इत्युक्तः केवलमसौ तत्स्तुतस्तु समञ्जस एव स तु केशिन्याः सुतः क्षेत्रजत्वमिव प्रतीतं धारयति तस्यैव नृपस्यात्मनो देहाज्जातः ॥ १५ ॥

तस्य कथामाह—चतुर्भिः । असमञ्जसः पुरा पूर्वजन्मनि योगी सन् सङ्गाद्योगाद्विचालितोऽस इदानीं जातिस्मरः सन् सङ्गपरिहाराय जगुप्सुर्जयन् लोके गर्हितं ज्ञातीनां च विप्रियं कर्माचरन् क्रीडतो बालान्सरय्वां प्रास्यत्प्राक्षिपदिति द्वयोरन्वयः ॥ १६ ॥ १७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सगरस्य द्वे भार्ये सुमतिः केशिनी च तत्र सुमत्याः पुत्राणां षष्टिसहस्रसंख्यानां प्रभावं मृत्युञ्चाह—सुमत्या इति षड्भिः । सुमत्याः तनया इत्ता बलेन गर्विताः ते च पितुराज्ञाकारिणो यज्ञियमश्वमन्वेषमाणाः समन्ततो महीं व्यखनन् ॥ ९ ॥

एवं खनन्तः प्रागुदीच्याम् ऐशान्यां दिशि, रसातलस्थस्य कपिलस्यान्तिके इन्द्रेण स्थापितमिति शेषः चरन्तं हयमश्वं ददृशुः ततो ऽयमेवास्य हर्ता चोरः सन्नपि मीलिते लोचने यस्य तादृश आस्ते ॥ १० ॥

अतोऽयं पापात्मा हन्यतां हन्यतामित्येवं वदन्तः षष्टिसहस्रिणः सगरात्मजा उद्यतायुधाः सन्तो ऽभिमुखमाययुः तदा मुनिः कपिल उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥

महेन्द्रेण हृतं धनं येषां ते महति कपिले व्यतिक्रमेणापराधेन हतास्थानः स्वशरीरेणैवोत्पन्नेनाग्निना क्षणाद्भस्मसादभवन् भस्मीभूता बभूवुः ॥ १२ ॥

केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयन्ति; नाभिराकरोति—नेति द्वाभ्याम् । नृपेन्द्रस्य सगरस्य पुत्राः मुनेः कपिलस्य कोपाग्निना भर्जिता दग्धा इति न साधुवादः अपि तु स्वापराधाग्निना इत्येव वादः साधुरित्यभिप्रायः, कुतः ? इत्यत आह सत्त्वधामनि केवलशुद्धसत्त्वाश्रये जगतः पवित्रः शुद्धिकर आत्मा देहो यस्य तस्मिन् कपिले रोषात्मकं तमः कथं विभाव्यते सम्भाव्यते ? असम्भावनायां दृष्टान्तः, रजः, भुव इति शेषः । भुवः सम्बन्धि रजः खे आकाशे यथा न सम्भाव्यते तद्वत्; नहि रजः आश्रयं स्वमपि तु वायाद्यादिवशादुत्थितं सत् खमिवाभाति तथा सागराणामपराध एव मुनिस्थतया प्रतीतः नतु तस्मिन् दोषस्य प्रसक्तिरिति दृष्टान्ताभिप्रायः ॥ १३ ॥

किञ्च यस्य येन कपिलेनेह लोके ईरिता प्रवर्तिता सांख्यात्मिका नौर्नौका साङ्ख्यस्य भवार्णवतारणोपायत्वान्नौकात्वेन निरूपणं यस्यास्यत इति पाठान्तरं तदा यस्याऽऽस्यतो मुखात्प्रादुर्भूता सांख्यात्मिका दृढा नौरित्यर्थः । नाथं धिक्कृताधि, यया नाथा मुमुक्षवः संसारबन्धान्मोक्तुमिच्छवो जनाः दुरतिक्रमणीयं मृत्योः सकाशाद्भयं यस्मिन् तं भवार्णवं तरन्ति तस्यैवम्भूतस्य विपश्चितः सर्वज्ञस्य परात्मनः परानुग्रहैकमनसः परमात्मभूतस्य वा कथं पृथक् मतिः शत्रुमित्रादिबुद्धिर्विभाव्यते इत्यनुषङ्गः ॥ १४ ॥

तदेवं सुमत्याः पुत्रेषु मृतेषु केशिन्याः पौत्रेणाश्वः समानीतः पितृणामुद्धरणोद्योगश्च कृत इति दर्शयितुमाह—य इत्यादिना यावदध्यायसमाप्ति । योऽसमञ्जस इत्युक्तः केवलमसौ तत्स्तुतस्तु समञ्जसः, सतु केशिन्याः सुतः क्षेत्रजत्वप्रतीतिं धारयति—तस्यैव नृपस्य सगरस्यात्मनो देहाज्जातः तस्यासमञ्जसस्य पुत्रोऽंशुमानिति प्रसिद्धः पितामहस्य सगरस्य हिते रतः अंशुमतः पितामहहिते रतत्वकथनेनासमञ्जसस्य तत्प्रतिकूलत्वं सूचितम् ॥ १५ ॥

तदेव दर्शयन् तद्वृत्तान्तमाह—असमञ्जस इति चतुर्भिः । असमञ्जसः पुरा पूर्वजन्मनि योगी सन् सङ्गात्ततो योगाद्विचालितः अत इदानीं पौर्वदैहिकयोगप्रभावेन जातिस्मरः स्वजन्म स्मरन् पुनः सङ्गपरिहाराय समञ्जसमप्यात्मानमसमञ्जसमिव लोकस्य दर्शयन् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सगरस्य सुमतिः केशिनीति द्वे भार्ये तत्र सुमतिर्गरुडस्य स्वसा तस्याः पुत्राः ॥ ९ ॥ १० ॥

षष्टिसहस्रसंख्या येषामस्तीति षष्टिसहस्रिणः उन्मिमेष नेत्रनिकासं कृतवान् ॥ ११ ॥

महेन्द्रेण हृतं धनं येषां ते तथा मुग्धा इत्यर्थः । महतो व्यतिक्रमेण हताः चोरो हन्यतामित्यादिवचनलक्षणापराधेनैव स्वकृतदोषहताः नृपपुत्राः न तु मुनिकोपदग्धाः ॥ १२ ॥

शारदजलवत्स्वच्छप्रसन्नमूर्तौ हरौ तमोगुणकारणस्य क्रोधस्य प्रवेशानुपपत्तेस्तत्क्रोधसम्भूतपापाग्निदहनत्वाभावेत्याह—न साधुवाद इति । नृपेन्द्रपुत्रा मुनिकोपभर्जिता इत्ययं साधुवादो नास्ति असम्भवादित्यर्थमिति तत्राह, सत्त्वधामनीति । शुद्धस्फटिकविशदज्ञानमूर्तौ श्रीकपिलदेवे रोषमयं तमः कथञ्चिद्भाव्यते उत्पत्तुमवकाशं लभते ? न कथमपि. किञ्च जगत्पवित्रीकरणसमर्थस्वभावे “आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि” इति यादवः । कथमिव भुवो रजः पार्थिवो धूलिः खे यथेत्ययं लुप्तोपमः वेदं दृष्टत्वात् ॥ १३ ॥

इतोऽपि तमोगुणकार्यस्य कोपस्य तत्रानवसरः इत्याशयेनाह यस्येति । इह जगति सदनुग्रहाय यस्य येरिता ग्रन्थरूपेण कथिता दृढा अपेक्षितफलदानाय समर्थाऽन्यत्र नूतनत्वेन बलिष्ठा सांख्यमयी सत्यज्ञानमयी नौस्तरी यया ज्ञाननावा मुमुक्षुर्मुक्तियोग्यः पुरुषः मृत्युपथं मृत्योर्मार्गं दुरत्ययं ज्ञानरहितानामशक्यं भवार्णवं तरते तादृशी येन सम्प्रदत्येति । तस्य परात्मभूतस्य साक्षान्नारायणावतारस्य विपश्चितः शुद्धज्ञानवतः श्रीकपिलस्य पृथङ्मतिः रोषरूपिता मतिः कथं सम्भाव्यते इत्यन्वयः ॥ १४ ॥

योऽसमञ्जस इत्युक्तः हे नृप ! स केशिन्याः सगरभार्यायाम् आत्मजः पितामहः सगरः ॥ १५ ॥

पुरा पूर्वजन्मनि योगी योगाभ्यासनिपुणो समञ्जस

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सङ्गाद्धेतोः योगादीश्वरोपासनालक्षणाद्विचलितो हि यस्मात्तस्मात् पूर्वजातिं स्मरतीति जातिस्मरः आत्मानमसमञ्जसम् असम-ञ्जसः सङ्गमनतिरमणीयं दर्शयन् सङ्गं जहाविति शेषः १६॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रागुदीचीमित्यसंकम । तद्देशास्तु गृह्य समुद्रेणावृतया गङ्गा-सागरदेशे परिवृत्त्या युज्यते, श्रीकपिलपरिव्रज्यायाश्रमेव वा समाधेयम् ॥ १०—३१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्य द्वे भार्य्ये सुमतिः केशिनी च तत्र सुमत्याः पुत्राणां प्रमादं मृत्युं चाह षड्भिः ॥ ९—११ ॥

स्वशरीरेष्वेव योऽग्निस्तृतीयं महाभूतं तेनैव महदपराधादति वर्त्तमानेन दग्धाः महेन्द्रहीन्द्रेणैव एष चौर इति विज्ञाप-नात् ॥ १२ ॥

अत्र कपिलस्य कोपं वदन्तोऽज्ञा एवेत्याहुः—नेति । मुनिकोप-भर्जिता इति न साधूनां वादः किन्त्वसाधूनामज्ञानादेवेत्यर्थः यतः सत्त्वधामनि शुद्धसत्त्वमूर्त्तौ जगदपि पवित्रं दर्शनाद्विना यत्कृतथा-भूत आत्मा देहो यस्य तस्मिन् तमः कथं विभाव्यते सम्भाव्यते असंभावनायां दृष्टान्तःभुवोरजःस्त्र कथं सम्भाव्यते क्वामिदं रजस्वल-मिव मुनिरयं कोपीत्यज्ञानामेवोक्तिरित्यर्थः ॥ १३ ॥

यस्य ईरिता येन प्रवर्त्तिता तस्य विपश्चितः सर्वज्ञस्य पृथङ्मतिः प्राकृती मतिः परमात्मनो हि मतिः परमात्मरूपैव स्यादित्यर्थः ॥ १४ ॥

नृपस्य सगरस्यात्मजो योऽन्यो ऽसमञ्जस इत्युक्तः स केशिन्याः पुत्रः ॥ १५ ॥

पुरा पूर्वजन्मनि ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एष वाजिहर इत्यादिवदन्तोऽभिययुरित्युत्तरेणान्वयः ॥ १० ॥

चहिसहस्राणि परिच्छेदकतया सन्ति येषां ते उद्यतायुधाः सन्तः अभिमुनेरभिमुखं ययुः आजग्मुः तदा मुनिः उन्मिमेष लोचनोन्मीलनं कृतवान् ॥ ११ ॥

महद्व्यतिक्रमेण स्वकृतेन हताः ॥ १२ ॥

मुनिकोपभर्जिता इति न साधुवादः खभुवो रजो यथा न सम्भाव्यते तथा सत्त्वधामनि अप्राकृतसत्त्वाश्रये जगतां पवित्रः शुद्धिकरः आत्मा देहो यस्य तस्मिन् रोषमयन्तमः कथं विभा-व्यते ? ॥ १३ ॥

यस्य येन ईरिता प्रवर्तिता मृत्योः पन्था नानावासनारूपो यस्मिन् तं तस्य विपश्चितः सर्वज्ञस्य पृथङ्मतिः अरिमित्रादि-भेददृष्टिः कथं घटेत ? इति शेषः ॥ १४॥१५॥

असमञ्जसः पुरा पूर्वजन्मनि योगी भगवद्ध्यानयोगवान् सङ्गात् दुःसङ्गाद्धेतोः योगात् भगवद्ध्यानात्सम्प्रातो विचालितः अत एव इदानीं जातिस्मरः पूर्वजन्मस्मृतिमान् सन् सङ्गपरिहाराय आत्मानं असमञ्जसमप्रशस्तमिव लोकस्य दर्शयन् ज्ञातीनां च विप्रियं कर्मा-चरन् जनमुद्वेजयन् क्रीडतो बालानादाय सरय्वां प्रास्यत् प्राक्षि-पदित्युभयान्वयः ॥ १६॥१७॥

भाषा टीका ।

( सगरकी दोभार्या सुमति और केशिनी ) तहां सुमति के पुत्र बड़े दर्पवाले और पिता के आज्ञाकारी रहे, उनों ने अश्व के ढूंढने से में चारों तरफसे पृथिवी खोद डाली ॥ ९ ॥

पृथिवी को खोदते२ ईशान कोणमें श्रीकपिल देव के समीप अपना घोड़ा देखा तब सगर तनय बोले, कि–बस यही हमारे घोड़ाको चुराने वाला चोरहै देखो कैसा आंख मूंदकर ध्यान लगाकर बैठा है ॥ १० ॥

मारो मारो इसपापी को, इस प्रकार साठ हजार सगर पुत्र अपने२ आयुध लेकर श्रीकपिल देवजी के सन्मुख आए इतने में मुनि श्रीकपिलदेव जी ने भी नेत्र खोले ॥ ११ ॥

तबतो महेन्द्रने कपट से हराचित्त जिनका ऐसे वो सब महत्पुरुष के व्यतिक्रम ( अपराध ) से हत होकर, अपने शरीर से निकली हुई आग्नि से तत्क्षण में भस्म होगये ॥ १२ ॥

यदि किसीको यह भ्रम भया हो कि मुनिके कोपसे राजपुत्र दग्ध हुए सो नहीं जानना चाहिये, यह कुछ श्रीकपिलदेवकी बड़ाई नहीं है, क्योंकि ? वे तो सत्त्वके धाम हैं उनके विषै रोष भय तम की किस प्रकार भावना करी जावे ? वे तो जगत् के पवित्र करने वाले और आत्मा है जैसे आकाश में पृथिवी के रज का सम्बन्ध नहीं इसी भांत भगवान में तम नहीं ॥ १३ ॥

जिन श्रीकपिलदेव की कथन करी हुई सांख्य शास्त्रमयी दृढ नौका बनी है जिससे मुमुक्षु जन मृत्यु का पंथ ऐसे संसार रूप समुद्र को तर जाते हैं । उन ज्ञान की सीमा वाले परमात्मा-स्वरूप कपिल भगवान् की पृथक् मति कैसे हो सकै ? ॥ १४ ॥

जो असमञ्जस इस प्रकार कहा जाता वह राजपुत्र केशिनी रानी का पुत्र रहा, उसके पुत्र अंशुमान हुए वे अपने पितामह के बड़े हित में निरत हुए ॥ १५ ॥

और असमंजस तो अपने को ऊपर से असमञ्जस सरीखा दिखाते रहे परन्तु जातिस्मर अर्थात् पूर्वजन्मकी जाति के स्मरणकरने रहे पूर्व जन्म में योगी रहे किसी सङ्ग से योगसे विचलित हो गये ॥ १६ ॥ १७ ॥

आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ।
सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयन् जनम् ॥ १७ ॥
एवं वृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ।
योगैश्वर्येण बालांस्तान्दर्शयित्वा ततो ययौ ॥ १८ ॥
अयोध्यावासिनः सर्वे बालकान्पुनरागतान् ।
दृष्ट्वा विसिस्मिरे राजन् ! राजा चाप्यन्वतप्यत ॥ १९ ॥
अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणो ययौ ।
पितृव्यखाताऽनुपथं भस्मान्ति ददृशे हयम् ॥ २० ॥
तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोऽक्षजम् ।
अस्तौत्समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥

अंशुमानुवाच ।

न पश्यति त्वां परमात्मनोऽजनो न बुद्ध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीरधीविसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥
ये देहभाजस्त्रिगुणप्रधाना गुणान्विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिः प्रकाशाः ॥ २३ ॥
तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं हि मूढः परिभावयामि ? ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवंविधं वृत्तं कर्म यस्य सः ॥ १८-१९ ॥

पितृव्यखातमनु यः पन्थास्तं ययौ भस्मान्ति भस्मसमीपे ॥ २० ॥ २१ ॥

"अजानन्तोऽप्यजानन्तोऽप्यनुकम्प्या यथा शिशवः । तुष्टाव षड्भिरीशानमंशुमानित्याशयः ॥ अजनो ब्रह्माऽपि त्वामद्यापि न पश्यति न च बुध्यते कथम्भूतम् आत्मनः स्वस्मात्परं परमेश्वरम्, कैर्हेतुभिः" ? समाधियुक्तिभिः समाधिनाऽपरोक्षं न पश्यति युक्तिभिः परोक्षमपि सम्यक्तया न बुध्यत इत्यर्थः । अपरेऽर्वाचीनास्तु कुतस्त्वां पश्येयुः अर्वाचीनत्वे हेतुः तस्य ब्रह्मणो मनश्च शरीरं च धीश्च सत्त्वतमोरजःकार्याणि ताभिर्ये त्रिविधा देवतिर्यङ्नराणां सर्गास्तैः सृष्टास्तत्रापि वयमप्रकाशा अज्ञाः कुतः पश्यामेत्यर्थः ॥ २२ ॥

अपरे तर्हि किं पश्यन्ति तत्राह—ये देहभाजस्ते स्वान्तिःस्थमपि त्वां न विदुः किं तु गुणानेव विपश्यन्ति अथवा न गुणान् अपितु तम एव पश्यन्ति यतस्त्रिगुणा बुद्धिरेव प्रधानं येषां ततो बहिरेव प्रकाशो ज्ञानं येषाम् बुद्धिपरतन्त्रतया आग्रत्स्वप्नयोर्विषयान् पश्यन्ति सुषुप्तौ तम एव केवलं न तु निर्गुणं त्वां सर्वत्र हेतुः यतः यस्य तव माययेति या मोहितं चेतो येषां ते ॥ २३ ॥

तथाऽप्यहं विचारेण ज्ञास्यामीति चेत्तत्राऽऽह, तं त्वामहं विमूढः कथं परिभावयामि विचारयामि, कथम्भूतम् ? ज्ञानघनं शुद्धज्ञानमूर्ति स्वत एव प्रध्वस्तौ मायागुणनिमित्तौ भेदमोहौ येषां तैर्विभाव्यं विचिन्त्यम् । अयं भावः ज्ञानघनत्वात्तवाज्ञानविषयत्वम् विचारविषयत्वेऽपि मायागुणैरभिभूतोऽहं न विचारे समर्थ इति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लोके गर्हितं ज्ञातीनाञ्च विप्रियं कर्माऽऽचरन् कुर्वन् जनमुद्वेजयन् भीषयन् क्रीडतो बालानादाय सरय्वां नद्यां प्रास्यत् प्राक्षिपत् ॥ १७ ॥

एवंविधवृत्तोऽत एव पित्रा पुत्रस्नेहमपोह्य परित्यक्तः निर्वासितः पुनर्योगप्रभावेन तान् प्रक्षिप्तान् बालान् दर्शयित्वा ययौ ॥ १८ ॥

तदा पुनरागतान् बालान् दृष्ट्वा अयोध्यावासिनः सर्वे जनाः विसिस्मिरे विस्मयं गतवन्तः, हे राजन् ! राजा सगरः अन्वतप्यत

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ये सत्त्वप्रधानाः सात्त्विकप्रकृतयः तैः सनन्दनाद्यैर्मुनिभिर्विभाव्यम् उपास्यत्वं तत्तद्योग्येष्टफलदातारं त्वामहं कथं परिभावयामि चिन्तयामि चिन्तने काऽनुपपत्तिरिति तत्राह—विमूढ इति । सामान्यज्ञाते वस्तुनि विशेषजिज्ञासा सङ्घटीत मम तु तदेव नास्त्यतस्त्वद्विषयज्ञानाभाव एवानुपपत्तिरित्यर्थः । सनन्दनादीनामपि देहभाक्त्वाविशेषात्तत्परिभावना कथं स्यादिति तत्राह—प्रध्वस्तेति । प्रध्वस्तो मायामयः प्रकृतिहेतुकः भेदमोहः अनात्मन्यात्मत्वमोहो येषां ते तथा तैः निरस्तमिथ्याज्ञानैरित्यर्थः । अनेन देहभाक्त्वेऽपि विशेषोऽस्तीति दर्शितम्. "कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" इति स्मृतेः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गर्हितम् आचरन्निति सङ्गपरिहारायेत्यर्थः ॥ १७ ॥

असमञ्जसपुत्रोऽंशुमान् पितृव्यखातमनु यः पन्थास्तं मार्गं भ्रान्तिकं ॥ १८-२१ ॥

स्वदज्ञानादपराधितः पूर्वं दग्धा इति नाद्भुतमित्याह—नेति आत्मनो जीवात् परं त्वाम् अजनो ब्रह्मापि न पश्यति नापि बुद्ध्यते अपरे अर्वाचीना वयं कुतो बुद्ध्यामहे मन आदिभिर्ये विसर्गा देवादिसर्गास्तेषु सृष्टा अप्रकाशा अज्ञाः ॥ २२ ॥

गुणान् जागरस्वप्नयोर्विषयान् पश्यन्ति सुषुप्तौ तु तम एव केवलं न तु निर्गुणं त्वां आत्मस्थत्वेन सम्यक् निरूपीति आत्मसंस्थं बहिःप्रकाशाः बहिर्ज्ञानवन्तः ॥ २३ ॥

स्वभावत एव न तु साधनैः प्रध्वस्तौ मायागुणनिमित्तौ भेदमोहौ यैस्तैः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवम्भूतं वृत्तं चेष्टितं यस्य सः ॥ १८—२१ ॥

अजनो ब्रह्मा आत्मनः स्वस्मात् परं पूर्ववर्तिनं स्वजनकं त्वाम् अद्यापि समाधियुक्तिभिर्न पश्यति न च बुध्यते तत्पुत्रः दीर्घकालतः समाधियुक्तिभिश्च अपरोक्षतया वा कार्त्स्न्येन त्वां न जानाति अपि तु तत्पुत्रपौत्राः तेभ्योऽर्वाचीनरूपाः तस्याजनकस्य मनश्च शरीरं च धीश्च ताभिर्ये विनिर्मिताः ये देवतिर्यङ्नरादीनां सर्गास्तेषु सृष्टाः अप्रकाशाः अज्ञा वयं कुतस्त्वां जानीमेत्यन्वयः ॥ २२ ॥

ननु, मां न जानन्ति तर्हि ते कुत्रासक्ता इत्यत आह—ये इति । ये देहभाजः बद्धजीवाः त्रिगुणाः शब्दादयो विषयाः प्रधाना इष्टा येषां ते गुणान् विषयानेव पश्यन्ति उत वा तमो नरकं यद्वा तमः सर्वतः पृथिव्यादिरूपेण प्रसृतेः प्रधानं सर्वविषयमूलभूतां त्वन्मायां च पश्यन्ति एवं त्वन्मायया मोहितचेतसः बहिःप्रकाशाः बहिर्वृत्तयः ते स्वसंस्थं त्वां न पश्यन्तीत्यन्वयः ॥ २३ ॥

स्वभावत एव प्रध्वस्तो मायामयेषु भेदेषु ऐन्द्रिकामुष्मिकपदार्थेषु मोहो येषां तैः सर्वैः सनन्दनाद्यमुनिभिर्विभाव्यं विचिन्त्यम् अहं विमूढः ज्ञानघनं त्वां कथं विभावयामि विचारयामि गरुडयोग्ये कार्ये मत्कुणस्येव महर्षिचिन्तनार्हे त्वयि मम का विचारशक्तिरित्यर्थः ॥ २४ ॥

---

भाषाटीका ।

वही असमंजस हुए लोक में ज्ञानी लोगों को जो विप्रिय और गर्हित हो ऐसा कर्म करने लगे । जनों को उद्वेग करने के लिये खेलते हुए बालकों को सरजूजी में फेंकने लगे ॥ १७ ॥

इस प्रकार के ढंग देखकर स्नेह छोड़कर पिताने असमंजस का परित्याग करदिया असमंजस भी अपने योगबल से सरयूमें गिराये हुए बालकों को सर्वत्र देकर चल दिये ॥ १८ ॥

अयोध्यावासी सब लोग अपने २ बालकों को फिर आये हुए देख कर बड़े विस्मय को प्राप्त हुए ॥ हे राजन् ! और राजा सगर को भी बड़ा अनुताप हुआ ॥ १९ ॥

राजा ने अंशुमान् को आज्ञा करी तब अश्व के अन्वेषण करने को वह गया और अपने पितृव्य ( काका ) लोग पृथिवी खोदते हुए जिस मार्ग होकर गये थे उसी मार्ग में जाते २ भस्म की ढेरी के समीप में घोड़ा देखा ॥ २० ॥

और वहां पर बैठे हुए अधोक्षज श्री कपिलमुनि को देख कर प्रणाम कर मनको समाहित कर हाथ जोड़कर अंशुमान् स्तुति करने लगे, क्योंकि ? आखिर तो महान् हैं ॥ २१ ॥

अंशुमानुवाच ॥

अंशुमान् बोले, कि—हे भगवन् यह जन, आत्मा से पर ऐसे आपको नहीं देखते हैं, और समाधि योग से भी आप अब तक नहीं जाने गये, तब फिर हम लोग तो उनके मन बुद्धि और शरीर से जो सृष्टि हुई उस सृष्टि से रचे हुए अर्वाचीन अज्ञजन कैसे आपको जानें ॥ २२ ॥

जो देहधारी सत्व रज आदि त्रिगुण प्रधान हैं वे लोग गुणों को देखते हैं अथवा तम ( अज्ञान ) को देखते हैं और अपने में स्थित ऐसे आपको नहीं देखते हैं, क्योंकि ? आपके माया से उन का चित्त मोहित होरहा है अत एव बहिर्दृष्टि वाले हैं ॥ २३ ॥

स्वभाव से अत्यन्त नष्ट हुआ है माया के गुणों से किया हुआ भेद मोह जिन का ऐसे सनंदनादिक मुनियों के भावना करने के योग्य ज्ञानघन ऐसे आपको मैं मूढ किस प्रकार विचार सक्ता हूं ॥ २४ ॥

---

प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥

त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ २६ ॥

अद्य नः सर्वभूतात्मन् ! कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥

श्रीशुक उवाच ।

इत्थं गीताऽनुभावस्तं भगवान् कपिलो मुनिः ।
अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ! ॥ २८ ॥

श्रीभगवानुवाच ।

अश्वोऽयं नीयतां वत्स ! पितामहपशुस्तव ।
इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥

तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ।
सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥

राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबन्धनः ।
और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे सगरोपाख्याने
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे प्रशान्त ! तस्मात्त्वां पुरुषं पुराणं केवलं नमामेत्यन्वयः पुराणपुरुषत्वे हेतुः मायायाः गुणाः कर्माणि च विश्वसृष्ट्यादीनि लिङ्गानि च ब्रह्मादिरूपाणि यस्य तम् प्रशान्तत्वे हेतुः सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां वा विमुक्तम् अतोऽनामरूपं नस्तत्कृतनामरूपशून्यं किं तु ज्ञानोपदेशाय गृहीतः प्रकटितो देहः शुद्धसत्त्वमूर्तिर्येन तम्, यद्वा हे प्रशान्तमायेति हे अगुणेति च सम्बोध्य कर्मभिः सृष्ट्यादिकार्यैर्लिङ्गानि यस्येति योज्यम्, यद्वा प्रशान्ता मायागुणादयो यस्मिन्नित्येकमेव पदम् ॥ २५ ॥

अस्माभिः कथं ज्ञायते—त्वन्मायेति द्वाभ्याम् । कामादिभिर्विभ्रान्तानि चेतांसि येषां ते इमे सर्वे गृहादिषु भ्रमन्ति ॥ २६ ॥

हे सर्वभूतात्मन् ! सोऽस्माकं त्वत्कृपयैव घटितात्त्वद्दर्शनाद्धृढोऽपि मोहमयः पाशश्छिन्नः कथम्भूतः कामादीनामाशय आश्रयः त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः ॥ २७ ॥ २८ ॥

अश्वं लब्ध्वाऽपि साकाङ्क्षं प्रत्याह इमे चेति ॥ २९ ॥

तं परिक्रम्येति शुकोक्तिः ॥ ३० ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतोऽहं स्तोतुमप्यनर्हस्ततस्त्वां केवलं नमस्करोमीत्याह—प्रशान्तेति । मायागुणाः प्रकृतिगुणाः सत्त्वादयः कर्मलिङ्गं कर्म

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कर्मवेद्यश्चेत्यते यस्य प्रशान्ता न विद्यन्ते स प्रशान्तमायागुणकर्मलिङ्गः तमनामरूपं जात्यादिभिन्नप्रयुक्तदेवादिनामभिश्च वर्जितं सदसद्विमुक्तं शुभाशुभफलसमुक्तं चेतनाचेतनधर्मैरस्पृष्टं वा ज्ञानोपदेशाय ननु सुखदुःखानुभावाय गृहीतं स्वेच्छोपात्तं लिङ्गशरीरं येन तं पुराणं पुरुषं त्वां नमामहे ॥ २५ ॥

यन्मायेति यस्य मायारचितेषु गृहादिषु वस्तुबुद्ध्या भोगस्थानादिबुद्ध्या भ्रमन्ति तं त्वां नमामहे इति पूर्वेणान्वयः । भ्रमणे हेतुं वदन् तत्कर्तॄन् विशिनष्टि—कामादिभिर्विभ्रान्तं चेतो येषां ते इति तत्र कामो रागः लोभोऽनवबुद्धिः ईर्ष्या कामोपभोगविरोधिष्व क्षमः मोहश्चित्तविकारः ॥ २६ ॥

तद्दर्शनात्स्वस्य कृतार्थतामाविष्करोति—अद्येति । हे सर्वभूतात्मन् ! हे भगवन् ! तव दर्शनादद्याऽधुना नोऽस्माकं कामाः काम्यन्त इति कामाः शब्दादयो विषया विषयस्पृहा वा कामः कर्माणि पुण्यापुण्यात्मकानि तत्करणानीन्द्रियाणि तेषामाश्रयो मूलभूतो मोहः देहात्मभ्रान्त्यादिरूपो दृढो निर्मोचः छिन्नः आशय इति पाठान्तरं तदा कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि तेषां शब्दादिकामानां ग्राहकत्वात् कर्मेन्द्रियाणि वागादीनि तेषां तत्प्रभावत्वात् तान्येवाशयमाश्रयो यस्य स मोहात्मकः पाशः मोहस्यान्तगतत्वेऽपि सर्वेन्द्रियप्रवृत्तिमूलकत्वेनोभयेन्द्रियाश्रयत्वमुक्तम् ॥ २७ ॥

हे नृप ! इत्थं गीतः सङ्कीर्तः संस्तुतोऽनुभावः प्रभावो यस्य स भगवान् कपिलो मुनिस्तमंशुमन्तं मनसाऽनुगृहीतं वक्ष्यमाणमुवाच ॥ २८ ॥

तदेवाह—अश्व इति । हे वत्स ! अंशुमन् ! अयमश्वस्तव पितामहस्य सगरस्य यज्ञीयः पशुर्नीयतां भस्मराशीन् दर्शयित्वा इमे च तव पितरः पितृव्याः दग्धास्तेषां गङ्गाम्भ एवार्हन्ति नेतरच्चाम्भः गङ्गाम्भसैवैषां क्रियाः कार्याः नेतरेण अनेनैवामुत्तारणमित्यर्थः ॥ २९ ॥

एवमुक्तवन्तं कपिलं प्रदक्षिणीकृत्य शिरसा प्रसाद्य प्रणिपत्यांशुमान् हयमानीतवान् तेन पशुना हेतुना क्रतुशेषं सगरस्समापयत् ॥ ३० ॥

ततो राज्यमंशुमति न्यस्य निधाय निस्स्पृहः देहतदनुबन्धिषु स्पृहारहितः मुक्तं बन्धनं बन्धकमहम्ममत्वादिकं येन तादृशः और्वेणोपदिष्टो मार्गः स्वात्मपरमात्मयाथात्म्यज्ञानरूपः तेन न विद्यते उत्तमा यस्यास्तां गतिं मुक्तिं लेभे लब्धवान् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्वां नमामहे इत्यन्वयः । त्वामिति क इति तत्राह—पुरुषमिति । तर्हि देववत्सर्वविरन्तमःकश्चिदयं स्यादिति नेत्याह, अनामरूपमिति । प्राकृतनामादिरहितं तत्कुत इति तत्राह—प्रशान्तेति । प्रशान्तानि उपरतानि, मायागुणाः सत्त्वादयः कर्माणि तन्निमित्तव्यापाराः लिङ्गं शरीरं यस्य सः तथा तैस्कारणत्वेन मूढत्वभिन्नत्वम्, एतत्कथं घटते ? इति तत्राह—सदिति सतो प्रधाना असतः परमाण्वादेः "विमुक्तं भिन्नं हरुमवर्णम्" इति श्रुतेः । शरीरत्वेन नामरूपदर्शनात्तदभावकथनं कथमिति तत्राह, ज्ञानेति. लोकानुग्रहार्थं शरीरग्रहणं न तु कर्मनिमित्तम् अत. एव नित्यदुःखाभावः ॥ २५ ॥

त्रिविधानां जीवानां स्वभावाभिभवो नास्तीति दर्शनाय मानुषस्वभावमाह—यन्मायेति । यस्य हरेर्मायया प्रकृत्या इच्छया वा रचिते निर्मिते लोके भूम्यादौ रचितगृहादिषु वस्तुबुद्ध्या ऽनश्वराणीति मनसा भ्रमन्ति परिवर्तन्ते के मानुषा इति शेषः । निमित्तमाह—कामेति । कामो विषयाभिलाषः लोभो, धर्मादिविषयार्थत्यागानिच्छा ईर्ष्या असूया मोहो वैचित्त्यम् एतैर्विभ्रान्तं चेतो येषां ते तथा अनेनान्यद्वयं व्याख्यातम् ॥ २६ ॥

उपसंहरति अद्येति अद्य नोऽस्माकं पुत्रादिषु दृढो मोहपाशः अज्ञानहेतुकः स्नेहपाशश्छिन्न इत्यर्थः । कामाकर्मेन्द्रियेष्वाशेत इति कामकर्मेन्द्रियाशयः ॥ २७ ॥ १८ ॥

अर्हतीति अपेक्षते ॥ २९—३१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रशान्तानि मायासम्बन्धीनि गुणकर्मलिङ्गानि यत तथैव अनामरूपं मायिकनामरूपरहितम् । २५ ॥ २६ ॥

कामादीनामाशयः आश्रयः ॥ २७—२८ ॥

नेतरदिति नान्यथा निस्तार इत्यर्थः ॥ २९—३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मात् त्वां केवलं नमामः कथम्भूतं प्रशान्ताः स्वप्रभावं कर्तुमशक्ताः माया प्रकृतिः गुणाः सत्त्वादयः कर्मलिङ्गाः सुरासुरादयो यस्मिन् तम् "नामरूपे व्याकरवाणि" इति श्रुत्युक्तं नामरूपात्मकं जगत् तद्भिन्नमनामरूपं प्राकृतनामरूपरहितमित्यर्थः । सदसद्विमुक्तं शुभाशुभफलास्पृष्टम् तथापि ज्ञानोपदेशाय गृहीतः आविष्कृतो देहो येन तम् ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनादितो मायामोहिताः जीवाः संसारे भ्रमन्ति तत्र त्वत्कृपया त्वद्दर्शनं वयं प्राप्य कृतार्था इत्याह–त्वन्माययेति द्वाभ्याम्। कामादिभिर्विभ्रान्तानि चेतांसि येषां ते सर्वे इमे गृहादिषु वस्तुबुद्ध्या उपदिष्टबुद्ध्या लोके भ्रमन्ति ॥ २६ ॥
कामो वासनात्मकः सङ्कल्पः कर्माणि च इन्द्रियाणां च तेषाआशयः आश्रयो मोऽस्माकं मोह आत्मानात्मपरमात्मस्वरूपाज्ञान स एव पाशः तव दर्शनात् अद्य अधुना छिन्नः तव दर्शनात् वयं कृतार्था इत्यर्थः ॥ २७—३० ॥
अनुत्तमां निरतिशयाम् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टमाऽध्यायार्थप्रकाशः ॥ ८ ॥

भाषाटीका।

हे प्रशांत! माया के सत्त्वादि गुणों से जो कर्म सृष्ट्यादिक है वही आपका परत्व सूचक लिङ्ग (लक्षण) है तथा प्राकृत नाम रूप से रहित हैं और कार्य कारण से विमुक्त जिनका स्वरूप और ज्ञान के उपदेश करने के लिये ग्रहण किया देह जिनने ऐसे पुराण पुरुष आपको नमस्कार हो ॥ २५ ॥

आप की माया से रचित इस लोक में गृहादि वस्तुओं में परमार्थ बुद्धि करके चेतन, भ्रम को प्राप्त होते हैं, कारण कि–काम लोभ, ईर्षा, मोह, इनसे विभ्रांत चित्त वाले हैं ॥ २६ ॥

हे सर्व भूतात्मन्! अब मेरा काम, कर्म, इन्द्रिय और अन्तःकरण में पड़ा रहा जो मोह रूप दृढ पाश [ फांस ] सो हे भगवान्! वह आपके दर्शन से छिन्न होगया ॥ २७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे नृप! जब अंशुमान ने श्री कपिल देवजी का इस प्रकार प्रभाव गाया तब भगवान् श्री कपिल देव जी बुद्धि से अनुग्रह करके अंशुमान से बोले ॥ २८ ॥

श्री भगवान उवाच ॥

भगवान् श्रीकपिल देवजी बोले, कि–हे वत्स! तुमारे पितामह के यज्ञ का पशु यह अश्व तुम लेजाओ और यह तुमारे पितर ( काका ) लोग दग्ध हुए भये श्रीगंगाजी के जल को चाहते हैं अन्य कुछ नहीं ॥ २९ ॥

तब अंशुमान् श्री भगवान की परिक्रमा देकर शिरसे प्रणाम करके प्रसन्न कर अश्व को घर ले आये। सगर ने भी उस पशु से अवशिष्ट यज्ञ को समाप्त किया ॥ ३० ॥

और राजा सगर अंशुमान पर राज्य छोड़कर निःस्पृह और मुक्तबन्धन होकर और्वऋषि के उपदिष्ट मार्ग से सर्वोत्तम गति को प्राप्त हुए ॥ ३१ ॥

इति श्रीमद्भागवत नवम स्कन्ध में अष्टम अध्याय की
वृन्दावनस्थ पं० भगवताचार्यकृत
भाषा टीका समाप्ता ॥ ८ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

## ॥ नवमोऽध्यायः ॥

—०:०:०—

श्रीशुक उवाच ।

अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया ।
कालं महान्तं नाशक्नोत्ततः कालेन संस्थितः ॥ १ ॥
दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ।
भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ २ ॥
दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ।
इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥ ३ ॥
कोऽपि धारयिता वेगं पतन्त्या मे महीतले ।
अन्यथा भूतलं भित्त्वा नृप ! यास्ये रसातलम् ॥ ४ ॥
किं चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम् ।
मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यताम् ॥ ५ ॥

भगीरथ उवाच ।

साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥
धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ।
यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥ ७ ॥
इत्युक्त्वा स नृपो देवं तपसातोषयच्छिवम् ।
कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमेंऽशुमतो वंशः खट्वाङ्गावधिवर्ण्यते ।
गङ्गा भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ ० ॥

यथा सगरः पौत्राय राज्यं दत्त्वा तपस्तेपे तथांऽशुमांश्च स्वपुत्राय राज्यं दत्त्वा महान्तं कालं तपस्तेप इति चकारस्यार्थः नौशक्नोत् गङ्गामानेतुमिति शेषः संस्थितो मृतः ॥ १ ॥

कालं मृत्युमेयिवान् प्राप्तः ॥ २ ॥

तं प्रत्यात्मानं दर्शयामास ते वरदास्मीति गङ्गयोक्तः सन् स्वमभिप्रायं पुनर्गङ्गोद्धरणं शशंस कथयामास ॥ ३ ॥

आह गङ्गा कोऽपि गगनात्पतन्त्या मे वेगं धारयिता धारयिष्यति ॥ ४ ॥

किञ्च मामृजन्ति क्षालयिष्यन्ति तत्रोपायो विचिन्त्यताम् ॥ ५ ॥

अघं हरन्ति हरिष्यन्ति अघं भिनत्तीत्यघभित् ॥ ६ ॥

आत्मा कथम्भूतः? यस्मिन्निदं विश्वमोतं प्रथितमूर्ध्वतन्तुषु शाटीव पटइव प्रोतं च तिर्यक्तन्तुषु पट इव असौ सर्वाधारत्वेनैव धारयिष्यतीत्यर्थः ॥ ७ ॥

इत्यथ गङ्गामुक्त्वा तच्छ्रुत्वेतिपाठे आविर्बभूवेत्यर्थः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमानीताश्वः पितामहदत्तराज्योऽंशुमान् पितॄणां समुत्तरणार्थं गङ्गामानेतुमिच्छया महान्तं कालं तपस्तेपे चक्रे नाशक्नोत गङ्गामानेतुं न प्रबभूव किन्तु कालेनोपसंहृतो मृतो बभूव ॥ १ ॥

अथ तस्यांशुमतः सुतो दिलीपोऽपि तद्वत् पितृवत्तपः कुर्वन् गङ्गामानेतुमशक्त एव कालं मृत्योर्गोचरतां प्राप्तवान् अथ तस्य दिलीपस्य सुतो भगीरथः स सुमहत्तपश्चक्रे ॥ २ ॥

ततस्तेन तपसा प्रसन्ना गङ्गा दर्शयामास, आत्मानमिति शेषः। ते तुभ्यं वरदाऽस्मीति तं भगीरथमुवाचेति शेषः। इत्थं गङ्गयोक्तो नृपो भगीरथः प्रणतः स्वकीयमभिप्रायं शशंस उक्तवान् ॥ ३ ॥

पुनस्तं गङ्गोवाच—कोऽपीति द्वाभ्याम्। महीतले पतन्त्या मम वेगं को नु धारयिता? कोपीति, पाठे अपि शब्दः सम्भावनायां कोवा धारयितेत्यर्थः। न चेद्धारयिता कोऽपि न विद्यते चेत् तर्हि हे नृप! भूमितलं भित्त्वा रसातलं यास्ये गमिष्यामि ॥ ४ ॥

भूमितल एव किं न प्रवहसीत्यत्राह—किञ्चेति। किञ्चाहं भुवं यास्ये भूमौ न प्रवहामीत्यर्थः। तत्र हेतुः, नरा भूमिष्ठाः अघं पापं मय्यामृजन्ति शोधयन्ति प्रक्षिपन्ति तत्तैस्त्यक्तमघमहं क मृजामि प्रक्षिपामि? हे राजन्! तत्र विचिन्त्यतामुपाय इति शेषः ॥ ५ ॥

ततो भगीरथ आह—साधव इति द्वाभ्याम्। न्यासिनः काम्यकर्मत्यागिनः शान्ता जितेन्द्रियाः ब्रह्मिष्ठाः ब्रह्मणोऽभिष्ठाः ब्रह्मातिशयितं ब्रह्म ब्रह्मिष्ठं तेन तदुपासका लक्ष्यन्ते ब्रह्मनिष्ठप्रवरा इत्यर्थः। अतएव लोकपावनाः साधवस्तवाघं नरैस्त्यक्तमङ्गसङ्गात् स्नानरूपाद्धरन्ति तर्हि ते क मृजन्तीत्यत्राह—तेष्वास्ते अघभिद्धरिरिति। तेषु साधुषु अघभिद्धरिरास्तेऽतः तर्हि हरिरपि क मृजतीत्याशङ्क्याऽघभिदित्यनेन परिहृतः अघं भिनत्ति निरस्यति नाशयतीति यावत् नत्वघमादायान्यत्र प्रक्षिपतीति अभिप्रायः ॥ ६ ॥

एवं किञ्चाहमित्यादेरुत्तरमुक्त्वा कोऽपीत्यादेरुत्तरमाह—धारयिष्यतीति। रुद्रो रुद्रशरीरकः परमात्मा तव वेगं धारयिष्यति तस्य धारणायामसामर्थ्यशङ्कां वारयन्विशिनष्टि—शरीरिणां ब्रह्मादिस्थावरान्तानामात्मा अन्तःप्रविश्य प्रशासनेन धारकः किंबहुना यस्मिन् परमात्मनि इदं विश्वं प्रोतं शरीरतया समवेतं यथा तन्तुषु शाटी तद्वत्कृत्स्नविश्वधारकस्याखिलभम एव बिभर्त्यपानित्युक्तविभवस्य त्वद्वेगधारणायां सामर्थ्यं कैमुत्यन्यायसिद्धमिति भावः ॥ ७ ॥

इत्येवंविधं तस्य भगीरथस्य वच आकर्ण्य तं भगीरथं पुनर्गङ्गोवाच, तर्हि मद्वेगस्य धारणार्थे महेशानं रुद्रशरीरकं परमात्मानं प्रसाद्य प्रसन्नं कुर्विति तद्गङ्गावचः श्रुत्वा स नृपो भगीरथस्तपसा शिवमतोषयत्, हे राजन्! अल्पीयसैव कालेन तस्य भगीरथस्य ईशानो रुद्रः प्रसन्नो बभूव ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

महदपराधपङ्कप्रक्षालनेनात्मजनोद्धाराय महान्तं कालं तपस्तेप इत्यन्वयः। संस्थितो मृतः ॥ १ ॥

कालमेयिवान् मरणं प्राप्तः ॥ २ ॥

प्रसन्ना देवी ते वरदाऽस्मीति निगद्य स्वात्मानं तमुद्दिश्य प्रदर्शयामास ॥ ३ ॥ ४ ॥

किञ्च रसातलप्रवेशस्तत्रगमनार्थं एव न, अन्योऽप्यस्तीत्याशयेनाह—किञ्चेति। कुतो नरकपातिरिति तत्राह—नरा इति। पापिनो नराः स्नानादिना मय्यघमामृजन्ति शोधयन्ति पापं निक्षिप्य स्वयं शुद्धा भवन्ति। हे राजन्! तदघं मृजामि शोधयामि क्वेति शेषः। क निक्षिप्य शुद्धा भवामि अत्रापि तत्सर्वं विचिन्त्यतां नराणामघसंहर्त्र्यहं मदघसंहर्ता क इति विवेकः क्रियतामित्यन्वयः ॥ ५ ॥

उत्तरमाह—साधव इति। शमदमादिलक्षणसम्पन्नाः साधवोऽत एव निराशिषः स्वर्गादिसुखलक्षणाशारहिताः कुत इति तत्राह—ब्रह्मिष्ठा इति। इष्टन् प्रत्ययान्तं चैतच्च ब्रह्मणि पूर्णे भगवद्भक्त्येति शेषः। अमी अतिशयेन ब्रह्मपूर्णाः ब्रह्मिष्ठाः ब्रह्मगमेन स्थिता इत्ययं छान्दसः तथात्वे ब्रह्मस्था इति स्यात्तस्मादयमिष्ठन्नन्तमनुसृत्यैवं कृतं लोकपावना एवंविधाः ये स्वहृदा हरिं प्राप्तास्ते अङ्गसङ्गात्पादप्रक्षालनादिना हृत्स्थगङ्गातरवस्थापितानामघं हरन्तीति शेषः। तेषां स्वहृदि स्थितहरिसान्निध्यातापं नाशयेत् तव किं वक्तव्यमनघरतपद्मनाभपादसरोजनिजवासाया इत्यर्थः ॥ ६ ॥

द्वितीयं प्रश्नं परिहृत्य प्रथमं परिहरति—धारयिष्यतीति। शरीरिणामात्मा ऽहङ्काररूपेण स्वरूपभूत इव शाटी तन्तावोतप्रोतत्रुटिका वा ॥ ७ ॥

तथाल्पीयसा कालेन शिव आशु अतुष्यतेति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

१—४ ॥

किञ्चेति मया निमित्तभूतया अघं पापं मृजन्ति नाशयन्ति तदघं तत्सङ्गात्तैरुच्चैर्जातं मत्सां तु क्वेत्यर्थः। गङ्गाप्रसङ्गे पापात्यन्तनाशस्य कोटिशः पुराणादिप्रसिद्धेः। अंहोदुःखव्यसनेष्वघमित्यमरकोशात् ॥ ५ ॥

साधवः स्वाधिकारानुसारशास्त्रीयाचारनिरताः न्यासिनः कर्म तत्फलाऽनासक्ताः शान्ताः शुद्धान्तःकरणाः ब्रह्मिष्ठा वेदविचारदक्षाः स तेष्वास्त इति अघानि अघं सर्वाणि भिनत्तीति तथा सदा साधूनां सङ्गात् तत्सङ्गात् तत्फलं तदुःखं न भवितेति भावः ॥ ६—१८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भगीरथोऽनयद्गङ्गां सौदासो राक्षसोऽभवत्।
हरिं मुहूर्तात् खट्वाङ्गः प्रापेति नवमे कथा ॥ ० ॥

तथेति राज्ञाऽभिहितं सर्वलोकहितः शिवः ।
दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ९ ॥
भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ।
यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥ १० ॥
रथेन वायुवेगेन प्रयान्तमनुधावती ।
देशान्पुनन्ती निर्दग्धानासिञ्चत्सगरात्मजान् ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा सगरः पौत्रे राज्यं न्यस्य तपस्तेपे तथैवांशुमांश्च दिलीपे स्वपुत्रे राज्यं न्यस्य तपस्तेपे इत्यर्थं चकारः ॥ १ ॥

यथांशुमान् तद्वत ॥ २ ॥

देवी गङ्गा स्वाभिप्रायं पूर्वजोद्धरणं कोऽपीति गङ्गोक्तिः मामृजन्ति क्षालयिष्यन्ति तत्रोपायो विचिन्त्यताम् ॥ ३—५ ॥

अङ्गसङ्गात् स्नानात् हरन्ति हरिष्यन्ति तेषां तदघं को हरिष्यतीति चेत् हरिरेव अघभित् तेन हरिं विना तीर्थतपः प्रायश्चित्तादिभिः पापं वस्तुतो न नश्यतीत्यजामिलोपाख्यानोक्तः सिद्धान्तो दृढीकृतः ॥ ६ ॥

रुद्र इत्यधुनापि त्वं यस्य शिरसि तिष्ठस्येवेति भावः यस्मिन्निदं विश्वमोतं प्रथितम् ऊर्ध्वतन्तुषु शाटीव प्रोतं च तीर्यक्तन्तुषु शाटीवेति तस्येश्वरत्वं दर्शितम् ॥ ७—८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीगङ्गावतरणं अंशुमतो वंशं च स्वङ्गाङ्कगावाभिवर्णयति, अंशुमानिति नवमेन । महान्तं कालं तपस्तेपे तथापि न शक्तो गङ्गामानेतुमिति शेषः ॥ १ ॥

कालमनन्तकालम् ॥ २ ॥

देवी गङ्गा तं स्वात्मानं दर्शयामास नृपोऽपि अवनतस्सन् स्वाभिप्रायं पूर्वजोद्धरणं शशंस ॥ ३ ॥

गङ्गाप्याह–क इत्यादि ॥ ४ ॥

मामृजन्ति क्षालयिष्यन्ति ॥ ५ ॥ ६ ॥

ते वेगं रुद्रो धारयिष्यति तत्रापि आत्मा परमात्मा हरिरास्ते यस्मिन् आत्मनि इदं विश्वमोतं प्रथितमूर्ध्वतन्तुषु शाटीव पट इव, प्रोतं च तिर्यक्तन्तुषु पट इव ॥ ७।८ ॥

———

भाषाटीका ।

श्रीरुक्मिणीशचरणौ शरणं प्रपद्ये ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–गंगाजी के आने की कामना से राजा अंशुमान ने बड़ा तप किया तप करते २ महान् काल व्यतीत होगया गंगाजी के ले आने को समर्थ नहीं हुए इतने में काल पूरे होने से देहान्त को प्राप्त हुए ॥ १ ॥

उनके पुत्र दिलीप महाराज भी अंशुमान् के तरह गंगा लाने में समर्थ न होकर परलोक गये ॥ दिलीप के पुत्र भगीरथ ने महान् तप किया ॥ २ ॥

तब श्री गंगा देवी दर्शन देकर बोलीं, कि मैं तेरे ऊपर प्रसन्न हूं तूं वर मांगले इस प्रकार गंगाजी ने जब भगीरथ को कहा तब राजा भी प्रणत होकर अपना सब अभिप्राय कहता हुआ ॥ ३ ॥

तब फिर श्री गंगाजी बोलीं, कि— हे नृप ! जब मैं महीतल में ऊपर से पड़ूंगी तब मेरा कोई भी वेग को धारण तो करेगा ? नहीं तो मैं भूतल को भेदन कर रसातल को चली जाऊंगी ॥ ४ ॥

हे राजन् ! अथवा मैं पृथिवी पर नहीं जाऊंगी क्यों कि ! मनुष्य अपना पाप मेरे विषे धोवेंगे, फिर उस पापको मैं कहां धोऊंगी आप यह तो विचार करो ॥ ५ ॥

भगीरथ उवाच ॥

राजा भगीरथ बोले, कि–साधुजन, सन्यासी, शांत ब्रह्मनिष्ठ लोक को पवित्र करने वाले महात्माजन अपने अंग के संग से तुमारे अघों को हर लेंगे, क्योंकि–उनके विषे अघ हरन करने वाले श्रीहरि विराजते हैं ॥ ६ ॥

और आपके वेग को श्रीरुद्र धारण करेंगे जो रुद्र जीवों को आत्मा के सदृश प्रिय हैं और जिन रुद्र अंतर्यामी में यह विश्व ओत प्रोत होरहा है जैसे कि–तंतुओं में वस्त्र ॥ ७ ॥

इतना कह कर राजा भगीरथ ने तप से शिवजी को प्रसन्न किये, हे राजन् शिवजी भी थोड़े ही काल में राजा पर प्रसन्न होगये ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

राज्ञाऽभिहितं तथेत्यङ्गीकृत्य हरेः पादेन पूतं जलं यस्याः ॥ ९—११ ॥

यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ।
सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ १२ ॥
भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः ।
किंपुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥ १३ ॥
न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ।
अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ १४ ॥
सन्निवेश्य मनो यस्मिंश्छ्रद्धया मुनयोऽमलाः ।
त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ १५ ॥
श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ।
सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसङ्गाद्गङ्गामाहात्म्यमाह–चतुर्भिः । यत् यस्या जलस्पर्शमात्रेण तत्र केवलं देहभस्मभिरेव न साक्षात् ब्रह्मणि स्वकृतेन दण्डेन हता अपि ॥ १२ ॥

तां श्रद्धया ये सेवन्ते इति शेषः तत्प्रपञ्चयति भस्मीभूतेनाङ्गेन यः सङ्गस्तेन ॥ १३ ॥ १४ ॥

अनन्तस्य विशेषणं सन्निवेश्येति त्रैगुण्यं देहसम्बन्धम् ॥ १५–१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो राज्ञा भगीरथेनाऽभिहितः गङ्गाया वेगं धारयेति विज्ञापितः सर्वस्य लोकस्य हितकरः शिवस्तथेति बिभर्मीति इत्युक्त्वा अवहितः सावधानः हरेः पादावनेजनेन पूतं जलं यस्यास्तां गङ्गां दधार अत्र शिवशब्दः शिवमात्रपरो न तु विशेष्यभूतपरमात्मपर्यन्तः गङ्गाया हरिपादपूतजलत्वविशेषणसामर्थ्यात् यद्वा पूर्वत्रापि रुद्रेशानादिशब्दाः विशेषणभूतरुद्रमात्रगोचराः आत्मा शरीरिणामित्यादि तु अष्टमूर्तित्वाभिप्रायेणोक्तम् ॥ ९ ॥

ततो राजर्षिर्भगीरथो यत्र पितॄणां देहाः भस्मीभूताः शेरते आसते तत्र भुवनपावनीं गङ्गां निन्ये स्म आनयत् ॥ १० ॥

वायोरिव वेगो यस्य तेन रथेन प्रयान्तं भगीरथम् अनुधावन्त्यनुगच्छन्ती गङ्गा देशान् मार्गस्थानपि पुनन्ती निर्दग्धान् सगरात्मजानसिञ्चत् ॥ ११ ॥

ब्रह्मदण्डेन 'ब्रह्मभूते ब्रह्म इर्षो वा कपिले यो दण्डः स्वकृतापराधरूपस्तेन हता दग्धा अपि सगरात्मजाः यस्या गङ्गाया जलस्पर्शमात्रेण हेतुना केवलं देहभस्मभिरेव निमित्तभूतैः यज्जलस्पृष्टदेहभस्मभिर्हेतुभूतैर्दिवं जग्मुः ब्रह्मदण्डहता अपीत्यनेन—

> न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।
> नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥

इति नारदीयवचनोक्तरीत्या ब्रह्मदण्डहतानां नारकैरपि निन्द्यत्वं तेषामप्युत्तारकत्वेन गङ्गाजलस्य निरतिशयपावनत्वञ्चोक्तम् ॥ १२ ॥

एतदेव किंपुनर्न्यायेन दर्शयति–भस्मेति । भस्मभूतानामङ्गानां यः सङ्गो गाङ्गाम्भःसङ्गः तेनैव हेतुना सगरात्मजाः यदि स्वर्गं याताः ये धृतं व्रतं गङ्गाम्भःस्नानरूपं यैः ते श्रद्धया देवीं गङ्गां सेवन्ते ते दिवं यान्ति इति किंपुनर्वक्तव्यमित्यर्थः ॥ १३ ॥

सकलाघापहारिणा मुक्तिहेतुभूतजलस्पर्शाया गङ्गायाः स्वर्गप्राप्तिमात्रहेतुत्वं नाश्चर्यं कार्यमित्याह–नहीति । अनन्तस्य भगवतः चरणाम्भोजात्प्रसूताया अतएव भवच्छिदः पापनिवर्तनमस्यगुणानप्रवर्तनद्वारा भवं संसारं भिनत्तीति तथाभूतायाः स्वर्धुन्याः स्वर्नद्याः गङ्गाया यन्माहात्म्यमुदितमुक्तं तदेतत्परमाश्चर्यं नहीति उक्तविधं माहात्म्यमनन्तचरणाम्भोजप्रसूतत्वप्रयुक्तमित्युक्तम् ॥ १४ ॥

अथानन्तचरणाम्भोजमाहात्म्यं दर्शयितुं तद्विशिनष्टि–संनिवेश्येति । अमलाः निर्मलान्तःकरणाः मुनयो यस्मिन्ननन्तचरणाम्भोजे श्रद्धया मनो निवेश्य दुस्त्यजं त्रैगुण्यं त्रयो गुणा एव त्रैगुण्यं त्रिगुणान् हित्वा प्रकृतिसम्बन्धं हित्वेति यावत् सद्यस्तदैव तदात्मतामनन्ततुल्यस्वभावतां मुक्तिमित्यर्थः याताः प्राप्नुवन्नित्यर्थः ॥ १५ ॥

भगीरथात् श्रुताख्यः पुत्रो जज्ञे तस्य श्रुतस्य नाभाख्यः पुत्रोऽभूत् ततो नाभाख्यात् सिन्धुद्वीपस्तस्मात् सिन्धुद्वीपात् अयुतायुः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राज्ञाभिहितः शिवः ॥ ९ ॥ १० ॥

ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ।
दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥ १७ ॥
ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृपः ।
आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ।
वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यान्तं भगीरथम् अनुधावती पृष्ठतः आयान्ती ॥ ११ ॥

देहभस्मभिः साकम् ॥ १२ ॥

भस्मीकृताङ्गस्य स्वर्धुन्याः सङ्गेन ॥ १३ ॥

श्रीनारायणचरणसङ्गलब्धमेवास्या माहात्म्यं नान्यतोऽतो नैतच्चित्रमित्याह—नहीति । इह सगरात्मजकथाप्रसङ्गे गङ्गामाहात्म्यमुदितमतएव सर्वच्छिदः संसारच्छेद्याः जन्मच्छेदया वा "भवो भवे हरे प्राप्तौ सत्तासंसारजन्मसु" इति ॥ १४ ॥

संसारच्छेदनमाहात्म्यं श्रीहरिनिष्ठं गङ्गाया उपचार इत्याशयवानाह—संनिवेश्येति । तदात्मतां तत्सायुज्यलक्षणां मुक्तिं तत्स्वामिकतां वा ॥ १५ ॥

एवं भगीरथस्य गङ्गानयनादिमाहात्म्यमुक्त्वा तत्सन्ततिं कथयति—श्रुत इति । तस्य श्रुतस्य नाभस्य वरः सुतः ततः अयुतायुः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वाम् यत्रयत्र गङ्गा यास्यति तत्रतत्राहमेवेति मच्छिरस्येव सा सुखेन यात्वित्यर्थः ॥ ९—१३ ॥

इह यदुदितं सगरात्मजोद्धरणं परमत्राश्चर्यं न भवति ॥ १४ ॥

यस्मिन्ननन्ते ॥ १५—१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरेः पादेन पूतं जलं यस्यास्ताम् ॥ ९-११ ॥

ब्रह्मणा एव ,वाजिहरचौर इत्याद्यवज्ञारूपः स्वकृतो यो दण्डस्तेन हता अपि केवलं देहभस्मभिर्युक्ता न साक्षात् यस्या जलस्य स्पर्शमात्रं तेन दिवं याताः ॥ १२ ॥

स्वः स्वर्गं याताः ॥ १३ ॥ १४ ॥

यस्मिन् अनन्ते त्रैगुण्यं प्राकृतमपहाय ॥ १५ ॥ १६ ॥

---

भाषा टीका ।

भगीरथ ने जो आप से प्रार्थना करी सर्वलोक के हित परायण श्री शिवजी ने भी राजासे तथास्तु कहकर सावधान होकर श्रीहरि के चरण से पवित्र जलवाली श्रीगंगाजी को शीशपर धारण करी ॥ ९ ॥

तब वह राजर्षि भगीरथ भी भुवन पावनी श्रीगंगाजी को जहां अपने पितरों के देह भस्म होकर पडे रहे तहां पर लेगये ॥ १० ॥

वायु सदृश वेग वाले रथ पर बैठकर आगे चलने वाले भगीरथ के पीछे दौड़ती हुई अपने दिव्य विमल जलों से देशों को पवित्र करती हुई जले हुए सगर पुत्रों को सींचती भई ॥ ११ ॥

जिनके जलके स्पर्श मात्र से ब्रह्म रूप श्री कपिलदेव के विषे अपने किये हुए अपराध से नष्ट हुए भी सगरपुत्र स्वर्ग को गये तिसमें भी केवल देह के भस्म मात्र से जल स्पर्श हुआ देह से भी नहीं ॥ १२ ॥

भस्मी भूत अंग के संग से सगरात्मज स्वर्ग को चले गये तो फिर जीवते हुए जो पुरुष धृतव्रत होकर श्रद्धा से श्रीगंगाजी का सेवन करते हैं उनका वैभव क्या कहैं ॥ १३ ॥

स्वर्धुनी ( श्रीगंगा ) का यह कुछ बड़ा आश्चर्य नहीं है जो यहां कहा है क्योंकि यह तो साक्षात् अनंत के चरण कमल से उत्पन्न हुई है और इसीसे संसार के बन्धन को काटने वाली है ॥ १४ ॥

जिन श्रीहरि में श्रद्धा से मन को लगाकर निर्मल मुनिजन दुस्त्यज त्रिगुणमय संसार को छोडकर तत्काल में तदात्मत्व ( हरि के भाव ) को प्राप्त होगये ॥ १५ ॥

हां फिर भगीरथ महाराज के पुत्र श्रुत हुए तिनके नाभ हुए तिनसे सिंधुद्वीप भये तिनके पुत्र अयुतायु भये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नलस्य सखा अयात्प्राप्तः तत्सुतः ऋतुपर्णस्य सुतः ॥ १७ ॥
तत्पुत्रः सौदासः ॥ १८ ॥

राजोवाच।

किन्निमित्तो गुरोः शापः सौदासस्य महात्मनः।
एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥

श्रीशुक उवाच।

सौदासो मृगयां कञ्चिच्चरन्रक्षो जघान ह।
मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ २० ॥
स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे।
गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ २१ ॥
परिवेक्ष्यमाणं भगवान्विलोक्याभक्ष्यमञ्जसा।
राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ २२ ॥
रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम्।
सोऽप्यपोऽञ्जलिनादाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥
वारितो मदयन्त्यापो रुशतीः पादयोर्जहौ।
दिशः खमवनीं सर्वं पश्यन् जीवमयं नृपः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

न रहो न रहस्यम् ॥ १९ ॥

मृगयां चरन् कञ्चिद्राक्षसं जघान तस्य भ्रातरं मुमोच स भ्राता पलाय्य गतः ॥ २० ॥

अघमनिष्टं सूदः पाचकस्तद्रूपधरः सन् राज्ञो गृहे वर्त्तमानः ॥ २१ ॥

अभक्ष्यमञ्जसा विलोक्य एवं नरमांसव्यवहारेण ॥ २२ ॥

वसिष्ठ एव तं शापं द्वादशवार्षिकं चक्रे ॥ २३ ॥

रुशतीः तीक्ष्णाः अपः स्वपादयोर्जहौ नान्यत्र तत्र हेतुः दिश इति एवमनेन मित्रसहत्वमपि दर्शितम् मित्रस्य कलत्रस्य वाचः सहनात् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततोऽयुतायुषः ऋतुपर्णः संबभूव, तं विशिनष्टि-यः ऋतुपर्णो नलस्य सखा, तयोः परस्परोपकर्तृत्वरूपं सखित्वं दर्शयति-नलाद्श्वविद्यामश्वशिक्षाप्रतिपादिकां विद्यामगात् प्राप्तवान्, किंकृत्वा ? तस्मै नलायाऽक्षहृदयं द्यूतशास्त्ररहस्यं दत्वा तस्य ऋतुपर्णस्य सुतः सर्वकामः ॥ १७ ॥

ततः सर्वकामात्सुदासो जज्ञे इति शेषः। तत्पुत्रः सुदासस्य पुत्रो मदयन्त्याः पतिः हे नृप! यं मदयन्तीपतिं मित्रसहमाहुःतमेव कल्माषाङ्घ्रिञ्चाहुः स एव कस्मिंश्चित्कदाचित् वसिष्ठस्य शापाद्रक्षो बभूव स्वकर्मणा अनपत्यः औरसपुत्ररहितश्च बभूव क्षेत्रजस्य वक्ष्यमाणत्वात् ॥ १८ ॥

पूर्वं संक्षेपेणोक्तं वृत्तान्तं विस्तरेण बुभुत्सया परिपृच्छति राजा- किन्निमित्त इति। महात्मनः सौदासस्य गुरुशापः यदेव निमित्तं यस्य तादृशो बभूव तदेतच्छापस्य निमित्तं वेदितुमिच्छामि तद्यदि न रहस्यं कथयितुं योग्यं चेत्कथ्यताम् ॥ १९ ॥

एवं पृष्टः आह मुनिः-सौदास इत्यादिना वसिष्ठस्तस्तु स्नात इत्यतः प्राक्तनेन। मृगयैव शीलं यस्य सः सौदासो मित्रसहः चरन् रक्षो हतवान् रक्षसो भ्रातरन्तु न जघान किन्तु मुमोच ततः स रक्षसो भ्राता गतस्सन् राज्ञः सौदासस्याघं भ्रातृहननरूपमपराधं चिन्तयन् प्रतिचिकीर्षया अपकर्तुमिच्छया राज्ञो गृहे यः सूदः पाचकः तद्रूपधरो भोक्तुमिच्छते गुरवे वसिष्ठाय पक्वं नरामिषं निन्ये ॥ २० ॥ २१ ॥

ततो भगवान् वसिष्ठः परिवेक्ष्यमाणं भोजनपात्रे निक्षिप्यमाणं नरामिषमत एवाभक्ष्यमञ्जसा आशु विलोक्य भ्रान्त्या क्रुद्धो राजानं मित्रसहमशपत् किमिति एवम् एवङ्कारयंस्त्वं रक्षो भविष्यसीति ॥ २२ ॥

ततस्तन्नरामिषं परिवेक्ष्यमाणं सूदरूपधरेण रक्षसा कृतं न तु राज्ञा कारितमिति विदित्वा स्ववाक्यानृतत्वपरिहाराय शापं द्वादशवर्षावधिकं चक्रे ततः सोऽपि सौदासोऽप्यञ्जलिना अपः जलमादाय गुरुं वसिष्ठं शप्तुं समुद्युक्तः मदयन्त्या निवारितः रुशतीस्तीक्ष्णाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

...ताः कमनीया अपः स्वपादयोर्जहौ तत्याज, तत्र हेतुः दिशः अमा-काशं सर्वामवनिं भूमिञ्च जीवप्रचुरं जगत्पश्यन्नेव तत्सुसापत्व स्वपादयोर्जहदर्शितभावः । नृपः सौदासः ॥ २३ ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऋतुपर्णः अयात्प्राप्तवान् तत्सुतः ऋतुपर्णसुतः ॥ १७ ॥
यं सुदासपुत्रम् ॥ १८ ॥ १९ ॥
रक्षो राक्षसं मृतं भ्रातरं प्रतिचिकीर्षया भ्रातृहन्तृहनन-लक्षणप्रतिकारेच्छया ॥ २० ॥
सूदरूपधरः पाचकवेषधरः नरामिषं नरमांसम् ॥ २१ ॥
एवंविधः ॥ २२ ॥
रक्षःकृतं राक्षसकृतम् ॥ २३ ॥
रुषतीः क्रूराः मन्त्रितत्वात् "रुषरिष हिंसायाम्" हिंसयन्तीर्वा "रुश् शब्दे" इतं चिकीर्षाम् इति शब्दयन्तीर्वा माघमासे रटन्त्याप इति वचनात् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न रहो वदीति श्रीमद्वसिष्ठस्येव तत्र दोषवत् प्रतीतिश्चे-त्तदा नोद्घाटनीयमित्यर्थः ॥ १९—२० ॥

सूदरूपधरः तमाविष्टः सन्नित्यर्थः । अपरिचितस्य पाकान-धिकारात् ॥ २१—४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अयात् "या प्रापणे" प्राप इत्यर्थः । अक्षहृदयं द्यूतविद्यारहस्यं अस्मै नलाय ॥ १७—१९ ॥

किञ्चिद्रक्षः कञ्चिद्राक्षसं जघान तस्य भ्रातरं मुमोच स भ्राता ॥ २० ॥

राज्ञो यः सूदः पाचकस्तद्रूपधरः ॥ २१ ॥

भक्ष्यं नरमांसम् ॥ २२ ॥

सर्वज्ञतया रक्ष एव कृतं न तु राज्ञेति विमृश्य तत् शापं द्वादशवार्षिकं चक्रे सोऽपि सौदासोऽपि ॥ २३ ॥

रुषतीः क्रोधाग्निरूपाः स्वपादयोरेव नान्यत्र दिग्वधीनां बाहुप्रसङ्गात् एतेन कल्माषपादत्वं मित्रसहत्वं च दर्शितं मित्रस्य कलत्रस्य वाचः सहनात् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नलस्य सखा नलसखः तस्मै नलाय अक्षहृदयं अक्षविद्यां दत्वा अश्वविद्याम् अयात् प्राप्तः ॥ १७ ॥

तत्पुत्रः ऋतुपर्णपुत्रः सुदासः ॥ १८ ॥

रहः रहस्यं न चेत्तर्हि कथ्यताम् ॥ १९ ॥

अथ सौदासस्य मित्रसहत्वं कल्माषाङ्घ्रित्वं वसिष्ठशापात् राक्षसत्वं स्वकर्मणा ऽनपत्यत्वं च वर्णयति—सौदास इत्यादिना, भ्रातरं रक्षसः मुमोच न जघान स रक्षोभ्राता प्रतिचिकीर्षया सुदासवधाय गतः सुदासगृहे प्रविष्टः ॥ २० ॥

सूदः पाचकस्तद्रूपधरः गुरवे वसिष्ठाय ॥ २१ ॥

परिवेक्ष्यमाणां भोजनपात्रे निक्षिप्यमाणाम् अभक्ष्यमञ्जसा विलोक्य ॥ २२ ॥

सोऽपि सुदासोऽपि अपो जलमञ्जलिनाऽऽदाय गुरुं शप्तु-मुद्यतः ॥ २३ ॥

तदा मदयन्त्या वारितः रुषतीः तीक्ष्णा अपः स्वपादयोर्जहौ पद्भ्यांजहाविसत्र हेतुः दिश इत्यादि, अनेन मित्रसहत्वमपि दर्शितम् मित्रस्य कलत्रस्य क्रोधवचनादामपि वचनसहनात् ॥ २४ ॥

---

भाषा टीका ।

तिन से ऋतुपर्ण भये जो नलके सखा होकर उनको अक्ष विद्याका रहस्य बतलाकर नल से अश्वविद्या को प्राप्त हुए उन ऋतुपर्ण का पुत्र सर्वकाम हुआ ॥ १७ ॥

सर्वकामके पुत्र सुदास हुए तिनके पुत्र मदयंती रानी के पति राजा सौदास भये जिनको मित्रसह भी कहते हैं और किसी कारण से कल्माषांघ्रि भी कहते हैं वो वसिष्ठ जी के शाप से राक्षस हुए और अपने कर्म से निपुत्री भी हुए ॥ १८ ॥

राजो वाच ॥

राजा परीक्षित बोले, कि-महात्मा सौदास को किस निमित्त से गुरुजी का शाप हुआ यह मैं जानने की इच्छा करता हूं यदि गोप्य न हो तो ॥ १९ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-किसी समय सौदास ने सिकार खेलते समय किसी राक्षस को मारा और उसके भ्राता को छोड़ दिया वह राक्षस का भ्राता राजा से भाई के बदले लेने की इच्छा कर चला गया ॥ २० ॥

वह राजा का अनिष्ट विचारता हुआ राजा के घर में रसोइया का रूप धर कर भोजन की कामना वाले गुरुजी को मनुष्य का मांस पक करके देता हुआ ॥ २१ ॥

भगवान् वसिष्ठ ने परोसे हुए उस अभक्ष्यको देखकर क्रोध-कर राजाको शाप दे दिया कि-जा इसी तरह तू भी राक्षस हो जा ॥ २२ ॥

तदनन्तर वसिष्ठ जीने उस कर्म को राक्षस का किया भया जान कर शापकी अवधि द्वादशवर्षकी करदीनी, राजा भी निर-पराधी होने से क्रुद्ध होकर अञ्जली में जल लेकर गुरुजी को शाप देने को उद्यत हो गया ॥ २३ ॥

तब तो रानी मदयन्ती ने समझा कर बर्ज दिया परन्तु वह

राक्षसं भावमापन्नः पादे कल्माषतां गतः ।
व्यवायकाले ददृशे वनौकोदम्पती द्विजौ ॥ २५ ॥
क्षुधार्तो जगृहे विप्रं तत्पत्न्याऽऽहाकृतार्थवत् ।
न भवान्राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ २६ ॥
मदयन्त्याः पतिर्वीर ! नाधर्मं कर्तुमर्हसि ।
देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥ २७ ॥
देहोऽयं मानुषो राजन् ! पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर ! सर्वार्थवध उच्यते ॥ २८ ॥
एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः ।
आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ।
सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ॥ २९ ॥
सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ! ।
कथमर्हति धर्मज्ञ ! वधं पितुरिवात्मजः ॥ ३० ॥
तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ।
कथं वधं यथा बभ्रोर्मन्यते सम्मतो भवान् ॥ ३१ ॥
यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ।
न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥

---

भाषा टीका।

तीक्ष्ण जो अंजली में जल रहा राजा ने उसको अपने पगके ऊपर डालदिया। क्योंकि ? दिशायें, आकाश, और पृथिवी इन सबों को राजा ने जीवमय देखा ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवं राक्षसत्वे कल्माषाङ्घ्रित्वे च कारणमुक्त्वा स्वकर्मणा अनपत्य इति यदुक्तं तत्प्रपञ्चयति—व्यवायकाल इत्यादिना, कर्मणा अप्रज इत्यन्तेन। वनमोको निवासो ययोस्तौ वनौकसौ च तौ दम्पती च पृथक् पदत्वे सकारलोप आर्षः ॥ २५ ॥

अकृतार्थवदीनवत् ॥ २६ ॥

अकृतार्थमसमाप्तरतिम् ॥ २७ ॥

सर्वभूतानामात्मेति भावनयाऽऽराधयितुमिच्छुः यद्वा सर्वभूतानामात्मभावेन भूतेषु स्थितमपि गुणैरन्तर्हितं ब्रह्मेति सम्बन्धः पाठान्तरे अन्तर्हितः सोऽयमित्युत्तरेणान्वयः ॥ २८—३० ॥

भ्रूणस्य श्रोत्रियस्य गर्भस्य सत इति वा बभ्रोर्गोः सतो मतो भवान् वधं कथं साधु मन्यत इत्यर्थः ॥ ३१ ॥

क्षणमपि येन विना न जीविष्यामि सोऽयं यदि भक्षः क्रियते तर्हि मृतकं यथा मृतप्रायां मां पूर्वं भक्षय ॥ ३२ ॥ ३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

राक्षसं भावं रूपमापन्नः प्राप्तः गुरुशापादिति शेषः। पादे कल्माषतां नैल्यं विकारं च गतः शापार्थजलप्रक्षेपादिति शेषः। ततः कदाचिद्वनमेवौकः स्थानं ययोः तौ दम्पती भार्यापती द्विजौ मैथुनकाले ददर्श ॥ २५ ॥

तदा क्षुधा अशनायया पीडितः राक्षसरूपः सौदासो मिथुनीभूतं द्विजं जगृहे, भक्षितुमिति शेषः। तदा तस्य द्विजस्य पत्नी अकृतार्थमसमाप्तरतिं स्वपतिं येत्रीति तथाभूता सत्युवाच,तदेवाह—नेत्यादिना। एवं करुणमाषिपवा इत्यतः प्राक्तनेन। भवान् राक्षसः किन्तु साक्षादिक्ष्वाकूणां महारथः श्रेष्ठः ॥ २६ ॥

मदयन्त्याः पतिः अतो हे वीर ! अधर्मं विप्रहननरूपं कर्तुं नार्हति अपत्यकामायै मे मह्यं पतिं तत्रापि द्विजं तत्राप्यकृतार्थं देहि ॥ २७ ॥

हे राजन् ! अयं मानुषो देहः पुरुषस्य जीवस्याखिलानां पुरुषार्थानां साधनभूतः यत एवं तस्मादस्याखिलार्थदस्य मानुषदेहस्य वधो, हे वीर ! सर्वार्थानां वध इत्युच्यते ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चैष त्वया गृहीतो मत्पतिर्ब्राह्मणस्तत्रापि विद्वान् वेदशास्त्रार्थवित् न केवलं विद्वान् अपितु तपःशीलाऽऽद्यामन्यैश्चाक्रोधादिभिर्गुणैरन्वितः सर्वभूतानामात्मभावेन अन्तरात्मतया गुणैः सर्वज्ञत्वादिभिः सहैव भूतेषु देवमनुष्यादिषु अन्तर्हितं हृदयकुहरे निविष्टं महापुरुषादिशब्दवाच्यं ब्रह्माराधयितुमिच्छुरुपासीन इत्यर्थः । सत्पत्नीनिर्देशात्तु उपासनदशायामपि ब्रह्मज्ञानस्यैव प्रधानत्वज्ञापनाय ॥ २९ ॥

सोऽयमेवम्भूतो ब्रह्मर्षिवर्यो राजर्षिश्रेष्ठात् तत्रापि पित्रा राधिकृतराज्यात्ते त्वत्तः कथं वधमर्हति सर्वथा नार्हत्येवेत्यर्थः । यथा पितुः सकाशादात्मजो वधं नार्हति तद्वत् ॥ ३० ॥

तस्योक्तविधस्य पापस्य भ्रूणस्य सूत्रप्रवचनाध्यायिनः "वेदानां किञ्चिदधीत्य ब्राह्मणः एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषिः कल्पसूत्रप्रवचनाध्यायी भ्रूणः" इत्यादिप्रयोगात् ब्रह्मवादिनः ब्रह्मोपदेष्टुः वेदाध्यापकस्य वा वधं साधूनां सम्मतो भवान् कथं मन्यते सम्मतमिति शेषः । यथा बभ्रोर्धेनोर्वधं भवान्न सम्मतं मन्यते तथा अस्यापि वधं न सम्मतं मन्यस्वेत्यर्थः ॥ ३१ ॥

यदि सर्वथा अयं ब्राह्मणस्त्वया भक्षः क्रियते भक्ष्यते इत्यर्थः । तर्हि पूर्वतः तद्भक्षणात् प्रागेव मां खाद् अद्धि अनेन विनाऽहं क्षणमपि न जीविष्ये यथा मृतकं कुणपं जीवेन विना तद्वदहमप्यनेन विनेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कल्माषतां वनमाषवर्णांवस्तां व्यवायकाले सुरतसमये ॥२५॥

द्विजपत्नी राक्षसस्य कृपाजननायाऽध्यवधे चानेकानि कारणान्याह—न भवानित्यादिना ॥ २६–३० ॥

भ्रूणस्य स्वस्य स्वयमेव पुत्रस्य ब्रह्मवादिनः ब्रह्मज्ञानिनः षडङ्गवेदाध्यायिनो वा बभ्राः सौरभेय्याः "माहेयी सौरभेयी च बभ्रुः स्यादूर्ध्वकांक्षिणी" इत्यभिधानम् ॥ ३१ ॥

येन पत्या मृतकं प्राणरहितशरीरं प्राणमन्तरेण ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वनौकसौ. च तौ दम्पती चेति तौ पृथक् पदपाठे सलोप आर्षः २५—२६ ॥

अकृतार्थम् असमाप्तरतिम् ॥ २७ ॥ २८ ॥

गुणैरुद्दिष्टैः सत्त्वादिभिर्हेतुभिः अन्तर्हितमदृश्यम् ॥ २९ ॥

त्वत्तः ॥ ३० ॥

ब्रह्मवादिनो भ्रूणस्य पुत्रस्य अस्य पिताऽपि ब्रह्मवादीत्यर्थः भ्रूणोऽर्भके बालगर्भे" इत्यमरः बभ्रोर्गोः ॥ ३१ ॥

तदत्यार्तवृत्तं दृष्ट्वा पुनः प्राह—येषयमिति । येन प्राणेनेव विनेत्यर्थः । ततश्च यथा मृतकं शवस्तथाहं भविष्यामि इत्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वनमेवौकः स्थानं ययोस्तौ वनौकसौ च दम्पती वनौकोदम्पती ॥ २५ ॥ २६ ॥

अकृतार्थम् अकृतगर्भाधानम् ॥ २७ ॥ २८ ॥

सर्वभूतात्मभावेन गुणैः सर्वप्रेरकत्वादिभिर्भेवष्टातर्हि तं ब्रह्म आराधयितुमिच्छुः सोऽसौ कथं वधमर्हतीत्युत्तरेणान्वयः ॥२९॥३०॥

यथा भ्रूणस्य गर्भस्य यथा बभ्रोर्गोः तथा तस्योक्तविधस्य अपापस्य साधोः वधं सम्मतः सतां सम्मतो भवान् कथं साधु मन्यते भ्रूणस्येति ब्रह्मवादिनो विशेषणं वा तदा भ्रूणस्य सूत्रप्रवचनाध्यायिन इत्यर्थः । "वेदानां किञ्चिदधीत्य ब्राह्मणः एकां शाखामधीत्य श्रोत्रियः साङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषिः कल्पसूत्रप्रवचनाध्यायी भ्रूणः" इति प्रयोगात् ॥ ३१ ॥

यदि अयं भक्षः क्रियते तर्हि मृतकं यथा मां मृतकतुल्यं पूर्वतः प्रथमं भक्षय ॥ ३२ ॥ ३३ ॥

---

भाषाटीका ।

बस उसीसमय से राजा राक्षस भाव को प्राप्त होकर पाद में कल्मषको प्राप्त हुआ इसी से राजा का नाम कल्माषपाद हुआ राक्षसपने में राजा वन में विचरता रहा वन में रहने वाले ब्राह्मण ब्राह्मणी को रति समय में राजाने देखा ॥ २५ ॥

तबतो क्षुधार्त्त रहाई उन दोनों में से ब्राह्मणको पकड़ लिया तब अकृतार्थ के नाई ब्राह्मणी बोली, कि आप राक्षस नहीं हो आपतो इक्ष्वाकुवंशियों में महारथी हो ॥ २६ ॥

हे वीर ! आप रानी मदयन्ती के पति हो आप अधर्म करने के योग्य नहीं हो । मैं पुत्र की कामना वाली हूं और मेरा पति भी अभी विषयों से कृतार्थ नहीं भया ऐसे मेरे पति ब्राह्मण को मो ब्राह्मणी के लिये दीजिये ॥ २७ ॥

हे राजन् ! यह मनुष्य का देह पुरुष को सर्व अर्थ देने वाला है तस्मात् हे वीर ! इसका वध करना सर्व अर्थ के नाश करने के बराबर है ॥ २८ ॥

तिसमें यह ब्राह्मण है और विद्वान् है तप शील गुण युक्त है और महापुरुष संज्ञक ब्रह्म की आराधना की इच्छा वाला है जो ब्रह्म सब भूतो के आत्मभाव से गुणों के द्वारा सर्व भूतों के अंतर्हित है ॥ २९ ॥

हे धर्मज्ञ ! वह यह ब्रह्मर्षि वर्य आप सदृश राजर्षि प्रवर से किस प्रकार वध योग्य है ? जैसे पिता से पुत्र कभी भी वध को नहीं प्राप्त होसक्ता है ॥ ३० ॥

ऐसे निष्पाप साधुका, और उदरस्थ गर्भ का और ब्रह्मवादी का वध आप सदृश संमत पुरुष कैसे मान सक्ते हो जैसे कि गौ के वध को योग्य नहीं मानते हैं ॥ ३१ ॥

एवं करुणभाषिण्या विलपन्त्या अनाथवत् ।
व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः ॥ ३३ ॥
ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ।
शोचन्त्यात्मानमुर्वीशमशपत्कुपिता सती ॥ ३४ ॥
यस्मान्मे भक्षितः पाप ! कामार्त्तायाः पतिस्त्वया
तवापि मृत्युराधानादकृतप्रज्ञ ! दर्शितः ॥ ३५ ॥
एवं मित्रसहं शप्त्वा पतिलोकपरायणा ।
तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥ ३६ ॥
विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ।
विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥ ३७ ॥
ततः ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ।
वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥ ३८ ॥
सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ।
जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥ ३९ ॥
अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ।
नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥

भाषा टीका ।

और यदि तुम इसका भक्षण करते हौ तौ प्रथम मोकों क्यों न खालो क्योंकि ? फिर मैं तौ मृत सदृश ही हूं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दिधिषुं गर्भाधानकर्त्तारम् ॥ ३३—३४ ॥

आधानान्मैथुनात् । हे अकृतप्रज्ञ ! मृत्युर्मया दर्शितः ॥३५—३७॥ तदेवं कर्मणा अप्रजाः ॥ ३८ ॥

अबिभ्रद्धारितवती इत्यर्थः । न व्यजायत न प्रासूत अतो वसिष्ठ एव तस्या उदरमश्मना जघान स उत्पन्नः सुतोऽश्मकः ॥ ३९ ॥

स्त्रीभिः संवेष्ट्य परशुरामात्परिरक्षितोऽसौ नारीकवच इत्युक्तः निःक्षत्रे सति क्षत्रवंशस्य मूलमभवत्ततो मूलक इति चोक्तः ॥ ४०—४१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तस्याः करुणभाषिण्याः अनाथवद्विलपन्त्याः सत्याः शापेन मोहितः सौदासो द्विजं व्याघ्रः पशुमिवाखादत् भक्षितवान् ॥३३॥

ततः पुरुषादेन रक्षसा सौदासेन भक्षितं दिधिषुं गर्भाधानकर्त्तारं पतिं वीक्ष्य ब्राह्मणी आत्मानंप्रति शोचन्ती कुपिता सती उर्वीशं सौदासमशपत् ॥ ३४ ॥

किमिति ? यस्मात्कामार्त्ताया मम पतिरपापो निरपराधस्त्वया भक्षितस्तस्मात् हे अकृतप्रज्ञ विवेकशून्य ! तवाप्याधानान्मृत्युर्दर्शित इति, यदा गर्भाधानं कर्तुमुद्युक्तो भव तदा मरणं प्राप्स्यसीति ॥३५॥

एवं मित्रसहं सौदासं शप्त्वा ब्राह्मणी पतिलोकपरायणा पतिलोकं कामयमानेत्यर्थः । तस्य पत्युरस्थीनि समिद्धे प्रज्वलितेऽग्नौ प्रास्य पतित्वा भर्तुर्गतिं प्राप्ता ॥ ३६ ॥

ततो द्वादशाब्दान्ते विगतशापः स सौदासो मैथुनायोद्यतः ब्राह्मणीशापं विज्ञाय प्रत्यभिज्ञाप्य महिष्या मदयन्त्या सम्यङ्निवारितः ॥ ३७ ॥

तत आरभ्य स सौदासः स्त्रीसुखं तत्याज मृत्युभयादितिशेषः अतएवोक्तेन कर्मणा अप्रजाः औरसरहितो बभूव एतस्मिन् तत्र सौदासेनानुज्ञातो वसिष्ठो मदयन्त्यां प्रजामधात् गर्भाधानमकरोत् ॥ ३८ ॥

ततः सा वै मदयन्ती सप्त समाः वत्सरान् गर्भमबिभ्रत् तदापि न व्यजायत अपत्यमितिशेषः । तदा सौदासः तस्या मदयन्त्याः

ततो दशरथस्तस्मात्पुत्र ऐडविडस्ततः ।
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ॥ ४१ ॥
यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः ।
मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः ॥ ४२ ॥
न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः ।
न श्रियो न मही राज्यं न दाराश्चाऽतिवल्लभाः ॥ ४३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उदरमश्मना पाषाणेन जघ्ने स उदरान्निर्गतस्तेनाश्मघातेन निमित्तेनाश्मक इति कथ्यते व्यवह्रियते ॥ ३९ ॥

अश्मकान्मूलको जज्ञे तस्यैव नारीकवच इति नामान्तरं नामद्वयनिमित्ते दर्शयति । योऽश्मकस्य पुत्रः निःक्षत्रे भार्गवेण रामेण क्षत्रोत्पाटने क्रियमाणे स्त्रीभिः परिरक्षितः अतो नारीकवच इत्युक्तः पुनः क्षत्रकुलस्य मूलत्वान्मूलकनामा चाभवदित्युक्तः ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे अकृतप्रज्ञ ! अशिक्षितबुद्धे ! तव मृत्युरेवं गर्भाधानसमये दर्शितो मयैवापातादतर्कितात्कालादिति शेषः ॥ ३५ ॥

प्रास्य निक्षिप्य ॥ ३६ ॥

ब्राह्मण्याः शापं विज्ञाय स मित्रसहः स्त्रीसुखं स्त्रियं दूरीकृत्य कर्मणा मैथुनलक्षणेन प्रजां सन्ततिं तत्याज, तर्ह्यस्य केन विधिना पुत्रो जातः ? इति तत्राह-वसिष्ठ इति । तेन सौदासेन अनुज्ञातः मद्यन्त्यां पुत्रमुत्पादयेति ॥ ३७ ॥ ३८ ॥

समाः संवत्सरान् ॥ ३९ ॥

निःक्षत्रे परशुरामेण दुष्टक्षत्रियसंहारे कृते सति ॥४०॥४१॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

करुणाभाषिणीमनादृत्य ॥ ३३ ॥

दिधिषुं गर्भाधानकर्तारम् ॥ ३४ ॥

आधानात् मैथुनात् मृत्युर्मया दर्शितो भविष्यति ॥ ३५-३८ ॥

अबिभ्रद्दधार न व्यजायत न प्रासूत वसिष्ठ एव तस्या उदरमश्मना जघान ततः स सुतः ॥ ३९ ॥

स्त्रीभिरावृत्य परशुरामात् रक्षितः पुनः क्षत्रवंशस्य मूलत्वात् मूलकः ॥ ४०—४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिधिषुं गर्भाधानकर्तारम् ॥ ३४ ॥

आधानात् मैथुनात् प्रदर्शितो मयेति शेषः ॥ ३५—३८ ॥

सप्त समाः संवत्सरान् अबिभ्रत् दधार न व्यजायत न प्रासूत अश्मना पाषाणेन जघान वसिष्ठ एनेति शेषम् ॥ ३९ ॥

स्त्रीभिः परिरक्षितः परशुरामात् ॥ ४० ॥ ४१ ॥

भाषा टीका ।

वह विचारी ब्राह्मणी इस प्रकार करुणा पूर्वक अनाथ के तरह विलाप करती रही पर जैसे व्याघ्र पशु को खा जावे इसी प्रकार शाप मोहित होकर वह सौदास ब्राह्मण को खा गया ॥ ३३ ॥

ब्राह्मणी ने अपने गर्भ धारण करने वाले पति को पुरुषाद [ मनुष्य खाने वाले ] से भक्षित देखकर अपने शरीर का शोच करती हुई कुपित होकर राजा को शाप देती हुई ॥ ३४ ॥

कि—हे पापी ! जिससे तू ने मो कामार्त्त ब्राह्मणी के पति को भक्षण कर लिया इसी से हे निर्बुद्धे ! तेरी मृत्यु भी गर्भाधान करने में मैंने दिखाई अर्थात् मैथुन करेगा तो तू मरेगा ॥ ३५ ॥

इस प्रकार राजा को शाप देकर पति लोक परायण वह ब्राह्मणी पति के अस्थियों को जलती हुई अग्नि में छोड़कर आप भी उसी में जलकर भर्त्ता की गति को गई ॥ ३६ ॥

बारह वर्ष के पीछे शाप दूर होने पर राजा मैथुन को जब उद्यत हुआ तब रानी ने ब्राह्मणी के शाप का स्मरण कर राजा को निवारण किया ॥ ३७ ॥

तिसके पीछे राजा ने स्त्री सुख छोड़ दिया और अपने कर्म ही से निपुत्री हुए तब प्रार्थना कर वसिष्ठ जी के द्वारा नियोग से सन्तान उत्पन्न कराई ॥ ३८ ॥

रानी ने सात वर्ष तक गर्भ धारण किया जब प्रसव नहीं भया तब वसिष्ठजी ने रानी के उदर को अश्म ( पाषाण ) से कूटा तब बालक उत्पन्न हुआ इसी से उसका नाम अश्मक हुआ ॥ ३९ ॥

अश्मक से मूलक हुए जब परशुराम जी पृथिवी को निःक्षत्र करने लगे तब इनकी रक्षा स्त्री लोगों ने कीनी इसी से इनका नारीकवच भी नाम है भूतल के निःक्षत्र होने पर क्षत्रियों के मूल भी ये ही हुए इससे इनका नाम मूलक हुआ ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वाङ्गेनोक्तं; प्रथमं तावन्ममायुः कथ्यताम्? इति, देवैश्चोक्तं मुहूर्तमात्रमिति. तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे सन्दधे ॥ ४२ ॥

न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ।
न पश्याम्युत्तमश्लोकादन्यत्किञ्चन वस्त्वहम् ॥ ४४ ॥
देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ।
न वृणे तमहं कामं भूतभावनभावनः ॥ ४५ ॥
ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ।
न विन्दन्ति प्रियं शाश्वदात्मानं किमुतापरे ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेव स्वसाधुवृत्तानुस्मरणपूर्वकं तत्कृतेन निश्चयेन दर्शयति-नेति सप्तभिः । कुलदैवात् ब्रह्मकुलात्मकाच्छात्मे प्राणादयो नातिवल्लभाः नातिप्रियाः ॥ ४३ ॥

मह्यं मम ॥ ४४ ॥

भूतभावनो हरिस्तस्मिन्नेव भावना यस्य सोऽहं तं कामं न वृणे ॥ ४५ ॥

तत्र हेतुः—य इति । विक्षिप्तानीन्द्रियाणि धीश्च येषां ते देवा अपि ॥ ४६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो मूलकाद्दशरथः, तस्माद्दशरथात् ऐडविडः पुत्रः तत ऐडविडाद्विश्वसहाख्यो राजा जज्ञे तत्पुत्रं वदन् तं विशिनष्टि—यस्य विश्वसहस्य खट्वाङ्गाख्यश्चक्रवर्ती संबभूव ॥ ४१ ॥

अथ खट्वाङ्गं विशिंषन् तद्वृत्तान्तमाह—य इत्यादिना यावदध्यायसमाप्ति । यो खट्वाङ्गो युधि युद्धे दुर्जयः जेतुमशक्यः अतएव देवैरर्थितः सहायत्वेन प्रार्थितः दैत्यानवधीत् ततो देवैर्वराय चोदितः स्वस्यायुः मुहूर्तमात्रावशिष्टं ज्ञात्वा स्वपुरमागत्य मनःसन्दधे मनसा आलोच्य निश्चितवानित्यर्थः ॥ ४२ ॥

तस्य मनःसन्धानप्रकारमेव दर्शयति-नेत्यादिना इति उपमितत्स्यतः प्राक्तनेन । ब्रह्मकुलान्मम प्राणा नातिवल्लभा इत्यन्वयः ब्रह्मकुलमेव मम प्राणेभ्योऽपि प्रियमित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यं कुलदैवाद्भगवतः आत्मजादयो न वल्लभाः ॥ ४३ ॥

मह्यं मम मतिर्बाल्येऽपि क्वचिदापद्यपि अधर्मे न रमते नारमत इह लोके किञ्चिदपि वस्तूत्तमश्लोकाद्भगवतोऽन्यत्पृथग्भूतं नापश्यं तत्सर्वं वस्तु भगवदात्मकमेव दृष्टवानस्मीत्यर्थः । नाद्रक्ष्यामीति पाठान्तरं तदा किञ्चिदपि वस्तूत्तमश्लोकाद्भगवतोऽन्यन्नापश्यं नोपादेयमित्यर्थः ॥ ४४ ॥

यद्यपि त्रिभुवनेश्वरैः देवैर्मह्यं कामानुगुणो वरो दत्तस्तथाप्यहं तं कामं वरं न वृणे न वृणोमि तत्र हेतुं वदन् आत्मानं विशिनष्टि, भूतभावनभावनः भूतानि देवादीनि भावयति सत्ताविभिन्नि करोतीति भूतभावनो भगवान् तं भावयति भजतीति तथाभूतोऽहमित्यर्थः—

वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय । देवेन्द्रत्वादिकं फलम् ॥
इत्युक्तरीत्या देवैर्दीयमानो वरो मम भगवत्प्राप्तिविरोधीति भावः ॥ ४५ ॥

तर्हि देवादयः स्वर्गादिकमेवोत्कृष्टं किमिति मन्यन्ते ? इत्याशङ्क्याह—य इति । य इमे देवास्ते विक्षिप्तेन्द्रियधियः देहात्माभिमानिनः अतस्ते शाश्वत्स्मरा स्वहृदि स्थितमप्यन्तरात्मानं निरतिशयप्रियं न विन्दन्ति किन्तु वैषयिकमेव सुखं परं मन्यन्त इति भावः । देवा एव न जानन्ति किमुतापरे न विन्दन्तीति ॥ ४६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

खट्वाङ्गो दैत्यान् निहत्य स्वपुरं गत्वाऽऽयुर्मुहूर्तावधिकं ज्ञात्वैवं मनः सन्दधे ॥ ४२ ॥

कथं तादीति तत्राह—न म इति । कुलदैवात् ब्राह्मणकुलात् मे प्राणादयो नातिवल्लभा इत्यन्वयः ॥ ४३ ॥

मह्यं मम मतिः सततप्रतिहतम् ॥ ४४ ॥

भूतभावनस्य हरेर्भावनात् उपासनादन्यदपरं कर्म मोक्षसाधनत्वेन न वृणे ॥ ४५ ॥

अविक्षिप्तेन्द्रियधियः आत्मानं हरिम् ॥ ४६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नापश्यमुत्तमश्लोकादन्यदेवेत्यस्यार्थः न चिन्तयामीति सुरनरपालननिक्षेपस्य पूर्वं स्थितत्वात् ॥ ४४—४७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रसन्नैर्देवैर्वरं वृणुष्वेत्युक्ते खट्वाङ्ग उवाच प्रथमं तावत् ममायुर्ब्रूत ? इति; देवैश्चोक्तं मुहूर्तमात्रमिति, तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे सन्दधे ॥ ४२ ॥

मुहूर्तमध्य एव प्रथमं खट्वाङ्गः स्वगतमाह—नेति पञ्चभिः । ब्रह्मकुलात् कीदृशात् कुलीनस्य सहायस्य दैवात् ॥ ४३ ॥

मह्यं मम वस्तु स्वस्योपादेयमित्यर्थः ॥ ४४ ॥

अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ।
रूढं प्रकृत्यात्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७
इति व्यवसितो बुद्ध्या नारायणगृहीतया ।
हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ४८ ॥
यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ।
भगवान् वासुदेवेति यं गृणन्ति हि सात्वताः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे खट्वाङ्गचरितं नाम
नवमोऽध्यायः ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतो भूतभावने हरावेव भावना यस्य सः ॥ ४५ ॥

अन्तरङ्गे हेतुमाह—य इति ॥ ४६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रसन्नैर्देवैर्वरं वरय इत्युक्ते खट्वाङ्गेनोक्तं प्रथमं मे आयुः कथयतामिति, देवैरुक्तं मुहूर्तमिति, तत आगत्य देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे सन्दधे ॥ ४२ ॥

कुलदैवात् ब्रह्मकुलात् सकाशात् मे प्राणादयो नातिवल्लभाः प्रियाः ॥ ४३ ॥

मह्यं मम अन्यत् अनात्मकम् ॥ ४४ ॥

भूतानि भावयति उत्पादयतीति सर्वकर्ता हरिस्तस्मिन् भावना भक्तिः यस्य सोऽहं तं कामं वरं न वृणे न वृणुयाम् ॥ ४५ ॥

देवानामपि परमेश्वरे भक्तिर्दुर्लभा किमुतान्येषां सा मम तत्प्रसादाज्जाताऽतः तं प्रपद्ये इत्याह य इति द्वाभ्याम् ॥ ४६ ॥

---

भाषा टीका ।

मूलक के दशरथ हुए तिनके ऐडविड हुए तिन से राजा विश्वसह हुए जिनके पुत्र खट्वांग महाराज चक्रवर्ती हुए ॥ ४१ ॥

जिनने देवों की प्रार्थना से बहुत काल तक युद्ध में दैत्यों को मारा और आप दुर्जय है देवों के शत्रु नष्ट होने पर उनोंने कहा कि वर मांगो तब राजा ने कहा कि हमारी आयु कितनी है तब देव बोले, कि—दो घड़ी है, बस इतना जानकर कुछ वर नहीं लिया और देवों के दिये हुए विमान में बैठकर अपने पुर को आये मन को परमेश्वर के अनुसन्धान में लगाया ॥ ४२ ॥

और राजा ने यह निश्चय किया, कि—हमारे कुल के देवत अर्थात् परम पूजनीय ऐसे ब्रह्मकुल से अधिक हमको अपने प्राण, पुत्र, संपत, मही, राज्य, स्त्रीयें, ये कोई भी प्रिय नहीं है ॥ ४३ ॥

बाल्य अवस्था में भी हमारी मति कभी अधर्म में नहीं रमती रही और अब मैं उत्तमश्लोक श्रीहरि से अन्य किसी वस्तु को नहीं देखता हूं ॥ ४४ ॥

त्रिभुवन के ईश्वर ऐसे देवों ने मेरे लिये यथेष्टवर दिये, मैं उन वरों को नहीं चाहता हूं क्योंकि? भूत भावन श्रीहरि मात्र में मेरी भावना है ॥ ४५ ॥

जो निश्चिन्त इन्द्रिय बुद्धि वाले देवलोग भी अपने हृदय में सदा स्थित और अपने परम प्रिय ऐसे अपने आत्मा जो साक्षात् परमात्मा तिनको नहीं प्राप्त होते हैं। तो फिर और लोग बिचारे कहां से प्राप्त होसके हैं ॥ ४६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथ तस्मात्प्रकृत्या स्वभावेनाऽऽत्मनि रूढं गुणेषु सङ्गं विश्वकर्तुर्भावेन हित्वा तमेवाहं प्रपद्ये ॥ ४७ ॥

अन्यभावं देहाद्यभिमानरूपमज्ञानं हित्वा ॥ ४८ ॥

स्वभावमेवाऽऽह—यत्तदिति । शून्यवत्कल्पितम् वागाद्यविषयत्वात् वासुदेव इति यं गृणन्ति ब्रह्मणा एव भक्तानुग्रहार्थमाविष्कृततनोर्वासुदेवत्वात् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
नवमोऽध्यायः ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तस्मादहमिह लोके ; भगवन्मायया रचितेषु गन्धर्वनगरतुल्येष्वनित्येषु गुणेषु शब्दादिविषयेषु प्रकृत्यात्मनि प्रकृत्यात्मके प्रकृतिपरिणामात्मके शरीरे च रूढं सङ्गं त्यक्त्वा विश्वभर्तुर्भगवतः भावेन भक्त्या तं विश्वभर्त्तारं प्रपद्ये प्राप्स्यामीति ॥ ४७ ॥

इत्थम्बुद्ध्या नारायणेन गृहीतया तद्विषयया बुद्ध्येत्यर्थः । व्यवसितः निश्चितवान् अन्यभावम् अन्यत्र देहादौ भावो येन स्वात्तदन्यथाभावम् अज्ञानं हित्वा देहं त्यक्त्वेत्यर्थः । ततस्तं भावमाश्रित आविर्भूतगुणाष्टकस्वभावः ॥ ४८ ॥

अशून्यम् इयत्ताप्रमाणाशून्यम् न तु शून्यमितीदृक् प्रमाणेन सिद्धं न तु शशविषाणादिवत् तुच्छमित्यर्थः । यद्वा, शून्यं रहितं निर्गुणं न भवतीत्यशून्यमनन्तकल्याणगुणाकरमित्यर्थः । शून्यकल्पितं कल्पितं कल्पना भावेक्तः विभूतिगतजात्यादिकल्पना यस्मिन् शून्या तत्तथोक्तम् अनेन हेयगुणराहित्यमुक्तं यत्तद्ब्रह्ममयं भगवान् वासुदेव इति गृह्णन्ति सात्वतास्तदाश्रितः इत्यनुषङ्गः स्वं भावमाश्रित इति प्रत्यगात्मनः शुद्धस्वभावाविर्भाव उक्तः एवं मुक्तोऽभूदित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमनेन बहुनोक्तेनात्मैवं मम सिद्धान्त इति सन्दर्शयति—अथेति । अथाऽहं तं श्रीहरिं प्रपद्य इत्यन्वयः । किं कृत्वा ? ईशस्य हरेर्मायया धिकृतैः पृथिव्यादिपञ्चभूतैः रचितेषु गुणेषु देहेन्द्रियादिषु गन्धर्वपुरोपमेषु नश्वरेषु आत्मनि मनसि प्रकृत्या अतएव रूढं सङ्गं स्नेहलक्षणं पाशं हित्वा, त्यागे साधनमाह विश्वभर्तुरिति भावेन भक्त्या ॥ ४७ ॥

सर्वस्मादन्यस्य हरेर्भावस्यमेकत्वविषयमज्ञानं हित्वा स्वं भावं स्वतन्त्रं भावं स्थितः ॥ ४८ ॥

भावशब्दस्य लीलाद्यनेकार्थेषु वृत्तेरत्र विवक्षितः कः ? इति तत्राह—यत्तदिति । उत्तरश्लोकविवक्षया यत्तदिति वेदान्तिनो यं भावं परं ब्रह्मेति गृणन्ति योगिनः सूक्ष्ममिन्द्रियागोचरमाकाशवदिति सांख्यास्ते, केचिद्वैदिकाः शून्यनाम्ना कल्पितं जल्पन्ति न तत्तत्त्वमित्याह—अशून्यमिति । सात्वताः पाञ्चरात्रिकाः यं भगवन्तं वासुदेव इति नाम्ना गृणन्ति तं भावमास्थित इत्यन्वयः "ब्रह्मविदाप्नोति परं तस्यान्ते सुषिरं सूक्ष्मम्" "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्यादेः शून्यं तत्त्वमवाच्यमिति च ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नारायणगृहीतयेति नारायणाविष्टयेत्यर्थः । अत एव मुहूर्त्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयदित्युक्तम् ॥ ४८—४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्थिरत्वेन गन्धर्वपुरतुल्येषु रूढं सङ्गं हित्वा प्रकृत्या स्वभावेनैव आत्मनि तन्मनसि विश्वकर्त्तुर्भगवतो यो भावो भक्तिस्तेनैव तं प्रपद्ये ॥ ४७ ॥

नारायणेनैव कर्त्रा गृहीतया यत्र बुद्धौ नान्यस्याधिकार इत्यर्थः, तया बुद्ध्या ततोऽज्ञानत्यागानन्तरं स्वं भावं पूर्वश्लोकनिश्चितं प्रपत्तिरूपं दास्यामीत्यर्थः ॥ ४८ ॥

स एव को यस्मिन् दास्यमित्यपेक्षायामाह—यत्तद्ब्रह्मेति । यच्च तत्प्रसिद्धं ब्रह्म परमातिशयेन सूक्ष्मं निर्विशेषं स्वरूपमित्यर्थः । शून्यवत् कल्पितं वागाद्यविषयत्वात् यं च वासुदेव इति गृणन्ति तस्मिन्नित्यर्थः । देहं त्यक्त्वा तं प्राप्तेति अयं "खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः । मुहूर्त्तात् सर्वमुत्सृज्य गतवानभयं हरिम्" इति पूर्वोक्तेः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गन्धर्वपुरोपमेषु क्षणभङ्गुरेषु गुणेषु विषयेषु प्रकृत्या स्वभावेन रूढं सङ्गं हित्वा विश्वभर्तुः भावेन भक्त्या तं विश्वभर्त्तारं भगवन्तं प्रपद्ये प्राप्स्यामीत्यन्वयः ॥ ४७ ॥

नारायणगृहीतया नारायणादेव प्राप्तया बुद्ध्या अन्यद्भावं विषयाभिनिवेशम् अज्ञानम् आत्मानात्मपरमात्माविवेकं च हित्वा स्वं भावं निजजीवात्मभावे आश्रितः देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणं निजरूपमाश्रित इत्यर्थः ॥ ४८ ॥

तदनन्तरं यत्परं ब्रह्म तदाश्रित इत्यनुषङ्गः "निरञ्जनः परमं साम्यमुपैति" "मम साधर्म्यमागताः" इत्यादिश्रुतिस्मृतिप्रसिद्धं भगवत्साधर्म्यं प्राप्त इत्यर्थः । कीदृशं परं ब्रह्म ? अशून्यम् अनन्तकल्याणगुणसंयुतम् शून्यकल्पितं शून्ये रागद्वेषादिरहिते हृदि भजनकाले कल्पितं समर्थितं ध्यानमित्यर्थः । अत एव मुक्तिकाले प्राप्तमिति भावः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमोऽध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषा टीका ।

तस्मात् ईश्वर की माया से रचित गन्धर्व पुरोपम इन विषयो मे स्वभाव से लगी हुई इस आसक्ति को विश्वके भरण पोषण करने वाले के भाव से छोडकर उसी श्रीहरि की मैं शरण जाता हूं ॥ ४७ ॥

इस प्रकार व्यवसाय युक्त बुद्धि को नारायण में लगा कर अन्य भाव को छोडकर अर्थात् सकल वसुधा पतित्व आदि की वासना को छोडकर अपने स्वभाव का आश्रय लिया अर्थात् अपना जीवका असाधारण जो दास्य भाव उसमें स्थित होते हुए ॥ ४८ ॥

जो ब्रह्म पर है और सूक्ष्म है और जो अशून्य होकर अर्थात् सर्व गुणाकर सर्व गुण सम्पन्न होकर भी अभक्तों के लिये शून्य वत् कल्पित हुए हैं और जिनको सात्वत [ पंचरात्र शास्त्र निष्ठ भक्त ] जन, भगवान् [ षड्गुण सम्पन्न ] वासुदेव अर्थात् सब के हृदय में बसने वाले ऐसे पर तत्व कहते हैं ॥ ४९ ॥

इति श्रीमद्भागवत नवम स्कन्ध में नवम अध्याय
श्रीवृन्दावनस्थ पं भागवताचार्यकृत
भाषाटीका समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## ॥ दशमोऽध्यायः ॥

—o:o:o—

श्रीशुक उवाच ।

खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ।
अजस्ततो महाराजस्तस्माद्दशरथोऽभवत् ॥ १ ॥
तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ।
अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः ॥ २ ॥
रामलक्ष्मणभरतशत्रुघ्ना इति सञ्ज्ञया ।
तस्याऽनुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ।
श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ३ ॥
गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः—
पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ—
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः ॥ ४ ॥
विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ।
पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ५ ॥
यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ।
आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप ! विकृष्य बभञ्ज मध्ये ॥६॥
जित्वाऽनुरूपगुणशीलवयोऽङ्गरूपां सीताऽभिधां श्रियमुरस्यभिलब्धमानाम् ।
मार्गे व्रजन् भृगुपतेर्व्यनयत् प्ररूढं दर्पं महीमकृत यस्त्रिरराजबीजाम् ॥ ७ ॥
यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ।
राज्यं श्रियं प्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे प्राह खट्वाङ्गवंशे श्रीरामसम्भवम् ।
तच्चरित्रं च सङ्क्षेपं हत्वाऽयोध्यागमावधि ॥ १ ॥

खट्वाङ्गाच्च दीर्घबाहुः ॥ १ ॥ २ ॥

ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं त्वया मुहुः श्रुतं तथापि संक्षेपतः कथ्यमानं शृणु ॥ ३ ॥

ग्रन्थकोटिभिरीर्णीयमद्भुतं रामविक्रमम् ।
अध्यायद्वयतो वक्त्येकश्लोके समस्यति ॥

स कोसलेन्द्रः श्रीरामो नोऽस्मानवतात्पातु, कथम्भूतः ? गुर्वर्थे पितुः सत्यस्य पालनार्थं त्यक्तराज्यस्सन् पद्मवदतिसुकुमाराभ्यां पद्भ्यां; तदेवाह—प्रियायाः पाणिनाऽपि स्पर्शो नास्ति क्षमा ययोस्ताभ्यां प्रतिवनं व्यचरत् हरीन्द्रो हनुमान्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुग्रीवो वाऽनुजो लक्ष्मणस्ताभ्यां मृजिताऽपनीता पथरुजा मार्गश्रमो यस्य शूर्पणखया वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहारात्प्रियया कलत्रेण यो विरहस्तेन या रुट् तयाऽऽरोपितयोर्भ्रुवोर्विजृम्भणेन त्रस्तोऽब्धिर्यस्मात् ततस्तद्विज्ञापनेन बद्धः सेतुर्येन ततः खलाः राक्षसादय एव दवो वनं तस्य दहनः ॥ ४ ॥

संक्षेपतो वर्णितं रामचरितमादित आरभ्य विस्तरेणाह—विश्वामित्राध्वर इत्यादिना यावदुत्तराध्यायसमाप्ति । पश्यत एव लक्ष्मणस्य तमस्यनपेक्षयैव हता इत्यर्थः । यच्छब्दानां स कोसलेन्द्रोऽवतादित्यनेनैवान्वयः ॥ ५ ॥

लोके ये वीरास्तेषां समितौ समाजे पेशं त्र्यम्बकं धनुरिक्षुयष्टिमिव लीलयैवाऽऽदाय सज्जीकृतमारोपितं विकृष्य मध्ये बभञ्ज, हे नृप ! उग्रं कठिनं गरिष्ठम् तदाह वाहकानां त्रिभिः शतैरुपनीतम् बालगजस्य लीलेव लीला यस्य सः ॥ ६ ॥

अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासंज्ञां पूर्वमुरस्यभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भङ्गमहानादश्रवणात्क्षुभितस्य भृगुपतेर्दर्पं व्यनयदपनीतवान् कथम्भूतस्य ? त्रिःसप्तकृत्वो ऽराजबीजशून्यां महीं योऽकरोत्तस्य ॥ ७ ॥

इदानीं गुर्वर्थं इति श्लोकं विवृण्वन्नाह—य इति । कदाचित् कैकेय्यास्तुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतम् ततः श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य च वने वासः प्रार्थितस्तदा सत्यपाशेन परिवीतस्य पितुर्निर्देशमाज्ञां शिरसा जगृहे ततो राज्यादिकं त्यक्त्वा सभार्यो वनं ययौ दुस्त्यजस्यापि सर्वस्य त्यागे दृष्टान्तः मुक्तसङ्गो योगी असून् प्राणानिवेति ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां

खट्वाङ्गाद्दीर्घबाहुर्जज्ञे तस्माद्दीर्घबाहोः रघुः स च पृथु विपुलं भवां यशो यस्य तथाभूतः तस्माद्रघोरजः महाराजो अजात्तस्माद्दशरथः संबभूव ॥ १ ॥

तस्यापि दशरथस्यापि साक्षात्परब्रह्माभिन्नो भगवान् हरिः सुरैः प्रार्थितोऽशांशेन सह चतुर्धा पुत्रतां प्राप्तः "भगवान् ब्रह्ममयो हरिः पुत्रतां प्राप्तः" इत्यनेन श्रीरामस्य षड्गुणपूर्णत्वमुक्तम्. अंशांशेन सह पुत्रतां प्राप्त इत्यनेन भरतादीनां तदंशावतारत्वमुक्तम्. एतत्र भरतादीनामपि स्वांशावतारत्वात्तैस्सह चतुर्धा पुत्रतां प्राप्त इत्यर्थः ॥ २ ॥

चातुर्विध्येऽपि सर्वावताराणां नामान्याह—रामेति । रामादिसंज्ञया चतुर्धा पुत्रतामगादिति पूर्वेणान्वयः । तस्य श्रीरामस्य सीतापतेरनुचरितं हे राजन् तत्त्वदर्शिभिरवतारबाधारूपविद्भिः ऋषिभिः वाल्मीक्यादिभिर्भूरि बहुलं यथा भवति तथा वर्णितं त्वया तन्मुहुः श्रुतम् अतस्तत्र विस्तरतः कथयामः तथापि संग्रहेण कथ्यमानं शृण्वित्यभिप्रायः ॥ ३ ॥

इतोऽध्यायद्वयेन श्रीरामचरितं विवरणाविपुलतावदेकेन श्लोकेन संगृह्णन् तत्कर्तृकामात्मरक्षां प्रार्थयते—गुर्वर्थं इति । यः श्रीरामः गुर्वर्थे गुरोः पितुरर्थे वचनस्य सत्यतापालनार्थं त्यक्तं राज्यं येन सः पद्मवद्अतिसुकुमाराभ्यां पद्भ्यां; तदाह—प्रियायाः सीतायाः पाणिः स्पर्शो नाक्षिन क्षमा ययोस्ताभ्यां प्रतिवनमचरत् हरीन्द्रानुजाभ्यां सुग्रीवलक्ष्मणाभ्यां मृजिता अपनीता पथरुजा मार्गश्रमो यस्य शूर्पणखायाः वैरूप्यात् कर्णनासिकाच्छेदाद्धेतोस्तया प्रलोभितेन रावणेनापहारात् प्रियया कलत्रेण यो विरहः विश्लेषस्तेन या रुट्तया आरोपिताया: कुटिलीकृताया भ्रुवो विजृम्भणेन त्रस्तो भीतोऽब्धिः समुद्रो यस्मात् ततस्तद्विज्ञापनेन बद्धः सेतुर्येन ततः खलाः दुरात्मानः राक्षसादय एव दवो वनं तस्य दहनः स एवम्भूतः कोसलेन्द्रो नोऽस्मानघतात् पातु ॥ ४ ॥

एवं सङ्गृहीतं श्रीरामचरितमादित आरभ्य वर्णयति—विश्वामित्रेत्यादिना यावदुत्तराध्यायसमाप्ति । विश्वामित्रस्याध्वरे यज्ञे मारीचाद्याः निशाचराः नैर्ऋतपुङ्गवाः राक्षसश्रेष्ठाः लक्ष्मणस्य पश्यत एव तमस्यनपेक्षयैव येन श्रीरामेण हताः यच्छब्दानां स कोसलेन्द्रोऽवतादिति पूर्वेणैवान्वयः ॥ ५ ॥

य इति । हे नृप ! लोके ये वीरास्तेषां समितौ समाजे यः श्रीरामः सीतायाः स्वयम्वरगृहे उग्रं कठिनं गरिष्ठं वा तदेवाह—त्रिशतोपनीतं किङ्कराणां शतत्रयेणानीतमैशं रौद्रं धनुरादाय सज्जीकृतमारोपितं विकृष्य बालगजस्येव लीला यस्य सः इक्षुदण्डमिव मध्ये बभञ्ज भग्नमकरोत् ॥ ६ ॥

आत्मनः स्वस्य यानि रूपादीनि तेषामनुरूपाणि रूपादीनि यस्यास्तां सीतासंज्ञां पूर्वमुरसि अभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भङ्गेन स्वाधीनाङ्कृत्वा धनुर्भङ्गमहानादश्रवणात्क्षुभितस्य भृगुपतेर्भार्गवस्य रामस्य प्ररूढं दर्पं मार्गे व्यनयदपनीतवान् कथंभूतस्य यो भृगुपतिः त्रिरित्युपलक्षणं त्रिःसप्तकृत्वः अराजबीजां राजबीजशून्यां महीमकरोत् तस्य ॥७॥

इदानीं गुर्वर्थं इति श्लोकं विवृण्वन्नाह—य इति । कदाचित् कैकेय्यास्तुष्टेन दशरथेन तदपेक्षितं वरद्वयं दास्यामीति प्रतिश्रुतं तत्र श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य वनवासश्चेति वरद्वयं प्रार्थितं तदा सत्यरूपेण पाशेन परिवीतस्य परिवृतस्य पितुर्दशरथस्य स्त्रीगामस्य स्त्रीवश्यस्यापि निर्देशमाज्ञां शिरसा जगृहे ततः सभार्यस्सानुजश्च राज्यादीन् त्यक्त्वा वनं ययौ दुस्त्यजानामपि राज्यादीनां सहसा त्यागे दृष्टान्तः मुक्तसङ्गो योगी असून् प्राणानिवेति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥१॥

प्रथमयः वेदमुख्यार्थभूतः स्वदशांशेन लक्ष्मणादिषु स्वार्थेन ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्त्वदर्शिभिः ऋषिभिः वर्णितं तस्य सीतापतेर्भूरिफलतो महत्तरमनुचरितम् ॥ ३ ॥

त्वया पुनःपुनः श्रुतमपि शृणुष्व इत्याशयेनाह—गुर्वर्थ इति । गुर्वर्थे पित्रर्थे पद्मपुष्कयां पद्मोपमचरणाभ्यां मृजितपथिरुजः मार्जितमार्गक्लेशः हरीन्द्रानुजाभ्यां सुग्रीवलक्ष्मणाभ्यां नैकृत्या-शासिकाच्छेदलक्षणात् प्रियाया: सीतायाः विरहाङ्कुरुषा आरोपितभ्रूविजृम्भः उत्सर्जितभ्रूभङ्गः लङ्कायां हनुमतः अग्निभावं श्रुत्वा खला एव दवः खलदवः तस्य खलदवस्य दाहे दहनोऽग्निः "दवो दावो वनारण्यवह्न्योः" इति यादवः । एवंविधो भगवान् कोसलेन्द्रनाम्ना *भुव्यवतीर्णः इत्यन्वयः । अवनात् इति केचित्पठन्ति ॥ ४ ॥

एकपद्येन सूत्रवत्सङ्क्षिप्तरामचरितमादित एव किञ्चित्प्रपञ्चयति—विश्वामित्रेति । येनैव ॥ ५ ॥

लोके ये वीराकेतवं समितौ सभायाम् ईशस्य शिवस्य विद्यमानं त्रिशतैरनेकैः पुरुषैः उपनेयं समीपम् आनेतुं योग्यं सज्जीकृतं ज्यया सहितं कृतम् ॥ ६ ॥

उरसि अभिलभ्यमानां प्राप्यमानां आत्मनः स्वस्य रूपादिभिरनुरूपा या सीताभिधा श्रीलक्ष्मीस्तां जित्वा प्राप्य स्वार्जितं *इतिवत् मार्गे व्रजन् रामो हतराजबीजां निर्मूलितक्षत्रसन्ततिं महीं कृतवतो भृगुपतेः परशुरामस्य प्ररूढं दर्पम् उन्नतमदं व्यनयदपनीतवानित्यन्वयः ॥ ७ ॥

यो रामः सत्यवाक्पाशेन परिवीतस्य परिवेष्टितस्य पितुर्निदेशमाज्ञां शिरसा पितृसम्भावनार्थं जगृह इत्यन्वयः, "अपि जुगुप्सितार्थो वा जुगुप्साभाम्" किं निमित्तमित्यत उक्तं, स्त्रैणस्येति स्त्रीजितस्य सभार्यः इत्यनेन तस्या अपि बहुमानातिशयं । सूचयति—प्रभूनित्यनेन । राज्यलक्ष्म्यादीनाम् अशक्यत्याज्यतां दर्शयति, मुक्तसङ्ग इत्यनेन । "असङ्गो ह्ययं पुरुषः" इति श्रुतिसिद्धनित्यासङ्गतां दर्शयति, अधिवासम् अयोध्याम् ॥ ८॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—३ ॥

पथरुज इत्यनेन पथशब्दोऽकारान्तो ऽप्यस्तीति लक्ष्यते ॥ ४—१० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> वर्णयामि रघुनाथस्य जन्मकर्मयशोऽमृतम् ।
> सर्वं नून्पाययामास संक्षेपेण महामुनिः ॥ १ ॥

॥१॥

एष त्वया स्वमातृगर्भे दृष्ट इत्यर्थः । अंशांशेन अंशश्च अंशश्चांशस्तमूहश्च अंशांशं तेन अंशांशेन तस्यापि यथा वासुदेवस्येत्यर्थः ॥ २ ॥ ३ ॥

> "कार्त्स्न्येन वक्तुं लिखितुं शक्या शेषगणेशयोः ।
> या रामलीलाऽध्यायाभ्यां सा श्लोकेनाऽपि कीर्त्यते ॥

गुरोः पितुः सत्यपालनार्थं त्यक्तराज्यस्सन् पद्मवदतिसुकुमाराभ्यां पद्भ्याम् अनुवनं वने वने व्यचरत् अतिसौकुमार्यमेनाह, प्रियायाः पाणयोः परमसुकुमारयोरपि स्पर्शं न सहेते इति ताभ्यां हरीन्द्रो हनुमान् सुग्रीवो वा अनुजो लक्ष्मणस्ताभ्यां मृजिताऽपनीता पथरुजो मार्गश्रमो यस्य सः शूर्पणखाया वैरूप्यात् कर्णनासाच्छेदनाद्धेतोः रावणेनापहारात् प्रियया कलत्रेण यो विरहस्तेन या रुट् क्रोधस्तेन समुद्रस्याप्रदानात् कोपस्तया आरोपितयोः भ्रुवोः विजृम्भैर्यस्य त्रस्तोऽब्धिर्यस्मात् स खला रावणादयः एव दवा वनं तस्य दहनः ॥ ४ ॥

अतिसंक्षेपेण वर्णितं रामचरितमादितः आरभ्य किञ्चिद्विस्तरेणाह—विश्वामित्रेत्यादिना अध्यायद्वयेन । निशा मायया चरन्तीति ते नैर्ऋतपुङ्गवाः राक्षसश्रेष्ठाः ॥ ५ ॥

लोके ये वीरकेतवः समितौ समाजे ऐशं माहेशं धनुः इक्षुयष्टिमिव लीलयैवादाय सज्जीकृतं सत् विकृष्य मध्ये बभञ्ज कीदृशं वाहकानां त्रिभिः शतैरानीतम् ॥ ६ ॥

जित्वा प्राप्य उरसि अभिलब्धा मान आदरः पूर्वमेव यया तां भृगुपतेः परशुरामस्य दर्पं व्यनयत् विगतीचक्रे त्रिः त्रिस्सप्तकृत्वो महीं राजबीजशून्यां चक्रे ॥ ७ ॥

य इति कदाचित् पूर्वं कैकेय्यां तुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतं ततः श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य च वने वासः प्रार्थितः अतः सत्यपाशेन परिवीतस्य पितुः स्त्रैणस्य स्त्रियै कैकेय्यै सत्याऽनुरोधवशात् हि तस्य निदेशं सभार्योऽपि जग्राह दुस्त्यजस्यापि सहस्त्यागे दृष्टान्तः मुक्तसङ्गो योगी असून् प्राणानिवेति ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सूर्यान्ववंशेऽवतीर्णस्य श्रीमद्रामचन्द्रस्य भगवतश्चरित्रं वर्णयति—खट्वाङ्गादित्यध्यायद्वयेन ॥ १ ॥

तस्य दशरथस्यापि एव अत्र वर्णितः साक्षात् भगवान् षाड्गुण्यपूर्णः ब्रह्ममयः वेदैकवेद्यः अंशांशेन भरतादिरूपेण सह चतुर्धा पुत्रत्वमगादित्यन्वयः ॥ २ ॥

ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं तस्य श्रीरामस्यानुचरितं त्वया मुहुः श्रुतं तथापि सङ्क्षेपतो मया कथ्यमानं शृणुष्वेति भावः ॥ ३ ॥

बहुविस्तृतं रामायणं सर्गाद्धत्याध्यायद्वयेन वक्ष्यन् प्रथममेकेन श्लोकेन समस्यति—गुर्वर्थे इति । यः श्रीरामः गुर्वर्थे पितुः सत्यवादित्वपालनार्थं त्यक्तराज्यः पद्मवदतिसुकुमाराभ्यां पद्भ्यां प्रियायाः श्रीसीतायाः पाणिस्पर्शं नाक्षमा ययोस्ताभ्याम् अनुवनं प्रतिवनं व्यचरत् हरीन्द्रानुजाभ्यां कपीन्द्रलक्ष्मणाभ्यां मृजिता

*भुव्यवतीर्णः इतिपाठः । *स्वार्जितइत्यत्र जितइत्यस्य प्राप्त इत्यर्थः तद्वत् जित्वेत्यस्य प्राप्येति

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमपारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपनीता पथि रुरू मार्गश्रमो यस्य शूर्पणखायाः वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोः प्रियविरहेण शूर्पणखाप्रलोभितरावणकृतेन कलत्रवियोगेन या रुट् तया आरोपितया कुटिलीकृतयोर्भ्रुवोर्विजृम्भणेन त्रस्तो जातभयो ऽब्धिर्यस्मात् तत्प्रार्थनया तदुपरि बद्धः सेतुर्येन ततः खलाः दुष्टाः रावणादय एव दवो वनं तद्दहनः स कोसलेन्द्रो नो ऽस्मान् अवतात् रक्षतु ॥ ४ ॥

अथोदितं आरभ्य विस्तरेणाह-विश्वामित्राध्वरे इत्यादिना यावदध्यायसमाप्ति। पश्यत एव लक्ष्मणस्य तत्प्रयत्नापेक्षयैव हताः येनेत्यादीनां स कोशलेन्द्रो नो ऽवतादिति पूर्वेणैव सम्बन्धः ॥ ५ ॥

हे नृप ! बालगजस्येव लीला यस्य स तथाविधो यः लोके तदानीन्तना ये वीरास्तेषां समितौ समाजे ऐशं शैवम् उग्रं कठिनं सीतास्वयम्बरगृहे त्रिशतैर्वाहकैः उपनीतं धनुरादाय सज्जीकृतं विकृष्येक्षुदण्डमिव मध्ये बभञ्ज ॥ ६ ॥

यश्चानुरूपाणि स्वगुणशीलाद्यनुरूपाणि गुणशीलादीनि यस्याः उरसि अभिलब्धो मानो यया तां श्रियं सीताभिधां जित्वा त्रिरित्युपलक्षणं त्रिःसप्तकृत्वः अराजबीजां महीमकृत ऽकरोद्यस्तस्य भृगुपतेर्जामदग्न्यस्य धनुर्भङ्गरवश्रवणविवृद्धमन्योः प्ररूढ दर्पं व्यपनयत् अपनीतवान् ॥ ७ ॥

संग्रामे जलार्थिनं दशरथं प्रति कैकय्या मन्थराख्यया दास्या सहितया पृष्ठतो गत्वा जलमर्पितं तदा च राज्ञोक्तं वरं वरयेति तयोक्तं कालान्तरे सति प्रयोजने ऽपेक्षितं वरं स्वीकरिष्यामीति तदनन्तरं श्रीरामस्य यौवराज्याभिषेकसमये मन्थराप्रबोधितया भरतस्य राज्यं रामश्चतुर्दशवर्षाणि वने वसत्विति प्रार्थितम्, तदा सत्यपाशपरिवीतस्य पितुर्निदेशमाज्ञां शिरसा जगृहे तदा राज्यं श्रियं सम्राड् प्रणयिनः प्रीतिसम्बद्धान् सुहृदश्च असून् प्राणवत् प्रियतमान् त्यक्त्वा सभार्यः वनं ययौ मुक्तसङ्ग इव यथा मुक्तसङ्गस्यैव दुःखत्वं दर्शितं स तु मुक्तसङ्ग इत्यर्थः ॥ ८ ॥

———

भाषा टीका

श्रीसाकेतविहारिणे नमः ॥

पराऽभ्रादुत्तिष्ठन्नमलमभयसन्दुग्धजलधेः—
स्फुरत्सीताविद्युद्विलसितनवपुर्नीलरुचिमान् ।
कृपाधारां मुञ्चन् भवदवविदग्धार्तिशमनो—
हृदाकाशे नित्यं मम विलसताकोऽपि जलदः ॥ ० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—खट्वांग महाराज से दीर्घबाहु हुए, तिन से बड़े भारी यशस्वी रघुमहाराज हुए, तिन अज हुए अज के पुत्र महाराज दशरथ हुए ॥ १ ॥

तिन दशरथ महाराज के साक्षात् परब्रह्म श्री हरि देवता लोगों की प्रार्थना से पुत्रपने को प्राप्त हुए और अपने अंशांश से चार रूप को धारण करते हुए ॥ २ ॥

राम, लक्ष्मण, भरत, और शत्रुघ्न इन संज्ञाओं से प्रकट हुए, हे राजन् ! तिन सीता पति का चरित्र तत्त्वदर्शी बहुत से ऋषि लोगों के मुख से वर्णन किया हुआ तुमने बहुतबार सुना है ॥ ३ ॥

( अब एक श्लोक में श्रीशुकदेवजी सब रामायण कथा कथन पूर्वक आशीस मांगते हैं ) जिनने पिता की सत्य की प्रतिज्ञा पालन करने के लिये राज्य को छोड़कर श्रीजानकीजी के कर कमलों के स्पर्श को न सहने वाले अति मृदुल चरण कमलों से वन २ के प्रति विचरना स्वीकार किया और दंडकारण्य में जाकर जिनके पंथ के श्रम को मारुति और लक्ष्मण ने दूर किया, और शूर्पणखा के नाक कान के छेदन के कारण से हुआ जो प्रिया ( श्रीजानकीजी ) का विरह तासे जो उत्पन्नभया जो रोष तिससे जब आपने भृकुटि चढ़ाई तब समुद्र त्रास को प्राप्त हुआ तदनंतर सेतु बांधकर खलों ( राक्षसों ) के नाश करने को जो दावाग्नि हुए वे कोसलेन्द्र श्रीराघवेन्द्र हम सब लोगों की रक्षा करो ॥ ४ ॥

( उसी राम चरित को श्रीशुकदेवजी अब कुछ थोड़े विस्तार से वर्णन करते हैं ) कि—विश्वामित्र के यज्ञ में जिनोंने राक्षसों में बड़े पती मारीच आदिक निशाचरों को लक्ष्मणजी के देखते देखते मार दिये ॥ ५ ॥

हे नृप ! लोक प्रसिद्ध बड़े २ वीरों के समाज में सीताजी के स्वयंवर की जगह जिस धनुष को ( काष्ठ की मंजूषा में धरे हुए को ) तीन सौ मनुष्य खैंचकर लाये उस धनुष को जिस श्रीराघवेन्द्र ने उठाकर चढ़ाकर खींचकर बीच से तोड़ दिया जैसे हाथी का छौना विलास पूर्वक ईख को उठाकर तोड़ देवै ॥ ६ ॥

अपने अनुरूप गुण, शील, अवस्था, अंग, रूप, वाणी और पूर्व काल में वक्षस्थल में प्राप्त हुई प्रतिष्ठा जिनको ऐसी सीता नाम वाली लक्ष्मी जी को जीतकर अयोध्या के मार्ग में जाते हुए जो श्रीराम, इक्कीसवार पृथिवी को निःक्षत्र करने वाले परशुरामजी के अति कर बढ़े हुए दर्प को दूर करते हुए वे हमारी रक्षा करें ॥ ७ ॥

सत्य की फांसी में फंसे हुए अपने स्त्रैण ( स्त्री लोलुप ) पिता की भी आज्ञा को भार्या सहित जो श्रीराम शिर से धारण करते हुए, तथा राज्य लक्ष्मी और प्यारे सुहृद और निवास को त्यागकर वन को गये जैसे कि मुक्त समस्त संग योगीजन अपने प्राणों को भी छोड़ जाते हैं ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

रक्षसो रावणस्य स्वसुः शूर्पणखाया अशुद्धबुद्धेः सीता-

सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते ! दशकन्धरेण।
जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथा कमुग्रः ॥ १० ॥
रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम्।
भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥ ११ ॥
दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं सख्यं विधाय कपिभिर्दयितागतिं तैः।
बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यैर्वेलामगात्स मनुजोऽजभवार्चिताङ्घ्रिः ॥ १२ ॥
यद्रोषविभ्रमविवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो भयगीर्णघोषः।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥ १३ ॥
न त्वां वयं जडधियोऽनुविदाम भूमन् ! कूटस्थमादिपुरुषं जगतामधीशम्।
यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योश्च भूतपतयः स भवान् गुणेशः ॥ १४ ॥
कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीरपत्नीम्।
बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ १५ ॥
बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः।
सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां विभीषणदृशाऽविशदग्रदग्धाम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

जिघृक्षोः कामातुरायाः इति वा रूपं व्यकृन्तत् विरूपामकरोत् तस्याः खरत्रिशिरोदूषणमुख्याः बन्धवो येषु तांश्चतुर्दशसहस्रं जघान अपारणीयमलङ्घ्यमसह्यं कोदण्डं पाणौ यस्य सः ॥ ९ ॥

सीतायाः कथाश्रवणेन दीपितो हृच्छयो यस्य तेन सीतां हरिष्यता स्वस्मादितरेण स्वाश्रमादपकर्षणार्थं सृष्टं निर्मितं मारीचं विलोक्य जघान, कथम्भूतम् ? अद्भुतैणवपुषा स्वर्णहरिणदेहेनोपलक्षितम् अत एव प्रलोभनेनाश्रमस्तेनापकृष्टः सन् कं दक्षं यथा उग्रः श्रीरुद्रः ॥ १० ॥

ततश्च रक्षोऽधमेन रावणेनासमक्षमपनीतायाम् प्रियया वियुक्तो भ्राता लक्ष्मणेन सह कृपणवद्वने चचार, किमभिप्रायः सन् ? इत्यनेन प्रकारेण स्त्रीसङ्गिनां दुःखोदर्कां गतिं प्रख्यापयन् ॥ ११ ॥

आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतं कृत्यं शास्त्रीयं दहनादिकं यस्य तं जटायुषं पुत्र इव दग्ध्वा कबन्धं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन् अथ वालिनि हते तैः कपिभिर्दयिताया गतिं बुद्ध्वा अजभवाभ्यामर्चितावङ्घ्री यस्य स मनुजो वेलां समुद्रतीरमगात् ॥ १२ ॥

तत्र त्रिरात्रमुपवासेन प्रतीक्षितोऽपि सिन्धुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण कोपवक्रतया विवृतो यः कटाक्षस्तस्य पातेन सम्भ्रान्ता नक्रा मकराश्च यस्मिन् भयेन गीर्णः ग्रस्तः स्तम्भितो घोषो येन सः सिन्धुरेतद्वक्ष्यमाणं बभाषे अर्हणमर्घ्यादिकं रूपी मूर्तिमान् ॥ १३ ॥

भाषणमथाऽऽह—न त्वामिति द्वाभ्याम्। एतावत्पर्यन्तं तु निश्चितं त्वां न विदाम न जानीम इत्यर्थः। इदानीं तु ज्ञातोऽसीत्याह—यत इति पृथक्पदम् यस्मादित्यर्थः यद्गुणेभ्यः सत्त्वादिभ्यः सुरगणादयो भवन्ति स भवानिति ॥ १४ ॥

कामं यथेच्छं जलमाक्रम्यापि प्रयाहि अवमेहं पुरीषप्रायम् त्रैलोक्यं रावयत्याक्रन्दयतीति तथा तं जहि हे वीर ! यद्यपि मम जलं प्रतिबन्धकं न भवति तथापीह सेतुं बध्नीहि नहि किमर्थं ? ते यशसो विस्ताराय; तदेवाऽऽह—यं सेतुमुपेत्य दुष्करं कर्मेक्षणं त्वद्यशो गास्यन्ति भूपालकाः ॥ १५ ॥

तद्वाक्यमभिनन्द्य यत्कृतं तदाह—बद्ध्वेति। विविधैरद्रीणां कूटैः शृङ्गैः सेतुं बद्ध्वाऽग्रे सीतान्वेषणे हनुमतैव दग्धां लङ्कामाविशत्, कथम्भूतैः ? शृङ्गैः कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तैः विभीषणस्य दृशा बुद्ध्या; कैः सहाऽऽविशत् ? सुग्रीवादयः प्रमुखा येषां तैरनीकैः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

रक्ष इति। रक्षसो रावणस्य स्वसुर्भगिन्याः शूर्पणखायाः अशुद्धबुद्धेः सीताजिघृक्षोः कामातुरायाः वा रूपं व्यकृन्तत् विरूपामकरोत् तस्याः शूर्पणखायाः खरादिप्रमुखाः बन्धवो येषु तान् चतुर्दश-

५ श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सहस्रं सहस्राणि बन्धूनित्यत्र लिङ्गव्यत्ययः । सहस्रमित्यत्र वचनव्यत्ययश्चार्षः जघान हतवान् आर्षत्वात् सापेक्षस्यापि बन्धुशब्दस्य वृत्तिः नित्यसापेक्षत्वाद्वा तथाचोक्तं हरिणा "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते" इति. कथम्भूतः? अवारणीयमकुण्ठममलं कोदण्डं धनुः पाणौ यस्य तथाभूतः तत इतस्ततो वनं सञ्चरन् कृच्छ्रमुवास वनवासस्य दुःखरूपत्वप्रदर्शनाय कृच्छ्रमिवोवासेत्युक्तिः नित्यानन्दरूपस्य तस्य दुःखाभावात् ॥ ९ ॥

सीतेति । सीतायाः कथाश्रवणेन दीपितः हृच्छयः कामो यस्य तेन दशकन्धरेण रावणेन सीतां जिघृक्षुणा स्वयं तत्र गन्तु भीतेन सृष्टं प्रेषितं मारीचं विलोक्य हे नृपते ! अद्भुतमेणस्यैव वपुर्यस्य तेन सीतया क्रीडार्थमपेक्षितेन मारीचेनाश्रमतः स्वाश्रमादपकृष्टः प्रलोभनपूर्वकमाश्रमतोऽपकृष्टः सन् आशु विशिखेन बाणेन तं मारीचं जघ्ने हतवान् यथा कं दक्षमुग्रो रुद्रस्तद्वत ॥ १० ॥

रक्ष इति । तदा रक्षोऽधमेन रावणेनामयतं रामलक्ष्मणयोरिति शेषः । मृगानयनार्थं रामस्य तद्वृत्तान्तज्ञानार्थं लक्ष्मणस्य च प्रेषितत्वात् तयोरसान्निध्ये सति वने वृकवत् वृकेनेव वैदेहराजदुहितरि सीतायामपयापितायामपहृत्य लङ्कां प्रति प्रापितायां सत्यां प्रियया वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवत् दुःखीव वने चचार, किङ्कुर्वन् ? इति अनेन प्रकारेण स्त्रीसङ्गिनां दुःखोदर्का गतिं प्रथयन् प्रख्यापयन् ॥ ११ ॥

दग्ध्वेति । आत्मनः श्रीरामस्य यत्कृत्यं प्रयोजनं सीताविमोचनरूपं तेन निमित्तेन हतं रावणेन सह युद्धे हतं गृध्रं जटायुषं दग्ध्वा कबन्धम अहन् जघान ततः कपिभिर्वानरैः सह सख्यं विधाय कृत्वा अथ वालिनि हते सति तैः कपिभिर्वेदितायास्सीतायाः गतिं बुध्वा अजभवाभ्यां ब्रह्मरुद्राभ्यामर्चितावङ्घ्री यस्य तथाभूतोऽपि स श्रीरामः मनुजावताररूपत्वात् प्लवगेन्द्राणां कपीन्द्राणां सैन्यैः सह वेलां तीरं समुद्रस्येति शेषः अगात जगाम ॥ १२ ॥

यद्रोषेति तत्र त्रिरात्रमुपवासेनापि प्रतीक्षितः सिन्धुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण कोपलीलया विवृत्तो यः कटाक्षस्तस्य पातेन सम्भ्रान्ताः नक्रा मकराश्च यस्मिन् भयेन गीर्णस्तिमितो घोषो येन स सिन्धुरर्हणमर्यादिद्रव्यं शिरसि परिगृह्य निधाय रूपी मूर्तिमान् पादारविन्दमुपगम्य शरणं गत्वा एतद्वक्ष्यमाणं बभाषे ॥ १३ ॥

भाषणमेवाह—न त्वामिति द्वाभ्याम् । हे भूमन् ! त्वं प्रायोपविष्टं त्वामेतावत्पर्यन्तं जडधियो वयं कूटस्थं निर्विकारं जगतामधीशमादिपुरुषं न विद्मः न जानीमः । इदानीं तु ज्ञातोऽसीत्याह, यद्वेति । यद्वेति पृथक्पदं लुप्तषष्ठ्यन्तं यस्य तव द्वियाऽवात्स्वत्थतः सत्त्वगुणात्सुरगणाः इतिशेषः । "रजसो गुणात्प्रजेशाः प्रजापतयः मन्योस्तमसः भूतपतयो रुद्रादयः स भगवान् गुणेशः सत्त्वादिगुणानां नियन्तेत्यधुनाऽहं मन्ये इत्यर्थः ॥ १४ ॥

कामामिति । कामं यथेच्छं जलमाक्रम्यापि प्रयाहि गच्छ विश्रवसः प्रजापतेरपत्यं पुरीषप्रायं त्रैलोक्यं रावयत्याक्रन्दयतीति तथा तं दशकन्धरं जहि हे वीर ! पत्नीं सीतामवाप्नुहि यद्यपि तव मदीयं जलं न प्रतिबन्धकं भवति तथापि सेतुं बधान किमर्थमित्यत्राह—ते तव यशसो विभूत्यै विस्ताराय तथाहि दिग्विजयिनो भूपाः यं सेतुमुपेत्य दुष्करं त्वत्कर्माभिवीक्ष्य त्वद्यशो गास्यन्ति ॥ १५ ॥

तद्वाक्यमभिनन्द्य यत्कृतं तदाह—बद्धेति । कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तैर्विविधैरद्रीणां कूटैः शिखरैः दधौ सेतुं बध्वा रघुपतिः सुग्रीवादयः प्रमुखा येषां तैरनीकैः कपिभिः सह अनीकैरिति पाठे सैन्यैः सहेत्यर्थः । प्रथम सीतान्वेषणसमये हनुमतैव दग्धां लङ्कां विभीषणदृशा बुद्ध्या तत्प्रदर्शितमार्गेणातिभावः आविवेश ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रक्षस्स्वसुः शूर्पणखायाः रूपं ऽथकृत कर्णनासिकाच्छेदनलक्षणविकारं कारितवान् अटमानः वन इति शेषः ॥ ९ ॥

शूर्पणखीमुखात्सीतायाः सौन्दर्यादिविषयकथायाः श्रवणेन दीपितः प्रज्वलितो हृच्छयः कामो यस्य स तथा तेन दशकन्धरेण रावणेन सृष्टं प्रतिपाद्य प्रेषितम "उत्सर्जनविसर्जनेन विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यभिधानं । कृतैणवपुषा विरचितमृगाकारेणाश्रमतः समीपे विचरन्तं विलोक्य सीतया प्रकृष्टः उल्लिखितो मोदितो वशीकृत इति यावत् आश्रमतोऽपकृष्टः दूरं नीतो रामो विशिखेन मारीचम् आशु जघ्न इत्यन्वयः । उग्रो नरसिंहो हिरण्यकशिपुनामानम् अरिं "उग्रो जज्ञे वीर्याय स्वधावान्" इति श्रुतिः । रुद्रोऽन्धकाख्यं रिपुं वा "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्" इत्यभिधानम् ॥ १० ॥

निकृत्याविरावत्सविश्वस्तया रक्षोधमेन रावणेन विपिने वृकवत्स्थितेन वृणोत्यावृणोत्यात्मानमिति वेषान्तरेण स्थितेनेत्यर्थः । असमक्षमप्रत्यक्षं रामस्येति शेषः । वैदेहराजदुहितरि सीतायामपयापितायामपनीतायाम् भवने नियुक्तेन भ्रात्रा लक्ष्मणेन रहितायामिति शेषः । प्रियया सीतया वियुक्तः लोकदृष्ट्येति शेषः । स्त्रीसाङ्गिनां रतिमितीत्थं प्रथयन् प्रख्यापयन् चचार अनेन विटजनशिक्षणार्थमेवं दर्शितमिति ज्ञायते प्रथयन्नित्युक्तेः । किमर्थमेवं कल्पना ? तत्स्वभावानुभवात्किं न स्यादिति चेत्—

"नित्यपूर्णसुखज्ञानस्वरूपोऽसौ यतो विभुः ।
ततोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि ।
तथापि लोकशिक्षार्थमदुःखो दुःखवर्तिवत् ।
अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव" ॥

इति स्मृतिविरोधात् प्रियया वियुक्तत्वदर्शनमपि लोकदृष्ट्यपेक्षयेति ज्ञातव्यं । तत्कुतोऽवगतमिति चेत्—

"ज्ञानार्थं पुनर्नित्यसम्बन्धः स्वात्मनः श्रिया ।
अयोध्याया विनिर्गच्छन् सर्वलोकस्य चेश्वरः ॥
प्रत्यक्षं तु श्रिया सार्धं जगामामादिरव्ययः" ॥

इति स्मृत्या ज्ञातव्यम । एवमन्यत्रापि प्रमाणमात्मनस्त्वंव्याप्यनुसन्धेयोऽस्यार्थ इति विशदं समस्तम ॥ ११ ॥ १२ ॥

इतोऽपि श्रीरामः साक्षान्नारायणावतार एव. न देवदत्तादन्यतमः तस्य प्रियावियोगादिना दुःखप्रकटनमसुरजनमोहनाय

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मानुषावतारदेवताजनशिक्षणाय चेत्येतदन्यैः श्लोकैरेव ज्ञातुं सुशकमित्याशयेन तन्माहात्म्यं प्रकटयति--यद्रोषेति । यस्य रामस्य रोषेण तीव्रश्च परिवृत्तश्च कटाक्षः यद्रोषतीव्रपरिवृत्तकटाक्षस्तस्य पातेन, लक्ष्यवेधनाद्विषयीकरणेन सम्भ्रान्ता इतस्ततोऽनवस्थिता नक्राश्च मकराश्च यस्मिन् स तथा भयेन गीर्णो ऽर्वो घोषो यस्मिन् स तथा अत एव तूष्णीं स्थित इत्यर्थः। अर्हणमर्घ्यपाद्यादिपूजासाधनम् रूपी करचरणादिविशिष्टावयवोपेतः ॥ १३ ॥

जडवदचेतनवच्चेष्टा येषां ते तथा ज्ञानपूर्वप्रवृत्तिशून्या इत्यर्थः जडाचारा इत्यर्थोऽपि ग्राह्यः अनेन तावद्देवास्मत्तः प्रयोजनमिति सूचयति--वेदान्ते जगत्कारणस्य ब्रह्मत्वं निर्णयति रामस्य तदभावात्तत्वं कथमिति चेत्तत्रस्थापयतीत्याह--त्वामिति। यस्त्वं सत्वगुणात्सुरगणान् अस्राक्षीः रजोगुणात प्रजेशान् मनुष्यानसृजः तन्योऽतमोगुणाच्च भूतपतयः भूतपतीन् ब्रह्मराक्षसादिलक्षणयासुरान् उद्भावयः स परमात्मा वासुदेवस्त्वमनः कर्ता भवान्नान्यः गुणैः प्रवर्तमानस्य गुणनिमित्ताभिभवो नाशङ्कनीयः गुणानां तदधीनत्वादित्याशयेनाह---गुणेश इति क्षोभस्य तमःकार्यत्वात्तेन तल्लक्षयति ॥ १४ ॥

यथाऽस्यमेहो विष्ठा शरीरान्निर्गता शुनामुपभोगाय भवति तथा ऽयमपि त्रिश्रवसो देहान्निर्गतत्वेनास्यमेहस्थानीयस्त्वच्छरनिर्भिन्नहृदयः शुनामशनाय स्यादित्यतो विश्रवसोऽवमेहमित्युक्तं त्रैलोक्यस्य रोदनकारणत्वात् त्रैलोक्यरावणम् हे वीर ! इह मयि वितत्यै विस्ताराय यं सेतुम् ॥ १५ ॥

विविधाद्रिकूटैर्नानाविधपर्वतशृङ्गैः कपीन्द्राणां करैः कम्पितानि भूरुहाणां वृक्षाणाम् अङ्गानि शाखोपशाखालक्षणानि येषु तानि तथा तैः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति अनेन प्रकारेण परमभक्तानुकम्पोद्दीपनप्रकारेण स्त्रीसङ्गिनां या गतिश्चेष्टा विलापाद्या तामेव प्रथयन् विस्तारयन् चचार इतस्ततो बभ्राम इदमेवोक्तं प्रिययेति वक्ष्यते च दुःखितेत्यादि ॥ ११ ॥

सङ्गतोऽनुजः श्रीलक्ष्मणो यत्र तादृशः ॥ १२-२९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

रक्षसो रावणस्य स्वसुः शूर्पणखायाः रूपं व्यङ्क्त कर्णनासाछेदेन विकारमनयत् जघ्ने जघान अपारणीयम् अन्यैरसह्यं कोदण्डं पाणौ यस्य सः ततश्च अटमानः वने भ्रमन् कृच्छ्रं सकष्टमुवास ॥ ९ ॥

ततश्च शूर्पणखामुखात् श्रुत्वा सीतां हरिष्यता रावणेन स्वस्माद्भीतेन तस्याश्रमादपकर्षणार्थं सृष्टं निसृष्टं प्रेषितं मारीचं विलोक्य जघान, कथम्भूतम् ? अद्भुतैणवपुषा स्वर्णहरिणशरीरेणोपलक्षितं स्वयं कथम्भूतः ? आश्रमतोऽपकृष्टः दूरं गतः कं दक्षं यथा उग्रः भीरुद्रः ॥ १० ॥

रक्षोऽधमेन रावणेन वृकवत् वृकेणेव असमक्षं परोक्षेण एवाऽर्पयितायाम् अपहृतायां सत्यां प्रियया प्रेयस्या सीतया वियुक्तः विप्रलम्भशृङ्गाररसास्वादनलम्पटीभूतः।प्रेमाणमेव विप्रलम्भरसमयीभूतमास्वादयन् तदनुभावसात्त्विकसञ्चार्यादिकं विलापमूर्च्छोन्मादादिकं प्रकटयन्नेव चचार कथम्भूतः ? इतीत्यनेनैव प्रकारेण स्त्रीसङ्गिनां गतिं विलापादिदुःखोदर्कां प्रथयन् बहिर्दर्शिनो जनान् प्रख्यापयन् अन्तर्दर्शिनस्तु गतिं प्रख्यापयन् इति प्रथमार्थेऽस्मिन्नपि तु वस्तुत इत्यर्थः,"तस्मिन्नयं महाविष्णौ जाते दशरथे हरौ" इति रामतापनीश्रुत्यादिप्रमाणेन चिदानन्दमयमनोबुद्धीन्द्रियशरीरस्य परब्रह्मणस्तस्य दुःखगन्धाभावेनापि शास्त्रयुक्तिप्रतिकूलत्वात् पञ्चमस्कन्धीयकिंपुरुषवर्षरामप्रसङ्गव्याख्यानयुक्त्या ज्ञातव्येव ॥ ११ ॥

आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतं कृत्यं शास्त्रीयं दहनादिकं यस्य जटायुषं पुत्र इव दग्ध्वा कबन्धं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन् अथ वालिनि हते सति तैः कपिभिर्दर्शितागतिं बुद्ध्वा वेलां समुद्रतीरं मनुजो रामः ॥ १२ ॥

तत्र त्रिरात्रोपवासेन प्रतीक्षितोऽपि सिन्धुर्यदा नोपतस्थे तदा स्वैश्वर्यं सस्मारेत्याह—यस्य रोषविभ्रमेण क्रोधविलासेन विवृत्तो विकटो यः कटाक्षपातस्तेन सम्भ्रान्ता विपन्ना नक्रा मकराश्च यस्य सः भयेन गीर्णः ग्रस्तः स्तम्भितो घोषो यत्र सः अर्हणमर्घ्यादिपूजोपहारम् ॥ १३ ॥

जडधियो जलाधिशायिनः स्वशक्तिमप्राप्य त्वां न विद्मः। पशवो हि लकुटप्रहारमनवाप्य मनुष्यं यथा न गणयन्ति तथेति भावः। ननु अधुना परिचितोऽस्मि न वा तत्राह—यदिति। पृथक्‌पदं यच्छेत्यर्थः। त्वं यः स तमसः तस्य गुणस्य गुणप्रधानस्य ईशः नियन्ता ॥ १४ ॥

विश्रवसोऽवमेहं मूत्रतुल्यं त्रैलोक्यं रावयति क्रन्दयतीति तथा तं यं सेतुमुपेत्य गायन्ति त्वद्यशो गास्यन्ति ॥ १५ ॥

अद्रिशृङ्गैः कीदृशैः कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तैः विभीषणस्य दत्ता बुद्ध्या ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रक्षसः रावणस्य स्वसुः अशुभबुद्धेः भगवत्प्रियायाः जिघृक्षोः रूपं व्यङ्क्त विकारमनयत् तस्याः स्वरक्षार्थिनोऽनुचरानुत्था ये खरप्रमुखान् चतुर्दशसहस्रं जघ्ने जघान हतवान् अपारणीयम् असह्यं कोदण्डं धनुः पाणौ यस्य तथाभूतः अटमानः सञ्चरन् कृच्छ्रं यथा तथा उवास संसारिणां दुःखदत्वं द्योतयितुं कृच्छ्रमुवासेत्युक्तं परमेश्वरस्य दुःखाभावात् ॥ ९ ॥

हे नृपते ! सीताकथाश्रवणेन दीपितो हृच्छयो यस्य तेन सृष्टं नियुक्तम् अद्भुतैणवपुषोपलक्षितं मारीचं तेनाऽऽश्रमतोऽपकृष्टः विलोक्य आशु जघ्ने,जघान यथा कं दक्षम् उग्रो वीरभद्रः ॥ १० ॥

तदा रक्षोऽधमेन रावणेन वृकवत् वृकेणेव असमक्षं चौर्येण

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वैदेहराजदुहितरि अपयापितायाम एवं प्रियया वियुक्तः भ्रात्रा सह वने चचार, किं कुर्वन् ? इति अनेन प्रकारेण स्त्रीसङ्गिनां दुःखा-वहां गतिं प्रथयन् प्रख्यापयन् ॥ ११ ॥

आत्मार्थेन श्रीरामार्थेन कृतेन सीतानिर्मोचनप्रयत्नेन हतानि कृत्यानि संसारप्रापकाणि कर्माणि यस्य तं जटायुषं तच्छरीरं दग्ध्वेत्यर्थः । जटायुर्मुक्तोऽभूदिति भावः । कबन्धं राक्षसं च अहन् जघान ततः कपिभिः सुग्रीवादिभिः सह सख्यं विधाय अथ वालिनि सुग्रीवविरोधिभूते हते तैः कपिभिः दयितागतिं बुध्वा अजभवाऽभ्यर्चिताङ्घ्री यस्य तथाभूतः सः श्रीरामः मनुजः मनुवंशे आविर्भूतः प्लवगेन्द्रसैन्यैः सह वेलां समुद्रतीर-मगात् ॥ १२ ॥

लङ्कां जिगमिषुः श्रीरामः समुद्रतीरे त्रिरात्रमुपवासं कृतवान् तदाऽप्यनागतं समुद्रं प्रति रोषं चकार तदा यस्य श्रीरामस्य रोष-विभ्रमेण क्रोधलीलया निरूक्तस्य प्रस्फुरितस्य कटाक्षस्य पातेन सम्भ्रान्ताः नक्रा मकराश्च यस्मिन् भयेन गीर्णस्वाभिमतो घोषो येन सः सिन्धुः रूपी मूर्तिमान् सन् अर्हणाम् अर्घ्यादिकं शिरसि परिगृह्य पादारविन्दमुपगम्य एतद्वक्ष्यमाणं बभाषे ॥ १३ ॥

हे भूमन् ! जडधियः वयम् अत एव त्रिरात्रमिह यमन्तं कूटस्थं निर्विकारमादिपुरुषं जगतामधीशं नु निश्चितं न विद्मः इदानीं तु जानीमः यान्ति पृथक्पदं यस्य सत्त्वादितः सुरगणा-दयः सगुणाः सत्त्वादिगुणनियन्ता भवानिति ॥ १४ ॥

कामं यथेष्टं सेतुं विनेव जलमाक्रम्यापि प्रयाहि विश्रवसः अवमेहं पुत्रापसदं त्रैलोक्यं रावयत्याक्रन्दयतीति तथा तं दशकन्धरं जहि हे वीर ! तथापि दिग्विजयिनो भूपाः यमुपेत्य तव यशो गायन्ति गास्यन्ति तम् इह मयि ते यशसो वितत्यै बधान ॥ १५ ॥

एवं समुद्रेणोक्तो रघुपतिः कपीन्द्राणां करैः कम्पितानि भू-रुहाणां द्रुमानामग्राणि येषु तैर्विविधाद्रिकूटैः उदधौ सेतुं बद्ध्वा अग्रे हनुमता दग्धां लङ्कां विभीषणदृशा विभीषणानुमत्या सुग्रीवादिभिः सह आविशत् ॥ १६ ॥

---

### भाषाटीका ।

दुर्बुद्धि वाली राक्षस की बहिन ऐसी सूपनखा की नाक कान काटकर उसको कुरूप बनाकर उसके खर, त्रिशिरा, दूषण जो मुख्य बंधु लोग तिनको और चौदह हजार बड़े २ राक्षसों को जिनने मारा, और शत्रुओं को असह्य कोदंड [ धनुष ] को हस्त में लेकर दुःख से भी वन में पर्यटन करते हुए वास करते भये ॥ ९ ॥

हे नृपते ! सीता जी के सौभाग्य को सुनकर कामी होने वाले रावण के रचे हुए कपट मृगको देखकर उस को सीता देख में अद्भुत मृग अर्थात् सुवर्ण का मृग जानकर आश्रम से पीछे २ दौड़कर उस मारीच को तत्काल में बाण से मारते हुए जैसे ब्रह्मा के पीछे दौड़ कर महादेव ने ब्रह्मा को मारा ॥ १० ॥

इतने बीच में राक्षसाधम रावण के उस विपनमें वृकं जन्तु के तरह जनकराज पुत्री के हरण करने पर आप प्रियतमा से वियोग को प्राप्त हुए, और भ्राता लक्ष्मण के साथ दीन सदृश स्त्रीसङ्गी लोगों की दुःख परिणाम वाली गति को जनाते हुए विचरते भये ॥ ११ ॥

तदनंतर अपने कार्य के अर्थ रावण के साथ युद्ध करने वाले ऐसे जटायुजी का शास्त्रोक्त दहनादि रूप कृत्य करके आगे चलकर कबन्ध को मारते हुए तत्पश्चात् आगे चलने से सुग्रीवादि वानरों के साथ मित्रता कर बाली को मार वानरोंके द्वारा अपनी प्रिया श्रीजानकी की खबर मंगाकर अरुच्छ वानरों की अपार सेना को साथ लेकर मनुज सहित वह मनुज सागर के तट पर गया, कि—जिसके चरण को सब काज तज शंकर और अज ( ब्रह्मा ) सर्वदा ही भजते हैं और अर्चन भी करते हैं ॥ १२ ॥

समुद्र के तटपर तीन दिन रह कर उपवास करने पर भी जब समुद्र नहीं उपस्थित हुआ तब आपने रोष की लीला से नेत्र उघाड़ कर जब समुद्र पर कटाक्ष फेंका तब इतने में ही जिसके भीतर जलजन्तु रहने वाले नाके मगर आदिक रहे वे सब ही खलबल खलबल होगये समुद्र ने मारे डरके घोष ( शब्द ) करना छोड़ दिया और मूर्तिमान होकर मस्तकपर पूजा की सामग्री धर कर चरणों के समीप आकर इस प्रकार बोलता हुआ ॥ १३ ॥

समुद्र बोला, कि—हे भूमन् ! जड़ बुद्धि ऐसे हमने अब तक आपको नहीं जाना रहा कि कूटस्थ आदि पुरुष सब जगत के अधीश्वर आपही हैं, हे भगवन् ! जिन आपके सत्त्व गुण से सुर-गण हुए रजोगुण से प्रजेश [ मरीचि आदिक ] हुए और क्रोध से रुद्र हुए सो आप साक्षात् तीनों गुणों के नियन्ता हो ॥ १४ ॥

हे महाराज ! आप इच्छा पूर्वक पधारो और विश्रवा की खोटी संतान, तथा तीनों लोक को रोदन कराने वाला, ऐसे रावण को मारो—और आपके यश के विस्तार करने के लिये सेतु भी बांधिये, जिस सेतु तक आकर दिग्विजयी भूपति लोग आपके यश को गाया करेंगे ॥ १५ ॥

तब इतना सुनकर श्रीरामचन्द्रजी बड़े २ कपीन्द्रों के करों से कंपित हुई शाखायें जिनकी ऐसे वृक्षों वाले अनेक पर्वतों के शिखरों से समुद्र में सेतु बांधकर, सुग्रीव, नील, हनुमान इत्यादि जोधाओं के अनीकों [ सेनाओं ] सहित विभीषण की सलाह से हनुमान् जी जलाई हुई लंका में प्रवेश करते हुए ॥ १६ ॥

---

सा वानरेन्द्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटङ्का ।
निर्भज्यमानधिषणध्वजहेमकुम्भशृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ १७ ॥
रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।
पुत्रं प्रहस्तमतिकायमकम्पनादीन् सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥ १८ ॥
तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात् ॥ १९ ॥
तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः सीताऽभिमर्शहतमङ्गलरावणेशान् ॥ २० ॥
रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ।
स्वःस्यन्दने द्युमति मातलिनापनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥
रामस्तमाह पुरुषादपुरीष ! यन्नः कान्ताऽसमक्षमसताऽपहृता श्ववत्ते ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः ॥ २२ ॥
एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ।
सोऽसृग्वमन्दशमुखैर्न्यपतद्विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥
ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ।
मन्दोदर्या समं तस्मिन् प्ररुदन्त्य उपाद्रवन् ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततश्च सा लङ्का घूर्णा प्रचलिता बभूव, कथंभूता ? वानरेन्द्राणां बलैरुद्धा विहारादयो यस्याम् निर्भज्यमाना धिषणादयो यस्यां सा तत्र विहारः क्रीडास्थानं कोष्ठं धान्यागारादि श्रीः कोशः द्वारं गृहादीनाम्, गोपुरं पुरद्वारम् सदः सभा वलभी प्रासादादिपुरोभागच्छादिनी विटङ्कः कपोतपालिका धिषणा वेदिकादि शृङ्गाटकं चतुष्पथम् ॥ १७ ॥

रक्षःपती रावणः पुत्रमिन्द्रजितं प्रहस्तादींश्च समहिनोत् प्रायुङ्क्त ॥ १८ ॥

असिशूलादिभिर्दुर्गमां तां यातुधानपृतनां सुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात् मरुत्सुतो हनुमान् ऋक्षो जाम्बवान् ॥ १९ ॥

ते रघुपतेरनीकपाः अङ्गदाद्याः सर्वे रावणस्येभादिभिर्वरूथं सैन्यं तत्र द्वन्द्वं यथा भवति तथा अभिपत्य सङ्गम्य द्रुमादिभिर्जघ्नुः, कान् ? सीताया अभिमर्शेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् ॥ २० ॥

स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः क्रुद्धः सन् यानकं पुष्पकं विमानं रथं वाऽऽरुह्य श्रीराममभिससार अथ तं स्वःस्यन्दने स्वर्गस्थे इन्द्रस्य रथे मातलिनेन्द्रसारथिनोपनीते द्युमति दीप्तियुक्ते विभ्राजमानमहनदहन् ॥ २१ ॥

हे पुरुषादपुरीष ! राक्षसपुरीषप्राय यद्यस्मादपहृता श्ववत् श्वा यथाऽसमक्षं गृहं प्रविश्य किमपि हरति तद्वत् तस्मात् जुगुप्सितस्य कर्मणः कर्तुस्तेऽद्य काल इवालङ्घ्यवीर्योऽहं फलं यच्छामि अधर्मकर्तुः पुंसः कालो यथा यच्छतीति वा ॥ २२ ॥

रिक्तः क्षीणपुण्यः सुकृती विमानादिव विमानात्पुष्पकात् न्यपतदिति वा ॥ २३ ॥

राक्षसस्त्रीणां विलापमाह—तत इति पञ्चभिः । मन्दं स्वल्पमुदरं यस्यास्तया रावणभार्यया सह ॥ २४ ॥ वी० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सेति । सा श्रीरामेण सकपिसैन्येन प्रविष्टा लङ्का गजकुलैः ह्रादिनी यथा घूर्णा भवति तद्वत् घूर्णा बभूव, कथम्भूता ? वानरेन्द्राणां बलैः रुद्धा विहारादयो यस्यां निर्भज्यमाना धिषणादयो यस्यां सा तत्र विहारः क्रीडास्थानं कोष्ठं धान्यागारादि श्रीः कोशः द्वारं गृहादीनां, गोपुरं पुरद्वारं सदः सभाः वलभी प्रासादादिपुरो-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मागच्छादिनी विटङ्कः कपोतपालिका धिष्ण्यं वेदिकादि ध्वज-हेमकुम्भौ प्रसिद्धौ शृङ्गाटकश्चतुष्पथः ॥ १७ ॥

रक्ष इति । रक्षःपती रावणः सैन्यघूर्णनं दृष्ट्वा निकुम्भादीन् एकैकशः स्वस्वबलसहितान् पुत्रमिन्द्रजितं प्रहस्तादींश्च सर्वाननुगान् भृत्यान् समाहिनोत् प्रायुङ्क्त अथ कुम्भकर्णं च समाहिनोत् ॥ १८ ॥

तामिति । तामसिशूलादिभिर्दुर्गमां यातुधानानां पृतनां सेनां सुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात् तत्र मरुत्सुतो हनुमान् ऋक्षो जाम्बवान् ॥ १९ ॥

त इति । ते रघुपतेरनीकपाः सर्वे अङ्गदाद्याः रावणस्यैभादीनां गजादीनां यूथैर्यदूरूथं सैन्यं तद्वृन्दं यथाभवति तथा अभिपद्य सङ्गम्य द्रुमैर्गिरिभिर्गदादिभिरिषुभिश्च सीताया अभिमर्शनेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् निकुम्भादीन् जघ्निरे ॥ २० ॥

रक्ष इति । अथ रक्षःपती रावणः स्वबलस्य नाशं नाशमवेक्ष्य रुषः क्रुद्धः सन् पानकं विमानमारुह्य श्रीराममभ्यपतत् अथ स्वःस्यन्दने इन्द्रस्य रथे मातलिना इन्द्रसारथिना उपनीते समानीते द्युमति दीप्तियुक्ते विभ्राजमानं श्रीरामं क्षुरप्रैः क्षुरधारातुल्याग्रैर्विशिखैर्बाणैरहनत् तताड ततादित्यादिवत् सिद्धे क्रमप्रहणेन गणकार्यस्यानित्यत्वादार्षत्वाद्वा शपोलुक् अभावः ॥ २१ ॥

तमेवं ताडयन्तं रावणं श्रीराम आह—किमिति । हे पुरुषादपुरीष ! राक्षसेषु तेषां वा पुरीषप्राय यस्मात्त्वंऽस्माकमसमक्षं कान्ता असता दुरात्मना त्वया शुनेवापहृता शुना यथा असमक्षं गृहं प्रविश्य किमपि वस्त्वपह्रियते तद्वदिति दृष्टान्तार्थः, तस्मात् जुगुप्सितस्य, कर्मणः प्रतिशेषः । कर्तुस्ते निर्लज्जस्य तवाद्य कालो मृत्युरिवाहमव्यर्थवीर्योऽहं फलं यच्छामीति ॥ २२ ॥

एवमित्थमधिक्षिपन् धनुषि सन्धितं बाणमुत्ससर्ज प्रायुङ्क्त स बाणो वज्रमिव तस्य रावणस्य हृदयं बिभेद स रक्षो रावणः दशभिर्मुखैरसृक् रुधिरं वमन् जने पश्यति जने हाहेति वादिनि सति विमानात् पुष्पकादपतत् यथा सुकृती क्षीणपुण्यः स्वर्लोकात् पतति तद्वत् ॥ २३ ॥

तत इति । ततो यातुधान्यः राक्षस्यो मन्दोदर्या सह लङ्काया निष्क्रम्य प्ररुदन्त्यस्तत्र रावणसमीपे उपाद्रवन् आजग्मुः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदा सा लङ्का रामेणाविष्टा तदा गजकुलैर्घूर्णा ह्रदिनीव घूर्णाऽभूदिति शेषः । विहरन्त्यस्मिन्निति विहारं क्रीडास्थानं कोष्ठमन्तर्गृहं सद्द्वारं सभाद्वारं प्रशस्तसाधारणद्वारं वा गोपुरं पुरद्वारं सदः सभास्थानं वलभी गृहाच्छादनान्तर्नाली दारुभिः परितो निर्मिता गोपानसीति कीर्त्यते विटङ्कः पक्षिपट्टिका वानरेन्द्राणां बलेन सेनया रुद्धा आवारिता विहारादयो यस्याः सा तथा

"आच्छादनं स्याद्वलभीगृहाणां गोपानसी दारुषु वक्रसंस्था ।
निम्नं वलीकं पटलान्तमाहुः कपोतपाली च विटङ्कसंज्ञा" ॥

इति हलायुधः—

"गोपानसी तु वलभीच्छादने वक्रदारुणि ।
कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्" ॥

इत्यमरः । निर्भज्यमाना वानरेन्द्रबलेन निर्भिद्यमाना धिष्ण्य-ध्वजाः गृहालङ्कारहेतवः हेमकुम्भाः सुवर्णकलशाः शृङ्गाटकाः गृहमुखप्रतोल्यन्तस्त्रिशूलाकृतिप्रदेशाः यस्यां सा तथा ध्वजैः परिस्थहेमकुम्भैर्युक्ताः शृङ्गाटकाः चतुष्पथा वा ॥ १७ ॥

तद्वानरेन्द्रबलकृतं कर्म समहिनोदपातयत् ॥ १८ ॥

या रावणेन प्रेरिता तां यातुधानपृतनां राक्षससेनाम् ॥१९॥

रघुपतेस्ते अनीकपाः सेनानायकाः वरूथं रथगुप्तिमभिपद्य प्राप्य इभाश्च पत्तयश्च रथाश्चाश्वाश्च योधाश्च यस्मिन् तदिभपत्तिरथाश्वयोधं द्वन्द्वं द्वाभ्याम् द्वाभ्याम् इभादिभ्यां क्रियमाणं युद्धम् अभ्युपगम्य राक्षसबलं जघ्नुरित्यन्वयः "रथगुप्तिर्वरूथो ना कूबरो ना युगन्धरः" इति यादवः । कीदृशं बलं सीताभिमर्शेन सीतापरामर्शेन सीताया अपहारेणोत्सर्गः । हतं नष्टं मङ्गलं पुण्यं यस्य स तथा स चासौ रावणः सीताभिमर्शहतमङ्गलरावणः स एवेशो यस्य तत्तथा तत् ॥ २० ॥

द्युमति तेजोवति स्वः स्वर्गादवतीर्णे स्यन्दने रथे विभ्राजमानं क्षुरप्रैरर्धचन्द्रैः "अर्धचन्द्रः क्षुरप्रः स्यात्" इति । प्रासः कुन्तः ऋष्टिः प्रसिद्धा शक्तिः शतमारणी तोमरः लोहमयद्विफलः निस्त्रिंशः खड्गः पट्टिशः लोहदण्ड इत्यर्थः । शतघ्नी चतुस्ताला लोहकण्टकसंचिता केचित् शतघ्नीमयःकण्टकसंछन्नां महाशिलां वदन्ति भुशुण्डी वृत्तायःफलसञ्चिता दारुमयी हस्तिवरो गजश्रासहेतुरभ्रमुनयः देवदण्डोऽश्वत्रासकरो ऽरत्निमात्रः द्रुघणो मुद्गरः तत्र शक्त्याद्यस्त्रं हस्तमुक्तं शरादिकं यन्त्रमुक्तं शरादिकं यन्त्रमुक्तं मुक्तामुक्तं नागपाशादिकम् अमुक्तं छुरिकादिकमिति चतुर्विधमायुधं प्रसङ्गात्कीर्तितम् ॥ २१ ॥

हे पुरुषादपुरीष ! राक्षसाधम ! "अपस्कृष्टं पुरीषं स्यात् विष्ठवर्चस्कमस्त्रियाम्" इति असता अप्रशस्तकर्मणा त्वया कान्ता सीता नः अस्माकमसमक्षम् अस्मास्वसन्निहितेष्वपहृतेति यस्मात् त्यक्तत्रपस्य निर्लज्जस्य रक्षस्त्वेन जुगुप्सितस्य ते तव तस्य कर्मणः फलं कर्तुमनेकार्थत्वाद्धातूनां दातुमिच्छामि तदाधुना तल्लङ्घनमशक्यमित्याशयेनाह—काल इति । कालोऽन्तकः "कालो मृत्यौ यमे" इति यादवः "वीर्यं पराक्रमे रेतस्यपि माहात्म्ययोरपि" इति रावणः ॥ २२ ॥

सुकृती भुक्तपुण्यः स्वर्गादिव ॥ २३ ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वानरेन्द्राणां बलैरुद्धा विहारादयो यस्याः विहारः क्रीडास्थानं कोष्ठं धान्यागारादि श्रीः कोशः द्वारं गृहद्वारं गोपुरं पुरद्वारं सदः सभा वलभी प्रासादोर्ध्वशिखरगृहं विटङ्कः कपोतपालिका तस्य निर्भज्यमाना धिष्ण्याद्या यस्यां धिष्ण्यं वेदिकादि शृङ्गाटकं चतुष्पथं घूर्णा घूर्णिता ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्तीसारार्थदर्शिनी ।

पुत्रमिन्द्रजितं समाहिनोत् युद्धार्थं प्रायुङ्क्त ॥ १८ ॥
अन्वितः श्रीरामः ॥ १९ ॥

ते रघुपतेरनीकपा अङ्गदाद्याः सर्वे रावणस्य इभादिभिर्द्वन्द्वरूपं सैन्यं तत्र युद्धं यथा भवति तथाऽभिपत्य सङ्गम्य द्रुमादिभिर्जघ्नुः कान् ? सीताया अभिमर्शेन हरणेन हतं मङ्गलं यस्य तथाभूता रावण एव ईशो येषां तान् ॥ २० ॥

यानकं पुष्पकं विमानं रथं वा स्वस्स्यन्दने स्वर्गीयरथे द्योतिमति मातलिना इन्द्रसारथिना उपनीते भ्राजमानं रामम् अहनत् अहन् क्षुरवैः शरैः ॥ २१ ॥

हे पुरुषादपुरीष ! राक्षसानां पुरीषतुल्य ! यद्यस्मादपहृता श्वेव शुना यथा असमक्षमेव गृहं प्रविश्य धनमपहियते तद्वत् अद्य जुगुप्सितस्य कर्मणः कर्तुः कालो यम इव अहं ते फलं यच्छामि ॥ २२ ॥

स बाणाः तस्य रावणस्य से रावणः रिक्तः क्षीणपुण्यः सुकृती विमानादिव न्यपतत् ॥ २३ ॥
मन्दोदर्या रावणभार्यया ॥ २४—२७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यां श्रीरामः अविशत् सा लङ्का गजकुलैः ह्रादिनीव भूशां धर्षिता वानरैरिति शेषः एतदेवाह वानरेन्द्रबलैः रुद्धा विहारावृत्तो यस्यां सा तत्र विहाराः क्रीडाभूमयः कोष्ठानि धान्यादीनाम् श्रियः नानाविभूतयः द्वाराणि गृहादीनाम् यद्वा श्रीयुक्तानि द्वाराणि गोपुराणि पुरद्वाराणि सदःशब्देन सभाः वलभ्यः प्रमादाद्वि पुरोभागरूढाविन्यः विटङ्काः कपोतपालिकाः पुनः कथंभूता निभज्यमानाः धिष्ण्यानि यस्याः सा तत्र धिष्ण्यानि वेदिकादीनि ध्वजाः हेममयाः कुम्भाः शृङ्गाटकाः चतुष्पथाः ॥ १७ ॥

रक्षःपतिः रावणः तत् लङ्कायाः धर्षणं दृष्ट्वा निकुम्भादीन् पुत्रमवलोक्य इन्द्रजितं प्रहस्तादींश्च समाहिनोत् प्रायुङ्क्त ॥ १८ ॥

सुग्रीवादिभिरन्वितः श्रीरामः अङ्गदादिभिर्युतो तां यातुधानपृतनामगात् ॥ १९ ॥

तदा ते अङ्गदाद्याः रघुपतेः अनीकपाः ते सर्वे रावणस्येभादिभिर्द्वन्द्वरूपं सैन्यं तद्युद्धं यथा भवति तथाऽभिपत्य सङ्गम्य सीतायाः अभिमर्शेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् द्रुमादिभिर्जघ्नुः ॥ २० ॥

स्वबलनाशं स्वकीयसैन्यनाशम् अवेक्ष्य यानकं पुष्पकमारुह्य रामम् अभिसार अभ्यपतत् अथ द्युमति सप्रभे स्वःस्यन्दने स्वर्गस्यन्दने इन्द्ररथे मातलिना इन्द्रसारथिनोपनीते विभ्राजमानं क्षुरप्रैः क्षुरधारातुल्यैः निशितैरुज्ज्वलितैर्बाणैः अहनत् अहन् ॥ २१ ॥

हे पुरुषादपुरीष रक्षःपुरीषप्राय ! यद्यस्मात् श्वा यथा कस्यचित् किञ्चिदसमक्षमपहरति तथा ते त्वया नः कान्ता अपहृता तस्मात् अलङ्कृतवर्ष्मणः अनतिक्रमणीयप्रमाणोऽहम् कालः जुगुप्सितस्य कर्मणः कर्तुर्यथा फलं प्रयच्छति तद्वत् जुगुप्सितस्य अद्य यच्छामि ॥ २२ ॥

विमानात् पुष्पकात् सः न्यपतत् यथा रिक्तः क्षीणपुण्यः सुकृती न्यपतति तद्वत् ॥ २३ ॥
मन्दोदर्या समं सह ॥ २४—२७ ॥

———

भाषाटीका ।

तब उस लंका की क्या दशा हुई सो कहते हैं कि—वानरेन्द्रों की सेना ने जब लंकामें प्रवेश किया तब उसने विहार स्थल, धान्य के कोठे, संपत्तिये, [ खजाने ] द्वार, गोपुर, सभायें, और अटा अटारी वे तथा कपोतों के बैठने की जगें इत्यादि सबीस्थलों रोक लिये, और सब कोई वीर लोग बड़े २ धिष्ण्यों [ महलों ] को ढहाने लगे कितने एक ध्वजाओं को तोड़ कर गिराने लगे कितने एक सोने के कलशों को चौंतरे चौराहे इन सबों को तोड़ फोड़ कर गिराने लगे, उस समय लंका ऐसी जान पड़ी कि जानों गजों के यूथों ने तलाई को मचाई हो ॥ १७ ॥

राक्षसों का पति रावण भी यह चरित्र देखकर निकुंभ, कुंभ, धूम्राक्ष, दुर्मुख, सुरांतक नरांतक, इत्यादिक जोधाओं को और अपने पुत्र प्रहस्त को और भी अतिकाय विकंपनादिकों को भी सेनाओं के सहित युद्ध के निमित्त भेजता हुआ तदनंतर कुंभकर्ण को भी भेजता हुआ ॥ १८ ॥

जब वह सेना बाहर निकलने लगी तब उस यातु धानों के सेना को असि, शूल, चाप, प्रास, ऋष्टि, शक्ति, शर, तोमर, खड्ग, इत्यादिक शस्त्रों से बड़ी दुर्गम और भयानक देखकर, आप भी सुग्रीव, लक्ष्मण, मरुत्पुत्र, ( हनुमान् ) गन्धमादन, नील, अंगद, ऋक्ष, पनस, इत्यादि वीरों को लेकर उस सेना के ऊपर जाते हुए ॥ १९ ॥

रावण की सेना के समीप पहुंचकर वे श्रीरघुपति के सेना पति लोग अपने २ समान युद्धके योग्य राक्षसों को देख द्वन्द्व युद्ध के लायक जोड़ीके राक्षसों से भिड़कर समस्त अंगदादिक वीर वृक्षों से, और पर्वत, गदा, बाण, आदिकों से राक्षसों को मारने लगे, कैसे हैं वे राक्षस लोग कि—श्रीसीताजी के स्पर्श मात्र से, नष्ट मंगल होगया रावण रूप ईश ( स्वामी ) जिन का ॥ २० ॥

जब राम बढ़ने मारने २ बहुत से राक्षसों को नष्टकर दिये तब राक्षसेश्वर रावण ने अपनी सेना का नाश देखकर, बड़ा रोष किया और रथमें बैठकर श्रीरामके ऊपर चढ़ाई करके आया, इतने में इन्द्र के सारथि मातलि के लाये हुए स्वर्ग के रथ कांति वाले स्यन्दन पर श्रीरामचन्द्र भी अच्छी प्रकार विराजमान होकर स्थित हुए और आपके ऊपर रावण तीक्ष्ण बाण चलाने लगा ठीक है वीर लोग प्रथम हाथ नहीं छोड़ते हैं ॥ २१ ॥

अपने ऊपर बाण चलते हुए को देखकर, श्रीरामचन्द्र रावण से बोले, कि—हे राक्षसों के मैल ! जैसे कुत्ता कोई सूने घर में घुसकर कुछ वस्तु ले आवे ऐसे तूने आ के हमारी कांता को हमारे सूने काल में हरण कर लाया है सो अब

स्वान्स्वान्बन्धून्परिष्वज्य लक्ष्मणेषुभिरर्दितान्।
रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥ २५ ॥
हा हताः स्म वयं नाथ! लोकरावण! रावण!।
कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ २६ ॥
नैवं वेद महाभाग! भवान् कामवशङ्गतः।
तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥ २७ ॥
कृतैषा विधवा लङ्का वयं च कुलनन्दन!।
देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ २८ ॥

श्रीशुक उवाच।

स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः।
पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥ २९ ॥
ततो ददर्श भगवानशोकवनिकाश्रमे।
क्षामां स्वविरहव्याधिं शिंशुपामूलमास्थिताम् ॥ ३० ॥
रामः प्रियतमां भार्यां दीनां वीक्ष्याऽन्वकम्पत।
आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ३१ ॥
आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः।
विभीषणाय भगवान् दत्वा रक्षोगणेशताम् ॥ ३२ ॥

---

भाषा टीका।

अलंघ्य वीर्य वाला मैं निर्लज्ज ऐसे तोकों काक के सदृश तेरे निन्दित कर्म का फल अबही देता हूँ ॥ २२ ॥

इस प्रकार अधिक्षेप करते हुए, धनुषके ऊपर बाणका सन्धान कर छोड़ दिये, श्रीराघव का वह अमोघबाण वज्र के तरह रावण के हृदय को भेदन करता हुआ, तबतौ रावण भी दशों मुख से रुधिरका वमन करता हुआ रथ पर से नीचे गिरपड़ा जैसे क्षीणपुण्य वाला सुकृती विमान से गिरे अस रावण के गिरने पर राक्षसों ने सब जगह हाहाकार करने लगे ॥ २३ ॥

तदनन्तर लङ्का में से मन्दोदरी के साथ हजारों राक्षसी निकल कर सब रावण के समीप को दौड़ती आई ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

परैरर्दिता पीडिता ॥ २६ ॥ २७ ॥

गृध्राणामन्नं भक्ष्यः नरकहेतवे नरकभोगाय ॥ २८ ॥

साम्परायिकमौर्ध्वदैहिकम् ॥ २९ ॥ ३० ॥

आत्मनः स्वस्य सन्दर्शनेन य आह्लादस्तेन विकसन्मुखपङ्कजं यस्यास्ताम् ॥ ३१ ॥

यानं पुष्पकम् भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्याम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्रेति। तत्र लक्ष्मणस्य बाणैरर्दितान् हतान् स्वान् स्वान् बन्धून् परिष्वज्य आत्मना आत्मानं घ्नन्त्यः दीनाः दुःखिताः सुस्वरं रुरुदुः ॥ २५ ॥

रोदनप्रकारमेवाह--हाहेति त्रिभिः। हेति खेदद्योतकमव्ययं हे नाथ! हे लोकरावण! वयं हताः स्म हतप्राया बभूविम अधुना परैः शत्रुभिरर्दिता पीडिता त्वया हीना रहिता लङ्का लङ्कास्थो जनः कं शरणं यायात् ॥ २६ ॥

नवाहेति। हे महाभाग! भवान् कामवशङ्गतः सीतायास्तेजः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रभावं तेजोरूपं वा प्रभावं मां न वेद न ज्ञातवान् येन तेजोऽनुभावेनेमां दशां नीतः प्राप्तोऽसि ॥ २७ ॥

कृतेति । हे कुलनन्दन ! वयं लङ्का च विधवा कृता येनेत्यनुषङ्गः अयं शयानः देहः गृध्राणां कृतः, भक्ष्य इति शेषः । आत्मा तु नरकहेतवे नरकभोगाय कृतः ॥ २८ ॥

स्वेति । ततः कोसलेन्द्रेण श्रीरामेणानुमोदितो विभीषणः पितृमेधविधानेन पितृमेधविधिना यदुक्तं विहितं तत्साम्परायिकं प्रेतकर्म स्वानां रावणादीनां चक्रे ॥ २९ ॥

तत इति । ततो भगवान् श्रीरामः अशोकवने च आश्रमस्तस्मिन् शिंशुपायां मूलमाश्रितां मूले स्थितां स्वस्य विश्लेष एव व्याधिर्यस्यास्तामत एव क्षामां कृशाम् ॥ ३० ॥

प्रियतमां भार्यामवलोक्यानुकम्पितवान् आत्मनः स्वस्य सन्दर्शनेन च आह्लादस्तेन विकसन्मुखं पङ्कजमिव यस्यास्तां सीताम् ॥ ३१ ॥

यानं पुष्पकमारोप्य भ्रातृभ्यां वालिरावणभ्रातृभ्यां सुग्रीवविभीषणाभ्यां सह हनुमता युक्तो यानमारुरोह रक्षोगणाधिपत्यमाकल्पान्तमायुर्लङ्कां च विभीषणाय दत्त्वा ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्दितान् हिंसितान् "अर्द हिंसायाम्" आत्मानं देहम् उदरमिति यावत् आत्मना देहेन हस्तेन ॥ २५ ॥ २६ ॥

नीतो येन तं नैव वेद ॥ २७ ॥

वयं च विधवाः कृताः देहः गृध्राणाम्, आत्मा जीवो जीवनाय कृतः गृध्रप्राणरक्षणेनापि पुण्यं स्यादिति तत्राह-नरकहेतव इति, नरकदुःखानुभवार्थं भवति ॥ २८ ॥

पितृमेधविधानेन शवदाहादिविधिना साम्परायिकं परलोकसुखसाधनम् ॥ २९ ॥

क्षामामित्यादिकमसुरमोहनार्थम् ॥ ३० ॥ ३१ ॥

भ्रातृभ्यां लक्ष्मणविभीषणाभ्यां विभीषणस्य भ्रातृत्वमुपचारः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततो ददर्श सीतामिति शेषः ॥ ३०—४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अर्थं भक्ष्यं नरकहेतवे नरकभोगाय ॥ २८ ॥

साम्परायिकमौर्ध्वदैहिकम् ॥ २९—३१ ॥

सीताम् आरोप्य भ्रातृभ्यां सुग्रीवलक्ष्मणाभ्याम् आरुरुहे यानं पुष्पकं हनुमद्युतः हनुमता सह युत् साहित्यं प्राप्य "युमिश्रणे" माधविकयन्तल्ल्यब्लोपे पञ्चमी ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नरकहेतवे नरकभोगाय कृतः ॥ २८ ॥

साम्परायिकम् और्ध्वदैहिकं स्वानां रावणादीनां चक्रे ॥ २९ ॥

स्वस्य विरहेन वियोगेन व्याधिर्यस्याः अत एव क्षामां कृशाम् ॥ ३० ॥

दीनां वीक्ष्य अन्वकम्पत तदनन्तरम् आत्मसन्दर्शनेन च आह्लादस्तेन विकसत् प्रमुदितं मुखपङ्कजम् यस्यास्ताम् ॥ ३१ ॥

यानं पुष्पकम् आरोप्य पश्चात्स्वयं हनुमद्युतः भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्यां सह आरुरुहे सुग्रीवस्य श्रीरामभ्रातृत्वं सख्यविधाय कपिभिरित्यनेनोक्तं रक्षोगणेशतामाकल्पमायुः लङ्कां च विभीषणाय दत्त्वा विभीषणेन सहैव पुरीं ययौ पादुके भरतोऽगृह्णात् चामरव्यजनोत्तमे विभीषणः स सुग्रीव इति वक्ष्यमाणात् कथंभूतः चीर्णव्रतः तीर्णवनवासलक्षणं व्रतं येन सः ॥ ३२ ३३ ॥

---

भाषा टीका ।

संग्राम में लक्ष्मणजी के बाणों से मरे हुए अपने २ पतियों को आलिङ्गन करके बहुत दीन होकर छाती कूट कूट कर सुन्दर स्वरसे रोने लगीं ॥ २५ ॥

हा नाथ ! हे लोकके रुलाने वाले ! हे रावण महाराज ! हमसब आप के बिना हतहुई और अब यह लङ्का शत्रुओं से पीडित होकर किस के शरण जावे ॥ २६ ॥

हे महाभाग ! आप काम के वश होकर सीता का ऐसा तेज और प्रभाव नहीं जानते रहे इसी से इस दशा को प्राप्त हुए ॥ २७ ॥

हे कुलनन्दन ! इस लङ्का को और हमको आपने दोनों को विधवाकर दीनी और अपने देह को गृध्रों का भोजन करदिया और आत्मा नरकके लिये तयार किया ॥ २८ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-उस समय कोसलेन्द्र राजाधिराज श्रीरामचन्द्रजी के अनुमोदन [समुझाने]में अपने बन्धुओं का पितृमेध विधान से जो शास्त्रोक्त अन्तकाल का कृत्य है उसको विभीषणजी करते हुए ॥ २९ ॥

तदनंतर भगवान् श्रीरामचन्द्रजी अशोक वाटिका के विषे, अतिकृश, मानो मूर्त्तिमती विरह की व्याधि होवे, इस प्रकार की शिंशुपा वृक्ष के मूलके समीप बैठी हुई अति दीन अपनी प्रियतमा भार्या श्रीसीता को देखकर बड़ी अनुकंपा करते हुए और उसी समय अपने दर्शन से भया जो आह्लाद उससे विकास को प्राप्त हुआ मुखपंकज जिनका ऐसी श्री जानकीजी को देखते हुए ॥ ॥ ३०-३१ ॥

तदनंतर विभीषणजी को लंका का राज देकर राक्षस गणों के ईश बनाकर श्री सीताजी को पुष्पक विमान पर चढ़ाकर भ्रातासे भी अधिक मित्र सुग्रीव और भ्राता लक्ष्मणजीके सहित तथा हनुमानजी के सहित भगवान् भी विमान पर बैठते हुए ॥ ३२ ॥

लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ।
अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ३३ ॥
उपगीयमानचरितः शतधृत्यादिभिर्मुदा ।
गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ ३४ ॥
महाकारुणिकोऽतप्यज्जटिलं स्थण्डिले शयम् ।
भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ ३५ ॥
पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ।
नन्दिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ॥ ३६ ॥
ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ।
स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ ३७ ॥
सदश्वैरुक्मसन्नाहैर्भटैः पुरटवर्मभिः ।
श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ ३८ ॥
पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ।
पादयोर्न्यपतत्प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ ३९ ॥
पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ।
तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आयुश्च दत्त्वा तेनापि सहैव ययौ ॥ ३३ ॥

गोमूत्रपक्वयवान्नभोजनं भ्रातरं भरतम् ॥ ३४ ॥ ३५ ॥

स्वशिबिराद्ग्रामं विना अयोध्यामप्रविशन् स्वस्य वासं यत्र निर्मितवांस्तस्मात्सकाशाद्गीतादिभिर्युक्तो रामं प्रत्युद्यतोऽभिमुखं ययौ ॥ ३६ ॥

ब्रह्मघोषेण महता घोषेण पठद्भिः स्वर्णरमाक्ताः कक्षाः प्रान्ता यासां ताभिः पताकाभिर्हैमैरिति चत्वारि रथविशेषणानि ॥ ३७—३८ ॥

पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि प्रेम्णा प्रक्लिन्नं हृदयमीक्षणे नेत्रे च यस्य ॥ ३९ ॥

नेत्रजैर्जलैः स्नापयन्नाश्लिष्य ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चीर्णमनुष्ठितं व्रतं पितुरनुशासनरूपं येन स भगवान् श्रीरामः पुरीमयोध्यां विभीषणेन सहैव ययौ, कथंभूतः ? पथि लोकपालैरिन्द्रादिभिरर्पितानि यानि कुसुमानि तैरवकीर्यमाणः ॥ ३३ ॥

शतधृत्यादिभिर्ब्रह्मादिभिः मुदा हर्षेण उपगीयमानं चरितं यस्य तथाभूतः पुरीं ययावित्यन्वयः । गोमूत्रपक्वयवान्नभोजनं वल्कलमम्बरं यस्य जटा यस्य सन्तीति तथा स्थण्डिले दर्भैरास्तीर्णे भूप्रदेशे शेत इति तथाभूतं भ्रातरं भरतं श्रुत्वा महाकारुणिको भगवान् अतप्यत परितताप भरतः प्राप्तं पुरीमागच्छन्तं तं श्रीराममाकर्ण्य पादुके स्वशिरसि निधाय पौरैरमात्यैः पुरोहितैः गीतैः वाद्यानां निःस्वनैः ॥ ३४—३६ ॥

ब्रह्मवेदं मुहुर्मुहुः घोषेण उच्चैःस्वरेण पठद्भिः ब्रह्मवादिभिः स्वर्णसक्ताः कक्ष्याः प्रान्ताः यासां ताभिः पताकाभिः रथैः स्वर्णकवचधारिभिर्भटैः श्रेणीभिस्तास्मूर्त्तिकैः वाराङ्गनाभिर्वाभिरुपायनोद्वहैरुपायनधारिभिर्भृत्यैश्च सहाग्रजं श्रीरामं स्वशिबिरान्नन्दिग्रामात् प्रत्युद्यतः अभिमुखं ययावित्यन्वयः । रामं विनाऽयोध्यामप्रविशन् भरतो नन्दिग्रामे स्वस्य वासं निर्मितवान् तस्मात् शिबिरात् ययावित्यर्थः । कथंभूतैः रथैर्हैमैः स्वर्णमयैः चित्रा ध्वजा येषु सन्तः समीचीना अश्वाः येषां रुक्ममयाः सन्नाहाः बन्धना येषु तैः ॥ ३७ ॥ ३८ ॥

पारमेष्ठ्यानि महाराजार्हाणि नानाविधानि छत्रचामरादीनि उपादाय प्रत्युद्यत इति पूर्वेणान्वयः । प्रेम्णा प्रक्लिन्नमार्द्रीभूतं हृदयमीक्षणे च यस्य सः ॥ ३९ ॥

प्रीत्या पादुके पुरतो निधाय पादयोरपतत् ततः प्राञ्जलिः

रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ।
तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ ४१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बाष्पलोचनस्तस्थाविति शेषः ततः श्रीरामः तं भरतं दृढं गाढं यथा तथा दोर्भ्यामालिङ्ग्य नेत्रजैर्हर्षाम्बुभिः स्नापयन् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चीर्णव्रतः पूर्णवनवासव्रतः ॥ ३३ ॥

शतभृत्यादिभिः ब्रह्मादिभिः गोमूत्रेण सह पक्वयावकाहारं भ्रातरं भरतम् ॥ ३४—३६ ॥

स्वर्णकक्ष्यैः सुवर्णमयीः कक्ष्याः उदरबन्धो येषां ते तथा तैर्हैमैर्हेमालङ्कृतैश्चित्रा नानावर्णा ध्वजाः येषां तैः ॥ ३७ ॥

रुक्मसन्नाहैः स्वर्णनिर्मिताः सन्नाहाः कवचानि येषां तैः पुरटं सुवर्णं श्रेणीभिरक्रूरश्चकैर्भृत्यैर्दासैः पारमेष्ठ्यान्यनर्घत्वेन प्रशस्तानि भाण्डानि अश्वाभरणानि पिठराद्युपकरणानि च ॥ ३८ ॥ ३९ ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गोमूत्रयावकं गोमूत्रपक्वयवान्नभोजिनम् ॥ ३४ ॥ ३५ ॥

स्वशिबिरात् स्वीयसैन्यस्थानात् गीतादिभिर्युक्तः पठतां ब्रह्मवादिनां वेदघोषेण च स्वर्णरसोकनाः कक्षाः प्रान्ता यासां ताभिः पताकाभिः पुरटवर्मभिः स्वर्णकवचयुक्तैः पारमेष्ठ्यानि छत्रचामरादिराजचिह्नानि पण्यानि बहुमूल्यानि रत्नादीनि च ॥ ३६-४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोमूत्रपक्वयवान्नभोजिनं वल्कलमम्बरं यस्य तम् ॥ ३४ ॥

जटाः अस्य सन्तीति जटिलस्तं भ्रातरं तं श्रुत्वा अतप्यत् ॥ ३५ ॥

भरतः अग्रजं प्राप्तमाकर्ण्य पादुके शिरसि न्यस्य गीतादिभिस्सह नन्दिग्रामात् प्रत्युद्यायौ अभिमुखं ययावित्यन्वयः रामं विना अयोध्यामप्रविशन् अस्य वासं यत्र निर्मितवान् तस्मात् स्वशिबिरात् गीतैर्वाद्यानां निस्वनैश्च ॥ ३६ ॥

ब्रह्मघोषेण महता घोषेण पठद्भिर्ब्रह्मवादिभिश्च सह स्वर्णमयाः कक्षाः प्रान्ताः यासां ताभिः पताकाभिः हैमैरिति चत्वारि रथविशेषणानि हैमैः स्वर्णमयैः चित्रा ध्वजा येषु ॥ ३७ ॥

सप्त अश्वा येषां रुक्ममयाः सन्नाहा येषु तैः ॥ ३८ ॥

पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि प्रक्लिन्नं हृदयम् हृदये नयने च यस्य सः ॥ ३९ ॥

पादुके पुरतो न्यस्य पादयोर्निपतत् रामोपि तं भरतं नेत्रजैर्जलैः स्नापयन् आश्लिष्य ॥ ४० ॥

---

भाषा टीका ।

और विभीषण जी को लंका और कल्पांत आयु को देकर प्रस्थान करने वाले श्रीकोसलेश मार्ग में लोकपालों के वर्षाये हुए पुष्पों से सुशोभित होते हुए ॥ ३३ ॥

और विमान के चढ़ने के पूर्व में बड़े आनन्द से ब्रह्मादिक देवताओं ने श्रीराम के चरित गान किये और स्तुतिकरी ॥ जब विमान पर विराजमान होकर विमान को चलाया और नंदिग्राम के समीप जब विमान पहुंचा तब वहां पर अपने भ्राता भरतजी की ऐसी चर्चा सुनी कि एक मुष्टिजवों के गोमूत्र में रांधकर भोजन करते हैं और वल्कलों को पहिनते हैं ॥ ३४ ॥

तब तो महाकारुणिक श्रीराघव बड़ा अनुताप करते हुए, और पुरवासी लोगों से मंत्रियों से तथा पुरोहितों से भ्राता भरत के जटा धारण के तथा पृथिवी में सोने के समाचार सुन कर श्रीरामचन्द्र को और भी दुःख भया ॥ ३५ ॥

भरतजी ने भी श्रीराम के आगमन के समाचार सुनकर बड़े हर्ष में डूबकर प्रभु की पादुकाओं को अपने माथे पर धर कर अपने निवास नंदिग्राम से गाजे बाजे के कोलाहल से अपने बड़े भ्राता श्रीरामचन्द्रजी के सन्मुख चले, ॥ ३६ ॥

और वेद वेदांग जानने वाले ब्राह्मणों के झुंड के झुंड वेद पाठ करते हुए आगे चले, और सोने की ध्वजायें जिनों में शोभा देती हैं ऐसे सुनहरी साज के रथों के सहित ॥ ३७ ॥

तथा सुनहरी साज के सजे हुए उत्तम घोड़ाओं सहित सुनहरी कवच वाले जोधाओं सहित सेठ साहूकारों सहित, वारमुखी, और पैदल भृत्य लोगों सहित ॥ ३८ ॥

राजाओं के योग्य छत्र चामरादि चिन्हों को और छोटी मोटी बाजार की वस्तुओं को लेकर सब लोगों सहित भरतजी आपके चरणों में भेटकर आर्द्र हृदय और आर्द्र नेत्र वाले होकर चरणों में गिर पड़े ॥ ३९ ॥

प्रभु के सन्मुख पादुका धरदीनी और हाथ जोड़कर नेत्रों में आंसु भर लाये ॥ तब तो भरतजी को दोनों हाथों से बहुत काल पर्यंत आलिंगन कर श्रीराघव भरत को नेत्रों के जलों से स्नान कराते हुए ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

येऽर्हसत्तमाः कुलवृद्धास्तेभ्योऽपि नमनं चक्रे ॥ ४१—४२ ॥

धुन्वन्त उत्तरासङ्गान् पतिं वीक्ष्य चिरागतम् ।
उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ॥ ४२ ॥
पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ।
विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ ४३ ॥
धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ।
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ! ॥ ४४ ॥
पुष्पकस्थोऽन्वितः स्त्रीभिः स्तूयमानश्च वन्दिभिः ।
विरेजे भगवान्राजन् ग्रहैश्चन्द्र इवोदितः ॥ ४५ ॥
भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत्पुरीम् ।
प्रविश्य राजभवनं गुरुपत्नीः स्वमातरम् ॥ ४६ ॥
गुरून्वयस्यावरजान् पूजितः प्रत्यपूजयत् ।
वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ ४७ ॥
पुत्रान् स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ।
आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अयोध्याप्रवेशप्रकारमाह—पादुके इति सार्धैस्त्रिभिः ॥ ४३ ॥

धनुश्च निषङ्गौ च तान् ऋक्षराट् जाम्बवान् ॥ ४४—४५ ॥

गुरुपत्नीः कैकेय्याद्याः ॥ ४६ ॥

वयस्यानवरजांश्च यथावदनुक्रमेण समुपेयतुः ॥ ४७ ॥

बाष्पौघैरभिषिञ्चन्त्यः शुचः शोकान् विजहुः शेषं स्पष्टम् ॥ ४८ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लक्ष्मणसीताभ्यां सह विप्रेभ्यो ये चार्हसत्तमाः नमस्कार्याः कुलवृद्धास्तेभ्यश्च स्वयं ननाम स्वयं प्रजाभिर्नमस्कृतश्च ॥ ४१ ॥

उत्तराः कोसला उत्तरकोसलदेशस्था जनाः चिरागतं पतिं श्रीराममवलोक्य माल्यैः पुष्पैः किरन्तः उत्तरासङ्गानुत्तरीयान् विधुन्वन्तश्चालयन्तो ननृतुः ॥ ४२ ॥

अयोध्याप्रवेशप्रकारमाह—त्रिभिः सार्धैः । भरतः पादुके अगृह्णात् विभीषणः सुग्रीवश्च व्यजनोत्तमे अगृह्णीतां मरुत्सुतो हनुमान् श्वेतातपत्रम् ॥ ४३ ॥

धनुश्च निषङ्गौ च तान् शत्रुघ्नः अगृह्णादित्यनुषङ्गः । सीता तीर्थकमण्डलुमबिभ्रत्, हे नृप ! अङ्गदः खड्गं हैमं स्वर्णखचितं चर्म खेटम् ऋक्षराट् जाम्बवान् अबिभ्रत् ॥ ४४ ॥

हे राजन् ! भगवान् श्रीरामः पुष्पकस्थः स्त्रीभिः परिवृतः वन्दिभिः स्तूयमानश्च यथोदितश्चन्द्रो ग्रहैर्गुरुशुक्रादिभिर्विराजते तथा विरेजे बभ्राज ॥ ४५ ॥

भ्रातृभिर्भरतादिभिः नन्दितोऽनुमोदितः उत्सवेन सहितश्च स भगवान् पुरीमयोध्यां प्राविशत् ततो राजभवनं प्रविश्य गुरुपत्नीः कैकेय्याद्याः स्वमातरं कौसल्याम् ॥ ४६ ॥

गुरून् वसिष्ठादीन् वयस्यान् वयस्याधिकान् अवरजांश्च कुलीनान् यथायोग्यं तैः पूजितः प्रत्यपूजयत् तथा वैदेही लक्ष्मणश्च यथावत् यथायोग्यं पूजयन्तौ पूजितौ च समुपेयतुः राजभवनमित्यनुषङ्गः ॥ ४७ ॥

मातरः कौसल्यादयः सुतान् प्राप्य स्वाः स्वकीयाः तन्वः देहाः प्राणान् प्राप्य यथोत्थिता भवन्ति तद्वदुत्थिताः सत्यः अङ्के आरोप्य हर्षजैर्बाष्पबिन्दुसङ्घैः सिञ्चन्त्यः शुचः शोकान् विजहुः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततस्तत्र ये विप्रा अनमंस्तेभ्यः ॥ ४१ ॥

उत्तरासङ्गम् उत्तरीयवस्त्रं धुन्वन्तः कम्पयन्तः ॥ ४२ ॥ ४३ ॥

निषङ्गं तूणीरम् ऋक्षराट् जाम्बवान् ॥ ४४—४७ ॥

गत्वा गतान् प्राणानवाप्य तन्वः तनवः यथोत्थिता भवन्ति तथा विरहशुचः ॥ ४८ ॥

**जटा निर्मुच्य विधिवत्कुलवृद्धैः समं गुरुः ।**
**अभ्यषिञ्चद्यथैवेन्द्रं चतुस्सिन्धुजलादिभिः ॥ ४९ ॥**

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पादुकेत्यत्रैकं बाष्पलोचनोऽभूदिति शेषः ॥ ४३-५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उत्तराः कोसलाः अयोध्यावासिनः उत्तरासङ्गान् उत्तरीयान् धुन्वन्तः कम्पयन्तो ननृतुः ॥ ४२ ॥

अयोध्याप्रवेशप्रकारमाह-पादुके अगृह्णात् भरतोऽग्रवर्ती बिभीषणसुग्रीवौ पार्श्वद्वयवर्त्तिनौ चामरव्यजनहस्तौ श्वेतच्छत्रधारी हनुमान् पृष्ठवर्ती ॥ ४३-४५ ॥

गुरुपत्नीः कैकय्याद्याः स्वमातरं कौसल्याञ्च ॥ ४६ ॥

गुरूनन्यांश्च गुरुलोकान् वन्दित्वा वयस्यानवरजांश्च प्रत्यपूजयत् तैः पूजितस्तान् यथावत् यथोचितं वन्दनादिभिः सम्यगुपेयतुः ॥ ४७—५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लक्ष्मणसीताभ्यां सह विप्रेभ्यो येऽर्हसत्तमास्तेभ्यश्च नमश्चक्रे कथम्भूतः ? प्रजाभिर्नमस्कृतः ॥ ४१ ॥

पतिं श्रीरामं वीक्ष्य उत्तराः कोसला उत्तरकोसलदेशवासिनः उत्तरासङ्गान् उत्तरीयान् धुन्वन्तो भ्रामयन्तः माल्यैः किरन्तः ननृतुः ॥ ४२ ॥

पुरीप्रवेशोत्सवं वर्णयति-पादुके इत्यादिना। चामरव्यजनोत्तमे सुग्रीवसहितो बिभीषणः अगृह्णात् उभे उभौ अगृह्णताम् ॥ ४३ ॥

धनुर्निषङ्गौ च तान् शत्रुघ्नः अक्षराट् जाम्बवान् ॥४४॥ ४५ ॥

गुरुपत्नीः कैकेय्याद्याः मातरं कौसल्याम् ॥ ४६ ॥

गुरून् वसिष्ठादीन् वयस्यान् अवरजांश्च वैदेही लक्ष्मणश्च यावत् यथोचितं पूजयन्तौ पूजितौ च समुपेयतुः राजभवनमित्यनुषङ्गः ॥ ४७ ॥

पुत्रान् श्रीरामादीन् मातरः श्रीकौसल्याद्याः बाष्पौघैरानन्दाश्रुधाराभिरभिषिञ्चन्त्यः शुचः शोकान् जहुः ॥ ४८—५६ ॥

---

भाषा टीका ।

और जो पूजनीय कुल वृद्ध वसिष्ठ आदिक ब्राह्मण लोग आये उन सबों को लक्ष्मण और सीताजी समेत स्वयं आप श्रीराघव नमस्कार करते हुए, और प्रजा लोग सब आपको नमस्कार करते हुए ॥ ४१ ॥

उत्तर कोसल देश वासी जन बहुत काल में आए हुए अपने पति को देखकर अपनी २ ओढने की पिछौरियों को फिर फिरा कर आनंद से नाचने लगे और अपने प्रभु के ऊपर मालाओं की वर्षा करने लगे ॥ ४२ ॥

उस समय में भरतजी ने पादुका उठा लीनी, बिभीषण ने और लिया सुग्रीव ने उत्तम व्यजन ग्रहण किया और हनुमान जी श्वेत छत्र को धारण करते हुए ॥ ४३ ॥

धनुष और बाणों से भरे हुये दोनों तरकसों को शत्रुघ्नजी ने लिये सीताजी तीर्थों के कमंडलु को लीनी हुई हे नृप ! अंगदने खड्ग लिया और जांबवानने सुवर्णमय ढाल ग्रहण कीनी ॥४४॥

फिर नंदिग्राम से पुष्पक विमान में सब लोग चढकर जब चले तब हे राजन् ! पुरवासिजन और स्त्रीजन और परिजन सहित भगवान् श्रीराघव कैसी शोभा को प्राप्त हुए कि जैसे तारागणों में चन्द्र मा उदय हो। उस समय वंदीजन भी आपकी स्तुति करने लगे ॥ ४५ ॥

श्रीरामचन्द्रजी भी अयोध्यामें पहुँचकर भ्राता लोगों से अभिनन्दित होकर नानाप्रकार के उत्सव वाली पुरी में प्रवेश करते हुए तदनन्तर राज भवन में प्रवेश कर जितनी दशरथ महाराज की केकयी प्रभृति रानी रहीं उनको तथा अरुन्धती प्रभृति विप्र पत्नियों को और अपनी माताको भी नमस्कार कर पूजा करते हुए ॥ ४६ ॥

तथा गुरुजनों की पूजा करते हुए तथा अपने सखा लोग और छोटे भ्राताओं से आप पूजित होकर उनकाभी प्रति पूजन करते हुए तथा वैदेही और लक्ष्मणजीभी सबों को यथा योग्य मिलते भेटते हुए ॥ ४७ ॥

दशरथ महाराज की साढे तीन सौ रानी श्रीरामचन्द्रजीकी मातायें अपने पुत्रों को आए हुए देखकर जैसेप्राणों के आने पर शरीर सचेत होजाते हैं इसी प्रकार सचेत होकर अपने पुत्रों को गोदमें बैठा कर नेत्र जलों से अभिषेक कराती हुई अपने शोकको त्यागकरती भई ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम्

दशमोऽध्यायः ॥ १० ॥

---

एवं कृतशिरस्स्नानः सुवासाः स्रग्व्यलङ्कृतः ।
स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ ५० ॥
अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ।
जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥ ५१ ॥
त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ।
रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ ५२ ॥
वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ।
सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ! ॥ ५३ ॥
नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ।
मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥ ५४ ॥
एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ।
स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् ॥ ५५ ॥
प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ।
धिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे रामचरिते
दशमोऽध्यायः ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो गुरुर्वसिष्ठः कुलवृद्धैः समं सह विधिवत् जटाः निर्मुच्य चतुस्सिन्धुजलादिभिः आदिशब्दाद्गङ्गायमुनाजलादिभिश्च श्रीरामम् इन्द्रमिवाऽभ्यषिञ्चत ॥ ४९ ॥

एवं कृतं शिरःस्नानं येन शोभने वाससी यस्य सः सुष्ठु यथा तथा अलङ्कृतः श्रीरामः स्वलङ्कृतैः सुवासोभिः भ्रातृभिः भार्यया च तथाभूतया बभौ ॥ ५० ॥

ततो भ्रात्रा भरतेन प्रणिपत्य प्रसादितः प्रार्थितः सिंहासनमग्रहीत् तदा विषयवासिन्यः प्रजाः स्वधर्मनिरताः, तदेवाह वर्णानामाश्रमाणां च ये गुणधर्माः पञ्चमहायज्ञादयः तैरन्विताः बभूवुः पिता यथा पाति तद्वद्रामः प्रजाः जुगोप ताश्च तं रामं पितरं मेनिरे अमन्यत ॥ ५१ ॥

तदा त्रेतायां वर्तमानायां त्रिपाद्धर्मयुक्ते त्रेतायुगे प्रवर्तमानेऽपि चतुष्पाद्धर्मयुक्तकृतयुगतुल्यः कालो बभूव भूतानां सुखकरे श्रीरामे धर्मज्ञे राजनि सति ॥ ५२ ॥

तदा वनादयः सर्वे प्रजानां कामदुघाः काम्यमानफलादिप्रदाः आसन् तत्र वर्षाणि रम्यकादीनि द्वीपाः सिंहलादयः सिन्धवः समुद्राः हे भरतर्षभ ॥ ५३ ॥

तदा अधोक्षजे श्रीरामे राजनि सति तदा आध्यादयः अनिच्छतां मृत्युश्च नासन् तत्र आधिर्मनःपीडा व्याधिः शरीरजा दुःखमर्तातपुत्रमरणस्मृत्यात्मकं प्रतिकूलं ज्ञानं शोकः वर्तमानेष्टवस्तुविश्लेषजः भयमागाम्यनिष्टदर्शनजं यद्यप्याधिनिषेधेनैवैतत्त्रयं निषिद्धं तथापि तत्प्रपञ्चार्थमिदं क्लमो ग्लानिः ॥ ५४ ॥

एकपत्नीव्रतधरः स्त्र्यन्तरपरिग्रहरहितः राजर्षेरिव चरितं यस्य सः शुचिः रागादिप्राकृतगुणरहितः गृहस्थस्य विहितान् स्ववर्णाश्रमानुकूलांश्च धर्मान् लोकस्य शिक्षयन् स्वयमाचरत् लोकसङ्ग्रहार्थमाचरदित्यर्थः ॥ ५५ ॥

प्रश्रयेण विनयेनावनता नम्रा भावज्ञा अभिप्रायज्ञा सती सीता प्रेमादिभिर्भर्तुः श्रीरामस्य मनो जहार तत्र प्रेम प्रीतिः अनुवृत्तिः परिचर्या शीलं सुस्वभावः सद्वृत्तिश्च धीर्मेधा ह्रीः लज्जा ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
दशमोऽध्यायः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरवंसिष्ठः ॥ ४६—५० ॥

सिंहासनपद्मासनम् । अत्रागमे हेतुमाह, भ्रात्रेति. भ्रात्रा भरतेन ॥ ५१—५३ ॥

अनिच्छतां मरणमिति शेषः ॥ ५४ ॥ ५५ ॥

अनुवृत्त्या शुश्रूषया शीलेनानुकूलस्वभावेन प्रश्रयेण विनीतेन अवनता ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥१० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
दशमाऽध्यायार्थप्रकाशः ॥ १० ॥

---

भाषा टीका ।

भरत जी सहित श्रीराम के जटाओंके उतारने के पीछे कुलवृद्धों के सहित कुलगुरु श्रीवसिष्ठजी ने चारों समुद्रों के जलों से इन्द्र के नाईं श्रीराघव का अभिषेक किया ॥ ४९ ॥

इस प्रकार सुन्दर माथे से स्नानकर सुन्दर वस्त्र माला अलङ्कारों को भार्यासहित धारणकर वस्त्र भूषणों से अलंकृत अपने भ्राताओं सहित श्रीरामचन्द्रजी परमशोभा को प्राप्त होते हुए ॥ ५० ॥

भ्राता भरत ने बहुत प्रणाम करके श्रीरामको जब प्रसन्न किये तब श्रीराघवने राजासन को ग्रहण किया उस समय पर प्रजा लोग अपने २ धर्म में निरत और वर्णाश्रम के गुणों से युक्त होकर वर्त्तते रहे। ऐसी प्रजाका श्रीरामचन्द्रजी पिता के सदृश पालन करते हुए और सकल प्रजा भी श्रीराम को पिता सदृश मानती रही ॥ ५१ ॥

सर्वप्राणियों के सुख देने वाले धर्मज्ञ श्रीरामचन्द्र के राज्यहोने पर त्रेताके वर्त्तमान होने पर भी कृतयुग सदृश काल होता भया ॥ ५२ ॥

हे भरतश्रेष्ठ ! उस समय पर वन, नदियें, गिरि, और भारतादिक वर्ष, जम्बू इत्यादि द्वीप और समुद्र ये सबही प्रजाओं के कामना पूर्ण करने वाले होते हुए ॥ ५३ ॥

अधोक्षज श्रीरामको राजा होने पर जनों को आधि, (मनको ताप) व्याधि, जरा, ग्लानि, दुःख, शोक, भय, क्लम ये सब नहीं होते हुए। तथा नहीं इच्छा करने वालों की मृत्युभी रामराज्य में नहीं हुई [ अर्थात् सब प्रजा साथही में साकेत धाम गये ] ॥ ५४ ॥

श्रीराघव भी एकपत्नी व्रत धारण कर राज ऋषियों के चरित वाले परम शुचि होकर अपने गृहमेधीय धर्म की शिक्षा करते हुए आप भी आचरण करते हुए ॥ ५५ ॥

और परम सती श्रीसीता जी भी प्रेमसे, अनुवर्त्तन से, शील से, बुद्धि से, लज्जा से, सदा नम्र होकर अपने प्रभु के अभिप्राय को जानती हुई भर्त्ता के मनको हरन करती भई ॥ ५६ ॥

इति श्रीमद्भागवत नवमस्कन्ध में दशम अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत-
भाषा टीका समाप्ता ॥ १० ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे दशमोऽध्यायः ॥ १० ॥

—————○:※:○—————

## ॥ एकादशोऽध्यायः ॥

——○:०:○——

श्रीशुक उवाच ।

भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः ।
सर्वदेवमयं देवमीजे आचार्यवान्मखैः ॥ १ ॥
होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ।
अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥
आचार्याय ददौ शेषां यावती भूस्तदन्तरा ।
मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥
इत्ययं तदलङ्कारवासोभ्यामवशेषितः ।
तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥
ते तु ब्रह्मण्यदेवस्य वात्सल्यं वीक्ष्य संस्तुतम् ।
प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥
अप्रत्तं नस्त्वया किं नु भगवन्! भुवनेश्वर! ।
यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥ ६ ॥
नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ।
उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥ ७ ॥
कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ।
चरन्वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततश्चैकादशे योध्यामावसन्ननुजैः सह ।
यज्ञादि यज्ञकारेशो रामस्तदनुवर्ण्यते ॥
॥ १—२ ॥

तदन्तरा तासां दिशां मध्ये यावती भूस्तां ब्राह्मण एवार्हतीति मन्यमानः ॥ ३ ॥

अयं श्रीरामः ततश्च सौमङ्गल्यमाभरणादिकं तावन्मात्रमवशेषितं यस्याः तद्व्यतिरिक्तं हिरण्यादि सर्वं ददावित्यर्थः ॥४-५॥

किमप्रत्तं किमदत्तम्? सर्वं दत्तमित्यर्थः । विश्य प्रविश्य ॥६॥

न्यस्तदण्डैर्मुनिभिरर्पितौ चित्ते न्यस्तावङ्घ्री यस्य तस्मै तेष्वर्पितावङ्घ्री येनेति वा ॥ ७—९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवान् श्रीरामः उत्तमैर्वसिष्ठादिभिः कल्पितैः कारितैः मखैः क्रतुभिः सर्वदेवमयं स्वात्मानमेवात्मनैवाचार्यवान् सन् ईजे इयाज ॥ १ ॥

होत्र इति । तत्र होत्रे प्राचीं दिशं दक्षिणामदात् ब्रह्मणे तु दक्षिणां दिशम् अध्वर्यवे प्रतीचीं सामगायिने उद्गात्रे तूदीचीम् दिशम् ॥ २ ॥

तदन्तरं तासां दिशामन्तरा मध्ये यावती भूमिरवशिष्टा तां

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वामाचार्याय ददौ, कथम्भूतः ? इदं कृत्स्नं भूमण्डलं ब्राह्मणोऽर्हति प्रतिग्रहीतुमिति शेषः । इतीत्थं मन्यमानः निस्पृहश्चेति तथा समीचीनालङ्काराभावात् एवं सर्वं दत्त्वा केवलं वाससोर्द्वयं परिधानीयोत्तरीयाख्याभ्यामवशेषितः, तथा राज्ञी वैदेही सीतापि भर्तुरभिप्रायज्ञा सर्वानलङ्कारान् प्रदाय केवलं सौमङ्गल्यमात्रेणावशेषिता बभूव ॥ ३ ॥ ४ ॥

ते होत्रादयो ब्राह्मणा ब्राह्मणा एव दैवतं यस्य तस्य श्रीरामस्य स्वस्मिन् तद्वदान्यत्वयुक्तं वात्सल्यमवलोक्य प्रीताः क्लिन्नधियः आर्द्रचित्ताः सन्तः तस्मै रामाय प्रत्यर्प्य प्राध्वर्यादिदत्तं इति शेषः इदं प्रतिग्रहीतुं वयं नार्हा इति विज्ञाप्येत्यर्थः । ननु प्रतिगृह्य प्रत्यर्प्येत्यर्थः । दत्तद्रव्यप्रत्यादानदोषापादनात् एतच्च विग्रहद्वारा विद्या देयपि प्रतिग्रहीतुं होत्रादीन् प्रार्थितवानित्यर्थः । इदं वक्ष्यमाणं समाषिरे ॥ हे भगवन् त्वया नोऽस्माकं यदप्रदत्तमप्रदत्तं किन्तु सर्वमपि प्रदातुमुद्युक्तोऽसीत्यर्थः । तत्र हेतुं वदन्तो विशिंषन्ति परमेश्वरः परो मा यस्मात्सपरमश्चासावीश्वरश्च स्वतएवाप्तसमस्तकामस्य तव किमेतैरितिभावः । किञ्च निरतिशयपुरुषार्थरूपमोक्षप्रदानाय तत्साधनसम्यग्ज्ञानविरोध्यज्ञानमस्माकमन्तर्हृदये प्रविश्य हंसि निरस्यसि, केन ? स्वरोचिषा स्वप्रकाशेन तस्यैवंभूतस्य आत्मपर्यन्तवदान्यस्य कियदेतत्प्राध्वर्यादिदिक्प्रदानमिति भावः ॥५।६॥

त्वद्गुणान्वर्णयितुं न शक्नुम इत्यभिप्रायेण कैश्चिद्गुणैर्विशिंषन्तो नमस्कुर्वन्ति–नम इति । ब्रह्मणि ब्रह्मकुले साधुर्ब्रह्मण्यः "तत्र साधुः"इति यत्प्रत्यये "ये चाभावकर्मणोः"इति प्रकृतिभावः स चासौ देवः स्वतेजसा दीप्यमानः ब्रह्मण्यानां देवः श्रेष्ठो वा अकुण्ठमेधसे नित्यासङ्कुचितापरिच्छिन्नज्ञानाय उत्तमश्लोकानां धुर्योऽग्र्यः मुख्यः न्यस्तदण्डैर्मुनिद्रोहरहितैः सर्वभूतसुहृद्भिर्मुनिभिरर्पितो चित्ते निहितावङ्घ्री यस्य न्यस्तदण्डैरर्पिता वङ्घ्री येनेति वा तस्मै श्रीरामाय तुभ्यं नमः इति ॥ ७ ॥

एवं सीतया सह दशवर्षसहस्राणि राज्यमुपास्य श्रीरामः कदाचिल्लोकजिज्ञासुः किंवदन्तीं ज्ञातुमिच्छुः गूढः प्रच्छन्नवेष इतरैरलक्षितो रात्र्यां तत्रतत्र पुर्यां चरन् कस्यचित्पुरुषस्य वचो भार्यामुद्दिश्योच्यमानमशृणोत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आचार्यवानित्यनेन गुरुकुलवासित्वं शिक्षितत्वं च सूचयति, "आचार्यवान् पुरुषो वेद"इति श्रुतेः ॥ १—३ ॥

सौमङ्गल्यं मङ्गलसूत्रमेवावशेषितं यस्याः सा तथा ॥ ४ ॥

ब्राह्मणा येषाः पूज्या इति भावो यस्य स तथा तस्य वात्सल्यं स्नेहपारवश्यं भक्तिक्लिन्नधियः द्रवचित्ताः प्रत्यर्प्य दत्तं पुनर्दत्त्वा ॥ ५ ॥

ननु, दत्तं ग्राह्यमिति मत्वा प्रत्यर्पितम् ? इतोऽधिकं प्रियमस्मद्योग्यमेव दत्तमतोऽन्यत्रापेक्षितमिति मत्वा वा ? न प्रथमः, बहुलाभस्तुष्टिमतामस्माकम् अन्यलब्धुमिच्छादोषो नास्ति यतोऽतो द्वितीय एवाभिमत इत्याशयेनाह–अप्रत्तमिति, । हे भगवन् ! त्वम् अस्मद्भक्तिवात्सल्यात् हृदि संविश्य यथा निद्रा सुखसाधनं तथा स्थित्वा स्वरोचिषा ज्ञानलक्षणप्रकाशेनाज्ञानलक्षणं तमो हंसि नाशयसि यतो ऽतस्त्वया नोऽप्रत्तमदत्तं किन्तु न किमपि इत्यतोऽधिकं भूदानादिकं न भवति ज्ञानधनस्यानश्वरत्वाद्बहार्थत्वाच्च भूपालत्वात्कर्म तथैव योग्यं तस्मिन्कर्मण्ययनधिकारिणो वयं तस्माद्योग्यत्वात्प्रत्यर्पणेन स्वीकारेणापहारदोषपङ्कलेपो नास्ति भवत इति स्वीकृत्य तत्रत्यं कर्तव्यमधिकृतत्वादिति भावः ॥६॥

त्वमस्मभ्यमनश्वरं धनं दत्तवान् वयं तत्प्रतिकर्तुं न शक्नुमः किन्तु तुभ्यं नमनलक्षणं धनं दास्याम इत्येतामर्थं वक्त्याशयेनाह—नम इति । न्यस्ततरवाय स्वकेषु निक्षिप्तकरुणाय अर्पिताङ्घ्रये स्वकीयेष्विति शेषः । न्यस्तदण्डार्पिताङ्घ्रये इति पाठे न्यस्तमनोवाक्कायदण्डाः सन्न्यासिनः तेष्वर्पिताङ्घ्रिर्ज्ञानलक्षणा गतिर्येन स तथा तस्मै "अघि लघि गत्यर्थौ" इति धातुः उत्तमश्लोकस्य हरेः धुरं वहतीति उत्तमश्लोकधुर्यस्तस्मै ॥ ७ ॥

कस्यचित्पुंसो वचः ॥ ८ ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवानात्मनात्मानमयीज इति श्लोकसंग्रहार्थमित्यर्थः ॥ १–७ ॥

अथ वैराग्यलीलाव्यञ्जकं मर्त्यलोकपरित्यागलीलारम्भं कर्तुं वक्ष्यमाह–कदाचिदिति । कस्यचिदिति यस्यचित् कुतश्चिद्-कस्मादागतस्य तत्र वसतोऽसरलस्वरस्य ॥ ८ ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मत्यांश्चकार तत्याज सीतां सा निरयं गता ।

भ्रातॄन् दिग्विजयेऽयुङ्क्त राम एकादशे प्रभुः ॥

आत्मनात्मानमिति यज्ञसाधनस्य यजनीयस्य च स्वाभिन्नत्वाभावात् ॥ १ ॥ २ ॥

तदन्तरा तासामन्दिशां मध्ये यावती भूस्तां शेषभूतां ब्राह्मणजातिमेव यद्दानपात्रीकरोति तत्र हेतुः इदं कृत्स्नमेव भूतलं ब्राह्मणा एवार्हन्ति यतो निस्पृह इति मन्यमानः ॥ ३ ॥

तदलङ्कारेति देहस्थालङ्कारस्वरूपातिरिक्तानामन्येषामलङ्कारादीनामपि दत्तत्वात सीता तु देहावयुक्ताप्यलङ्कारादिकं ददाविल्याह—सौमङ्गल्यं नासाभरणाद्यादिमात्रमवशेषितं यस्याः सा ॥ ४ ॥ ५ ॥

किम् अप्रत्तम् अपितु सर्वमेव प्रदत्तं यद्यस्मान्हृदय प्रविश्य अतो ऽस्तपृष्ठोराज्यमलमिति भावः ॥ ६ ॥

न्यस्तदण्डेभ्यो निर्वैरभक्तेभ्योऽर्पितावङ्घ्री येन तस्मै ॥७—९॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यज्ञानुष्ठानादिरामचरितं वर्णयति–भगवानित्येकादशेन । उत्तमानि कल्पकानि उपकरणानि येषु तैः ॥ १ ॥ २ ॥

शेषामवशिष्टां तदन्तरा तासां मध्ये यावती भूस्तां ब्राह्मणा एवार्हन्तीति मन्यमानैः आचार्याय ददौ ॥ ३ ॥

नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ।
स्त्रीलोभी बिभृयात्सीतां रामो नाहं भजे पुनः ॥ ९ ॥
इति लोकाद्बहुमुखाद्दुराराध्यादसम्विदः ।
पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥
अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ।
कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥
अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ।
तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥
सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ।
गन्धर्वान्कोटिशोजघ्ने भरतो विजये दिशाम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्येवं प्रथम श्रीरामः तत्तदा मवङ्कारवासोऽवशेषित: तथा वैदेही अपि सौमङ्गल्येन आभरणादिकेन अवशेषिता ॥ ४ ॥

संस्तुत्यं श्लाघनीयं वात्सल्यं विप्रवत्सलत्वम् ॥ ५ ॥

नोऽन्तर्हृदयं विश्य प्रविश्य तमोऽज्ञानं हंसि एवम्भूतेन त्वया नोऽस्मभ्यमप्रसमदत्तं किं न किमपीत्यर्थः ॥ ६ ॥

न्यस्ता: वाग्देहचेतःसुप्रयोजिता: मौनानीहातिलापारूपा: दण्डा यैस्तैः अर्पितौ चित्ते संस्थापितौ अङ्घ्री यस्य तस्मै नमः ॥ ७—९ ॥

भाषाटीका ।

श्रीसीतादेवी समेताय श्रीराघवेन्द्राय नमः ।

श्रीशुकउवाच ।

श्री शुकदेवजी बोले, कि–भगवान् श्रीरामचन्द्रने सर्वदेवमय देव ऐसे अपने आत्माको आचार्यवान् होकर उत्तमकल्प वाले यज्ञों से पूजन करते हुए, ॥ १ ॥

प्रभु श्रीरामचन्द्रजीने होताके लिये पूर्वदिशादीनी, और जो यज्ञमें ब्रह्मा हुए उनकोदक्षिणादिशादीनी ऐसे ही अध्वर्यु को प्रतीची [ पश्चिमदिशा ] और साम गान वाले को उदीची [ उत्तरदिशा ] देते हुए ॥ २ ॥

और इस के मध्य में जो भूमिरही वह सब आचार्य को देदी और आपने यही निश्चयकिया कि निस्पृह विद्वान ब्राह्मण इस सब वैभव को योग्य होसक्ता है ॥ ३ ॥

यज्ञों के अनन्तर श्रीराघवेन्द्र के समीप ब्राह्मणों के देने से पहिले हुए वस्त्र और आभूषण मात्र शेष रहे तथा रानी श्रीसीता देवी के भी विग्रह परभी उतनेही केवल सौभाग्य के सूचन करने वाले परिमित वसन भूषण अवसिष्ट रहे और बाकीके श्रीजीने भी सब दान करदिये ॥ ४ ॥

परञ्च वह सब ब्राह्मण लोग तो ब्राह्मणदेव श्रीराघवेन्द्रजू के स्तुती करने योग्य वात्सल्य को देखकर अत्यन्तही प्रसन्न हुए, और आर्द्र चित्त होकर फिर प्रभु को सब वैभव प्रत्यर्पण [ भेट ] कर इसप्रकार बोलते हुए ॥ ५ ॥

हे भगवान् ! हे भुवनेश्वर ! आपने हम लोगों को क्या नहीं दिया जो आपने हमारे अंतर हृदय में प्रवेश कर हमारे अज्ञान रूप तमको अपने ज्ञान रूप प्रकाश से दूर कर दिया ॥ ६ ॥

ब्रह्मण्यदेव अकुंठित बुद्धि वाले उत्तम कीर्ति वालों के धुरंधर और न्यस्तदंड अर्थात् परम कारुणिक जो अपराध होने पर भी क्षुभित होकर किसी को दंड न देवें ऐसे महात्माओं के हृदय में अपने चरण कमल को अर्पण करने वाले ऐसे श्रीराघव को नमः हो ॥ ७ ॥

इत्यादिक स्तुतिकर विप्र लोग अपने २ गृह को गये तब एक समय प्रभुने लोक चरित जानने की इच्छा से रात्रि में गुप्त अलक्षित होकर विचरते २ अपनी भार्या को उद्देश कर कहने वाले किसी पुरुष की ऐसी वाणी सुनी, कि ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

असम्विदोऽज्ञात् प्राचेतसो वाल्मीकिस्तस्याऽऽश्रमं प्राप्ता॥१०॥

अन्तर्वत्नी गर्भिणी क्रिया: जातकर्माद्या: ॥ ११—१५ ॥

तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ।
शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ।
हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥ १४ ॥
मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥
तच्छ्रुत्वा भगवान्रामो रुन्धन्नपि धिया शुचः ।
स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्वचो दर्शयति—नेति । परस्य पुरुषान्तरस्य वेश्म गच्छति पुनःपुनरिति तथा अतएव दुष्टामसतीं व्यभिचारिणीं त्वामहं न बिभर्मि परवेश्मगामपि सीतां रामोऽबिभ्रत् ततस्तं किं भेद्यः? इति वदन्तीं प्रत्याह—स्त्रैण इति । हि यस्माद्रामः स्त्रैणः अतः सीतां बिभृयात् अहं तु पुनः स्त्रीपारवश्यरहितः त्वां न भजामीति ॥ ९ ॥

इतीत्थम् अल्पवित्दः तत्त्वानभिज्ञात् अतएव बहुमुखान्नाना-विधवादिनो दुराराध्यात् लोकाद्भीतेन पत्या श्रीरामेण त्यक्ता सीता प्राचेतसस्य वाल्मीकेराश्रमं प्राप्ता ययौ, कथम्भूता? अन्त-र्वत्नी गर्भिण्येव सीता गतेत्यन्वयः ॥ १० ॥

ततः काले प्रसवकाले सा सीता यमौ सुतौ सुषुवे तौ च कुशो लव इति ख्यातौ तयोः कुशलवयोर्मुनिः प्राचेतसः जातकर्मादिक्रियाः चक्रे ॥ ११ ॥

तथाङ्गदादयो द्वौ द्वौ पुत्रौ लक्ष्मणादीनां सम्बभूवतुः ॥१२॥

दिशां विजये दिग्विजयकाले कोटिशो गन्धर्वान् भरतो हतवान् तदीय गन्धर्वाणां सर्वान्व सर्वं धनमादाय राज्ञे श्रीरामायार्पयामास तथा शत्रुघ्नश्च मधोरसुरस्य पुत्रं लव-णाख्यं राक्षसं हत्वा मधुवने मथुरानाम पुरीं निर्ममे ॥१३॥१४॥

मुनौ वाल्मीकौ तनयौ कुशलवौ निक्षिप्य मुन्यधीनौ कृत्वा भर्त्रा श्रीरामेण विवासिता निर्वासिता सीता श्रीरामस्य चरणौ ध्यायन्ती विवरं भुव इति शेषः । प्रविवेश ॥ १५ ॥

तद्विवरप्रवेशमाकर्ण्य भगवान् श्रीरामस्तस्याः सीतायाः तांस्तान् गुणान् स्मरन् धिया शुचं शोकं रुन्धन्नपीश्वरोऽपि रोद्धुं नाशक्नोत् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बहुमुखात्स्योन्यशिक्षानियतत्वेनानेकशब्देन प्रधानादत एव दुराराध्याद्दुःसाध्यात् कार्यनिष्पत्तिरहितादित्यर्थः । अतएवासंविदः अन्यसंवादशून्यात् मर्यादानरहिताद्वा लोकाच्छ्रुत्वा लोकापवाद-भीतेन रामेण त्यक्ता सा सीता प्राचेतसः प्रचेतसो वरुणस्यापत्यं वाल्मीकिः तस्याश्रमं प्राप्ता ॥ १० ॥

अन्तर्वत्नी गर्भिणी यमौ यमलौ क्रियाः क्षत्रयोग्याः जात-कादिकाः ॥ ११—१४ ॥

मुनौ वाल्मीकौ विवरं भूविलम ॥ १५—१७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लोकात् राष्ट्रान्तरस्थात् भीतेन शङ्कमानेन ॥ १०-१५ ॥

स्त्रीसङ्गिनां गतिमित्यादि पूर्वमुक्तं यथार्थत्वे दृढयंस्तदीय-मन्तःकरणं दर्शयति—तच्छ्रुत्वेति । ईश्वरोपीत्यपरत्राप्यन्वयः अहो तस्या भक्तिगुणानां महिमेति भावः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

असंविदः ज्ञानशून्यात् प्राचेतसो वाल्मीकिः ॥ १० ॥

अन्तर्वत्नी गर्भवती ॥ ११-१४ ॥

भर्तुर्विच्छेददुःखमसहिष्णुः भुवो विवरं प्राविशत् ॥ १५ ॥

ईश्वरोपि रोद्धुं नाशक्नोदिति तस्य प्रेमवश्यत्वस्वभावादिति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकात् प्राकृतजनात् बहुमुखात् बहुषु मायिकेषु देहगेहा-दिषु मुखं मुखोपलक्षितं भाषणादिर्चेष्टितं यस्य तस्मात् श्रीराम-

स्त्रीपुंप्रसङ्ग एतादृक्सर्वत्र त्रासमावहः ।
अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः ॥ १७ ॥
तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥
स्मरतां हृदि विन्यस्य विद्धं दण्डककण्टकैः ।
स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥ १९ ॥
नेदं यशो रघुपतेः सुरयाच्ञयाऽऽत्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥
यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।
तन्नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥ २१ ॥
स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ।
कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पद्माम्भोजपराङ्मुखादित्यर्थः । अत एव असंविदः अतत्त्वज्ञात् दुराराध्याद्दुष्कीर्तिकरादित्यर्थः । भीतेन स्वकीर्तिरक्षार्थं शास्त्रमार्गे संस्थापनार्हात् परोक्ष्यर्थः । प्राचेतसो वाल्मीकेः श्रीजानकीरामस्वरूपगुणाभिज्ञस्य आश्रमं प्राप्ता ॥ १० ॥

काले प्रसवकाले क्रियाः जातकर्माद्याः ॥ ११—१४ ॥

विवरं प्रविवेश भूमिद्वारेण वैकुण्ठादागता तद्विवरद्वारेण वैकुण्ठं गतेत्यर्थः ॥ १५ ॥

शुचा शोकाश्रुणा रुन्धन्नपि रोद्धुं नाशक्नोत् ईश्वरः सर्वेश्वरो निःशोकः स्वेच्छयैव लोकगतिं तथाभूतया चेष्टया दर्शयामासेति भावः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न चासिचित्रमेतत् स्त्रीपुंसोः प्रसङ्ग आसक्तिः त्रासमावहतीति तथा विभक्तेरलुगार्षः पाठान्तरं सुगमम्. किमुतेति प्रासंगिकोक्तिः ॥ १७ ॥

अग्निहोत्रमजुहोत् प्रभुः रामः ॥ १८ ॥

आत्मज्योतिर्निजं धाम ॥ १९ ॥

जलधिबन्धनमस्त्रपूगैः रक्षसां वध इतीदं कपिभिः साहाय्यमित्र वर्णितमपि यशः स्तुतिर्न भवति तत्र हेतुः अधिकसाम्य

---

भाषाटीका ।

पराये गृह में रहने वाली खोटी दुष्टनी ऐसी तो-कू मैं नहीं रख सकता हूं स्त्री के लोभी राम भलाई सीता को राखें मैं तौ कदापि तेरे को नहीं ग्रहण करूंगा ॥ ९ ॥

इस प्रकार के बहु मुख और दुराराध्य अज्ञानी लोक से भय भीत होकर पति ने ( श्रीरामने ) सीताजी का परित्याग कर दिया तब सीताजी लक्ष्मण के द्वारा वाल्मीक महर्षि के आश्रम को प्राप्त हुईं ॥ १० ॥

गर्भवती सीताजी ने समय पूरे होने पर यम ( युगल ) पुत्र उत्पन्न किये तिन में एक का नाम कुश एक का लव रहा उन दोनों की प्रसिद्ध क्रिया और संस्कार महर्षि वाल्मीकजी करते हुए ॥ ११ ॥

जैसे श्रीराम के दो पुत्र हुए इसी रीति लक्ष्मणजी के भी दो पुत्र हुए एक अंगद दूसरे चित्रकेतु । हे महीपते ! इसी भांति तक्ष और पुष्कल दो पुत्र भरतजी के हुए ॥ १२ ॥

सुबाहु और श्रुतसेन ये दो पुत्र शत्रुघ्नजी के हुए । भरतजी ने दिग्विजय के समय पर किरोड़न गंधर्वों को मारे ॥ १३ ॥

और उनका धन लाकर सब राजा ( श्रीराम ) को समर्पण किया, शत्रुघ्नजीने भी मधु के पुत्र लवणासुर राक्षस को मार कर मधुवन के बिषे मथुरा नामक पुरी बसाई ॥ १४ ॥

सीताजी ने अपने भर्त्ता से प्रवास पाकर दोनों पुत्रों को मुनि को सौंपकर रामके चरणों का ध्यान करती २ पृथिवी के विवर में प्रवेश करती हुई ॥ १५ ॥

ऐसा सुनकर भगवान् रामचन्द्र भी अपनी बुद्धि से शोक को थांमते हुए, तौ भी सीताजी के तिन २ गुणों को स्मरण करते २ ईश्वर होकर भी शोक रोकने को समर्थ नहीं होते भये ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्चान्यदेशस्थितानामनुरागिभक्तानां हृदि दण्डककण्टकैर्विद्धं पादमिति ते कण्टकास्तेषां हृदयेव महत्सुगुणां लपन्तस्तान् मूर्छितान् कुर्वन्तस्तानि सुखयन्तीति तेषु रामस्य दया नाभूदिति व्याजस्तुतिः धाम्नः एव न तु मायया ज्योतिर्वत् तत् परं प्रपञ्चागोचरं स्वधामतः प्रकाशमगादित्यर्थः ॥ १९ ॥

नरलीलस्येनैव चमत्कारकं तस्य यशोमाधुर्यमास्वादयति तत्वेश्वर्यं दर्शयेत्याह—नेदमिति । मा मत्सरेण आत्मनोनित्यगृहीतलीलाविग्रहस्य रक्षसां रावणस्य वध इतीदं यशः स्तुतिनं भवति तत्र हेतुः अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य तस्य किं कपयः सहायाः ? तेन नरलीलत्वमाधुर्येणैव सर्वमेतदुपपद्यते इति भावः ॥ २० ॥

रामं प्रपद्यमानस्य सर्वोत्कर्षमाह—यस्य निर्मलं यशः नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कण्डेयादयो गायन्ति दिगिभेन्द्रपट्ट पट्टशब्दस्यासनवाचित्वात् दिग्गजेन्द्रारूढामित्यर्थः । तेन यशसः सर्वदिग्विजयिसेनानीत्वमुक्तं नाकपालाः देवेन्द्राद्याः वसुपालाः नरेन्द्राश्च तेषां किरीटैर्जुष्टं पादाम्बुजं यस्य तं जुष्टमिति रघुपतेरिति पाठे तस्येत्यर्थः ॥ २१ ॥

संविष्टः सहयात यैः सहोपविष्टः शयितो वा ते कोसलदेशवासिनः योगिनो भक्तियोगवन्तः स्थानं वैकुण्ठम् ॥ २२ ॥

आनृशंस्यपरः क्रौर्यशून्योऽमत्सर इत्यर्थः ॥ २३ ॥

आत्मनो भ्रातॄन् प्रति कथमवर्त्तत ? स्वयं वा कथमवर्त्तत ? तस्मिन् ते भ्रात्रादयः कथमवर्त्तन्त ? इति प्रश्नत्रयम् ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकगतिमेव दर्शयति—स्त्रीति । ईश्वराणां समर्थानां देवादीनामपि स्त्रीपुंप्रसङ्गः स्त्रीपुंसोः प्रकृष्टः सङ्गः सर्वं त्रासवर्द्धनः किमुत ग्राम्यस्य ॥ १७ ॥

अग्निहोत्रमजुहाव प्रभुः कर्मसाध्यानन्दनिरपेक्षः लोकसङ्ग्रहार्थं तथा कृतवानित्यर्थः ॥ १८ ॥

आत्मज्योतिः स्वप्रकाशरूपं स्थानं वैकुण्ठम् अगात् ॥ १९ ॥

आत्ता आविष्कृता लीलार्था तनुर्येन तस्य रघुपतेः अस्त्रपूगैः रक्षोवधो जलधिबन्धनं चेदं कर्म्माश्चर्यमिव वर्णितं यशः स्तुतिनं भवति तत्र हेतुगर्भं विशेषणम् अधिकसाम्याभ्यां विमुक्तं धाम यस्य तस्य किं कपयः सहकारिणः ? अयमर्थः यथा कपीनां सुग्रीवादीनामाश्रयणां समर्थानामपि कार्यं पराश्रयेण सिद्ध्यतीति लोकशिक्षा तथेदं सर्वं लोकशिक्षार्थं लीलामात्रमिति ॥ २० ॥

एवं विधं रामचरितं स .कल्याणार्थमिति वदन् श्रीरामपदाम्बुजशरणं व्रजति—यस्येति । यस्य यशः अघघ्नं आचार्यतृणां श्रोतृणाञ्च दुरितघ्नं दिगिभेन्द्राणां पट्टवस्त्रभरणरूपं दिगिभेन्द्रपर्यन्तं व्याप्तम् अमलं यशः नृपाणां सदस्सु ऋषयोऽधुनापि गायन्ति तत् तस्य रघुपतेः पादाम्बुजं, शरणं व्रजामि कथम्भूतम् नाशयकं दुःखं



प्रास्मिन् स नाकः सत्यलोकस्तत्पालो ब्रह्मा वसुशब्देन धनभूम्यादयस्तत्पालः पशुपालः पशुपतिः शिवः तयोः किरीटाभ्यां जुष्टं सेवितम् ॥ २१ ॥

यैः श्रीरामः सन्दृष्टोऽभिदृष्टो वा संविष्टः उपवेशितः अनुगतश्च ते कोसलाः यत्र योगिनः श्रीरामध्यानयोगनिष्ठाः गच्छन्ति तत्र ययुः ॥ २२—२३ ॥

स रामः स्वयं कथमवर्तत ? आत्मनः भ्रातृन्प्रति वा कथमवर्तत ? चकारात्पौरेषु प्रजासु श्रीरामः कथमवर्त्तत ? तस्मिन् श्रीरामे ईश्वरे सर्वस्वामिनि नानास्वभावाः ते भ्रातरः प्रजाः पौराः कथमवर्तन्त ? ॥ २४ ॥

———

भाषा टीका

श्री अवधूत वेष शुक मुनि कहने लगे, कि—स्त्री पुरुष का प्रसंग इस प्रकार का सर्वत्र ईश्वरों को भी त्रास देने वाला है, तो फिर रात दिन घर में चित्त वाले ग्रामीण पुरुषों का तो क्या कहना ॥ १७ ॥

तापीछे प्रभुने तेरह हजार वर्ष तक अखंडित ब्रह्मचर्य धारण कर अग्निहोत्र हवन किया ॥ १८ ॥

आपके स्मरण करने वाले अनुरक्त भक्तों के हृदय में दंडकारण्य के कण्टक जिनमें चुभे हुए ऐसे कोमल अपने चरण पल्लवों को विन्यास [ धर कर ] तदनंतर अपने नित्यधाम को पधारते हुए ॥ १९ ॥

मुनि बोले, कि—देवताओं की याचना से लीला विग्रह को धारण करने वाले, श्रीरघुपति का यह कुछ यश नहीं है जो कि अस्त्र समूहों से राक्षसों का वध करना, और समुद्र को बांधना क्योंकि जिनके न कोई सम और न अधिक ऐसे तेजस्वी आप हैं फिर क्या उनके शत्रुओं के नाश करने में कुछ कपि लोग सहाय होसक्ते हैं ? न कदापि ॥ अथवा राक्षस वध सेतु बंधन आपका यश नहीं, तो फिर उनका क्या यश है ? तहां शुक मुनि कहते हैं यही सर्वोत्कृष्ट यश है कि सर्वतंत्रस्वतंत्र सर्वकार्यसमर्थ होकर भी वानर जाति से भी सहाय लेना दिखाकर उनको बड़े बनाये फिर मनुष्यों की क्या कहैं इतना आपका सौलभ्य का यश है ॥२०॥

जिन का पापनाशक यश आज दिन भी राजसभाओं में ऋषि लोग गाते हैं, कैसा आपका यश है कि—दिग्गजों का पट्ट वस्त्र के तरह आभरणरूप होरहा है । अर्थात् दिशाओं के अन्त तक गया जाता है, ऐसे स्वर्गपाल वसुपाल आदि सकललोकपालों के किरीट से सेवित जिनके चरणकमल ऐसे रघुपति के मैं शरण हूं ॥ २१ ॥

जिन लोगोंने श्रीराम का स्पर्श किया जिनों ने एक बार दर्शन किया, और जो कभी साथ बैठ गये अथवा जिनने एकबार विराजमान कराये जो एकबार भी पीछे २ चले ऐसे कोसल देशवासी उस स्थान को गये जहां बड़े २ योगी जन जाते हैं ॥ २२ ॥

श्रीशुक उवाच ॥

अथादिशद्दिग्विजये भ्रातृं[1]स्त्रिभुवनेश्वरः ॥
आत्मानं दर्शयन्स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥
आसिक्तमार्गां गन्धोदैः करिणां मदशीकरैः ॥
स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥
प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥
विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम् ॥ २७ ॥
पूगैः सवृन्दै[2]रम्भाभिः पट्टिकाभिः सुवाससाम् ॥
आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८ ॥
तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ॥
आशिषो युयुजुर्देव ! पाहीमां प्राक् त्वयोद्धृताम् ॥ २९ ॥
ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥
आरुह्य हर्म्याण्यरविन्दलोचनं ह्यतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥
अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥
अनन्ताऽखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥
विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ॥
स्थलैर्मारकतैः स्वच्छैर्भ्राजत् स्फटिकभित्तिभिः ॥ ३२ ॥

भाषा टीका ।

हे राजन् ! राम चरित का वह प्रभाव है कि पुरुष रामचरित को श्रवणों से धारण करता हुआ ही शान्ति परायण होकर कर्मबन्धनों से छूटजाता है ॥ २३ ॥

राजोवाच ॥

राजा परीक्षित पूंछने लगे, कि—हे मुने ! भगवान् श्रीरघूत्तम अपने भ्राताओं से कैसे वर्त्तते रहे ? और आप स्वयं कैसे वर्त्तते रहे ? और श्रीराघवेन्द्र के विषयमें भ्राता लोग पुरवासी तथा प्रजा लोग कैसे वर्त्तते रहे ? ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र श्रीरामस्य भ्रात्रादिषु प्रवृत्तिप्रकारमाह—अथेति । अनेनैव भ्रातृणामपि तदाज्ञाऽनुसारितया प्रवृत्तिरुक्ता अथ सिंहासनस्वीकारानन्तरम् ॥ २५ ॥

पुरीं वर्णयति—त्रिभिः । गन्धोदकैर्मदबिन्दुभिश्चाऽऽसिक्ता मार्गा यस्यां सुतरां मत्तामिव समृद्धां वा इति वितर्के पाठान्तरे वासितां कामोन्मत्तां गामित्यर्थः ॥ २६-२७-२८ ॥

पौराणां मयिमन्वृत्तिमाह—तमुपेयुरिति । वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति ॥ २९ ॥

प्रजानां तस्मिन्वृत्तिमाह—ततः प्रजा इति ॥ ३० ॥

स्वयं कथमवर्ततेत्यस्योत्तरमाह—अथेति यावत्समाप्ति । स्वगृहं प्रविष्टः संस्तस्मिन् रेम इति पञ्चमेनान्वयः । गृहं वर्णयति, सार्द्धैस्त्रिभिः । अनन्ता येऽखिलानां रत्नादीनां कोशास्तैराढ्यम् अनर्घ्याः उरवः परिच्छदा यस्मिन् ॥ ३१ ॥

विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैः स्वच्छैः स्थलैः तृतीयान्तानां मण्डितामिति तृतीयेनान्वयः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र श्रीरामस्य भ्रात्रादिषु वृत्तिप्रकारमाह—अथेति । अथ सिंहासनोपवेशनानन्तरं त्रिभुवनेश्वरः श्रीरामो दिग्जये दिक्पालने निमित्ते भ्रातॄनादिशत् अनेनैव भ्रातृणामपि तदाज्ञानुवृत्तिरुक्ता ततः स्वानां कौसल्यादीनाम् आत्मानं दर्शयन् सानुगः पुरीमयोध्यामैक्षत ॥ २५ ॥

(१. त्रिदशेश्वर इति विज० । (२) संवृतांत वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पौराणां तस्मिन् अनुवृत्तिञ्च व्यापयितुं तैरलङ्कृतां पुरीं वर्णयति, आसिक्तमार्गामिति त्रिभिः । गन्धोदकैः चन्दनोदकादिभिः स्वामिनं प्राप्तं प्राप्तराज्यमालोक्य सुतरां मत्तानामिव स्थितानां करिणां मदोदकशीकरैश्चासिक्ताः मार्गाः यस्यां मत्तां चेति पाठान्तरं तत्र सुतरां मत्तामिवेति पुरीविशेषणं वाशब्दो वितर्के ॥ २६ ॥

प्रासादादिषु विन्यस्तैः स्वर्णकुम्भैः पताकाभिश्च मण्डिताम् ॥ २७ ॥

पूगैस्संवृताः या रम्भाः कदल्यस्ताभिः नित्यसापेक्षत्वात् संवृतशब्दस्य समासः यद्वा, पूगैश्च पत्रफलपुष्पादिसंवृताभिः रम्भाभिश्च वाससां पट्टिकाभिश्च मण्डितामिति पूर्वेणान्वयः । मादर्शैर्दर्पणैरंशुकैः स्रग्भिश्च कृतानि कौतुकानि मङ्गलार्थानि तोरणानि यस्यां तां पुरीमैक्षतेत्यन्वयः ॥ २८ ॥

पौराणां तस्मिन् वृत्तिमाह—तमर्हणानि पूजासाधनानि पाणिषु येषां तैः पौरास्तत्र तत्र तं श्रीराममुपेयुरुपजग्मुः देव ! प्राक् वराहावतारे त्वयोद्धृतां पृथिवीं पाहीति प्रार्थयमानाः आशिषो युयुजुः प्रयुक्तवन्तः ॥ २९ ॥

तस्मिन् प्रजानामनुवृत्तिमाह—तमिति । चिरादागतं पतिं श्रीरामं वीक्ष्याकर्ण्य स्त्रियो नराश्च प्रजाः दिदृक्षया उत्सृष्टा गृहा याभिस्ताः हर्म्याण्यारुह्य अतृप्तानि नेत्राणि यासां ताः अरविन्दलोचनं श्रीरामं कुसुमैरवाकिरन् यद्वा चिरागतं पतिं द्रष्टुमिच्छया उत्सृष्टगृहाः स्त्रियो नराश्च प्रजा हर्म्याण्यारुह्य वीक्ष्याऽतृप्तनेत्राः कुसुमैरवाकिरन्नित्यन्वयः ॥ ३० ॥

स्वयं कथमवर्ततेत्यस्योत्तरमाह-अथेति, यावदध्यायसमाप्ति । स्वयं गृहं प्रविष्टः तस्मिन् भगवान् स्वारामश्रीरामामात्मारामसुनिजनश्रेष्ठानामृषभो अभिनायकः रामः प्रिया चेष्टा यस्यास्तया स्निग्धया निरतिशयानुरागवत्या सीतया सह रेम इति पञ्चमेनान्वयः । गृहं वर्णयति-पूर्वराजभिःरक्षाकुम्भभूतिभिर्जुष्टं सेवितं प्रीतिविषयीकृतं वा अनन्ता निरवधिका ये अखिला रत्नादीनां कोशास्तैराढ्यं समृद्धम् अनर्घ्या उरवः परिच्छदा यस्मिन् विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैः तृतीयान्तानां मण्डितमिति तृतीयेनान्वयः । वैदूर्यमणिमयस्तम्भानां पंक्तिभिः स्वच्छैरिन्द्रनीलमणिमयैः स्थलैः प्रदेशैः दान्ताः घर्षणेन निर्मलीकृता स्फटिकाः तन्मयीभिर्भित्तिभिः ॥ ३१—३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रथमतृतीयपद्ये परिहरति-अथेति । अथ राज्याभिषेकानन्तरं भ्रात्रादौ स्वाज्ञाकारित्वेनाऽवर्तत त्रिदशेश्वर इत्यनेन मानवेश्वरत्वं किंवक्तव्यमित्यसूचि तेन लोकाऽनुकरणायेयं क्रीडेति कथितमित्यर्थः । द्वितीयं परिहरति-आत्मानमिति । स्वात्मसन्दर्शनेन जनस्यानन्दजनकत्वेन राम इति बुद्धिं जनयामासेत्यर्थः । पुरीनिरीक्षणं च स्वभक्तानुकम्पित्वप्रदर्शनाय ॥ २५ ॥

गन्धोदैः चन्दनादिगन्धद्रव्यमिश्रजलैः लङ्कायाः नाथं रावणं विहत्य प्राप्तं स्वामिनमालोक्य सुतरां हर्षेण मत्तामिव करिणीं मदशीकरैः मदजलबिन्दुभिर्वा मत्तामिव स्थिताम् ॥ २६ ॥

चैत्यं पाषाणादिभिर्बद्धं वृक्षमूलस्थलं बलस्थानस्थलं वा ॥ २७ ॥

संवृतैः फलस्तबकसहितैः पूगैः क्रमुकैः रम्भाभिः कदलीस्तम्भैः आदर्शैः दर्पणैरंशुकैर्वस्त्रैः स्रग्भिः मालाभिश्च कृतकौतुकानि रचितमङ्गलानि च तोरणानि यस्यां सा तथा ताम् ॥ २८ ॥

प्राक् वराहाऽवतारे त्वया पातालादुद्धृतां भुवमिति शेषः ॥ २९—३१ ॥

विद्रुमैरुदुम्बरैस्ताम्रैः कृतद्वारैः "ताम्रं शुल्वं मर्कटास्यं रक्तं कांस्यमुदुम्बरम्" इति ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भ्रातॄन् विविजये आदिशदिति भ्रातॄणां तद्दर्शनरूपं स्वसुखमपि परिहाय तदाज्ञापालनरूपा तस्मिन्ननुवृत्तिरुक्ता रामस्यापि तेषु स्नेहात्तदधिकारदानरूपा वृत्तिरुक्ता, स्वानां स्वाः प्रजाः पौराश्चेति प्रजासु पौरेषु च स्वदर्शनकृपावलोकादिदानरूपा तस्य वृत्तिरुक्ता । पुरीमैक्षतेति स्वयं कथमवर्ततेत्यस्योत्तरम् अतस्तत्प्रेक्षणीयां पुरीं वर्णयति-आसिक्तेत्यादि । सुतरां मत्तामिव समृद्धां, चेति वितर्के वासितां गामिवेति पाठे । वासितां कामोन्मत्तां गामिवेत्यर्थः । समासान्तमार्ष आर्षः ॥ २५-२८ ॥

पौराणां तस्मिन्ननुवृत्तिमाह—तमिति । इमां पृथ्वीं प्राक् वराहरूपेण ॥ २९ ॥

प्रजानां तस्मिन् वृत्तिमाह—तत इति । चिरागतमिति वनवासादागमनसमयभवदर्शनमिदं ज्ञेयम् ॥ ३० ॥

स्वयं कथमवर्ततेत्यस्योत्तरं विस्तरेण पुनराह-अथेत्यादिना॥३१॥

विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैः तृतीयान्तानां मण्डितमिति तृतीयेनाऽन्वयः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उत्तरमाह-अथेति । अथ सिंहासनस्वीकारानन्तरं त्रिभुवनेश्वरः भ्रातॄन् विविजय आदिशत् अनेन श्रीरामस्य भ्रातॄन् प्रति दिग्गतधर्मादिरक्षणे आज्ञाप्रदत्वेन वृत्तिरुक्ता तेषां तदाज्ञापालकत्वेन तस्मिन् वृत्तिरुक्ता अस्य श्रीरामस्य पौरादिषु तस्मिन् पौरादीनां च वृत्तिम् आत्मानमित्यादिना कुसुमैरवाकिरन्नित्यन्तेनाह ॥ २५ ॥

गन्धोदैः करिणां मदशीकरैर्मदबिन्दुभिश्च आसिक्ता मार्गा यस्यास्तां स्वामिनं प्राप्तमालोक्य सुतरां मत्तामिव ॥ २६—२८ ॥

इमां पृथिवीं त्वया वराहमूर्तिना ॥ २९ ॥ ३० ॥

स्वयं कथमवर्ततेत्यस्योत्तरमाह—अथेत्यध्यायशेषेण । स्वगृहं प्रविष्टः रेमे इति पञ्चमेनान्वयः ॥ ३१ ॥

चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥
मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः ॥ ३३ ॥
धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डितैः ॥
स्त्रीपुम्भिः सुरसङ्काशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥
तस्मिन् स भगवान्रामः स्निग्धया प्रिययेष्टया ।
रेमे स्वारामधीराणामृषभः सीतया किल ॥ ३५ ॥
बुभुजे च यथा कालं कामान्धर्ममपीडयन् ।
वर्षपूगान्बहून्नृणामभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे श्रीरामोपाख्याने
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विद्रुममणिमयाः उदुम्बरा देहल्यो येषु तैर्द्वारैः तृतीयान्तानां मण्डितमिति तृतीयेनाऽन्वयः ॥ ३२ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेव जी बोले, कि त्रिभुवनके ईश्वर श्रीराघव ने राजगादी के कछु दिनपीछे दिग्विजय के लिये भ्राता लोगों को पठाये, और आपभी एक सौं अनुचरों सहित अपने पुरवासियों के लिये अपने दिव्यसौन्दर्य के अनुभव देने को पुरी के देखने को सिधारे ॥ २५ ॥

पुरी में भी बीथी और राजमार्ग सब चन्दन के जलों से और हाथियों के मद से सींचे गये हैं, पुरी भी कैसी जान पड़ती कि मानो अपने स्वामी को आते हुए देख कर अत्यन्त मत्त हो गई हो ॥ २६ ॥

प्रासाद, गोपुर, सभा, चैत्य, और देव गृहों में कलश मङ्गल के लिये धरे हैं जामें और पताकाओं से मंडित हो रही है ॥ २७ ॥

फिर वह पुरी, पूग ( सुपारी ) और कदली ( केलों ) के फल सहित वृक्षों से और सुन्दर वस्त्रों की पट्टिकाओं ( पट्टाओं ) से और देखने योग्य वस्त्रों से सुशोभित हो रही है और नाना प्रकार के माला और तोरण बाँधकर जिस में कौतुक किया गया है ॥ २८ ॥

इसप्रकार की सजी बजी उस अयोध्या पुरी में जब प्रभु पधारे तब जिस २ मार्ग में आपका शुभागमन हुआ तहां २ पुरवासी जन पूजा और भेटों को हाथ में लेकर आशिषों को देते हुए, कि-हे देव ! जिसका पूर्व समय में आप ने रसातल से उद्धार किया अब आप उसी पृथिवी की रक्षा कीजिये ॥ २९ ॥

तबतो प्रजाओं ने अपने पति को बहुत दिनों में आये हुए देख कर निरन्तर देखने की इच्छा से पुरुष और स्त्रियें सब अपने घरों को छोड़कर दर्शन के लिये साथ हो लिये और कितने नर नारी अटा अटारीन पै चढ़गये और कमललोचन श्रीराघवेन्द्र के दर्शन कर नेत्रों की तृप्तिको नहीं पाकर पुष्पों की वर्षा करते भए ॥ ३० ॥

तदनन्तर नगर पर्यटन कर प्रभूने अपने महलों में प्रवेश किया जो आपका श्रीगृह अपने पूर्व राजाओं से सेवित रहा और अनंत अनेक तरह के खजानों से भरा हुआ बहुमोल्य बहुत भोग के उपकरणों से पूरित होरहा है ॥ ३१ ॥

फिर वह अपना महल कैसा है कि जिसमें मूंगा की देहली वाले दरवाजे बने हैं, वैडूर्य मणि के खंभों की पंक्तियें शोभा देरही हैं, मरकत मणि के स्थल और स्फटिक मणि की भित्तियों से भी महल शोभित हो रहा है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वाससां मणिगणानां चांशुकैर्दीप्तिभिः चित् चेतन्यं तदुल्लासैरुज्ज्वलैः यद्वा चिदिति क्वचित् वैदूर्यस्तम्भादिषु यथा शोभमुज्ज्वलैर्मुक्ताफलैर्मण्डितमित्यर्थः। कान्ताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभिः ॥ ३३ ॥

भूषणानां भूषणभूतैः ॥ ३४—३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नृणां मध्ये यद्वा नृणां नृभिरभिध्यातमङ्घ्रिपल्लवं यस्येति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विचित्राभिः स्रग्भिः पताकाभिश्च वाससां मणिगणानामंशुकैः पङ्क्तिभिः चितैरन्यं नवदुकूलैरुज्ज्वलैर्मुक्ताफलैः यद्वा चित्रिति पृथक्पदमव्ययम् क्वचित्तैर्दूर्यस्तम्भादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मण्डितमित्यर्थः । कान्ताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभिः सुरभिभिर्धूपैर्दीपैश्च मण्डितं पुष्पाणि मण्डनमलङ्कारो येषां भूषणैर्भूषितास्तैः सुरसङ्काशैः देवतुल्यैः स्त्रीपुम्भिः समासाम्नामावस्तस्यानित्यत्वात् आर्यत्वाद्वा जुष्टं सेवितं कामान् यथाकालमुचितकालमनतिक्रम्य बहून् वर्षगणान् बुभुजे कथम्भूतस्सन् ? स्वधर्मं वर्णाश्रमोचितमपीडयन् अनुरुन्धन् सत्यज इत्यर्थः । नृणामिति शेषे षष्ठी नृभिरभिध्यातमङ्घ्रिपल्लवं यस्य तथाभूतस्सन् ॥ ३३—३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कान्तं शोभितं पट्टिकाभिर्वितानैः ॥ ३३ ॥

भूषणानामपि भूषणैः ॥ ३४ ॥

स्वारामाः शोभनोद्यानानि तत्र चारो येषां ते स्वारामचारास्तेषामृषभः निरन्तरं चारुतरोद्यानेषु सञ्चरताम ईश्वर इत्यनेनातीव सौख्यं सूचयति—अनेनापि सीतावियोगो नास्तीत्युक्तं भवति । किञ्च सीतया नित्यरमणात्स्वयं सुखरूपत्वात्प्रजानां सुखहेतुत्वात्सर्वजनचित्तविषयत्वेन राम इति भावः ॥ ३५–३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥
( विजयध्वजरीत्या नवमः । )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वाससां मणिगणानां चांशुकैः चितैश्चक्रकैरुल्लासैर्विलासैश्चिन्मयैरिति सर्वेषां विशेषणमिदं पुरस्य अप्राकृतत्वात् कान्ता कामनीया भोगानां उपपत्तिः सिद्धिर्यतस्तैरित्यपि सर्वेषां विशेषणम् ॥ ३३ ॥ ३४ ॥

तस्मिन् स्वगृहे ॥ ३५ ॥

नृणां नृभिः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशोऽयं नवमे सङ्गतः सङ्गतः सताम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वाससां मणिगणानां चांशुकैः दीप्तिभिः चितैरन्यं नवदुकूलैरुज्ज्वलैर्मुक्ताफलैः यद्वा चिदुल्लासैश्चेतनमात्रस्योल्लासमानन्दविशेषो येभ्यस्तैः कान्ताः कमनीयाः कामोपपत्तयो भोगोपकरणविभूतयस्ताभिः ॥ ३३ ॥

पुष्पाणि एव मण्डनानि अलङ्कारास्तैश्च मण्डितं भूषणानामपि भूषणभूतैः स्त्रीपुम्भिर्जुष्टम ॥ ३४—३५ ॥

नृणां नृभिः अभिध्याताङ्घ्रिपल्लवस्सन् सीतया सह रेमे ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

---

भाषाटीका ।

चित्र विचित्र मालायें उत्तमोत्तम परदे, बहुमोल्य वस्त्र, इन से और नाना प्रकार के मणिगणों की दीप्ति से और चैतन्य सदृश उज्वल मुक्तामणियों से और नाना प्रकार के भोगसामग्रियों से मण्डित होरहा है ॥ ३३ ॥

और सुगन्धित धूप दीपों से मण्डित है । तथा पुष्पों से अलङ्कृत देवता सदृश नर नारियों से सेवित है जो नर नारी भूषणों के भी भूषण है अर्थात् भूषणो की शोभा भी उनके शरीर में धारण करने से ही होती है ॥ ३४ ॥

ऐसे पुरुष और स्त्रियों से शोभित उस उत्तम महल के विषै आत्माराम और धीरों में श्रेष्ठ रघुकुलोत्तंस श्रीचक्रवर्त्ति कुमार जगत के रमाने वाले श्रीरामचन्द्र प्रिय चेष्टा वाली भोरी भारी अथवा अति सुन्दर ऐसी श्रीजानकी जी के साथ रमण करते हुए ॥ ३५ ॥

और जिस प्रकार को पीड़ा न हो तिसी रीत से वर्षों के समूहों तक अर्थात बहुत वर्षों तक समय२ पर भोगों को भोगते हुए और मनुष्य उनके सदा चरण कमलों का ध्यान धरते रहे ॥ ३६ ॥

इति श्रीमद्भागवत नवम स्कन्ध में एकादश अध्याय की
वृन्दावनस्थ पं० भगवताचार्यकृत
भाषा टीका समाप्ता ॥ ११ ॥



इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

## ॥ द्वादशोऽध्यायः ॥



श्रीशुक उवाच ॥

कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥
पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वा ऽभवत्ततः ॥ १ ॥
देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ।
ततो बलस्थलस्तस्माद्वज्रनाभोऽर्कसम्भवः ॥ २ ॥
खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥
ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥
शिष्यः कौसल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥
योगं महोदयमृषिर्हृदयग्रन्थिभेदकम् ॥ ४ ॥
पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ॥
सुदर्शनोऽथाऽग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥
योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥
कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥
तस्मात्प्रसुश्रुतस्तस्य सन्धिस्तस्याप्यमर्षणः ॥
महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ॥ ७ ॥
ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥
ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ॥
पश्चादिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १ ॥

कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत् तत्सुतः तस्य सुतः ॥१॥

अर्कसम्भवोऽर्कस्यांशात्सम्भूतः ॥ २ ॥

ततो विधृतेर्हिरण्यनाभः कथम्भूतः जैमिनेः शिष्यो योगाचार्यः ॥ ३ ॥

तदाह, यतः सकाशात् कौसल्यो याज्ञवल्क्य ऋषिराध्यात्मं योगमध्यगीष्ट महान्त उदयाः सिद्धयो यस्मिंस्तं हृदयग्रन्थेर्भेदकञ्च ॥ ४ ॥ ५ ॥

मरुं विशिनष्टि—योऽसाविति । पुनर्भावयिता भावयिष्यति ॥ ६ ॥ ७ ॥
पित्राऽभिमन्युना ॥ ८—११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुशस्य श्रीरामसुतस्यातिथिः सुतोऽभवत्तस्मादतिथेः निषधाख्यः तत्सुतः निषधसुतः नभः अथ नभात्पुण्डरीकः तत्पुत्रः पुण्डरीकपुत्रः क्षेमधन्वा ॥ १ ॥

ततः क्षेमधन्वनः देवानीकोऽभवत्ततो देवानीकात् हीनः अथ तत्सुतो हीनसुतः पारियात्रः ततः पारियात्राद्बलस्थलस्तस्माद्वज्रनाभः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मात् वज्रनाभः स चार्कस्यांशात्सम्भूतः ॥ २ ॥

तत्सुतो वज्रनाभसुतः खगणस्तस्मात्खगणाद्विधृतिः सुतोऽभवत् ततो विधृतेर्हिरण्यनाभः समभवत् स च योगाचार्यस्य जैमिनेः शिष्यः ॥ ३ ॥

यतो हिरण्यनाभादध्यात्ममयशास्त्रं कौसल्यो याज्ञवल्क्य ऋषिरधिगतवान् अध्यात्मं विशिनष्टि, योगं योगाख्यं महोदयं महानुदयो ऽभ्युदयो यस्मात् हृदयग्रन्थिमज्ञानं भिनत्तीति तथाभूतम् ॥ ४ ॥

हिरण्यनाभस्य पुष्यः सुतस्ततः पुष्यात् ध्रुवसन्धिरभवत् अथ ध्रुवसन्धेः सुदर्शनस्तस्मादग्निवर्णस्तस्य सुतः शीघ्रः तस्यापि सुतो मरुत् ॥ ५ ॥

मरुतं विशिनष्टि—योऽसाविति । योऽसौ मरुत् योगेन सिद्धः जितकायः कलापग्रामाख्यं ग्राममाश्रितोऽद्युनाऽप्यास्ते किमर्थमित्यत्राह—कलेर्युगस्यान्तेऽवसाने नष्टं सूर्यवंशं पुनर्भावयिता भावयिष्यति पुत्रपौत्रादि परंपरया प्रवर्त्तयिष्यति तदर्थं तत्रास्ते इति भावः ॥ ६ ॥

तस्मान्मरुतः प्रसुतः तस्य सुतस्सन्धिः तस्यापि मर्षणस्सुतः तत्सुतो सुमहान् तस्मात् सुमहतो विश्वसाह्वो जज्ञे ॥ ७ ॥

ततो विश्वसाह्वात् बृहद्बलः जज्ञे इत्यनुषङ्गः, तं विशिनष्टि, यस्तु बृहद्बलः समरे सङ्ग्रामे ते पित्रा हतः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ श्रीरामपुत्रस्य कुशस्य सन्ततिमनुक्रामति—कुशस्य चेति । चशब्दः सन्ततेरविच्छेदं सूचयति ॥ १-३ ॥

अध्यात्मं परमात्मविषयं महानुदयो मोक्षलक्षणो यस्मात्स तथा एतदेव विशिनष्टि—हृदयेति । ऋषिर्जैमिनी ॥ ४ ॥

तस्याग्निवर्णस्य शीघ्रनामा सुतः मरुन्नामा सुतो यस्य स मरुत्सुतः तस्य शीघ्रस्य मरुत्सुतोऽभूदिति वा ॥ ५-६ ॥

तस्मान्मरुतः ॥ ७ ॥

समरे ते तव पित्रा अभिमन्युना हतः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्मिन्नध्याये न विद्यते ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वादशे कुशवंशस्य सुमित्रान्तस्य कीर्तनम् ।
समाप्तश्चेक्ष्वाकुसुतोर्निकुम्भस्यान्वयः ॥
॥ १ ॥

अर्कसम्भवः अर्कस्यांशात् प्रभूतः ॥ २ ॥

हिरण्यनाभस्तु जैमिनेः शिष्यस्सन् योगाचार्योऽभूदित्यन्वयः यतो हिरण्यनाभात् कौसल्यो याज्ञवल्क्यः ऋषिः अध्यात्मं योगम् अध्यगात् ॥ ३—५ ॥

यो मरुः प्रसुश्रुतं पुत्रमुत्पाद्य कलापग्राममाश्रितोऽद्याप्यास्ते भावयिता पुनः पुत्रमुत्पाद्य प्रवर्तयिष्यते इत्यर्थः ॥ ६ ॥

तस्मान्मरोः ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीरामपुत्रस्य कुशस्य वंशं वर्णयति—कुशस्येति द्वादशेनाध्यायेन ॥ १ ॥

अर्कसम्भवः अर्कस्य अर्कांशादुत्पन्नः ॥ २ ॥

हिरण्यनाभो जैमिनेः शिष्यो योगाचार्यः ॥ ३ ॥

यतो हिरण्यनाभात् महान्त उदयाः सिद्धयो यस्मिन् तत् हृदयग्रन्थेर्भेदकम् आध्यात्म्यं योगं कौसल्यो याज्ञवल्क्य ऋषिरध्यगात् ॥ ४ ॥ ५ ॥

यः मरुः भावयिता भावयिष्यति ॥ ६ ॥ ७ ॥

पित्राऽभिमन्युना ॥ ८—१४ ॥

---

भाषाटीका ।

श्रीरघुकुलोत्तंसाय पुंसे नमः ।

श्रीशुक उवाच ।

श्रीशुकदेव जी बोले, कि—श्रीरामके पुत्र राजा कुशके अतिथि पुत्र हुए, तिनके निषध, तिनके सुत नभ हुए, नभके पुत्र पुंडरीक हुए तिनके पुत्र क्षेमधन्वा होते भये ॥ १ ॥

क्षेमधन्वा के पुत्र देवानीक हुए, तिनसे अनीह तिनके पुत्र पारियात्र हुए, तिनसे बल तिनसे स्थल तिनसे सूर्य के अंश से उत्पन्न होने वाले वज्र नाभ हुए ॥ २ ॥

उनके सुत खगण हुए, तिनसे विधृति तिन से हिरण्य नाभ हुए, जो कि जैमिनि ऋषि के शिष्य होकर योगाचार्य हुए ॥ ३ ॥

जिन हिरण्य नाभ से कौशल्य याज्ञवल्क्य ऋषि ने अध्यात्म योग का अध्ययन किया, कि जिस योग से बड़ी २ सिद्धियें प्राप्त होवें । और जो योग हृदय की ग्रंथियों को भली भाँत भेदन कर सके ॥ ४ ॥

और हिरण्यनाभ के पुष्य हुए पुष्य के पुत्र ध्रुवसन्धि हुए उनके पुत्र सुदर्शन और अग्निवर्ण हुए उनके शीघ्र उनके मरुत पुत्र हुए ॥ ५ ॥

जो मरुत योग से सिद्ध होकर कलाप ग्राम में बैठे हुए हैं, कलि के अन्त में फिर उच्छिन्नहुए सूर्य वंश की वृद्धि करेंगे ॥ ६ ॥

उन मरुत के प्रसुश्रुत पुत्र हुए, उन के संधि और संधि के अमर्षण हुए, उन के पुत्र महस्वान् और सहस्वान के विश्वसाह्व पुत्र उत्पन्न हुए ॥ ७ ॥

एते ह्यिक्ष्वाकुभूपाला अतीताः शृणवनागतान् ।
बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ ९ ॥
(१)उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ।
प्रतिव्योमस्ततो भानु(२)र्दिवाको वाहिनीपतिः ॥ १० ॥
सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ।
प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ॥ ११ ॥
भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ।
तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥ १२ ॥
बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतञ्जयः ।
रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः ॥ १३ ॥
तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ।
ततः प्रसेनजित्तस्मात् क्षुद्रको भविता ततः ॥ १४ ॥
रणको भविता तस्मात्सुरथस्तनयस्ततः ।
सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्वयाः ॥ १५ ॥
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्याम् इक्ष्वाकुवंशवर्णनंनाम
द्वादशोऽध्यायः ॥ १२ ॥

भाषा टीका।

विश्वसाह्व के प्रसेनजित् उनके तक्षक पुत्र हुए उनके बृहद्बल पुत्र हुए जिनको तुम्हारे पिता अभिमन्यु ने युद्ध में मारडाला ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्तस्मादमित्रजित् ॥ १२—१४ ॥
निष्ठा वंशस्य स्थितिस्तस्या अन्तः ॥ १५ ॥
तदेवाह, इक्ष्वाकूणामिति ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
द्वादशोऽध्यायः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एते कथिताः इक्ष्वाकुवंशजा भूपाला अतीता अतिक्रान्ताः, अथानागतान् भाविनः इक्ष्वाकुभूपालान् मया कथ्यमानान् शृणु बृहद्बलस्य सुतो नाम्ना बृहद्रण इति प्रसिद्धस्तस्य बृहद्रणस्योरुक्षतस्तस्योरुक्षतस्य वत्सप्रीतः सुतो भविष्यति ततो वत्सप्रीतात् प्रतिव्योमः ततः प्रतिव्योमात् भानुः तस्माद्देवाकः स च वाहिन्याः सेनायाः पतिः ॥ ९ ॥ १० ॥

ततो देवाकात्सहदेवः ततः बृहदश्वः स च वीरः अथ बृहदश्वात् भानुमान् भानुमतः प्रतीकाश्वः तत्सुतः प्रतीकाश्वसुतः सुप्रतीकः ॥ ११ ॥

अथ सुप्रतीकान्मरुदेवः सुतो भविता तस्मात्सुनक्षत्रः तस्मात्पुष्करः तस्य पुष्करस्यान्तरिक्षः तत्पुत्रोऽन्तरिक्षपुत्रः सुतपाः ततस्तस्मात्सुतपसोऽमित्रजित् भविता ॥ १२ ॥

(१) उरुक्षत इति। (२) देवाकः इति च वी० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्यामित्रजितो बृहद्राजस्तस्माद्बृहद्राजाद्बर्हिषः तस्माद्बर्हिषो धनञ्जयः तस्य धनञ्जयस्य सुतो रणञ्जयस्ततो रणञ्जयात् सञ्जयस्सुता भविता ॥ १३ ॥

तस्मात्सञ्जयाच्छाक्यः तस्माच्छाक्यात् शुद्धोदः अथ तत्सुतः लाङ्गलः स्मृतः ततो लाङ्गलात् प्रसेनजित् तस्मात् प्रसेनजितः क्षुद्रकः भविष्यति ततः ॥ १४ ॥

क्षुद्रकात्कुणको भविता तस्मात्कुणकात्सुरथस्ततनयो भविष्यति तस्मात्सुमित्र इति प्रसिद्धः सुतो भविता स तु निष्ठान्तः निष्ठा वंशस्य स्थितिः तस्या अन्तः अन्तिमावधिभूतः एते बृहद्बलस्य भवितेत्यादिनोक्ताः बार्हद्बलाद्बृहद्बलगोत्रजा भाविनो नृपाः ॥१५॥

सुमित्रस्य निष्ठान्तत्वमेवाह, अथमिक्ष्वाकूणां वंशः सुमित्रोऽन्तोऽन्तावधिर्यस्य तथाभूतो भविष्यति, कुतः ? यतस्तं सुमित्रं राजानं प्राप्य कलौ युगे संस्थामुच्छेदं प्राप्स्यति वंश इत्यनुषङ्गः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनागतानुत्पत्स्यमानान् तद्वंशतत्पूर्वोत्तरत्र सम्बन्धयितव्यम् ॥ ९-११ ॥

यस्य सुतपसः सुतोऽमित्राजित् ॥ १२—१४ ॥

सुमित्रो नाम राजा निष्ठायाः वंशावधेरन्तो ऽवधिभूतः तत्र समाप्त इत्यर्थः ॥ १५ ॥

एतदेव विशदयति-इक्ष्वाकूणामिति। सुमित्रोऽन्तोऽवसानं यस्य स तथा संस्थां नाशं समाप्तिं वा "संस्था व्यवस्था प्रणिधिः समाप्त्याचारमन्त्रिषु" इति ॥१६॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् द्वादशोऽध्यायः ॥ १२ ॥ विजयध्वजरीत्या दशमः ।

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विश्वा अभिमन्युना ॥ ९--१४ ॥

नामनिष्ठयोर्वाच्यवाचययोरन्तो नाशो यस्मात् सः तस्माद्न्यो न भविष्यतीत्यर्थः । यद्वा नाम्नैव ननु कयाचन कालं नितरां तिष्ठन्तीति नामनिष्ठाः बृहद्बलसुतादयस्तेषामपि अन्तः प्रवाहसमाप्तिर्यस्मात् सः ॥ १५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निष्ठायाः वंशस्थितेरन्ते ॥ १५ ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वादशाऽध्यायार्थप्रकाशः ॥१२ ॥

---

भाषा टीका ।

ये सब इक्ष्वाकु वंशी भूपाल व्यतीत होगये अब आगे जो होने वाले हैं उनको सुनो। बृहद्बल के पुत्र बृहद्रण ऐसे प्रसिद्ध नाम वाले होंगे ॥ ९ ॥

बृहद्रण के उरुक्रिय होंगे तिनके वत्सवृद्ध होंगे, तिनके प्रतिव्योम तिनसे भानु तिनसे दिवाक वाहिनीपति होंगे ॥ १० ॥

तिनसे सहदेव तिनसे बड़े वीर बृहदश्व तिनसे भानुमान् भानुमान् के प्रतीकाश्व तिनके पुत्र सुप्रतीक होंगे ॥ ११ ॥

तिनसे मरुदेव तिनसे सुनक्षत्र तिनसे पुष्कर तिनके अन्तरिक्ष, तिनके सुतपा, तिनके अमित्रजित होंगे ॥ १२ ॥

तिनके भी बृहद्राज होंगे तिनसे बर्हि तिनसे कृतञ्जय तिनसे रणञ्जय तिनके पुत्र संजय होंगे ॥ १३ ॥

तिनसे शाक्य तिनसे शुद्धोद तिनसे लाङ्गल होंगे तिनसे प्रसेनजित, तिनसे क्षुद्रक होंगे ॥ १४ ॥

तिनसे रणक होंगे तिनसे सुरथ तनय होंगे तिनसे सुमित्र नाम वाले राजा होंगे बस इनहीं तक वंश की स्थिति रहेगी। ये जो कहे सो सब राजा बार्हद्बल के वंश के हुए ॥ १५ ॥

बस यह इक्ष्वाकुओं का वंश सुमित्र राजा तक ही होगा क्योंकि ? इस राजा को प्राप्त होकर कलियुग में यह वंश संस्था ( नाश ) को प्राप्त होगा ॥ १६ ॥

इति श्रीमद्भागवत नवम स्कन्ध में द्वादश अध्याय की, श्रीवृन्दावनस्थ पं भागवताचार्यकृत भाषाटीका समाप्ता ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## ॥ त्रयोदशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ।
आरभ्य सत्रं सोऽप्याह शक्रेण प्रागवृतोऽस्मि भोः! ॥ १ ॥
तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ।
तूष्णीमासीद्गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥
(१)निमिश्चलमिदं विद्वान् सत्रमारभतात्मवान् ।
ऋत्विग्भिरपरैस्ताव(२)न्नागमद्यावता गुरुः ॥ ३ ॥
शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ।
अशपत्पतताद्देहो निमेः पण्डितमानिनः ॥ ४ ॥
निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ।
तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥ ५ ॥
इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥
गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः ।
समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥
राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ।
तथेत्युक्ते निमिः प्राह माभून्मे देहबन्धनम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ।
वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ ० ॥

निमेरौरसः पुत्रो नाभूदिति दर्शयन् कथामाह, निमिरित्येकादशभिः । सत्रमारभ्य वसिष्ठमृत्विजमवृत वव्रे ॥ १ ॥

तं शक्रस्य मखं निर्वर्त्य, प्रतिपालय प्रतीक्षस्वेति गृहपतिः निमिः ॥ २ ॥

इदं जीवितं चलमस्थिरं विद्वान् ॥ ३ ॥

इन्द्रस्य मखं निर्वर्त्यागतो गुरुः शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देहः पतत्वित्यशपत् ॥ ४ ॥ ५ ॥

ऊर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुम्भे निषिक्तं तस्मात्प्रपितामहो वसिष्ठो जज्ञे तदाह, मित्रावरुणयोरिति । तथाच श्रुतिः "कुम्भे रेतः सिषिचतुः समानम्" इति ॥ ६ ॥ ७ ॥

यदि प्रसन्नाः प्रभवः समर्थाश्च तर्हि जीवत्वित्यूचुः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं—

"श्रुतवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥"—

---

( १ ) निमिस्सत्रविद्याम इति । ( २ ) यावत्तन्नागमद्गुरुः इति च विज०।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युपक्रान्तानामिक्ष्वाकुसुतानां विकुक्षेर्वंशः कथितः अथ निमेर्वंशं विवक्षुस्तावन्निमेरौरसः पुत्रो नाभूदिति दर्शयितुं तत्कथामाह—निमिरित्यादिना अराजकभयादित्यतः प्राक्तनेन । इक्ष्वाकोः सुतनयो निमिः कदाचित्सत्रमारभ्य वसिष्ठमृत्विजम् अवृत त्वमृत्विक् भवेति वसिष्ठमुवाचेत्यर्थः । ततः स वसिष्ठः भो हे निमे ! प्राक् त्वद्वरणात्पूर्वमेवाहं शक्रेण वृतोऽस्मि ॥ १ ॥

अतस्तं शक्रस्य मखं निर्वर्त्य निष्पाद्य कारयित्वेत्यर्थः आगमिष्यामि तावत्पर्यन्तं त्वं प्रतिपालय प्रतीक्षस्वेत्याह—ततो गृहपतिः निमिः तूष्णीमासीदिति किञ्चिदप्यवदंस्तस्थौ ततः स वसिष्ठः शक्रस्य मखमकरोत् ॥ २ ॥

तदा निमिरात्मवान् प्रकृतिपुरुषेश्वरयाथात्म्यविदत एवेदं जीवितं चलमनित्यं जानन् चलमितिपाठे इदं गुरोर्वचः आर्त्विज्याकरणं मिथ्याहेतुं जानन्नित्यर्थः । यावद्गुरुर्वसिष्ठो नागतः तावदन्यैः ऋत्विग्भिः सत्रमारब्धवान् ॥ ३ ॥

शिष्य इति । ततो गुरुर्वसिष्ठः शक्रस्य मखं निर्वर्त्यागतः शिष्यस्य निमेर्व्यतिक्रमं गुरुवाक्यातिक्रमं वीक्ष्याऽशपत्, किमिति ? पण्डितमात्मानं मन्यत इति तथा तस्य निमेर्देहः पततां वियुज्यतामिति. निमे इति पाठे, हे निमे ! पण्डितमानिनस्तव देहः पततामित्यर्थः ॥४॥

निमिरिति । तदाकर्ण्य निमिरपि धर्मोऽनुवर्त्तिने गुरवे वसिष्ठाय प्रतिशापं ददौ, किमिति ? वित्तलोभाद्धर्ममजानतस्तवापि देहः पततामिति ॥ ५ ॥

इतीति । इतीत्थं वदन् निमिरध्यात्मकोविदः स्वं देहं तत्याज तथा अस्मत्प्रपितामहः वसिष्ठोऽपि त्यक्तदेहः पुनर्मित्रावरुणयोरुर्वशीदर्शनात्स्कन्नवीर्ययोस्तस्या जज्ञे अत्रोर्वशीदर्शनान्मित्रावरुणयोः स्कन्नं रेतः ताभ्यां तत्कुम्भे निषिक्तं तस्माज्जज्ञे अस्मत्प्रपितामह इतीतिहासोऽनुसन्धेय इतिभावः ॥ ६ ॥

अथ तं त्यक्तं निमेर्देहं सुगन्धिवस्तुषु परिमलद्रव्येषु गन्धतैलेषु निधाय मुनिसत्तमा ऋत्विजः सत्रे यागे सति । अथानन्तरं तत्र समागतान् देवानूचुः ॥ ७ ॥

किमिति ? यदि यूयं प्रभवः जीवयितुं समर्थाः प्रसन्नाश्च तर्हि राज्ञो निमेरयं देहो जीवत्विति. ततो देवैस्तथेति जीवत्वयं देह इत्युक्ते सति निमिः प्राह, तदेवाह—माभूदित्यादिना विदेह उष्यतामित्यतः प्राक्तनेन । देहबन्धनं देहयोगः पुनर्मम माभूत् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवृत वव्रे स वसिष्ठोऽपि तं शक्रस्य यज्ञं निर्वर्त्य समाप्य प्रतिपालय प्रतीक्षस्व गृहपतिर्निमिः ॥ १—२ ॥

सन्तस्थायत इति सत्र आयाति या सत्रं ब्रह्म तद्विदां मध्ये विद्वांस्तेषां संशयच्छेत्ता अपरैर्वसिष्ठव्यतिरिक्तैः तावदागमविरयोद्विग्ना गुर्वपेक्षायाः नियतत्वदर्शनात्प्रतिसन्धानमगणयन्व शिष्याय शापदानमधर्म इतिकृत्वाऽधर्मवर्तिन इत्युक्तम् ॥ ३—४ ॥

लोभात् पौरोहित्यविषयात् ॥ ५ ॥

तत: किमभूदिति तत्राह—मित्रावरुणयोरिति । यो मित्रावरुणयोरुर्वश्यां जज्ञे सः मम प्रपितामहो वसिष्ठः ॥ ६ ॥

तद्देहं तस्य निमेर्देहं गन्धवस्तुषु गन्धवासिततैलेषु हरिद्रादिद्रव्यविशेषेषु निधाय सत्रनामयागे ॥ ७ ॥

देहलक्षणबन्धनम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—७ ॥

अथ त्रयोदशे निमिः प्राहेति योगबलेन लिङ्गशरीरमवलम्ब्यैवेति ज्ञेयम् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निमेरिक्ष्वाकुपुत्रस्य वंशमुक्त्वा त्रयोदशे ।
समापितः सूर्यवंशो विष्णुवैष्णवसत्कथः ॥
॥ १ ॥

प्रतिपालय प्रतीक्षस्व गृहपतिर्निमिः ॥ २ ॥

इदं जीवितं च चलमस्थिरं विद्वान् यत आत्मवान् सुबुद्धिः ॥ ३ ॥

निर्वर्त्य शक्रस्य मखं निष्पाद्य आगतः शिष्यस्य निमेर्व्यतिक्रमं स्वस्याऽनपेक्षाम् ॥ ४ ॥

अधर्मवर्तिने लोभात् इन्द्रतो मत्तोऽपि दक्षिणाकांक्षारूपात् ॥ ५ ॥

प्रपितामहो वसिष्ठः देहं त्यक्त्वा मित्रावरुणयोर्जज्ञे इति उर्वशीदर्शनतस्तद्वीर्यरेतः कुम्भे निहितावित्यर्थः । तथा च श्रुतिः "कुम्भे रेतः सिषिचतुः समानम्" इति ॥ ६ ॥

तद्देहं निमिशरीरम् ॥ ७ ॥

यदि प्रसन्नाः प्रभवः समर्थाश्च तर्हि जीवत्वित्यूचुः तथेति देवैरुक्ते सति ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इक्ष्वाकुपुत्रस्य निमेर्वंशमाह—निमिरितित्रयोदशेन । निमिः सत्रमारभ्य वसिष्ठम् ऋत्विजम् अवृत वव्रे ॥ १ ॥

तं शक्रमखं निर्वर्त्य निष्पाद्य तावन्मां प्रतिपालय प्रतीक्षस्व गृहपतिः निमिः ॥ २ ॥

इदं जीवितम् ॥ ३ ॥

निर्वर्त्य शक्रमखमिति शेषः ॥ ४-५ ॥

इति अनेन गुरुशापेन निमिः स्वं देहम् उत्ससर्ज तथाऽस्मत्प्रपितामहः वसिष्ठस्त्यक्तदेह उर्वश्यामुर्वशीदर्शनात् कुम्भे निहितवीर्ययोर्मित्रावरुणयोः पुत्रः तथा अगस्त्यसहितो जज्ञे तथा च श्रुतिः "कुम्भे रेतः सिषिचतुः समानम्" इति ॥ ६ ॥

तस्य निमेर्देहम् ॥ ७ ॥

हे प्रभवः ! यदि प्रसन्नाः यूयं तर्हि जीवतु ॥ ८-९-१० ॥

यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥ ९ ॥
देहं नावरुरुत्सेऽहं दुःख[1]शोकभयावहम् ।
सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥
देवा ऊचुः ॥
विदेह ! उष्यतां कामं लोचनेषु शरीरिणाम् ।
उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥
अराजकभयं नृणां मन्यमाना महर्षयः ।
देहं ममन्थुः स्म निमेः कुमारः समजायत ॥ १२ ॥
जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥
तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्द्धनः ।
ततः [2]सुकेतुस्तस्यापि देवरातो महीपते ! ॥ १४ ॥

भाषा टीका ।

श्रीरुक्मिणीरमणो जयति ।

अब इस तेरहवें अध्याय में इक्ष्वाकु के पुत्र निमि का वंश कहते हैं कि जिस वंश में बड़े २ ब्रह्मज्ञानी जनक प्रभृति राजा लोग हुए।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-इक्ष्वाकु के पुत्र निमिने यज्ञ का आरंभ करके वसिष्ठ महाराज को ऋत्विज स्वीकार किये, तब वसिष्ठजी ने कहा कि—हेनिमे ! पहिले इन्द्रने अपने यज्ञके लिये हम को वरण कर लिया है ॥ १ ॥

इस लिये उस यज्ञको संपूर्ण करके जब तक हम आवें तब तक हमारी प्रतीक्षा करो, इतना सुनकर राजा भी चुप चाप रहा वसिष्ठजी भी इन्द्र का यज्ञ करने गये ॥ २ ॥

जब तक गुरुजी इन्द्र के यहां से नहीं आवें तब तक राजा निमिने इस शरीर को चल जानकर और ही ऋत्विजों से यज्ञ का आरंभ करते हुए क्योंकि ? आत्मज्ञानी रहें ॥ ३ ॥

वसिष्ठजी भी इन्द्र के यज्ञ से निवृत्त होकर आये और आकर अपने शिष्य के व्यतिक्रम को देखकर अपने शिष्य निमि को यह शाप देते हुए कि पंडितमानी निमि का देह पतन होजाओ ॥ ४ ॥

तब निमि ने भी अधर्मवर्त्ती गुरुको शाप देदिया कि-"लोभ से धर्म को नहीं जानने वाले ऐसे तुमारे देह का भी पतन होजाओ ॥ ५ ॥

इस प्रकार शाप देकर निमि भी वसिष्ठ के शाप से देह का त्याग करते हुए क्योंकि अध्यात्म कोविद जो रहे। और वसिष्ठ जी भी उर्वशी में मित्रावरुण देव से उत्पन्न हुए । अर्थात् यज्ञ समय में उर्वशी के देखने से मित्र और वरुण के वीर्य पतन होने पर एक कुंभ में निषेक कर दिया तिससे फिर वसिष्ठ हुए इसी से मैत्रावरुणि कहाये ॥ ६ ॥

जब राजा निमि ने देह छोड़ दिया तब मुनि लोगों ने गंध वाली वस्तुओं में राजाके देह को धरवा दिया और यज्ञके समाप्त होने पर आये हुए देवों से ब्राह्मण लोग बोले, कि ॥ ७ ॥

हे देव लोगो ! यदि आप समर्थ लोग प्रसन्न हुए हों तो वह राजा का देह जी जावे देवों ने कहा कि "तथास्तु" [ ऐसाही होवे ] तब राजा निमि बोले, कि-नहीं मेरे लिये देह का बंधन मत होवै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्य देहस्य योगं न वाञ्छन्त्यपितु मोक्षायैव भजन्ति ॥ ९ ॥ १० ।

निमिर्विदेह एव सन्नुष्यतां वसतु कामं यथेच्छम् एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबन्ध इति भावः सर्वाध्यात्मसंस्थितो लोचनयोः स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्त्तकत्वेन लक्षितोऽवर्त्तत इति शेषः ॥ ११ ॥

तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति अराजकभयमिति ॥ १२ ॥

---

(१) मोहभयाश्रयम् ।　(२) सुकेशः इतिश्च वीर० पाठः ।

तस्माद्बृहद्रथस्तस्य महावीर्यः(१) सुधृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥
मरोः प्रतीपकस्तस्माज्जातः कृतिरथो यतः ।
देवमीढस्तस्य सुतो (२)विश्रुतोऽथमहाधृतिः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्यान्वर्थानि त्रीणि नामान्याह, जन्मनाऽसाधारणेन जन एव जनकः यद्वा स्वदेहद्वारा जनकत्वात्स निमिर्जनकोऽभूदित्यर्थः । मिथिला येन निर्मिता इत्यनेन व्युत्पत्त्यन्तरमर्थादुक्तम् ॥ १३ ॥ १४॥

सुधृत् सुधृतिस्तस्य पिता ॥ १५—२० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र हेतुं वदन्नाह-यस्येति।मुनयो वियोगभयकातराः देहयोगे सति पुनर्वियोगः स्यात् अतो वियोगभयदुःखावहत्वात् पूर्वं यस्य देहस्य योगं न वाञ्छन्तीत्यर्थः।किन्तु हरिमेधसो भगवतः चरणाम्भोजमेव भजन्ते हरिराश्रितानां संसृतिबन्धं हरतीति तथा स चासौ मेधास्तेषाम् इष्टप्रापणानिष्टपरिहारोपयुक्तज्ञानवान् तस्य ॥ ९ ॥

देहमिति । अतोऽहं दुःखादिनिमित्तभूतं देहं नावरुरुत्से अव-रोद्धुं गृहीतुं नेच्छामि यतो देहस्यावरोधाद्देहस्य देहिनः सर्वदा पुनः पुनरिति भावः।मृत्युरनुवर्तत इति शेषः। यथोदके वसतां मत्स्या-दीनां मृत्युः पौनःपुन्येन तद्वदित्यर्थः ॥ १० ॥

इत्थमुक्ता देवा ऊचुः, तदेवाह-निमिर्विदेह एव सन् अध्यात्म-संस्थितः सूक्ष्मदेहस्थितिमान् कामं यथेच्छं शरीरिणां लोच-नेषून्मेषनिमेषाभ्यां लक्षितस्तत्प्रवर्तकत्वेन सूचित उष्यतां स्थीयताम् एवञ्च युष्माभिः प्रार्थितमस्य जीवितमपि भविष्यति न च स्थूलदेहसम्बन्ध इति भावः ॥ ११ ॥

तदेवं मृतस्यापि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति-अराजकभयमिति। नृणामराजकत्वनिमित्तं भयं मन्यमानाः सम्भावयन्तो ये महर्षयो निमेर्देहं ममन्थुः मथितवन्तः ततः कुमारः समजायत ॥ १२ ॥

तस्यान्वर्थानि त्रीणि नामान्याह—जननादिति । जनना-दजनसाधारणाज्जन्मनो निमित्ताज्जनकपदाभिधेयो बभूव यद्वा स्वदेहद्वारा जनयितृत्वाज्जनकः विदेहतः जीवविमुक्ताद्देहा-ज्जातत्वाद्वैदेहाख्यः मथनाज्जातत्वान्मिथिलः येन मिथिल-शब्दाभिधेयेन निर्मितत्वात्पुर्यपि मिथिलाख्या बभूवेत्यर्थः ॥१३॥

तस्मादिति । तस्मान्मिथिलादुदावसुरजायतेत्यनुषङ्गः। तस्यो-दावसोर्नन्दिवर्धनः पुत्रो बभूव ततो नन्दिवर्धनात् सुकेतुस्तस्यापि देवरातः पुत्रः हे महीपते ! ॥ १४ ॥

तस्माद्देवरातात् बृहद्रथः तस्य बृहद्रथस्य महावीर्यः तत्पुत्रं वदन् तं विशिनष्टि—सुधृत्पितेति। सुधृतस्य पुत्रस्य पितेत्यर्थः । सुधृतः पुत्रो धृष्टकेतुः अथ धृष्टकेतोर्हर्यश्वः ततो हर्यश्वान्मरुः ॥ १५ ॥

मरोः पुत्रः प्रतीपकः तस्मात्प्रतीपकात्कृतरथो जातः तं विशिनष्टि तत्पुत्रमाह-यतः कृतरथाद्देवमीढो जात इत्यनुषङ्गः तस्य देवमीढस्य सुतो विधृतः अथ विधृतान्महाधृतिः ॥ १६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमिति देहसम्बन्धो माभूदिति तत्राह-यस्येति। यस्य देहस्य योगं सम्बन्धम् यस्य वियोगभयेन कातराः व्यग्रचित्ताः हरिः भक्त-जनतापहरणशीला मेधा धारणावती धीः "धीर्धारणावती मेधा" इत्यमरः।बुद्धिर्यस्य स तथा तस्य हरिवत्सूर्यवत्प्रकाशमाना मेधा यस्येति वा तस्य विष्णोः मुनयो वाचंयमाः ॥ ९ ॥

तं देहं नावरुरुत्से स्वीकर्तुं नेच्छामि दुःखं तीव्रवेदना शोकः मन्युः "मन्युशोकौ तु शुक् स्त्रियाम" इत्यमरः । भयं सञ्चलनम् ततोऽपि देहग्रहणेच्छा नेत्याह— सर्वत्रेति ॥ १० ॥

अदेहस्यास्य वासः कथङ्घटते ? अधिष्ठानाद्यभावादिति तत्राह-लोचनेष्विति ।। लोचनेष्वस्य सद्भावः कथञ्ज्ञायते ? इति तत्राह-उन्मेषणेति । किमस्य कर्म ? इति तत्राह—अध्यात्मेति । परमात्मोपासना युक्तः ॥ ११-१२ ॥

नामनिर्वचनपूर्वकं जनकस्य वंशं कथयति—जननादि-त्यादिना । मथनेन जननमस्येत्यस्मिन्नर्थे मिथिलेति निपातनं शवानां शयनमस्मिन्निति श्मशानमितिवत् मिथिला पुरी ॥ १३ ॥ १४ ॥

सुधृत्पिता सुधृतो जनकः ॥ १५-१७ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ ९ ॥

अस्य वियोगो भविष्यतीति भयेन कातरा विक्लवात्मानः सन्तो यस्य योगमात्रं किमुत तत्सम्बन्धिनानाजन्म नाना-जातीयसुखं न वाञ्छन्ति किन्तु भजन्ति केवलम् । ननु, चरणा-म्भोजं भजन्तीति सेवा सुखेच्छा दर्शिता सेवा च देहं विना न सम्भवति, तर्हि कथं तदुपयुक्तं देहमपि न वाञ्छन्ति ?नेत्याह, देहमिति । दुःखावहमेव न कामये तदीयपरमसेवोपयुक्त-देहस्तु पार्षदरूप एव स च नित्यसुखात्मक एवेति भावः । भाश्र-यादिति पाठेऽपि स एवार्थः ॥ १० ॥

देवा ऊचुरिति देवास्तु यत्किञ्चिदेव समादधत ऊचु-रित्यर्थः। राज्ञो जीवतु देहोऽयमिति मुन्यर्थितस्य राज्ञा तन्नि-षेधस्य च करयोःसङ्कटस्यापातात् तदीयपरमाभीष्टस्य च दातुं शक्यत्वादिति भावः ॥ ११ ॥

(१) सुधृत्पिता । (२) विधृतः इति च वीर० पाठः ।

कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः ।
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥
ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ।
सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥ १८ ॥
कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥
कृतध्वजात्केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ।
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अराजक इति ततः स्वभावयं चात्यर्थं ते चक्रुरिति भावः ॥ १२-२७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भजन्तीति देहाभावे चरणाम्भोजभजनासम्भवान्मम भगवत्पार्षददेहोऽस्त्विति प्रार्थनारूपो गूढो ध्वनिः ॥ ९ ॥

नाहमुत्सहे न धर्तुमिच्छामि उदके उदकेऽपि जलचरादन्यस्मादन्यत्र स्थले स्वभावाच्च मृत्युरित्यर्थः देवा ऊचुरिति देहो जीवत्विति मुनीनां प्रार्थितं न जीवत्विति राज्ञः पार्षददेहो भवत्विति तृतीयप्रार्थितस्य दातुमशक्यत्वादुभयमेव दित्सन्त ऊचुरित्यर्थः ॥ १० ॥

निमिर्विदेह एव उष्यतां वसतु स्वच्छिनो ज्ञातः सन् लोचनेषु अध्यात्मसंस्थित इत्याभ्यां जीवितं देहबन्धाभावश्चेत्युभयथा प्रार्थितं भेत्स्यतीति भावः ॥ ११—१२ ॥

जन्मना असाधारणेन जायत इति जनकः ॥ १३—१४ ॥

सुधृतेः पिता सुधृतपिता ॥ १५-१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निमिर्विदेहः स्थूलदेहरहित एव अध्यात्मसंस्थितः सूक्ष्मदेहसंस्थितः शरीरिणां लोचनेषु उन्मेषणनिमेषाभ्यां स्वप्रयोज्याभ्यां प्रयोजकतया लक्षितः सूचितः कामं यथासुखम् उष्यतां स्थीयताम् एवं सति युष्मत्प्रार्थितमस्य जीवितं भवत्विति भावः ॥ ११ ॥

निर्जीवान्निमिदेहात्पुत्रं शशनाह-अराजकभयमित्यादिना ॥ १२ ॥

स च कुमारः अलौकिकेन जन्मना जन एव जनकसंज्ञः विगतः जनकसम्बन्धरहितो देहो यस्य स निमिर्विदेहः तज्जोऽपि विदेह उपचारात्तत्कुमारोऽपि विदेह इत्युच्यते मथनाज्जातो मिथिल संज्ञोऽभूत् ॥ १३—१४ ॥

सुधृतिपिता सुधृतेः पिता ॥ १५—२० ॥

भाषा टीका ।

क्योंकि ? मुनिजन वियोग के भय से कातर होकर जिस देह के योग की इच्छा नहीं करते और श्रीहरि में बुद्धि को लगाकर श्रीहरि के चरण कंज को भजते हैं ॥ ९ ॥

इस कारण मैं देह को नहीं स्वीकार करूंगा क्योंकि यह देह दुःख शोक और भय को देने वाला है और सब जगे इसकी मृत्यु है जैसे मत्स्य लोगों को जल में सर्वत्र मृत्यु है ॥ १० ॥

इतना वचन निमि का सुनकर—

देवाऊचुः ॥

देव लोग बोले कि—हे निमि महाराज ! तुम देह धारियों के लोचनों में वास करो और अध्यात्म संस्थित होकर निमिष उन्मेष द्वारा मालूम हुआ करो ॥ ११ ॥

तब महर्षि लोगों ने मनुष्यों को अराजक भय मानकर निमि के देह का मंथन किया तब निमि के शरीर से पुत्र उत्पन्न हुआ ॥ १२ ॥

जन्म लेने से वह जनक कहाया विना देह वाले से उत्पन्न हुआ इसीसे विदेहज कहाया और मथन से हुआ इस कारण मिथिल भी कहाया, जिनने मिथिलापुरी का निर्माण किया ॥१३॥

हे महीपते ! तिन से उदावसु हुए, तिनके पुत्र नंदिवर्द्धन हुए तिन से सुकेतु हुए तिनके भी देवरात हुए ॥ १४ ॥

तिनसे बृहद्रथ हुए, तिनके महावीर्य, तिनसे सुधृति, सुधृति के धृष्टकेतु तिनसे हर्यश्व और मरु सुत हुए ॥ १५ ॥

मरु से प्रतीपक हुए तिनसे कृतिरथ उत्पन्न हुए, तिनके देवमीढ तिनसे विश्रुत तिनके महाधृति ॥ १६ ॥

खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्द्रुतः ।
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥
शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ।
ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥ २२ ॥
अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ।
ततश्चित्ररथो यस्य क्षेमधिर्मिथिलाधिपः ॥ २३ ॥
तस्मा (१) त्समरथस्तस्य सुतः (२) सत्यरथस्ततः ।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य केशिध्वजस्य भानुमान् ॥ २१ ॥ २२ ॥
तस्मात्सुपार्श्वकः ॥ २३ ॥
अग्निसम्भवोऽग्नेरंशात्सम्भूतः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो महाधृतेः कृतिरातः तस्मात्कृतिरातान्महारोमा जातः तत्सुतो महारोम्णस्सुतः स्वर्णरोमा तस्य स्वर्णरोम्णः ह्रस्वरोमा व्यजायत ॥ १७ ॥

ततो ह्रस्वरोम्णः सीरध्वजो जज्ञे तस्मिन् सीरध्वजशब्द-प्रवृत्तौ निमित्तमाह—यतो ह्रस्वरोमस्य यज्ञार्थं महीं भुवं कर्षतः कर्षणतस्सतः सीराल्लाङ्गलाग्रात्सीता दाशरथेर्भार्या पूर्वं भूयिष्ठा सती जाता प्रादुर्भूता तस्मान्निमित्ताद्ध्रस्वरोमस्सीरध्वजशब्दा-भिधेयो बभूव सीर एव ध्वजवत् ख्यातिहेतुर्यस्य स सीरध्वजः॥१८॥

तस्य सीरध्वजस्य पुत्रः कुशध्वजः ततः कुशध्वजात् धर्मध्वजः पुत्रः । हे नृप ! धर्मध्वजस्य द्वौ पुत्रौ, तौ च कृतध्वजमितध्वजाख्यौ ॥ १९ ॥

तत्र कृतध्वजात्केशिध्वजो बभूव मितध्वजात् खाण्डिक्यो जातः हे राजन् ! कृतध्वजसुतः केशिध्वजो ब्रह्मविद्यायां प्रवीणः ॥ २० ॥

खाण्डिक्यस्तु कर्मयोगयाथात्म्यवित् स च केशिध्वजात् भीतो गतः तस्य केशिध्वजस्य सुतो भानुमान् पुत्रो बभूव तत्सुतो भानुमत्सुतः शतद्युम्नः ॥ २१ ॥

तस्मात् शतद्युम्नात् शुचिस्तनयोऽभूत् ततः शुचेः सन-द्वाजोऽभवत् सनद्वाजादूर्ध्वकेतुः अथोर्ध्वकेतोरजः स च पुरुजि-त्सुतो यस्य तथाभूतः ॥ २२ ॥

तस्यापि पुरुजितोऽपि सुतोऽरिष्टनेमिः तस्य श्रुतायुस्तस्य पार्श्वकः ततः पार्श्वकाच्चित्ररथः तस्य चित्ररथस्य क्षेमाद्रिः स च मिथिलाधिपः इदं पूर्वेषामपि विशेषणम् ॥ २३ ॥

तस्मात् क्षेमाद्रिः हेमरथस्सुतः तस्मात् कृत्यरथः तस्मादुप-गुरुरासीत् तस्मादुपगुरोरुपगुप्तः स चाऽग्निसम्भवः अग्नेरं-शात्सम्भूतः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सीता जननहेतुत्वेन सीरं ध्वजं गमकं ज्ञापकं यस्य स सीरध्वजः "ध्वज गतौ" इति धातुः ॥ १८-२९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्षतो यस्य सीता रामपत्नी सीराग्रतो लाङ्गलाग्रतो जाता तस्मादेव हेतोः सीरमेवध्वजः कीर्तिध्वजको यस्य सः ॥१८-२०॥

द्रुतः पलायितः ॥ २१ ॥
तस्य केशिध्वजस्य भानुमान् ॥ २२ ॥
तत् तस्य ॥ २३—२४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

केशिध्वजादात्मविद्याविशारदात् भीतः सन् द्रुतः अन्यत्र गतः तस्य केशिध्वजस्य भानुमान् ॥ २१-२२ ॥
तत्तस्मात् ॥ २३ ॥
अग्निसम्भवः अग्न्यंशादुत्पन्नः ॥ २४ ॥

---

भाषाटीका ।

तिनके कृतिरात तिनसे महारोमा तिनसे स्वर्णरोमा, तिनसे ह्रस्वरोम उत्पन्न हुए ॥ १७ ॥

तिनसे सीरध्वज उत्पन्न हुए यज्ञ के अर्थ पृथिवी का कर्षण करते रहे इतने में सीर [ हल ] के अग्र से सीता जो उत्पन्न हुई इससे सीरध्वज कहाये ॥ १८ ॥

(१) हेमरथः ॥ (२) कृत्यरथः इति च वीर० पाठः ।

वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ।
श्रुतस्ततो जयस्तस्माद्विजयोऽस्माहतः सुतः ॥ २५ ॥
शुनकस्तत्सुतो जज्ञे वीतिहव्यो धृतिस्ततः ।
बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥ २६ ॥
एते वै मैथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे निमिवंशानुवर्णनं नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

भाषा टीका ।

तिनके पुत्र कुशध्वज हुए, तिनसे धर्मध्वज नृप हुए, धर्मध्वज के दो पुत्र हुए कृतध्वज और मितध्वज ॥ १९ ॥

कृतध्वज से केशिध्वज हुए, मितध्वज से खांडिक्य हुए, हे राजन्! कृतध्वज के पुत्र केशिध्वज ब्रह्मविद्या विशारद हुए, ॥२०॥

और खांडिक्य कर्म के तत्त्व को जानने वाले हुए पर केशिध्वज से भयभीत होकर भाग गये फिर केशिध्वज के पुत्र भानुमान् हुए तिन के पुत्र शतद्युम्न हुए, ॥ २१ ॥

तिनके तनय शुचि हुए तिन से सनद्वाज हुए, सनद्वाज से ऊर्ध्वकेतु हुए तिनसे अज तिन से पुरुजित पुत्र हुए ॥ २२ ॥

तिनके भी अरिष्टनेमि हुए तिनके श्रुतायु हुए, तिनके पार्श्वक हुए तिन से चित्ररथ उत्पन्न हुए जिनके पुत्र क्षेमाधि मिथिला के पति हुए ॥ २३ ॥

तिन से समरथ हुए, तिनके सुत सत्यरथ हुए, तिनसे उपगुरु के अग्नि के अंश से होने वाले उपगुप्त हुए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यस्मात्सुभाषणः ॥ २५ ॥ २६ ॥
योगेश्वरो याज्ञवल्क्यादयस्तेषां प्रसादेन ॥ २७ ॥
इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोदशोऽध्यायः ॥१३॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत उपगुप्तादुद्वसनः पुत्रोऽभवत् ततः सुवर्चाः यत् यस्मात् सुभाषणोऽजनि ततः सुभाषणाच्छ्रुतो जज्ञे तस्माच्छ्रुतात् जयः तस्माज्जयाद्विजयः अस्य विजयस्य सुतो धृतः, ऋतः इति पाठान्तरम् ॥ २५ ॥

तत्सुतो ऋतसुतः शुनकः अनघ इति पाठान्तरं ततो वीतिहव्यः ततश्च धृतिः धृतेर्विपुलाश्वः तस्य कृतिः तस्य कृतेः महावशी जज्ञे ॥ २६ ॥

हे राजन्! एते कथिता मैथिलाः मिथिलवंशजाः आत्मविद्यायां विशारदाः योगीश्वरप्रसादेन भगवत्प्रसादेन गृहेषु सन्तोऽपि द्वन्द्वैः सुखदुःखादिभिर्विमुक्ता बभूवुः ॥ २७ ॥
इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गृहेषु स्थिता अपि योगेश्वरस्य याज्ञवल्क्यस्य प्रसादेन जनकादयो द्वन्द्वैः शीतोष्णादिभावैः मुक्ता आत्मारामा इत्यर्थः ॥२७॥
इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीय
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तीसारार्थदर्शिनी ।

अग्निसम्भवः अग्न्यंशसम्भूतः यत् यस्य ॥ २५—२७ ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशोऽयं नवमे सङ्गतः सङ्गतः सताम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वत् यस्मात् ॥ २५-२७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाऽध्यायार्थप्रकाशः ॥ १३ ॥

---

भाषा टीका।

तिन के पुत्र वज्रनंन हुए, तिनके पुत्र युयुधान तिनसे सुभाषण तिनसे श्रुत तिनसे जय तिनसे विजय तिन से ऋत पुत्र हुए, ॥ २५ ॥

तिनके शुनक हुए, तिनसे वीतिहव्य तिनसे, धृति धृति से बहुलाश्व, तिनके कृति तिनके महावशी ॥ २६ ॥

हे राजन्! ये सब मैथिल राजा लोग आत्म विद्या में विशारद हुए और याज्ञवल्क्यादि योगेश्वरों के प्रसाद से सभी राजा लोग गृह में रहकर भी सुख दुःखादिद्वंद्वों से मुक्त हुए, ॥ २७ ॥

इति श्रीमद्भागवत नवमस्कन्ध में त्रयोदशमध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत-
भाषा टीका समाप्ता ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥



## ॥ चतुर्दशोऽध्यायः ॥

—:॰:—

श्रीशुक उवाच।

अथातः श्रूयतां राजन् ! वंशः सोमस्य पावनः।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्त्तयः॥ १ ॥
सहस्रशिरसः पुंसो नाभिहृदसरोरुहात्।
जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः॥ २ ॥
तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल।
[1]विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः॥ ३ ॥
सोऽयजद्राजसूयेन विजित्य भुवनत्रयम्।
पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात्॥ ४ ॥
यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात्।
नात्यजत्तत्कृते जज्ञे सुरदानवविग्रहः॥ ५ ॥
शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम्।
हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः॥ ६ ॥
सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात्।
सुरासुरविनाशोऽभूत्समरस्तारकामयः॥ ७ ॥
निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत्।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

चतुर्दशादिभिः सोमवंशमाह समासितः।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्त्तयः॥१॥
चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद्बुधात्।
जाताश्चैलाः पुरुवंश्यामायुमुख्यानजीजनत्॥ २॥
॥ १॥ २॥

दृग्भ्य आनन्दाश्रुभ्यः अत एवाऽमृतमयः किलेत्याश्चर्ये पाठान्तरे दृशो नेत्रात् वक्ष्यमाणादर्पकारणमाह विप्रेति॥ ३॥

सोमस्य पुत्रो बुध इति कथाद्वारेणाह—पत्नीमिति सार्द्धैर्नवभिः॥ ४॥

तत्कृते तन्निमित्तम्॥ ५॥

सुराणां दानवानां च विग्रहे कारणमाह—शुक्र इति। असुरैः सहितः उडुपमग्रहीदित्यर्थः। सन्निधरार्थः गुरोः सुतं बृहस्पतिमग्रहीत् आङ्गिरसः सकाशात्प्राप्तविद्यो हर इति प्रसिद्धिः॥ ६॥ ७॥

निवेदितो विज्ञापितः विश्वकृद्ब्रह्मा अवैदबुध्यत॥ ८॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवं सूर्यवंशमनुवर्ण्य सोमवंशमनुवर्णयितुं प्रतिजानन् राज्ञः शुश्रूषामुत्पादयन् मुनिः—अथेति। हे राजन्! अथ सूर्यवंशवर्णनानन्तरं मया वर्ण्यमानः सोमवंशः श्रूयताम्, तं विशिनष्टि येन श्रोतव्यतायां...वंशं विशिनष्टि—पावन इति। तत्र हेतुमाह,

(१) विप्रौषध्युडुगणानाम् इति विज० वीर०।

(१) त्यज त्यजाशु दुष्प्रज्ञे! मत्क्षेत्रादाहितं परैः ।
नाहं त्वां भस्मसात्कुर्यां स्त्रियं (२) सान्तानिकः सति ॥ ९ ॥
तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ।
*तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः ॥ ० ॥ )
स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ॥ १० ॥
ममायं न तवेत्युच्चैस्तस्मिन्विवदमानयोः ।
पप्रच्छुरृषयो देवा नैवोचे व्रीडिता तु सा ॥ ११ ॥
कुमारो मातरं प्राह कुपितोऽलीकलज्जया ।
किन्न वोचस्यसद्वृत्ते! आत्मावद्यं वदाशु मे ॥ १२ ॥
( न त्वां तु भस्मसात्कुर्यामात्मावद्यविगूहनीम् ॥ ० ॥ )
ब्रह्मा तन्तु विनिर्भर्त्स्य क्षेप्तारं मातुरन्तिके ।
तामाहूय समप्राक्षीद्रह एव तु सान्त्वया ॥ ० )
ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन् ।
सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥ १३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोमस्य सुतो बुधोऽभूदिति कथाद्वारेणाह—सोऽयजदिति, सार्द्धैर्नवभिः ॥ ४ ॥

तत्कृते तन्निमित्तं सुरदानवविग्रहो जज्ञेऽभूत् ॥ ५ ॥

सासुरः शुक्रः उडुपं चन्द्रमग्रहीत् सासुरोडुपमित्यत्र सन्धिरार्षः हरः गुरोः अङ्गिरसः सुतं बृहस्पतिमग्रहीत् ॥ ६ ॥

तारका तारा एव आमयः नाशहेतुर्यस्मिन् सः ॥ ७ ॥

अजो ब्रह्मा अङ्गिरसा निवेदितो विज्ञापितः पतिः बृहस्पतिः अन्तर्वत्नीम् सगर्भाम् अबुध्यत ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरमणो जयति ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी, बोले, कि—हे राजन्! अब यहां से आगे चन्द्र का पवित्र वंश सुनो, जिसमें पुण्य कीर्ति पेल आदिक भूप कीर्तन किये जाते हैं ॥ १ ॥

सहस्रशीर्षा पुरुष के नाभि रूप सरोवर से कमल हुआ, तिस से उत्पन्न होने वाले ब्रह्माजी से अत्रि महर्षि हुए गुणों से पिता के समान हुए ॥ २ ॥

उन अत्रि ऋषि के नेत्रों से अमृतमय चन्द्रमा पुत्र उत्पन्न हुए ब्रह्माजी ने ब्राह्मणों का सम्पूर्ण औषधियों का और तारागणों का उनको पति बनाया ॥ ३ ॥

चन्द्रमा ने राजसूय यज्ञ करके त्रिलोकी को जीतकर गर्व से बृहस्पति के पत्नी तारा को बलात्कार हरण कर लिया ॥ ४ ॥

जब सब देवों के गुरु बृहस्पति ने बारम्बार चन्द्रमा से अपनी भार्या की याचना भी करी तो भी मद के जोर से उसने नहीं दीनी इसी कारण देव और दानवों में बड़ा भारी विरोध भया ॥ ५ ॥

शुक्राचार्य बृहस्पति के द्वेष से असुरों के सहित चन्द्रमा के सहायता के लिये खड़े हुए, और हर भी अपने गुरु अंगिरा के पुत्र बृहस्पति के स्नेह से सब भूतगणों को संग लेकर इन के पक्ष पर खड़े हुए ॥ ६ ॥

सम्पूर्ण देवताओं को संग लेकर महेन्द्र अपने गुरु के संग हुए उस समय तारका मय संग्राम बड़ा भारी हुआ जिसमें बहुत देव दानवों का विनाश भया ॥ ७ ॥

जब बृहस्पति ने ब्रह्माजी से इन सब बातों को निवेदन किया तब ब्रह्माजी ने चन्द्रमा को बहुत धमकाये, फिर चन्द्रमा ने तारा को बृहस्पति के लिये दीनी तारा के पति बृहस्पति जी उसको गर्भवती जान के ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बृहस्पतिराह—त्यज त्यजेति । परैराहितं गर्भं; गर्भे सति त्वां भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह—नाहमिति । सान्तानिकः सन्तानार्थी सान्तानिकेति पाठे हे सन्तानार्थे इत्यर्थः ॥ ९–१२ ॥

(१) गर्भं त्यजाशु इति वीर० पाठः । (२) सान्तानिकेऽसति इति वीर० विजय० * इमे श्लोका विजयध्वजतीर्थपाठाः ।

तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ! ।
बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण्मुदम् ॥ १४ ॥
ततः पुरूरवा जज्ञे इलायां य उदाहृतः ।
तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥
श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ।
तदन्तिकमुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रहः एकान्ते ॥ १३ ॥

पुरूरवस उर्वश्यामायुप्रमुखाः षट् पुत्रा जाता इति वक्तुं कथामाह-तस्येत्यादिना यावत्समाप्ति ॥ १४-१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह-गर्भमिति । हे दुष्प्रज्ञे ! मत्क्षेत्रभूतायां त्वयि परैराहितं हेतुगर्भमिदं परैराहितत्वाद्दाशु गर्भं त्यज; गर्भे त्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह-नाहमिति । सान्तानिके सन्तत्यभ्यापके पुत्रे असति अविद्यमाने सति अहं स्त्रियं त्वां न भस्मसात्कुर्यां न भस्मीकरोमीति ॥ ९ ॥

ततो व्रीडिता लज्जिता तारा जनकस्य चन्द्रस्येव प्रभा यस्य तं कुमारं तत्याज प्रसूतवती ततः तस्मिन् कुमारे अङ्गिरसो बृहस्पतिः सोमश्च स्पृहाञ्चक्रे पुत्रेच्छाऽऽशीर्यजत्वाच्चेत्युभयत्र हेतुद्वयं बोध्यम् ॥ १० ॥

एवं स्पृहया ममैवायं सुतो न तवेत्येवं तस्मिन् पुत्रनिमित्तमुद्दिश्याङ्गिरससोमयोर्विवदमानयोः सतोर्देवा ऋषयश्च पप्रच्छुस्तामिति शेषः । तदा व्रीडिता सा तारापि नैवोचे नोवाच ॥ ११ ॥

ततो मातरं तारां कुमारः क्रुद्धः प्राह-किमिति ? हे असत्कुले ! त्वं व्यर्थया लज्जया मिथ्या लज्जया वा किं नाचोचः नोक्तवती अधुना कस्यापत्यं पुत्रः,अहमिति शेषः । तस्मै मह्यं वदेति । अत्र "न त्वान्तु भस्मसात्कुर्यामात्माद्यविगूहनीम" इति क्वचित्पठ्यते आत्माद्यमात्मदोषं विगूहन्त्याच्छादयन्ती तथा तां शेषं स्पष्टम् ॥ १२ ॥

एवं मातुः समीपे निर्भर्त्स्याभिवदन्तं तं कुमारं वीक्ष्य ब्रह्मा चतुर्मुखः रह एकान्ते तां ताराम् आहूय सान्त्वयन् अनुनयन् समप्राक्षीत् कस्यायं सुत इति पृष्टवान्, पृष्टा च सा शनकैः लज्जया शनैः सोमस्येत्याह-चन्द्रस्य सुत इत्युवाच ततः सोमः तं सुतमग्रहीत् ब्रह्मणा अनुज्ञातोऽगृह्णात् ॥ १३ ॥

हे नृप ! आत्मयोनिः ब्रह्मा तस्य कुमारस्य बुध इत्यभिधां नामधेयं चक्रे, तस्य प्रवृत्तौ निमित्तमाह-बुद्ध्येति । उडुराट् चन्द्रः येन यतो गम्भीरया बुद्ध्या पुत्रेण हेतुना मुदं हर्षमाप प्राप्तवान् ततोऽयं बुध इति ॥ १४ ॥

तस्माद् बुधात्पुरूरवाः जातः, कोऽसौ? य इलायां सुद्युम्नः स्त्रीरूपे उक्तः जात इत्युक्तः प्रथमाध्याये सोऽयमित्यर्थः । पुरूरवस उर्वश्यामायुःप्रमुखाः पुत्रा जज्ञिरे इति वक्तुं कथामाह-तस्येत्यादिना यावदध्यायसमाप्ति । तस्य पुरूरवसो रूपादीन् इन्द्रभवने सुरर्षिणा नारदेन गीयमानान् श्रुत्वा उर्वशी देवी स्मरशरार्दिता कामार्ता तस्य पुरूरवसः समीपमुपेयाय आजगाम तत्र रूपं सौन्दर्यम् औदार्यं वदान्यता शीलं सुस्वभावः सद्वृत्तिश्च द्रविणं धनं विक्रमः पराक्रमः गुणशब्देन गाम्भीर्यधैर्यादिसङ्ग्रहः ॥ १५ ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मत्क्षेत्रात्तद्गर्भं त्यज कुत इति तत्राह-आहितमिति । सान्तानिके पुत्रे तस्मिन् कुमारे ॥ ९-११ ॥

अलीकलज्जयाऽनृतनिमित्तलज्जया न वोचसि न कथयसि असद्वृत्ते दुराचारे ! अमङ्गलस्वरूपे ! वा "वृत्तं स्वरूपे चरिते वृत्तं छन्दो विधासु च" इति. किं वक्ष्यामि ? इति तत्राह-पितरमिति । आत्माऽनद्यविगूहनीमित्यनेन भस्मीकरणायोग्यत्वे सूचितेऽपि मातृशब्दवाच्यार्हत्वात् भस्मसान्न कुर्यामिति वक्ति ॥ १२ ॥

सान्त्वया वाचा तारा जनकं वक्तीत्याह-सोमस्येति ॥१३॥

तं कुमारम् आत्मा परमात्मा योनिर्जनको यस्य स तथा नामकरणे निमित्तमाह, बुद्ध्येति ॥ १४ ॥

उदाहृतः पूर्वमिति शेषः ॥ १५ ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्यज त्यजेति गृहागमनानन्तरं गुरुवचनम् ॥ ९ ॥ १० ॥

ममायं न तवेति तु पुनः सभागमने द्वयोर्विवादः तस्मिन् पुनर्जाते सदसि ॥ ११-१७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बृहस्पतिरुवाच-त्यज त्यजेति । परैराहितं गर्भं मत्क्षेत्रादस्मात्त्यज दूरीकुरु । गर्भे त्यक्ते मां भस्मीकरिष्यतीति बिभ्यतीमाश्वासयन्नाह-नाहमिति । सान्तानिकः सन्तानार्थी त्वयि सन्तानमुत्पादयितुमना अस्मि इत्यर्थः । सान्तानिके इति पाठे सम्बोधनम् ॥ ९-११

आत्मनोऽवद्यं दोषं किं न वदसि ॥ १२ ॥

रह एकान्ते ॥ १३-१६ ॥

मित्रावरुणयोः शापादापन्ना नरलोकताम् ।
निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ॥ १७ ॥
धृतिं विष्टभ्य ललना उपतस्थे तदन्तिके ।
स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ।
उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ १८ ॥

राजोवाच ।

स्वागतं ते वरारोहे ! आस्यतां करवाम किम् ।
संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ १९ ॥

उर्वश्युवाच ।

कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ! ।
यदङ्गान्तरमासाद्य च्यवते ह रिरंसया ॥ २० ॥
एतावुरणकौ राजन् ! न्यासौ रक्षस्व मानद ! ।
संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २१ ॥
घृतं मे वीर ! भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ।
विवाससं तत्तथेति प्रतिपेदे महामनाः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बृहस्पतिराह–हे दुष्प्रज्ञे ! परैराहितं गर्भं त्यज त्यज सान्तानिकः सन्तानार्थी ॥ ९ ॥ ११ ॥

हे असद्वृत्ते ! आत्मावद्यम् अलीकलज्जया वृथा लज्जया किं नाचोचसि ॥ १२ ॥

रहः एकान्ते ॥ १३—१७ ॥

भाषा टीका ।

तब बृहस्पति ने कहा कि हे दुष्प्रज्ञे ! [ हे दुष्ट बुद्धि वाली ! ] दूसरे का निक्षिप्त गर्भ को हमारे क्षेत्र से शीघ्र ही त्याग कर, नहीं तो तेरे को मैं अपने क्रोधाग्नि से भस्म करूंगा जिससे मैं संतानार्थी नहीं हूं ॥ ९ ॥

लज्जित होकर तारा ने कनकसदृश कांति वाला पुत्र अपने गर्भ से त्याग किया उस कुमार में बृहस्पति और चंद्रमा दोनों स्पृहा किये ॥ १० ॥

यह पुत्र हमारा है तुमारा नहीं है ऐसे बड़े जोर से कह २ कर दोनों परस्पर में विवाद किये, तब सब ऋषि और देवता तारा से पूछे कि यह कुमार किसका है तब लज्जा से उनने नहीं बतलाया ॥ ११ ॥

फिर कुमार ने कोप सहित माता से पूछा कि हे असद्वृत्ते ! अपने किये हुए दोष को तू क्यों नहीं कहती हमसे शीघ्र बताओ ॥ १२ ॥

इसके अनंतर ब्रह्माजी ने एकांत में बोलाकर बहुत सांत्वन पूर्वक उससे पूछा तब उसने चन्द्रमा का है इस प्रकार धीरे से कहा, उस कुमार को चन्द्रमा ने ग्रहण किया ॥ १३ ॥

हे राजन् ! आत्मयोनि ब्रह्माजी ने उनका बुध ऐसा नाम करण किये जिनके बुद्धि वा गंभीरता देखकर पुत्रको प्राप्त होकर चंद्रमा बड़े प्रसन्न हुए ॥ १४ ॥

उनसे इलामें पुरूरवा उत्पन्न हुए जिनको कहि आये, उनके रूप गुण उदारता शील द्रव्य पराक्रमों को ॥ १५ ॥

इंद्रके भवन में नारदजी से सुनकर उर्वशी काम के बाणों से विद्ध होकर उनके पास में आई ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, देवी कुतो मनुष्यान्तिकमुपागच्छेत्तत्राह–मित्रावरुणयोः शापान्नरलोकतां मनुष्यभावमापन्ना सती ॥ १७ ॥ १८ ॥

नौ आवयोः रतिरस्त्विति ॥ १९ ॥

यस्य तवाङ्गान्तरं वक्ष आसाद्य रिरंसया रन्तुमिच्छया ह स्फुटं न च्यवते नापयाति वक्षसमादृष्टिर्वा ॥ २० ॥

अहो रूपमहो भावो नरलोकविमोहनम्।
को न सेवेत मनुजो देवीं त्वां स्वयमागताम्॥ २३ ॥
तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः।
रेमे सुरविहारेषु कामं चैत्ररथादिषु॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

शापावसाने भावाभिज्ञमिषेण जिगमिषोस्तस्या भाषाबन्धमाह-एताविति, द्वाभ्याम्। उरणकौ मेषौ न्यासौ निक्षेपरूपौ रक्षस्व यः श्लाघ्यः स एव स्त्रीणां वरः स्मृतः अतो विजातीयत्वं न दोष इति भावः॥ २१ ॥

हे धीर! घृतं मे भक्ष्यं स्यात् "अमृतं वा आज्यम्" इति श्रुतेः। देवानां चामृताशित्वात् मैथुनादन्यत्र विवाससं त्वां नेक्षिष्ये इति प्रतिपदङ्गीकृतवान्॥ २२ ॥

तदेवाह-अहो इति॥ २३ ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, देवी कुतो मनुष्यान्तिकमुपगच्छेत्? तत्राह-मित्रावरुणयोरिति। मित्रावरुणयोः शापात् नरलोकतां मनुष्यभावमापन्ना प्राप्ता सती नरलोकवासित्वं वा प्राप्ता इत्यर्थः। सा च ललना उर्वशी कन्दर्पमिव रूपिणां सुन्दरं पुरुषश्रेष्ठं पुरूरवसं निशम्य दृष्ट्वा धृतिं धैर्यं विष्टभ्यावलम्ब्य तस्य पुरूरवस अन्तिके समीपे उपतस्थे स्थितवती ततः स नृपतिः पुरूरवास्तां ललनां विलोक्य हर्षेणोत्फुल्ले विकसिते लोचने यस्य हृष्टानि उदञ्चितानि तनूरुहाणि रोमाणि यस्य तथाभूतः श्लक्ष्णया मृदुया गिरा देवीमूर्वशीमुवाच॥१७॥ १८॥

तदेवाह-स्वागतमिति। हे वरारोहे! ते त्वया स्वागतं हि? आस्यताम् उपविश्यतां किं करवाम त्वदभिप्रेतं वदेत्यर्थः। मया सह सङ्गच्छस्व सङ्गता भव नौ आवयोः शाश्वतीः समाः रतिरस्तु इति॥ १९ ॥

एवमुक्तोर्वश्याह-कस्या इति। हे सुन्दर! त्वयि कस्याः स्त्रियः मनो दृष्टिश्च न सज्जेत सर्वस्या अपि मनो दृष्टिश्च सज्जेतैवेत्यर्थः। आसक्तौ हेतुं वदन् विशिनष्टि—यस्य तवाङ्गान्तरं वक्षो रिरंसया रन्तुमिच्छया आसाद्य प्राप्य नारी न च्यवते नापयाति यदस्मादिति वा यदङ्गमभ्यासाद्येति पाठान्तरं तदा रमाः श्रीः सौन्दर्यलक्ष्मीरिति यावत् सा रन्तुमिच्छयेह त्वच्छरीरे आसाद्य यत् यस्य तवाङ्गात् पुनः न च्यवते नापयातीत्यर्थः॥ २०॥

मित्रावरुणशापावसाने भावाभङ्गमिषेण जिगमिषोस्तस्या भाषाबन्धमाह—एताविति द्वाभ्याम्। हे राजन्! एतावुरणकौ मेषौ न्यासौ निक्षेपरूपौ न्यस्ताविति पाठे मयेति शेषः। मया त्वदन्तिके निहितावित्यर्थः। मम पुत्रतुल्याविमावित्यभिप्रायः। पुत्रयोर्मे आनतयोर्हृतयोः इति च वक्ष्यमाणत्वात् तौ रक्षस्व पालय नहि स्वगृहायातस्य त्वादृशस्य मानभङ्गमित्यभिप्रायेण सम्बोधयति-हे मानदेति। भवता सहाऽहं रंस्ये यावदिमौ भवान् रक्षिता तावदिति शेषः। यः श्लाघ्यः स एव स्त्रीणां वरः स्मृतः॥ २१॥

हे वीर! घृतममृतं मम भक्ष्यं स्यात् "अमृतं वा आज्यम्" इति श्रुतेः। मैथुनात् मैथुनकालादन्यत्र काले त्वां विवाससं नग्नं नेक्षे यदा त्वं विवासमात्मानं मैथुनादन्यत्र दर्शयिष्यसि तदा गमिष्यामीति भावः। एवं कृतं तया भाषाबन्धनं तथैवास्त्विति महामनाः पुरूरवाः प्रतिपेदे अङ्गीचकार॥ २२॥

तदेवाह—अहो इति। अहो अस्याश्चर्यं तदेवं रूपं सौन्दर्यं भावोऽभिप्रायविशेषश्च नरलोकविमोहनं नरलोकं विमोहयति तथा तदुभयमिति शेषः। अतस्त्वां स्वयमागतां देवीं को नु मनुजो न सेवेत सर्वोऽपि मनुजः सेवेतैवेत्यर्थः॥ २३॥

तयेति ततस्तया यथायोग्यं रमयन्त्या क्रीडयन्त्या उर्वश्या सह पुरुषश्रेष्ठः पुरूरवाः सुरा विहरन्त्येषु इति तथा तेषु चैत्ररथप्रभृतिषु आदिशब्देन नन्दनपारिभद्रादिसङ्ग्रहः कामं यथेष्टं रेमे॥ २४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आगमने कारणान्तरमाह—मित्रेति॥ १७॥ १८॥

नौ आवयोः शाश्वतीः समाः बहून् संवत्सरान् रतिः ग्राम्यनिधया क्रीडाऽस्तु॥ १९॥

मनोहरत्वे निमित्तमाह—यदङ्गादिति। रमा यस्य हरेरङ्गात् याति न च्यवते नित्यभिनवसुःस्यत्वात् स हरिस्त्वमिवो दृष्ट इत्यन्वयः। लक्ष्मीकान्तस्य सन्निधिपात्रत्वादित्यर्थः॥ २०॥

उरणकौ मेषौ न्यस्तौ निक्षेपकल्पनया स्थापितौ तस्मात् रक्षस्व संरंस्ये सम्यक् त्वया सह रतिं करिष्ये अस्माकमियमेव प्रतक्लृप्तिरित्याह—श्लाघ्य इति। यः श्लाघ्यः कमनीयः स एव स्त्रीणां वरः पतिरित्यन्वयः॥ २१॥

समयं बध्नाति—नेक्ष इति। मैथुनादन्यत्र सुरतसमयमन्तरेण त्वां विवाससं नग्नं नेक्षे न पश्यामि अन्यथेतो गमिष्यामीति शेषः। पुरूरवा उत्तरमाह—तथेतीति। एवमुक्तं तथेति प्रतिपेदे अभ्युपगतवान्॥ २२॥

तदर्थाङ्कितं हर्षोल्लासं दर्शयति—अहो इति। भावं शृङ्गारादिकं न रीयन्ते इति नरा अमरास्तेषां लोकः समूहः तमपि विमोहयतीति नरलोकविमोहनम् एवंविधां त्वाम्॥ २३॥

सुराणां विहारा येषु ते तथा तेषु॥ २४॥ २५॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

धृतिं विष्टभ्य तद्दर्शनेन जातकम्पादिविकारस्तम्भनाय धैर्यमवलम्ब्य॥ १८॥ १९॥

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ।
तन्मुखामोदमुषितो मुमुदेऽहर्गणान् बहून् ॥ २५ ॥
अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान् समचोदयत् ।
उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २६ ॥
त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ।
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनो हरिश्च न च्यवत इति पूर्वेणैवान्वयः ॥ २०-२७ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मित्रावरुणयोस्तद्दर्शनजनितकामविकारयोः ऊर्वशि ! त्वं मानुषीव मनुष्यभुक्ता भवेत्यभिशापात् नरलोकतां नरलोकम् ॥ १७-१८ ॥

नौ रतिरस्तु ॥ १९ ॥

यद्यस्मात् अङ्ग हे राजन् ! अन्तरं रहसि अवकाशम आसाद्य प्राप्य रिरंसया मनश्च्यवते विकृतीभवति ॥ २० ॥

शापावसानमिषेण स्वर्गं जिगमिषोस्तस्या भावावन्धमाह, एताविति द्वाभ्याम । उरणकौ मेषौ न्यासौ निक्षेपरूपौ रक्ष, यः श्लाघ्यः स एव स्त्रीणां वरः स्मृत इति विजातीयत्वं स्त्रीणामस्माकं न दोष इति भावः ॥ २१ ॥

घृतं मे भक्ष्यमिति "अमृतं वा आज्यम्" इति श्रुतेर्देवानां चामृताशित्वात् त्वा त्वां तत्तस्या वचनं तथास्त्विति प्रतिपेदे अङ्गीकृतवान् ॥ २२ ॥

भावो भावहावादिः ॥ २३—२५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विहरस्व आलस्य ॥ १८ ॥

नौ आवयोः रतिर्भवतु ॥ १९ ॥

त्वयि मनो हरिश्च कस्याः स्त्रियः न सज्जेत अपि तु सर्वासां सज्जेतैव यस्य तव अङ्गान्तरं वक्षः आसाद्य रिरंसया रन्तुमिच्छया मनो हरिश्च ह स्फुटं न च्यवते नापयाति ॥ २० ॥

मित्रावरुणशापावसाने भावाभङ्गमिषेण पुनः स्वर्लोकं गन्तुकामायाः भावावन्धमाह—एताविति द्वयेन । उरणकौ मेषौ निक्षेपरूपौ रक्ष पालय भवता सह संरंस्ये यावदिमौ भवान् रक्षितेति शेषः ॥ २१ ॥

घृतं मे भक्ष्यं स्यात् "अमृतं वा आज्यम्" इति घृतस्यामृतत्वश्रवणात् मैथुनान्मैथुनकालादन्यत्र त्वा विवाससं नेक्षे न निरीक्षिष्ये यदा मैथुनकालादन्यत्र विवाससमात्मानं त्वं दर्शयिष्यसि तदा गमिष्यामीति भावः तद्भाषावन्धवाक्यं तथेति तथास्त्विति प्रतिपेदे अङ्गीकृतवान् ॥ २२ ॥

तदेवाह—अहो इति ॥ २३ ॥ २४ ॥

———

भाषा टीका ।

मित्रा वरुण के शाप से मनुष्य लोक को प्राप्त हुई, कंदर्प समान रूपवान पुरुषश्रेष्ठ पुरूरवा को देखकर मोहित होगई ॥ १७ ॥

धैर्य को धारण कर वह ललना उनके पास आई उसको देख कर बड़े हर्ष के मारे राजा के नेत्र विकसित होगये और शरीर में रोमाञ्च होगये और बड़े प्रेम पूर्वक उस देवी से वचन बोले ॥ १८ ॥

राजोवाच ॥

राजा बोले, कि-हे वरारोहे ! तुमारा आवना बहुत अच्छा हुआ, आवो तुमारे लिये हम क्या करें । हमारे सहित बहुत काल पर्य्यन्त रमण करो ॥ १९ ॥

उर्वशीबोली, कि- हे सुन्दर! कौन ऐसी कामिनी होगी जिसका चित्त आपमें आसक्त नहो आपके वक्षस्थल को प्राप्त होकर कौनका मन विहार करने से हट सके ॥ २० ॥

परन्तु हेराजन् ! हे मानद ! हमारा धरोहर इन दोनो मेढाओं को आप रक्षा करो, स्त्रियों के सदा प्रिय होकर रहने वाले आपके सङ्ग में रमण करूंगी ॥ २१ ॥

हे वीर ! हमारा भक्ष्य केवल घृत है और मैथुन के समयको छोडकर अन्य समय मे तुमको नग्न नहीं देखसकी हूं इनतीन वचनों को सुनकर राजा ने अङ्गीकार करलिया ॥ २२ ॥

और पुरूरवा उर्वशी के रूप को देखकर आश्चर्य पूर्वक बोले, कि-हे देवि ! मनुष्य लोक को अति मोहोत्पादक तुम्हारा रूप वा भाव आश्चर्यमय है, अपने से ही आई हुई तुम्हे कौन मनुज नहीं सेवन करेगा ? ॥ २३ ॥

इस प्रकार पुरुषश्रेष्ठ पुरूरवा ने देवों के चैत्ररथादि विहार भूमियों में यथेच्छ रमण कराने वाली उर्वशी के सङ्ग रमण करने लगे ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

पद्मकिञ्जल्कस्य गन्ध इव गन्धो यस्यास्तस्या मुखामोदेन मुषितः प्रलोभितस्सन् ॥ २५ ॥

निशम्याऽऽक्रन्दितं देवी पुत्रयोर्नीयमानयोः ।
हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ २८ ॥
यद्विश्रम्भादहं नष्टा हृतापत्या च दस्युभिः ।
यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान् ॥ २९ ॥
( मुञ्च मुञ्चाश्वपसर बाहू मद्गात्रवेष्टितौ ।
अतीव कातरो हातुं मामयं याति लम्पटः ॥ ० ॥ )
इति वाक्सायकैर्विद्धः प्रतोत्रैरिव कुञ्जरः ।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥
ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः ।
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३१ ॥
ऐलोऽपि शयने जायामपश्यन् विमना इव ।
तच्चित्तो विह्वलः शोचन् बभ्रामोन्मत्तवन्महीम् ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मह्यं मम ॥ २६ ॥

महारात्रे मध्यरात्रे "महानिशा द्वे घटिके रात्रौ मध्यमयामयोः" इति स्मृतेः ॥ २७ ॥

जिगमिषोस्तस्याः परुषोक्तिमाह—हतास्मीति सार्द्धेन । नपुंसा नपुंसकेन ॥ २८ ॥

यथा नारी तथा सन्त्रस्तः शेते ॥ २९ ॥ ३० ॥

विद्युतो विशिष्टद्युतिमन्तो व्यद्योतन्त दीप्तिमकुर्वन्त यद्वा तदैव तडितः प्रकाशन्त इत्यर्थः । नग्नमैक्षत अतो भाषाभङ्गान्निर्जगामेति ज्ञेयम् ॥ ३१ ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रममाण इति । पद्मकिञ्जल्कस्य गन्ध इव देहगन्धो यस्यास्तया ऊर्वश्या सह नित्यं रममाणः तस्याः मुखामोदेन मुषितः प्रवासितस्सन् बहूनब्दगणान् मुमुदे ॥ २५ ॥

आनेतुमिति । ततः कदाचिदिन्द्रः ऊर्वश्या रहितं मह्यं ममास्थानं नातीव शोभते इति विचार्येति शेषः । उर्वशीमानेतुं गन्धर्वान् समचोदयत् प्रेषयामास ॥ २६ ॥

न इति । ततस्ते गन्धर्वाः महारात्रे मध्यरात्रे "महानिशा द्वे घटिके रात्रौ मध्यमयामयोः" इति स्मृतिः । तमसि अन्धकारे निद्रायां वा प्रत्युपस्थिते सम्प्राप्ते सति राजनि पुरूरवसि न्यस्तौ पालनार्थेन निक्षिप्तौ ऊर्वश्या उरणकौ मेषौ मायया जहुरपहृतवन्तः ॥ २७ ॥

निशम्येति । तदा नीयमानयोः पुत्रयोरुरणयोराक्रन्दितं रोदनं निशम्य आकर्ण्याऽऽहेतिशेषः जिगमिषोस्तस्याः परुषोक्तिमाह—हतास्मीति सार्द्धेन । कुत्सितनाथेन नपुंसा नपुंसकेन अवीरमात्मानं वीरं मन्यत इति वीरमानी तेनानेनाहं हतास्मि ॥ २८ ॥

यस्याऽस्य कुनाथस्य विश्रम्भात् विश्वासादहं दस्युभिर्हृते अपत्ये पुत्रौ यस्याः सा नष्टप्राया अभवं यथा नारी दिवा अह्नि सन्त्रस्ता सती शेते तथा योऽयं पुमानपि शेते ॥ २९ ॥

अत्रान्तरा कचित्पुस्तकेषु—

"मुञ्च मुञ्चाश्वपसर बाहू मद्गात्रवेष्टितौ ।
अतीव कातरो हातुं मामयं याति लम्पटः" ॥

इत्यधिकः श्लोकः पठ्यते । तत्रायमपि तस्याः परुषोक्तिरूप एव मद्गात्रे वेष्टितौ बाहू मुञ्च मुञ्च अपगच्छ अयं मां हातुं कातरो भीतः लम्पटश्च यातीति निन्दा ॥ ० ॥

इतीदृशैर्वाग्रूपैः सायकैरिषुभिः प्रतोदैरङ्कुशैः कुञ्जर इव विद्धः पुरूरवा निस्त्रिंशं खड्गमादाय विवस्त्रो नग्नः रुषा निशि रात्रौ अभ्यद्रवत् ॥ ३० ॥

तदा ते गन्धर्वाः उरणौ तत्र विसृज्य विद्युतः विद्युत इव विद्योतन्ते स्म यद्वा विसृज्य जग्मुरिति शेषः, तदा विद्युतस्तडितोऽपि विद्योतन्ते स्म इत्यर्थः । तदा मेषावादायागच्छन्तं नग्नं पतिं सा ऊर्वशी ददर्श ततो भाषाभङ्गान्निर्जगामेति च ज्ञेयम् ॥ ३१ ॥

ततः ऐलः पुरूरवाः शय्यायां जायामपश्यन् दुःखितमनाः तस्यामेव चित्तं यस्य सः विह्वलः अधृष्टः शोचन् उन्मत्तवन्महीं बभ्राम ॥ ३२ ॥

---

**स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः।**
**पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः॥ ३३॥**

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

महां कलत्रं ममाश्रयानं सभा एवं मत्वा गन्धर्वान् समचोदयत्॥ २६॥

आयचोदया॥ २७॥

नपुंसा नपुंसकेन निर्वीर्येणेत्यर्थः॥ २८॥

हृतपत्या हृतपुत्रा यो निशि नारी यथा सन्त्रस्ता शेते दिवा पुमान् पुरुषशक्तिमती तथा संत्रस्तः शेते अहि पुरुषः॥२९॥

इत्येवं वाक्सायकैः वचनबाणैर्विद्धस्ताडितः प्रतोदैः कुशैः कुञ्जरः रत्नं शीलमत्येति कुञ्जरः॥ ३०॥

तत्र तस्मिन् समये ते गन्धर्वाः स्वविद्युता प्रद्योतन्त (१)प्रकाशन्त आलोकविषया आसन्नित्यर्थः॥ ३१॥

बभ्राम "भ्रमु अनवस्थाने" इति धातुः। पर्यटनं कृतवान्॥३२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

निशम्येति त्रिकम्। देवी आहेति शेषः। यद्वा निशम्येत्याविर्भावेन शेषः। यद्वा देवीत्यत्र छान्दसस्तृतीयायां लुक् तेन देव्या इति वाक्सायकैर्विद्ध इति तृतीयेनान्वयः। यो दिवा दिवसे पुमान् पुंभावख्यापकोऽपि निशि रात्रौ तु नारीव सन्त्रस्तः केवलं शेते गृहान्तर्द्वारं पिधाय स्वपिति न चेतस्ततो रक्षार्थं भ्रमति चेत्यर्थः॥ २८-३१॥

तत्रिरासो विक्लव इति पाठे सम्बन्धोक्तिमतः विक्लवो विह्वल इति व्याख्यानात्॥ ३२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

महाश्रयानं मम सभा॥ २६॥

महारात्रे मध्यरात्रे "महानिशा द्वे घटिके रात्रौ मध्यमयामयोः" इति स्मृतेः॥ २७॥

पुत्रयोर्मेषयोः नपुंसा नपुंसकेन यत्र विस्रम्भात् वीरोऽयमिति विश्वासात्॥ २८॥

निशि नारी यथा तथा शेते सन्त्रस्तः चोरान्मेषापहर्तॄन् असमर्थः तस्माद्दिवैव यः पुमान्॥ २९॥

निस्त्रिंशं खड्गम्॥ ३०॥

विद्युतः विशिष्टद्युतिमन्तः व्यद्योतन्त दीप्तिमकुर्वन्त तदैव नग्नमैक्षतेति भाषाभङ्ग्या निजेङ्गितमिति ज्ञेयम्॥ ३१—३३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पद्मकिञ्जल्कगन्धवद्गन्धो यस्यास्तया॥ २५॥

महां मम॥ २६॥

ते महारात्रे "महानिशा द्वे घटिके रात्रौ मध्यमयामयोः" इत्येवं वचनेऽपि तमसि अन्धकारे उपस्थिते उरणौ जह्रुः अपहृतवन्तः॥ २७॥

आक्रन्दितं रोदनं नपुंसा नपुंसकेन॥ २८॥

यथा नारी तथा सन्त्रस्तः दिवा अह्नि निशि च पुमान् सन् शेते अयं निद्राभिभूतः स्त्रीवत्सर्वतो भीतश्चातस्त्यक्तुं योग्य इति भावः॥ २९॥ ३०॥

ते उरणौ विसृज्य विद्युतः विशिष्टद्युतिमन्तः व्यद्योतन्त दीप्तिमकुर्वन्त नग्नप्रकाशं कृत्वा गता इत्यर्थः। तदा सा मेषावादाय आयान्तं पतिं नग्नम् ऐक्षत अतो भाषाभङ्गात् स्वर्लोकं गतेति ज्ञेयम्॥ ३१॥ ३२॥

---

भाषाटीका।

पद्मसदृश गन्धवाली उस देवी के मुखके गन्ध से मोहित होकर बहुत काल पर्यन्त रमण करते हुए बड़े हर्ष को प्राप्त भये॥ २५॥

जब इन्द्र ने स्वर्गमें उर्वशी को नहीं देखा तब गन्धर्वों से कहा कि उर्वशी बिना हमारा स्थान अति शोभित नहीं होताहै॥ २६॥

ऐसा इन्द्र का वचन सुनकर गन्धर्वों ने अत्यंत अँधेरी रात्री मे आकर उर्वशी के दोनो मेढाओं को हरण करालिया जिन मेढों को उर्वशीने प्रथम राजा के यहां धरोहर रखी थी॥ २७॥

तदनंतर जब गन्धर्व उर्वशीके दोनों पुत्रों का हरण कर ले चले, तब उन दोनो का आक्रन्दन (शब्द) सुनकर उर्वशी बोली कि-वृथा वीरमानी इस नपुंसक कुनाथ के विश्वास से मै मारी गई॥ २८॥

हमारे पुत्रों को चोट्टों ने चुरा लिये मैं केवल इस के विश्वास से मरी भई, यह रात्रि मे डरता हुआ स्त्री की नाई सोता है दिन मात्र में मे पुरुष होकर रहता है॥ २९॥

इस प्रकार पुरूरवा राजा उर्वशी के वाक्य रूप बाणों से विद्ध हुए जैसे हाथी अंकुश से व्यथित हो। वस रात्रि में उसी समय खड्ग हाथमे लेकर नग्नही बड़े क्रोधित होकर उन चोट्टोंके पीछे दौड़े॥ ३०॥

फिर उन गन्धर्वों ने दोनों मेषों को छोड़कर बिजली चमका दी तब तक राजा दोनो मेषों को लेकर चले इतने मे उर्वशी ने अपने पति (राजा) को नग्न देख लिया॥ ३१॥

राजा पुरूरवा अपने शय्या के पास आये और अपनी कान्ता को नहीं देखकर बहुत उदास से हुए, और बहुत विह्वल होकर शोच करते हुए उन्मत्त होकर पृथ्वी में विचरने लगे, उस उर्वशी में फँसे हुए चित्त को नहीं निवृत्त कर सके॥ ३२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

तस्याः सखीश्च पञ्च वीक्ष्य सूक्तं शोभनं वचनम् 'अये जाये' इत्यादि॥ ३३॥

(१) दीप्तिमकुर्वन्त।

(१)अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ।
(२)मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥ ३४ ॥
(३)सुदेहोऽयं पतत्यत्र देवि ! दूरं हृतस्त्वया ।
खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३५ ॥

उर्वश्युवाच ।

मा मृथा पुरुषोऽसि त्वं मा स्म त्वाद्युर्वृका इमे ।
क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ३६ ॥
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ।
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥ ३७ ॥
विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः ।
नवन्नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥
संवत्सरान्ते हि भवानेकरात्रं मयेश्वरः ।
वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः ॥ ३९ ॥
अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरम् ।
पुनस्तत्र गतोऽब्दान्ते उर्वशीं वीरमातरम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवार्थत आह—अहो इति द्वाभ्याम् । अनिर्वृत्य मत्कृतां निर्वृतिमप्राप्य पाठान्तरे मां निर्वृतिमगमयित्वा मन्त्राननुक्त्वेति वा वचांसि कृणवावहै गोष्ठीः करवावहै ॥ ३४ ॥

सुदेहोऽतिकमनीयोऽयं मम देहः ॥ ३५ ॥

पुरूरवो मा मृथा इत्यादि तस्याः सूक्तं तदप्यर्थत आह, मा मृथा इति चतुर्भिः । माम्रियस्व पुरुषोऽसि अतो धैर्यमावहेति भावः । इमे वृकाः प्रसिद्धा इन्द्रियाणि वा त्वा इति त्वां मा स्म अद्युः भक्षयेयुः इन्द्रियवशो मा भवेत्यर्थः ॥ ३६ ॥

प्रिये निमित्ते साहसं यासाम् ॥ ३७ ॥ ३८ ॥

तं सान्त्वयति—संवत्सरान्त इति ॥ ३९ ॥

अपराणीतिवचनादन्तर्वत्नीमुपालक्ष्य ज्ञात्वा ॥ ४० ॥ ४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पृथ्वीमटन् स पुरूरवाः कुरुक्षेत्रे सरस्वत्यास्तीरे तामुर्वशीं तत्सखीश्च पञ्च पश्यन् प्रहृष्टं वदनं यस्य सः सूक्तं शोभनं वचः प्राह ॥ ३३ ॥

तदेवाह—अहो इति द्वाभ्याम् । अहोत्यव्ययम् सम्बोधनार्थकम् अयि जाये हे भार्ये ! तिष्ठ तिष्ठ घोरे दुःखे त्यक्तुं पातयितुं, मामिति शेषः नार्हसि अद्यापि मन्त्राः रहःसल्लापाः अनिर्वृत्ताः अस-माप्ताः वचांसि कृणवावहै गोष्ठीं करवावहै कृपणवादसहित-सल्लापविशेषमाचाकुर्वावेत्यर्थः ॥ ३४ ॥

हे देवि ! त्वया हेतुभूतया दूरं हृतः नीतः सुदेहः कमनीयो देहः ममेति शेषः । अत्र पतति एवं सति तं देहं वृकाः गृध्राश्च खादन्ति खादिष्यन्ति एवञ्च त्वत्प्रसादस्यास्पदं विषयो न भविष्यति इदं त्वत्प्रसादं पुनः सम्भावयतो राज्ञो वचः सुदेवोऽयमिति पाठान्तरं तदा अयमर्थः, पुरूरवाः स्वयमेवात्मानमपरोक्षवन्निर्दिशति, सुदेवः पुरूरवश्शरीरस्थश्चेतनो वाच्यतः वृकाः इन्द्रियाणि बाधकत्वात् गृध्राः "गृधु अभिकांक्षायाम्" लोलुपा इत्यर्थः । तच्छब्द ऊर्वशी-विषयः ॥ ३५ ॥

अथोर्वशी आह—मामृथेति । त्वं मृषापुरुषः मिथ्याप्रतिज्ञः पुरुषो मासीः माभूः धीरो भवेत्यर्थः । मा मृथा इतिपाठे मा म्रियस्वेत्यर्थः । एवञ्चेमे वृकास्त्वां मास्माद्युः मा खादिषुः न खादिष्यन्तीत्यर्थः । क्वापि स्त्रीणां सख्यं न स्थिरं यथा वृकाणां तद्वत् स्त्रीणामपि हृदयम् ॥ ३६ ॥

तदेव प्रपञ्चयति—अकरुणाः कृपारहिताः क्रूरस्वभावाश्च दुर्मृषाः क्षमारहिताः प्रिये निमित्ते साहसं यासां ताश्च हि यस्मा-दल्पार्थेऽल्पप्रयोजने निमित्ते विस्रब्धं विश्वस्तं पतिं भ्रातरं वा घ्नन्ति ॥ ३७ ॥

विधायेति । किञ्चालीकविस्रम्भं कपटविश्वासमज्ञेषु स्वाभिप्राया-नभिज्ञेषु विधाय त्यक्तं सौहृदं याभिस्तथाभूताः नवन्नवं कान्तमभी-प्सन्त्यः कामयमानाः पुंश्चल्यः व्यभिचारिण्यः स्वैरा स्वच्छन्दा वृत्तिर्यासां ताश्च भवन्ति अतो मत्सख्यं त्यजेति भावः ॥ ३८ ॥

---

(१) अयि । (२) मन्त्रा अद्याप्यनिर्वृत्ताः इति च वीर० विज० पाठः । (३) सुदेव इति विज० ।

उपलभ्य मुदा युक्तः समुवास तया निशाम् ।
अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ ४१ ॥
गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति ।
तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ! ।
उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन्वने ॥ ४२ ॥
स्थालीं न्यस्य वने गत्वा गृहांस्तां ध्यायतो निशि ।
त्रेतायां सम्प्रवृत्तायां मनसि त्रय्यवर्त्तत ॥ ४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृका श्वानास्त्वां मास्म अद्युः भक्षयेयुः अजितेन्द्रियो माभूरित्यर्थः ॥ ३६ ॥

यत्र त्वं विस्रभ्य दुर्लभं मानुष्यं विफलयसि तासामस्माकं स्त्रीजातीनां स्वभावं शृणु इत्याह–स्त्रिय इति द्वाभ्याम् । दुर्मर्षा अपराधाऽसहिष्णवः प्रियार्थमधर्मादावपि साहसं यासां ताः ॥ ३७—३८ ॥

प्रबोधयितुमशक्यं पुनः सान्त्वयति-संवत्सरान्त इति ॥३९॥

अन्तर्वत्नीमुपालक्ष्येति तस्या अपराधीति वचनात् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूक्तं शोभनं वाक्यं वेदप्रसिद्धम् "अहो जाये" इत्यादि ॥३३॥

तदेवार्थतः आह--अहो इति द्वाभ्याम् । अहो जाये ! भार्ये तिष्ठ तिष्ठ हे घोरे ! त्वं माम् अनिर्वृत्य त्वद्गतां निर्वृतिं सुखमगमयित्वा त्यक्तुं नार्हसि अद्य अपि निश्चितं वचांसि कुर्वावहै गोष्ठीं करवावहै ॥ ३४ ॥

सुदेहः शोभनोऽयं मम देहः पतति एनं वृकाः इन्द्रियलक्षणाः गृध्राः आकाङ्क्षाधनाः खादन्ति पूर्वं तव प्रसादार्द्रो यस्मिन् तस्येदानीमास्पदमाश्रयो नास्ति ॥ ३५ ॥

"पुरूरवो मा मृथा" इत्यादि तस्याः सूक्तं तदर्थतः आह—मा मृथा इत्यादिचतुर्भिः । मा मृथा मा म्रियस्व इमे वृकाः इन्द्रियलक्षणाः त्वां मास्म अद्युः भक्षयेयुः यतः पुरुषोऽसि इन्द्रियसंयमनं कर्तुं योग्योऽसि ॥ ३६ ॥

अकरुणाः निर्दयाः क्रूराः कुटिलाः दुर्मर्षाः शान्तिशून्याः प्रिये इन्द्रियार्थे साहसं चापल्यं यासां ताः प्रियं साहसं हठाचरणं [illegible] इति वा ॥ ३७ ॥

[illegible]: कामयमानाः स्वैरं यथेच्छं वृत्तिर्यासां ताः ॥ ३८ ॥

हे ईश्वर मेतु ! अपराधीत्यनेन तस्याः अन्तर्वत्नीत्वं सूचितम् ॥ ३९—४१ ॥

---

भाषा टीका ।

कोई काल में कुरुक्षेत्र के विषय सरस्वती में स्नान करती हुई प्रसन्न मुख कमल वाली पांच सखियों के सङ्ग उर्वशी को देखकर राजा पुरूरवा सुन्दर उक्ति से बोले ॥ ३३ ॥

अहो जाये ! अहोघोरे ! खडी रहो खडी रहो अबभी तुमहम को सुखसे तृप्त नहीं करके बीच में छोडने योग्यनहीं हो आओ भला हमतुम कुछ बातें तो करें ॥ ३४ ॥

हे देवि ! यह सुन्दर शरीर तुम्हारे कृपाका पात्र नहीं है दूरसे तुम ने इस को त्याग दिया है इससे यह शरीर यहां ही गिरि जावगा इसको वृकजन्तु खांयगे ॥ ३५ ॥

उर्वश्युवाच ॥

इतना सुन कर उर्वशी बोली, कि—हे राजन् ! तुम पुरुष हो मरो मत, तुमको वृक ( बघेरे ) न भक्षण करें परंच स्त्रियों की प्रीति कहीं नहीं होती है जैसे वृकों का हृदय ॥ ३६ ॥

स्त्रियां प्रायकरके निर्दय कठोर हृदय वाली होती हैं थोडेही कारण से बड़ा भारी क्रोध करती हैं अति साहस वाली होती है अपने में विश्वास करके रहने वाले पति को भी थोडेही प्रयोजन के कारण मार डालती हैं ॥ ३७ ॥

अज्ञानी विषयी पुरुषों को पहिले दृढ विश्वास कराकर फिर सुहृदता त्याग कर देती हैं और पुंश्चली स्वेच्छाचार करने वाली स्त्रियां नये नये पुरुषों से प्रीत जोड़ती हैं ॥ ३८ ॥

इतना कहकर उर्वशी फिर बोली, कि—हे ईश्वर ! एकवर्ष पीछे आपके समीप में एक रात्री रहूंगी और भी तुम्हारे तब पुत्र होंगे ॥ ३९ ॥

पुरूरवा उर्वशी को गर्भवती जानकर पुर को चला गया, फिर उस जगह एक वर्ष के अन्त में वीर पुत्र की माता ऐसी उर्वशी को प्राप्त हुआ ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनेनाग्निना कर्म कृत्वा तद्द्वारोर्वशीं प्राप्स्यसीत्यभिप्रायेणाग्निस्थालीं ददुः स तु तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन्नेयमुर्वशी किन्त्वग्निस्थालीत्यबुध्यत ॥ ४२ ॥

ततश्च तां स्थालीं वने स्थापयित्वा गृहान् गत्वा निशि नित्यं

तेनायजत यज्ञेशं भगवन्तमधोक्षजम् ।
उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्थालयामुर्वशीमननं तत्प्राप्त्या तत्रासिरेव जातेति मृगनाघेशात् बाधश्चाति परिचये सतीति ज्ञेयम् ॥ ४३–४७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्य तस्मिन् गन्धर्वान् स्तुवति सति तुष्टा गन्धर्वा अनेनाग्निना कर्म कृत्वा तवत्रापुर्वशीं प्राप्स्यसीत्यभिप्रायेणाग्निस्थालीं ददुः स तु उर्वश्यामत्यावेशात् कामान्धस्तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन् सङ्गसमये नेयमुर्वशी किन्त्वग्निस्थालीत्यबुध्यत ॥ ४१—४२ ॥

निशि आ सम्यक् तामुर्वशीमेव ध्यायतस्तस्य त्रेतारम्भे त्रयी प्रवर्तन कर्मबोधकं वेदत्रयं प्रादुरभूदिति कामिन एव कर्म कार्यमित्यभिव्याञ्जितम् ॥ ४३ ॥

ततश्च स्थाली यत्र न्यस्ता तत्स्थानं गतस्सन् शम्या गर्भे जातमश्वत्थं विलक्ष्य तेनैवाश्वत्थेन द्वे अरणी कृत्वा अग्निं ममन्थेति शेषः । "शमीगर्भादग्निं मन्थति" इति श्रुतेः ॥ ४४ ॥

मथनप्रकारमाह—अधरारणिमुर्वशीम् ध्यायन्नुत्तरारणिमात्मानं ध्यायन् उभययोर्मध्ये यत् काष्ठं तत् प्रजननं पुत्रं ध्यायन् तथा च मन्त्रः "उर्वश्यायुरसि पुरूरवाः" इति ॥ ४५ ॥

तस्य तत्कर्तृकाग्निमंथनात् विभावसुरग्निर्जातः जातं वेदो धनं भोग्यं यस्मात् स च त्रय्या विद्यया संस्कृतो राज्ञा पुत्रत्वे कल्पितः पुण्यलोकप्रापकत्वात् त्रिवृत् आहवनीयादिरूपः ॥ ४६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उर्वशीप्रापकं कर्मानेनाग्निना कृत्वा तां प्राप्स्यसीत्याशयेनाग्निस्थालीम् अग्निपात्रं ददुः स पुरूरवाः तामग्निस्थालीमेवोर्वशीं मन्यमानो वने चरन् नेयमुर्वशीत्यबुध्यत ॥ ४२ ॥

ततो वने स्थालीं न्यस्य गृहान् गत्वा निशि आध्यायतः आसमन्ततः पूर्ववृत्तान्तं चिन्तयतः त्रेतायां सम्प्रवृत्तायां मनसि त्रयी कर्मबोधकं वेदत्रयम् प्रवर्तत प्रादुरभूत् ॥ ४३ ॥

तत्र पुरूरवाः स्थालीस्थानं गतः शमीगर्भे अश्वत्थमुत्पन्नं विजक्ष्य अग्निस्थालीप्रभावजमश्वत्थमवेत्याय तेनाश्वत्थेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया अग्निं ममन्थेति शेषः । "शमीगर्भादग्निं मन्थ" इति श्रुतेः ॥ ४४ ॥

कं कुर्वन् अग्निं ममन्थेत्यत्राह—मन्त्रतो मथनमन्त्रप्रयोगतः मधुः मन्त्रप्रयोगपूर्वकाग्न्युत्पादनकुशलः अधरारणिमुर्वशीमुत्तरारणिमात्मानमुभयोर्मध्ये यत्काष्ठं तत्प्रजननं पुत्रं च ध्यायन् ॥ ४५ ॥ ८

उत्तरस्य पुरूरवसः निर्मथनात् विभावसुर्जातः, कीदृशः ? जातं वेदो धनं भोग्यं वस्तु यस्मात्सः स च विभावसुः त्रय्या विद्यया तद्विहितनाधानसंस्कारेण त्रिवृत् आहवनीयादिरूपः सन् राज्ञा पुरूरवसा पुत्रत्वेन कल्पितः पुण्यलोकप्रापकत्वात् ॥ ४६ ॥

---

भाषाटीका ।

उर्वशी को प्राप्त होकर आनन्द से युक्त होकर रातभर उर्वशी के साथ वास करता हुआ। तदनन्तर प्रातःकाल में उर्वशी, दीन विरहातुर ऐसे पुरूरवा से बोली कि– ॥ ४१ ॥

तू इन गन्धर्वों को प्रसन्न करके ये लोग मेरे को तेरे लिये देवेंगे। हे नृप ! तब राजा बहुत गन्धर्वों की स्तुति करने लगा तब प्रसन्न होकर गन्धर्वों ने एक अग्नि की स्थाली दीनी पुरूरवा उस स्थाली ( टोकनी ) को उर्वशी जानकर उसे साथ लेकर वनमें विचरता रहा एक समय विचरते २ जानता हुआ कि यह उर्वशी नहीं है किन्तु अग्नि की स्थाली है ॥ ४२ ॥

तब स्थाली जानकर वनमें एक स्थल में धर कर गृह को गया सदा रात्रि में उसी का ध्यान करता रहा इसी प्रकार रहते २ त्रेता युग का जब प्रारंभ हुआ तब पुरूरवा के हृदय में वेदत्रयी की प्रवृत्ति हुई ॥ ४३ ॥

तब तो वन में स्थाली के स्थानपर आकर शमी वृक्ष के गर्भ में उत्पन्न होने वाले अश्वत्थ को देखकर उर्वशी, के लोक की कामना से उस अश्वत्थ से दो अरणी बना कर ॥ ४४ ॥

मंत्र से अधराऽरणि ( नीचे की समिध ) को उर्वशी और उत्तर अरणि ( ऊपर की समिध ) को अपने आत्मा का ध्यान करता हुआ और दोनों अरणियों के मध्य में जो काष्ठ उसको पुत्र का ध्यान करता हुआ ॥ ४५ ॥

इस प्रकार ध्यान कर मंथन करने से जात वेदा अग्नि प्रकट भया तब राजा पुरूरवा ने वेदत्रयी विद्या के आधान संस्कार से त्रिवृत आहवनीय आदि रूप से तीन भेद को प्राप्त होनेवाले अग्नि को अपना पुत्र कल्पन किया, जिसने यज्ञेश भगवान् अधोक्षज सर्व देव मय श्रीहरि का उर्वशी के लोक की कामना से यजन करता हुआ ॥ ४६ ॥ ४७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाह—तेनेति ॥ ४७ ॥

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥
पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप ।
अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे ऐलोपाख्याने
चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सम्प्रत्यनादिवेदत्रयबोधितो ब्राह्मणादीनामिन्द्राद्यनेकदेवयजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथं सादिरिव वर्ण्यते तत्राह—एक एवेति द्वाभ्याम् । पुरा कृतयुगे सर्ववाङ्मयः सर्वासां वाचां बीजभूतः प्रणव एक एव वेदः । देवश्च नारायण एक एव अग्निश्चैक एव लौकिकः वर्णश्चैक एव हंसो नाम ॥ ४८ ॥

वेदत्रयी तु पुरूरवसः सकाशादासीत् एयिवान् प्राप अयं भावः कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽपि ध्याननिष्ठाः रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गः प्रकटो बभूवेत्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदाह—तेनेति । तेन विभावसुना यज्ञफलदं सर्वदेवताशरीरकम् आश्रितार्तिहरं भगवन्तमधोक्षजमुर्वशीलोककामयमानः पुरूरवा अयजत आराधितवान् ॥ ४७ ॥

सम्प्रत्यनादिवेदबोधितो ब्राह्मणादीनामिन्द्राद्यनेकदेवतायजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथमाधुनिकः स्यादिति वर्ण्यते? तत्राह, एक एवेति द्वाभ्याम् । पुरा कृतयुगे सर्वासां वाचां बीजभूतः प्रणव एक एव वेदः देवश्च नारायण एक एव नान्यः अग्निश्चैक एव लौकिकः वर्णश्चैक एव हंसाख्यः ॥ ४८ ॥

हे नृप ! त्रयी वेदत्रयं तु त्रेतामुखे पुरूरवसः सकाशादेवासीत् अयम्भावः कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽध्यात्मनिष्ठाः, रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गः पुरूरवसः सकाशात्प्रकटो बभूवेति, ततो राजा पुरूरवाः अग्निरूपया प्रजया पुत्रेण हेतुभूतेन गन्धर्वलोकमेयिवान् प्राप ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन त्रिवृताऽग्निना उर्वशीसालोक्यं सर्वदेवमयं सर्वदेवोत्तमम् ॥ ४७ ॥

पुराकृतेः "अकारो वै सर्वा वाक्" इति सर्ववाङ्मयः प्रणवोऽप्येकः ॥ ४८ ॥

त्रयी त्रिप्रकारा अग्निना प्रजया पुत्रत्वेन कल्पितेनाग्निना ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुरा ब्राह्मकल्पस्य प्रथमसत्ययुग इत्येवार्थः । स्वायम्भुवमारभ्य वेदादिवर्णानां भेदव्यवहारश्रवणात् ॥ ४८ ॥

पुरूरवस एवेति तु अध्यक्षारम्भस्य तत्र त्रेतामुखे तस्मादेव तत्तत्प्रवर्तनं तद्वत् पूर्वपूर्वमन्यतोऽन्यत इत्यभिप्रायात् अत एव पुरुषाद्वर्णचतुष्टयोत्पत्तिश्च किञ्चित् काल व्यवधानतो ज्ञेया ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेनाऽग्निना ॥ ४७ ॥

ननु, वेदत्रयबोधितः कर्ममार्गः प्रागासीत् सत्यं प्रागासीदित्याह—एक एवेति, द्वाभ्याम् । पुरा कृतयुगे सर्ववाङ्मयः सर्वासां वाचां बीजभूतः प्रणव एक एव वेदः देवश्च नारायण एक एव अग्निश्चैक एव लौकिकः वर्णश्चैको हंसो नाम यतः कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽपि ध्याननिष्ठा एवेति ॥ ४८ ॥

त्रेतामुखे त्रेतारम्भे पुरूरवसः सकाशादेव कर्ममार्गप्रादुर्भावः । एवं स्वायम्भुवमन्वन्तरादावपि चतुर्युगव्यापकराजत्व

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बद्धयः प्रियव्रतादिष्य एव तत्र तत्र त्रेतारम्भे कर्मप्रादुर्भाव इत्यपि ज्ञेयम् ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्दशोऽयं नवमे सङ्गतः सङ्गतः सताम् ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेन विभावसुना ॥ ४७ ॥
अग्निरेक एव लौकिकः वर्णो हंसः ॥ ४८ ॥
प्रजया पुत्रभूतेन ॥ ४९ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्दशाध्यायार्थप्रकाशः ॥ १४ ॥

भाषा टीका ।

पूर्वकाल में एकही वेद प्रणव (ॐकार) वाङ्मय रहा और देव भी नारायण ही एक रहे, और कोई अन्य नहीं रहा, ऐसे ही अग्नि भी एक और वर्ण भी एक ही रहा ॥ ४८ ॥

हे नृप ! त्रेता युग में पुरूरवा के मुख से वेदत्रयी हुई राजा पुरूरवा भी अग्नि रूप प्रजा से गन्धर्व लोक को प्राप्त हुआ ॥ ४९ ॥

इति श्रीमद्भागवत नवमस्कन्ध में चतुर्दश अध्याय
की, श्रीवृन्दावनस्थ पं०भागवताचार्यकृत
भाषा टीका समाप्त ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

## ॥ पञ्चदशोऽध्यायः ॥

——:०:——

श्रीशुक उवाच ।

ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप ! ।
आयुः श्रुतायुः सत्यायुरथोऽथ विजयो जयः ॥ १ ॥
श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः ।
रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥ २ ॥
भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ।
तस्य जन्हुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ।
जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ३ ॥
ततः कुशः कुशस्यापि कुशाम्बुर्मूर्तयो वसुः ।
कुशनाभश्च चत्वारो गाधिरासीत्कुशाम्बुजः ॥ ४ ॥
तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ।
वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम् ॥ ६ ॥
इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ।
आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥
स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ।
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि ॥
यद्दौहित्रसुतो रामः कार्तवीर्यमहन् रुषा ॥ १ ॥

॥ १ ॥

सुमहत्त्वायाल्पविक्रमेण श्रुतायुप्रभृतिषण्णां वंशानाह— श्रुतायोरित्यादिना । एकः एकसंज्ञः अमितस्तत्संज्ञः ॥ २ ॥

जह्नोः पूरुस्तस्य बलाकस्तस्याजकः ॥ ३—४ ॥

गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिर्भूदित्युत्तराध्यायान्ते वक्ष्यति " गाधेरभून्महातेजाः " इत्यादिना तत्र तावत्तदुपोद्घातत्वेन भृगुवंशस्य रामस्य, ऋचीकस्य चारित्रं प्रसक्तानुप्रसक्तं च परशुरामावतारचरित्रमाह—तस्य सत्यवतीमित्यादिना । विसदृशमननुरूपं भार्गवमृचीकम् ॥ ५ ॥

द्विविधवर्णयोरेकतः श्यामः कर्णो येषां सर्वेऽसितश्च चन्द्रस्येव वर्चो येषां न चैकतरापि पर्याप्तमस्मत्कन्यायाः यतः कुशिकाः कौशिका वयम् ॥ ६-७ ॥

उभयैर्मन्त्रैः पत्न्यै ब्राह्मैर्मन्त्रैः श्वश्र्वै तु क्षात्रैरित्यर्थः ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ऐलस्य पुरूरवसः ऊर्वशीगर्भात् संवत्सरान्ते सञ्जाताः षड्-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तासां ऊर्वश्या उदरात्, हे नृप ! षडात्मजा आसन् ते चाय्वादिसंज्ञाः ॥ १ ॥

श्रुतायोरिति । तत्र श्रुतायुप्रभृतीनां पण्णां वंशानुक्रमेणाह—श्रुतायोः पुत्रो वसुमान् सत्यायोः पुत्रस्तु श्रुतञ्जयः श्रुतञ्जयेतिपाठान्तरं एकसंज्ञश्चेति द्वौ पुत्रौ जयस्य तु तनयो विभुः अमितेति पाठान्तरं तदा तत्सज्ञः ॥ २ ॥

विजयस्य तु भीमः पुत्रः तस्य तु काञ्चनः आयोस्तु पुत्राः सप्तदश वक्ष्यन्ते ततः काञ्चनात् वसुमतो वा होतृको जह्नु इति शेषः । तस्य होतृकस्य सुतो जह्नुः तं विशिनष्टि-यो जह्नुः गण्डूषीकृत्य गङ्गामपिबत् जह्नोस्तु पुत्रः पूरुः तत्पुत्रः पूरुपुत्रो बलाकः तस्यात्मजस्त्वजकः ततोऽजकात् कुशः कुशस्य तु कुशाम्बादयश्चत्वारः पुत्राः तत्र कुशाम्बाद्गाधिरासीत् जज्ञे ॥ ३-४ ॥

गाधेः पुत्रोऽपि विश्वामित्रो ब्रह्मर्षिरभूत् इत्युत्तराध्यायान्ते वक्ष्यति "गाधेरासीन्महातेजा" इत्यादिना तत्र तावदुपोद्घातत्वेन भृगुवंशभवस्य ऋचीकस्य चरितं प्रसक्तानुप्रसक्त्या परशुरामावतारतच्चरित्रादिकञ्चाह-तस्य सत्यवतीमित्यादिना । तस्य गाधेः कन्यां दुहितरं सत्यवत्याख्यामृचीकाख्यो द्विजो भार्गवोऽयाचत ततो गाधिर्वरं विसदृशं कन्याया अननुरूपं दृष्ट्वा भार्गवमृचीकमुवाच॥५॥

किमिति ? एकत इति. इष्टिणवामयोरेकतः एकस्मिन्पार्श्वे श्यामः कर्णौ येषां चन्द्रस्येव वर्चो येषां तेषां हयानामश्वानां सहस्रं कन्यायाः शुल्कं दीयतां न चेदमपि पर्याप्तमस्मत्कन्यायाः यतः कुशिकाः कौशिका वयमिति ॥ ६ ॥

इतीत्थमुक्तस्तस्य गाधेर्मतिं ज्ञात्वा मामननुरूपं दृष्टवतोऽस्येयं मतिरभूदिति ज्ञात्वा वरुणस्यान्तिकं गतः तत आनीय चाऽश्वा, प्रतिगृह्णीत्यादिः तान् तदुक्तविधानश्वान् दत्वा वराननां सत्यवतीमुपयेमे ॥ ७ ॥

स इति । ततः कदाचित्स ऋषिः ऋचीकः पुत्रकाम्यया आत्मनो पुत्रेच्छया पत्न्या श्वश्रूवा पत्नीमात्रा च प्रार्थितः उभयैः ब्राह्मैः क्षात्रैश्च मन्त्रैश्चरुं श्रपयित्वा पत्न्याः पुत्रार्थं ब्राह्ममन्त्राभिमन्त्रितमेकं चरुं श्वश्र्वास्तु पुत्रार्थं क्षात्रमन्त्राभिमन्त्रितमपरं चरुं पात्रद्वितयेऽर्थः । मुनिः ऋचीकः स्नातुं गतः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मणोऽत्रिरत्रेः सोमः सोमाद्बुधः बुधात्पुरूरवाः तस्य पुत्रा नाह—ऐलस्य चेति ॥ १-३ ॥

कुशाम्बुजो गाधिरित्येकस्य नामद्वयम् ॥ ४ ॥

भार्गवमृचीकम् ॥ ५ ॥

कुशिकानामन्वयो यस्य स तथा कुशिकान्वयः समय इति वा ॥ ६ ॥ ७ ॥

श्वश्रूर्नोपार्यामाता उभयैः सात्विकराजसभेदाभिन्नैर्मन्त्रैः चरुं श्रपयित्वा प्रपत्न्याभिमंत्र्य तवेदं तव मातुरिदमिति निगद्य संस्थाप्य स्नातुं गतः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२ ॥

जह्नोरिति सार्द्धकम । जह्नोस्तु पुरुस्तस्याथ बालकश्चात्मजोजक इत्येव पाठः सर्वत्र पाठान्तरं तु कुत्रापि न दृश्यते टीका तु निर्गलितार्थत्वेन सङ्गच्छते ॥ ३—४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ऐलवंशभवो गाधेर्दौहित्रात्मज ईश्वरः ।
अर्जुनं भेत्तुहर्तारं रामः पञ्चदशेऽवधीत् ॥
॥ १ ॥

आयोर्वंशं विस्तृतमुपरिष्टाद्वक्ष्यन् प्रथमं श्रुतायुप्रभृतीनां पण्णां वंशान् संक्षिप्तानाह-श्रुतायोरिति । एकश्चेत्येकसंज्ञः ॥ २-३ ॥

तनयः तत्संज्ञः ॥ ४ ॥

गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभूदित्युत्तराध्याये वक्ष्यते । तस्य कन्यावंशप्रसङ्गेनैव परशुरामावतारं वक्ष्यन् प्रथमं ऋचीक ऋषिचरितमाह-तस्येति । कुशिका इति कुशस्य वंशा वयं क्षत्रिया अपि सर्वतोऽपि कुलीना इति भावः । इष्टिणवामयोर्मध्ये एकतः श्यामः कर्णौ येषां तेषाम ॥ ५—७ ॥

उभयैर्मन्त्रैर्ब्राह्मैर्मन्त्रैः पत्न्यै चरुं दत्वा श्वश्र्वै तु क्षात्रैर्मन्त्रैरित्यर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्येष्ठस्यैलपुत्रस्य आयोर्वंशे स्वयं भगवानाविर्भूतः सर्वज्ञो विततोऽतः सूचीकटाहन्यायेन पश्चात्तद्वर्णनं भविष्यत्येवं ज्येष्ठत्व नहुषययातिप्रभृतिष्वपि ज्ञेयमत आयुव्यतिरिक्तानामैलपुत्राणां वंशान् तत्र जातायाः सत्यवत्याः पौत्रस्य परशुरामस्य जन्म श्रीपरशुरामकृतं कार्तवीर्यवधं च वर्णयति-ऐलस्येति पञ्चदशेन ॥ १ ॥

एक एकाख्यः ॥ २ ॥

जह्नोः पुरुस्तत्पुत्रो बलाकः बलाकस्यात्मजश्च अजकः ॥ ३ ॥ ४ ॥

विसदृशमननुरूपं मत्वा भार्गवमृचीकमब्रवीत् ॥ ५ ॥

एकतः उभयोः कर्णयोः प्रत्येकमेकभागतः श्यामौ कर्णौ येषां सर्वस्मिन् अङ्गे चन्द्रवद्वर्चो येषां तेषां सहस्रं कन्याशुल्कं दीयतां यतो वयं कुशिकाः कुशिकानां कन्याऽल्पव्ययेन प्राप्तुं न शक्येति भावः ॥ ६ ॥ ७ ॥

उभयैर्मन्त्रैः ब्राह्मैः क्षात्रैश्च ॥ ८ ॥

---

भाषाटीका ।

श्रीरुक्मिणीशचरणौ हृदि भावयामि ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-हेनृप ! ऐल ( पुरूरवा )महाराज के

तावत्सत्यवती मात्रा स्वचरुं याचिता सती।
श्रेष्ठं [1]मत्वा तया ऽयच्छन्मात्रे मातुरदत्स्वयम् ॥ ९ ॥
तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः।
घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥
प्रसादितः सत्यवत्या मैवम्भूदिति भार्गवः।
अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥
सा चाभूत्सुमहत्पुण्या कौशिकी लोकपावनी।
रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥
तस्यां हि भार्गवऋषेः सुता वसुमदादयः।
यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥
यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्।
त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥
[2]दुष्टं क्षत्रं भुवो भारमब्रह्मण्य[3]मनीनशत्।
रजस्तमोवृतमहन्फल्गुन्यपि कृतेऽहसि ॥ १५ ॥

राजोवाच।

किं तदंहो भगवतो राजन्यैरजितात्मभिः।
कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥

---

भाषा टीका।

उर्वशी के गर्भ से छे पुत्र हुए, आयु, श्रुतायु, सत्यायु, रय, विजय, और जय, ॥ १ ॥

श्रुतायु के पुत्र वसुमान् हुए, रय के सुत एक हुए, जय के तनय मित हुए ॥ २ ॥

विजय के पुत्र भीम हुए तिनके काञ्चन तिनके होत्रक तिन से जन्हु पुत्र हुए जो गङ्गाजी को कुल्ला कर गये। जन्हु के पुरु तिन के पुत्र बलाक तिनके पुत्र अजक हुए ॥ ३ ॥

तिन से कुश और कुश के भी कुशाम्बु, तनय, वसु, और कुश नाभ, ये चार पुत्र हुए और गाधि कशांबुज अर्थात् कशाम्बुके पुत्र हुए ॥ ४ ॥

तिनकी सत्यवती कन्याकी ऋचीक ऋषि ने याचना करी, गाधिने कन्या के असदृश वर को जान कर भार्गव (ऋचीक) ब्राह्मणसे गाधिराजा बोले, कि ॥ ५ ॥

एक एक कर्ण श्याम जिन का हो ऐसे चन्द्र सदृश कान्ति वाले एकसहस्र अश्व कन्याका शुल्क ( मूल्य ) दीजिये, क्यों कि हमलोग तो कौशिक है हमारे लोगों की कन्या अल्प शुल्क से नहीं मिल सक्ती है ॥ ६ ॥

ऐसा जब कहा तब ऋचीक इनकी इस प्रकार की संमति को जानकर वरुण के समीप गये, और वैसे ही अश्व लाकर राजा को देकर उन की वरानना कन्या ऋचीक ने व्याहली ॥ ७ ॥

उन ऋचीक ऋषिसे पुत्र की कामना से उनकी पत्नी ने तथा सासु ने भी प्रार्थना करी, मुनीने भी दो प्रकार के मन्त्रो से चरु को सिद्ध कर स्नान करने को गये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यावत्स्नात्वा मुनिर्नागतस्तावद्भार्यायां भर्तृस्नेहाधिक्यात्पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मत्वा तथा मात्रा सत्यवती याचिता सती ब्राह्ममन्त्राऽभिमन्त्रितं स्वचरुं मात्रे अयच्छत्प्रादात् मातुश्चरुं क्षात्रमन्त्राऽभिमन्त्रितं स्वयमदात् ॥ ९ ॥

कष्टं जुगुप्सितं तदेवाऽह—ते पुत्रो घोरो भविष्यति भ्राता तु ब्रह्मवित्तमो भविष्यतीति ॥ १० ॥

एवं माभूदिति प्रसादितो भार्गव आह—अथ तर्हि पौत्रो घोरो भविष्यति जमदग्निः पुत्रोऽभवदित्यर्थः ॥ ११ ॥

---

(१) मत्वानया। (२) हतं। (३) मधार्मिकम्। इति च वीर० पाठः।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सा च सत्यवती कौशिकी नद्यभूत् ॥ १२ ॥

भार्गवस्यर्चीकस्य जमदग्नेः सुताः ॥ १३—१४ ॥

अनीनशन्नाशयामास, तदेवाह—रजस्तमोवृतमिति । पाठान्तरे सुगमम् ॥ १५—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावदिति । तावत् यावत्स्नात्वा मुनिर्नागतस्तावद्भार्यायां भर्तुः स्नेहाऽधिक्यात्पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मन्वानया मात्रा याचिता सत्यवती स्वचरुं ब्राह्ममन्त्राऽभिमन्त्रितं स्वमात्रे प्रायच्छत् प्रादात् मातुस्तु चरुं क्षात्रमन्त्राभिमन्त्रितं स्वयमदात् आदत् भक्षितवती दीर्घत्वमार्षम् ॥ ९ ॥

तत आगतः मुनिः ऋचीकः तच्चरुविनिमयरूपं कर्म विज्ञाय पत्नीं प्राह, किमिति ? त्वं कष्टं जुगुप्सितमकार्षीः अतस्तव पुत्रो दण्डधरो घोरो भविता तव भ्राता तु ब्रह्मवित्तमो भवितेति ॥ १० ॥

प्रसादित इति । ततः सत्यवत्या मैवंभूदिदं न निगृह्णामीति प्रार्थितो भार्गवः आह—किमिति ? "अथ तर्हि भवेत्पौत्रः" इति, तर्हि पौत्रो घोरो भविता पुत्रस्तु शान्त एवेत्यर्थः । ततः सत्यवत्याः जमदग्निः जज्ञे ॥ ११ ॥

सा चेति । सा च सत्यवती कौशिकी सुमहापुण्या लोकपावनी नदी बभूव कौशिकीरूपेण स्यन्दत इत्यर्थः । अथ जमदग्निर्यो रेणोः सुतां रेणुकाख्याम् उवाह उपयेमे ॥ १२ ॥

तस्यां हीति । तस्यां हि रेणुकायां भार्गवऋषेर्जमदग्नेर्वसुमदाद्याः सुता जज्ञिरे इति शेषः । तेषां वसुमदादीनां यवीयान् कनीयान् रामः इत्यभितः प्रख्यातस्तं विदितनाट्-यमिति । यं रामं वासुदेवांशं वासुदेवांशावेशावतारम् आहुः तदवतारयाथात्म्यवेदिन इति शेषः । कथंभूतम् ? हैहयानां कार्तवीर्याऽऽदीनां कुलस्याऽन्तं नाशं करोतीत्यन्तकः नाशकः । यो राम इमां महीं त्रिःसप्तकृत्वः एकविंशतिवारं निःक्षत्रियां क्षत्रबीजरहितां चक्रे ॥ १३ ॥ १४ ॥

दृप्तमिति । फल्गुन्यल्पे अंहस्यपराधे कृतेऽपि क्षत्रं क्षत्रकुलमहन् हतवान्, कथंभूतम् ? दृप्तं गर्वितं पृथिव्याः भारं भारावहम् अब्रह्मण्यं ब्राह्मणेष्वसाधु रजस्तमोभ्यां वृतम् ॥ १५ ॥

तत्र फल्गुन्यपि कृते अंहसि क्षत्रमहाहिंस्रत्वं श्रुत्वा ब्रह्मर्षिहन्तावसरः पृच्छति राजा—किमिति ? अकृतात्मभिः दुरात्मभिः राजन्यैः कृतं तदंहः किं किं स्वरूपं कीदृशं च येनांहसा हेतुना पौनःपुन्येन क्षत्रियाणां कुलं नष्टम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तावत्तदा आत्मीयचरुं श्रेष्ठं मत्वा तया स्वमात्रा याचिता सत्यवती स्वचरुं मात्रे ददौ मातुश्चरुं स्वयमादरस्वीकृतवती ॥ ९ ॥

तव पुत्रो घोरो दण्डधरः ते भ्राता ब्रह्मवित्तमः ॥ १०–१२ ॥

सा कौशिकी सत्यवती नदी बभूवेति शेषः ॥ १३ ॥

भार्गवऋषेर्जमदग्नेर्यवीयान् कनिष्ठः ॥ १४ ॥

क्षत्रवधे मुख्यं कारणमाह—दृप्तमिति । अहन् हतवान् फल्गुन्यल्पे अंहस्यपराधे ॥ १५ ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यावत्, स्नात्वा मुनिर्नाऽऽगतस्तावदेव सत्यवत्यां भर्तृस्नेहाधिक्यात् तस्याश्चरुं श्रेष्ठं मत्वा अनया मात्रा याचिता सत्यवती मात्रे स्वचरुं ब्रह्ममन्त्राऽभिमन्त्रितम् प्रायच्छत् । मातुश्चरुं क्षत्रमन्त्राभिमन्त्रितं स्वयमदत् भक्षितवती ॥ ९ ॥

कष्टं जुगुप्सितं दण्डधरः क्षत्रियो भविष्यति ब्रह्मवित्तमो ब्राह्मणः स च विश्वामित्र उत्तराऽध्याये वक्ष्यते ॥ १० ॥

एवं माभूदिति प्रसादित ऋचीक उवाच—अथेति । तर्हि पौत्रो दण्डधरो भविष्यति, स च, परशुराम एव, ततो हेतोः पुत्रो जमदग्निर्मुनिरभूत् ॥ ११ ॥

सा च सत्यवती कौशिकी नद्यभूत् ॥ १२—१४ ॥

अनीनशच्छत्रं भारमब्रह्मण्यमधार्मिकमिति । क्षत्रं भुवो भारमब्रह्मण्यमनीनशदिति च पाठद्वयम् ॥ १५—२० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत्यवती स्वचरुं ब्राह्ममन्त्राऽभिमन्त्रितं तया मात्रा श्रेष्ठं मत्वा याचिता सती मात्रे प्रायच्छत् मातुश्चरुं क्षात्रमन्त्राऽभिमन्त्रितं स्वयम् आदत् ॥ ९ ॥

कष्टमयुक्तम् ॥ १० ॥

एवं माभूदिति सत्यवत्या प्रार्थितो भार्गव आह—तर्हि पौत्रो घोरो भवेद्भविष्यति । अथ ततो भार्गवात् जमदग्निरभवत् ॥ ११ ॥

सा सत्यवती कौशिकी नदी अभूत् ॥ १२ ॥ १३ ॥

त्रिःसप्तकृत्वः एकविंशतिवारम् ॥ १४ ॥

भुवो भारमनीनशत् नाशयामास । तदेवाह—अब्रह्मण्यं रजस्तमोवृतम् अहन् ॥ १५ ॥

अभीक्ष्णशः पुनःपुनः ॥ १६ ॥

---

### भाषा टीका ।

जब तक ऋषि स्नान कर नहीं आने पाये तब तक सत्यवती से माता ने अपना चरु मांगा सत्यवतीने भी अपने ऊपर अपने पति की अधिक प्रीति समुझ कर अपने चरु को उत्तम मान कर अपनी माता को देदिया जोकि ब्रह्म मन्त्र से अभिमन्त्रित रहा और क्षत्रिय मन्त्र से अभिमन्त्रित माता का जो चरु रहा उसको आपने भक्षण किया ॥ ९ ॥

स्नान से आकर मुनि इस समाचार को जान कर पत्नी से बोले, कि—तूने यह बड़ा कष्ट किया, तेरा पुत्र बड़ा घोर दण्डधारी उग्र होगा और भ्राता अतिकर ब्रह्मवेत्ता होगा ॥ १० ॥

श्रीशुक उवाच ।

हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ।
दत्तं [1]नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥
बाहून्दशशतं लेभे दुर्द्धर्षत्वमरातिषु ।
अव्याहतेन्द्रियौ [2]जःश्रीतेजोवीर्ययशोबलम् ॥ १८ ॥
योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ।
चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥
स्त्रीरत्नैरावृतः क्रीडन्रेवाम्भसि मदोत्कटः ।
वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥
विप्लावितं स्वशिबिरं प्रतिस्रोतस्सरिज्जलैः ।
नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥
गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ।
माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥
स एकदा तु मृगयां विचरन्विजने वने ।
यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥
तस्मै स नरदेवाय मुनिरर्हणमाहरत ।
ससैन्यामात्यवाहाय हविष्मत्या तपोधनः ॥ २४ ॥

भाषाटीका ।

तबतो सत्यवती ने अपने पति भार्गव (ऋचीक) को प्रसन्न किये और कहा, कि – महाराज ! ऐसा न होवे ऐसी कृपाकरो । तब ऋषि बोले, अच्छा तो ऐसे गुणवाला पौत्र होगा .तब जमदग्नि शांत पुत्र हुए ॥ ११ ॥

और वह सत्यवती तो महापुण्यवाली लोकपावनी कौशिकी नदी होगई ॥ जो रेणु की पुत्री रही रेणुका उसको जमदग्नि ने विवाह लीनी ॥ १२ ॥

तिसके विषैं भार्गव ऋषि से वसुमान् आदि पुत्र उत्पन्न हुए तिन पुत्रों के मध्य में छोटे परशुराम इस नाम से विख्यात राम हुए ॥ १३ ॥

जिनको बुधजन वासुदेव का अंश कहते हैं और हैहय राजाओं के कुलांतक भी कहते हैं । जिनने इस पृथिवी को इकीस वार बिना क्षत्रियों की कर दीनी ॥ १४ ॥

जो ब्रह्मद्रोही दुष्टक्षत्रिय पृथिवी के भाररूप रहे उन लोगों का नाश करते हुए । और जो लोग रजोगुण तमोगुण की वृत्ति वाले रहे उनको थोड़े अपराध करने पर भी मारते हुए ॥ १५ ॥

राजोवाच ॥

राजा परीक्षित बोले, कि–ऐसा भगवान् श्रीपरशुरामजी का अभागे अजित गनरक क्षत्रियों ने क्या अपराध किया रहा कि जिससे वारंवार क्षत्रियों का कुल नष्ट हुआ ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह-हैहयानामिति षड्भिः । परिकर्मभिः परिचर्यादिभिर्दत्तं दत्तात्रेयमाराध्य ॥ १७ ॥

अव्याहतमिन्द्रियादिकं च लेभे ॥ १८ ॥

यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः ॥ १९ ॥

रेवाम्भसि नर्मदाजले सरितं नर्मदाम ॥ २० ॥

रावणो दिग्विजये माहिष्मत्याः समीपे नर्मदायां देवपूजां कुर्वंस्तेन प्रवाहस्यावरोधात्प्रतिस्रोतसः सत्यास्तस्याः सरितो जलैर्विप्लावितं स्वशिबिरमालक्ष्य, तस्य तद्वीर्यं न सेहे ॥ २१ ॥

ततश्च कृतकिल्बिषः क्रीडन्तमभिमानिनं प्रहरन्नगृहीतः

(१) नारायणांशांशम् इति पं० (२) अज इति विज० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

माहिष्मत्यां स्वपुर्यां कपिरिव संनिरुद्धश्च पुनश्चाऽवज्ञया येन मुक्तः ॥ २२ ॥

इदानीं तत्कृतमपराधं दर्शयन्नाह—स एकदेत्यादिना ॥ २३ ॥

अर्हणमातिथ्यादि हविष्मत्या कामधेन्वा ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पृष्टो मुनिः कार्त्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य हेतुमैश्वर्यादिकमाह—हैहयानामितिषड्भिः । हैहयानां जनपदानाम् अधिपतिः पुरुषर्षभोऽर्जुनः कार्तवीर्यः परिकर्मभिः परिचर्याभिः नारायणांशांशावतारभूतं दत्तं दत्तात्रेयम् आराध्य ॥ १७ ॥

दशशतं सहस्रं बाहून् अरातिषु शत्रुषु दुर्धर्षत्वं दुःसहत्वम् अव्याहतामिन्द्रियादिकं योगेश्वरत्वमैश्वर्यं च लेभे लब्धवान् इन्द्रियादीनां समाहारद्वन्द्वस्ततोऽव्याहतशब्देन कर्मधारयः तत्र ओजो बुद्धिबलं तेजः शरीरकान्तिः वीर्यमिन्द्रियबलं यशः कीर्तिः बलं शरीरबलम् ऐश्वर्यं विशिनष्टि यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः एवं लब्धसहस्रबाह्वादिरर्जुनः पवनो यथा तद्वत् लोकेष्वव्याहतगतिर्विचचार ॥ १८–१९ ॥

स्त्रीभिरिति । स कदाचित्स्त्रिय एव रत्नानि तैरावृतः वैजयन्तीस्रजं बिभ्राणः रेवाम्भसि नर्मदाया जले क्रीडन् मदोद्रिक्तः सरितं दोर्भिः भुजैः रुरोध ॥ २० ॥

विप्लावितमिति । तदा दशाननो रावणो दिग्विजयाय माहिष्मत्या अर्जुनपुर्याः समीपे नर्मदायां शिबिरे देवपूजां कुर्वन् तेन प्रवाहस्यावरोधात्प्रतिस्रोतसः प्रत्युद्गतप्रवाहायाः सरितो नर्मदाया जलैराप्लावितं स्वशिबिरमालक्ष्य तस्मादपि वीरमात्मानं मन्यमानः तस्य कार्त्तवीर्यस्य तद्वीर्यं नामृष्यत् न ममर्ष किन्तु नमश्चक्रुवानिति शेषः ॥ २१ ॥

गृहीतइति । ततः कृतकिल्बिषः स्त्रीजनसमभिभवितुं प्रवृत्तो दशाननः स्त्रीणां समक्षं येनार्जुनेन लीलया गृहीतः माहिष्मत्यां पुर्यां संनिरुद्धः पश्चान्मुक्तश्च यथा कपिर्गृहीतो मुच्यते तद्वत् अनेन रावणादप्यतिशयितवीर्यवत्त्वमुक्तम् ॥ २२ ॥

इदानीं तत्कृतमपराधं दर्शयन्नाह—स एकदेत्यादिना । सोऽर्जुन कदाचिद्विपिने सुचिरं मृगयां विचरन् कुर्वन् यदृच्छया जमदग्नेराश्रमस्थानमुपागमत् ॥ २३ ॥

तस्मा इति । तस्मै आगताय नरदेवायार्जुनाय सैन्यामात्यवाहनसहिताय स मुनिर्जमदग्निस्तपोधनो हविष्मत्या कामधेन्वा अर्हणमातिथ्यमाहरच्चक्रे ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दत्तं दत्तात्रेयं परिकर्मभिः परिचर्याभिराराध्य ॥ १७ ॥

'अरातिषु दुर्धर्षत्वं वरम् अजभीरौत्पत्तिकी श्रीर्यत्र तेज ओजादयो ऽणिमादयश्च गुणाः सन्ति अव्याहतगतिश्चचार इत्यन्वयः ॥१८॥१९॥

'रेवायाः नर्मदायाः अम्भसि रुरोध प्रवाहस्तम्भनं कृतवान् ॥ २० ॥

इत्थशिबिरं रावणस्य सेनाविमोचनस्थानं प्रतिस्रोतः सरिज्जलैः प्रतीपगमनं स्रोतः प्रवाहो येषां तानि तथा प्रतिस्रोतांसि च सरिज्जलानि प्रतिस्रोतस्सरिज्जलानि तैर्विप्लावितं प्रवाहवेगेन नीतं वीक्ष्येति शेषः । "स्रोतोऽम्बुनिर्गमद्वारे इन्द्रियेषु जलप्लुतौ" इति च ॥ २१ ॥

यथा केनचित्कपिर्मुक्तः पुनर्बद्धो भवति तथाऽयं दशमुखो येनार्जुनेन माहिष्मत्यां संनिरुद्धोऽभूदित्यन्वयः ॥ २२ ॥ २३ ॥

हविर्धान्या कामधेन्वा ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रावणो दिग्विजये माहिष्मत्याः समीपे देवपूजां कुर्वन् तेन प्रवाहस्याऽवरोधात् हेतोः प्रतिस्रोताः प्रतिकूलप्रवाहिनी सरिद्रेवा तस्या जलैः प्लावितं स्वशिबिरमालक्ष्य तस्य तद्वीर्यं न सेहे तेन सार्कं योद्धुमगमदित्यर्थः ॥ २१ ॥

ततश्च स रावणस्तेन पराजित्य गृहीतः ॥ २२ ॥

एवंवीर्योऽपि सोऽर्जुनः परशुरामेण हत इति वक्तुं तत्कृतमपराधं दर्शयति, स इति ॥ २३ ॥

हविष्मत्या कामधेन्वा ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुर्धर्षणार्जुनेन कृतमपराधं वक्तुं तस्य दर्पमूलमाह—हैहयानामित्यादिना । परिकर्मभिः परिचर्यादिभिः ॥ १७ ॥ १८ ॥

यत्राणिमादयो गुणाः सर्वैश्वर्यं च लेभे ॥ १९ ॥

रेवाम्भसि नर्मदाजले ॥ २० ॥

तदा दिग्विजये प्रवृत्तो वीरमानी दशाननस्तत्रागतः शिबिरस्थः देवपूजनपरः प्रतिस्रोतःसरिज्जलैः प्रतिलोमस्रोतसः तस्याः सरितो जलैः स्वशिबिरं विप्लावितं वीक्ष्येति शेषः । तस्यार्जुनस्य तादृशं वीर्यं नामृष्यत न सेहे ॥ २१ ॥

तदैव कृतकिल्बिषः क्रीडायां युद्धारम्भेन कृतविघ्नो दशाननो येनार्जुनेन लीलयैव कपिवदवज्ञया गृहीतः संनिरुद्धो मुक्तश्च ॥ २२ ॥

तं महत्कृतमपराधमाह—स इत्यादिना ॥ २३ ॥

अर्हणमातिथ्यादिकम् हविष्मत्या होमधेन्वा आहरत् सम्पादितवान् ॥ २४ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–हैहय वंशियों का अधिपति क्षत्रियों में श्रेष्ठ अर्जुन नाम से प्रसिद्ध रहा, उसने श्रीनारायण के अंश भगवान् दत्तात्रेयजी को परिचर्याओं से प्रसन्न किये ॥ १७ ॥

और प्रसन्न कर दश सैकड़ा ( एक सहस्र ) बाहुओं को प्राप्त हुआ, और शत्रुओं में दुर्धर्षता को तथा अव्याहत(प्रतिघात शून्य) इन्द्रियें, ओज, तेज, वीर्य, यश, और बलको भी प्राप्त हुआ ॥ १८ ॥

स वीरस्तत्र तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ।
तन्नाद्रियताऽग्निहोत्र्यां साभिलाषः सहैहयः ॥ २५ ॥
हविर्धानीमृषेर्दर्पान्नरान् हर्तुमचोदयत् ।
ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥
अथ राजनि निर्याते राम आश्रम आगतः ।
श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाऽहिरिवाऽऽहतः ॥ २७ ॥
(१)घोरमादाय परशुं सतूणं चर्म कार्मुकम् ।
अन्वधावत दुर्द्धर्षो मृगेन्द्र इव यूथपम् ॥ २८ ॥
तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ।
ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥
अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ।
अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥
यतो यतोऽसौ प्रहरत्परश्वधो मनोऽनिलौजाः परचक्रसूदनः ।
ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥
दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ।
विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा ॥ ३२ ॥

भाषा टीका ।

और जिसमें योगेश्वरत्व ऐश्वर्य और अणिमादिक गुण रहे, अनिषिद्ध गमन वाला लोकों में पवन के सदृश विचरता रहा ॥ १९ ॥

बहुत सी अति उत्तम, स्त्रियों के सहित नर्मदा के जल में मदोत्कट होकर क्रीड़ा करता रहा, वैजयंती माला को धारण किये हुए अपनी भुजाओं से नर्मदा को रोकता भया ॥ २० ॥

( इतने में ऊपर की तरफ कहीं रावण नर्मदा के तट पर अपना तंबू लगाकर कुछ महादेव की पूजा पत्री करता रहा जब नर्मदा का जल सहस्र बाहु के बाहुओं से रुककर ऊपर को बढ़ा तब ) स्रोत के सन्मुख चलते हुए नर्मदा के जलसे रावण का शिविर और सब सामग्री डूबने लगी तब वीरमानी दशानन उस के उस वीर्य को नहीं सहता हुआ ॥ २१ ॥

और उसके समीप जाकर उसके कुछ पराभव करने में जब प्रवृत्त हुआ ) तब स्त्रियों के समक्ष कृतापराध उस रावण को अर्जुन ने पकड़ लिया और माहिष्मती अपनी पुरी में कारागार में बंदरके भाई बँधकर दिया फिर कभी कपी के तरह छोड़ भी दिया ॥ २२ ॥

वह राजा सहस्रार्जुन एक समय विपिन में विचरता हुआ वनही में जमदग्नी के आश्रम में प्रवेश करते हुए ॥ २३ ॥

उस माहिष्मती के नरदेव के लिये तपोधन मुनि ने पूजा भेट दीनी और सेना मंत्री वाहनों सहित राजा का निमंत्रण किया और यथेष्ट भोजनादि सत्कार किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्दर्हणां नाद्रियत तस्मिन्नातुष्यत् यतोऽग्निहोत्र्यां होमधेनौ साभिलाषः सहैहयो हैहयैः सह वर्त्तमानः ॥ २५ ॥

दर्पाद्धेतोः ऋषेर्हविर्धानीमग्निहोत्रधेनुं हर्तुं नरानचोदयत् प्रेरितवान् ॥ २६ ॥

तद्दौरात्म्यं हविष्मत्या हरणं क्रोधयुक्तोऽहिरिव चुक्रोध ॥ २७॥

सतूणं कार्मुकं चर्म चादाय ॥ २८ ॥

ऐणेयं चर्म कृष्णाजिनमम्बरं यस्य ॥ २९—३० ॥

प्रहरन् परश्वधो यस्य मनश्चानिलश्च तयोरिवौजो वीर्यं यस्य परेषां चक्रं सैन्यं सूदयतीति तथा छिन्ना भुजा ऊरवः कन्धराश्च येषाम् हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥

विवृक्णाश्चर्मादयो यस्य ॥ ३२ ॥

(१) परशुं योजयामास इति विजय० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । तदा सोऽर्जुन आत्मन ऐश्वर्यादत्यतिशायित-मद्भुतं वीर्यं सामर्थ्यं दृष्ट्वा तदर्हणां नाद्रियत नादृतवान् किन्तु स हैहयोऽर्जुनः अग्निहोत्र्यां होमधेनौ साभिलाषो भटान् दृष्ट्वा रूपेर्हविर्धानीं धेनुं हर्तुमभ्यचूचुदत ते चोदिता नराः सवत्सां क्रन्दतीं क्रोशन्तीं हविर्धानीं बलात्प्रसह्य माहिष्मतीं पुरीं निन्युः ॥ २५ ॥ २६ ॥

अथेति । अथ राजन्यर्जुने निर्याते निर्गते सति पूर्वं क्वचिद्गतो रामः पितुराश्रममागतः तस्यार्जुनस्य तद्दौरात्म्यं श्रुत्वा आहत-स्ताडितः अहिः सर्प इव चुक्रोध क्रुद्धो बभूव ॥ २७ ॥

घोरमिति । ततो घोरं भीषणां परशुं सतूणं कार्मुकं चर्म कवचं चादाय मृगेन्द्रः सिंहो यूथपं गजं प्रतीव दुराधर्षो ऽन्वधावत् अर्जुनं पृष्ठतोऽनुसृत्याधावत् ॥ २८ ॥

तमिति । ततस्तमापतन्तं भृगुवर्यं रामं पुरीं विशन्नर्जुनो ददर्श, कथम्भूतम् ? ओजसा उपलक्षितमितिशेषः । ओजसा आपतन्त-मिति वा बाणपरश्वधौ बाणपरशू आयुधे यस्य तम् ऐणेयं चर्म कृष्णाजिनमम्बरं यस्य तम् अर्करश्मिवत् धाम तेजो यासां ताभि-र्जटाभिर्युतम् ॥ २९ ॥

अचोदयदिति । ततोऽर्जुनः हस्त्यादिभिः गदादिभिश्चातिभीषणाः सप्तदशाक्षौहिणीः सेनाः अचूचुदत ऋष्टिशतघ्निशक्तयः आयुध-विशेषाः ताश्चाक्षौहिणीर्भगवान् रामो भार्गव एकोऽसहाय एव असू-दयत् जघान हस्तिनो गजाः पत्तयः पदातयः रथानामेकविंशति-सहस्राणि अष्टौ शतानि सप्ततिश्चैका एवं गजानामपि नराणां तु शतसहस्राणि नव सहस्राणि च पञ्चाशदधिकानि त्रीणि शतानि च अश्वानां तु सहस्राणि षट् षष्टिःषट्चेति सङ्ख्ययैका ऽक्षौहिणी ज्ञेया तथाचोक्तं महाभारते आदिपर्वणि द्वितीयेऽध्याये-

"एको रथो गजश्चैकः नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैःपत्तिरित्यभिधीयते ॥
पत्तिं तु त्रिगुणामेतां विदुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥
चमूस्तु पृतनास्तिस्रश्चमूस्तिस्रस्त्वनीकिनी ।
अनीकिनीं दशगुणामाहुरक्षौहिणीं बुधाः ॥
अक्षौहिण्यास्तु संख्याता रथानां द्विजसत्तमाः ।
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥
शतान्युपरि चाष्टौ च तथाभूयश्च सप्ततिः ।
गजानां तु परीमाणं तावदेवात्र निर्दिशेत् ॥
ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥
पञ्चषष्टिसहस्राणि तथाऽश्वानां शतानि च ।
दशोत्तराणि षट्चाहुर्यथावदभिसंख्यया ॥
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ।

इति ॥ ३० ॥

यतो मत इति । प्रहरन् परश्वधो यस्य मनवद्वेग ओजस्वेओ यस्यासौ रामः परेषां चक्रं सैन्यमण्डलं सूदयतीति तथा-भूतो यत्र यतो यत्र यत्र सैन्यैः विचक्रमेति शेषः । ततस्ततस्तत्र तत्र छिन्ना भुजा ऊरवः कन्धराश्च येषां हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥

ततो रामस्य कुठारेण सायकैश्च विवृक्णा छिन्ना चर्मध्वजो यस्य तत्स्वसैन्यं रुधिरौघेण कर्दमो यस्मिन् तस्मिन् रणा-जिरे मृधाङ्गणे निपातितं दृष्ट्वा हैहयो ऽर्जुनो रुषा आपतत् तत्र विग्रहो देहः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मनः स्वस्य ऐश्वर्यमतिशायिनं प्रतीत्य वर्तमानं तदैश्वर्यं नाद्रियमाणादरं कुर्वन् अग्निहोत्रीं धेनुं प्रति साभिलाषः इच्छां कुर्वन् ॥ २५ ॥

हविर्धानीं धेनुं नरान् पुरुषान् हर्तुं नेतुम् प्रयोजयामियुक्त-वान् ॥ २६ ॥ २७ ॥

योजयामास उत्तेजितं कृतवान् कार्मुकं गृहीत्वेति शेषः । रथे योजयामासेति वा ॥ २८ ॥

ऐणेयं चर्म कृष्णाजिनं तदेवाम्बरं यस्य स तथा तम् आत्मनः स्वस्य धाम तेजो यासां ताः तथा ताभिर्जटाभिर्युक्तं तं पुरीमाप-तन्तम् ॥ २९ ॥

अर्जुनो या अक्षौहिणीरचोदयत्तामस्ता असूदयदित्यर्थः ॥ ३० ॥

मनोवदनिलवदोजो वेगो यस्य स तथा मनोवेग अनिलवद्बलस्य इति वा "ओजोबलस्य वलयोः" इति यादवः ॥ ३१ ॥

विग्रहो देहः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत् अर्हणाभावनमैश्वर्यं दृष्ट्वा तत् अर्हणां नाद्रियत यतो-ऽग्निहोत्र्यां कामधेनौ ॥ २५ ॥

हविर्धानीं कामधेनुं हर्तुम् ॥ २६—२८ ॥

पुरीं प्रविशन्नेवार्जुनो ददर्श ॥ २९ ॥

हस्त्यादिभिर्गदादिभिश्च भीषणा अक्षौहिणीरचोदयत् प्रेष-यामास ॥ ३० ॥

प्रहरन् परश्वधो यस्य सः मनोऽनिलयोरिवौजो वेगो यस्य सः प्रथमं सैन्यस्याऽतिबाहुल्ये दृष्टे मनस इवात्मनो वेगः कृतः तस्मिन्नल्पप्राये सति किञ्चिद्भ्रमणार्थमनिलस्येवेत्यर्थः । तत्र तत्र वीरा निपेतुः ॥ ३१ ॥

हैहयोऽर्जुनः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सहैहयः हैहयैः सहवर्त्तमानः सोऽर्जुनः आत्मनीयातिशा-यिनं तद्वीर्यं दृष्ट्वा तदर्हणां नाद्रियत नादृतवान् यतो अग्नि-होत्र्यां होमधेनौ साभिलाषः ॥ २५ ॥

अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु बाणान्युगपत्स सन्दधे ।
रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम् ॥ ३३ ॥
पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ।
भुजान् कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥
कृत्तबाहोः शिरस्तस्य गिरेः शृङ्गमिवाहरत् ।
हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥
अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ।
समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥
स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ।
वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हविर्धानीमग्निहोत्रधेनुम् ॥ २६—२७ ॥

सतूणं कार्मुकं धनुः चर्म ऐणेयं चादाय ॥ २८ ॥

पुरीं विशन्नर्जुनः ऐणेयं चर्म कृष्णाजिनम् अम्बरं यस्य तम् अर्कस्येव धाम द्युतिर्यासां ताभिर्जटाभिर्युतं भृगुवर्यं ददर्श ॥२९॥३०॥

मनोऽनिलयोरिवौजो वीर्यं यस्य परबलं शत्रुसैन्यं सूदयतीति तथा एवंभूतोऽसौ परशुरामः यतो यतो यत्र यत्र प्रहरत्परश्वधो निक्षिप्तपरश्वधो जातः ततस्ततः छिन्ना भुजा ऊरवः कन्धराश्च येषां हताः सूता वाहनानि च येषां ते शत्रवो निपेतुः ॥ ३१ ॥

विवृकणाच्छिन्नाश्चमांदयो यस्य तथाभूतं सैन्यं दृष्ट्वा हैहयोऽर्जुनो रणाजिरे आपतत् ॥ ३२ ॥

---

भाषा टीका ।

तब तौ उस वीर राजा हैहय ने इस प्रकार ऋषि का वैभव देखा फिर-अपने ऐश्वर्य को भी उल्लंघन करने वाला ऋषि का ऐश्वर्य है ऐसा विचार कर ऋषि के सत्कार का तौ आदर न किया पर अग्नि होत्र की साधन रूप ऋषि की धेनु में अभिलाषा करता हुआ ॥ २५ ॥

और दर्प से ऋषि की हविर्धानी ( धेनु ) को हरण के लिये मनुष्यों को आज्ञा देता हुआ, तब राजा के किंकर लोग भी बछरा सहित उस धेनु को बलात्कार ( जोरी ) से माहिष्मती-पुरी को लेचले ॥ २६ ॥

राजा के गये पीछे परशुरामजी. आश्रम में आये और उस राजा के दुरात्मापने को सुनकर ताडित सर्प के नाईं क्रोध करते हुए ॥ २७ ॥

और घोर परशु को हाथ में लेकर तथा तूण ( भाते ) सहित धनुष, और चर्म ( ढाल ) को लेकर दुर्धर्ष मृगेन्द्र हाथियों के यूथ पति पर जैसे दौडे तिस प्रकार राजा के पीछे दौडते हुए ॥ २८ ॥

राजा ने भी पुरी के प्रवेश के समय पर धनुषबाण को धारण किये परशु हाथ में लिये मृगचर्म का वस्त्र लपेटे तथा सूर्य तेज और जटाओं से देदीप्यमान, और अपने ऊपर दौडकर आने वाले भृगुवर्य ( परशुराम ) को देखा ॥ २९ ॥

तब तौ राजा ने, गदा, असि, बाण, ऋष्टि, शतघ्नि, शक्ति, इत्यादिक आयुधों के सहित अत्यंत भयानक गज रथ तुरग पदाति इस प्रकार की चतुरंगणी सेना सप्तदश (१७) अक्षौहिणी परशुरामजी पर भेजी। परंच भगवान् राम ने उस सेना को एकले ने ही समाप्त करदी ॥ ३० ॥

जहां २ पर शत्रुओं के सेना के नाश करने वाले मन पवन सदृश वेग वाले परशुरामजी अपने परशु का प्रहार करते जाते तहां २ सूत वाहनों सहित बडे २ वीरों के भुजा ऊरू और कंधरा कट कट कर पडते जाते ॥ ३१ ॥

तब राजा अपनी सेना को, राम के कुठार और बाणों से कटे हुए हैं ढाल, ध्वजा, चाप, और विग्रह, जिसका ऐसी, और रणभूमि में रुधिर के प्रवाह की कीच में पड़ी हुई देख. कर संग्राम में आपही आकूदा ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चशतेषु धनुष्षु सोऽर्जुनो रामाय सन्दधे एकमेव धनुर्यस्य सः पाठान्तरं एक एव धन्वः सन्धानं येषां तैरिषुभिः तानि धनूंषि समं सह तत्क्षणमेवाच्छिनत् ॥ ३३ ॥

**राम राम ! महाबाहो ! भवान् पापमकारषीत् ।
अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मृधे साधनभूतानचलानङ्घ्रिपांश्चोत्क्षिप्याभिधावतस्तस्य भुजांश्चिच्छेद अहेः फणा इवेत्यर्थः ॥ ३४-३५ ॥

समर्पयत् समार्पयत् ॥ ३६-३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । अथ पञ्चशतेषु धनुष्षु बाहुभिर्बाणान् युगपत् सोऽर्जुनो रामाय सन्दधे अस्त्रभृतामग्रणीः राम एकधन्वी तान् बाणान् इषुभिः सममेकदा समच्छिनत् सञ्चिच्छेद ॥ ३३ ॥

पुनरिति । पुनः स्वहस्तैरचलानङ्घ्रिपांश्चोत्क्षिप्य युधि संग्रामे वेगादभिधावतोऽर्जुनस्य भुजान् कठोरनेमिना कुठारेण रामः प्रहसन्निव प्रसभं बलाच्चिच्छेद ॥ ३४ ॥

कृत्तेति । कृत्ताः छिन्ना बाहवो यस्य तस्यार्जुनस्य शिरः गिरेः सकाशात् शृङ्गमिव जहार एवं पितर्यर्जुने हते सति तस्यार्जुनस्य पुत्रा अयुतसङ्ख्याकाः भयाद्विद्रुताः अग्निहोत्रीं होमधेनुं सवत्साम् उपाहृत्य समीपमानीय रामाय समर्पयेत्यर्थः । दुद्रुवुः पलायाञ्चक्रिरे ततो राम आश्रममुपेत्य परिक्लिष्टां धेनुं पित्रे जमदग्नये समर्पयत् ॥ ३५—३६ ॥

तस्मिन् कृतं कर्म पित्रे भ्रातृभ्यश्च शुश्राव वर्णयामास तद्रामोपवर्णितं कर्म श्रुत्वा जमदग्निरब्रवीत् ॥ ३७ ॥

तदेवाह—रामरामेति यावत्समाप्ति । हे राम, राम, महाबाहो, ! भवान् पापं कृतवान्, किन्तत् ? यत्सर्वदेवमयं नरदेवमर्जुनं वृथा हतवानसीति ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथागत्यार्जुनः पञ्चशतेषु धनुष्षु बाहुभिः बाणान्युगपदेकप्रयत्नेन सन्दधे । अस्त्रभृतां सम्यगग्रणी रामः समं युगपदेकस्मिन् धनुषि वर्तमानैरिषुभिः सन्धितशरैस्तान् पञ्चशतधनूंषि अच्छिनदित्यन्वयः ॥ ३३ ॥

पुनः रामः स्वहस्तैरचलान् गिरीन् अङ्घ्रिपान् वृक्षान् मृधे उत्क्षिप्य प्रहृत्य युधि वेगादभिधावतोऽर्जुनस्य भुजान् कठोरनेमिना शितधारेण चिच्छेदेत्यन्वयः ॥ ३४॥ ३५ ॥

उपावर्त्य निवर्त्य इतस्ततः आकर्षणादिना परिक्लिष्टां क्लेशोपेताम् ॥ ३६-३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रामाय रामं हन्तुं रामस्तु तानि धनूंषि समं बाणैः सहितान्येव अच्छिनत् ॥ ३३ ॥

अचलान् पर्वतान् अभिधावतस्तस्य अहेः फणानिवेत्यर्थः ॥ ३४—३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोऽर्जुनो बाणान् युगपत् रामाय पञ्चशतेषु धनुष्षु सन्दधे रामः एकधन्वा एकमेव धनुर्यस्य सः इषुभिः समं तत्क्षणमेव तान् अच्छिनत् ॥ ३३ ॥

अहेः फणा इवेत्यर्थः ॥ ३४—३८ ॥

---

### भाषा टीका ।

तत्पश्चात् सहस्रार्जुनने राम के लिये पांचसौ धनुषोंके विषे हजार बाहुओं से एक बार पांचसौ बाणों का सन्धान किया, परन्तु अस्त्र धारियों में श्रेष्ठ और अग्रणी ऐसे राम ( परशुराम ) जीने एक ही धनुष से मारे बाणों के अतिलाघव से एक ही बार अर्जुन पांच सौ धनुष काटकर गिरा दिये ॥ ३३ ॥

फिर अपने हाथों से अचल बड़े२ वृक्षों को उखाड़कर वेगसे दौड़ने वाले सहस्रार्जुन के ऊपर फेंकते हुए और युद्ध के विषे रामने सहस्रार्जुन की भुजाओं को कठोर धार वाले कुठार से बरजोरी काटते हुए जैसे सर्प के फणोंको काटते होवें ॥ ३४ ॥

हजारों हाथों के कटने पर उसके माथे को पर्वतकी शिखरके नाईं गिरादिया, पिता के मरनेपर उसके दश हजार पुत्र मारे भय के भाग गये ॥ ३५ ॥

पराये वीर को मारने वाले परशुराम जी बछड़ा सहित अग्निहोत्रकी साधन भूत धेनुको लौटा लाये और आश्रम में आकर राजा के लेजाने से दुःखपाने वाली धेनुको पिता के लिये समर्पण करते हुए ॥ ३६ ॥

और परशुराम जी ने माहिष्मती पुरी में आकर जो अपना पराक्रम किया सो भी पिता और भ्राताओं से कहते हुए, तिस को सुनकर परशुरामजी के पिता जमदग्नि कहने लगे ॥ ३७ ॥

जमदग्नि बोले कि—हे राम ! हे राम ! हे महाबाहो ! तुमने बड़ा पाप किया, क्योंकि ? तुमने सब देवमय नरदेव राजा को वृथा मारडाला ॥ ३८ ॥

---

वयं हि ब्राह्मणास्तात ! क्षमयाऽर्हणतां गताः ।
यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् ॥ ३९ ॥
क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ।
क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥
राज्ञो मूर्द्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः ।
तीर्थसंसेवया चांहो जह्यङ्गाऽच्युतचेतनः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्हणतां पूज्यताम् ॥ ३९ ॥
सौरी सूर्यस्य प्रभेव ॥ ४० ॥
तीर्थसंसेवया चकाराद्यमनियमैश्च अच्युते चेतना चित्तं यस्य सः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कृतागसो हननं न पापमित्यत्राह–वयमिति । वयं ब्राह्मणा हे "घातुं न घातुको विप्रः" इत्युक्तविधाहीति भावः । क्षमया हेतुभूतयाऽर्हणतां पूज्यतां गताः प्राप्ताः, क्षमां प्रस्तौति–ययेति । लोकगुरुर्देवो ब्रह्मा यया क्षमया पारमेष्ठ्यं परमेष्ठियोग्यं पदं स्थानम् अगात् प्राप्तवान् ॥ ३९ ॥
क्षमयेति । क्षमयैव ब्राह्मी लक्ष्मीः ब्रह्मकुलसम्बन्धिनी शमदमादिसंपत् यथा सौरी सूर्यप्रभा तथा रोचते प्रकाशते. भगवान् हरिरीश्वरोऽपि क्षमिणां क्षमावतामेवाऽऽशु तुष्यते प्रसन्नो भवतीति भावः ॥ ४० ॥
राज्ञ इति । किञ्च मूर्द्धाभिषिक्तस्य सार्वभौमस्येत्यर्थः । तस्य राज्ञो वधो ब्रह्मवधाद्विप्रवधादपि गुरुर्नितरां पापरूपः अतस्त्वं मुच्यसे भगवति न्यस्ता चेतना ज्ञानं यस्य तथाभूतस्तीर्थानां गङ्गादीनां संसेवया अंहस्तत्पापं जहि अपाकुरु ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा सौरी सूर्यसम्बन्धिनी प्रभा रोचते तथा ब्राह्मी ब्राह्मणसम्बन्धिनी लक्ष्मीः क्षमा प्रकाशते ॥ ४० ॥
मूर्धाभिषिक्तस्य चक्रवर्तिनः ब्रह्मवधात् ब्राह्मणहननादच्युते श्रीनारायणे बुद्धिर्यस्य स तथा ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥
( विजयध्वजरीत्या त्रयोदशः । )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तीसारार्थदर्शिनी ।

अर्हणतां पूज्यत्वम् ॥ ३९ ॥
ब्राह्मी ब्राह्मणसम्बन्धिनी लक्ष्मीः शोभा क्षमयैव रोचते द्योतते सौरी सूर्यस्य प्रभेव ॥ ४० ॥
चकाराद्यमनियमादिभिश्च श्लेषेण न च्युता चेतना चिच्छक्तिर्यस्य तथाभूत ईश्वरोऽपि लोकसंग्रहार्थमित्यर्थः ॥ ४१ ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमेऽयं पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अर्हणतां पूज्यतां गताः प्राप्ताः लोकगुरुर्ब्रह्मा पदं स्थानम् ॥ ३९ ॥
ब्राह्मी ब्रह्मविद्यारूपा लक्ष्मीः श्रीः सौरी सूर्यस्य प्रभेव रोचते प्रकाशते ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मवधादपि गुरुर्गरीयान् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशोऽध्यायार्थप्रकाशः ॥ १५ ॥

———

भाषा टीका

हे तात ! हम ब्राह्मणलोग तो क्षमा से ही पूज्यता को प्राप्त हुए हैं जिस क्षमा से लोकगुरु देव ब्रह्मा परमेष्ठी पद को पहुचे हैं ॥ ३९ ॥

क्षमासे ब्राह्मणों की लक्ष्मी दीप्ति को प्राप्त होती है, जैसे सूर्य की प्रभा । और क्षमावान् लोगों पर भगवान् श्रीहरि ईश्वर शीघ्र ही प्रसन्न होजाते हैं ॥ ४० ॥

मूर्धाभिषिक्त राजा का वध ब्राह्मण के वध से भी अधिक होता है, इसलिये हे राम ! तुम अच्युत में चित्त लगा कर तीर्थ सेवन करने से पापों को त्यागकरो ॥ ४१ ॥

इति श्रीमद्भागवत नवम स्कन्ध में पञ्चदश अध्याय की,
श्रीवृन्दावनस्थ पं भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १५ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥



## ॥ षोडशोऽध्यायः ॥

——:०:——

॥ श्रीशुक उवाच ॥

पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ! ।
संवत्सरं तीर्थयात्रां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥
कदाचिद्रेणुका याता गङ्गायां पद्ममालिनम् ।
गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥
विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ।
होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥ ३ ॥
कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ।
आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥ ४ ॥
व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ।
घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥
रामः सञ्चोदितः पित्रा भ्रातॄन्मात्रा सहाऽवधीत् ।
प्रभावज्ञो मुनेः सम्यक्समाधेस्तपसश्च सः ॥ ६ ॥
वरेण च्छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चाऽस्मृतिं वधे ॥ ७ ॥
उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा ।
पितुर्विद्वांस्तपो वीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशेऽर्जुनसुतैर्जमदग्नौ हते मुहुः ।
रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ ० ॥

॥ १ ॥ २ ॥

किञ्चिदीषच्चित्ररथे गन्धर्वराजे स्पृहा यस्याः सा किञ्चिच्च सस्मारेति वा ॥ ३ ॥

कलशं पुरोधायाऽग्रे निधाय ॥ ४ ॥

व्यभिचारं मानसं ज्ञात्वा ॥ ॥ ५ ॥

आज्ञातिलङ्घिनां भ्रातॄणां मातुश्च वधे सञ्चोदितः सन् मुनेर्यः समाधिस्तपश्च तयोः प्रभावज्ञः यदि न हन्यां तर्हि मामपि शप्तुं समर्थः यदि तु हन्यान्तर्हि मयि सन्तुष्टः संहतानपि जीवयितुं समर्थः इति जानन्नित्यर्थः ॥ ६ ॥ ७ ॥

नन्वतिनिन्दितं तत्कथं कृतवांस्तत्राह—पितुर्विद्वानिति पूर्वोक्त एवाभिप्रायः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं पित्रोपशिक्षित आदिष्टो रामस्तथेत्यङ्गीकृत्य हे कुरुनन्दन ! संवत्सरं तीर्थयात्रां चरित्वा कृत्वा पुनराश्रममाययौ ॥ १ ॥

कदाचिदिति । एवं स्थिते कदाचिद्रेणुका गङ्गां प्रति गता तस्यां कञ्चित् अप्सरोभिः सह क्रीडन्तं पद्ममालिनं चित्ररथाख्यं गन्धर्वराजमपश्यत ॥ २ ॥

उदकार्थे जलाहरणार्थं नदीं गङ्गां गता रेणुका क्रीडन्तं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विलोकयन्ती सती किञ्चिदीषत् चित्ररथे स्पृहा यस्यास्तथाभूता होमवेलां पत्युरग्निहोत्रहोमसमयं न सस्मार विस्मृतवती ॥ ३ ॥

कालात्यय इति । ततः कथञ्चित् तं कालातिक्रमं विलोक्य विदित्वा मुनेः पत्युः सकाशाद्‌दात्मनः शापमाशङ्कमाना रेणुका त्वरया आगत्य कलशं पुरः पत्युरग्रे निधाय कृताञ्जलिस्तस्थौ ॥४॥

व्यभिचारमिति । तत्र मुनिः जमदग्निः पत्न्याः व्यभिचारं ज्ञात्वा प्रकुपितः पुत्रानब्रवीत्, किमिति ? हे पुत्रकाः ! पापामेनां हनत मारयतेति. एवमुक्तास्ते पुत्रा न चक्रिरे मातृवधमिति शेषः ॥ ५ ॥

ततः पित्रा सञ्चोदितः आज्ञातिलङ्घिनां भ्रातृणां मातुश्च वधे परिचोदितः स रामः मात्रा सह भ्रातृनवधीत्, कथमेवमकार्यं कृतवानिति शङ्कां निराकुर्वन् रामं विशिनष्टि-मुनेः पितुर्यः समाधिस्तस्य तपसश्च सम्यक् प्रभावं जानातीति तथाभूतः यदि न हन्यां मामपि शप्तुं प्रभुः यदि वा हन्यां तर्हि पुनः प्रसादितः पिता मृतान् जीवयितुं समर्थ इति जानन्निति भावः ॥ ६ ॥

ततः प्रीतः सत्यवत्याः सुतो जमदग्निः वरेण छन्दयामास अध्ययनेन वसतीतिवद्वरेणेति हेत्वर्थे तृतीया वराय चोदयामासेत्यर्थः । राममिति शेषः । ततः पित्रा वराय चोदितः रामः हतानां पुनर्जीवनं तेषामात्मवधे अस्मृतिं विस्मृतिं च वव्रे ॥ ७ ॥

ततस्ते भ्रातरः समातृकाः निद्रान्त इवाञ्जसा कुशलिनो जीवन्त उत्तस्थुः, नन्वनुचितं कथं कृतवान् ? तत्राह-पितुरिति । पूर्वोक्त एवाभिप्रायः शब्दार्थः स्फुटः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चरित्वा कृत्वा ॥ १ ॥

याता गङ्गामिति शेषः ॥ २ ॥

किञ्चिच्चित्ररथस्पृहा, ईषच्चित्ररथे स्पृहावती जाता ॥ ३ ॥

कलशं भर्तुः पुरो निधाय तत्रैव कृताञ्जलिस्तस्थौ ॥ ४ ॥

हनत हताङ्कुरुत तां हतिम् ॥ ५ ॥

मुनेः समाधेः तपसश्च सम्यक् प्रभावज्ञः प्रतापमाहात्म्ययोः प्रभावः स्यादिति ॥ ६ ॥

छन्दयामास वशीचकार "वशाभिप्राययोः छन्दः" इति च वधेः अस्मृतिं वयं रामेण हता इति स्मृतिशून्यत्वलक्षणं वरं च ॥ ७ ॥

रामेण एते असुमदादयो जीवन्ति चेज्जीवन्तु नो चेन्म्रियन्तामिति मत्वा सुहृद्वधो नाकारि किन्तु असावीश्वरत्वेन लोपाभावं च प्रकटयितुमिति भावेनेत्याह-पितुरिति । "वीर्यं पराक्रमे रेतस्यश्वमाहात्म्ययोरपि" इत्यभिधानात्. पितुस्तपोमाहात्म्यं जानता कृतमिति भावः । साक्षान्नारायणावतारस्य निरवद्यस्य सकलगुणाकरस्य भार्गवरामस्य क्षत्रहत्यादिदोषमार्जनाय लौकिकेन मातृभ्रातृवधात् आज्ञाकारित्वेन प्रसङ्गात्, पितुर्वरदानुमित्यादिकं कथं घटत इतीयं शङ्का—

"आमदग्न्यो वरं वव्रे...तपःशक्तिरपि संयम ।
पितुर्माज्ञया सिद्धयर्थं लोके लोकेश्वरः प्रभुः" ॥

(१) इत्यादिवाक्येन परिहर्तव्या इति ज्ञातव्यम् ॥ ८ ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१ ॥

कदाचिदिति कार्तवीर्यवधात् पूर्वमित्यर्थः । रेणुकावधानन्तरं कोपे त्यक्ते च तस्य कामधेनुहरणमिति स्कान्दे प्रसिद्धः ॥ २ ॥

किञ्चित् काचित् कौतुकमय्येव न तु काममयी चित्ररथे स्पृहा यस्याः अत्र ब्रह्माण्डपुराणं द्रष्टव्यम् ॥ ३ ॥

अतः पतिपरिचर्याव्यत्यय एवात्र व्यभिचारो ज्ञेयः ॥ ४—१४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जमदग्निर्हतो यैस्तान् रामोऽर्जुनसुतानहन् ।
निःक्षत्रकृत् षोडशोऽत्र विश्वामित्रकथा ततः ॥
॥ १—२ ॥

किञ्चिदिति न सस्मारेत्यस्य विशेषणं होमवेलायाः किञ्चिन्मात्रं विस्मरणमभूदित्यर्थः । तत्र हेतुः चित्ररथे गन्धर्वराजस्य रथे दर्शनकौतुकार्थं स्पृहा यस्याः सा ॥ ३ ॥

शापविशङ्किता हन्त हन्त किञ्चिन्मात्रविस्मरणात एव मे होमवेलापीयतीव्यतीतेति भयविह्वला ॥ ४ ॥

होमवेलायाः प्रागेव जलमानेष्यामीति तस्या वचनस्य व्यभिचारं ज्ञात्वा अनित्यकर्मोच्छित्त्या च प्रकर्षेण कुपितः हे पुत्रकाः ! एतां घ्नतेत्युक्तास्ते पुत्रा न चक्रिरे तस्या हननमिति शेषः ॥ ५ ॥

आज्ञालंघिनां भ्रातृणां मातुश्च वधे नियुक्तोऽवधीत् नन्वेवमाज्ञापालनमपि जुगुप्सितं तत्राह-प्रभावज्ञः अस्य वधस्योदर्के एवं भविष्यतीति सर्वज्ञत्वेन जानन्नित्यर्थः ॥ ६ ॥

वरेणेति वरं वृणिष्वेत्युक्तवानित्यर्थः । वव्रे इति मृता इमे जीवन्तु मत्कर्तृकं वधं च न स्मरन्त्वित्यहं वृणे इत्युक्तवान् ॥ ७—८

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रामस्य तीर्थयात्रां पित्राज्ञानुवर्तित्वम् अर्जुनपुत्रैर्जमदग्निवधे कृते कुद्धेन श्रीपरशुरामेण त्रिःसप्तकृत्वः कृतं क्षत्रवधं च पित्रोपशिक्षित इति षोडशेन वर्णयति ॥ १ ॥ २ ॥

किञ्चित् चित्ररथे स्पृहा यस्याः अत एव तं विलोकयन्ती होमवेलां अग्निहोत्रसमयं न सस्मार ॥ ३ ॥

कलशं निधाय पुरो भर्तुरग्रे तस्थौ ॥ ४ ॥

व्यभिचारं स्पृहापूर्वकं परनिरीक्षणं योगबलेन ज्ञात्वा ॥ ५—१० ॥

---

( १ ) आपापमपि देवेशो पितरस्संनिवर्तयन् । अकृन्तोऽस्य महात्म्यं मोहिताहतस्व मायया ॥ मोहयन्मायया लोकं चक्रे चापचितिं वधे । पुण्यपापादिनिर्मातुः कृतः पापादिलङ्गतिः इति शेषतात्पर्यम् ।

येऽर्जुनस्य सुता राजन्! स्मरन्तः स्वपितुर्वधम् ।
रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥
एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ।
वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥
दृष्ट्वाऽग्न्यगार आसीनमावेशितधियं मुनिम् ।
भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥
याच्यमानाः कृपणया राममात्राऽतिदारुणाः ।
प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबन्धवः ॥ १२ ॥
रेणुका दुःखशोकार्त्ता निघ्नन्त्यात्मानमात्मना ।
रामरामेहि तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥
तदुपश्रुत्य दूरस्थो हा रामेत्यार्त्तवत्स्वनम् ।
त्वरयाऽऽश्रममासाद्य ददृशे पितरं हतम् ॥ १४ ॥
तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ।
हा तात! साधो! धर्मिष्ठ! त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥ १५ ॥
विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ।
प्रगृह्य परशुं रामः क्षत्रान्ताय मनोदधे ॥ १६ ॥

भाषा टीका ।

श्रीरुक्मिणीरमणमनिशं हृदि चिन्तयामि ॥

श्रीशुक उवाच

श्रीशुकदेवजी बोले, कि—हे कुरुनन्दन! पिता ने जब राम को इस प्रकार शिक्षा दीनी तब राम भी उसी प्रकार अंगीकार कर एक संवत्सर पर्यन्त तीर्थ यात्रा करके फिर आश्रम को आते हुए ॥ १ ॥

किसी समय जमदग्नि की पत्नी रेणुका गंगाजी में गई वहां पर कमलों की माला वाले गंधर्व राज को अप्सराओं के साथ क्रीडा करते हुए देखती हुई ॥ २ ॥

रेणुका तो जल लेने को नदी में गई रही पर अप्सरों के साथ क्रीडा करने वाले गंधर्वराज को देखने लगी, और होम की वेला को स्मरण न रहा और देखने से किंचित् चित्ररथ गंधर्वराज में स्पृहा भी होगई ॥ ३ ॥

फिर तो इतने में काल का बहुत अति क्रम देखकर मुनि के शाप से शंकित होकर शीघ्र आकर कलश को मुनि आगे में धरकर हाथ जोडकर खड़ी होगई ॥ ४ ॥

मुनि ने भी अपनी पत्नी का मानसिक व्यभिचार जान कर कुपित होकर अपने पुत्रों से बोले, कि-हे पुत्र हो! तुम लोग इस पापिनी तुमारी माता को मारडालो इतना सुनकर पुत्रों ने कुछ न किया ॥ ५ ॥

तब पिता ने परशुरामजी से कही, कि—बेटा! तुम भाइयों सहित माता को मारडालो बस पिता की आज्ञा सुनते मात्र पिता के तप और समाधि के प्रभाव को जानने वाले परशुरामजी ने परशा हाथ में लेकर तड़ाक २ उन सबों के माथे काट डाले ॥ ६ ॥

तब सत्यवती के पुत्र जमदग्नि महाराज ने प्रसन्न हो कर कहा, कि-पुत्र! वरमांगले ॥ तब परशुरामजी ने भी यैही वर मागा, कि—ये मरे हुए सब जी जावैं और इनकों "परशुराम ने हमको मारा" ऐसा स्मरण भी न होवै ॥ ७ ॥

तब तो वे सब ही निद्रा लेकर पीछे जैसे जाग पड़ें इस प्रकार सब उठ खड़े हुए ॥ यदि कहो कि परशुरामजी ने ऐसा अनुचित कर्म क्यों किया? तहां शुकदेवजी कहते हैं, कि—परशुरामजी ने पिता के तपोबल को जानकर सुहृदों का बध किया कुछ उनके मारने ही की बुद्धि से नहीं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वक्षत्रियवधे कारणं वक्तुमाह—येऽर्जुनस्य सुता इत्यादि ॥ ९ ॥ १० ॥

भगवत्यावेशिता धीर्येन तम् ॥ ११—१७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुःखादीनां वेगेन विमोहितः ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वक्षत्रियवधे कारणं वक्तुमाह—येऽर्जुनस्य सुता इत्यादिना । हे राजन् ! अर्जुनस्य ये सुता रामवीर्येण पराजितास्ते स्वपितुर्वधं रामस्य कृतं स्मरन्तः क्वचिदपि शर्म सुखं न लेभिरे ॥९॥

एकदेति । कदाचित् सभ्रातरि रामे स्वाश्रमाद्वनं गते सति वैरं सिसाधयिषवः प्रतिचिकीर्षवः लब्धच्छिद्राः लब्धावसरा उपागमन् अर्जुनसुता इत्यनुषङ्गः ॥ १० ॥

तथाश्रमे अग्न्यगारे अग्निहोत्रशालायामासीनं भगवत्यावेशितधियं समाहितमनस्कं मुनिं जमदग्निं दृष्ट्वा पाप एव निश्चयो येषां ते ऽर्जुनसुताः जघ्नुः हतवन्तः ॥ ११ ॥

याच्यमाना इति । कृपणाया राममात्रा रेणुकया याच्यमानाः एनं न मारयतेति शेषः अतिदारुणाः नितरां क्रूराः बलाच्छिर उत्कृत्य छित्वा ते क्षत्रबन्धवः निन्युः नीतवन्तः ॥ १२ ॥

रेणुकेति । तदा रेणुका दुःखशोकार्ता दुःखं मानसिकः क्लेशः शोको बाह्यस्ताभ्यामार्ता पीडिता आत्मना आत्मानं घ्नन्ती ताडयन्ती सती रामरामेत्येवमुच्चैरुच्चुक्रोश आजुहाव ॥ १३ ॥

हा रामेत्यार्तस्वरं दूरस्थाः सुताः श्रुत्वा त्वरया आश्रममासाद्य हतं पितरं ददृशुः ॥ १४ ॥

त इति । ते जमदग्निसुताः दुःखादीनां वेगेन विमोहिता बभूवुरिति शेषः तत्र दुःखं मानसिक उपतापः रोषः क्रोधः अमर्षो ऽक्षमा आर्तिर्दैन्यं शोको रोदनं ततो रामः हा तातेत्यादिरूपेण विलप्य पितुर्देहं भ्रातृषु निधाय पितुर्देहं रक्षतेति भ्रातृनादिश्येत्यर्थः । स्वयं परशुं प्रगृह्य क्षत्रान्ताय क्षत्रकुलनाशाय मनो दधे सङ्कल्पञ्चकार ॥ १५ ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लब्धच्छिद्राः लब्धावसराः ॥ १० ॥

निषण्णं हृत्य भगवत्येव निवेशितबुद्धिम् ॥ ११ ॥ १२ ॥

आत्मना यत्नेनात्मानं देहैकदेशमुरः "यत्नेऽर्केऽग्नौ मनो वाते" इति यादवः । आत्मशब्दः पूर्वार्धे ॥ १३ ॥

दूरस्थाः स्वभिन्नदेशङ्गताः ॥ १४ ॥ १५ ॥

क्षत्रान्तायाऽविशेषेण क्षत्रियकुलनाशाय ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते दुःखेत्यर्धकम । अत्र तद्दुःखेति पाठः स्वाम्यसम्मतः तच्छब्दस्य मोहितत्वेऽप्यनुपादानात् ते सुरामा जमदग्निपुत्रा इति सम्बन्धोक्तौ च ॥१५—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निरपराधायाः पतिव्रताशिरोमणेः रेणुकाया वधमादिश्यतो जमदग्नेरपि वधरूपं तदपराधफलन्दर्शयन्नाह—येऽर्जुनस्येति ॥ ९ ॥

स्वभर्तुः प्राणान् याच्यमाना: ॥ १०—१२ ॥

तत्तदा आर्त्तवत् ॥ १३ ॥

अन्यस्या आर्त्ताया इव तस्या मातुः स्वरं उपश्रुत्य ददृशे ददृशुं ते भ्रातरः विमूर्च्छिता बभूवुः ॥ १४—१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवति ध्येये आवेशिता धीर्येन तम् ॥ ११ ॥ १२ ॥

दुःखादीनां वेगेनोद्रेकेन विमोहितः ॥ १३—१६ ॥

---

भाषा टीका ।

हे राजन् ! जो अर्जुन के पुत्र लोग रहे वे सब अपने पिता के वध का स्मरण करते हुए भी राम के पराक्रम से पराभव को प्राप्त होकर कहीं भी सुख को प्राप्त नहीं होते भये ॥ ९ ॥

एक समय पर अपने भ्राताओं के सहित समिधा, कुश, फल आदिक लेने को राम तो वन में गये रहे । इतने में सहस्रार्जुन के पुत्र वैर साधने की इच्छा से आग्रत होकर आश्रम में आ पहुंचे ॥ १० ॥

और वहां पर अग्नि शाला में कुंड के समीप में विराजे हुए, भगवान् उत्तमश्लोक श्रीहरि में चित्त लगाये हुए जमदग्नि ऋषि को देखकर उन पाप के निश्चय वाले अर्जुन के पुत्रों ने ऋषी मारने का आरंभ किया ॥ ११ ॥

दीन विचारी राम की माता रेणुका बहुत याचनाभी करती पर क्षत्रियों में नीच पेसे वे अति दारुण दुष्ट, जमदग्नि ऋषि का माथा काटकर लेगये ॥ १२ ॥

रेणुका सती विचारी दुःख शोक से दीन आर्त्त होकर अपनी छाती कूटती हुई पुकारी, हे राम ! हे राम ! हे तात ! कहां गये जल्दी आओ इस प्रकार ऊंचे स्वर से चिल्लाने लगी ॥१३॥

परशुरामजी दूर से ही "हा राम" इस तरह का आर्त्त शब्द सुनकर बड़े शीघ्र आश्रम में आकर पिता को मरा हुआ देखते भये ॥ १४ ॥

पिता के मरण से भया जो दुःख रोष, अमर्ष, आर्त्ति, और शोक, तिनके वेग से अत्यंत मोहित होकर । हा तात ! हा साधो ! हे धर्मिष्ठ ! आप हमको छोडकर स्वर्ग चले गये ॥ १५ ॥

परशुरामजी इस प्रकार बहुत विलाप कर पिता के देह को भ्राताओं के समीप धर कर स्वयं आप हाथ में परशु लेकर क्षत्रियों के नाश का संकल्प करते हुए ॥ १६ ॥

गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ।
तेषां स शीर्षभी राजन् ! मध्ये चक्रे महागिरिम् ॥ १७ ॥
तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ।
हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
स्यमन्तपञ्चकं चक्रे शोणितोदान् (१)ह्रदान्नव ॥ १९ ॥
पितुः कायेन सन्धाय शिर आदाय बर्हिषि ।
सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥
ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ।
अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥
अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः ।
आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥
ततश्चावभृथस्नानविधूताशेषकिल्बिषः ।
सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥
स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ।
ऋषीणां मण्डले सोऽभूत्सप्तमो रामपूजितः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मघ्नैर्विहता श्रीर्यस्यास्ताम् हे राजन् ! स रामस्तेषां शीर्षभिर्माहिष्मत्या मध्ये महान्तं गिरिं चक्रे ॥ १७ ॥

तेषां रक्तेनाब्रह्मण्यानां भयावहां घोरां नदीं चक्रे, तथाऽपि सर्वक्षत्रियवधे किं कारणं ? तत्राह–हेतुं कृत्वेति सार्द्धेन । अमंगलकारिण्यन्यायवर्तिनि सति ॥ १८ ॥

त्रिःसप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतं ततो राम एतावत्कृत्वः क्षत्रमुत्सादितवानिति प्रसिद्धः ॥ १९—२३ ॥

संज्ञानं स्मृतिस्तदेव लक्षणं चिन्हं यस्य तं स्वदेहं लब्ध्वा स ऋषीणां मण्डले सप्तम ऋषिरभूत् ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गत्वेति । ततः स रामः ब्रह्मघ्नैर्विहता श्रीर्यस्यास्तां माहिष्मतीं गत्वा तस्याः पुर्याः मध्ये हैहयानां शिरोभिः महागिरिं चक्रे चकार ॥ १७ ॥

तद्रक्तेनेति । तेषां रक्तेन अब्रह्मण्यानां भयावहां घोरां नदीं च चक्रे, तथापि सर्वक्षत्रवधे किं कारणम्? तत्राह–हेतुं कृत्वेति सार्द्धेन । क्षत्रे अमङ्गलकारिणि अन्यायवर्तिनि सति पितृवधं हेतुं निमित्तं कृत्वा प्रभू रामः त्रिःसप्तकृत्वः एकविंशतिवारं पृथ्वीं निःक्षत्रियां क्षत्रबीजरहितां कृत्वा स्यमन्तपञ्चकाख्ये देशे शोणितोदकान् ह्रदान् पञ्चेतिशेषः चक्रे हे नृप ! अत्र शोणितोदान् ह्रदान् नवेतिपाठस्तु साम्प्रदायिकः ह्रदानवेति स्वपपाठः तद्देश स्यमन्तपञ्चकशब्दप्रवृत्तौ शोणितोदकह्रदपञ्चकसमीपवर्तित्वस्यैव निमित्तत्वात्. नवेति पाठे स्यमन्तनवकशब्दप्रयोगापत्तेः । तथा चोक्तं महाभारते आदिपर्वणि द्वितीयेऽध्याये–

"स्यमन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत्सर्वं यथान्यायं श्रोतुमिच्छामहे वयम् ।

इति पृष्टो मुनिः सूत आह–

त्रेताद्वापरयोः सन्ध्यौ रामः शस्त्रभृतां वरः ।
असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
स्यमन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्छितः ।
पितॄन् सन्तर्पयामास रुधिरेणेति नः श्रुतम् ॥
अथर्चीकादयोऽभ्येत्य पितरो ब्राह्मणर्षभम् ।
तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
स्यमन्तपञ्चकमिति तत्पुण्यं परिकीर्तितं ॥
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥" इति ।

(१) ह्रदान्नृप इति वी॰रा॰ ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्र तेषां समीपे यो देश इति समीपशब्देन समन्तशब्दार्थ उक्तः समन्तः समनन्तरः समीपदेशः परितो देश इतियावत् तेषां रुधिराम्भसामित्यनेन पञ्चकशब्दार्थः षष्ठीसमासश्च प्रदर्शितः समन्तशब्दस्य पूर्वनिपातस्तु आर्षः येन लिङ्गेनेत्यनेन तदेव तच्छब्दप्रवृत्तिनिमित्तमित्युक्तं अतो नृपत्येव पाठः साधुः अन्यथोदाहृतभारतविरोधापत्तेः । ननु, रुधिरोदकहृदपञ्चकनिर्माणानन्तरभाविनदेशस्य तन्नामधेयं,तत्कथं "समन्तपञ्चके पञ्च चकार रुधिरह्रदान्" इति भारतवचनं प्रकृतं श्रीभागवतवचनञ्चोपपद्यते इति चेन्न सुत्रघटिकादिसंज्ञावद्भाविसंज्ञाविज्ञानादुपपत्तेः त्रिस्सप्तकृत्वो रेणुकया दुःखावेशादुदरताडनं कृतं ततो रामास्तावत्कृत्वः क्षत्रमुत्सादितवानिति प्रसिद्धिमवेक्ष्य तत्र तत्र त्रिस्सप्तकृत्व इत्युच्यते ॥ १८ ॥ १९ ॥

पितुरिति । ततः पितुश्शिरः आदाय तद्बर्हिषि यज्ञे पितुः कायेन सह संयोज्य मखैः क्रतुभिः सर्वदेवमयं देवं परमात्मानमयजत ॥ २० ॥

तदाविति । ततः प्राचीं दिशं होत्रे दक्षिणां तु दिशं ब्रह्मणे प्रतीच्याख्यां प्रतीचीं दिशम् अध्वर्यवे उत्तरां दिशमुद्गात्रे अवान्तरदिशः आग्नेयादिदिशः अन्येभ्यः ऋत्विग्भ्यः मध्यमां दिशं काश्यपाय तत्राप्यार्यावर्तं विन्ध्यहिमवत्पर्यन्तमध्यमदेशं उपद्रष्ट्रे तत आर्यावर्तात्परं परितस्थं देशं विमर्शयतिशेषः सदस्येभ्यो ददौ ॥ २१ ॥ २२ ॥

तत इति । ततश्चावभृथस्नातः क्रतववसानिके अवभृथाख्ये कर्मणि स्नातः विधूतान्यशेषाणि किल्बिषाणि येन तथाभूतः विगताभ्रः सूर्य इव सरस्वत्याख्यायां ब्रह्मनद्यां रेजे ॥ २३ ॥

स जमदग्निस्तु संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं स्वदेहं लब्ध्वा रामेण पूजितः सप्तर्षीणां मण्डले सप्तमः ऋषिरभूत् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मध्रुग्भिर्ब्रह्महन्तृभिः विहता नष्टा श्रीर्यस्याः सा तथा तां शीर्षभिः तस्यां प्रविश्य मध्ये माहिष्मतीमध्ये ॥ १७ ॥

अब्रह्मण्यानां ब्राह्मणद्वेषिणां भयङ्करीं नदीं चक्र इति गतेनान्वयः । निमित्तमाह–हेतुमिति । अमङ्गलकारिणि सति ॥ १८ ॥

स्यमन्तपञ्चके कुरुक्षेत्रे शोणितान्येवोदकानि येषु ते तथा तान् ह्रदान् जलैरगाधप्रदेशान् ॥ १९ ॥

शिरः कायेन सन्धाय बर्हिषि यज्ञ आधाय दर्भबन्धनविशेषे वा सर्वदेवमयं सर्वदेवोत्तमम् ॥ २० ॥ २१ ॥

उपद्रष्ट्रे न्यूनातिरिक्तकर्मसाक्षिणे परम मर्यादाम् ॥ २२ ॥

विधूताशेषकिल्बिषत्वमौपचारिकं लोकशिक्षार्थत्वात् नाम्ना सरस्वत्यां ब्रह्मनद्यां वेदमय्यां नद्यां अभ्रः मेघच्छायानिर्मुक्तः अंशुमानादित्यः अनेन पदाध्याहारेणावभृथस्नानविधूताऽशेषकिल्बिषजन इति वा अवभृथस्नानेन विधूतमशेषं किल्बिषं यस्य स तथा अवभृथस्नानांविधूताऽशेषकिल्बिषो जनो यस्य स तथा अनेनावभृथस्नानेन जनस्याऽशेषतः किल्बिषं विधुतं भवतीति दर्शनाय रामेणाऽवभृथस्नानमकारीति सूचितं भवति ॥ २३ ॥

जमदग्निस्तु संज्ञानलक्षणं ज्योतिर्मयलक्षणं स्वयोग्यं देहमाकारविशेषं लब्ध्वा सप्तर्षीणां मण्डले सप्तमो ऋषिरिति शेषः अभूत् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गत्वेत्यर्थकम् । घोरां भयानकां स्वतः विशेषतस्त्वब्रह्मण्यानां भयावहामित्यर्थः ॥ १७—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ब्रह्मघ्नैर्हेतुभिः विहता श्रीर्यस्यास्तां स रामः महागिरिं नदीं च चक्रे ॥ १७ ॥

अमङ्गलकारिणि अन्यायवर्त्तिनि सति पितृवधमेव निमित्तीकृत्य त्रिस्सप्तकृत्व इति रेणुकायास्तावत्कृत्व एवोदरताडनादिति भावः ॥ १८—२२ ॥

अवभृथस्नानेन निवृत्तमशेषं किल्बिषं यस्मात् स इति सरस्वत्या एव निरघत्वं गङ्गाया इव जातमिति भावः ॥ २३ ॥

संज्ञानं स्मृतिस्तदेव लक्षणं यस्य तादृशं देहं लब्ध्वा ऋषीणां मण्डले—

"कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः" इति ॥

तत्र जमदग्निरेव सप्तम ऋषिरभूत् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मघ्नैर्विहता श्रीर्यस्यास्ताम् तेषां ब्रह्मघ्नानां मध्ये माहिष्मत्या इति शेषः ॥ १७ ॥

तद्रक्तेन नदीं च चक्रे पितृवधहेतुं कृत्वा क्षत्रेऽमङ्गलकारिणि सति त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रियां कृत्वा शोणितोदान् चक्रे इति सार्द्धद्वयान्वयः ॥ १८—२३ ॥

जमदग्निस्तु संज्ञानं स्मरणं भगवद्ध्यानं तल्लक्षणं स्वरूपं यस्य तं भगवद्ध्यानेन निष्पन्नं स्वदेहं लब्ध्वा सप्तर्षीणां मण्डले सप्तमऋषिरभूत् ॥ २४ ॥

---

भाषाटीका ।

तदनंतर ब्रह्मघातियों से नष्ट हुई शोभा जिसकी इस प्रकार की माहिष्मती पुरी को परशुरामजी गये, और हे राजन् ! और वहां जाकर अपने पिता के द्रोहियों के माथे काट काट कर बीच में एक बड़ा भारी पर्वत करते हुए ॥ १७ ॥

और अब्रह्मण्य लोगों को भय प्राप्त होने वाली, उन लोग के रुधिर से घोर नदी बहा दी । और अपने पिता के वध को केवल व्याज ( मीष ) मात्र कर अन्याय से वर्त्तने वाले क्षत्रियों के समूह को राम ने मार ॥ १८ ॥

जामदग्न्योऽपि भगवान्रामः कमललोचनः ।
आगामिन्यन्तरे राजन् ! वर्तयिष्यति वै बृहत् ॥ २५ ॥
आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ।
उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥ २६ ॥
एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ।
अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥ २७ ॥
गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥
विश्वामित्रस्य चैवासन्पुत्रा एकशतं नृप ! ।
मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥ २९ ॥
पुत्रङ्कृत्वा शुनश्शेपं देवरातं च भार्गवम् ।
आजीगर्त्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥
यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।
स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबन्धनात् ॥ ३१ ॥
यो रातो देवयजने देवैर्गाधिषु तापसः ।
देवरात इति ख्यातः शुनश्शेपः स भार्गवः ॥ ३२ ॥

भाषाटीका ।

बड़े समर्थ परशुरामजी ने इक्कीसवार पृथिवी को निःक्षत्रिय (बिना क्षत्रियों की) करके क्षत्रियों के रुधिर से गिनती में नौ हृद (कुंड) बनाये ॥ यहां ऐसी प्रसिद्धि है कि-जब २ राम की माता रेणुका को अत्यंत पति के वियोग का दुःख होता और जब २ वह अपनी छाती पीटने लग जाती, तब २ परशुरामजी से माता का दुःख नहीं सहा जाता, तब आप परशु उठाकर पृथिवी के क्षत्रियों को काट जाया करते इस प्रकार इक्कीसवार भया ॥ १९ ॥

क्षत्रियों के वध के अनंतर परशुरामजी पिता के शिरको काय (धड़) के साथ संयुक्त कर सर्वदेवमय परमात्मा को अग्नि के विषै यज्ञों से यजन करते हुए ॥ २० ॥

उस यज्ञ में परशुरामजी ने प्राची दिशा होता को दीनी दक्षिण दिशा ब्रह्मा को दीनी, अध्वर्यु को पश्चिम दिशा, और उद्गाता को उत्तर दिशा दीनी ॥ २१ ॥

और ऋत्विज को अवान्तर दिशायें दीनी, कश्यपजी को मध्य दिशायें दीनी, उपद्रष्टा को आर्यावर्त दिया, और उस से आगे की भूमि सभासद ब्राह्मणों को दीनी ॥ २२ ॥

तिस पीछे ब्रह्म नदी सरस्वती में यज्ञान्त स्नान से अशेष कल्मषों को दूरकर बिना मेघ के सूर्य के नाईं परशुराम जी बड़ी दीप्ति को प्राप्त होते भये ॥ २३ ॥

यज्ञ के अन्त में परशुरामजी के पिता जमदग्नि ऋषि स्मृति चिन्ह वाले अपने देह को प्राप्त होकर परशुरामजी से पूजित होकर सप्त ऋषियों के मण्डल में एक ये भी सप्तम ऋषि होते भये ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

बृहद्ब्रह्म वेदम वेदप्रवर्तकेषु सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥

भुवो भारमहन् भारभेवाऽऽह—नृपानिति ॥ २७ ॥

तदेवं प्रसक्तानुप्रसक्तं समाप्य प्रकृतमाह—गाधेरिति । महातेजा विश्वामित्रः ॥ २८ ॥

ते सर्वे विक्रमभधायन्यायेन "प्राग्भूत उपक्रमानि" इति मधुच्छन्दस एवोच्यन्ते तथा च श्रुतिः "तस्य ह विश्वामित्रस्यैकः पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांस इत्यादिः तत्र च विश्वामित्रपुत्रेषु भार्गवस्याऽऽजीगर्तस्य देवरातस्य ज्येष्ठत्वमवगम्यते तथा आश्वलायनबोधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तम प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेदो न तु वंशान्तरम् तथा च स्मृतिः—

### श्रीधरस्वामिकृतभावार्थदीपिका ।

"एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात्" ॥

इति ॥ २९ ॥

तत्कुतो भृगुवंशसंभवस्य देवरातस्य कौशिकप्रवरत्वमित्याशंक्य तदुपपादयन्नाह-पुत्रं कृत्वेत्यादि यावत्समाप्ति । पूर्वमजीगर्तसुतत्वे मध्यमत्वेन पितृभ्यां ममतां विहाय विक्रीतत्वात्तस्य कृपया सुतानाह-ज्येष्ठ एव प्रकल्प्यतामिति ॥ ३० ॥

एतदेव स्पष्टयितुं विशिनष्टि-य इति द्वाभ्याम् । मुमुचे अमुच्यत ॥ ३१ ॥

भार्गवोऽपि गाधिषु गाधिवंशजेषु देवरात इति ख्यातः ॥३२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जमदग्न्येति । भगवान् जामदग्न्यः कमललोचनो रामोऽपि हे राजन् ! आगामिन्यन्तरे बृहद्वेदं प्रवर्तयिष्यति सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥ २५ ॥

अधुना तु महेन्द्राख्ये अद्रौ पर्वते आस्ते, कथम्भूतः ? न्यस्तः त्यक्तः दण्डः क्षत्रवधादिरूपो येन प्रशान्ता धीर्यस्य सिद्धादिभिरुपगीयमानं चरितं यस्य तथाभूतः ॥ २६ ॥

रामचरित्रं निगमयति-एवमिति । हे नृप ! इत्थं भगवान् विश्वात्मा हरिरीश्वरो भृगुष्ववतीर्य भुवः पृथिव्याः परं भारमधिकं भाररूपं क्षत्रं बहुशो हतवान् नृपानिति पाठे भारमेवाह-नृपानिति । बहुश इत्यनेन कश्चिदवशेषितः स्यादिति सूच्यते तदेवोक्तं पुरस्तात्-

"अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ।
नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ "

इति ॥ २७ ॥

तदेवं प्रसक्तानुप्रसक्तं परशुरामचरित्रमुपवर्णितमुपसंहृत्य प्रस्तुतं गाधिवंशमाह-गाधेरिति । गाधेरभूद्विश्वामित्राख्यः पुत्र इति शेषः । तं विशिनष्टि, महत्तेजो यस्य, क इव ? समिद्धो ज्वलितोऽग्निरिव यो विश्वामित्रस्तपसा हेतुभूतेन क्षत्रं क्षत्रजातिं त्यक्त्वा ब्रह्मवर्चसं लेभे ब्रह्मर्षितां प्राप्त इत्यर्थः । तस्य ब्रह्मवर्चसावहतपश्चर्यायां हेतुः ब्रह्ममन्त्राभिमन्त्रितचरुप्रभाव इति भावः ॥२८॥

विश्वामित्रस्येति । हे नृप ! विश्वामित्रस्य च पुत्रा एकशतं सम्बभूवुः तत्र मध्यमो मधुच्छन्दः तत्सम्बन्धादन्येऽपि सर्वे तद्भ्रातरो लिङ्गसमवायन्यायेन "प्राणभृत उपदधाति" इति वन्मधुच्छन्दो नामान एव बभूवुः तथा श्रुतिः "विश्वामित्रस्यैक शतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः" इत्यादि ॥ २९ ॥

यत्प्रतिज्ञातं "शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रवक्ष्यते" इति तदवसरप्राप्तं वक्तुं विश्वामित्रस्य कञ्चिद्वृत्तान्तमाह—पुत्रमिति । स विश्वामित्रः आजीगर्तिम अजीगर्तस्य सुतं भार्गवगोत्रजं देवैर्दत्तप्रायत्वाद्देवरातापरनामधेयं शुनःशेपं पुत्रं कृत्वा पुत्रत्वेन परिगृह्य स्वसुतानेकशतसंख्याकानाह—विमिति ए एव शुनश्शेपः ज्येष्ठः प्रकल्प्यतां युष्माभिर्ज्येष्ठभ्रातृत्वेनाऽभ्युपगम्यतामिति । अत्रेदं कथाशरीरमनुसन्धेयं शुनःशेपो भृगुकुलप्रसूतत्वात् भार्गवः स एव देवरातः देवैर्दत्तप्रायत्वात् स एवाजीगर्तिः आजीगर्तस्य मध्यमः पुत्रः मध्यमत्वादेव पितृभ्यां ममतां विहाय विक्रीतो हरिश्चन्द्रपुत्रेण रोहितेनानीतो यज्ञीयपशुत्वेन हरिश्चन्द्राय समर्पितः तेन, यूपे बद्धः प्राणरक्षणार्थं विश्वामित्रमेव शरणं गतः तदुपदिष्टमन्त्रस्तुतवरुणादिभिर्दत्तप्राणो बभूव तञ्च विश्वामित्रः कृपया पुत्रत्वेन परिगृह्य मध्यमस्य मधुच्छन्दसो ज्येष्ठान् स्वपुत्रान् इमं ज्येष्ठं कुरुतेत्युक्तवान् ततस्तैः प्रत्याख्यानहनान् म्लेच्छा भवतेति शप्ताः, कनिष्ठानाह—ततस्तैरेत्यङ्गीकृत्य पञ्चाशता कनिष्ठैस्सह मधुच्छन्दास्तं ज्येष्ठत्वेन परिजग्राह—तदेतदत्रोच्यते, पुत्रं कृत्वेत्यादिना यावत्समाप्ति । तदेवं शुनश्शेपस्य विश्वामित्रपुत्रेषु ज्येष्ठत्वमवगम्यते तथा आश्वलायनबोधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तं प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेदः न तु वंशान्तरं तथा च स्मृतिः—

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात् ॥

इति ॥ ३० ॥

ननु कथं भृगुवंशजस्य देवरातस्य कौशिकप्रवरत्वमित्याशङ्क्य तदुपपादनाय प्रवृत्तोऽयं पुत्रं कृत्वेति श्लोकः स च व्याख्यातः यदुक्तं ज्येष्ठ एव प्रकल्प्यतामिति तदेव स्फुटयितुं शुनश्शेपं विशिनष्टि-य इति द्वाभ्याम । यो वै शुनश्शेपः विक्रीतः पितृभ्यामिति शेषः । हरिश्चन्द्रकर्तृके मखे पुरुषपशुर्भूय यश्च जलेशादीन् वरुणादीन् स्तुत्वा विश्वामित्रोपदिष्टमन्त्रैरिति शेषः शुनश्शेपः पाशबन्धनान्मुमुचे अमुच्यत ॥ ३१ ॥

यश्च देवयजने वरुणादेवताराधनात्मके हरिश्चन्द्रमखे देवैर्वरुणादिभिः रातो दत्तो दत्तप्राय इति यावत् गाधिषु गाधिवंशजेषु देवरातेति ख्यातः स शुनश्शेपो भार्गवः भृगुवंशजः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आगामिन्यन्तरे भविष्यन्मन्वन्तरे ब्रह्मद्ब्रह्म वेदशाखां वर्तयिष्यति वेदप्रवर्तको भविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥

भुवः परं भारं केवलं भारभूतान् नृपानहन् संहृतवान् ॥ २७ ॥

महातेजा विश्वामित्रः ॥ २८ ॥

तस्य विश्वामित्रस्यैकशतं पुत्रा आसन् तेषामेकोत्तरशतपुत्राणां मध्ये यो मध्यमः स तु मधुच्छन्दा नाम तेन मधुच्छन्दसा संयुक्ता ये पञ्चाशत्पुत्राः ते मधुच्छन्दसनामानो भवन्ति नान्ये "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः" इत्यादिश्रुत्या चेममेवार्थं वक्ति ॥ २९ ॥

"शुनःशेपस्य माहात्म्यम उपरिष्टात्प्रचक्षते" इत्युक्तं प्रपञ्चयितुमाह-पुत्रं कृत्वेति । अत्र काचित्किंवदन्ती, मम पुत्रो भवेति विश्वामित्रेणोक्तो वाजीगर्तः शुनःशेपोऽहं त्वत्पुत्राणां ज्येष्ठश्चेत् पुत्रः स्यां तत्रापि मध्यमो न स्यां नापि कनिष्ठ इति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विश्वामित्रमाह-तदेवमस्त्विति विश्वामित्रः शुनःशेपं पुत्रं कृत्वाऽन्यानौरसान् पुत्रानब्रवीत् एष शुनःशेपो युष्माकं ज्येष्ठः प्रकल्प्यतां भवद्भिरिति शेषः । इति शुनःशेपशब्दं शृण्वतां शुनीजातीयोऽयं किम्? इत्यन्यथा प्रतीतिं निवारयति-भार्गवमिति । भृगुवंशोद्भवः, अनेनापि सः कथं निवारितो स्यात् ? इत्यत आह-आजीगर्तमिति । अजीगर्तस्य मुनेरपत्यं तर्हि विश्वामित्रस्य पुत्रत्वे का सङ्गतिरित्यतो देवरातमिति विश्वामित्राय देवैः रातं दत्तं विश्वामित्रस्य दत्तपुत्रत्वेन सम्बन्ध इत्यर्थः ॥ ३० ॥

अनेन विशेषणत्रयेण ज्येष्ठत्वकल्पनायां वैशिष्ट्यमुक्त्वा वैशिष्ट्यान्तरं चाह-य इति । यः शुनःशेपः हरिश्चन्द्रयज्ञे अजीगर्तेन पित्रा रोहिताय विक्रीतः पुरुषाख्यः पशुरभूत् यश्च ब्रह्मादिदेवांस्तुत्वा तत्प्रसादात्पाशबन्धनात्स्वं वारुण्यपाशबन्धनात् यूपस्तम्भाधिरज्जुबन्धनात् आत्मानं मुमुचे मोचयामास कर्मकर्तरिप्रयोगः "कस्य नूनं कतमस्यामृतानां मनामहे चारुदेवस्य नाम" इत्यारभ्य "अस्मेरयिनिधापये" इत्यन्तमेतद्वाक्येन स्तुत्वा ऋग्भाष्ये एतासामृचामर्थं आचार्यैरेव विस्तारेणोक्त इति नास्माभिः प्रपञ्च्यते ॥ ३१ ॥

देवरातशब्दनिर्वचनेन विश्वामित्रस्य तत् सम्बन्धमाह—य इति । यः देवयजने यज्ञे यद्दैवै रातो रक्षितस्तैरेव गाधिसुताय विश्वामित्राय रातो दत्तः तस्मात्स देवरात इति ख्यातः प्रसिद्धः इत्यतोऽयं भार्गवः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं मध्ये मध्येऽपि निजनिजाभीष्टां भगवदवतारकथां गत्वा झटिति निजाभीष्टतमभगवदाविर्भावास्पदयदुवंशवर्णनाय प्रसक्तवंशं समापयितुमाह—गाधेरिति ॥ २८ ॥

एकशतं एकाधिकशतम् टीकायां प्राणभृत इति तत्र प्राणभृत्पदप्रसिद्धमन्त्रेण संस्कृतैकैकेष्टिका प्राणभृदुच्यते तत्प्रधान्येनान्या अपि तथोच्यन्त इति गन्तव्यम् ॥ २९—३७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बृहत् ब्रह्म वेदप्रवर्त्तकेषु सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥ २५—२७ ॥

प्रासङ्गिकीं कथां समाप्य प्रस्तुतमाह-गाधेरिति ॥ २८ ॥

एकशतं एकाधिकं शतं तथा च श्रुतिः "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः" इति ते सर्वे विकृतसमवायन्यायेन "प्राणभृत उपदधाति" इति वत् मधुच्छन्दस एवोच्यन्ते इष्टकाचयनं यागे प्राणभृत्पदप्रसिद्धमन्त्रेण संस्कृता एकैवेष्टका प्राणभृदुच्यते तत्र पुनस्तत्प्राधान्येनान्या अपीष्टका यथा प्राणभृत उच्यन्ते तथैवेत्यर्थः ॥ २९ ॥

स च विश्वामित्रः भार्गवं भृगुवंशोद्भवम् अजीगर्तसुतं शुनःशेपं स्वपुत्रं कृत्वा सुतानौरसान् प्रत्याह-ज्येष्ठ इत्यादि ॥ ३० ॥

ननु, शुनःशेप एव कस्तत्राह— य इति । हरिश्चन्द्रस्य मखे पुत्रमेधे कर्त्तव्ये पुत्रेण रोहितेनैव यः पुरुषपशुरानीतः कनिष्ठज्येष्ठयोः स्नेहवद्भ्यां पितृभ्यां शुनःशेपनामा मध्यमः पुत्रो विक्रीतः स च प्रजेशादीन् देवांस्तुत्वा पशुपाशबन्धनात् मुमुचे मुक्तः ॥ ३१ ॥

अतो भार्गवोऽपि पञ्चाशता कनिष्ठैः विश्वामित्रकृपापात्रीभवन् गाधिषु गाधिवंशेषु देवरात इति ख्यातस्तापसोऽभूत् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बृहद्वेदं प्रवर्तयिष्यति सप्तर्षिष्वेकतमो भविष्यति ॥२५॥२६॥

परं केवलं भुवो भारं नृपान् अहन् ॥ २७ ॥

गाधिकन्यान्वयमुक्त्वाऽथ गाधिसन्ततिमाह-महातेजा विश्वामित्रः गाधेः पुत्रोऽभूत् यः क्षात्रं क्षत्रजातिमुत्सृज्य ब्रह्मर्षित्वं लेभे ॥ २८ ॥

विश्वामित्रस्य एकशतं पुत्रा आसन् तत्र मध्यमो मधुच्छन्दाः तत्सम्बन्धात् ते सर्वे विकृतसमवायन्यायेन "प्राणभृत उपदधाति" इति वत् मधुच्छन्दसः नामतो बभूवुः तथा च श्रुतिः "विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायाᳪ सो मधुच्छन्दसः पञ्चाशत्कनीयाᳪसः" इत्यादि ॥ २९ ॥

"शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रवक्ष्यते" इति यदुक्तं तद्दर्शयन् अजीगर्तपुत्रं शुनःशेपमपि विश्वामित्रः पुत्रत्वेन स्वीकृतवानित्याह-पुत्रं कृत्वेत्यादिना । भार्गवं भृगुवंशजम् आजीगर्तम् अजीगर्तपुत्रं देवरातं अजीगर्तस्य त्रयः पुत्राः तत्र ज्येष्ठ पितुः कनिष्ठ मातुश्च स्नेहाधिक्यान्मध्यमः शुनःशेपः मातापितृभ्यां धनं गृहीत्वा हरिश्चन्द्राय दत्तः स हरिश्चन्द्रेण वित्तं दत्वा पुरुषपशुत्वेन यदा यज्ञार्थं नीतः तदा मार्गे विश्वामित्रपादयोः मृत्युभयात् दण्डवत्पतितस्तेन करुणया देवप्रसादप्रकारं तस्मै उपदिश्य प्रसन्नेभ्यो देवेभ्यस्त्वया यज्ञसमाप्तिरात्मजीवनं च वरो ग्राह्य इत्युक्तस्तथैव देवैः रातत्वात् देवरातसंज्ञं पुत्रं कृत्वा विश्वामित्रः एष ज्येष्ठः युष्माभिः प्रकल्प्यतामिति सुतानाह ॥ ३० ॥

तस्य देवरातत्वमुपपादयति—य इति द्वाभ्याम् । मुमुचे अमुच्यत ॥ ३१ ॥

यः शुनःशेपो भार्गवः स गाधिवंशजेषु देवरातस्तापस इति ख्यातः ॥ ३२ ॥

---

भाषा टीका ।

हे राजन् ! कमल लोचन भगवान् जामदग्न्य ( परशुराम ) जी भी भविष्य मन्वन्तर में वेद प्रवर्त्तक सप्त ऋषियों में एक ऋषि होवेंगे ॥ २५ ॥

ये परशुरामजी आज दिन भी दक्षिण समुद्र के तीर पर महेन्द्र पर्वत के विषे न्यस्त दण्ड और प्रशान्त बुद्धि वाले होकर विराजते हैं । और उनके चरित्रों को देव सिद्ध गन्धर्व, चारण लोग गान करते हैं ॥ २६ ॥

ये मधुच्छन्दसो ज्येष्ठाः कुशलम्मेनिरे न तत् ।
अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ! ॥ ३३ ॥
स होवाच मधुच्छन्दाः सार्द्धं पञ्चशता ततः ।
यन्नो भवान् सञ्जानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥
ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त्त माम् ॥ ३५ ॥
एष वः कुशिका ! वीरो देवरातस्तमन्वित ।
अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥
एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम् ।
प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां नवमस्कन्धे
षोडशोऽध्यायः ॥ १६ ॥

---

भाषा टीका ।

इस प्रकार विश्वात्मा भगवान् हरि ईश्वर भृगुवंश में अवतार लेकर पृथिवी के बड़े भार रूप बहुत राजाओं को मारते हुए ॥ २७ ॥

गाधि महाराज के पुत्र प्रदीप्त अग्नि के सदृश बड़े तेजस्वी विश्वामित्रजी हुए, जो कि तप के बल से क्षत्रियपने को त्याग कर ब्रह्मवर्चस् ( ब्राह्मणत्व ) को प्राप्त हुए ॥ २८ ॥

हे राजन् ! उन विश्वामित्रजी के एक सौ एक पुत्र हुए, उन में बीच का ( ५१ की संख्या का ) जो पुत्र रहा उसका नाम मधुच्छंदा रहा, इसी से पचास ज्येष्ठ और पचास कनिष्ठ उन सबों का नाम मधुच्छन्दा ही होगया ॥ २९ ॥

भृगुवंश में उत्पन्न होने वाले अजीगर्त्त के पुत्र देवरात शुनःशेप को विश्वामित्रजी ने अपना पुत्र स्वीकार करके फिर अपने एक सौ एक पुत्रों से बोले, कि—इसको तुम लोग अपने सबोंके मध्य में जेष्ठ बना लो ॥ ३० ॥

यह शुनःशेप वही रहा कि जिसकी इसी स्कंध में पहिले सात में अध्याय में कथा आचुकी है कि-जिसको वन में चलते समय रोहित ने अजीगर्त ( पिता ) से मोल लेकर वरुण की बलि के लिये अपने पिता हरिश्चन्द्र के यज्ञ में अपनी प्रति निधि में पुरुष पशु करके दिया पर उसने प्रजेशादि देवताओं की स्तुति कर उनको प्रसन्न कर पाश के बंधन से ( यज्ञ में मारने से ) छूट गया ॥ ३१ ॥

जिसकी यज्ञ में देवताओं ने रक्षा करी इसी से गाधि वंश में विश्वामित्र के गोद आकर उसका देवरात नाम भया वह वही भृगुवंशी अजीगर्त्त का पुत्र शुनःशेप है ॥ इसी को ज्येष्ठ बनाने को विश्वामित्रजी ने अपने पुत्रों को आज्ञा दीनी ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्तस्य ज्येष्ठत्वं कुशलं न मेनिरे मध्यमस्यानर्थावहत्वं दृष्ट्वा नाङ्गीकृतवन्तः मुनिर्विश्वामित्रः ॥ ३३ ॥

पञ्चाशता कनिष्ठैः साकं समध्यमो मधुच्छन्दा उवाच नोऽस्माकं यज्ज्येष्ठत्वं कनिष्ठत्वं वा भवान्पिता सञ्जानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥ ३४ ॥

एवमुक्त्वा मन्त्रदृशं "कस्य नूनं कतमस्यामृतानाम" इत्यादिमन्त्राणां द्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः तदाह—वयं सर्वे त्वामन्वञ्चः स्म हि अनुगन्तारः कनिष्ठाः स्म इत्यर्थः । ततः प्रसन्नो विश्वामित्रस्तान् सुतानाह—वीरवन्तः पुत्रवन्तो भविष्यथ ये यूयं मे मानं पूज्यत्वमनुगृह्णन्तोऽनुवर्त्तमानाः सन्तो मां वीरवन्तं पुत्रवन्तमकर्त्त कृतवन्त इत्यर्थः ॥ ३५ ॥

हे कुशिकाः ! एष देवरातो वो युष्मदीयः कौशिक एव यतो वीरो मत्पुत्रस्तमेनमन्विताऽनुगच्छत अन्ये चाष्टकादयः तस्य सुता आसन् ॥ ३६ ॥

उपसंहरति—एवमिति । एके शप्ता एकेऽनुगृहीताः अन्यस्तु पुत्रत्वेन स्वीकृतः इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं तच्च प्रवरान्तरमापन्नं प्राप्तम् हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पित्रा ज्येष्ठ एव प्रकल्प्यतामित्युक्ता ये मधुच्छन्दसस्तेषु ये ज्येष्ठाः पञ्चाशत्ते पित्रोक्तं कुशलं न मेनिरे नाङ्गीकृतवन्तः ततः क्रुद्धो मुनिर्विश्वामित्रस्तान् हे दुर्जनाः ! म्लेच्छा भवत इति अशपत् ॥ ३३ ॥

ततः स मधुच्छन्दा मध्यमः पञ्चाशता कनिष्ठैर्भ्रातृभिः सह पितरमाह—किमिति ? यद्भवान् नोऽस्मान् विजानीते आदिशति तस्मिन्नादेशे वयं तिष्ठामहे आज्ञां करवामेति ॥ ३४ ॥

एवमुक्त्वा ततस्तं देवरातं मन्त्रदृशं "कस्य नूनं कतमस्यामृतानाम्" इत्यादिमन्त्राणां द्रष्टारं ज्येष्ठं चक्रुः, करणप्रकारं दर्शयति; त्वामन्वञ्चो वयं स्महीति, वयं सर्वे त्वामन्वञ्चः स्म हि अनुगन्तारः स्म भवाम तव कनिष्ठा भवामेत्यर्थः । ततो विश्वामित्रः प्रीतः तान् सुतान् यूयं वीरवन्तो भविष्यथ पुत्रवन्तो भविष्यथेत्यनुजग्राह कोऽस्मासु तवेदृशोऽनुग्रहहेतुरित्यत्राह-य इति । ये यूयं मानं पूजयन्तो मामनुगृह्णन्तः अनुवर्तमानाः सन्तः यद्वा मानं प्रमाणं मम निश्चयमनुगृह्णन्तः अनुपालयन्तः मां वीरवन्तं पुत्रवन्तमकर्त कृतवन्तः मन्मानप्रत्याख्यानं यूयमपि शप्स्यध्वं देवरातश्च हीयेत यतो ऽहमवीरवान् स्यां तथा तु न कृतं युष्माभिरितीमङ्गुणं पश्यन् अनुगृहीतवानस्मीति भावः । हे कुशिकाः ! एष देवरातः वः युष्मदीयः कौशिक एव, कुतो यतो धीरः मत्पुत्रः तमेनमन्वित अनुगच्छत ततो ऽन्ये चाष्टकादयस्तस्य विश्वामित्रस्य पुत्राः सम्बभूवुरित्यर्थः ॥ ३५ ॥ ३६ ॥

उपसंहरति—एवमिति । एके शप्ता एकेऽनुगृहीताः अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं तत् कौशिकगोत्रं विश्वामित्रैः पृथग्विधं नानाप्रकारं जातं ततश्च प्रवरान्तरमापन्नं कुतः हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुनःशेपो ज्येष्ठत्वेन कल्प्यतामिति विश्वामित्रेणोक्ताः ये पञ्चाशत्पुत्रा मधुच्छन्दसो जन्मना ज्येष्ठास्ते शुनःशेपस्य ज्येष्ठत्वं स्वात्मनः कनिष्ठत्वं यत्तत् कुशलं साधु न मेनिरे ततः किमभूदिति तत्राह अशपदिति ॥ ३३ ॥

तेषां म्लेच्छभावेन शुनःशेपस्य किमायातमिति तत्राह सोऽहेति । इत्यनेन ब्राह्मणमनुकरोति स विश्वामित्रः पञ्चाशता सार्धं मधुच्छन्दसमुवाच ह अयं शुनःशेपो वः ज्येष्ठो भविष्यति विश्वामित्रेणोक्तस्येदमेव वाक्यमुत्तरं, स मधुच्छन्दाः पञ्चाशता सार्धं पितरमुवाच ह ततस्तातः पिता भवान्नोऽस्माकं यद्विजानीते आज्ञापयति तस्मिन्नाज्ञप्ते शुनःशेपस्य ज्येष्ठत्वे अस्माकं कानिष्ठ्ये सर्वथमविचारेण तिष्ठामहे "प्रकाशनस्थेयाख्ययोश्च" इति सूत्रात् निश्चितं स्थिरीकृतं चेदं न्याय्यमिति भावः ॥ ३४ ॥

तर्हि तथा कुर्वन्त्विति पित्रा उदितास्ते पुत्राः कस्य नूनमित्यादिमन्त्रदृशम् ऋग्वेदद्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः कथं चक्रुरिति तत्राह-स्म इति । भो देवरात ! वयं त्वामन्वञ्च अनुवर्तमानाः कनिष्ठाः स्म भवाम हि प्रसिद्धं हेतौ वा यस्माद्वयं त्वत्कनिष्ठा अभूम तस्मात्ते ज्येष्ठत्वे संशयो माभूदिति अथवा हे पितः वयं त्वा त्वामन्वञ्च अनुवर्तमानाः स्म त्वदाज्ञाकारिण इत्यर्थं इति सन्तुष्टः पिता कं वरं प्रायच्छदिति तत्राह-विश्वामित्र इति । वीरवन्तः पुत्रवन्तः कर्तव्ये धिशिष्टप्रेरणावन्तो वा कुतोऽयं वरो दत्त इति तत्राह—य इति । ये भवन्तो मे मामनुगृह्णन्तः परिपालनलक्षणानुग्रहं-कुर्वन्तः मा मां वीरवन्तम् अकर्त कृतवन्त इति यस्मात्तस्माद्यूयं वीरवन्तो भविष्यथेति वीरवन्तमकर्तेति ब्राह्मणवाक्यानुकरणं वेदतुल्यमिति प्रकाशयति अकर्त मम वाक्यमकुर्वत "जीवतो वाक्यकरणात्क्षयासंशोधनेन च । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता" इति स्मृतेः । हे कौशिकाः कौशिकगोत्राः एष देवरातो मम वीरः पुत्रो युष्माकं ज्येष्ठः यूयं तमन्वित अनुवर्तध्वम् अन्ये चाष्टकादयोऽनुवर्तन्तामिति शेषः ॥ ३५-३६ ॥

उपसंहरति—एवमिति । यत्कौशिकगोत्रं तद्विश्वामित्रैः पृथग्विधमभूत्, कथं तदिति तत्राह, प्रवरान्तरमिति प्रवरान्तरमापन्नं हि यस्मात्तस्मादेव पृथग्विधं कल्पितं हि प्रसिद्धमिति भावः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥
( विजयध्वजतीर्थमतेनात्राध्यायो न समाप्यते )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ये ज्येष्ठाः पञ्चाशत् तत् शुनःशेपस्य ज्येष्ठत्वं कुशलं भद्रं न मेनिरे मुनिर्विश्वामित्रः ॥ ३३ ॥

पञ्चाशता कनिष्ठैः साकं स मध्यमो मधुच्छन्दाः ह स्पष्टमुवाच नोऽस्माकं पिता भवान् यत् ज्येष्ठत्वं कनिष्ठत्वं वा सञ्जानीते मन्यते तस्मिन्नेव वयं तिष्ठामेति ॥ ३४ ॥

ततश्च शुनःशेपं ज्येष्ठं चक्रुः मन्त्रदृशं "कस्य नूनं कतमस्यामृतानाम्" इत्यादि मन्त्राणां द्रष्टारं तदाह—वयं सर्वे त्वामन्वञ्चः अनुगन्तारः कनिष्ठाः स्मेत्यूचुरित्यर्थः । ततः प्रसन्नो विश्वामित्रस्तान् सुतानाह उवाच । वीरवन्तः पुत्रवन्तो भविष्यथ ये यूयं मे मानं पूज्यत्वम् अनु मदाज्ञानन्तरं गृह्णन्तः अङ्गीकुर्वन्तः सन्तः मां वीरवन्तम् अकर्त कृतवन्तः अन्यथा युष्मास्वपि मच्छापात् म्लेच्छीभूतेषु अपुत्रक इव एवाभविष्यमिति भावः ॥ ३५ ॥

हे कुशिकाः ! वो युष्मदीयः कौशिक एव यतो वीरः सुतः पुत्रः तमेनमन्वित अनुगच्छत अन्ये चाष्टकादयस्तस्य सुता आसन् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसंहरति—एवमिति । एके शप्ताः एके अनुगृहीताः अन्यस्तु पुत्रत्वेन गृहीतः इत्येवं कौशिकगोत्रं विश्वामित्रैः विश्वामित्रेण हेतुना पृथग्विधं नानाप्रकारं जातं तच्च प्रवरान्तरमापन्नं हि यस्मादेवं देवरातज्येष्ठत्वेन तत् देवरातप्रवरं प्रकल्पितम् ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमे षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत् देवरातस्य ज्येष्ठत्वं कुशलं न मेनिरे नाङ्गीचक्रुः तान् मुनिः विश्वामित्रः हे दुर्जनाः ! म्लेच्छा भवतेत्यशपत् ॥ ३३ ॥

ततस्तदनन्तरं पञ्चाशताकनिष्ठैः सह स मध्यमो मधुच्छन्दा इदमूचुरुवाच नोऽस्माकं हे पितः ! यत्कनिष्ठत्वं मन्यद्वा भवान् सञ्जानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥ ३४ ॥

तदनन्तरं ते मन्त्रद्रशम् "कस्य नूनं कतमस्यामृतानाम"इत्यादि मन्त्राणां द्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः, तदेव दर्शयति वयं सर्वे त्वाम अन्वञ्चः अनुगन्तारः स्म तव कनिष्ठा भवाम इत्यर्थः । विश्वामित्र आह—वीरवन्तः पुत्रवन्तः भविष्यथ ये यूयं मे मानं मदाज्ञापालनम् अनुगृह्णन्तः अनुवहन्तः सन्तः मां वीरवन्तं पुत्रवन्तम् अकर्त्त कृतवन्तः आज्ञानुवर्तिपुत्रेण पिता पुत्रवान्भवतीति भावः ॥ ३५ ॥

हे कुशिकाः पुत्राः ! एष देवरातः वो युष्मदीयः युष्मद्भ्रातैव यतो वीरः मत्पुत्रः तमेनमन्वितः अनुगच्छत विश्वामित्रस्य अन्ये चाष्टकादयः पुत्रा बभूवुः ॥ ३६ ॥

केचिच्छप्ताः केचिदाशीर्भिः संयोजिताः भार्गवः तज्ज्येष्ठत्वेन स्थापितः तेऽप्यष्टकहारीतादयोऽन्ये ऽन्यप्रकारा एवं कौशिकगोत्रं पृथग्विधं नानाविधमभवत् तच्च प्रवरान्तरमापन्नं प्राप्तं हि यत एवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाऽध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषा टीका ।

तब उन पुत्रों में जो पंचास जेष्ट मधुच्छंदा रहे उनोंने इस बात को नहीं मानी । तब विश्वामित्रजी ने उन पर क्रोध कर शाप देदिया, कि—रे दुर्जन हो ! तुम लोग म्लेच्छ होजावो ॥ ३३ ॥

तब तो पचास कनिष्ठों सहित जो एक मधुच्छंदा रहा, वह बोला, कि—जो आप आज्ञा करें हम लोग उसी में स्थित हैं ॥ ३४ ॥

इतना कहकर शुनःशेप को ज्येष्ठ बनाकर बोले, कि—हे भ्राता ! हम लोग तुमारे अनुचर हैं अर्थात् कनिष्ठ हैं । तब इतना सुनकर विश्वामित्र प्रसन्न होकर पुत्रों से बोले, कि—जो तुमने हमारे वचन को मानकर हमको वीर पुत्र वाले किये, इसी से तुम भी वीरवंत होवो अर्थात आज्ञाकारी पुत्र वाले होवो तात्पर्य यह कि—पिता की आज्ञा न मानने वाले हजार पुत्र भी होवें तो भी पिता निपुत्री सा ही है ) ॥ ३५ ॥

फिर विश्वामित्रजी अपने पुत्रों से कहने लगे, कि—हे कुशिक हो ! इस देवरात को भी तुम अपने कुशिक गोत्र का ही समझो और इसका अनुगमन करो । शुकमुनि बोले, कि—ऐसे और भी विश्वामित्रजी के अष्टक, हारीत, जय, क्रतुमद आदिक पुत्र होते भये ॥ ३६ ॥

इस प्रकार कौशिक गोत्र विश्वामित्रके पुत्रों से भिन्न प्रकार का होगया और प्रवरांतर को प्राप्त होगया क्योंकि ? वह देवरात को ज्येष्ठ बनाकर कल्पित हुआ है ॥ ३७ ॥

इति श्रीमद्भागवत नवम स्कन्ध में षोडश अध्याय की
वृन्दावनस्थ पं० भगवताचार्यकृत
भाषा टीका समाप्ता ॥ १६ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥



## ॥ सप्तदशोऽध्यायः ॥

—ः✻ः—

श्रीशुक उवाच ।

यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः ।
नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्यवान् ॥ १ ॥
अनेना इति राजेन्द्र ! शृणु क्षत्रवृधोऽन्वयम् ।
क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः ॥ २ ॥
काश्यः कुशो गृत्समद इति गृत्समदादभूत् ।
शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥ ३ ॥
काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमः पिता ।
धन्वन्तरिर्दैर्घतम आयुर्वेदप्रवर्त्तकः ॥ ४ ॥
यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ।
तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥ ५ ॥
दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ।
स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ।
तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
नालर्कादपरो राजन् ! मेदिनीं बुभुजे युवा ॥ ७ ॥
अलर्कात्सन्ततिस्तस्मात्सुनीथोऽथ सुकेतनः ।
धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पञ्चसु ।
सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥ १ ॥

इह श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमणामैलादिक्रमेण प्रक्रान्तमिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽति विततत्वा- द्वक्ष्यते निरूप्यते. अतः पुरूरवसः पुत्राणां पञ्चानां कनिष्ठानां वंशानुकत्वेदानीं प्रथमस्य वंशमाह—य इति । एवं नहुषययाति- यदुप्रभृतिष्वपि द्रष्टव्यम् ॥ १ ॥

क्षत्रवृधः क्षत्रवृद्धस्य ॥ २ ॥ ३ ॥

दीर्घतमसः, पिता ॥ ४ ॥

स्मृतमात्र एवार्तिं रोगदुःखं नाशयतीति तथा ॥ ५ ॥

ततः प्रतर्दनादिशब्दवाच्यात् द्युमतः सकाशादलर्कादयः ॥६॥७॥

अलर्कात्सन्ततिसंज्ञः ॥ ८ ॥

———

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।**

तदेवं पुरूरवसः पुत्राणां पञ्चानां कनिष्ठानां वंशाननुवर्ण्येदानीं 'प्रथमस्यायोर्वंशमाह—य' इति । यः पुरूरवसः पुत्र आयुरुक्तः तस्य नहुषादयः पञ्च सुता अभवन् तत्र हे राजेन्द्र ! तावत् क्षत्रवृद्धस्यान्वयं वंशं शृणु क्षत्रवृद्धस्य यः सुतः सुहोत्रस्तस्य' त्रयः पुत्रा आत्मजा आसन् ॥ १ ॥ २ ॥.

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तानिर्दिशति—काश्य इति । काश्यः कुशो गृत्समद इति तत्र गृत्समदात् शुनकः समभवत् यस्माच्छुनकात् शौनको जातः स च बह्वृचश्रेष्ठः मुनिः ॥ ३ ॥

काश्यस्येति । काश्यस्य तु पुत्रः काशिराजः ततो राज्ञः काशीराजात् दीर्घतपा जातः दीर्घतपसस्तु धन्वन्तरिः सचायुर्वेदस्य प्रवर्तकः ॥ ४ ॥

यज्ञभुक् यज्ञभागभुक् वासुदेवस्य भगवतोंऽशभूतः स्मृतमात्र एवार्ति रोगं नाशयतीति तथाभूतः, अयं धन्वन्तरिः समुद्रमथनजातात् धन्वन्तरेरन्यो भगवदंशावतारभूत एव तत्पुत्रो धन्वन्तरिपुत्रः केतुमान् ततो केतुमतो भीमरथो जज्ञे ॥ ५ ॥

तस्मात्केतुमतः द्युमान् जज्ञे इत्यनुषङ्गः स च दिवोदासाद्यपरनामधेयः ततो दिवोदासादिशब्दवाच्यादलर्कादयो जज्ञिरे तत्रालर्कं विशिनष्टि-षष्टिरिति । षट् सहस्राधिकषष्टिसहस्रवर्षाणि अलर्क एव युवा सन् मेदिनीं बुभुजे अनुबभूव अलर्कादन्यस्तु न बुभुजे इत्यर्थः ॥ ६ ॥

इहोपभोगो भुजेरर्थः न तु पालनं तत्र "भुजोऽनवन" इत्यात्मनेपदनियमप्रसङ्गात् ॥ ७ ॥

अलर्कात्सन्ततिः तस्मात्सन्ततेः सुकेतः अथ सुकेतात् सुकेतनः सुनीतोऽथ सुदर्शन इति पाठान्तरं तस्माद्धर्मकेतुस्तस्माच्च सत्यकेतुरजायत ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतायाः सन्ततिं विस्तृत्य पुरूरवसः पुत्रस्य प्रथमस्यायोर्वंशं वर्णयति बादरायणिः-य इति । नहुषान्वयस्यैव राज्यार्हत्वात् क्षत्रवृद्धाद्यन्वयस्य तदनर्हत्वात् सूचीकटाहन्यायमनुसन्दधानः क्षत्रवृद्धाद्यन्वयं वक्ति क्षत्रवृद्धान्वयमिति ॥ १—६ ॥

अलर्कादपरो राजा युवा तथा न बुभुजे ॥ ७-९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

( अस्मिन्नध्याये न विद्यते ॥ )

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आयोरैलसुतस्यात्र प्रोक्ताः सप्तदशे सुताः ।
क्षत्रवृद्धादयः ख्याता अलर्काद्या यदन्वये ॥
॥ १ ॥

क्षत्रवृधः क्षत्रवृद्धस्य ॥ २—५ ॥

प्रतर्दनादिशब्दवाच्यात् द्युमतः सकाशादलर्कादयः ॥ ६—७॥

सन्ततिसंज्ञः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऐलपुत्रस्यायोर्वंशमाह—य इति, सप्तदशेन । वीर्यवानिति सर्वेषां विशेषणम् ॥ १ ॥

क्षत्रवृधः क्षत्रवृद्धस्य ॥ २ ॥

शुनकशौनकौ भार्गवौ अस्मिन् वंशे अवतीर्णाविति ज्ञेयम् अत एव वैष्णवे गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्तयिताभूदित्युक्तम् ॥ ३ ॥

कथम्भूतः राष्ट्रः दीर्घतमः पिता दीर्घतमा राष्ट्राख्य·पुत्र इत्यर्थः सामुद्रश्चन्द्रवंशे धन्वन्तरिरवतीर्ण इति ज्ञेयं-तथाह भगवान् पराशरः भगवता नारायणेन चातीतसम्भूतायस्मै वरो दत्तः काशिराजगोत्रेऽवतीर्य त्वमष्टधा सम्यगायुर्वेदं करिष्यतीति अस्यार्थः अतीतसम्भूतौ क्षीराब्धेर्जन्मनि नारायणेन वरो दत्तः त्वं काशिराजगोत्रेऽवतीर्णः रोगस्तद्रुक्चारोग्यं तेषां व्यवस्थानीत्यष्टाङ्गमायुर्वेदं करिष्यतीति ॥ ४ ॥

तत्पुत्रः धन्वन्तरिपुत्रः केतुमान् अस्य केतुमतः भीमरथः सुतो जज्ञे ततो भीमरथात् ॥ ५ ॥

दिवोदासः तस्माद्दिवोदासात् द्युमान् प्रतर्दनाद्यनेकनामधेयः ततो द्युमतः अलर्कादयो जाताः ॥ ६—७ ॥

अलर्कात्सन्ततिसंज्ञः ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीरमणो जयति ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-पुरूरवा के पुत्र जो आयु हुए उन के नहुष, क्षत्रवृद्ध, रजी, और वीर्यवान् रंभ तथा अनेना ये पुत्र हुए, हे राजेन्द्र ! अब तुम क्षत्रवृद्ध का वंश सुनो, क्षत्रवृद्ध के सुत सुहोत्र हुए तिनके तीन पुत्र हुए ॥ १—२ ॥

काश्य, कुश, और गृत्समद, गृत्समद के पुत्र शुनक हुए, तिनके बह्वृच प्रवर मुनि शौनक हुए ॥ ३ ॥

काश्य के पुत्र काशि हुए। तिनके पुत्र राष्ट्र हुए, तिनके दीर्घतमा हुए, दीर्घतमा के पुत्र आयुर्वेद के प्रवर्तक धन्वन्तरि हुए, ॥ ४ ॥

वे धन्वन्तरि, यज्ञभोक्ता वासुदेव के अंश और स्मरण मात्र से आर्ति ( पीड़ा ) के नाश करने वाले हुए, तिनके पुत्र केतुमान् हुए, तिनसे भीमरथ हुए ॥ ५ ॥

तिन भीमरथ से दिवोदास और प्रतर्दन इन नामों से भी ख्यात होने वाले द्युमान् हुए, तथा ये राजा सत्याजित्, वत्स, ऋत ध्वज, और कुवलयाश्व, इन नामों से भी विख्यात हुए, इनके अलर्कादिक पुत्र हुए ॥ ६ ॥

हे राजन् ! साठ हजार और साठ सौ वर्ष तक अलर्क से और किसी दूसरे युवा राजा ने पृथिवी का राज्य नहीं किया ॥७॥

अलर्क से संतति हुए, तिनसे सुनीथ तिनसे सुकेतन तिन के पुत्र धर्मकेतु भये, तिनसे सत्यकेतु उत्पन्न होते भये ॥ ८ ॥

---

धृष्टकेतुः सुतस्तस्मात्सुकुमारः क्षितीश्वरः ।
वीतिहोत्रस्य भर्गोऽतो भार्गभूमिरभून्नृप ॥ ९ ॥
इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ।
रम्भस्य रभसः पुत्रो गम्भीरश्चाक्रियस्ततः ॥ १० ॥
तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ।
शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥ ११ ॥
ततः शान्तरयो जज्ञे कृतकृत्यः स आत्मवान् ।
रजेः पञ्चशतान्यासन्पुत्राणाममितौजसाम् ॥ १२ ॥
देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद्दिवम् ।
इन्द्रस्तस्मै पुनर्दत्वा गृहीत्वा चरणौ रजेः ॥ १३ ॥
आत्मानमर्पयामास प्रह्लादाद्यरिशङ्कितः ।
पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ १४ ॥
त्रिविष्टपं महेन्द्राय यज्ञभागान् समाददुः ।
गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ १५ ॥
अवधीद्भ्रंशितान्मार्गान्न कश्चिदवशेषितः ।
कुशात्प्रतिः क्षात्रवृद्धात्सञ्जयस्तत्सुतो जयः ॥ १६ ॥
ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ।
सहदेवस्ततो हीनो जयसेनस्तु तत्सुतः ॥ १७ ॥
सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ।
क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां नवमस्कन्धे आयुवंशवर्णनं नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्यकेतोर्धृष्टकेतुस्तस्मात्सुकुमारस्तस्माद्वीतिहोत्रस्तस्य भर्गः अतो भर्गाद्भार्गभूमिः ॥ ९ ॥

काशयः काशिवंश्याः काशेः प्रपितामहस्य क्षत्रवृद्धस्यान्वयमयन्ते यान्तीति तथा ॥ १० ॥

ततोऽनेनसः शुद्धो जज्ञे ॥ ११ ॥

कृतकृत्यः स यत आत्मवान् ज्ञानी अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥ १२-१४ ॥

तेषां मतिभ्रंशाय गुरुणा बृहस्पतिनाऽभिचारविधानेनाग्नौ हूयमाने सति ॥ १५ ॥

सिंहावलोकनेनाह-क्षात्रवृद्धात्क्षत्रवृद्धपौत्रात्कुशात्प्रतिः प्रतेः सञ्जयः ॥ १६ ॥ १७ ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्यकेतोः धृष्टकेतुः तस्तस्मात्सुकुमारात्मजः सुतः क्षितीश्वरो जज्ञे सुकुमाराद्वीतिहोत्रः तस्य भर्गः ततो भर्गात् भार्गभूमिरभूत् ॥ ९ ॥

हे नृप ! इतीत्थमिमे उक्ताः काशयः काश्यस्य वंशजाः नृपाः क्षत्रवृद्धस्य काश्यप्रपितामहस्यान्वयम् अयन्ते यान्तीति तथा एवं क्षत्रवृद्धान्वय उक्तः अथ रम्भस्यान्वयमाह—रम्भस्य पुत्रो रभसः गम्भीरश्च ततो रभसात् क्रतुः ॥ १० ॥

तस्य क्रतोः क्षेत्रे कलत्रे ब्रह्म ब्राह्मणकुलं जज्ञे अथाऽनेनसः आयोः पुत्रस्य कनीयसो वंशं शृणु ततोऽनेनसः शुद्धः ततः शुद्धात् शुचिः तस्मात् त्रिककुप् स एव धर्मसारथ्यपरनामधेयः ॥ ११ ॥

ततस्त्रिककुपः शान्तरयो जज्ञे स च कृतमनुष्ठितं कृत्यं मुक्तिसाधनं येन तथाभूतः आत्मवान् ज्ञानयोगनिष्ठश्च अतः पुत्रोत्पादनं न कृतवानिति भावः । अथ रजेरायुःपुत्रस्य वंशमाह—रजेरिति । रजेः पुत्राः पञ्चशतसंख्याका अनवधिकतेजसः संबभूवुरित्यर्थः ॥ १२ ॥

रजेश्चरित्रमाह—देवैरभ्यर्थितो रजिर्दैत्यान् हत्वा दिवं त्रिविष्टपं दैत्यैरपहृतामिन्द्राय ददौ इन्द्रस्तु पुनः प्रह्लादादतीव शङ्कितो दिवं तस्मै रजये दत्वा रजेश्चरणौ गृहीत्वा आत्मानमर्पयामास स्वरक्षाभरं तस्मिन्निहितवानित्यर्थः । तत्पुत्रचरितमाह—पितरीति । अथ पितरि रजावुपरते मृते सति तस्य पुत्राः पञ्चशतं याचमानायेन्द्राय त्रिविष्टपं न ददुः ॥ १३ ॥ १४ ॥

किञ्च यज्ञभागान् समाददुः स्वीकृतवन्तः अथ गुरुणा बृहस्पतिना अभिचारविधिना तेषां मतिभ्रंशायाऽग्नौ हूयमाने सति मार्गादिन्द्राधिपत्यानुकूलबुद्धिरूपाद्भ्रंशितान् रजेः पुत्रान् सर्वान् बलभिदिन्द्रोऽवधीत् जघान कश्चिदेकोपि नावशेषितः पूर्वं क्षत्रवृद्धपौत्राणां काश्यकुशगृत्समदानां मध्ये काश्यगृत्समदयोर्वंशावुक्तौ, गृत्समदादभूदित्यादिना । ततः कुशस्य वंशमाह—कुशादित्यादिना यावत्समाप्ति । क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात् कुशात्प्रीतिर्जज्ञे तत्सुतः प्रीतिसुतः सञ्जयः ततः सञ्जयाज्जयो जज्ञे ॥ १५ ॥ १६ ॥

ततो जयात्कृतः हे नृप ! कृतस्य हर्यश्वकः पुत्रो जज्ञे ततो हर्यश्वकात् सहदेवस्ततो भीमस्ततो भीमसुतो जयसेन इत्यस्य तनयः संकृतिः स च क्षत्रधर्मा महाशूरः महारथश्च एवं क्षत्रवृद्धान्वयं निगमयन् नहुषान्वयं वक्तुं तच्छ्रवणाय राजानमादिशति क्षत्रवृद्धान्वये जाता इति शेषः इमे उक्ता भूपालाः अथ नहुषात्मजपर्यन्तजान् शृणु ॥ १७ ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
सप्तदशोऽध्यायः ॥ १७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतीमे काश्यजाः काश्यस्य संतानजा भूपाः ॥ १०-१५ ॥
पुनरपि क्षत्रवृद्धात्प्रतिपक्षोऽभूत् ॥ १६-१८ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥
( विजयध्वजतीर्थमतेन चतुर्दशः )

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुकुमाराद्वीतिहोत्रः तस्य भर्गः अतो भर्गात् ॥ ९ ॥

काशयः काशेर्वंश्याः क्षत्रवृद्धस्यान्वयम् अनु अयन्ते प्राप्नुवन्तीति ते तथा ॥ १०—१३ ॥

प्रह्लादाद्यरीत्यतद्गुणसंविज्ञानोऽयं बहुव्रीहिः पितरि रजौ कालेन उपरते मृते सति पुत्रा रजिसुताः ॥ १४ ॥

अस्मत्पैतृकं त्रिविष्टपमिति न्यायेन न ददुः अभिचारविधानेनाग्नौ हूयमाने सति बलभिदिन्द्रः रजेस्तनयानवधीत् क्षत्रवृद्धपौत्रात् कुशात् प्रतिः ॥ १५—१८ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
नवमेऽसौ सप्तदशः ऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत्यकेतोः धृष्टकेतुः सुतः तस्मात्सुकुमारः अस्य सुकुमारस्य वीतिहोत्रः तस्य भर्गः अतो भर्गात् भार्गभूमिः ॥ ९ ॥

इतीमे पूर्वोक्ताः काशयः क्षत्रवृद्धपौत्रस्य काशेर्वंश्याः अतः क्षत्रवृद्धस्यान्वयम् अयन्ते यान्तीति तथा ॥ १०—११ ॥

स च शान्तरयः कृतकृत्यः यत आत्मवान् आत्मा परमात्मा विद्यते उपास्यतया यस्य स तथा ॥ १२—१४ ॥

गुरुणा बृहस्पतिना तेषां मतिभ्रंशायाभिचारविधानेनाग्नौ हूयमाने सति मार्गात्स्वधर्मात् भ्रंशितान् बलभिदिन्द्रः अवधीत्, सिंहावलोकनन्यायेनाह । क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात् कुशात्प्रतिः प्रतेः सञ्जयस्तस्य सुतो जयः ॥ १५—१८ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

---

### भाषाटीका ।

तिनसे धृष्टकेतु हुए तिन के पुत्र कुमार क्षितीश्वर हुए, तिन से वीति होत्र तिनके भर्ग तिनके पुत्र भार्गभूमि राजा हुए ॥ ९ ॥

यहां तक ये काशि के वंश के भूप हुए और ये सब पुरूरवा के पुत्र जो क्षत्रवृद्ध हुए हैं तिनके वंश वाले हैं ॥ पुरूरवा के चतुर्थ पुत्र जो रंभ हुए, तिनके रभस पुत्र हुए, तिनके गंभीर हुए, तिनके अक्रिय हुए ॥ १० ॥

भाषा टीका।

उन अक्रिय के क्षेत्र ( भार्या ) में ब्रह्म उत्पन्न हुआ ॥ अब तुम अनेन के वंश का श्रवण करो । अनेन के पुत्र शुद्ध हुए, तिनसे शुचि हुए, तिनसे त्रिककुद् धर्मसारथि हुए ॥ ११ ॥

तिन से शांतरय हुए, तिनसे कृतकृत्य हुए जो बड़े जित मनस्क हुए रजी के अमित पराक्रम वाले पांच सौ पुत्र हुए ॥ १२ ॥

जो रजी ऐसे प्रतापी हुए, कि—जो देवताओं की प्रार्थना करने से दैत्यों को मारकर इन्द्र को स्वर्ग देते हुए इन्द्रने फिर भी रजी महाराज के चरण गह कर फिर स्वर्ग उनहीं को समर्पण किया ॥ १३ ॥

और अपने आत्मा को इन्द्र ने राजा के ही अर्पण कर दियी, क्योंकि ! इन्द्र प्रह्लादादिक शत्रुओं से सशंकित रहते रहे पिता के देहान्त होने पर रजी के पुत्र लोगों ने इन्द्र के याचना करने पर भी इन्द्र को स्वर्ग नहीं दिया ॥ १४ ॥

और बड़भाग भी महेन्द्र को न देवें आपही सब आजावें, तब बृहस्पतिजी के अग्नि के हवन करने पर इन्द्र ने रजी के पुत्रों को आमचार से मार डाला ॥ १५ ॥

क्योंकि—वे पुत्र अपने मार्ग से भ्रष्ट होगये अतएव उनमें से कोई भी अवशिष्ट नहीं रहा, क्षत्रवृद्ध के वंश में होने वाले कुश से प्रति हुए, उनके पुत्र संजय हुए, तिनके सुत जय हुए ॥ १६ ॥

तिन से कृत हुए, कृत के भी पुत्र राजा हर्यवन हुए, तिनसे सहदेव, तिन से हीन तिनके सुत जयसेन हुए ॥ १७ ॥

जयसेनके संकृति पुत्र, हुए, तिनके जगहुये वे क्षत्रधर्मा महारथी होते हुए, ये सब क्षत्र वृद्ध के वंश के भूपाल हुए, अब नहुष से जो वंश हुआ उसको श्रवण करो ॥ १८ ॥

इति श्रीमद्भागवत नवमस्कन्ध में सप्तदशाध्याये की श्रीवृन्दावनस्थ पं० भागवताचार्यकृत- भाषा टीका समाप्ता ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥



## ॥ अष्टादशोऽध्यायः ॥

———○:०:○———

श्रीशुक उवाच ।

यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः ।
षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनः ॥ १ ॥
राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ।
यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥
पितरि भ्रंशिते स्थानादिन्द्राण्या घर्षणाद्द्विजैः ।
प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥
चतसृष्वादिशद्दिक्षु भ्रातॄन्भ्राता यवीयसः ।
कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥

रजोवाच ।

ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः ।
राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥ ५ ॥

श्रीशुक उवाच ।

एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ।
सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥
देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले ।
व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥
ता जलाशयमासाद्य कन्याः कमललोचनाः ।
तीरे न्यस्य दुकूलानि विजन्हुः सिञ्चतीर्मिथः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ।
यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ १ ॥

॥ १ ॥

तस्य राज्यस्य परिणाममनर्थावहत्वं वेत्तीति तथा । तत्र हेतुः यत्रेति ॥ २ ॥

स्थानात्स्वर्गात् द्विजैरगस्त्यादिभिः ॥ ३ ॥

यवीयसो भ्रातॄनादिशत् काव्यस्य शुक्रस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् ॥ ४ ॥ ५ ॥

नात्र प्रतिलोमतादोष ईश्वरघटनादिति दर्शयन्कथामाह—एकदेत्यादिना प्रतिजग्राह तद्वच इत्यन्तेन । गुरोः शुक्रस्य पुत्र्या देवयान्या च व्यचरदिति द्वयोरन्वयः ॥ ६ ॥

कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिंस्तस्मिन्पुरोद्याने अबला शर्मिष्ठा ॥ ७ ॥

सिञ्चतीः सिञ्चन्त्यः ॥ ८ ॥ ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतिरिति । देहिनः इन्द्रियाणीव नहुषस्य यतिप्रभृतयः षट् आत्मजा आसन् ॥ १ ॥

राज्यमिति । तत्र यतिर्ज्येष्ठः पित्रा नहुषेण दत्तमपि राज्यं नैच्छत्, कथम्भूतः ? तत्परिणामवित् राज्यस्य दुःखोदर्कत्वं जानन्नित्यर्थः । तत्र हेतुमाह, यत्र राज्ये प्रविष्टः अभिकुर्वन् पुमान् आत्मानं नावबुध्यते ॥ २ ॥

पितरीति । इन्द्राण्या प्राप्तेन्द्राधिपत्येन नहुषेण मां भजस्वेत्युक्तया शच्या विज्ञापितैर्द्विजैर्नहुषेण स्ववाहनं वोढुं विनियुक्तैः वाहनत्वेन तेन पादाङ्गुष्ठेन ताडनपूर्वकं सर्प सर्पेत्युक्तैरगस्त्यादिभिः कतिभिः धर्षणात् सर्पो भवेत्येवमुक्तिपूर्वकं वाहनयातरूपाद्धर्षणात् पितरि नहुषे स्थानात् त्रिविष्टपात् भ्रंशिते अजगरत्वं च प्रापिते सति ययातिर्नृपः अभिक्रान्तराज्यो बभूव ॥३॥

चतसृष्विति । स च कनिष्ठान् चतुरो भ्रातॄन् संयातिप्रभृतीन् चतसृषु दिक्षु आदिशत्,पालनार्थमिति शेषः । स्वयन्तु काव्यस्य वृषपर्वणो दानवस्य च कन्याऽयामिति शेषः । कृतदारस्सन् पृथ्वीं जुगोप ॥ ४ ॥

काव्यस्य कृतदार इत्युक्त्वा लब्धप्रश्नावसरः पृच्छति राजा—ब्रह्मर्षिरिति । भगवान् काव्यो ब्रह्मर्षिः नाहुषो ययातिस्तु क्षत्रबन्धुः क्षत्रियावरः अतस्तयोः राजन्यविप्रयोः कस्माद्धेतोः प्रातिलोमिको विवाहः कृतः ? श्वशुरजामातृभावरूपः सम्बन्धः आसीदिति प्रश्नः ॥ ५ ॥

न प्रातिलोमतादोषः ईश्वरघटनादिति दर्शयन् कथामाह—एकदेत्यादिना प्रतिजग्राह तच्च इत्यन्तेन । दानवेन्द्रस्य वृषपर्वणः कन्यका शर्मिष्ठा नाम भामिनी अबला कदाचित् सखीनां सहस्रेण गुरोः काव्यस्य पुत्र्या देवयान्या च संयुक्ता सती ॥ ६ ॥

पुष्पितैः द्रुमैः सङ्कुले कलमव्यक्तमधुरं गीतं येषां ते अलयो भृङ्गा येषु तानि नवानि पुलिनानि यस्मिन् तस्मिन् पुरोद्याने व्यचरत् ॥ ७ ॥

ता इति । ताः शर्मिष्ठाप्रभृतयः कमललोचनाः कन्याः जलाशयमासाद्य तत्तीरे दुकूलानि निधाय तस्मिन्मिथः सिञ्चतीः सिञ्चन्त्यो विजह्रुः विहारं चक्रुः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ नहुषस्य सन्ततिमनुक्रामति—यतिरित्यादिना ॥ १ ॥

तस्य राज्यस्य परिणामवित्फलपरिपाकपटुतां जानातीति यत्र राज्ये ॥२ ॥

इन्द्राण्या धर्षणात् शच्याः संस्पर्शनिमित्तात् पितरि नहुषे स्वर्गस्थानात् द्विजैः भ्रंशिते त्याजितेऽजगरत्वं महासर्पत्वं प्रापिते सति ॥ ३ ॥

यवीयसः कनिष्ठान् संयातिपूर्वान् काव्यस्य शुक्रस्य पुत्र्या देवयान्या वृषपर्वणो दैत्यस्य पुत्र्या शर्मिष्ठया कृतदारः ॥ ४ ॥

प्रातिलोम्येन विवाहः कथं घटेत इति, पृच्छति—ब्रह्मर्षिरिति ॥ ५ ॥

दैववशादिदं पार्थिवमब्राह्म्यं प्राप्तं न तु मानुषवादिति प्रकाशयितुमाख्यायिकां कथयति—एकदेति ॥ ६ ॥ ७ ॥

सिञ्चतीः अन्योन्यजलप्रक्षेपं कुर्वन्त्यः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टादशे देवयानीशर्मिष्ठाकलहादिषु ।
कथा यत्र जरां पूरुर्ययातेरग्रहीत् पितुः ॥
॥ १—२ ॥

स्थानात् स्वर्गात् द्विजैरगस्त्यादिभिः ॥ ३ ॥

काव्यस्य शुक्रस्य कन्या वृषपर्वणश्च कन्यया कृतदारः ॥ ४ ॥

ब्राह्मणकन्याग्रहणश्रवणात् ययातिः स्वयमभ्युपदेन निर्दिष्टो राज्ञा अज्ञातचरत्वेनेति ज्ञेयम् ॥ ५ ॥

दानवेन्द्रस्य वृषपर्वणः कलगीता अलयो येषु तथाविधानि नलिनीपुलिनानि यस्मिंस्तत्र ॥ ६—७ ॥

सिञ्चतीः सिञ्चन्त्यः ॥ ८—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नहुषतत्पुत्रान्तरवृत्तान्तकथनपूर्वकं नहुषपुत्रस्य ययातेश्चरितमाह—यतिरित्यध्यायशेषेण ॥ १—२ ॥

इन्द्राण्या मां भजेति वादिनं नहुषं प्रति क्रुद्धया ऋषियानेन मम समीपे आगच्छेति प्रोक्तेन नहुषेण शिबिकायां योजितैर्द्विजैरगस्त्यादिभिः सर्प सर्पेति शीघ्रगमनाय प्रेरितैः धर्षणात् सर्पो भवेति शापात् हेतोः स्थानाद्देवलोकात् भ्रंशिते सति ॥ ३ ॥

काव्यस्य शुक्रस्य वृषपर्वणो दैत्यदानवेन्द्रस्य कन्यां कृतदारः सन् पृथिवीं जुगोप ॥ ४ ॥

नाहुषो ययातिः राजन्यः काव्यो ब्रह्मर्षिः तत्कन्या विप्रा तयोः राजन्यविप्रयोः क्षत्रियविप्रकन्ययोर्वरवध्वोः प्रतिलोमकः विवाहः कस्माद्धेतोरित्यर्थः ॥ ५ ॥

गुरुपुत्र्या शुक्रकन्यया सह व्यचरदिति द्वयोरन्वयः ॥ ६ ॥

कलगीताः मधुरस्वनाः अलयो येषु तानि नलिनीपुलिनानि यस्मिन् अबला शर्मिष्ठा ॥ ७ ॥

मिथोऽन्योन्यं सिञ्चतीः सिञ्चन्त्यो विजह्रुः ॥ ८—९ ॥

---

भाषा टीका ।

श्रीवेदगर्भापतिर्जयति ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—यति, ययाति, संयाति, आयति, वियति, और कृति, ये छः पुत्र नहुष के हुए, जैसे देहियों के शरीरों में छः इन्द्रियें हैं ॥ १ ॥

तिनमें से यति ने पिता के दिये हुए राज्य की इच्छा नहीं

वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम् ।
सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥
शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ।
स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥
अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसाम्प्रतम् ।
अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥
यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये ।
धार्यते यैरिह ज्योतिः शिवः पन्थाश्च दर्शितः ॥ १२ ॥
यान्वन्दन्त्युपतिष्ठन्ते लोकनाथाः सुरेश्वराः ।
भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥ १३ ॥
वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः ।
अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥ १४ ॥
एवं शपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत ।
रुषा श्वसन्त्युरङ्गीव धर्षिता दष्टदच्छदा ॥ १५ ॥
आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि ! ।
किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा ॥ १६ ॥

भाषा टीका ।

करी, क्योंकि ? वह राज्य के परिणाम को जानता रहा, कि जिस राज्य में प्रविष्ट हुआ पुरुष फिर आत्मा को नहीं जान सक्ता है ॥ २ ॥

पिताको इन्द्राणी ने ब्राह्मणों की धर्षणा द्वारा जब स्थान से भ्रष्ट करा दिया और पिता ( नहुष ) को जब अजगरपना प्राप्त हुआ तब ययाति राजा हुए ॥ ३ ॥

तब अपने छोटे चारों भ्राताओं को चारों दिशाओं के रक्षा पर आज्ञा देकर शुक्राचार्य और वृषपर्वा की पुत्रियों के साथ विवाह कर पृथिवी का पालन करते हुए ॥ ४ ॥

राजोवाच ॥

राजा बोले, कि—भगवान् शुक्राचार्य ब्राह्मण रहे और ययाति क्षत्रिय रहे, राजन्य और ब्राह्मण का प्रतिलोम विवाह कैसे हुआ ॥ ५ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—एक समय वृषपर्वा दानवेन्द्र की कन्या शर्मिष्ठा बड़ी कांतिवाली, एक हजार सखियों के साथ तथा अपने गुरुकी पुत्री देवयानी को साथ में लेकर पुष्पित द्रुमों से व्याप्त भ्रमरों से झंकारित पुर के उद्यान बगीचे में पुष्करिणी ( तलाई ) के तट में विचरती रहीं ॥ ६—७ ॥

वे कमललोचनी सब कन्या यें जलाशय को प्राप्त होकर तीरऊपर अपने २ वस्त्रों को धरकर परस्पर में सींचती हुई जल में विहार करने लगीं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समव्ययत्पर्यधात् ॥ १० ॥

असांप्रतमन्याय्यम् ॥ ११ ॥

अन्यायमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति—यैरिति त्रिभिः । ये ब्राह्मणाः परस्य पुंसो मुखं मुखादुत्पन्नत्वेन तृप्तिद्वारत्वेन श्रेष्ठा इत्यर्थः । ज्योतिर्ब्रह्मपन्थाः वेदमार्गः ॥ १२ ॥ १३ ॥

तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं तत्रापि भृगवः अस्याश्च पिता नः शिष्यः एवं सत्यप्यस्मामिर्धार्यं वास इयमसती धृतवती ॥ १४—२० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वीक्ष्येति । तदा ताः स्त्रियः देव्योमया सह वृषे स्थितं व्रजन्तं गिरिशं रुद्रमवलोक्य व्रीडिताः आशु उत्तीर्य तीरमारुह्य वासांसि पर्यधुः धृतवत्यः ॥ ९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शर्मिष्ठेति । तदा शर्मिष्ठा अजानती गुरुपुत्र्याः देवयान्याः वासः पर्यधात् ततो देवयानी शर्मिष्ठया परिधृतं वासः स्वकीयं मत्वा प्रकुपिता सतीदं वक्ष्यमाणमब्रवीत् ॥ १० ॥

तदेवाह-अहो इत्यादिना क्षिपन्तीमित्यतः प्राक्तनेन । अहो अस्या दास्या असांप्रतमयुक्तं कर्म निरीक्ष्यतां, किं तत् ? यद्-विमंरार्थं वासो धृतवतीत्येतत्. असांप्रतत्वं स्फुटीकर्तुं दृष्टान्त-माह- शुनी यथा अध्वरे यज्ञे हविर्ग्रहीतुमनर्हा तद्वदस्मदर्थं वस्त्रमियं परिधातुमनर्हेत्यर्थः ॥ ११ ॥

असांप्रतत्वमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति-यैरिति । यैर्ब्राह्मणैः भृग्वादिभिस्तपसा परमपुरुषस्य मुखं मुखस्थानीयमिदं ब्राह्मण-कुलं सृष्टं यैश्चेदं परं ज्योतिः स्वरूपं परं ब्रह्म धार्यते उपा-स्यते यैश्च शिवः क्षेमकरः पन्थाः वैदिकमार्गश्च प्रदर्शितः॥१२॥

यानीति । यान् ब्राह्मणान् सुरेश्वरा लोकनाथाः किमुत परमपावनः श्रीनिवासो विश्वात्मा भगवानपि प्रणमन्ति उप-तिष्ठन्ते प्रत्युद्गच्छन्ति ॥ १३ ॥

तत्रेति । तत्रापि उत्कैर्धर्मैः श्रेष्ठेषु तेषु ब्राह्मणेष्वपि वयं भृगवः भृगुवंशजाः अस्याः शर्मिष्ठायाः पिता असुरो वृषपर्वा नोऽस्माकं शिष्यश्च एवं स्थिते इयमसती अनर्हा अस्मदर्थं वस्त्रं धृतवती यथा अनर्हः शूद्रो वेदं तद्वत् ॥ १४ ॥

एवमिति । एवम् इत्थं क्षिपन्तीं तिरस्कुर्वन्तीं गुरुपुत्रीं देवयानीं शर्मिष्ठोवाच, कथंभूता ? धर्षिता निष्ठुरवाक्यैरिति शेषः । रुषोरगी पन्नगीव श्वसन्ती श्वासं मुञ्चती दष्टो दच्छदो ऽधरोष्ठो यया तथाभूता ॥ १५ ॥

भाषणमेवाह-आत्मवृत्तमिति । हे भिक्षुकि ! त्वमात्मवृत्तमवि-ज्ञाय बहुधा कत्थसे आत्मानं श्लाघसे वृत्तमेव दर्शयन्त्याह-किमिति ? यथा बलिभुजो वायसाः श्वानो वा तथा त्वमस्माकं गृहाणि प्रतीक्षसे किम् ? जीवनार्थं न प्रतीक्षितवत्यसि किम् ॥१६॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पर्यधुरात्मच्छादितवन्त्यः ॥ ९ ॥

अजानती शर्मिष्ठा गुरुपुत्र्या वासः स्वीयं मत्वा समव्ययत् सम्वीतवती "व्ययसम्वरणे" इति धातुः तदा प्रकुपिता प्रारब्धकोपा देवयानीदं वाक्यमुवाचेत्यन्वयः ॥ १० ॥

अहो मम असाम्प्रतमयुक्तम् ॥ ११ ॥

स्वकुलप्रशंसार्थं ब्राह्मणानां माहात्म्यं कथयति-यैरिदमित्यादिना । इदं विश्वं यैर्ब्राह्मणैस्तपसा सृष्टं ये परमस्य पुंसः मुखं यैरिदं परं ज्योतिर्ब्रह्माख्यं धार्यते यैश्च शिवः पन्थाः वेदमार्गो दर्शितः ॥ १२ ॥

ये लोकनाथाः सुरेश्वरास्तेपीदं ब्राह्मणकुलमुपतिष्ठन्ते अग्नि-मुखेन हविरादातुं प्रतीक्षन्ते विश्वात्मा भगवानपि ब्राह्मणप्रियस्तिष्ठ-तीति शेषः ॥ १३ ॥

वयं तत्र ब्राह्मणेषु भृगवः भृगुकुलजाः अत एव श्रेष्ठा इति शेषः अस्याः पिता वृषपर्वाऽसुरो नोऽस्माकं शिष्यः अस्मत्पितुःशिष्यत्वा-दहमपि तत्पुत्रीत्वान्मान्येति यस्मात्तस्मादस्मदर्थं वस्त्रमिदं धृत-वती यथा वेदग्रहणायोग्यो वृषलो वेदं धारयति तथेति ॥ १४ ॥

धर्षिता अप्रगल्भीकृता तुच्छीकृतेत्यर्थः ॥ १५ ॥

बहु कत्थसे व्यर्थवचनं वदसि भिक्षुकीत्वं स्पष्टमित्याह-किमि-ति । बलिभुजः श्वानः काको वा ॥ १६-१८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अजानती स्वीयं मत्वा गुरुपुत्र्याः वासः, समव्ययत् पर्य-धात् ॥ १० ॥

असाम्प्रतमनुचितं ब्राह्मणीधार्ये हविः शुनीव ॥ ११ ॥

अनौचित्यमेवाह-त्रिभिः । यैरित्यादिभिः ज्योतिर्ब्रह्म ॥ १२-१३ ॥

तदेवं ब्राह्मणमात्रमेव तावत् पूज्यं तत्रापि वयं भृगवः तत्राप्यस्याः पिता नः शिष्यः ॥ १४—१५ ॥

बलिभुजः काकाः ॥ १६—१९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समव्ययत् पर्यधात् ॥ १० ॥

असाम्प्रतमन्यायात् ॥ ११ ॥

इदं जगत् ये परस्य परमेश्वरस्य मुखम् ज्योतिः परं ब्रह्म शिवः पन्थाः कल्याणप्रदो वेदमार्गः ॥ १२—१३ ॥

असती अकल्याणी ॥ १४ --२० ॥

---

### भाषा टीका ।

इतने में ही देवी सहित श्रीशिवजी को वृषभ के ऊपर बैठकर जाते हुए देखकर सब कन्यायें लज्जित होकर एका एकी बड़ी जल्दी उस तड़ाक से बाहर निकलकर अपने २ वस्त्रों को पहिरती भई ॥ ९ ॥

शर्मिष्ठा ने जल्दी के मारे भूल में अपने जानकर गुरु पुत्री देवयानी के वस्त्र पहिन लिये, बस इतनी बात पर देवयानी बड़ी कुपित होकर इस प्रकार बोली ॥ १० ॥

देवयानी बोली, कि—अहो ! देखो तो इस दासी का अयोग्य कर्म, जो कि—हमारे पहिनने के वस्त्रों को इसने धारण कर लिये, कि—जैसे यज्ञ के हवि को कुतिया खा लेवे ॥ ११ ॥

जिन ब्राह्मणों ने इस जगत् को तप से रचा है, और जो पर ब्रह्म के मुखरूप हैं, और जो वेद को धारण करते हैं और जिन्होंने मंगल रूप पंथ दिखाया है ॥ १२ ॥

और जिनको लोकनाथ सुरेश्वर ब्रह्मा कहते हैं और उप-स्थान देते हैं और परम पावन श्रीनिकेतन विश्वात्मा भगवान् भी जिनको मानते हैं ब्राह्मण वो वस्तु हैं ॥ १३ ॥

तिसमें भी हम भृगुवंशी तहाँ भी इसका पिता हमारा शिष्य, फिर भी इस शर्मिष्ठा दुष्टनी ने हमारे पहरने के वस्त्र पहिन लिये जैसे शूद्र वेद को धारण कर लेवे ॥ १४ ॥

इस प्रकार आक्रोश ( गिला ) करने वाली गुरुपुत्री को मारे

एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ।
शर्मिष्ठा प्राक्षिपत्कूपे वास आदाय मन्युना ॥ १७ ॥
तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ।
प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥
दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ।
गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥
तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ।
राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ! ॥ २० ॥
हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे ।
एष ईशकृतो वीर ! सम्बन्धो नौ न पौरुषः ॥ २१ ॥
यदिदं कूपलग्नाया भवतो दर्शनं मम ।
न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ! ।
कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥ २२ ॥
ययातिरनभिप्रेतं दैवोपहृतमात्मनः ।
मनस्तु तद्गतं बुध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥
गते राजनि सा वीरे तत्र स्म रुदती पितुः ।
न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥

भाषा टीका ।

रोष के बडे २ श्वास लेती हुई सर्पिणी के तरह शर्मिष्ठा दांत काटकर बोली ॥ १५ ॥

शर्मिष्ठा बोली, कि—अरी भिक्षुकी ! अपना समाचार नहीं जानकर बहुत क्यों बकती है । क्या तूं हमारे घरों की नित्य प्रतीक्षा नहीं करती है जैसे समय पर बलि भोजन करने वाले कौवे कुत्ते ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निषिद्धोऽयमप्रतिलोमसम्बन्ध इतिचेत्तत्राह—एष इति ॥ २१ ॥

ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह—न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसञ्जीवनीं विद्यामध्यगात् तदा च देवयानी तं पतिं चकमे स च गुरुपुत्री मम पूज्येति न तामुद्वहत् ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति तं शशाप स च तर्हि ब्राह्मणः पतिर्न भवेदिति तां शशाप तदेतदाह यमहमशपं तस्य शापात् ॥ २२ ॥

अथात्मीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्गतं तस्यां सकामं स्वस्य मनश्च बुद्ध्वा नह्यधर्मे मदीयं मनः प्रविशेदिति तस्या वचः प्रतिजग्राहाऽङ्गीकृतवान् ॥ २३ ॥

शर्मिष्ठासम्बन्धोऽपि दैववशादेवाभवदिति दर्शयन्नाह—गते राजनीति नवभिः । उक्तं भिक्षुकीत्यादि, कृतं कूपे प्रक्षेपादि ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विधैरिति । एवं विधैरन्यैरपि परुषैर्वचोभिराचार्यस्य गुरोः सुतां क्षिप्त्वा उपालभ्य सती शर्मिष्ठा मन्युना वासो वस्त्रमादाय तामाचार्यसुतां कूपे प्राक्षिपत् पातयामास ॥ १७ ॥

तस्यामिति । अथ तस्यां शर्मिष्ठायां स्वगृहं प्रति यातायां गतायां सत्यां ययातिर्मृगयां चरन् यदृच्छया जलार्थी तत्र कूपसमीपं प्राप्तः गतः तत्र तां कन्यां देवयानीं नग्नां ददर्श ॥ १८ ॥

दत्त्वेति । ततो विवाससे नग्नायै तस्यै देवयान्यै स्वकीयमुत्तरीयं वस्त्रं दत्त्वा राजा ययातिः दयापरः पाणिना तस्याः पाणिं गृहीत्वा तां बहिरुद्धृतवान् ॥ १९ ॥

तमिति । तमुद्धृतवन्तं वीरं ययातिम् औशनसी काव्यसुता प्रेमपूर्णया गिरा उवाच, तदेवाह—राजन्निति त्रिभिः । हे राजन् ! परेषां पुराणि जयतीति तथाभूतः मम पाणिः त्वया गृहीतः ॥ २० ॥

अतस्त्वया गृहीताया मम परो हस्तग्राहः अन्यदीयपाणिना

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मत्पाणिग्रहो माभूत् मामुद्धरस्वेत्यर्थः। ननु, त्वं ब्राह्मणी अहन्तु राजन्यः कथमावयोः प्रातिलोमिको विवाहस्स्यादित्यत्राह—एष इति। हे वीर! नौ आवयोरेव भर्तृभार्याभावरूपः सम्बन्धः ईश्वरकृत इति, न तु पौरुषः मनुष्यकृतः अतोऽत्र न दोष इति भावः॥ २१॥

नन्विमं सम्बन्धं कुर्वन्नीश्वरोऽत्र न दृश्यत इत्यत्राह—यदिति। यत् यस्मात् कूपमग्नाया ममेदमसम्भावितं भवतो दर्शनमभूत्, यथेदं दर्शनमीश्वरकारितम् अनुमीयते तथा सम्बन्धश्चेति भावः। किञ्च मम राजन्य एव पतिर्भविता न ब्राह्मण इत्याह—नेति। हे महाबाहो! मे मम हस्तग्राहः पाणिग्राहको भर्तेति यावत् ब्राह्मणो न भविता न भविष्यति, कुतः? बार्हस्पत्यस्य बृहस्पतिसुतस्य कचस्य शापात्, कोऽसौ कचः? तत्राह, यं कचमहं पुरा प्रथममशापं तस्य शापादित्यर्थः। बृहस्पतेः सुतः कचः शुक्रान्मृतसञ्जीवनीं विद्यामध्यगात् तदा देवयानी तं पतिं चकमे स च गुरुपुत्री त्वं मम पूज्या इत्युक्त्वा न तामुपयेमे ततः सा कुपिता सती तवेयं विद्या निष्फला भवत्विति शशाप स च तव पतिर्ब्राह्मणो न भविष्यतीति शशापेति कथाऽत्रानुसन्धेया॥ २२॥

ततो, ययातिरशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्वृतं तस्यामात्मकं मनश्च बुद्ध्वा न ह्यधर्मे मदीयं मनः प्रविशेदिति तस्याः वचः प्रतिजग्राह—अङ्गीकृतवान्॥ २३॥

शर्मिष्ठासम्बन्धोऽपि दैववशादेवाभवदिति दर्शयन्नाह—गते राजनीति, नवभिः। वीरे राजनि ययातौ गते सति सा देवयानी तत्र गता रुदती पितुः समीपमेत्येति शेषः। शर्मिष्ठया कृतमुक्तं च तत्सर्वं न्यवेदयत्॥ २४॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उत्तरमुत्तरीयं उज्जहार कूपादिति शेषः॥ १९॥

प्रेमनिर्भरया स्नेहपूर्णया हस्तं गृह्णातीति हस्तग्राहः पाणिग्रहणकर्ता अपरोऽन्यो न स्यात् हस्तग्राह इति पाठे हस्ते ग्राहो ग्रहणं यस्य स तथा कुम्भकारवदण्प्रत्ययान्तो वा कूपमग्नायाः मम भवतो यदिदं दर्शनम्। एषः सम्बन्धः ईशकृतः श्रीनारायणविहितः न पौरुषः पुरुषाकाररचितो न भवति॥ २०—२१॥

ब्राह्मणपुत्र्यास्तव ब्राह्मण एव भर्ता युक्तो न क्षत्रियः प्रातिलोमप्रवेशप्रसङ्गादिति शङ्कां परिहरति—न ब्राह्मण इति। हे महाभुज! मे ब्राह्मणो हस्तग्राहो न भविता न भविष्यति, कुत इति तत्राह—कचस्येति। बार्हस्पत्यस्य बृहस्पतेरपत्यस्य नाम्ना कचस्य शापात् मृतसञ्जीवनीविद्यार्थी कचस्तत्प्रतिग्रहाय बहुतिथं गुरुपरिचर्यां विधाय तत्प्रसादमापाद्य तद्विद्यामादाय गुरोरनुज्ञया गन्तुकामं कचमुपलभ्य सर्वप्रकारेण कचस्य हितमाचरन्त्या मया भो कच! त्वं मम भर्ता भवेत्युक्तो मामुवाच हे देवयानि! त्वया नैवं वक्तव्यं यस्माताहमिति, तदा कुपिताऽहं तमशापं मत्पितुरवाप्तविद्या न फलिष्यतीति मामवाचिकाऽनेनोच्यते यमशापं पुरेति अहं पुरा यं कचमशापं शप्तवती तस्य शापादिति॥ २२॥

अनन्तरं ययातिना किं कृतमित्यत्राह—ययातिरिति। यद्यनभिमतं प्रातिलोम्येनोद्वहनं तदेवात्मनः दैवेन श्रीनारायणेन उपहृतमर्पितमात्मनो मनश्च तस्यां गतमनुरक्तं बुद्ध्वा तस्याः देवयान्याः वचः प्रतिगृहीतवानित्यन्वयः॥ २३॥ २४॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एष ईशकृत इति तद्वाक्यद्वारा श्रीशुकदेवेन सिद्धान्तितम्॥ २१॥ २२॥

तत्राशङ्कते नन्वीश्वरघटना सर्वत्रैवेति तस्यां सिद्धान्तितायां न कस्यापि पापं स्यात् कचशापश्च नाधर्मनिवारणे कारणं विरोधाभावात् प्रत्युतानर्थबीजस्य तस्य तत्र माहात्म्यावगमात् ततो नाऽधर्मो वा कथं जातः? कथं वा तस्य तत्र प्रवृत्तिरभूत्? इत्याशंक्य तादृशानामीश्वराश्रयधर्माणामत एव तत्र निःशेषावबोधकमित्यभिप्रेत्य, तदेव दर्शयति—ययातिरिति। दैवमीश्वरः तस्यायमभिप्रायः मम ययातेस्तावद्दृष्टफले कर्मणि कर्तव्यबुद्धिर्न जायेत तदेकाश्रयस्य ममाप्यश्वरोऽपि न तद्घटयेत् मनश्च न तत्र प्रवेशयेदित्यौत्पत्तिकाऽनुभवेन मुहुः निर्णीतवानस्मि तथापि यदिदं तत्तदापतितं तत्तु "न कर्म बन्धनं जन्म वैष्णवानाञ्च विद्यते" इति पाद्मकार्तिकमाहात्म्यवचनवदीश्वरस्यैव स्वैरलीलानुसारिणी कार्यापि मिच्छा गुणायैव कल्पते तद्‌तिक्रमस्तु दोषाय "जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इति गौतमीयवचनवत् मद्विधस्य निश्चितत्वात् ततो नान्येषामिव तत्र तस्य दोष इति भावः॥ २३–२५॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किञ्जातिस्त्वमित्युक्ता सा राजन्यौशनसी भवामीति प्रोवाचेति ज्ञेयम्॥ २०—२१॥

यमशापं पुरेति बृहस्पतेः पुत्रः कचः शुक्रान्मृतसञ्जीवनीं विद्यामध्यगात् तदा च देवयानी तं पतिं चकमे स च गुरुपत्नी मम पूज्येति न तामुद्वहत् ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति तं शशाप स च तव ब्राह्मणः पतिर्न भवेदिति तां शशापेति॥ २२॥

ब्राह्मणकन्यापरिणयस्याऽधर्मसाधनत्वादनभिप्रेतं दैवेन परमेश्वरेणैव, आत्मने उपहृतमित्यत्र हेतुं तद्वृतं स्वमनश्च गुणात् बाल्यमारभ्य मदीयं मनः कचिदपि नाऽधर्मेऽरमत नाऽपि मन्दाङ्‌गुणात्मकमेव मम मनो ह्यधर्मे रमयेदिति "धर्मस्य तत्त्वं निहितं गुहायां सूक्ष्मा गतिः" इत्यतो नायमधर्मो भविष्यतीति निश्चित्य तस्या वचः प्रतिजग्राह॥ २३—२४॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ईशकृतः कर्मसापेक्षेण परमेश्वरेण कृतः॥ २१॥

मृतसञ्जीवनीं विद्यां शुक्रादानयेति देवैः प्रेषितः कचः

दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ।
स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥
वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ।
गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥
क्षणार्द्धमन्युर्भगवान् शिष्यं व्याचष्ट भार्गवः ।
कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥
तथेत्यवस्थिते प्राह देवयानी मनोगतम् ।
पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुक्रशिष्योभूत्वा तद्गृहे ऽवसत् तदा दानवैः भस्मीकृतः शुक्रेणोदरे निक्षिप्य तदुदरे प्रवेशितः तदा तु कचं विना न जीविष्ये इत्येवं चाद्रिस्था देवयान्या प्रार्थितेन शुक्रेण कन्यावात्सल्येन मृतसञ्जीविन्या स्वोदरे पुनः स उत्पादितः तन्निर्गमने स्वनाशमालोच्यता स्वजीवनार्थं तस्मै मृतसञ्जीवनी विद्योपदिष्टा तदनन्तरं शास्त्रपक्षीयोऽस्यतिधार्मिकत्वाद्गुरुदेहान्निर्गम्य स्वगुरुं मृतं तया विद्ययोत्थापयामास तदा स्वगृहं गन्तुकामं तं पात्रभूतं स्वानुरूपं पतिं चकमे स च शुक्रशिष्यः तदुदरप्रवेशात्तत्पुत्रभूतश्च न तां भार्यात्वेन स्वीकृतवान् तदा चातिक्रुद्धा देवयानी तवेयं विद्या निष्फला भवत्विति तं शशाप सोऽपि ब्रह्मर्षिसुतो निरपराधः तव ब्राह्मणपतिर्न भवेदिति तां शशाप तदेतदाह "न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ! कचस्य बार्हस्पत्यस्य शापाद्यमशापं पुरा" इति ॥ २२ ॥

ययातिस्तु लोकविरुद्धत्वादनभिमतमपि दैवेनोपहृतं प्राप्तं बुध्वा आत्मनो मनस्तद्गतं च बुध्वा न ह्यधर्मे मन्मनो निविशेदिति तद्वचः प्रतिजग्राह ॥ २३ ॥

उक्तं भिक्षुकीत्यादि, कृतं कूपप्रक्षेपादि ॥ २४—२५ ॥

———

भाषा टीका

इस प्रकार के बड़े कड़े वाक्यों से सती आचार्य सुता को शर्मिष्ठा ने फटकार कर वस्त्र छीनकर क्रोध से कूप में गिरा दीनी ॥ १७ ॥

और शर्मिष्ठा तो गृह को चली गई, इतने ही में ययाति महाराज शिकार खेलते हुए हरिच्छा से जलके लिये उसी कूप पर आ पहुंचे और उस कूप में देवयानी को देखते हुए ॥ १८ ॥

तब नग्न उस देवयानी को राजा ने अपना उत्तरीय वस्त्र ( चादर ) देकर दयाकर के हाथ से हाथ पकड़कर बाहर निकाल लीनी ॥ १९ ॥

तब शुक्राचारी की पुत्री प्रेमयुक्त वाणी से उस वीर ययाति से बोली, कि—हे राजन् ! हे शत्रुओं के पुरके जीतने वाले ! आपने हमारा पाणिग्रहण किया है ॥ २० ॥

जब आप मेरा पाणिग्रहण कर चुके तो अब मेरा फिर दूसरा पाणिग्राहक न होवै, हे वीर ! यह हमारा तुमारा संबंध ईश्वर का जोड़ा हुआ है किसी पुरुष का किया हुआ नहीं है ॥ २१ ॥

क्योंकि ? जो कूप में गिरी हुई मेरे लिये आपका दर्शन हुआ, और हे महाभुज ! ब्राह्मण मेरा हस्त नहीं ग्रहण करेगा क्योंकि ? बृहस्पति के पुत्र कचने मेरे लिये शाप दिया है जिसको मैंने प्रथम शाप दीनी रही। ( यहां ऐसी कथा है कि—बृहस्पति का पुत्र कच, शुक्राचारी के समीप मृत संजीविनी विद्या पढ़ता रहा शुक्राचारी की पुत्री देवयानी ने उसको पति बनाने की इच्छा करी, कचने विचारी कि—यह तो गुरुकी पुत्री मेरी पूज्या है इसीसे उसको न व्याही। परन्तु देवयानी ने तो क्रोध करके शाप दे दिया कि—तेरी विद्या निष्फल होजाय, तब कचने भी शाप दिया कि—तेरे लिये ब्राह्मण पति न मिले, ) ॥ २२ ॥

क्षत्रिय होकर ब्राह्मण की कन्या के पाणि ग्रहण को अशास्त्रीय समुझकर राजा का अभिप्राय तो नहीं हुआ पर क्या करें दैव संयोग से यह योग प्राप्त हुआ ऐसा समुझकर और अपने मनको भी उसमें लग्न देखकर उसका वचन राजा ने ठीक मान लिया ॥ ( राजा ने विचारा यदि इसका पाणि ग्रहण अधर्म होता तो इसमें हमारा मन नहीं लगता, क्यों कि संदेह स्थान वाली वस्तुओं में सज्जनों की अंतःकरण की वृत्तियें ही प्रमाण हैं ) ॥ २३ ॥

राजा तो उसके वचन को अंगीकार कर चले गये, वह देवयानी रोती हुई अपने पिता के समीप सब वृत्तांत निवेदन करती हुई जो कि अपने साथ शर्मिष्ठा ने कहा और करा ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

कापोतीमुञ्छवृत्तिम् ॥ २५ ॥

प्रत्यनीका देवाः तैर्विघ्नितं जयं प्रापणीया इत्यभिप्रेतं यस्य तथाभूतं ज्ञात्वा प्रत्यनीकानां विवक्षितमिति वा ॥ २६ ॥ २७ ॥

(पित्रा दत्ता देवयान्यै शर्मिष्ठा सानुगा तदा । )
स्वानां तत्सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् ।
देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत् ॥ २९ ॥
नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशना ।
तमाह राजञ्छर्मिष्ठां माऽधास्तल्पे न कर्हिचित् ॥ ३० ॥
विलोक्यौशनसीं राजन् ! शर्मिष्ठा सुप्रजां क्वचित् ।
तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥ ३१ ॥
राजपुत्र्याऽर्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ।
स्मरन् शुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सानुगा सखीसहिता शर्मिष्ठा मामनुयात्विति ॥ २८ ॥

तत्तस्मात्पितुर्गमनाच्छुक्रात्सङ्कटं वीक्ष्य तत्तस्माद्दर्विस्यमानादर्थस्य प्रयोजनस्य गौरवं च वीक्ष्य ॥ २९ ॥

तल्पे माधाः मोपगच्छेरित्यर्थः ॥ ३० ॥ ३१ ॥

अपत्यार्थमृतुकाले प्रार्थनात्तस्याः कामपूरणं धर्ममवेक्ष्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्सङ्गमभ्यपद्यत न तु कामत इत्यर्थः ॥ ३२ ॥ ३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुर्मना इति । तदाकर्ण्य स भगवान् काव्यो दुर्मनाः विमनाः पौरोहित्यं विगर्हयन् कापोतीं वृत्तिमुञ्छवृत्तिं स्तुवंश्च दुहित्रा सह वृषपर्वणः पुराद्ययौ निश्चक्राम ॥ २५ ॥

वृषपर्वेति । ततो वृषपर्वा प्रत्यनीका देवास्ते विपश्चिताः जयं प्राप्स्यन्तीत्यभिप्रेता यस्य तथाभूतं तं गुरुं ज्ञात्वा पथि पादयोः पतितो गुरुं प्रसादयामास प्रार्थयाञ्चक्रे ॥ २६ ॥

क्षणार्धेति । क्षणार्धमेव मन्युः क्रोधो यस्य स भगवान् भार्गवः काव्यः शिष्यं वृषपर्वाणमाचष्ट अब्रवीत्, हे राजन् ! अस्या देवयान्याः काममिष्टं क्रियतां यदि यमिच्छति तत् क्रियताम् एनां देवयानीं त्यक्तुमहं नोत्सहे न प्रभवामि स्नेहादिति शेषः ॥ २७ ॥

तथेवेति । तथैवास्त्वित्यङ्गीकृत्य वृषपर्वणि स्थिते सति देवयानी स्वमनोगतं प्राह-किमिति ? पित्रा दत्ता सत्यहं यतो यास्ये गमिष्यामि तत्रैव शर्मिष्ठा सानुगा ससखी मामनुयातु अनुगच्छतु महास्यं कर्तुमिति भावः इति ॥ २८ ॥

स्वानामिति । ततः शर्मिष्ठा तत्तस्मात् शुक्रात् स्वानां पित्रादीनां सङ्कटं निरीक्ष्य तत्तस्माद्दवाकिपतादर्थस्य प्रयोजनस्य च गौरवं च वीक्ष्य स्त्रीसहस्रेण सह दासीवद्देवयानीं पर्यचरत् ॥ २९ ॥

नाहुषेति । ततः उशना काव्यः शर्मिष्ठया सह सुतां देवयानीं नाहुषाय ययातये दत्त्वा तं नाहुषमाह—किमिति ? हे राजन् ! तल्पे शय्यायां शर्मिष्ठां कर्हिचिदपि माऽधाः न स्थापयेरिति ॥ ३० ॥

विलोक्येति । ततः कदाचित् शर्मिष्ठा राज्ञो ययातेः स्त्रियमौशनसीं देवयानीं सुप्रजां शोभनापत्यवतीं विलोक्य स्वयमपि ऋतौ वर्तमाना सख्याः देवयान्याः पतिं तमेव ययातिमेव वव्रे ॥ ३१ ॥

राजपुत्र्येति । तदा अपत्यार्थं राजपुत्र्या शर्मिष्ठया अर्थितः धर्मवित् ययातिः धर्ममवेक्ष्यापत्यार्थम् ऋतुकाले प्रार्थ्यमानायाः कामपूरणं धर्मं एवेति विचार्य भृगुवचः शर्मिष्ठां माऽधास्तल्पे न कर्हिचिदिति वचः स्मरन्नपि काले दिष्टं दैवप्रापितमेवाभ्यपद्यत दैवप्रापितमेव तत्सङ्गमभ्यपद्यत न तु कामत इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कापोतीं कपोतसम्बन्धिनीं वृत्तिं स्तुवन् अन्याधिकभयाच्च कापोती वृत्तिर्विधीयते देवयान्या दुहित्रा सह ॥ २५ ॥

प्रत्यनीकानामसुरविरोधिनां देवानां चक्तुमिष्टं कार्यम् ॥ २६ ॥

अस्याः देवयान्याः कामोपेक्षाविशेषः स्वाभीष्टसाधनाय यात्वियं शर्मिष्ठा भवानस्मत्प्रियायाऽऽस्तामिति तत्राह-नैतामिति ॥ २७ ॥

यदभीष्टं तत्तथा करिष्ये इत्येवमुक्त्वा वृषपर्वण्यवस्थिते सति वृषपर्वणा तत् किं कर्तव्यमिति पृष्टा देवयानी मनोगतं स्वमनसि स्थितं कार्यं प्राह-किं तत्राह पित्रेति । अहं पित्रा दत्ता यास्ये यतोऽसौ मामियं शर्मिष्ठा सानुगा दासीसहस्रेण सहिताऽनुयातु अन्वागच्छतु इति ॥ २८ ॥

शर्मिष्ठा तत्सर्वं श्रुत्वा यद्यहं नानुगमिष्यामि तदा गुरुक्रोधात्समस्तकुलसर्वं नष्टं भवतीति स्वस्थानां सङ्कटं तद्वीक्ष्य तदर्थस्य तदनुगमनलक्षणप्रयोजनस्य गौरवं गुरुप्रसादेन स्वकुलाभिवृद्धिलक्षणमस्तीति मनसा निश्चित्य स्त्रीसहस्रेण परिवृता तथा करिष्यामीति पितरमुक्त्वा देवयानीं दासीवत् पर्यचरत् ॥ २९ ॥

---

* इत्यधिकः पाठोऽत्र विश्व० चक्रवर्तीपाठेन ।

**यदुं च तुर्वसुञ्चैव देवयानी व्यजायत।**
**द्रुह्युं चानुञ्च पूरुञ्च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥**

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उशना सुतां देवयानीं नाहुषाय नहुषपुत्राय ययातये शर्मिष्ठया सह दत्वा तं राजानमाह-किमाह,कदाचिदपि शर्मिष्ठां तल्पे शयनीयस्थाने माधाः धृतास्माकार्थीः मिथुनीभावं न कुर्वित्यर्थः ॥ ३० ॥

औशनसीं देवयानीं कार्यमालोक्य रहस्येकान्ते सख्याः पतिं तमेव ययातिमेव ऋतुकाले वव्रे ॥ ३१ ॥

अपत्ये सन्तानार्थे राजपुत्र्या शर्मिष्ठया प्रार्थितो धर्मवित्सभिज्ञः “न काञ्चन परिहरेत्सद्व्रतम्” इति श्रुतेः । स्वयमागतां परिहर्तुमशक्यं चेति धर्मं वीक्ष्य शुक्रवचः स्मरन्नपि काले दिष्टमेव दैवमेवात्र कारणमिति निश्चित्याऽभ्यपद्यत तामितिशेषः ॥ ३२—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रत्यनीकं प्रतिकूलं शापमयं विवक्षितं यस्य तादृशम् ॥ २६—३१ ॥

दिष्टमीश्वरेच्छादिष्टं प्रेरितमेवाऽभ्यपद्यत विचारितवान् ॥३२—३३॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

कापोतीमुञ्छवृत्तिम् ॥ २५ ॥

प्रत्यनीकेषु देवेषु विवक्षितम् असुरान् परित्यज्य युष्मानेव जयं प्रापयामीत्यादिकं वक्तुमिष्टं यस्य तथाभूतं तम् आशाय ॥२६-२७॥

तथेति देवयान्याः पादयोः पतित्वा वृषपर्वण्यवस्थिते सति मनोगतमेव प्राह-प्रकटमुवाच सानुगा सखीसहिता शर्मिष्ठा मामनुयात्विति ॥ २८ ॥

ततः शुक्रात् कुपितात् त्राणामसुराणां सङ्कटं वीक्ष्य तथैव तस्मात् प्रसन्नात् अर्थस्य स्वप्रयोजनस्य गौरवं च वीक्ष्य दासवत् दास इव वृषपर्वा पर्यचरत् ॥ २९ ॥

कदाचिदपि तल्पे न धाः न धेहि न धास्यसीत्यर्थः ॥ ३०-३१ ॥

धर्मविदिति अपत्यार्थमृतुकाले प्रार्थ्यमानत्वात्तस्याः कामपूरणं धर्म एवेति जानन् शुक्रवचश्च शर्मिष्ठासङ्गप्रतिषेधकं स्मरन् दोषावमाननिश्चयोऽपि दिष्टं दैवप्रापितं सङ्गमेव प्राप ॥३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रत्यनीके जघन्ये काले विवक्षितम् आपद्गणाद्रक्षकमित्यर्थः ॥ २६ ॥

स्वार्थं मन्यमान इव सः व्याख्य अब्रवीत् ॥ २७ ॥

तथेत्युक्तिरुक्ते तथास्तु इति निश्चिते प्रतिज्ञाते सति देवयानी मनोगतमाह—पित्रा दत्ता यत्रौ यत्र यास्ये तत्र सानुगा शर्मिष्ठा मामनुयात्विति ॥ २८ ॥

तस्मिन् शुक्रवियोगे त्राणां सङ्कटं वीक्ष्य तस्मिन् शुक्रे सति त्राणामर्थस्य गौरवं च वीक्ष्य स्त्रीसहस्रैः सह ‘दासवत् पर्यचरत् ॥ २९ ॥

हे राजन् ! शर्मिष्ठां तल्पे शय्यायां न धाः त्वयैषा नोपभोक्तव्येत्यर्थः ॥ ३०—३१ ॥

काले ऋतुकाले अपत्यार्थं राजपुत्र्याऽर्थितः तस्याः ‘कामपूरणं धर्ममवेक्ष्य शुक्रवचश्च स्मरन् दिष्टं दैवं वावेक्ष्य अत्र दैवं हेतुरिति विचार्य अभ्यपद्यत तामुपजगाम ॥ ३२ ॥’

---

भाषाटीका।

वृत्तांत सुनकर भगवान् शुक्राचार्य पुरोहितपने की निन्दा कापोती ( उंछ ) वृत्ति की बड़ाई करते हुए मन में दुःख पाकर पुत्री सहित पुर से चल दिये ॥ २५ ॥

वृषपर्वा ने समझा कि यदि गुरूजी चले जांयगे, तो हमारे शत्रुओं ( देवताओं ) की जीत कराने का अभिप्राय मन में रखेंगे इस लिये मार्ग ही में आकर चरणों में गिर पड़ा और चरणों में माथा धरकर गुरूजी को प्रसन्न करने लगा ॥ २६ ॥

तब भृगुवंशी भगवान् शुक्राचारी जी अर्द्धक्षण कोप करने वाले रहे शीघ्र प्रसन्न होकर शिष्य से बोले, कि-हे राजन् इस हमारी पुत्री को प्रसन्न करलो हम इसको नहीं छोड़ सके हैं ॥ २७ ॥

वृषपर्वा ने जब इस बात को स्वीकार करी और पूंछी तब देवयानी अपने मन में जो बात रही सो बोली, कि—पिता की दी हुई जहां मैं जाऊँ तहाँ सखियों सहित शर्मिष्ठा मेरे पीछे ( बांदी होकर ) जावे ॥ २८ ॥

वृषपर्वा ने शुक्राचारीजी के जाने में अपने लोगों का सङ्कट देखा और उनके रहने में अर्थ का गौरव देखा, तब शर्मिष्ठा हजार सखियों सहित दासी की तरह देवयानी की परिचर्या करने लगी ॥ २९ ॥

तब शुक्राचारीजी नहुष के पुत्र ययाति राजा को शर्मिष्ठा सहित अपनी पुत्री को देकर बोले, कि-हे राजन् ! शर्मिष्ठा को कभी शय्या पर नहीं लेना, अर्थात् उसके साथ कभी गमन नहीं करना ॥ ३० ॥

शुक मुनि बोले, कि-हे राजन् ! किसी समय शर्मिष्ठा ने शुक्र पुत्री देवयानी को पुत्रवती देखकर अपने ऋतु होनेपर सखी के पति से एकांत में कहकर प्रार्थना करी ॥ ३१ ॥

जब अपत्य ( सन्तान ) के निमित्त राजपुत्री, ने राजा से प्रार्थना करी तब धर्मवित् राजा ययाति शुक्राचारी के वचन को स्मरण कर के भी धर्म देखकर प्रारब्ध से उस शर्मिष्ठा के साथ सङ्गम को प्राप्त हुए ॥ ३२ ॥

गर्भसम्भवमासुर्या भर्तुर्विज्ञाय मानिनी ।
देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥
प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् ।
न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥
शुक्रस्तमाह कुपितः स्त्रीकामाऽनृतपूरुष ! ।
त्वां जरा विशतां मन्द ! विरूपकरणी नृणाम् ॥ ३६ ॥

ययातिरुवाच ।

अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् ! दुहितरि स्म ते ।
व्यत्यस्यतां यथाकामं वयसा योऽभिधास्यति ॥ ३७ ॥
इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ।
यदो ! तात ! प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥
मातामहकृतां वत्स ! न तृप्तो विषयेष्वहम् ।
वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥

यदुरुवाच ।

नोत्सहे जरसा स्थातुमन्तराप्राप्तया तव ।
अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आसुर्याः शर्मिष्ठायाः भर्तुः सकाशात् ॥ ३४ ॥

उपमन्त्रयन्प्रसादयन् ॥ ३५ ॥

विकृतं रूपं करोतीति तथा ॥ ३६ ॥

ते दुहितरि कामैरद्याप्यतृप्तोऽस्मि कामानां भोगैरिति वा शुक्र आह तर्हि योऽभिधास्यत्यभितो धारयिष्यति तस्य वयसा यथाकामं व्यत्यस्यतां यथेच्छं जराव्यत्ययं यातु व्यत्ययं नीयतामिति वा यद्वा व्यत्यस्यतेति छेदः तां जरां व्यत्यस्य व्यत्यासङ्क्रमयेत्यर्थः ॥ ३७ ॥

इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ॥३८-४०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुमिति । तत्र देवयानी यदुन्तुर्वसुं च द्वौ पुत्रौ व्यजायत सुषुवे वार्षपर्वणी वृषपर्वणो दुहिता शर्मिष्ठा तु द्रुह्युमनुं पूरुं चेति त्रीन् सुतान् व्यजायत ॥ ३३ ॥

गर्भसम्भवमिति । ततो मानिनी देवयानी भर्तुस्सकाशादेव आसुर्याः शर्मिष्ठाया गर्भसम्भवं विज्ञाय क्रोधमूर्च्छिता पितुः काव्यस्य गेहं जगाम ॥ ३४ ॥

प्रियामिति । प्रियां देवयानीमनुगतः कामी ययातिः तां पादसंवाहनादिभिः पादग्रहणादिभिः सान्त्ववचनैश्चोपमन्त्रयन् प्रार्थयमानोऽपि तां प्रसादयितुं न शेके न बभूव ॥ ३५ ॥

शुक्र इति । तदा तं ययातिं कुपितः शुक्र आह—किमिति ? हे स्त्रीकाम ! हे अनृतपूरुष ! पुरुषा कृत्यापशानृतरूप, हे मन्द दुर्बुद्धे ! नृणां विरूपं विकृतरूपं करोतीति तथा सा जरा त्वां विशताम् आविशतु इति ॥ ३६ ॥

अतृप्त इति । एवं शप्तो ययातिराह—अतृप्तोऽस्मीति, हे ब्रह्मन् ! ते तव दुहितरि कामानां कामैरहमद्याप्यतृप्तोऽस्मि कामानां भोगैरिति शेषो वा, ततः शुक्र आह । व्यत्यस्यतामिति. योऽभिधास्यति जरामहं ग्रहीष्यामीत्यभिधास्यति तस्मिन् वयसा तस्य वयसा यथाकामं यावत्कामं व्यत्यस्यतां जरेति शेषः । जरां तस्मै दत्वा तद्वयो गृहाणेत्यर्थः ॥ ३७ ॥

इतीत्थं लब्धं व्यवस्थानं जराव्यवस्थितिर्येन स ययातिर्ज्येष्ठं पुत्रं यदुमवोचत, किमिति ? हे यदो हे तात ! इमां तव मातामहेन कृतां प्रहितां जरां प्रतीच्छ प्रतिगृहाण निजं त्वदीयं वयो देहि विषयेष्वहं न तृप्तोऽस्मि अतो भवदीयेन त्वदीयेन वयसाऽहं कतिचिद्वर्षाणि रंस्ये इति ॥ ३८-३९ ॥

यदुराह—नोत्सहे इति । अन्तरावयोर्मध्ये प्राप्तया जरसा जरया

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्थातुमहं नोत्सहे, अनुत्साहे हेतुमाह-ग्राम्यं सुखमविदित्वा अननुभूय पुमान् शान्तिं वैराग्यं नोपैति अननुभूतग्राम्यसुखस्त्वमेव शान्तिं नोपैमि अहं त्वनासादितग्राम्यसुखः कथं शान्तिमुपेयामित्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आसुर्योः शर्मिष्ठायाः ॥ ३४ ॥ ३५ ॥

हे स्त्रीकाम ! अनृतपुरुष ! असत्यवादिपुरुषज्ञानी पुरुषो नेति वा त्वां जरा विशत इति लट् लोडर्थे जरा त्वामाविशतामिति शापमदादित्यर्थः ॥ ३६ ॥

ते तव दुहितरि कामानां शब्दादिविषयाणां स्मरणे नातृप्तोऽस्मि अलम्बुद्धिं न प्राप्तोऽस्मि "स्मृतौ वृत्ते निर्वेश इम स्वः स्वर्गपरलोकयोः" इति अत एवतनुग्रहः कर्तव्य इत्याह-व्यत्यस्येति। यो महां वयोऽभिदास्यति तस्मिन्नेतां जरां व्यत्यस्य संक्रमय्य तद्वयसा यथाकामं भुङ्क्ष्व इति ॥ ३७ ॥

तर्हि तथास्त्विति लब्धव्यवस्थानो ययातिर्ज्येष्ठं पुत्रमुवाच प्रतीच्छ गृहाण ॥ ३८ ॥

मातामहेन शुक्रेण कृतां स्वये सुरतमनुभवामि ॥ ३९ ॥

कुतो नोत्सहे इति तत्राह-अविदित्वेति। अविदित्वा अननुभूय वैतृष्ण्यं वैराग्यम् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कामानामिति तृप्त्यर्थानां करणे षष्ठी चेति वार्तिकात् ॥३७॥

इतीति युग्मकम् ॥ ३८—४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

व्यजायत व्यजनयत् ॥ ३३ ॥

भर्तुः सकाशाद्गर्भसम्भवमाज्ञायेति पूर्वपूर्वमस्यसमादृद्वाद्यज्ञायादिकाधेन जातस्यासीदिति भावः ॥ ३४ ॥

उपमन्त्रयन् सान्त्वयन् ॥ ३५—३६ ॥

कामानामिति "नाग्निस्तृप्यति काष्ठानाम्" इतिवत् षष्ठी ते दुहितरीति मदङ्गया त्वत्शापोऽयं तव दुहितुरपि फलित इति व्यञ्जितं शुक्रोऽपि विमृश्य प्रसीदन्नुवाच यथेदं जरा वयसा यौवनेन व्यत्यस्यतां विनिमीयताम्; ननु, जरां गृहीत्वा विनिमयेन यौवनं कः खलु दास्यति ? तत्राह—योऽभिधास्यति वः पुत्राधिकस्त्वयि स्नेहेनाभितो धास्यति जरां धारयिष्यति, यद्वा त्वमेव विनिमयं सर्वान् ज्ञापय तेषु मध्ये योऽभिधास्यति यौवनं दत्त्वा जरामेवाऽहं गृह्णामीति वदिष्यतीत्यर्थः ॥ ३७—३९ ॥

अन्तरा यौवनमध्ये एव कुतः संविविदित्वेत्यादि 'अयमर्था-र्थः मम विविधित्सितभगवद्भक्त्यानुकूलं विषयवैतृष्ण्यमपेक्षितं वर्तते तच्च भोगबाहुल्यं विना प्रायो न भवेत् तत्र यद्यपि कालविलम्बे सति त्वं स्वीयां जरां गृहीत्वा मद्यौवनं दास्यसीति जानामि तदपि निरन्तरातिहरिभजनसोत्कण्ठस्य मम कालविलम्बस्यासह्यत्वात् पितुरपि तवैवमाज्ञां न पालयाम्यत्र यदुवंशज्ञत्वरिष्यति अत एव यदोर्भ्रं धर्मशीलस्येति राज्ञा दशमे वक्ष्यते परमधर्मापेक्षया पितुराज्ञापालनलक्षणधर्मस्य प्राकृतस्य सनकादिभिरिव तेन त्यागात् यत एव तत्तुष्टस्तद्वंशे भगवान् स्वयमवततार "यदोः प्रियस्यान्ववाये" इति कुन्तीस्तुतिश्च यातूक्तश्लोके अधर्मज्ञा इति शुक्रोक्तिः सा तु तुर्वस्वादीन् प्रत्येवेति ज्ञेयम् ॥ ४०—४२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

व्यजायत सुषुवे ॥ ३३—३४ ॥

उपमन्त्रयन् प्रसादयन् ॥ ३५—३६ ॥

ययातिराह-हे ब्रह्मन् ! तव दुहितरि कामानां कामैरद्याप्यतृप्तोऽस्मि शुक्र आह तर्हि योऽभितो धास्यति जरां धारयिष्यति तस्य वयसा तारुण्येन कामं यथेच्छं व्यत्यस्यतां व्यत्ययं नीयतां जरेति शेषः ॥ ३७ ॥

इत्येव लब्धं व्यवस्थानं तारुण्यार्थमालम्बनं येन सः ॥३८-३९॥

अन्तरावयोः मध्ये वैतृष्ण्यं वैराग्यं मुक्तिसाधनमित्यर्थः ॥४०॥

---

भाषा टीका।

देवयानी, यदु और तुर्वसु इन दो पुत्रों को उत्पन्न करती हुई। और वृषपर्वा की पुत्री शर्मिष्ठा ने द्रुह्यु अनु और पुरु ये तीन पुत्र उत्पन्न किये ॥ ३३ ॥

मानवती देवयानी शर्मिष्ठा के विषे अपने भर्त्तासे गर्भ का सम्भव जानकर बड़े क्रोधसे मूर्छित होकर पिता के घर को चली गई ॥ ३४ ॥

कामी ययाति प्रियाके पीछे गया और बहुत प्रकार की बातों से समुझाई परन्तु पादसंवाहनादि से भी राजा देवयानीको प्रसन्न करने को समर्थ न ही होते हुए ॥ ३५ ॥

शुक्रने इस वृत्तान्तको सुनकर कुपित होकर ययाति को शाप दिया कि—हे स्त्रीकाम ! हे अनृत पुरुष ! अर्थात् झूठ बोलने वाले पुरुष हे मन्द ! तेरे शरीर में जरा अवस्था प्रवेश करो, जो मनुष्यों को विरूप करने वाली है ॥ ३६ ॥

इतना सुनकर ययाति बोले, कि—हे ब्रह्मन् ! मैं आपकी पुत्री में विषयभोगों से अभी तृप्त नहीं भया हूं। तब शुक्राचार्य बोले, कि जो जरा अवस्था को धारण कर सके उसकी अवस्था से अपनी अवस्था का भले ही बदला करलेना ॥ ३७ ॥

राजा ययाति इस प्रकार की अवस्था की व्यवस्था को प्राप्त होकर ज्येष्ठ पुत्र यदुसे बोले, कि—हे वत्स ! हे तात ! इस जरा अवस्था को तुम लेलो और तुम अपनी निज युवा अवस्था हम को देदो ॥ ३८ ॥

तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ! ।
प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥
अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ।
न त्वमग्रजवद्वत्स ! मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥

पूरुरुवाच ।

को नु लोके मनुष्येन्द्र ! पितुरात्मकृतः पुमान् ।
प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥ ४३ ॥
उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः ।
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥
इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ।
सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृप ! ॥ ४५ ॥
सप्तद्वीपपतिः सम्यक्पितृवत्पालयन्प्रजाः ।
यथोपजोषं विषयान् जुजुषेऽव्याहतेन्द्रियः ॥ ४६ ॥
देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ।
प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥
अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥

भाषाटीका ।

हे वत्स! यह हमारी जरा अवस्था तुमारे मातामह (ननाजी) की करी हुई है, और अभी मैं विषयों से तृप्त नहीं भया हूं तुमारी अवस्था से कितने एक वर्षों तक रमण करूंगा ॥ ३९ ॥

यदुरुवाच ॥

यदु बोला, कि—बीच में प्राप्त होने वाली इस तुमारी जरा अवस्था को लेकर बैठने को मैं नहीं चाहता हुं। क्योंकि ? प्राप्य सुखों के बिना अनु भव किये पुरुष तृष्णा के अन्त को नहीं प्राप्त होता है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतो न धर्मज्ञाः अनित्ये च यौवने नित्यबुद्धयः ॥ ४१ ॥

त्वं जरां किं ग्रहीष्यसीत्यपृच्छत् प्रत्याख्यानं मा कृथा इत्याह न त्वमिति ॥ ४२ ॥

आत्मकृतः [illegible]देहकर्तुः प्रत्युपकारं कर्तुं को नु क्षमः ॥ ४३ ॥

तथापि पितुर्यच्चिन्तितं कुर्यात्स उत्तमः यस्तु प्रोक्तकारी स मध्यमः यस्त्वश्रद्धया कुर्यात्सोऽधमः अकर्ता पितुरुच्चरितं पुरीषप्रायः ॥ ४४ ॥

जुजुषे सेवितवान् ॥ ४५ ॥

यथोपजोषं यथाप्रीति जुजुषे ॥ ४६—४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इत्थमेव पित्रा ययातिना चोदितः तुर्वसुरनुश्च हे भारत ! यदुवद्द्रुह्युश्चेति शेषः । एवं त्रयः पुत्राः अनित्ये देहे नित्यबुद्धयः तथाभूता अनपत्यधर्मज्ञाः प्रत्याचख्युः ॥ ४१ ॥

अपृच्छदिति । ततो ययातिः पुत्रत्रयादपि वयसा ऊनं गुणैरधिकं तनयं पूरुमपृच्छत, किमिति ? हे वत्स ! त्वमग्रजवज्ज्येष्ठवन्मां प्रत्याख्यातुं नार्हसीति. ॥ ४२ ॥

एवमुक्तः पूरुराह, कोनित्यादि श्लोकत्रयम । हे मनुष्येन्द्र ! आत्मकृतः पितृदेहनोत्पादितः कोनु पुमान् लोके पितुः प्रतिकर्तुं प्रत्युपकर्तुं क्षमः प्रभुः, असामर्थ्ये हेतुं वदन् पितरं विशिनष्टि— यो यस्य पितुः प्रसादात्परमधिकमैहिकमामुष्मिकं च श्रेयो विन्दते लभते ॥ ४३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यपि कोऽप्युत्तमः तथा पितुश्चिन्तितमभिप्रेतं यः कुर्यात्स उत्तमः यथोक्तकारी तु मध्यमः अश्रद्धया यः कुर्यात् सोऽधमः अश्रद्धया ऽऽप्यकर्ता तु पितुरुच्चारितं पुरीषप्रायः ॥ ४४ ॥

इतीत्थं भाषमाणः पूरुः प्रीतः पितुर्जरां प्रत्यगृह्णात् स्वीयं वयो ददावेति शेषः । ततः सोऽपि ययातिरपि नृपः तद्वयसा पुत्रदत्तेन वयसा कामान् यथावत् जुजुषे सेवितवान् ॥ ४५ ॥

तदेव प्रपञ्चयति- सप्तद्वीपेति । सप्तद्वीपाधिपतिस्सन् प्रजाः पितृवत्पालयन् यथोपजोषं यथाप्रीति विषयान् जुजुषे, कथम्भूतः? अव्याहतानि इन्द्रियाणि यस्य तथाभूतः ॥ ४६ ॥

देवयानीति । प्रेयसी देवयानी प्रेयसो भर्तुः रहः एकान्ते परमां प्रीतिमुवाह नितरां प्रीतिविषया बभूवेत्यर्थः ॥ ४७ ॥

अयजदिति । तथा ययातिः भूरि दक्षिणा येषु तैः क्रतुभिः सर्वदेवतात्मशरीरकमाराधकार्तिहरं सर्ववेदाराध्यं तत्फलदं तल्लोकारं भगवन्तमयजत् आराधितवान् ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रत्याचख्युः निराकृतवन्तः अनित्ये क्षणभङ्गुरे ॥ ४१ ॥

वयसोनं कनिष्ठं ममाज्ञाम् ॥ ४२ ॥

आत्मकृतः शरीरोत्पादनकर्तुः परं लोकम् ॥ ४३ ॥

उच्चारितं गुदनिर्गतं मलम् ॥ ४४ ॥

जुजुषे बुभुजे ॥ ४५ ॥

यथोपजोषं यथासुखम् ॥ ४६ ॥

प्रेयसः भर्तुः ॥ ४७ ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्य प्रसादात् प्रसादेन प्राप्तात् मनुष्यदेहात् परं परमेश्वरमपि विन्दते लभते पुण्डरीकवद्यस्य प्रसादादेव वा ॥४३—४७॥

अयजदिति सर्वे वेदाः सर्वे देवाश्च स्वस्वकारणे शक्तिरूपेण प्रचुरतया यत्र तमित्यर्थः ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मकृतः देहोत्पादयितुः परं स्वर्गादिम् ॥ ४३ ॥

तदपि तवाज्ञां पालयन्नप्यहमुत्तमः पुत्रो न किन्तु मध्यम एवेत्याह—उत्तम इति पाठं । उच्चारितं मूत्रमलसदृश इति ॥ ४४ ॥ ४५ ॥

सप्तद्वीपपतिः भारतवर्षवर्त्तिनो ये नव द्वीपास्तेषामादिमान्तिमौ द्वीपौ विना ये सप्तसङ्ख्याद्वीपास्तेषां पतिरित्येव व्याख्येयमभिमन्तव्यत्वाद्यथानुरोधात् यथोपजोषं यथाप्रीति ॥ ४६-४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुस्तु हरिभक्तिद्वारा मुक्तिसाधनं तारुण्यमल्पस्वर्गादिसाधने पित्रर्थनेन नियोजयामास अतः परमधर्मज्ञः ते तु अनित्ये अनात्मनि देहे नित्यबुद्धयः आत्मत्वमतयः पारलौकिकसुखप्रदं पित्राज्ञापालनं परित्यज्य पितरं प्रत्याचख्युरतोऽधर्मज्ञा इत्यर्थः ॥ ४१ ॥

तदनन्तरं ययातिः त्वं जरां गृहीष्यसीत्यपृच्छत्, हे वत्स ! अग्रजा इव मां प्रत्याख्यातुं त्वं नार्हसीत्युक्तवांश्च ॥ ४२ ॥

आत्मकृतो देहकृतः ॥ ४३ ॥

चिन्तितं पित्रा विचारितं यः कुर्यात्स उत्तमः अकर्ता तु पितुरुच्चारितं पुरीषप्रायः ॥ ४४ ॥

स चेत्येवमात्मनो धर्मज्ञतां ख्यापयित्वा प्रमुदितः पितुर्जरां प्रत्यगृह्णात् ॥ ४५ ॥

यथोपजोषं यथाप्रीतिधर्माविरोधेनेत्यर्थः । विषयान् जुजुषे ॥ ४६—४८ ॥

---

भाषा टीका ।

इसी प्रकार पिताने तुर्वसु, द्रुह्य, और अनु से भी पूंछा, परन्तु हे राजन् ! अनित्य मे नित्यबुद्धि वाले धर्म के नहीं जानने वाले उन पुत्रों ने पिता को जवाब दे दिया ॥ ४१ ॥

तब राजा ने अवस्था में छोटा और गुणों में बड़ा ऐसे पुरुसे पूंछा । कि हे वत्स ! तुम अपने बड़े भ्राताओं के नाईं हमारी आज्ञा के खण्डन करने योग्य नहीं हो ॥ ४२ ॥

पुरु उवाच ॥

पुरु बोले, कि—हे मनुष्येन्द्र ! इस लोक अपने शरीर के देने वाले पिता के प्रत्युपकार करने को कौन पुरुष समर्थ होसक्ता है, जिस पिता की प्रसन्नता से पर ब्रह्मको पुरुष प्राप्त होता है ॥४३॥

उत्तम पुत्र तो बिना कहे पिता के चिन्तमन करके कार्य कर देता, और जो पिता के कहे हुए को करै वह मध्यम है, और बिना श्रद्धा के भी जो करदेवे वह अधम है और जो पिता के कहने पर भी कार्य न करे वह पिताका पुरीष प्राय ( मल सदृश ) है क्योंकि वह भी तो पिता ही के अंग से उत्पन्न है ॥ ४४ ॥

इस प्रकार बड़े प्रमुदित होकर पुरुने पिता की जरा अवस्था को ग्रहण करी, हे नृप ! ययाति ने भी पुत्र पुरुकी अवस्था से यथेष्ट भोग भोगे ॥ ४५ ॥

सप्त द्वीप के पति ययाति महाराज विधि पूर्वक प्रजा पालन करते हुए, अखंडित इन्द्रियों से यथा प्राप्त विषयों का सेवन करते हुए ॥ ४६ ॥

देवयानी भी दिन दिन प्रति मन, वाणी, देह, और वस्तुओं से एकांत में अपने प्रिय की प्रीति वाली होकर सदा प्रीय आचरण करने लगी ॥ ४७ ॥

राजा भी बहु दक्षिणा वाले यज्ञों से सर्वदेव मय और सब वेद मय हरि का भजन करते हुए ॥ ४८ ॥

---

यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ।
नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥
तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ।
नारायणमणीयांसं निराशीरयजत्प्रभुम् ॥ ५० ॥
एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ।
विदधानोऽपि नातृप्यत्सार्वभौमः कदिन्द्रियैः ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नानेव भाति यावदिन्द्रियप्रवृत्तिः तदुपरमे नाभाति स्वप्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ॥ ४९—५० ॥

मनःसुखं कामभोगम् कदिन्द्रियैः कुत्सितैः, पराङ्मुखैरिन्द्रियैः ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यजनप्रकारमेवाह—यस्मिन्निति द्वाभ्याम् । यस्मिन्नित्यस्य तमित्युत्तरेणान्वयः । यस्मिन्वासुदेवे इदं कृत्स्नं चिदचिदात्मकं जगत् विरचितं व्योम्नि जलदपङ्क्तिरिव नानेव भाति नाभाति च पाल्यते संह्रियते चेत्यर्थः । यस्मिन्निति आधारत्वद्योतनपर्यायेण विरचिते विरचितमित्यस्य येनेति शेषः । अनेन सृष्टिरुक्तं, नानाभाति इत्यनेन पालनदशायां देवमनुष्यादिनामरूपभेदेन बहुधा प्रतीतिरुक्ता, इव शब्देन वस्तुतः स्थूलचिदचिच्छरीरकं ब्रह्मैकमेव विश्वरूपेणावस्थितमिति सूच्यते. अनेनैव सूक्ष्मचिदचिच्छरीरकस्य ब्रह्मणो जगदुपादानत्वमपि कार्यं कारणस्यैव वस्तुनः कार्यात्मनावभासमानत्वात् यस्मिन्नानाभाति इत्यनेन जगदधिकरणत्वोक्त्या च तद्रूप्यते जगदधिकरणस्यैव जीयमानोपादानत्वदर्शनात् यस्मिन् आधारे नानाभातीत्यनेनान्तःप्रविश्य धारकत्वेन प्रशासनमेव पालनमिति सूचितम्. प्रपञ्चं विशिनष्टि—स्वप्नमायामनोरथ इति । स्वप्नमायामनोरथतुल्य इत्यर्थः । अत्र स्वप्नदृष्टान्तत्वेनास्थैर्यं मनोरथदृष्टान्तेन मनोऽनुकूलत्वं च प्रतीतिकेऽभिप्रेतम्. अतएव दृष्टान्तत्रयमन्यथा वैयर्थ्यप्रसङ्गात् एकेनैव विवक्षितसौकर्यलाभात् ॥ ४९ ॥

तमिति । तमेवम्भूतं वासुदेवमाध्यममहार्हतिमित्य पौष्कलवाभयं गुहाशयं हृदयकुहरे वसन्तमणीयांसमणोर्जीवादप्यणुं तदन्तःप्रवेशयोग्यतया ततोऽपि सूक्ष्ममिति भावः । नारायणं जीवसमूहानां प्राप्यं प्रापकमाधारं च हृदि विन्यस्य ध्यानेन संनिहितं कृत्वा इत्यर्थः । निराशीः फलाभिसन्धिरहितः प्रभुर्ययातिरयजत् ॥ ५० ॥

एवमित्थं मनः षष्ठं येषां तैः कुत्सितैरिन्द्रियैर्वर्षसहस्राणि मनःसुखं कामभोगं विदधानः कुर्वन्नपि सार्वभौमो ययातिर्नातृप्यत् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वप्नमायामनोरथवदनित्यफलमस्वतन्त्रञ्च ॥ ४९ ॥
निराशीः कृष्णचान्द्रायणादितपोऽभिलाषरहितः ॥ ५० ॥
कदिन्द्रियैः दुष्टेन्द्रियैः ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इदं जगत् यस्मिन्नेव सर्गाभवे विरचितं येनैव सृष्टं स्थितौ नानेव भाति न तु नानैव कार्यरूपेणैकत्वात् प्रलये तु तत्रैव कारणरूपेण प्रविष्टत्वात् नाभाति बहिर्व्यक्तं भवति यथा जगत् तथैव स्वप्नो मायामनोरथश्चेत्यर्थः । द्वन्द्वैक्यवत्त्वविवक्षया तत्र सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकवचनं, समाहारत्वेनाविवक्षितत्वात् न क्लीबत्वञ्च "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" (१।२।२७।) इति वत् ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वासुदेवं सर्वावासम् एवमपि गुहाशयं सर्वज्ञानागोचरं किन्तु नारायणं सर्वजीवप्रवर्त्तकं तथाऽप्यणीयांसं दुर्ज्ञेयं तथाभूतमपि भक्त्या हृदि विन्यस्य मनस्यावेश्याभजत् प्रभुस्तादृशोपासनया क्रमात् सार्वं प्राप्तः तादृशत्वे हेतुमाह—निराशीः निष्काम इति। एवमपि झटिति वैराग्योत्पत्तौ प्रतिबन्धकमाह एवमिति ॥ ५०—५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यस्मिन्नधिष्ठाने इदं जगन्नानैव कारणरूपेण तेनैवैक्याच्च तु वस्तुनो नानेत्यर्थः। अत एव प्रलये तत्र प्रविष्टमेवाभाति न बहिर्व्यक्तीभवति स्वप्नमायामनोरथ इत्यस्यैवैं दृष्टान्तत्रयं सर्वो ह्यन्धो विभाषैकवच्च प्रतीत्येकवचनम् ॥ ४९ ॥

वासुदेवमिति सर्वत्रैवासौ वसतीत्यतः प्रवासाभावः यतो गुहाशयमन्तःकरणे शेते न वाम्यः श्यान इव नारं जीवसमूहम् भवते जानाति न च जीवसमूहस्तं जानातीत्याह, अणीयांसं दुर्ज्ञेयं न च बहिर्विषयलम्पटोऽपि यथानितं मनसा विषयलम्पट इत्याह—निराशीः प्रभुमिति दास्यभावाकाङ्क्षी ॥ ५० ॥

विषयलाम्पट्याद् कदिन्द्रियैः ॥ ५१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरचितं स्वोपादानकं अकृतम् इदं विश्वं "तदात्मानं स्वयमकुरुत" "तदैक्षत बहुस्याम्" इत्यादिश्रुतेः अधिष्ठाने विकारत्वेऽपि जलदावलिरिव वियत्यवकाशं अविरोधितवाऽस्ति तथ स्वात्मकतया तन्निरपेक्षसत्ताकं भवति कार्यस्य कारणनिरपेक्षस्य सत्ताभावाभावात् तथाप्यत्यन्त दृश्या नानेव वासुदेवे पृथक् नाना सत्ताप्रकाशमाभाति प्रलयवेलायां तु प्रकृतिकाविलयाभावाभाति अत एवानित्यत्वात् स्वप्नमायामनोरथ इव ॥ ४९ ॥

अतो वासुदेवं सर्वाधारं सर्वज्ञोवाद्यगुणं नित्यानन्दानन्दरूपम् अभजत् ॥ ५० ॥

बनः सुखं मनोग्राह्यं परिच्छिन्नं काममोगं कदिन्द्रियैः कुत्सितैरिन्द्रियैः विदधानः कुर्वन्नपि नातृप्यत् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाऽध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषा टीका ।

जिसमें यह विश्व ऐसे रचा गया है कि—जैसे गगन में मेघों की पंक्ति और स्वप्न माया मनोरथ के सदृश नाना प्रकार का भान भी होता है और नहीं भी भान होता है ॥ ४९ ॥

इस प्रकार के उन परमात्मा अंतर्यामी वासुदेव को हृदय में धरकर, अणुसे भी अणु ऐसे उनही अपने प्रभु श्री नारायण को निष्काम होकर भजन करते हुए ॥ ५० ॥

इस प्रकार हजारहों वर्ष तक वह सार्वभौम राजा ययाति मन छठवां जिन में ऐसी हुए इन्द्रियों से मन को सुख रूप ऐसे काम भोगों को भोगते हुए भी तृप्ति को नहीं प्राप्त होते हुए ॥ ५१ ॥

इति श्रीमद्भागवत नवम स्कन्ध में अष्टादश अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १८ ॥

---

इतिश्री मद्भागवते महापुराणे नवमस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

—०:*:०—

## ॥ एकोनविंशोऽध्यायः ॥

—○:○:○—

॥ श्रीशुक उवाच ॥

स इत्थमाचरन् कामान् स्त्रैणोऽपह्नवमात्मनः ।
बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥
शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ।
धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥ २ ॥
बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ।
ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥
तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ।
व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसि ॥ ४ ॥
सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल ।
तस्या वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ॥ ५ ॥
पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ।
स एकोऽजवृषस्तासां बह्वीनां रतिवर्द्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥
तमेव प्रेष्ठतमया रममाणमजाऽन्यया ।
विलोक्य [1]कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥ ७ ॥
तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ।
इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे ययातिः स्वं चेष्टितं बस्तजोपमम् ।
देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ १ ॥
भुक्तभोगामजां हित्वा बस्तवद्भूतमात्मनः ।
विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ २ ॥

कामानाचरन्नपह्नवं [illegible]ः गाथामितिहासम् ॥ १ ॥

मद्विधेन [illegible]नाचरितामनुष्ठिताम् मद्विधस्याचरितं यस्यामिति वा [illegible] ग्रामनिवासिनः कामिनो मद्विधस्याऽऽचरितं वने [illegible]ना धीराः शोचन्ति तदेव गाथां शृणु ॥ २ ॥

आत्मानमनुलक्ष्याह—बस्त इति । प्रियामनुलक्ष्याऽऽह—अजामिति वने संसारे प्रियं विषयम् ॥ ३ ॥

रोधसि तटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थं निर्गमाय, मार्गं व्यधत्त ॥ ४ ॥

बह्व्य इति शर्मिष्ठाप्रमुखाः कामयामासुः कान्तं प्रति कामिनीः कामवत्यः ॥ ५ ॥

पीवानं पुष्टम् श्मश्रुलं श्मश्रुबहुलम् रतिसमर्थमित्यर्थः । मीढ्वांसं रेतःसेक्तारम् याभे कोविदमभिज्ञम् एव प्रेष्ठम् नावबुध्यत नान्वबुध्यत ॥ ६ ॥ ७ ॥

---

(१) कूपसंविग्ना इति वीर० विज० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वामिनमिति शुक्राभिप्रायेणाऽऽह ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । सर्वयातिरिक्तं स्त्रैणः स्त्रीवश्यः कामान् चरन् भवन् अनुभवन्निति भावः । कदाचिदात्मनोऽपहृतमपहारं बुध्वा "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते" इत्युक्तविधमपहृतं ज्ञात्वा निर्विषया: निर्वेदं प्राप्तः प्रियायै देवयान्यै इमां वक्ष्यमाणां गाथामात्मवृत्ति-प्रायवादिकां कथामगायत कथयामास ॥ १ ॥

तामेवाह–श्रृणु यत इति । हे भार्गवि ! भुवि मद्विधेन मादृशेनाचरितां मद्विधस्याचरितं वक्ष्यामीति या तामम्रं मया वक्ष्यमाणां गाथामिति-हासं श्रृणु यस्य मद्विधस्य ग्रामवासिनो गृहस्थस्याचरितं वने स्थिता धीराः जितेन्द्रियाः कृपया शोचन्ति ॥ २ ॥

वस्त इति । अन्यापदेशेनात्मवृत्तिप्रतिपादनार्थं प्रवृत्तोऽयमितिहासः एकोऽसहायः कश्चिद्वस्तो मेषो वने आत्मनः स्वस्य प्रियं विचिन्वन् कूपपतितां कर्मवशगां काञ्चिदजां ददर्श, वस्त इत्यनेनात्मा विवक्षितः, वन इत्यनेन संसारः, प्रियमित्यनेन शब्दादिविषयः, अजामित्यनेन देवयानी एवं यथा सम्भवमुत्तरत्राप्यूह्यम् ॥ ३ ॥

तस्या अजायाः स वस्तः उद्धरणोपायं व्यचिन्तयत् श्रोत्रीयादिप्रदानेनोद्धरणोपायं चिन्तितवानिति भावः । उपायमेव दर्शयन्नाह–रोधसि तटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थं निर्गम-मार्गमुत्तारणमार्गमिति यावत् व्यधत्त कृतवान् विषाणाग्रेणो-त्यनेन कनिष्ठादिकं विवक्षितम् ॥ ४ ॥

ततः सा सुश्रोणी अजा कूपादुत्तीर्य तमेव वस्तं पतिं चकमे किलेत्यात्मवृत्तान्तप्रख्याभिज्ञापकः ततस्तया अजया वृतं वस्तं समुद्वीक्ष्य बह्व्योऽन्या अजाः कान्तं प्रति कामिनीः काम-वत्यो बभूवुः बह्व्योऽजा इति शर्मिष्ठाप्रमुखा विवक्षिताः कथंभूतं पीवानं परिपुष्टसर्वावयवं श्मश्रुलं रतिसमर्थमित्यर्थः । मीढ्वांसं रेतस्सेक्तारं याभे मैथुने कोविदमभिज्ञम् अजामिवृतः स एक एव वस्तस्तासां बह्वीनामजानां रतिवर्द्धनः काम एव ग्रहः पिशाचः तेन ग्रस्तः केवलं रेमे न त्वात्मानमबुध्यत देहविल-क्षणमात्मस्वरूपं नानुसंहितवान् इति भावः । मेषपक्षे भागास्त्र-मर्यावयं नावबुध्यतेत्यर्थः ॥ ५ ॥ ६ ॥

तमिति । एवमन्यया प्रेष्ठतमया अन्यया अजया सह रममाणं तं वस्तं विलोक्य तेन पूर्वं कूपादुद्धृता अजा रूपसंविप्रा मत्तो रूपवती मन्यामजां परिगृह्य मां त्यजत्ययमिति भीता सती वस्तस्य तत्कर्म अजान्तरपरिग्रहरूपं नामृष्यत् नासहत ॥ ७ ॥

तं वस्तं दुर्हृदं वञ्चुत इति शेषः । सुहृद्रूपं सुहृदाभासम् अत एव स्वयं सौहृदं यस्य कामिनमत एवेन्द्रियारामं नतु धर्मार्थ धारवेतिशेषः स्वामिनं पतिं त्यक्त्वा दुःखिता ययौ ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यापदेशेन स्ववृत्तान्तं शिक्षाकरणत्वेन स्वभार्यायै कथयति स इत्थमिति । स्त्रैणः स्त्रीजितः स ययातिरित्थम् आत्मज्ञानमाद्य-हेतून् कामान् विषयान् आचरन् भुञ्जानः आत्मनोऽपन्हुतं नित्यसुख-हानिलक्षणानर्थं विज्ञाय निर्विषयो विरक्त एतां वक्ष्यमाणत्वेन बुद्धिसन्निहितां गाथां स्वकीयवृत्तान्तरूपामगायतेत्यन्वयः ॥ १ ॥

भार्गवि ! भृगुकुलजाते ! मद्विधैः मादृशैः स्त्रीजितैः पुरुषैः आच-रितां वने धीराः निवृत्तिमार्गलक्षणे स्थिताः मुक्तसङ्गाः ज्ञानिनो यस्य ग्रामवासिनो गृहस्थस्याचरणमनुशोचन्ति" अहो लोकस्य मौढ्यमिति परिखिन्ना भवन्तीत्यर्थः । तस्य मम सदृशेराचरितामित्यर्थः ॥ २ ॥

वस्तोऽजः प्रियं स्त्रीजनं कूपे संसारलक्षणे अजाजशब्देन प्रकृति-पुरुषावुपलक्ष्येते ॥ ३ ॥

तीर्थं कूपजले अवतारणके वा निर्गमे किञ्चिद्वतीर्थं विषाणा-ग्रेणोद्धृत्य रोधसि कूपतीरे व्यधत्त तामिति शेषः—

"तीर्थं मन्त्राद्युपाध्याये शास्त्रेष्वम्भसि पावने ।
पात्रोपायावतारेषु स्त्रीपुष्पे योनिवह्नयोः" ॥

इति यादवः । उपायं वा निर्गमे उद्धरणोपायं चक्रेत्यर्थः ॥ ४ ॥

कान्तविषयः कामो यासामस्तीति कान्तकामिन्यः ॥ ५ ॥

श्मश्रुलं बहुलश्मश्रुयुक्तं मीढ्वांसं रेतःसेकसमर्थं याभकोविदं यावाजभक्षणपाटवोपेतं यावः यावकः कुल्माषः तद्भक्षणे पाक इति वा "यावः केवलकुल्माषे बलकेतोपवर्णिते" इति यामको विदमिति पठित्वा मैथुनकुशलमिति व्याख्यानं मीढ्वांसमित्यनेन गतार्थत्वात् पुनरुक्तता असम्प्रदायकता चात्र प्रसज्येत. मेजं मेषमित्यपि तद्गुज्ञेजशब्दस्य मेषवाचित्वाश्रवणात् मीढ्वांसमिति पदं विवृण्वन्नाह–स एक इति ॥ ६ ॥

रूपसंपन्ना रूपगुणसम्पन्ना कुचसंवृतेति पाठे कुचभरसन्नत-मध्या अजयतमया प्राप्तुं योग्यतमया अन्ययाऽजया एवं रममाणं तं विलोक्य वस्तस्य मम तत्कर्म अन्यासक्तिलक्षणं नामृष्यदि-त्यन्वयः ॥ ७ ॥

अनेनात्मकटाक्षीकारेण स्वामिनं शुक्रमित्येषोऽर्थः सूच्यते अन्यत्राजम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स इति सार्द्धकम् ॥ १—५ ॥

याभे मैथुने कोविदम् ॥ ६—११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृत[illegible]र्शिनी ।

ऊनविंशे वस्ताजगाथा [illegible]

विरज्य प्राप कृष्णं [illegible]या ॥

कामान् आचरन् उपभुञ्ज[illegible] ॥

मद्विधस्याचरितमिवाचरितं [illegible]मिवा-

सिनो मद्विधस्य चरितं वने [illegible]ति

समासे गुणीभूतानामपि पदा[illegible] ॥

वस्तश्छागः प्रतिवोत्त्या यथा[illegible]र प्रियं

विषयसुखम् अजां देवयानीम् ॥ ३ ॥

सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ।
कुर्वन्निडविडाकारं नाशक्नोत्पथि सन्धितुम् ॥ ९ ॥
तस्यास्तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ।
लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥ १० ॥
सम्बद्धवृषणः सोऽपि ह्यजया कूपलब्धया ।
कालं बहुतिथं भद्रे ! कामैर्नाद्यापि तुष्यति ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रोधसि तटे विषाणाग्रेण मृदादिकमुत्कृत्य तीर्थनिर्गममार्गं व्यधत्त ॥ ४ ॥

अजाः शर्मिष्ठाद्याः कान्तं कामयितुं शीलं यासां ताः कान्ता कामिन्यः तमेव कामयामासुः ॥ ५ ॥

मीढ्वांसं रेतःसेक्तारं याभे मैथुने कोविदं पण्डितम् ॥ ६ ॥

अन्यया अजयेत्याहिताग्न्यादित्वात् परनिपातः कूपसंविग्ना देवयानी ॥ ७ ॥

स्वामिनमिति शुक्राभिप्रायेणोक्तौ त्रिरुस्वामितिकृद्दोष आर्षत्वात् सोढव्यः "स्वामिन्नैश्वर्ये" ( ५।२।१२६। ) इति पाणिनिस्मरणात् स्वामिशब्दोऽपि न केवलं पतिपर्यायो दृष्टः यद्वा स्वामिनं तं ययातिमुत्सृज्य ययौ ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ययातेः सर्वतो विरक्तस्य भगवद्भजनेन भगवत्प्राप्तिमाह स इत्थमित्यूनाविंशेन । स्त्रैणः स्त्रीवश्यः कामान् आचरन् उपभुञ्जानः अपहृतं ज्ञानिम गाथामितिहासम् ॥ १ ॥

वस्य ग्रामनिवासिनः विषयासक्तस्य गाथां वने धीराः पशुवद्ययमायुर्व्यर्थं करोतीत्येवं शोचन्ति तस्य मत्प्रियेनाचरिता-मनुष्ठितामम्ं गाथां शृणु ॥ २ ॥

प्रियं हितम् ॥ ३ ॥

कामी तां कामयमानः तस्याः उद्धरणोपायं विचिन्तयन् रोधसि कूपतटे विषाणाग्रेणोत्कृत्य उद्धरणार्थं तीर्थं निर्गममार्गं व्यधत्त कृतवान् ॥ ४—५ ॥

सा च पीवानं पुष्टं श्मश्रुलं तरुणमित्यर्थः । अत एव मीढ्वांसं रेतःसेक्तारं याभे मैथुने कोविदं तमेव चकमे तदनन्तरं कान्तं [illegible] बह्व्यः कामयामासुः ॥ ६—८ ॥

---

[redacted]टीका ।

[redacted]माश्रितवत्सले नमः ॥

[redacted]क उवाच ॥

श्रीशुक[redacted] ययाति राजा इस प्रकार कामों का आचर[redacted] संबंधि विषयों से अपने आत्मा की ठगाई को जानकर निर्वेद ( वैराग्य ) को प्राप्त होकर अपनी प्रिया से इस गाथा ( कहानी ) को कहते हुए ॥ १ ॥

राजा ययाति बोले, कि—हे भार्गवि ! पृथिवी में हम सदृशों से वर्णी हुई इस कहानी को तुम सुनो । जिस जिस हमारे सदृश ग्राम वासी के आचरण को वनवासी धीर लोग शोचा करते हैं ॥ २ ॥

हे प्रिये ! वन में कोई एक बकरा अपने प्रिय विषय को ढूंढता हुआ किसी समय में अपने कर्मवश कूप में गिरी हुई एक अजा ( बकरी ) को देखता हुआ ॥ ३ ॥

वह कामी बकरा उसके निकालने का उपाय चिन्तमन करता भया और उसने अपने सींग के अग्रभाग से उस कूप के किनारे को फोड़कर मार्ग बना लिया ॥ ४ ॥

जब वह सुश्रोणी अजा कूप से निकली तब उसने उसी बकरे में ही अपने पति की कामना करी, उसकी कामना देख कर और भी बहुतसी कामनी अजा उसी में कांत की कामना करती भई ॥ ५ ॥

उस बकरा को हृष्ट पुष्ट डाढी मूंछ वाला और अति प्रिय वीर्य बहाता और मैथुन कुशल सब प्रकार से अपना अभीष्ट पूरक देखकर सब अजायें उसको पसंद करलीनी उन सब कामिनियों के बीच में एक वह बकरा रति सक्त होकर काम रूप ग्रह से ग्रसित वह अपने आत्मा को नहीं स्मरण करता हुआ ॥ ६ ॥

किसी समय में परम प्रिया कोई अजा के संग रमण करते हुए उस बकरा को देखकर वह कूप में गिरने वाली अजा उस सुख को न देख सकी ॥ ७ ॥

अपने सुहृद्रूप से वर्त्तने वाला दुर्हृद या कामी क्षण सौहृद इंद्रियारामी उस बकरा को छोड़कर वह अजा क्रोध से अपने स्वामी के पास दुःखी होकर गई ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इडविडाकारं बस्तजातिशब्दम् सन्धितुं प्रसादयितुम् ॥ ९ ॥

वृषणमच्छिनज्जरया सम्भोगासमर्थमकरोत् अर्थाय स्वपुत्र्याः कामोपभोगाय योगवित् पुनर्युक्तः जरादलत्वेन रतिशक्तिं ददौ इत्यर्थः ॥ १० ॥

तथाऽहं कृपणाः सुभ्रु ! भवत्याः प्रेमयन्त्रितः ।
आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्द्धते ॥ १४ ॥
यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥
या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कूपलब्धया सह कामैः सेव्यमानैर्न तृप्यति ॥ ११ ॥ १२ ॥

ननु, तर्हि पुनरपि बहवो विषयाः सेव्यन्तां ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेति चेत्तत्राऽऽह—यदिति द्वाभ्याम्, न दुह्यन्ति न पूरयन्ति ॥ १३ ॥

हविषा घृतेन कृष्णवर्त्माऽग्निरिव ॥ १४ ॥

तर्हि कदा केनोपायेन वा मनसः सम्पूर्णा प्रीतिः स्यात् यया कामोपशमः स्यादित्यत आह—यदेति षड्भिः । अमङ्गलं भावं रागद्वेषादिवैषम्यम् ॥ १५ ॥

दुःखानि नितरां वहतीति तथा ताम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सोपि बस्तोपि स्त्रैणः हेतुगर्भमिदं स्त्रैणत्वात्तां यान्तीमजां प्रसादयितुं कृपणः सन्ननुगतः विडी विडाकारं विडीं मार्जारीमनुगतस्य विडस्य य आकारः सान्त्वशब्दमुखस्मुखत्वरूपस्तं कुर्वन् पथि मार्गे सन्धितुं प्रसादयितुं नाशक्नोत् ॥ ९ ॥

तत्र तस्य बस्तस्य लम्बन्तं वृषणं कश्चिद्द्विजः कृपा अच्छिनत् कश्चिद्विजोऽज इति शुचो विवक्षितः अयडशब्देन धयो विवक्षितं जरापादनेन धर्मोपहारस्य च सम्भोगासमर्थमकरोदिति भावः । ततो भूयः पुनः अर्थाय प्रयोजनाय स्वपुत्र्याः कामभोगायेति भावः । योगवित्तु पायक्षः लम्बन्तं वृषणं सन्दधे जराऽवस्यासेन रतिरसमर्थमकरोदिति भावः ॥ १० ॥

ततः स अन्धभूपया उपात्तपुत्रया इति भावः । स बस्तोऽपि कूपलब्धया अजया सह बहुविधं काममनुभवन्नपीति शेषः बहुतिथमिति पाठे बहुकालमित्यर्थः । हे भद्रे ! अधुनापि न परितुष्यति, ॥ ११ ॥

एवमन्यापदेशेनोपवर्णितमिति हासमारभेति सञ्ज्ञापयति तथेति । हे सुभ्रु ! तथा बस्तवदहमपि भवत्यास्तव प्रेम्णा यन्त्रितः वशीकृतः तव मायया विभ्रमादिरूपया मोहितोऽधुनापि आत्मानं नाभिजानामि ॥ १२ ॥

ननु, तर्हि पुनरपि बहवो विषयाः सेव्यन्तां ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेत्यत्राह—यदिति द्वाभ्याम् । यत् ये पृथिव्यां व्रीह्यादयस्ते सर्वे कामहतस्य कामासक्तस्य पुंसो मनःप्रीतिं न दुहन्ति न पूरयन्ति ॥ १३ ॥

जातु कदाचिदपि कामानामुपभोगेन कामो विषयतृष्णा न शाम्यति किन्तु हविषा घृतेन कृष्णवर्त्मेवाग्निरिव भूयोऽभिवर्द्धत एव ॥ १४ ॥

तर्हि कथं केनोपायेन मनसः पूर्णप्रीतिः स्यात् ? यया कामोपशमः स्यादित्यत आह—यदेति षड्भिः । यदा भूतेष्वमङ्गलं भावं रागद्वेषादिवैषम्यरूपं भावं न कुरुते तदा समदृष्टेः स्वात्मसमदृष्टेः पुंसः सर्वा दिशः सुखमयाः क्वापि गतस्याप्यस्य सुखमेवेत्यर्थः ॥ १५ ॥

यतो दुर्मतिभिः दुस्त्यजा विषयतृष्णा, कथंभूता ? या जीर्यतः ततोपि पुंसो न जीर्यते न जीर्णतां प्राप्नोति तां दुःखनिवहां दुःखानि नितरां वहत्यावहति प्रापयतीति तथा तां तृष्णां शर्मकामः दुःखासंभिन्नं सुखं कामयमानः द्रुतं नूनं त्यजेत् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽपि बस्तोऽपि यथातिशब्दवाच्योऽ[illegible]विडाकारं मैथुनानुकरणलक्षणं तिर्यक् कण्ठोत्थितशब्द[illegible]कारादिशब्दं च कुर्वन्सन्धितुं सन्धानं कर्तुं "[illegible]विडाकारो मैथुनानुकृतो रवः" इत्यभिधानम् ॥ ९ ॥

अजस्वामी शुक्रः अन्यत्र प्रसिद्धः लम्बन्तं वृषणं [illegible]भोगसमर्थम् अच्छिनत् शक्त्येति शेषः।अन्यत्र जराकरणेन पु[illegible]राघवस्याचे-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोपायेन सम्बन्धे भोगसामर्थ्यमापादितवान् योगविदनन्यानोपायज्ञः अन्यत्र जरत्यत्वसनोपायकरणेन अथापि मैथुनलक्षणप्रयोजनाय ॥ १० ॥

अजपुं स्त्रीमाया इमि शेषः ॥ ११ ॥

आत्मानं परमात्मानं स्वस्वरूपं मायया विभ्रमलक्षणया सुरतवैचित्र्यलक्षणया वा ॥ १२ ॥

काममोहनात्वविमूढस्य पुंसः नैतच्चित्रमित्याह—यत्पृथिव्यामिति, व्रीहियवम इत्येकवद्भावः व्रीह्यादयः मनःप्रीतिं न पूरयन्ति न तृप्यति "तृप पूरणे" इति प्रपूरणं नाशेषमोषिकीकरणा भागद्वयमप्राप्तस्य पूर्णीकरणमित्यतः स्त्रीपुंसयोरपि कामभोगादिनाऽलम्बुद्धिर्नास्तीति भावः ॥ १३ ॥

ननु, प्रावृड्डारमे नदीजलहासवत्कामानामुपभोगेन शान्तिः स्यादिति तत्राह—नेति । कामः तृष्णा कामानां विषयाणां हविषाज्येन "हविर्गव्यं घृतं तोये हेम्नि काञ्चनचन्दने" इति कृष्णवर्त्माऽग्निः ॥ १४ ॥

नन्वेवं चेत्साधनाभावेन कदापि मुक्तिर्न स्यादिति तत्राह—यदेति, यदा सर्वभूतेषु अमङ्गलं पापमान्यनं हिंसालक्षणं भावं स्वभावं न कुरुते यस्तदा तस्य समदृष्टेः सर्वस्य ब्रह्माधीनत्वेन तत्तदेकरनाविशिष्टवस्तुदर्शिनः पुंसः सर्वाः दिशः सुखमयन्ते प्रापयन्तीति सुखमयाः सुखप्रधाना वा एकस्यामपि दिश्यणुमात्रं दुःखं नास्तीत्यर्थः । "भावः पदार्थे सत्तायामात्मयोनिस्वभावयोः" इति यादवः ॥ १५ ॥

ननु, कथाविधे निराहारत्वे वा विषयतृष्णात्यागेन मुक्तिः किं न स्यादिति तत्राह—येति । सत्यं तृष्णात्यागे मुक्तिः स्यात् स एव नास्ति तस्मात् ज्ञानेन तत्सुत्यागोऽतत्त्वत्यापाद्यमित्यर्थः शर्मकामः सुखार्थी वयसा अनशनेन वा जीर्यतो जरामाप्नुवतः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मायया मोहनशक्त्या ॥ १२–२५ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इडविडाकारं वस्तजातिशब्दं सन्धितुं प्रसादयितुम् ॥ ९ ॥

द्विजः शुक्राचार्यः [illegible] शुक्रस्य स्त्री तस्याः स्वामी स एव वृष[illegible] सम्भोगासमर्थमकरोत् भूयः प्रसन्न[illegible] य सम्बन्धे वृषणं यथास्थितमकरोत् जरात्य[illegible] योगवित् उपायज्ञः ॥ १० ॥

कृप[illegible] पात्रवर्षं बहुनिशं कालं अद्यापि सेव्यमाने[illegible] न तृप्यति ॥ ११ ॥

मोहि[illegible] जीर्णस्य त्वमत्र मूर्तिमत्यासियोति भावः ॥ १[illegible]

नन्, त्वं सम्राट् पूर्णकामोऽसि विषयानन्देनक्रमात् रमयन्नेव कथमेतावद्दैन्यं सम्भवेत्तत्राह—यदिति । न तृप्यन्ति न पूरयन्ति कामहतस्येति कामहतत्वमेवापूर्णकामत्वे कारणमिति भावः ॥ १३ ॥

ननु, यावत्ते कामभागाभावेन ततोऽप्यधिकप्रमाणो वा विषय उपभुज्यतां महामनस्कस्य तव सकलसम्पत्तिनिवृत्तिविषयाणां किमलतस्त्वामित्यत आह—न जात्विति । कृष्णवर्त्मा अग्निः तस्मादशान्तकामस्य सदा दुःखमेवेत्यतः शान्तकाम एव सुखीति भावः ॥ १४ ॥

शान्तकामस्यासाधारणं लक्षणमाह—यदेति । सर्वभूतेषु स्वद्विष्टेष्वपि अमङ्गलं क्रमं न कुरुते इति स्वसमानादिकामस्त्वेवमानमानादिकर्मादि त्वेवः सम्बन्धादिति भावः । समदृष्टेः व्यावहारिकनिन्दास्तुत्यादिषु तुल्यकामबुद्धेः सुखमयाः सुखमयः ॥ १५ ॥

सर्वमङ्गलो कामोऽपि कामनायाः संहारेण हेतुरित्याह, येति । यद्वा दुरुपशमनाया अपि कामनाया उपशमे साधनमाह, येति । जीर्यतः जरां प्राप्नुवतोऽपि शर्म कामः स्वशत्रूणामपि मङ्गलं कामयते सः ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इडविडाकारं वस्तस्वभावानुरूपं रवं संधितुमनुकूलयितुम् ॥ ९ ॥

अजायाः स्वामी वृषणमच्छिनत् वृषणं तुच्छं भोगसामर्थ्यं जराशनेनापनीतवान् भृगोऽपि स्वपुत्र्याः प्रयोजनाय जरात्यस्येन वृषणं सन्दधे भोगसामर्थ्यं ददौ ॥ १०—१२ ॥

विषयसेवनेन तृप्तिर्न भवति प्रत्युत बहुदुःखोदर्का विषयेषु तृष्णा जायते इत्याह—यदिति द्वाभ्याम । न तृप्यन्ति न पूरयन्ति ॥ १३ ॥

कामयन्ते इति कामाः विषयास्तेषामुपभोगेन कामः सङ्कल्पः विषयतृष्णा इत्यर्थः । न शाम्यति किन्तु हविषा घृतेन कृष्णवर्त्मा अग्निरिव भूयोऽभितो वर्धते ॥ १४ ॥

तस्मात्सर्वान्तरात्मभूतवासुदेवध्यानपरो भूत्वा विषयतृष्णां त्यजेदित्याह—यदेति द्वाभ्याम् । अमङ्गलं भावं पापरूपभावं सर्वभूतानां भगवद्वाहनकत्वात् स मे मया सहितं श्रीनिवासं सर्वभूतात्मनि हरिपूर्णस्य तस्य भगवद्ध्याननिष्ठस्य ॥ १५ ॥

दुर्मतिभिर्निन्द्यबुद्धीनां दुस्त्यजा, दुःखानि आध्यात्मिकादीनि नितरामावहति प्रापयति तथा तां शर्मकामः सुखकामः ॥ १६ ॥

———

भाषा टीका ।

वह भी स्त्री लंपट अपने बकरेपने के जाति के शब्द से उसको प्रसन्न करने के लिये दीन होकर पीछे पीछे दौड़ता हुआ गया तथापि उसको कोई प्रकार से मार्ग में प्रसन्न नहीं करसका ॥ ९ ॥

उसको स्वामी किसी द्विजने उस बकरे के वृषण को काट डाला फिर उपाय को जानने वाले स्वामी ने ही उसको वृषण को जोड़ दिया ॥ १० ॥

मात्रा स्वस्रा दुहित्रा वा नाऽविविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥
पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् ।
तथाऽपि चाऽनुसवनं तृष्णा तेषूपजायते ॥ १८ ॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह ॥ १९ ॥
दृष्टं श्रुतमसद्बुध्वा नानुध्यायेन्न संविशेत् ।
संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥
इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ।
दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥
दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ।
प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥ २२ ॥
भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ।
अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥
आसेवितं वर्षपूगान्षड्वर्गं विषयेषु सः ।
क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥

भाषाटीका ।

हे भद्रे ! फिर भी उस कृपण विषयी ने कूप से प्राप्त होने वाली उस कामिनी के संग बहुत काल पर्यंत रमण किया परंतु अब तक भी विषयों से संतुष्ट नहीं हुआ ॥ ११ ॥

हे सुभ्रु ! तैसे ही हम भी तुम्हारे स्नेह में बद्ध होकर अपने आत्मा को नहीं जानते हैं केवल तुम्हारी माया से मूढ होरहे हैं ॥ १२ ॥

पृथिवी में जितने यव गोधूमादिक अन्न सुवर्णादि धन हाथी घोड़े वा स्त्रियां वे सब भी काम से हत पुरुषों के मन को तृप्त नहीं कर सके हैं ॥ १३ ॥

काम के भोग से काम कदाचित् भी शमन नहीं होसकता है जैसे घृत हविष से अग्नि प्रज्वलित ही होता है शांत नहीं होसका है ॥ १४ ॥

जिस समय सर्वभूत प्राणियों के लिये अमंगल मन नहीं करता है उस समय में उस समदृष्टि वाले पुरुष को संपूर्ण दिशायें सुख मय ही हैं ॥ १५ ॥

जो तृष्णा दुर्मतिवाले लोगों से दुस्त्यज है और शरीर के जीर्ण होने पर भी जो जीर्ण नहीं होती है, दुःख के समूहों को प्राप्त करने वाली उस तृष्णा को सुख की कामना वाला शीघ्र ही छोड़दे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिकायां

स्त्रीसन्निधानं तु सर्वथा त्याज्यमित्याह—मात्रेति । अविविक्तं सङ्कीर्णमासनं यस्य सः कर्षत्याकर्षति ॥ १७ ॥ १८ ॥ १९ ॥

ननु, तृष्णात्यागस्यातिदुष्करत्वात्कथं मनस आधानं स्यात्तत्राऽऽह—दृष्टमिति । योऽनानुध्यायेन्न संविशेन्न चोपभुञ्जीत तत्र दृष्टश्रुतयोरनुध्यानादौ स आत्मदृक् भवति ॥ २०—२२ ॥

तस्य पूरोर्वशे स्थापयित्वा ॥ २३ ॥

विषयेषु शब्दादिष्वासेवितं षड्वर्गं षडिन्द्रियसुखं मुमुचे तत्याज यद्वा विषयेष्वासेवितं येषां कारितं वयसामिन्द्रियाणां वर्गं मुमुचे उपेक्षतेत्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीसन्निधानं तु सर्वथा त्याज्यमित्याह—मात्रेति । मात्रादीनामन्यतमया वाऽपि विविक्तं सङ्कीर्णमासनं यस्य तथाभूतो न

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भवेत् अन्यथा बलवान् प्रमाथी इन्द्रियसमूहः विद्वांसमप्यप-कर्षति आकर्षेदाश्रयेदित्यर्थः ॥ १७ ॥

जीर्यतोऽपि न जीर्यत इत्येतदेव स्वदृष्टान्तेनोपपादयति-पूर्णमिति । असकृत् वारंवारं विषयाननुभवतो मम वर्षसहस्रं पूर्णमभूत् तथाप्यद्यापि अनुसवनं तत्तद्विषयानुभवसमयमनतिक्रम्यापि तन्मात्रं तृष्णा उपजायते न तु शाम्यति ॥ १८ ॥

तस्मात् कामानामुपभोगेन कामाशान्तेरहमेतां विषयतृष्णां त्यक्त्वा ब्रह्मणि मानसमाधाय शीतोष्णादिद्वन्द्वैरनभिभूतो देहात्मभ्रमरहितश्च मृगैस्सह चरिष्यामि वनं प्रविशामीत्यर्थः ॥ १९ ॥

ननु, तृष्णाया दुस्त्यजत्वात्कथं सहसा तव मनसो ब्रह्मणवधानं स्यात् ? तत्राह——दृष्टमिति । दृष्टमैहिकविषयजातं श्रुतमामुष्मिकं तदुभयमसत्पुरुषार्थरूपं विद्वान् पुमान् नानुध्यायेत् न संविशेत् नानुध्यायति नोपभुङ्क्ते च, कथम्भूतः ? तत्रानुध्यानसंवेशनयोः सतोः संसृतिमात्मनाशमन्ततः स्थावरत्वाप्तिञ्च विद्वान् अननुध्यानासंवेशयोर्हेतुं वदन् विद्वांसं विशिनष्टि—सः दृष्टादीनामसद्रूपत्वादिकं विद्वान् पुमान् आत्मदृक् दृष्टश्रुताद्यपेक्षया निरतिशयानन्दरूपस्वात्मपरमात्मयाथात्म्यं पश्यति तथा निरतिशयानन्दरूपयाथात्म्यानुभवनिष्ठस्यार्थादेव तृष्णा निवर्तत इति भावः ॥ २० ॥

इतीत्थं जायां देवयानीमुक्त्वा नाहुषो ययातिः पूरवे पुत्राय तदीयं वयो दत्वा विगतविषयतृष्णस्तस्मात् पूरोस्सकाशात् स्वकीयां जरामादवे जग्राह ॥ २१ ॥

ततो दक्षिणपूर्वस्यामग्नेयां दिशि द्रुह्युमीश्वरमधिपतिं चक्रे दक्षिणतो वारुणस्यां दिशि यदुं प्रतीच्यां दिशि तुर्वसुमुदीच्यामनुमीश्वरं चक्रे ॥ २२ ॥

दिशां मध्यवर्तिन इति शेषः । सर्वस्य भूमण्डलस्य ईश्वरमधिपतिमर्हत्तमं बहुमन्तव्यं पूरुमभिषिच्याग्रजान् यदुप्रभृतीन् तस्य पूरोर्वशे स्थाप्य स्थापयित्वा असमासेपि ल्यबार्षः तदधीनान् कृत्वेत्यर्थः । स्वयं वनं ययौ, ॥ २३ ॥

स ययातिः वर्षपूगान् विषयेषु शब्दादिष्ववरुद्धितं षड्वर्गं षडिन्द्रियसुखं क्षणेन मुमुचे तत्याज यथा जातपक्षो यस्य स द्विजो विहङ्गः नीडं त्यजति तद्वत् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविविक्तासनः एकशय्यासनः ॥ १७ ॥

स्वतो विषयतृष्णा न शाम्यतीत्यत्र स्वानुभवमाह—पूर्णमिति ॥ १८ ॥

अतः किं कर्तव्यमिति तत्राह-तस्मादिति । मृगयन्ते तत्त्वमिति मृगाः ज्ञानिनस्तैः सह अरण्यचरैः हरिणादिभिर्वा तपश्चरिष्यामीत्यर्थः ॥ १९ ॥

दृष्टश्रुतत्यागादृष्टाश्रुतसुखाय कः कुशलः प्रयतते अरण्ये कायक्लेशं विद्वानिति तत्राह-दृष्टमिति । दृष्टं राज्यादिविभवं श्रुतं स्वर्गादिमक्षयमित्युभयमसत् क्षणभङ्गुरं विद्वान् तन्नानुध्यायेत्

तद्विषयचिन्ता न कार्या न संविशेत् भोगलक्षणप्रवेशो न कर्तव्य इत्यन्वयः । कुत इति तत्राह-संसृतिमिति । तत्रानुध्यानसंवेशयोः सतोः संसारमेवात्मनाशं स्वरूपज्ञाननाशं विद्वान् यः स आत्मदृगात्मज्ञानीत्युच्यत इत्यन्वयः । "ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते" इत्यादेः । अनेन दृष्टश्रुतसुखस्य सदातनत्वं विद्वान् वालिशो यतोऽस्य दुःखोदर्कत्वमज्ञानी पश्यतीति ज्ञायते ॥ २० ॥

तदीयं पूरोर्विद्यमानम् ॥ २१ ॥

दक्षिणपूर्वस्याम् आग्नेय्याम् ईश्वरं राजानम् ॥ २२ ॥

विशां प्रजानामर्हत्तमं पूज्यतमं स्थापयित्वा ॥ २३ ॥

शब्दादिविषयेषु आम्रेडितमभ्यस्तं षडिन्द्रियवर्गं मुमुचे विषयादाहृत्य भगवद्विषयं चकारेत्यर्थः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च स्त्रीविषयः कामस्तु सदाचारेणैव शाम्यतीति सदाचारं दर्शयति—मात्रेति । अविविक्तं अपृथग्भूतमासनं यस्य स विद्वांसमप्याकर्षति ॥ १७ ॥

विषयाभिनिवेशस्य कालदुर्जरत्वे ऽहमेव दृष्टान्त इत्याह, पूर्णमिति ॥ १८ ॥

ननु, तर्हि कस्मात्तस्या उपशमस्तत्र भगवद्गुणगुणादौ मनोनिधानादित्याह-मानसमाधायेति । निराकारस्य ध्यानं न सम्भवतीति सकारे ब्रह्मणीत्यर्थः । भागवतीं गतिं लेभे इत्यग्रेतनाक्तेश्च मृगैः सहेति एतावन्तं कालं भवत्याः क्रीडामृगः सन् गृहाङ्गणे नृत्यमकरवम् अतःपरं तु वने मृगैः कृष्णसारैः सहैव कृष्णलीलामग्नो नर्तिष्यामीति भावः ॥ १९ ॥

तत्त्वविचारेणापि विषयध्यानं त्यक्तुं भगवद्ध्यानपरिपाके सत्येव शक्नुयादित्याह-दृष्टमिति । य आत्मदृक् ध्यानेन आत्मानं भगवन्तं पश्यति स एव दृष्टं श्रुतं च विषयसुखम् असत् असाधुत्वादरोचकं बुद्ध्वा न पुनः पुनर्ध्यायेत् न चोपभुञ्जीत किञ्च तत्र दृष्टश्रुतध्याने एव संसृतिम् आत्मनाशमात्मघातं च विद्वान् जानन् ॥ २०—२२ ॥

विशां सर्वभूमण्डलसम्बन्धिप्रजानाम् अर्हत्तमम् अतिशयेन अर्हतीति तम् ॥ २३ ॥

वर्षपूगानपि व्याप्य विषयेषु आ सम्यक् सेवितमासक्तिर्यस्य तथाभूतमपि षडिन्द्रियवर्गं क्षणेनैव मुमुचे उपैक्षत इन्द्रियाधीनो न बभूवेत्यर्थः । नीडं मुमुचे नीडाधीनो यथा न भवतीत्यर्थः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अविविक्तं सङ्कीर्णमासनं यस्य स तथाभूतो न भवेत् कर्षति आकर्षेत् ॥ १७—१८ ॥

ब्रह्मणि भगवति मानसमाधाय तद्ध्यानपरो भूत्वा मृगैः मृगधर्मिभिरभिमानिभिः महानुभावैः सह ॥ १९ ॥

दृष्टमैहिकं विषयजातं श्रुतं पारलौकिकम् असदसाधु अनित्यत्वसातिशयत्वादिदोषग्रस्तं बुध्वा यो नानुध्यायेत् न संविशेत् नोपभुञ्जीत तत्र दृष्टश्रुतयोरनुध्यानादौ संसृतिम् आत्मनो नाशं विस्मृतिञ्च यो विद्वान् स आत्मदृक् भवति ॥२०-२३॥

स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥
श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ।
स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम् ॥ २६ ॥
सा सन्निवासं सुहृदां प्रपायामिव गच्छताम् ।
विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥ २७ ॥
सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ।
कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८ ॥
नमस्तुभ्यम्भगवते वासुदेवाय वेधसे ।
सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां नवमस्कन्धे
एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स ययातिः विषयेषु शब्दादिषु वर्षपूगान् आसेवितं षड्वर्गं षड्इन्द्रियसुखं क्षणेन मुमुचे तत्याज ॥ २४ ॥

---

भाषाटीका ।

पुरुष को उचित है कि-माता के साथ वा बहिन के साथ अथवा अपनी लडकी के साथ भी कभी एकांत में आसन पर अविवेक पूर्वक समीप न बैठे, क्योंकि—इन्द्रिय ग्राम बलवान् है विद्वान को भी खैंच लेता है ॥ १७ ॥

मेरे लिये निरंतर विषयों का सेवन करते २ एक सहस्र वर्ष पूरे होगये, तौ भी प्रतिदिन उन विषयों में मेरी तृष्णा अधिक से अधिक बढती जाती है ॥ १८ ॥

तस्मात् अब मैं इस तृष्णा को छोडकर पर ब्रह्म के बीच में चित्त लगाकर निर्द्वन्द्व निरहंकार होकर मृगों के साथ विचरूंगा ॥ १९ ॥

पुरुष देखे सुने हुए विषयों का ध्यान न करे और न भोगे उन विषयों के ध्यान में जो संसार के बंधन को जानता है और विषयों के भोगने में जो अपने आत्मा के नाश को जानता है वही आत्मदृष्टा है ॥ २० ॥

इस प्रकार कहकर नहुष महाराज के पुत्र राजा ययाति, अपने पुत्र पूरुष की युवा अवस्था को पुरुको देकर और उस से अपनी जरा अवस्था को लेकर सर्व स्पृहा को छोड देते हुए ॥ २१ ॥

और आग्नेय कोण के ईश्वर द्रुह्य को बनाकर, दक्षिण दिशा के स्वामी यदुको और पश्चिम के तुर्वसु को तथा उत्तर दिशा के पति अनुको बनाकर ॥ २२ ॥

ययाति सर्व भूमण्डलका और सर्व राजों का पूजनीय-पति पुरुको अभिषेककर बनाये, और पुरुके बडे भाइयों को पुरुके वंश में स्थापन कर ययाति महाराज वन को गये ॥ २३ ॥

विषयों के मध्य में षट् इन्द्रियों के भोगों को ययाति ने हजारहों वर्षोंतक भोगकर छोडने के समय सर्व विषयों को क्षण मात्र में त्याग किये, जैसे पंख जामने पर पक्षी अपने नीड घोंसले को छोड देवै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विधुतं निरस्तम् त्रिगुणात्मकं लिङ्गं येन प्रतीतः प्रख्यातः ॥ २५ ॥

प्रस्तोभमेवाऽऽह—परिहासमिवेति । यद्वा प्रस्तोभं निवृत्तिमार्गे प्रोत्साहनं मेने ॥ २६—२८ ॥

कथं समावेश्य ? तदाह—नम इति । म[illegible]ना।दिभिः समावेश्येत्यर्थः शुको वा नमस्करोति ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे नव[illegible]स्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिका[illegible]
एकोनविंशोऽध्यायः ॥१९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतीतः प्रख्यातः स ययातिस्तत्र वने निर्मुक्तः समस्तो देहतदनुबन्ध्यादिसङ्गो येन सः आत्मानुभूत्या ब्रह्मोपासनया विधुतनिखिलिङ्गः निर्मुक्तगुणप्रवकार्यः पदं प्राप्यं परस्मिन् ब्रह्मणि वासुदेवाख्ये भागवतीं गतिं लेभे आत्मपरमात्मनो बभूव-त्यर्थः । अन्यथा भारतविरोधात् तत्र तस्य स्वर्गादिप्राप्तेरेव कथना-दिति तत्रैव विस्तरतो द्रष्टव्यम् ॥ २५ ॥

देवयानी तु भर्त्रा कथितां कथामात्मनः प्रस्तोभं मेने तावत् परिहासरूपाममन्यत प्रस्तोभतामेव ज्ञातवती, स्त्रीपुंसोरितरेतरमासक्तिमत्त्वाभाव भावः । तदानिमात्मना स्त्रीपुंसयोः यः परस्परं स्नेहस्तेन कृतं यद्वैक्लव्यमधाद्यं तस्माद्धेतोः परिहासमिवोदितं कथितमितिहासं प्रस्तोभं मेन इत्यन्वयः । ईरितामिति पाठे गाथाविशेषणम् ईहितामिति पाठे आत्मनोऽभीप्सितं कथारूपेणा-पवर्णितं परिहासमिव मेने ॥ २६ ॥

सेति । ततः सा देवयानी ईश्वरतन्त्राणां सुहृदां पतिपुत्रा-दीनां सन्निवासं, सुहृद्भिः सहवासमित्यर्थः । गच्छतां पान्थानां प्रपायाऽपानशालायामिवानित्यं प्रभोरीश्वरस्य मायया विर-चितं च विज्ञाय स्वप्नदृष्टान्तेन सर्वत्र देहतदनुबन्ध्यादिषु सङ्ग-मुत्सृज्य स्वप्नवत्सर्वैः सम्बन्धोऽनित्य इति निश्चित्येत्यर्थः ॥२७॥

भार्गवी देवयानी स्वमनः कृष्णे भगवति निधाय कृष्णं ध्यायन्तीत्यर्थः । आत्मनो लिङ्गं शरीरं व्यधुनोत् तत्याज ॥ २८ ॥

प्रसक्तानुप्रसक्तं भगवन्तं नमस्करोति शुकः सूतो वा—नम इति । वेधसे जगत्स्रष्ट्रे सर्वभूतानामाधारभूताय शान्ताय षडू-र्म्यायूर्मिषट्करहिताय बृहते ब्रह्मणे वासुदेवाख्याय तुभ्यं नमः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मानुभूत्या परमात्मापरोक्षज्ञानेन विधुतं त्रिभिः सत्त्वादिके-र्निर्मितं लिङ्गमभिमानलक्षणं यस्य स तथा विध्वस्ताध्यात्मि-काधिभौतिकाधिदैविकलिङ्गो वा भागवतीं भागवतधर्मलभ्यां गतिं कथयत्यां प्रतीतः कोविदः ॥ २५ ॥

प्रस्तोभं वञ्चनम् ॥ २६ ॥ २७ ॥

लिङ्गं शरीरं व्यधुनोत् [illegible] ॥ २८ ॥

नमस्तुभ्यमिति [illegible] ॥ २९ ॥

[illegible] महापुराणे नवमस्कन्धे

[illegible]तीर्थकृतपदरत्नावल्याम्

[illegible]शोऽध्यायः ॥ १९ ॥

[illegible]ध्वजटीका षोडश:)

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रुत्वेति तैः तत्र प्रथमपद्यं परिहासमिवोदितमव्याहतम् प्रस्तोभमपवारकममेव मेने तत्र हेतुः स्त्रीपुंसयोर्यत् स्नेहस्तत्र यद्वैक्लव्यं ग्लानिस्तद्भावमयत्वमित्यर्थः । द्वितीय पद्येऽप्येवमेव इति ॥ २६ ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

एकोनविंशोऽध्यायः ॥ १९ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।—

विधुतं त्रिगुणात्मकं लिङ्गं येन सः भागवतीं भगवत्प्राप्तिं प्रेमवत् पार्षदत्वं प्रतीतः ख्यातः ॥ २५ ॥

गाथां छागोपाख्यानरूपां भर्तुः स्वस्य प्रस्तोभमुपालम्भममेव वस्तुतो मेने स्नेहवैक्लव्याद्धेतोः स्त्रीपुंसयोः परिहास-तुल्यमुक्तं तेन हे देवयानि ! मया यत्त्वं कृपया पानीयकूपादुद्धृ-ताऽभूः तस्य प्रत्युपकारस्त्वया मत्कृतं यदहमेतावन्तं कालं विषय-महान्धकूपे निपातित इति मत्पतिर्ययातिमामपोषयतीति देव-यानी जानाति स्मेति ॥ २६ ॥

प्रभोरीश्वरः ॥ २७ ॥ २८ ॥

केन साधनेन कृष्णे मन आवेशितमिति तन्नामरूपगुणाख्यान-कीर्तनादिभिरित्याह—नम इति । अत्र यदा अम्बरीषः सप्तद्वीपा-धिपतिश्चक्रवर्ती बभूव तदैव ययातिस्तन्मण्डलाध्यक्षः प्रायो जम्बूद्वीपभूपतिरित्यवसीयते ब्रह्ममरीचिकश्यपविवस्वद्भाग-देवमनुभगवानाभागाम्बरीषाक्रमेण ब्रह्मात्रिचन्द्रबुधपुरूरवआयु नहुषययातय इति ब्रह्मातस्तयोरष्टमपुरुषत्वात् तत्पदाम्बरीषसङ्ग-प्रभावादेव तादृशविषयवत्स्वपुत्रस्यापि ययातेस्तादृशी भक्तिर्ययाति-श्च सङ्गं देवयान्याश्च, किञ्चैवमेव सूर्यवंशचन्द्रवंशयोर्युगपत्प्र-वृत्तयोर्यदा सूर्यवंश्यः सप्तद्वीपाधिपतिश्चक्रवर्ती स्यात्तदा चन्द्र-वंश्यस्तन्मण्डलाध्यक्षो राजा यदा चन्द्रवंश्यश्चक्रवर्ती तदा सूर्य-वंश्यो राजेत्युभयवंश्यानामन्यथा चक्रवर्तित्वराजत्वे ज्ञेये ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकोनविंशो नवमे सङ्गतः सङ्गतः सताम् ॥ १९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रतीतः प्रख्यातः विधुतलिङ्गः विगतत्रिगुणदेहः वासुदेवे भागवतीं गतिं लेभे ॥ २५ ॥

परिहासं यथा केनापीरितं भवति तथा भर्त्रा स्त्रीपुंसोः स्नेहवैक्लव्यावेदिनीं गाथां श्रुत्वा आत्मनः प्रस्तोभं निवृत्ति-मार्गे प्रोत्साहनं मेने ॥ २६–२७ ॥

आत्मनो लिङ्गं विधुनात् लिङ्गदेहं त्यक्त्वा भागवतीं गतिं प्राप्तेत्यर्थः ॥ २८ ॥

मुक्तगम्यं वासुदेवं श्रीशुको नमस्करोति— नम इति ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

एकोनविंशोऽध्यायार्थप्रकाशः ॥ १९ ॥

———

भाषा टीका ।

वह ययाति वन में जाकर समस्त सङ्गों को छोड़कर आत्मा के अनुभव करने से त्रिगुण विशिष्ट प्रकृति को और प्राकृतभोगोंको तुच्छ समुझकर, पर अमल ब्रह्म जो वासुदेव तिन के विषे भागवती गति अर्थात् भक्ति को प्राप्त होकर प्रख्यात होते भये ॥ २५ ॥

देवयानी ने भी उस कहानी को सुनकर अपने परिहास से, अथवा अपने लिये निवृत्ति मार्ग में प्रोत्साहन करना समुझा क्योंकि स्त्री पुरुषों की ऐसी ही स्नेह की विकलता और कहा भी ययाति ने परिहास ही के सदृश ॥ २६ ॥

देवयानी भी वृत्तान्त को सच्चा जानकर सुहृदों के सहवास को प्याऊ के विषै इकट्ठे होने वाले पुरुषों के सङ्ग तुच्छ जानती भई क्योंकि ये सब ईश्वर परतन्त्र हैं और इनका सङ्ग प्रभु की माया से रचित है ॥ २७ ॥

तब तो देवयानीने भी इस संसार को स्वप्न सदृश देखकर सब जगे से सङ्ग छोड़कर श्रीकृष्ण में मन लगाकर प्रति बन्ध को दूरकिया ॥ २८ ॥

षड्गुण सम्पन्न वेधा ऐसे श्री वासुदेव को नमस्कार होय तथा सर्वभूतों को अन्तर्यामि होकर रहने वाले शांत और निरतिशय बृहत् अर्थात् सब से बड़े ऐसे भगवान को नमस्कार हो इस प्रकार देवयानी भी नमनादि भक्ति से श्री हरि के विषै मन को लगाती भई ॥ २९ ॥

इति श्रीमद्भागवत नवम स्कन्ध में एकोनविंशअध्यायकी
वृन्दावनस्थ पं० भगवताचार्यकृत
भाषा टीका समाप्ता ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥



## ॥ विंशोऽध्यायः ॥

———○:○:○———

श्रीबादरायणिरुवाच ।

पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ! ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥
(१)जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ।
प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥
तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ।
संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥
ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ।
जलेयुः सन्ततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥
दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥
ऋतेयोरन्तिनारोऽभूत्त्रयस्तस्यात्मजा नृप ! ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥
तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ।
पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥
दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे पितृप्रसादाप्तरा[illegible]महोन्नतेः ।
पूरोर्वंशो हि दौष्य[illegible]र्ण्यते यथा ॥

॥ १—२ ॥

तत्सुतः अहंयातेः [illegible] ॥ ३ ॥

धर्मेयुश्च सत्येयु[illegible] धर्मसत्यव्रतेयवः ॥ ४ ॥

वनेयुश्चाव[illegible] दशैते ऋतेयुप्रमुखास्तस्य रौद्राश्वस्य घृता[illegible] पुत्रा जाताः अप्सरस इति षष्ठी सप्तम्यर्थे [illegible] जगदात्मनो जगत आत्मभूतस्य मुख्यप्रा[illegible] ॥ ७ ॥

[illegible] शकुन्तलायां भरतः पुत्रोऽभवदिति कथाद्वारेणाऽऽह— दुष्यन्तो मृगयामिति, पञ्चदशभिः । तामाश्रमं मण्डयन्तीम् ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं ययातेश्चरित्रमुपवर्ण्येदानीं तत्सुतस्य पूरोर्वंशकथनं प्रतिजानन् राजस्तत्र शुश्रूषामुत्पादयति—पूरोरिति । हे भारत ! यत्र यस्मिन् वंशे त्वं जातोऽसि यत्र राजर्षयो वंश्याः ब्रह्मवंश्याः ब्राह्मणाश्च वंश्या जज्ञिरे तं पूरोर्वंशं प्रवक्ष्यामि वंशे साधवो वंश्या वंशप्रवर्तकाः राजर्षयो ब्राह्मणाश्च यत्र जज्ञिरे इत्यर्थः ॥१॥

जनमेजय इति । पूरोस्तावज्जनमेजयः सुतः समभूत्तत्पुत्रो

---

(१) [illegible]जयोऽभवत् इति वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जनमेजयस्य सुतः प्रचन्वान् प्रचिन्वानिति पाठान्तरं तस्मात् प्रवीरः तस्मान्नमस्युस्ततस्तस्मान्नमस्योश्चारुरिति प्रसिद्धः सुतः समभवत् ॥ २ ॥

तस्य चारोः सुद्युः पुत्रोऽभवत् तस्मात् सुद्योर्बहुगवः समभवत् तस्य बहुगवस्य शर्यातिसंयातिरिति पाठान्तरं तस्याहंयातिस्तत्सुतोऽहंयातिसुतो रौद्राश्वः रौद्राश्व इति पाठान्तरम् ॥ ३ ॥

तस्य रौद्राश्वस्य ऋतेयुप्रभृतयो दश पुत्राः घृताच्याः अप्सरसः अप्सरसि जाताः ॥ ४ ॥

यथा जगदात्मनो भगवतो दशेन्द्रियाणि जातानि तद्वत् तेषां दशानामवमः कनीयान् वनेयुः जलेयुरिति कुक्षेयुरिति च पाठान्तरम् धर्मेति इयुशब्दस्य धर्मादिभिः प्रत्येकं सम्बन्धः द्वन्द्वान्ते श्रुतत्वात् ततश्च धर्मेयुः सत्येयुः व्रतेयुश्चेति फलितम् ॥ ५ ॥

तत्र ऋतेयोः सुतः रन्तिनारो बभूव हे नृप ! तस्य रन्तिनारस्य त्रयः सुताः तांस्निर्दिशति स्मृतिर्ध्रुवोऽप्रतिरथश्चेति सुमतिरितिपाठान्तरं तत्राप्रतिरथस्यात्मजः कण्वः ॥ ६ ॥

तस्येति । तस्य कण्वस्य मेधातिथिः तस्मान्मेधातिथेः पुत्राः प्रस्कण्वप्रभृतयः ब्राह्मणा जज्ञिरे सुमतेरन्तिनारसुतस्य पुत्रो रैभ्यः तत्सुतो रैभ्यसुतः दुष्यन्तो मतः प्रख्यातः ॥ ७ ॥

दुष्यन्तस्य शकुन्तलायां भरतोऽभवत् इति वक्तुं तद्वृत्तान्तमाह—दुष्यन्त इत्यादिना पितर्युपरत इत्यतः प्राक्तनेन । कदाचित् दुष्यन्तो मृगयाश्रमन् यदृच्छया कण्वस्य ऋषेराश्रमस्थानं गतः तत्राश्रमे आसीनामुपविष्टां रमामिव लक्ष्मीमिव स्वप्रभया मण्डयन्तीमात्मानमिति शेषः । तमाश्रममिति पाठान्तरं तदा तं मण्डयन्तीम् ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्र पूरोर्वंशे जज्ञिरे तेषु केचन राजर्षयो भवन्ति राजवंश्याः केचन ब्रह्मवंश्याश्च भवन्ति वंशे भवाः वंश्याः ॥ १—३ ॥

तस्य रौद्राश्वस्य ऋतेय्वाद्यो दश पुत्राः ॥ ४ ॥

जगदात्मनः जगद्व्याप्य तिष्ठतो मुख्यस्य प्राणस्य ॥ ५ ॥ ६ ॥

कण्वाद्याः राजवंश्याः प्रस्कण्वाद्याः ब्रह्मवंश्याः ॥ ७—१० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—११ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुरुवंशोऽत्र दौष्यन्तेर्भरतस्य कथान्वितम् ।
शाकुन्तलमुपाख्यानं विंशेऽध्यायेऽत्र वर्ण्यते ॥
ब्रह्मवंश्याश्च ब्राह्मणवंशोद्भूताः ॥ १—२ ॥

तस्य रौद्राश्वस्य ऋतेयुप्रभृतयो दश पुत्राः । धर्मसत्यव्रते-यवः धर्मेयुः सत्येयुः व्रतेयुः अवमः कनिष्ठो दशम इत्यर्थः ॥ ३—४ ॥

अप्सरस इति सप्तम्यर्थे षष्ठी जीवस्य दशेन्द्रियाणीव ॥ ५-११ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूरुवंशे दुष्यन्तस्य भरतस्य च चरितमाह—पूरोर्वंशमिति विंशेन ॥ १ ॥ २ ॥ ३ ॥

तस्य रौद्राश्वस्य धर्मेयुश्च सत्येयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥

अप्सरसः अप्सरसि वशवर्तित्वे दृष्टान्तः जगदात्मनः देहेन्द्रियादिरूपजगद्धारकस्य सर्वेन्द्रियेषु मुख्यस्य प्राणस्येन्द्रियाणीव ॥ ५ ॥ ६ ॥ ७ ॥

कण्वस्य मुनेः आश्रमपदमाश्रमस्थानम् ॥ ८—११ ॥

———

भाषा टीका ।

श्रीरुक्मिणीशपदपङ्कजमाश्रयामि ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—हे भारत ! अब हम उन पूरु ही का वंश कहते हैं कि जिसमें तुम उत्पन्न हुए हो और जिस वंश में राजऋषियों के वंशवाले तथा ब्रह्मर्षियों के वंशवाले पुरुष उत्पन्न हुए हैं ॥ १ ॥

राजा पूरू के पुत्र जनमेजय हुए, तिनके पुत्र प्रचिन्वान् हुए, तिनसे प्रवीर हुए, तिनसे नमस्यु हुए, तिनसे चारुपद हुए ॥ २ ॥

तिनके सद्युपुत्र हुए, तिनसे बहुगव हुए, तिनसे संयाति, तिनसे अहंयाति, तिनसे रौद्राश्व नाम से ख्यात पुत्र हुए ॥ ३ ॥

ऋतेयु, कुक्षेयु, स्थंडिलेयु कृतेयु, जलेयु, संततेयु, धर्मेयु, सत्येयु व्रतेयु और वनेयु इन सबों में छोटा भया इसप्रकार ये दश पुत्र रौद्राश्व के घृताची अप्सरा से उत्पन्न हुए जैसे जगत् का आत्मभूत जो मुख्य प्राण है उसके दश इन्द्रियें होवें है ॥ ४ ॥ ५ ॥

हे नृप ! ऋतेयु के पुत्र रंतिनार हुए तिनके तीन पुत्र हुए सुमति, ध्रुव और प्रतिरथ, प्रतिरथ के कण्व पुत्र हुए ॥ ६ ॥

तिनके मेधातिथि तिनतें धातिथि से प्रस्कण्व आदिक द्विजाति हुए सुमति के पुत्र रैभ्य हुए तिनके सुत दुष्यंत महाराज हुए ॥ ७ ॥

एक समय दुष्यंत शिकार [illegible]ने को गये, सो कण्व महर्षि के आश्रम में पहुंचे वहांपर [illegible]ठी हुई अपनी प्रभा से आश्रम को विभूषित करनेवाली मानों दू[illegible] लक्ष्मी होवे ॥ ८ ॥

———

विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥
तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥
का त्वं कमलपत्राक्षि ! कस्यासि हृदयङ्गमे ! ।
किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ११ ॥
व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ! ।
न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥

शकुन्तलोवाच ।

विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद्भगवान् कण्वो वीर ! किं करवाम ते ॥ १३ ॥
आस्यतां ह्यरविन्दाक्ष ! गृह्यतामर्हणं च नः ।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥

दुष्यन्त उवाच ।

उपपन्नमिदं सुभ्रु ! जातायाः कुशिकान्वये ।
स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥
ओमित्युक्ते यथा धर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविभागवित् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्त्रियं विलोक्य मुमुहेऽमुह्यत् ॥ ९ ॥

तस्या दर्शनेन प्रमुदितोऽत एव सन्निवृत्तः परिश्रमो यस्य ॥ १० ॥ ११ ॥

पौरवाणां चेतो न ह्यधर्मे रमते अतो मच्चेतसस्त्वयि रमणादेवाहं त्वां राजन्यतनयां वेद्मि ॥ १२ ॥

विश्वामित्रस्याऽऽत्मजाऽहं मेनकायां जाता तया च स्वर्गं गच्छन्त्या अत्र त्यक्ता अतो राजकन्यैवाहमित्यर्थः ॥ १३ ॥ १४ ॥

किं करवामेत्यस्या विवाहेच्छा[illegible]भिप्रायं ज्ञात्वाऽऽह—उपपन्नमिति ॥ १५ ॥

गान्धर्वविधिना मिथः [illegible]समयपूर्वकेण ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवमायां [illegible]मोहिनीमिव स्थितां शकुन्तलाख्याम स्त्रियं विलोक्य [illegible]ऽस्मन्नेव मुमुहे मोहं प्राप्तः तस्या दर्शनेन नितरां मुदितः हृष्टः अत एव सन्निवृत्तः परिश्रमः मृगयायासः यस्मात् सः कतिपयैर्भटैर्वृतः कामेन सन्तप्तो दुः प्रहसन् मधुरया गिरा तां वरारोहां बभाषे ॥ ९ ॥ १० ॥

तदेवाह—कात्वमिति । हे कमलगर्भाभे ! हे हृदयङ्गमे ! मनोज्ञे ! त्वं का ? इति जातिप्रश्नः, कस्यासि कस्य सम्बन्धिन्यसि ? निर्जने अस्मिन् वने भवत्या त्वया किञ्चिकीर्षितं कर्तुमिष्टम् ॥ ११ ॥

व्यक्तमिति । हे सुमध्यमे ! त्वामहं राजन्यतनयां व्यक्तं नूनं वेद्मि, अन्यथा मच्चेतस्त्वयि न सक्तं स्यादित्याह—न हीति । पौरवाणां पुरोर्वंशजानां चेतः कदाचिदप्यधर्मे न रमते ॥ १२ ॥

एवमुक्ता शकुन्तलाऽऽह—विश्वामित्रात्मजेति । विश्वामित्रस्यैव तनया मेनकया मात्रा स्वर्गं गच्छन्त्या अस्मिन् वने त्यक्ता अहं राजन्यकन्यैवेत्यर्थः । तत्र मानमाह—वेदेति । एतच्च भगवान् कण्वः वेद जानाति, हे वीर ! ते तव किं करवाम ॥ १३ ॥

हे अरविन्दाक्ष ! आस्यतां स्थीयतां त्वयेति शेषः । नोऽस्माकमर्हणां गृह्णाताम् अस्मत्कृतमर्हणां गृह्णाताम् अत्र नीवाराः आरण्यव्रीहयः सन्ति ते भुज्यन्तां यदि रोचते तर्हि उष्यताम् ॥ १४ ॥

अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥
कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ।
बध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥ १८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किङ्करवामेति वाक्यात्तदभिप्रायं ज्ञात्वा ऽऽह दुष्यन्तः-उपपन्नमिति । हे सुभ्रु ! कुशिकान्वये जातायास्तवेदं किङ्करवामेति वच उपपन्नं युक्तमेव तथा हि राज्ञां कन्यकाः स्वयमेव सदृशं वरं पतिं वृण्वते ॥ १५ ॥

ततस्तया दुष्यन्तोक्ते ऽङ्गीकृते स राजा दुष्यन्तो देशकालविधानज्ञो गान्धर्वविधिना मिथः समयपूर्वकेन यथा धर्मं शकुन्तलामुपयेमे ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कमलगर्भाभे पद्मोदरप्रभे ! हृदयङ्गमे ! सुन्दरि ! ॥११—१३॥

अर्हणाम् अर्घ्यादिपूजां नीवाराः देवव्रीहयः तैरापादितमन्नमिति शेषः ॥ १४ ॥ १५ ॥

ब्राह्मो राक्षसो गान्धर्व इत्यादयो बहवो विवाहविधयः सन्ति तेषु गान्धर्वविधिना स्वयंवरलक्षणेन ॥ १६ ॥ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विश्वामित्रस्य क्षत्रियत्वावस्थायामात्मजेत्यर्थः ॥ १२—२५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वेद्मीति त्वयि मच्चेतसः सज्जोऽभत्वान्यथानुपपत्त्येति भावः ॥ १२ ॥

वेदेति कण्वस्य मुखान्मयेदं श्रुतम् अहं तु मातापितरौ न परिचिनोमीति भावः ॥ १३—१४ ॥

किङ्करवामेत्यादिवाक्यैस्तस्या अपि मनः त्वय्यभिरतं ज्ञात्वाऽऽह उपपन्नमिति ॥ १५ ॥

ओमिति शकुन्तलया मौनेनैवोक्ते सतीत्यर्थः ॥ १६—१९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मेनकया मात्रा विश्वामित्रतपोनाशाय स्वर्गादागतया मज्जन्मानन्तरं स्वर्गं गच्छन्त्या त्यक्ता अतो विश्वामित्रात्मजा राजन्यकन्यैवाहमित्यर्थः ॥ १२ ॥

नीवारा आरण्यव्रीहयः ॥ १३ ॥

वीर ! किङ्करवाम ते इति शकुन्तलावचनात्तदभिप्रायं ज्ञात्वाऽऽह उपपन्नमिति ॥ १४ ॥

गान्धर्वविधिर्वरवध्वोः परस्परेच्छया विवाहरचितस्तेन ॥ १५ ॥ १६ ॥ १७ ॥

---

भाषाटीका ।

देवमाया के सदृश मूर्त्तिमती शोभा जैसे होवे इस प्रकार की एक कन्या को देखकर राजा तत्काल में मोहित होगया कितने एक सेनापति भटलोग साथ रहे, उनसे एकांत होकर राजा उस वरारोहा कन्या से भाषण करते हुए ॥ ९ ॥

राजा के भी उस कन्या के दर्शनमात्र से बड़ा ही प्रमोद हुआ और सर्व परिश्रम दूर होगया, और काम से संतप्त होकर राजा हंसता हुआ मधुर वाणी से पूंछता भया ॥ १० ॥

राजा दुष्यंत बोले, कि—हे कमलपत्राक्षि ! तुम कौन हो । ? और हे हृदयंगमे ! तुम कौन की हो ? और इस निर्जन वनमें तुम क्या करने की इच्छा से हो ॥ ११ ॥

हे सुमध्यमे ! हम तुमको भलीभांति से क्षत्रिय की पुत्री जानते हैं क्योंकि पूरु वंशी लोगों का चित्त अधर्म में कहीं भी नहीं रमता है ॥ १२ ॥

शकुन्तलोवाच ।

शकुन्तला बोली, कि-हे राजन् ! मैं सत्यही विश्वामित्र की पुत्री हूं. मेनका अप्सरा मेरे लिये वन में परित्याग कर गई, यह सब वृत्तान्त हमारे पोषक पिता भगवान कण्व ऋषि जानते हैं। हे वीर ! अब हम आपका क्या सत्कार करें ॥ १३ ॥

हे कमललोचन ! आप विराजिये, और हमारे सत्कार को ग्रहण कीजिये, और हम लोगतो वनवासी हैं हमारे यहां नीवार ( वनकाधान्य ) हैं, आप भोजन कीजिये, और आप को यदि रुचै तो निवास कीजिये ॥ १४ ॥

दुष्यन्तउवाच ।

राजा दुष्यन्त बोले, कि-हे सुन्दर भृकुटि वाली ! हे कुशिक वंश में उत्पन्न होने वाली ! तुमको तो यह सब बात उचित ही है क्योंकि ? राजाओं में कन्या अपने सदृश वर को आप ही स्वयम्वर लेती हैं ॥ १५ ॥

तब शकुन्तला ने अङ्गीकार सूचक "ओम्" यह शब्द बोला, तब देशकाल के जानने वाले राजा दुष्यन्त ने भी धर्मपूर्वक गान्धर्व विवाह की विधी से शकुन्तला को व्याह लीनी ॥ १६ ॥

तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसम्भूतं भर्तुरन्तिकमागमत् ॥ १९ ॥
यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्यन्त ! मावमंस्थाः शकुन्तलाम् ॥ २१ ॥
रेतोधाः [(१)] पुत्रो नयति नरदेव ! यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ २२ ॥
[(२)] ( भरस्व पुत्रं भरतं वासुदेवांशसम्भवम् ।
ब्रह्मण्यं सत्यसन्धञ्च गुणाढ्यं कीर्तिवर्द्धनम् ॥ ० ॥
महोत्साहं स्थूललक्षं कृतज्ञं वृद्धसेवकम् ।
अशरीरवचः श्रुत्वा स्वीचकार तदाऽऽत्मजम् ॥ ० ॥ )
पितर्युपरते सोऽपि चक्रवर्ती महायशाः ।
महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥
चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ।
ईजे महाऽभिषेकेण सोऽभिषिक्तोऽधिराड्विभुः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुरत्ययं विक्रान्तं विक्रमणं यस्य ॥ १९ ॥ २० ॥

भस्त्रा चर्मपात्रं तद्वन्माता आधारमात्रम्, पितुरेव तु पुत्रः तत्र हेतुः येनेति "आत्मा वै पुत्रनामासि" इति श्रुतेः भरस्व पुषाण अनेन भरतनाम निरुक्तम् ॥ २१ ॥

किञ्च रेतोधाः रेतःसेक्ता पुत्रः पुत्रो यमक्षयात्पितरं नयति तारयति तथा च स्मृतिः-

"पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" ॥ इति—

पाठान्तरे मातापित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशाद्रेतोधा रेतःसेक्ता पितैव धर्मेण विजित्य पुत्रं नयति न तु मातेत्यर्थः । ततश्च भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥ २२ ॥

चक्रवर्ती बभूवेति शेषः । तस्य महिमा गीयते तत् "अन्वेते श्लोका अभिगीताः" इत्यादिबहुश्रुत्या हरेरंशभुवोऽस्याज्ञा तस्य ॥ २३ ॥

तत्र विष्णुचिह्नं चक्रमिति ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अमोघेति । अमोघमवितथं वीर्यं यस्य स राजर्षिर्दुष्यन्तो महिष्यां शकुन्तलायां वीर्यं रेत आधत्ते निहितवान् ततः श्वोभूते प्रभाते स्वपुरं गतः ततः कालेन प्राप्तकाले सा शकुन्तला सुतं पुत्रमसूत सुषुवे ॥ १७ ॥

कपवेति । तस्य कुमारस्य समुचिताः क्रियाः जातकर्मादिक्रियाः कण्वो वन एव चक्रे स च बालस्तरसा बलेन मृगेन्द्रं सिंहं बध्वा तेन क्रीडति स्म बाल्यौदार्यापरिमितबलशौर्यादिगुणसंपन्न इत्यर्थः ॥ १८ ॥

तमिति । तमपारविक्रमं भगवतोऽशांशेन सम्भूतं कुमारमादाय शकुन्तला भर्तुः दुष्यन्तस्यान्तिकम् आगमत् ययौ ॥ १९ ॥

यदेति । तावागतावनिन्दितौ निर्दुष्टौ भार्यापुत्रौ राजा दुष्यन्तो यदा न जगृहे ममैवमौ भार्यापुत्राविति न स्वीकृतवान् तदा सर्वभूतानां शृण्वतां सतां खे आकाशे अशरीरिणी वागाह अभ्यधत्तेत्यर्थः ॥ २० ॥

तामेव दर्शयति—मातेति । भस्त्रा चर्ममयं पात्रं तद्वत् माता आधारमात्रं पितुरेव पुत्रः तत्र हेतुः, येनेति. येन पित्रा जीवः उत्पादितः स पुत्रः स एव पितैव "आत्मा वै पुत्रनामा" इति श्रुतेः । अतः पुत्रं दौष्यन्तिं दुष्यन्तस्य तवैवापत्यत्वेन स्वत्र-

(१) पितरं पुत्रो नयत्येव इति वीर० । (२) इमौ श्लोकौ व्याख्यामन्तराऽधिकौ पठ्येते वीरराघवीयेन० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्पशङ्का परिहृता भरस्व पोषय शकुन्तलां मावमंस्थाः मावमानं कुरु भरस्वेत्युक्त्या भरतं नाम निरुक्तम् ॥ २१ ॥

किञ्च रेतोधाः रेतःसेक्ता वंशकृत्पुत्रः हे नरदेव ! यमक्षयात् यमसदनात् पितरं स्वर्णयति पुत्रमिति द्वितीयान्तपाठः प्रामादिकस्तत्र यमक्षयादिमिति शेषः । पुत्रं रेतोधाः पिता नयति, मृतपुत्रं विनान्यं क्वापि स्थितं पुत्रं पिता स्वीकरोतीत्यर्थः । यमक्षयमिति पाठान्तरं तदा तद्वाक्यान्तरं यं रेतोधातारं पुत्रः अक्षयं स्थानं नयति स रेतोधाः पुत्रं नयति स्वीकरोतीत्यर्थः । पूर्वपाठे एवं चान्वयः हे नरदेव ! अधा इति छेदः रेतो निहितवानसि शकुन्तलायामिति विभक्तिपरिणामेनानुषङ्गः अतोऽयं तव पुत्रस्त्वां यमक्षयान्नयति नेष्यति स्वर्गमिति शेषः । अतः स्वीकुर्विति भावः । शकुन्तलोक्तं नानृतमित्याह—त्वमिति । अस्य गर्भस्यापत्यस्य धाता विधाता उत्पादकस्त्वमेवेति यच्छकुन्तला आह तत्सत्यमेव नानृतमित्यर्थः । ततश्च स भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥ २२ ॥

ततः पितरि दुष्यन्ते उपरते मृते सति सोऽपि भरतोऽपि चक्रवर्ती सप्तद्वीपाधिपतिः महायशाः बभूव तं विशिषन् तद्वृत्तान्तमाह—महिमेत्यादिना । भुवि हरेर्भगवतोंऽशेन जातस्य यस्य भरतस्य महिमा गीयते तत् "अप्येते श्लोका अभिगीताः" इत्यादिवक्ष्यमाणश्लोकैरिति शेषः ॥ २३ ॥

हरेरंशभवत्वे लिङ्गं वदन् विशिनष्टि—चक्रमिति । अस्य भरतस्य दक्षिणे हस्ते चक्रचिह्नाकारो रेखा पादयोस्तु पद्मकोशाकारा अवर्तत इति शेषः स च भरतो महाभिषेकविधिनाऽभिषिक्तोऽधिराट् सार्वभौमो विभुर्भूत्वा ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समुदिताः- निधियुक्ताः ॥ १८ ॥

तं कुमारं प्रमदोत्तमा शकुन्तला ॥ १९ ॥

अशरीरिणी वाक् देवी वाणी आह—गुह्यभाषया राजानमिति शेषः । "त्रिभाषां यो न जानाति रीतीनां घातमेव च" इत्युक्तेः । पुराणेषु भाषात्रयस्य व्याप्यमानत्वात् ॥ २० ॥

यथा भित्तिशाला चुल्लीस्थिताग्निपाकयुद्धिकरत्वेनाग्नेराधारमात्रं भस्त्रा "भस्त्रभस्त्रणदीप्त्योः" इति धातोः तथा माता भर्त्राऽऽहितं वीर्यमादाय करचरणाद्यवयवविशिष्टदेहाकारपरिणामप्राप्तस्य वीर्यस्य प्रथमाधारभूतत्वात् मातुः पुत्रत्वमौपचारिकं तर्हि कस्य मुख्यपुत्रत्वमिति तत्राह—पितुरेव पुत्र इति, मुख्यपुत्रत्वं पितुरेव कुत इत्यत्राह—यस्मादिति । स पितैव पुत्रो जातः इति यस्मात्तस्मात्स पुत्रः पितुरेवेत्यर्थः । "आत्मा वै पुत्रनामासि" इति श्रुतेः "तज्जाया जाया भवति यदस्यां जायते पुनः" इति च पुत्रदेहस्याऽपि पितृदेहैकदेशस्योपादानत्वद्योतनाय पितुरित्युक्तम् अन्यथा पिता पुत्र इति प्रयोगस्यापि सम्भवात् प्रकृते किमपेक्षितमिति तत्राह—भरस्वेति भरस्व, अन्यपुत्रं कथं स्वीकरोमीत्यत उक्तं दौष्यन्तिमिति" औरसं पुत्रमित्यर्थः ।

अतः शकुन्तला स्वैरिणीति माऽवमंस्थाः अवज्ञातां न कुरु ॥ २१ ॥

ननु, पुत्रेण मम किं प्रयोजनं स्याद्येन भार्या स्यादिति तत्राह—पुत्र पुत्रः रेतोधाः रेतोधातारं पितरं यमक्षयं योऽक्षयोऽनन्तो लोकस्तं वैकुण्ठादिकं नयति प्रापयति "यस्मात्पुत्रमनुशिष्टं लोकमाहुस्तस्मादेनमनुशासति" इति हि श्रुतिः । नरदेव दुष्यन्त ! दौष्यन्तिं पुत्रं स्वीकुर्विति शेषः । मयाऽनाहितगर्भजातं पुत्रं कथं दौष्यन्तिमिति वदतीति तत्राह—त्वं चेति । चशब्द एवार्थे त्वमेवास्य गर्भस्य धाता आधानकर्ता क आहेति तत्राह—सत्यमिति । शकुन्तला सत्यं यथार्थमेव नाऽनृतमाह यः पुत्रः स रेतोधातारमक्षयं नयतीति वा "सुपिङुपग्रहलिङ्गनराणाम्" इति सूत्राद्वचनव्यत्ययो युक्तः अथवा स्वीकारणार्थमाह—रेतोधा इति रेतोधा भवान् पुत्रं यमक्षयं मृत्युलोकं नयति मृतप्रायं करोति अस्वीकारात् तेन सुतपुत्रहत्या दोषप्राप्तिस्तव स्यादतस्तद्भयादपि स्वीकुर्वित्यर्थः । ननु, नाहं रेतोधा इति, नेत्याह—त्वं चेति. अथवा तदुक्तं श्रुत्वा अस्वीकरोमि इत्यतस्तल्लक्षणमाह—रेतोधा इति । यमयति शिक्षयति शिष्यमिति यमो गुरुः "क्षि निवासगत्योः" इति क्षयो निवासः रेतोधाः पुत्रं गुरुनिवासं नयतीति स्यायात् भवानपि पुत्रं स्वीकृत्य गुरुकुलवासं प्राप्य नयति न्यायशास्त्रादिविशारदं करोतीत्यर्थः । स्वत्पुत्रत्वसंशयो माभूदित्याह—त्वञ्चेति । अथवा रेतोधाः अक्षयगमतिमनन्याधारं यं पुत्रं नयति स्वाश्रयं करोति स पुत्रः तं रेतोधातारम् अक्षयं लोकं नयति अनन्याधारत्वे हेतुगर्भविशेषणमाह—त्वञ्चेति । अस्य सर्वस्य प्रमाणं शकुन्तलावचनमित्याह, सत्यमिति । द्वितीया च प्रथमेत्यनुवर्तते द्वितीयाविभक्तिः सप्तसु वर्तत इति द्वितीयायाः प्रथमात्वसम्भवात्पुत्रमित्यादेः प्रथमात्वं सप्रमाणिकं रेतोधा इत्यस्य द्वितीयात्वं चेत्यर्थः । माता भस्त्रेति लुप्तोपमं हिरण्यधान्यादिग्राहिणी पात्री भस्त्रानाम यथा तथा भर्त्राहितवीर्यधारणी माता पुत्रस्य द्वारमात्रं पितृवीर्यात्मकस्वोत्पत्तुरेव पुत्र इति वा योजना, शेषः पूर्ववत् ॥ २२ ॥

पितरि दुष्यन्ते उपरते मृते सति स दुष्यन्तपुत्रः भरस्वेत्युक्तत्वात् भरतो भरेण हरिणा ततत्वाद्वा भूमेर्भरं भरणं तनोतीति वा गुणे रतत्वाच्च गुरुत्वलक्षणभारेण ततत्वाद्वा चक्रवर्ती आत्मैव धर्माधर्मशास्ताऽभूदित्यन्वयः ॥ २३ ॥

नाम्ना महाभिषेकेणाऽभिषिक्त इति वा ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न जगृहे लोकप्रवादभयान्न जग्राह ॥ २० ॥

भस्त्रा चर्मपात्रं तद्वदेव माता आधारपात्रं पितुरेव पुत्रः "आत्मा वै पुत्रनामासि" इति श्रुतेः भरस्व अङ्गीकुरु अनेनैव भरतनामनिरुक्तिः ॥ २१ ॥

रेतोधाः रेतस्सेक्ता वंशकृदित्यर्थः अथवा पितुरेतः स्वदेहोपादानत्वेन धत्ते इत्यौरसः पुत्र इत्यर्थः । यमक्षयात् यमालयात् पितरं नयति तारयति तथा च स्मृतिः "पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति पुत्रमिति द्वितीयान्तपाठे पुत्रप्राप्त्यर्थं मातापित्रोर्विवादे यमक्षयात् धर्मनिर्णेतुर्यमस्य स्थानात् रेतोधा रेतः-

पञ्चपञ्चाशता मेध्यैर्गङ्गायामनु वाजिभिः ।
[1]मामन्तेयं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥
अष्टसप्ततिमेध्याश्वान् बबन्ध प्रददद्वसु ।
भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ।
सहस्रं बद्वशो यस्मिन् ब्राह्मणा गा विभेजिरे ॥ २६ ॥
त्रयस्त्रिंशच्छतं ह्यश्वान् बद्धा विस्मापयन्नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां [2]गुरुमाययौ ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

संक्ता पित्रैव धर्मेण विजित्य पुत्रं नयति न तु मातेत्यर्थः । ततश्च भार्यापुत्रौ स्वीकृतवान् इति शेषम् ॥ २२ ॥

चक्रवर्त्ती बभूव ॥ २३—२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुरत्ययमलङ्घ्यं निश्रान्तं विक्रमणं यस्य तम् ॥ १८ ॥ १९ ॥

भस्त्रा चर्मयन्त्रं तद्वदाधारमात्रं माता भवति पुत्रस्तु पितुरेव न केवलं तत्सम्बन्धी किन्तु येन जातः स एव जनयिता स पुत्राकारो भवति "आत्मा वै पुत्रनामासि" इति श्रुतेः । हे दुष्यन्त ! पुत्रं भरस्व पोषय शकुन्तलामपि माऽवमंस्थाः धर्मपत्नीमिमां स्वीकुर्वित्यर्थः ॥ २० ॥

हे नरदेव ! रेतोधाः रेतस्सेक्ता वंशप्रवर्त्तकः पितरं यमस्य क्षयात् स्थानात् नरकादपि नयति पुण्यलोकान् गमयति "पुंनाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ पुत्रेण जयते लोकान्" इत्यादिवाक्येभ्यः त्वं च अस्य गर्भस्य धातोत्पादकः शकुन्तलापि सपुत्रोपस्थिता सत्यमेवाह—एवमुक्तः भार्यापुत्रौ स्वीकृतवानिति बोध्यम् ॥ २१ ॥

पितरि उपरते राज्याभिषिक्तः सः चक्रवर्त्ती बभूवेति शेषः । हरेः अंशभूतअंशाज्जातस्य तस्य महिमा तत् "अप्येते श्लोका अभिगीताः" इत्यादि बहुत्वश्रुत्या गीयते ॥ २२ ॥ २३ ॥

कथमीजे इत्यत्राह—गङ्गायामनुलोमं गङ्गासागरसङ्गमादारभ्य भरतखण्डमर्यादापर्यन्तं पञ्चपञ्चाशता वाजिभिः वसु धनं प्रकर्षेण ददत् ईजे तथा यमुनायामनु प्रायागादारभ्य भरतखण्डमर्यादापर्यन्तम् अष्टाधिकसप्तति मेध्यान् अश्वान् बबन्ध तावत्सङ्ख्याकैरश्वैरीज इत्यर्थः ॥ २४ ॥

भाषा टीका ।

और अमोघ वीर्य वाले राजर्षि ने अपनी महिषी ( रानी-शकुन्तला ) के गर्भ में वीर्य धारण किया और प्रातःकाल में अपने पुर को चले गये, समय प्राप्त होने पर शकुन्तला ने सुत उत्पन्न किया ॥ १७ ॥

कण्व ऋषि ने शकुन्तला के कुमार की शास्त्रोक्त सब क्रिया करी वह कुमार भी संस्कार संपन्न होकर सिंहोंको बान्धकर खेलता हुआ ॥ १८ ॥

उस दुरत्यय पराक्रम वाले और हरी के अंशांश से उत्पन्न होने वाले अपने पुत्र को लेकर वह प्रमदोत्तमा ( नारियों में श्रेष्ठ ) शकुन्तला अपने भर्ता के समीप जाती गई ॥ १९ ॥

जब राजाने अनिन्दित दोनों भार्या पुत्रों को नहीं ग्रहण किया तब सर्वभूत प्राणियों के सुनते २ आकाश वाणी होती गई ॥ २० ॥

कि "माता तो भस्त्रा अर्थात् चर्मपात्र के तरह पुत्र का आधार पात्र रूप है और पुत्र तो पिता हीका होता है क्योंकि जो जिस से उत्पन्न भया वह भी वही है । तस्मात् तूं इस पुत्र का पोषण कर और शकुन्तला का अपमान मत करो ॥ २१ ॥

हे नरदेव ! वंश वृद्धिकरने वाला पुत्र यमलोक से अपने पिता को ला सक्ता है और इस के गर्भ का आधान करने वाला तूं ही है शकुन्तला सत्य बोलती है इस प्रकार की आकाश वाणी को सुनकर राजाने अपनी शकुन्तलारानी और राज कुमार दोनों को स्वीकार किया ॥ २२ ॥

समय पाकर पिता ( दुष्यंत ) के देहान्त होने पर वे भरत महाराज भी चक्रवर्त्ती और बड़े यश वाले होते हुए, हरि के अंश से उत्पन्न होने वाले ऐसे जिन भरत महाराज की महिमा पृथ्वी पर गाई जाती है ॥ २३ ॥

जिन दाहिने हस्त में चक्र रहा और चरणों में कमल के मुकुल ( कली ) का चिन्ह रहा वे भरत महाराज राज्याभिषेक को प्राप्त होकर परम समर्थ अधिराट् होकर महाभिषेक से श्रीहरि का यजन करते हुए ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गङ्गायामनुलोमं पञ्चपञ्चाशता वाजिभिरीजे पुरोधाय पुरोहितं कृत्वा यमुनायामनु यमुनायाश्चानुलोमम ॥ २५ ॥

(१) दीर्घतमसमिति वीर० विज० । (२) गुरुमायिनामिति वी० ।

मृगान् शुक्लदतः कृष्णान् हिरण्येन परीवृतान् ।
अदात्कर्मणि [1] मष्णारे नियुतानि चतुर्दश ॥ २८ ॥
भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥
किरातहूणान्यवनानन्ध्रान्कङ्कान्खशान् शकान् ।
अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान् दिग्विजयेऽखिलान् ॥ ३० ॥
जित्वा पुराऽसुरा देवान्ये रसौकांसि भेजिरे ।
देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ॥ ३१ ॥
सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी ।
समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्त्तयत् ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाधिकसप्ततिमेध्यानश्वान्बबन्ध किङ्कुर्वन् वसु धनं प्रकर्षेण ददत् सात्विगुणे प्रकृष्टगुणवति देशेऽग्निश्चितोऽभूत् यस्मिन्नग्निचयने देशे वा सहस्रशो ब्राह्मणाः भरतेन भूरिदानेन दत्ताः गाः बद्धशः प्रत्येकं बद्धं विभेजिरे विभज्य जगृहुः चतुरशीत्यधिकैकयोदशसहस्रैरेकं बद्धं भवति तथाहि "हिरण्येन परीवृतान्कृष्णान् शुक्लदतो मृगान् मष्णारेऽभरतो ददाच्छतसहस्राणि सप्त च" इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन सङ्गृहीतानि "अदात्कर्मणि मष्णारे नियुतानि चतुर्दश" इति एवं चतुर्दशबद्धानां सप्ताधिकशतभागो बद्धमित्युक्तम् इयं च बद्धसङ्ख्या श्लोकेन सङ्गृह्यते ।

"चतुर्दशानां बद्धानां सप्ताधिकशतांशकः ।
बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश" ॥ २६ ॥

देवानामपि मायां वैभवमत्यगादत्यशेत यतः गुरुं पूज्यं हरिमाययौ प्राप्तः तदंशभवत्वात् मायवत्तर इति पाठे तु अयं भुत्यनुसारेण मायावतां श्रेष्ठो हरिरेवाऽसावित्यर्थः ॥ २७ ॥

मृगान् श्वेतगजान् भद्रमन्द्रमृगादयो गजजातिभेदाः मष्णारे इत्यस्य श्रुतिपदस्य व्याख्यानं कर्मणीति कस्मिंश्चित्कर्मविशेषे काचित्तु मष्णारं तीर्थं इति व्याचख्युः ॥ २८—३० ॥

पुरा देवान् जित्वा येऽसुरा रसौकांसि रसातलादिस्थानानि भेजिरे तैः प्राणिभिर्यैर्देवस्त्रियो रसातलं नीताः सतीः पुनराहरदानिन्ये प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता इति वा पणिभिरिति पाठे पणयोऽसुरास्तैर्नीताः सतीः यद्वा पणयो दूतास्तैर्दूतान्प्रस्थाप्याहरदित्यर्थः ॥ ३१ ॥

त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रं वत्सरान् चक्रं सेना आज्ञा वा ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गङ्गायामनु गङ्गातीरे गङ्गाया अनुलोमं वा गङ्गासागरसङ्गमादारभ्य यावत्तदुत्पत्ति तावदित्यर्थः । पञ्चपञ्चाशता पञ्चाशदधिकशतत्रयसङ्ख्याकैः वाजिभिरश्वैर्भगवन्तमीजे उक्तसंख्याकैरश्वमेधैरनेन भगवन्तमाराधितवानित्यर्थः । तदा दीर्घतमसम् ऋषिं पुरोधाय पुरोहितङ्कृत्वा प्रभुर्भरतः यमुनायामनु पूर्ववदर्थः ॥ २५ ॥

अष्टसप्ततीति अष्टाधिकसप्ततिमेध्याश्वान् उक्तसंख्याकान् मेध्यान्निर्दुष्टानश्वान् बबन्ध तावतामश्वानां बन्धनपूर्वकैर्मेधैरीज इत्यर्थः । कथम्भूतः ? वसु धनं प्रददत् प्रयच्छन् दौष्यन्तेर्दुष्यन्तसुतस्य भरतस्याग्निः सात्विगुणे प्रकृष्टगुणवति देशे चितः यस्मिन्नग्निचयने तद्देशे वा सहस्रं ब्राह्मणाः भरतेन भूरिदानेन दत्ताः गाः बद्धशः प्रत्येकं बद्धा बद्ध्वा विभेजिरे विभज्य जगृहुः सहस्रशब्दो बहूनामुपलक्षकः ॥ २६ ॥

तथा मष्णारे तीर्थविशेषे कर्मणि यज्ञकर्मणि मष्णाराख्ये कर्मणि वा, अपरिमितशब्दकृतसंख्याकानश्वान् बद्ध्वा नृपान् पार्थिवान् विस्मापयन् पुरु बह्व्यः मायाः यस्य सन्तीति तथा तेषां देवानां मायामश्वहरणादिरूपां दौष्यन्तिर्भरतोऽत्यगात् देवैर्नृपैश्च चिकीर्षितं यज्ञविघ्नमपाकृत्याजतेत्यर्थः ॥ २७ ॥

शुक्लदतः शुक्लदन्तान् हिरण्येन परिवृतान् चतुर्दशनियुतसंख्याकान् मृगान् भद्रमृगादिसंज्ञकान् गजानदात् प्रायच्छत् ॥ २८ ॥

किञ्च भरतस्य महदद्भुतं कर्म पूर्वेऽपरेऽर्वाचीनाश्च नृपाः नैवापुर्नैव कृतवन्तः नापि प्राप्स्यन्ते नापि करिष्यन्ति यथा जनाः बाहुभ्यां गमनसाधनाभ्यां त्रिविष्टपं नैव प्रापुः नापि प्राप्नुवन्ति प्राप्स्यन्ति च तद्वत् ॥ २९ ॥

महत्कर्मैव दर्शयति—किरातहूणानिति । अब्रह्मण्यान् ब्राह्मणेष्वसाधून् किरातादीन् हीनजातीन् नृपान् च म्लेच्छांश्च सर्वान् दिग्विजयेऽहन् हतवान् ॥ ३० ॥

किञ्च ये असुरा राक्षसाः पुरा पूर्वकाले देवान् जित्वा रसौकांसि रसातलस्थानानि भेजिरे प्राप्ताः तैः प्राणिभिर्यैर्देवस्त्रियो रसां रसातलं प्रति नीताः प्रापिताः ताः पुनराहरत् आनयत् प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता इति वा पणिभि-

---

(१) मष्कारे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रेति पाठे पणयो ऽसुरास्तैर्नीताः यद्वा, पणयो वृताः वृतान् इत्याप्याहरदित्यर्थः ॥ ३१ ॥

किञ्च भरते राजनि सति रोदसी द्यावापृथिव्यौ तस्य प्रजानां तद्विपर्ययाणां सर्वान् कामान् दुदुहतुः पूरयामासतुः एवं त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रसंवत्सरान् दिक्षु चक्रम् आज्ञामवर्तयत् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

को महाभिषेको नाम यज्ञः ? इत्यतस्तत्स्वरूपमाह-पञ्चेति । गङ्गायामनु समीपतीरे पञ्चपञ्चाशतैः पञ्चभिः पञ्चाशता च दीर्घतमसं पुरोधाय पुरोहितं कृत्वा प्रभुरुत्तमकल्पेन यष्टुं समर्थः तथैव यमुनायाम् अनुतीरे अष्टसप्तति मेध्याश्वान् बबन्ध तदा दक्षिणां वसु रत्नराशिमेव प्रददौ भरतस्येदं च सामर्थ्यमाह भरतस्येति । कैकेयीपुत्रव्यावृत्त्यर्थं दौष्यन्तेरिति । भरतस्य यज्ञ अग्निप्रणयने नेतृत्वादग्निनामा साचीगुणो चितः सचिवगुणा कृतः आचिव्यंकृतवानित्यर्थः ॥ २५ ॥

यस्मिन् यज्ञे ब्राह्मणा वन्दशः सहस्रं द्विसाहस्रं गाः विभेजिरे विभज्य स्वीकृतवन्तः दौष्यन्तिः नृपस्तस्मिन्यज्ञे त्रयस्त्रिंशच्छतम् अश्वान् बद्ध्वा नृपान् विस्मापयन् विस्मितङ्कुर्वन् उरुमायया महता महिम्ना देवानां मायां निजभोगेच्छामत्यगात् काङ्क्षितादप्यधिकं दत्तवानित्यर्थः । यज्ञ विघ्नकरीमतिक्रान्तवानिति वा ॥ २६ ॥ २७ ॥

शुक्लदतः शुक्लदन्तान् कृष्णान् मृगान् कृष्णमृगान् गजान् वा "भद्रो गजो मृगश्चेति" हलः । मष्णारे व्रतविशेषसमाप्तिलक्षणे कर्मणि क्रियमाणे इति शेषः । तीर्थविशेषे वा ॥ २८ ॥

पूर्वे नृपा न उदायुः प्रापुः अपरे पश्चात्तना न प्राप्स्यन्ति इदानीन्तना नाप्नुवन्तीति किमु वक्तव्यं, तत्र दृष्टान्तमाह-बाहुभ्यामिति । अग्निष्टोमादिसाधनमन्तरेण केवलं बाहुभ्यां स्वर्गं यथा तथा "आकाशं त्रिदिवे व्योम्नि दिव्यपि" इति यादवः ॥ २९ ॥

स किरातादीन् म्लेच्छानब्रह्मण्यान् ब्राह्मणविरोधिनो नृपानहन् ॥ ३० ॥

असुरांश्च जित्वा येन भरतेन देवाः स्वौकांसि स्वस्थानानि भेजिरे सः नाम्ना पणिभिरसुरैः रसातलं नीता देवस्त्रियः पुनराहरत् आनीतवान् ॥ ३१ ॥

त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रपरिमितान् वर्षान् चक्रमाज्ञां "चक्रं सैन्यं जलावर्ते" इत्यादि "चक्रमाज्ञा रथाङ्गयोः" इति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अश्वान् बबन्ध यज्ञार्थमिति शेषः ॥ २६--२९ ॥

---



श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वाजिभिरश्वमेधैः ममतायाः पुत्रं पुरोधाय पुरोहितं कृत्वा अश्वान् बबन्ध यज्ञार्थमित्यर्थः ॥ २५ ॥

साचीगुणः प्रकृष्टगुणवति देशे अग्निश्चितोऽभवत् यस्मिन् अग्निचयने कर्मणि सहस्रसङ्ख्या ब्राह्मणाः प्रत्येकं बद्धं बद्धं चतुरशीत्यधिकत्रयोदशसहस्राणि गा विभेजिरे प्रापुः बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश ॥ २६ ॥

देवानामपि मायां वैभवम् अत्यगमत् अत्यशेत ... गुरुं जगद्गुरुं हरिं च ययौ प्राप्तः । मायावत्तर इति पाठे मायाधेयत्वं तद्गतां श्रेष्ठः हरेरंशत्वात् ॥ २७ ॥

मृगान् श्वेतगजान् भद्रमन्द्रमृगाद्यो गजजातिभेदा उच्यन्ते मष्णारे कस्मिंश्चित् कर्मविशेषे तीर्थविशेषे इति केचिदाहुः । चतुर्दशलक्षाणि अदात् । तथा च स्मृतिः "हिरण्येन परिवृतान् कृष्णान् शुक्लदतो मृगान् । मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च" इति तेन सप्ताधिकशतबद्धान्येव चतुर्दशलक्षाणि भवन्तीति श्रीशुकदेवविवरणात् चतुर्दशलक्षाणां सप्ताधिकशतभागो यश्चतुरशीत्यधिकत्रयोदशसहस्रप्रमाणः स एव बद्धं भवतीत्यवसीयते. अत एव बद्धसंख्या श्लोकेनोक्ता "चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः । बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश" इति ॥ २८ ॥ २९ ॥ ३० ॥

ये असुराः पुरा देवान् जित्वा स्वौकांसि रसातलादिस्थानानि भेजिरे प्राप्ताः अत एव देवस्त्रियः रसातलं नीता नीतवन्तः तेभ्य एवासुरेभ्यः सकाशात् ताः स्त्रियः बलिभिः प्राणिभिः स्वपोष्यजनैः पुनः आहरत् आनिनाय आनीय च दिवि देवान् प्रापयामासेति भावः । पणिभिरिति पाठे पणिभिरसुरैर्वारभूताः स्त्रियो नीताः ॥ ३१ ॥

त्रिणवसाहस्रीः सप्तविंशतिसहस्रं वत्सरान् व्याप्य चक्रं सेनाम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ २५ ॥

साचीगुणः प्रकृष्टगुणयुक्ते देशे चितः यत्र अग्निचयने देवो वा भरतेन दत्ताः गाः सहस्रं ब्राह्मणाः बद्धाः चतुरशीत्यधिकत्रयोदशसहस्रैरेकं बद्धं भवति प्रत्येकं बद्धं विभज्य जगृहुः ॥ २६ ॥

त्रयस्त्रिंशच्छतमश्वान्बद्ध्वा नृपान् विस्मापयन् देवानामपि मायां प्रभुत्वशक्तिमत्यगात् गुरुं पूज्यं भगवन्तमायषी जगाम ॥ २७ ॥

"हिरण्येन परिवृतान् कृष्णान् शुक्लदतो मृगान् । मष्णारे भरतो ददाच्छतं बद्धानि सप्त च" इति श्रुत्युक्तान् सप्ताधिकशतं बद्धसङ्ख्याकान् मृगान् कर्मणि दत्तवान् तानेव चतुर्दशलक्षसङ्ख्याकत्वेन विवृत्य दर्शयति-मृगानिति । मृगान् गजान् भद्रमन्द्रमृगाद्यो गजजातिभेदाः मष्णारे इति श्रुतिपदं व्याचष्टे कर्माणि ॥ २८ ॥

भरतस्य महत् अद्भुतं कर्म पूर्वे नृपाः नैवापुः नैव कृतवन्तः अपरे नैव प्राप्स्यन्ति नैव करिष्यन्ति यथा बाहुभ्यां त्रिदिवं नैवापुर्नैव प्राप्स्यन्ति ते अथवा जना इति शेषः ॥ २९ ॥

स सम्राट् लोकपालाख्यमैश्वर्यमधिराट् श्रियम्।
चक्रं[1] चास्खलितं प्राणान् मृषेत्युपरराम ह॥ ३३॥
तस्यासन्नृप! वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः।
जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते॥ ३४॥
तस्यैवं वितथे वंशे तदर्थं यजतः सुतम्।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः॥ ३५॥
अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः।
प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत्॥ ३६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

म्लेच्छान् अब्रह्मण्यान् नृपांश्चाहन् हतवान् किञ्च पुरा असुराः देवान् जित्वा रसौकांसि रसातलानि भेजिरे प्राप्ताः तदा प्राणिभिर्वलिभिरसुरैर्देवस्त्रियो रसौकांसि नीता यास्ताः पुनराहरत् आनीतवान्॥ ३०॥ ३१॥

तस्य राज्ञः प्रजानां सर्वान् कामान् रोदसी द्यावापृथिव्यौ दुदुहतुः पूरयामासतुः त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रसंवत्सरान् चक्रमाज्ञामवर्तयत्॥ ३२॥

---

### भाषा टीका।

और ममतेय को पुरोहित बना कर श्रीगङ्गाजी के तट पर पचपन (५५) बाजि मेध यज्ञ करते हुए, तथा यमुना तटपर भी करते हुए॥ २५॥

और अठहत्तर पवित्र अश्वों को अर्थात् यज्ञोपयोगि अश्वों को धन देकर बांध लिये। दुष्यन्त के पुत्र भरत महाराज के अग्नि का चयन (स्थापन) बड़े गुण वाले देश में भया कि-जिस देश में सहस्र ब्राह्मणों को एक एक बद्व गायें प्राप्त हुईं। बद्व नाम (१३०८४) इतनी सङ्ख्या का है॥ २६॥

भरत चक्रवर्ति ने एक सौ तेतीस (१३३) अश्वों को युद्ध के निमित्त बांध कर अन्य राजाओं को विस्मयों कराते हुए, दुष्यन्त के पुत्र राजा भरत महाराज देवों की माया को जीत गये क्योंकि साक्षात् श्रीहरि को प्राप्त हुए हैं॥ २७॥

मृगनामक श्रेष्ठ जाति वाले शुक्ल दांतों वाले हस्तियों सुवर्ण के भूषणों से अलंकृत कर के मष्णार नामक कर्म के विषे चौदह नियुत दान किये। नियुत नाम एक लक्ष का है॥ २८॥

चक्रवर्त्ती भरत महाराज के कर्म को न आज तक कोई राजा लोग प्राप्त हुए और न आगे ऐसे कोई भी राजा लोग प्राप्त होंगे, जैसे हाथों से किसी को स्वर्ग नहीं प्राप्त हुआ, फिर वर्त्तमान समय में तो उनके यश को कौन प्राप्त हो सका है॥ २९॥

और राजा भरत दिग्विजय में, किरात, हूण, यवन, अन्ध्र कङ्क, कश, शक, और म्लेच्छ, इत्यादि जो २ अब्रह्मण्य राजा लोग रहे तिन सबों को मार डाले॥ ३०।

पहिले समय में असुर लोग जो देवताओं को जीतकर देवताओं की स्त्रियों को और प्राणियों सहित रसातल को लेगये भरतजी उनको जीत कर फिर लाते हुए॥ ३१॥

भरतजी के राजा होने पर पृथिवी और आकाश प्रजाओं के सब कामों को पूर्ण करते हुए, इस प्रकार सत्ताईस (२७) सहस्र वर्ष पर्यंत भरतजी की दिशाओं में आज्ञा फिरती भई॥ ३२॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य वैराग्येण मोक्षप्रकारमाह—स इति। मृषेति मिथ्येति शेषः॥ ३३॥

नाऽनुरूपा मत्सदृशा न भवन्तीति भर्त्रा ईरिते सति व्यभिचारशङ्कयाऽस्मान् त्यक्ष्यतीति भयात्पुत्रान् जघ्नुः पुनः पुत्राणां दर्शनेन वैसादृश्याऽनुसन्धानेन अजेनाऽन्यथेत्याशयेन हतवत्यः॥ ३४॥

वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतः तस्य प्रसन्नाः सन्तो मरुतो भरद्वाजं नाम पुत्रमुपाददुः समर्पयामासुः॥ ३५॥

मरुतां भरद्वाजागमप्रकारं प्रदर्शयन्नाह अन्तर्वत्न्यामिति चतुर्भिः। अन्तर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां वीर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिस्तदा द्वितीयगर्भस्य अवकाशाभावादाक्रोशपूर्वकं गर्भस्थेन वारितस्ततः क्रुद्धो बृहस्पतिरन्धो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं व्यसृजत् ततो बृहस्पतेः शापादन्धो दीर्घतमाः

(१) जायास्सुतान् प्राणान् इति० वीर०

तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् ।
नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥ ३७ ॥
मूढे ! भरद्वाजमिमं भर द्वाजं बृहस्पते ! ।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥
चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ।
व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे पारमहंस्यां संहितायां वैयासिक्याम् पूरुवंशकीर्तने विंशोऽध्यायः ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्धो बभूव तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥ ३६ ॥

तं च परवीर्यजं भर्तुस्त्यागाद्विशङ्कितां सतीं त्यक्तुकामां ममतां प्रति सुराः एवं बृहस्पतेर्ममतायाश्च विवादरूपं श्लोकं जगुः किमर्थं जगुरत आह—तस्य नामनिरुच्यते येन तत् तन्नामनिर्वचनेनैव भर्तुस्त्यागशङ्कामपाकर्तुमित्यर्थः ॥ ३७ ॥

तत्र पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह, हे मूढे ! इमं पुत्रं भर पुषाण, भर्तुर्बिभर्मीति चेत्तत्राह—द्वाजमेकस्य क्षेत्रे अन्यस्य बीजादित्येवं द्वाभ्यां जातमतस्तवाप्ययं पुत्र इति न त्वस्माद्भयशङ्केत्यर्थः । एवमुक्ता सती तं प्रत्याह—हे बृहस्पते ! त्वमिमं भर यतो द्वाजं द्वाभ्यामावाभ्यामस्याजनो जातम् अतो नाहमेकाकिनी भरामीत्यर्थः । यद्यस्मादेवमुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाज इति । पाठान्तरे यस्य त्यागदुःखात् पितरौ यातावित्यर्थः ॥ ३८ ॥

वितथं व्यभिचारसम्भवात्तमात्मजं वितथं निरर्थकं मत्वा ममता व्यसृजत्तत्याज पाठान्तरे आदिजं प्रथमजं भर्तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः । एवं तया त्यक्तं मरुतोऽबिभ्रन्नबिभरुः तदेवं मरुद्भिः प्राप्तोऽयं भरतस्यान्वये वितथे सति दत्तः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वर्तयन्नपि स सम्राट् सार्वभौमो भरतः लोकपालानामैश्वर्यमतुलां तां श्रियम् अव्याहतमाज्ञाचक्रं प्राणांश्च मुधेत्यमित्या ति निश्चित्य उपरराम विरक्तो ऽभवत् ॥ ३३ ॥

हे नृप ! तस्य भरतस्य सुतस्मताश्तिस्रः पत्न्यः विदर्भस्य सुताः आसन् ताश्चैकैकं जातान् पुत्रान् मम नानुरूपाः सदृशा इमे पुत्रा न भवन्तीति भर्त्रा ऽभिहिते सति व्यभिचारशङ्कयाऽस्मान् त्यक्ष्यतीति भयात् अघ्नुः ॥ ३४ ॥

एवं तस्य भरतस्य वंशे वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमाख्येन यागेन यजन आराधयतः तस्य प्रसन्नाः मरुतः भरद्वाजाख्यं सुतमुपादाय समर्पयामासुः ॥ ३५ ॥

तस्य भारद्वाजनाम निर्वक्तुं कथामाह—अन्तर्वत्न्यामिति । कदाचित् बृहस्पतिः भ्रातुरुचथ्यस्य भार्यायामन्तर्वत्न्यां गर्भिण्यां ममताख्यायां मैथुनार्थं प्रवृत्तस्तदा द्वितीयगर्भावकाशाभावात् आक्रोशपूर्वकं गर्भस्थेन वारितस्ततः क्रुद्धो बृहस्पतिः दीर्घं तमः प्रवेक्ष्यसि अन्धश्च भविष्यतीति तं गर्भं शप्त्वा बलाद्वीर्यं व्यसिञ्चत् ॥ ३४ ॥

अतो बृहस्पतेः शापात् गर्भस्थो दीर्घतमा बभूव तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं भूमौ पतितम् सद्य एव कुमारो ऽभवत् तं च परवीर्यजं भर्तुस्त्यागाद्विशङ्किता सती त्यक्तुकामां ममतां प्रति सुरा बृहस्पतेश्च ममतायाश्च विवादरूपं श्लोकमेनं "मूढे" इति वक्ष्यमाणं श्लोकं जगुः, किमर्थं जगुः? इत्यत आह नामनिर्वचनं तस्येति नाम निरुच्यते येन प्रवृत्तिनिमित्तेन तन्नामनिर्वचनं तत्प्रतिपादकं श्लोकं जगुरित्यन्वयः यद्वा नाम निरुच्यते येन श्लोकेन तं जगुरित्यन्वयः तस्य नामनिर्वचनेनैव भर्तृत्यागशङ्कामपाकर्तुं जगुरित्यर्थः ॥ ३७ ॥

श्लोकमाह—मूढे इति । तत्र पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह—हे मूढे ! इमं पुत्रं भर पुषाण भर्तुर्बिभर्मीति चेत्तत्राह द्वाजम् एकस्य क्षेत्रे अन्यस्य वीर्यादित्येवं द्वाभ्यां जातमतस्तवाप्ययं पुत्र इति न तस्माद्भयशङ्केत्यर्थः । एवमुक्ता सती तं प्रत्याह, हे, बृहस्पते ! त्वमेवेमं द्वाजं द्वाभ्यामावाभ्यामस्माकं जातं भर नाहमेवं भरामीत्यर्थः । यत् यस्मादेवमुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाजसंज्ञक इति ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सुरैश्चोद्यमाना श्लोकगानपूर्वकं परिचोद्यमाना ममता तमात्मजं वितथं व्यभिचारजत्वान्निरर्थकं मत्वा व्यसृजत् मत्वाऽऽवितरमात्मजमिति पाठान्तरं तदा आदितरं प्रथमजं भर्तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातमन्तरयाजे-त्यर्थः । एवं तया त्यक्तं मरुतो बिभ्रन् आबिभरुः तदेवं मरुद्भिः प्राप्तोयं भरतस्यान्वये वितथे सति दत्तः एवं च 'वितथा-न्यपि बभूवांसि भावः ॥ ३६ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भरतस्य वैराग्यप्रकारमाह—स इति । चक्रं राष्ट्रं प्राणा-निन्द्रियाणि लोकपालानामैश्वर्यं स्वराज्यादिकं च मृषा नाश-शिरस्कमिति मत्वा उपरराम उपरतव्यापारोऽभूत् "आब्रह्मस्तम्ब-पर्यन्तमसारमाद्यन्तवदनित्यकम्" इत्यादिवाक्यप्रसिद्धं सूचयति इत्य-नेन ग्रन्थान्तरेतिहासं वा ॥ ३३ ॥

इदानीं तस्य सन्तानप्रकारं कथयति—तस्येति । वैदर्भ्यः विदर्भराजपुत्र्यः ते पुत्राः अनुरूपा अनुकूला न भवन्ति इति राज्ञा ईरिते कथिते ताः पत्युस्त्यागभयात्पुत्रांस्तान् जघ्नु-रित्यन्वयः ॥ ३४ ॥

नन्वेवं चेद्भरतस्य पुत्राभावेन परलोकक्षेमाभावः प्रसक्त इति तत्राह—तस्येति । तस्य वंशे एवं वितथे उत्सन्ने सति अनुरूपवंशवर्धनेन पुत्रेण भाव्यमिति तदर्थं पुत्रार्थं नाम्ना मरुत्स्तोमेन मरुद्विषययज्ञेन यजतस्तस्य भरतस्य मरुतो नाम-देवाः गुणनिमित्तेन नाम्ना भरद्वाजं सुतमुपाददुः पुत्रत्वेन दत्तवन्तः ॥ ३५ ॥

कस्मादस्य भरद्वाजाख्यं येन तन्नामयुक्तः स्यादतस्तज्ज्ञापनाय तदुत्पत्तिप्रकारमाह—अन्तर्वत्न्यामिति । बृहस्पतेर्भ्रातुरुतथ्यस्य पत्न्या अन्तर्वत्न्या उतथ्याहितशुक्रं दधानया नाम्ना ममतया अन्त-र्वत्न्यामिति वारितोऽपि मैथुनाय प्रवृत्तो बृहस्पतिरन्धो भवेदिति गर्भं शप्त्वा धिक्कृत्य स्ववीर्यं तस्यां ममतायामसृजत् अधादि-त्यन्वयः ॥ ३६ ॥

ततः किमभूदिति तत्राह—तमिति । तं बृहस्पतिगर्भं त्यक्तुं कामं, किमर्थम् ? उतथ्याख्यभर्तृत्यागशङ्कितां ममतां प्रति तस्य सुतस्य नाम्नो निर्वचनं येन ज्ञायते स तथा तं श्लोकं सुरा जगुरित्यन्वयः ॥ ३७ ॥

हे मूढे इमं द्वाजं भर "भृभरणे" इति धातुः न त्यज उतथ्यस्य क्षेत्रजं बृहस्पतेर्जातमिति द्वयोः उतथ्यक्षेत्रबृहस्पत्यो जातत्वात् द्वाजमिति भरद्वाजनामानं क्रियापदस्य सुबन्तपद-सायुज्येन नामत्वं स्कन्दधर इत्यादौ द्रष्टव्यं भरस्कन्धस्य-प्युपपत्तेः "पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः" इति दर्शनात् "स्कन्दिर्गतिशोषणयोः" इति धातोः

तदुक्तम् (१) द्वाजमिमं भर उतथ्यस्य क्षेत्रजो बृहस्पतेर्जात इति द्वयोर्जातत्वात् द्वाजः इति यद्वा बृहस्पतेर्बीजं प्रजार्थं सन्ततिं भरद्वयोरागतश्च इति वा बृहस्पतेर्निमित्ताद्भरद्वाजं प्रजासन्ततिं भरन् भरश्चासौ बृहस्पतेर्बीजश्चेति विग्रहः भरतेः शक्तिकरणात्वाद्‌भ्यासाभावः पितरौ दुःखात् भरत् भर्ता त्राता बृहस्पतेर्बीजतो धाजः वा शब्दस्य पूर्वनिपातो ज्ञातव्यः यथा बृहस्पतेर्जातः तथोतथ्यादपीत्यर्थः । ततः पितृभर्तृत्वात् बृहस्पतेर्बीजत्वादयं भरद्वाज इति । तदुक्तम् (२) बृहस्पतेर्बीजः प्रजासन्ततिर्येन भृता स बृहस्पतेर्भरद्वाज इति ॥ ३८ ॥

सा ममता सुरैरेवं चोद्यमाना भर्त्रेति प्रेर्यमाणापि, तमा-त्मजं देवं बृहस्पतिं पुत्रात्मना जातं मत्वा भर्तृत्यागशङ्कया तमा-त्मजं व्यसृजत् ततो देवाः द्वाजं किमकुर्वन्निति तत्राह—मरुत इति । मरुतो देवास्तं द्वाजं गर्भमबिभ्रन् भृतवन्त इति भरद्वाजः तदुक्तम् "भरद्वाजो मरुद्भिश्च भृतो जातो द्वयोर्यतः" इति ममतायां द्वाजं गतं त्यक्तं गर्भं मरुतोऽभरन्नित्यतो वा भरद्वाज इत्येषोऽर्थोऽप्यव-बोद्धव्यः, भृत्वा किं कृतं तैः ? इति तत्राह—दत्त इति । भरतस्या-न्वये वितथे सति मरुद्भिरयं भरताय दत्तः पुत्रत्वेनेति शेषः अस्य भरतपुत्रत्वानन्तरं वितथेति नामान्तरमपि ज्ञातव्यं "वित-थस्य सुतान्मन्योः" इत्युत्तरवचनाच्चेति ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

विंशोऽध्यायः ॥ २० ॥

( विजयध्वजरीत्या सप्तदशः । )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लोकपालेभ्योऽप्यासम्यक् "ख्यातिर्यश्च तथाभूतमैश्वर्यं प्राणात् बलहेतुकात् शौर्यात् [illegible] चक्रमाज्ञां च मृषा मिथ्याभूतं विचार्येति शेषः । उप[illegible]रामेति सर्वं त्यक्त्वा वनं गत्वा भक्त्या भगवन्तमवापेत्यर्थः ॥ [illegible]३ ॥

नानुरूपा न मत्सदृशा इमे [illegible]ति भर्त्रा ईरिते सति व्यभिचारशङ्कया अस्मांस्त्यक्ष्यतीति भ[illegible]त् पुत्रान् जघ्नुः ॥ ३४ ॥

तदर्थं वंशार्थं मरुत्स्तोमेन यज्ञेन यजत[illegible] बजतं तस्मै मरुतो भारद्वाजं नाम पुत्रं उपाददुः निकटमानीय [illegible]ः ॥ ३५ ॥

---

(१) तात्पर्ये (२) इदमपितात्पर्योक्तम् ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भरद्वाज एव क इत्यपेक्षायामाह–अन्तर्वत्न्यामित्यादि। भ्रातुरुतथ्यस्य पत्न्यां ममतायां तदा द्वितीयगर्भस्यावकाशाभावाद्वाक्रोशपूर्वकं गर्भस्थेन वारितः ततः क्रुद्धो बृहस्पतिरन्धो भवेति तं गर्भस्थं शप्त्वा बलाद्वीर्य्यमादधौ ॥ ३६ ॥

ततो बृहस्पतेः शापाद्गर्भस्थो दीर्घतमा अन्धो बभूव तेन तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं भूमौ पतितं सद्य एव कुमारोऽभवत् तं तु परवीर्यजं त्यक्तुकामां भर्तुस्त्यागाशङ्कितां ममतां प्रति सुरा बृहस्पतेर्ममतायाश्च संवादरूपं श्लोकं जगुः कीदृशं तस्य सुतस्य नाम निरुच्यते येन तम् ॥ ३७ ॥

पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह–हे मूढे! इमं पुत्रं भर पालय भर्तुर्बिभेमीति चेत्तत्राह–द्वाजम् एकस्य क्षेत्रे अन्यस्य बीजादित्येवं द्वाभ्यां जातम् अतस्तस्याप्ययं पुत्र इति न तस्माद्भयशङ्केत्यर्थः। ममता प्राह–हे बृहस्पते! त्वमिमं भर यतो द्वाजं द्वाभ्यामावाभ्यामन्यायतो जातं तत्रापि मय्यकामायां ते तव बलात्कारात्तवैवायं पुत्रो न मम वस्तुत इत्युक्त्वा पितरौ ममताबृहस्पती यतो यातौ गतौ ततो हेतोरयं तु भरद्वाज इति बहुःखादिति पाठे यस्य पुत्रस्य त्यागदुःखात् पितरौ यातौ ॥ ३८ ॥

सुरैरेवं चोद्यमाना हे ममते! त्वं बृहस्पतेरुपपतेरात्मजं पालयेति सोपहासमुक्तया तमात्मजं वितथं व्यर्थं मत्वा ममता बलज्जया व्यसृजत् तत्याज माद्विजमिति पाठे प्रथमजं बृहस्पतिजातमित्यर्थः। एवं तया त्यक्तं मरुतोऽबिभ्रन् अबिभरुः भूत्वा च भरतस्यान्वये वितथे सति दत्तः ॥ ३९ ॥

इतिसारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
नवमे विंशतितमः सङ्गतः सङ्गतः सताम् ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स भरतः लोकपालाख्यमिन्द्राद्यैश्वर्यं मृषाऽनित्यं मत्वा प्राणान् प्राणवत्प्रियान् पुत्रादींश्च मृषाऽनित्यान् मत्वोपरराम लोकपालाख्यैश्वर्यात्कर्मफलात् अधिराट् श्रीप्रभृतिभ्यश्च वर्तमानेभ्यो विरक्तोऽभूदित्यर्थः। सर्वतो विरक्तः सन् भगवद्भजनेन मुक्तोऽभूदिति भावः ॥ ३३ ॥

कश्चित् कस्यचित्पुत्रान् प्रतिभरतेन एते अनुरूपा न भवन्ति मन्मात्रा सहिता त्यक्तुं योग्या इतीरिते सति त्यागभयात् पुत्रान् अघ्नुः उपायेन वन्ध्या अभूवुरित्यर्थः अतः सुसम्मताः सम्भाविताः ॥ ३४ ॥

तदर्थं पुत्रार्थं मरुत्सोमेन यागेन यजतो भरतस्य प्रसन्ना मरुतः भरद्वाजं सुतमुपाददुः ॥ ३५ ॥

यदा दैवात् काममोहितो बृहस्पतिः अन्तर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां मैथुनाय प्रवृत्तः गर्भस्थेन वारितोऽपि त्वमन्धो भवेति गर्भं गर्भस्थं शप्त्वा बलाद्वीर्यमवासृजत् ततो गर्भस्थो दीर्घतमा अन्धो बभूव तेन तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निःसारितं सत् सद्यः कुमारोऽभवत् ॥ ३६ ॥

भर्तृत्यागविशङ्कितां परवीर्यजं त्यक्तुकामां ममतां प्रति तस्य बालस्य ममतानिर्दोषत्वद्योतकनाम निरुच्यते येन तमेतं ममताबृहस्पतिविवादरूपं श्लोकं भर्तृत्यागशङ्कानिवृत्त्यर्थं सुरा जगुः ॥ ३७ ॥

बालं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह–हे मूढे! द्वाभ्यामावाभ्यां जातमिमं क्षेत्रजं स्वभर्तुः पुत्रं भर पुषाण नायं ममेति भावः ममताऽऽह, हे बृहस्पते! द्वाजम् अहमन्तर्वत्नीत्येव गर्भान्तरनिरपेक्षा त्वं च विषयसापेक्षः एवं निरपेक्षसापेक्षाभ्यां द्वाभ्यामावाभ्यां जातं भर न ममायं केनापि हेतुनेत्यर्थः। इत्थमुक्त्वा यतः पितरौ यातौ तस्मादयं भरद्वाजः ॥ ३८ ॥

एवं सुरैः चोद्यमाना उभयवाक्यगर्भितश्लोकगानेन निर्दोषायास्तव त्यागं नैवोतथ्यः करिष्यतीति प्रतिबोध्यमानेत्यर्थः। आदितरं प्रथमं गर्भगतम् आत्मजं अपुत्रं मत्वा तं सद्यो जातं व्यसृजत्तत्याज एवं तया त्यक्तं मरुतोऽबिभ्रन् अबिभरुः प्राप्तोऽयं भरतस्य अन्वये वितथे सति दत्तः अतो वितथसंज्ञोऽप्ययम् ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाऽध्यायार्थप्रकाशः ॥ २० ॥

———

भाषा टीका।

वे सम्राट् अधिराज लोकपालाख्य अपने ऐश्वर्य को तथा श्री ( सम्पति ) को और सर्व दिशाओं में अप्रतिहत अपनी आज्ञा को तथा प्राणों को भी अनित्य समझ कर इन सब से उपराम को प्राप्त होते हुए ॥ ३३ ॥

हे नृप! महाराज भरत की विदर्भ देश की तीन रानियें रहीं और राजा को बड़ी सम्मत भी रहीं। पर भर्त्ता ने जब उनों से कहा कि ये तुमारे पुत्र हमारे सदृश नहीं हैं तब उन रानियों ने "व्यभिचार की शङ्का से रजा हमारा त्याग कर देगा" इस भय से अपने पुत्र को मार डालीं ॥ ३४ ॥

इस प्रकार जब भरत का वंश वितथ ( उच्छिन्न ) हो चुका तब राजा ने पुत्र के अर्थ मरुत्सोम नामक याग से मरुतों का यजन किया तब मरुतों नें राजा को भरद्वाज पुत्र समर्पण किया ॥ ३५ ॥

वह भरद्वाज पुत्र कौन रहा सो कहते हैं, कि–एक समय देवताओं के गुरू श्रीबृहस्पतिजी महाराज, अपने भ्राता उतथ्य की ममता नामक गर्भवती भार्या से जोरी से मैथुन करने को प्रवृत्त हुए तब भीतर गर्भ में जो बालक रहा उसने निवारण किये, तब गुरूजी उसको "तू अन्धा होजा" ऐसा शाप देकर वीर्य भीतरमें छोड़ दिया, गर्भस्थ बालक अन्धा होगया पर उसने अपनी एड़ी की ठोंकर से बृहस्पति के वीर्य को बाहर गिरा दिया भूमि में गिरतेही वह बालक होगया ॥ ३६ ॥

तब अपने पती के त्याग की शङ्का से उसपुत्रको छोड़ने की इच्छा वाली ममता के प्रति देवलोग इस एक श्लोक को बोलते हुए कि जिसमें उस पुत्रका नाम का निर्वचन निश्चय पूर्वक कथन होजावे ॥ ३७ ॥

देवताओं के कहे हुए श्लोक का यही अर्थ है कि "बृह-

भाषा टीका ।

स्पति ने कहा कि हे मूढे ! इस द्वाज "दोनों से उत्पन्न होनेवाले" को तू भर पोषण कर तब ममता भी बोली कि हे बृहस्पते ! हमारे और तुमारे दो के सम्बन्ध से उत्पन्न होनें वाले इस पुत्र को तुम पोषण करो ऐसा कह कर दोनो चले गये इसी बात से इसका नाम भरद्वाज भया ॥ ३८ ॥

इस प्रकार जब देव लोगों ने कही, तब ममता ने अपने पुत्र को वितथ अर्थात् निरर्थक मानकर परित्याग कर दिया तब उस पुत्रका मरुतों ने पोषण किया मरुत्सोमयाग से प्रसन्न होकर भरत के वंश को वितथ छिन्न होनेपर उस पुत्रको भरत को दिया इसी से उस पुत्रका नाम भी वितथ हुआ ॥ ३९ ॥

इति श्रीमद्भागवत नवमस्कन्ध में विंशोऽध्याय की

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्त ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे विंशोऽध्यायः ॥ २० ॥



## ॥ एकविंशोऽध्यायः ॥

—○:०:○—

श्रीशुक उवाच ।

वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ।
महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः ॥ १ ॥
गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन ! ।
रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥
वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥
व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ।
घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥
कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥
तस्मै संव्यभजत्सोऽन्नमादृत्य श्रद्धयाऽन्वितः ।
हरिं सर्वत्र सम्पश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ! ।
विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥
याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ।
राजन् ! मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकविंशे तु दौष्यन्तेः सुतस्यान्वय उच्यते ।
रन्तिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ १ ॥

भरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञो भरद्वाजः स च ब्राह्मणोऽपि भरतस्य क्षेत्रे पुत्रो जात इति तद्वंशोऽनुक्रम्यते वितथस्य सुतो मन्युः तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाः पञ्च पुत्रा बभूवुः ॥ १—२ ॥

वियद्वित्तस्य वियतो गगनादिवोद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य यद्वा वियत्तुल्यं प्राप्नुवद्वित्तं भोग्यं यस्य तद्वाऽऽह, बुभुक्षतोऽपि सतो लब्धं लब्धं ददतः तत्प्रपञ्चयति, निष्किञ्चनस्येत्यादि सार्धैः पञ्चभिः ॥ ३ ॥

अपिबतो जलपानमप्यकुर्वतः घृतादिमयाद्यां [illegible] तोयं च ॥ ४ ॥ ५ ॥ ६ ॥

अथान्यो वृषलोऽतिथिरागमत् विभक्तस्य कुटुम्बार्थमन्नादिकं विभक्तवतः ॥ ७ ॥

सगणाय श्वयूथसहिताय ॥ ८—९ ॥

—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भरतस्य यो दत्तपुत्रस्तस्य वितथस्य यस्सुतो मन्युः तस्मात् मन्योर्बृहत्क्षत्रादयः पञ्च जज्ञिरे ततो जयः बृहत्क्षत्रानुजो जय

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यर्थः । भारद्वाजस्य ब्राह्मणत्वेपि भरतस्याऽन्वये वितथे सति वस्तुत्वाद्वितथसंज्ञस्सन् भरतस्य दत्तपुत्रो भूत्वा तद्वंशकरो जात इत्यभिप्रायेण मन्युप्रभृतीनां भारतत्वमत्रोच्यते तत्र नरस्यात्मजः संकृतिः ॥ १ ॥

हे पाण्डुनन्दन ! संकृतेस्तु गुरुः रन्तिदेवश्चेति द्वौ सुतौ रन्तिदेवस्य कीर्तिस्तु इहाऽमुत्र च लोके गीयते ॥ २ ॥

कीदृशं तद्यशः ? इत्यपेक्षायां सङ्ग्रहेण तद्वृत्तान्तमाह—वियद्वित्तस्येति । वियतो गगनादिवोद्यमं विनैव दैवादुपस्थितमेव वित्तं भोग्यं यस्य यद्वा वियत् स्वयं प्राप्नुवद्वित्तं यस्य तदेवाह—बुभुक्षतः सम्प्रदानस्य शेषत्वविवक्षया षष्ठी भोक्तुमिच्छते लब्धं लब्धं यत् दैवाल्लब्धं तद्ददतः प्रयच्छतः अतएव निष्किञ्चनस्य सायन्तनश्वस्तनादिपरिग्रहरहितस्य सकुटुम्बस्य सीदतः क्लेशस्यापि धीरस्य जितेन्द्रियस्य कदाचिदपि यतः जलपानमप्यकुर्वतः अष्टचत्वारिंशदहानि व्यतीयुः अतिक्रान्तानि बभूवुः कृच्छ्रं क्लेशं प्राप्तः कुटुम्बो यस्य क्षुत्तृड्भ्यां जातः वेपथुर्यथा यस्य तस्य दैवात् प्रातरुपस्थितं घृतादीनां द्वन्द्वैक्यं घृतादित्रयं तोयञ्च भोक्तुकामस्य सतः काले भोजनकाले कश्चिद्ब्राह्मणोऽतिथिरागमत् ॥ ३ ॥ ४ ॥ ५ ॥

स रन्तिदेव आदृतः आदरयुक्तः श्रद्धया चान्वितः सर्वत्र भूतेषु हरिं सम्पश्यन् सर्वं भूतजातं भगवदात्मकमनुसन्दधत् अन्नं घृतपायससंयावं तस्मै अतिथये संव्यभजत् विभज्य ददौ तदन्नं भुक्त्वा स द्विजो ययौ ॥ ६ ॥

अथ विभक्तस्य कुटुम्बार्थे तद्द्विजभुक्तावशिष्टमन्नादिकं विभक्तवतो भोक्ष्यमाणस्य सतः हे महीपते ! अन्यः कश्चिद्वृषलोऽतिथिरागमत् अथान्य इति पाठे दानायागतः तस्मै वृषलायातिथये विभक्तं कुटुंबार्थे विभक्तं पुनः व्यभजत् विभज्य ददौ ॥ ७ ॥

शूद्रे वृषले गते सति कश्चित् श्वभिरावृतः परिवृतोऽतिथिरागतः तं रन्तिदेवमाह—किमिति ? हे राजन् ! बुभुक्षते क्षुधार्दिताय सगणाय श्वयूथसहिताय मह्यमन्नं दीयतामिति अभ्यागादिति पाठे एवं वदन्नभ्यागच्छदित्यन्वयः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूरोः सप्तदशमो वंशपङ्क्तिः तस्यान्वयः कथ्यते वितथस्येत्यादिना ॥ १ ॥

भरताद्दशमो रन्तिदेवः तस्य माहात्म्यद्वारा भगवन्महिमोपचितत्वात्कथयति—रन्तिदेवस्येत्यादिना । च शब्दो वंशपङ्क्तिमहिम्ना समुच्चीयते ॥ २ ॥

कीदृशं यशः शत्रुविजयाल्लब्धमुतास्मदिति संशयं निवारयति—वियद्वित्तस्येति । वियद्वित्तस्य वस्तुशून्यस्य दरिद्रस्येत्यर्थः धनाभावे दानं कथं घटते ? इति तत्राह, लब्धमिति स्वयं बुभुक्षाभावाद्ददाति न तु कर्तव्यत्वेनेति तत्राह बुभुक्षत इति भोगेच्छुरित्यर्थः, अन्यथा तदसम्भवादिति तत्राह निष्किञ्चनस्येति तर्हि भिक्षुवत् कृपण इत्यतो वाऽऽह निष्किञ्चनस्येति अकृपणस्य कथमयमतः तादृगिति तत्राह धीरस्येति असद्विषयचिन्ता नास्तीत्यतोवाह—धीरस्येति । धिया सह रमते न तु स्त्रियेति धीरस्तस्य एकाकिनः का चिन्ता इति तत्राह सकुटुम्बस्येति अत एव सीदतः विषयतः शीर्णस्य वा ॥ ३ ॥

शीर्णत्वे निमित्तमाह—अपिबत इति । घृतं च पायसं च गोधूमान्नं च घृतपायससंयावं प्रातरुपस्थितं प्राप्तमेतद्भोक्तुकामस्य काले भोजनसमये ॥ ४ ॥ ५ ॥

आहृत्य आनीय सर्वत्र व्याप्तं ब्राह्मणाय विभक्तस्यान्नस्य शेषं भोक्ष्यमाणस्य भोक्तुकामस्य महीपतेरन्योऽतिथिरागमत् पूर्वविभक्तमन्नं सगणाय गणसहिताय नमश्चक्रे हरये इति शेषः ॥ ६—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—३ ॥

घृतेतिसार्द्धकम् । तदनन्तरं घृतादिकमुपस्थितं भोक्तुकामस्य ॥ ४—५ ॥

अन्नं पूर्वोक्तं घृतादिकमेव ॥ ६ ॥

पूर्वं हरिं सर्वत्र सम्पश्यन्नित्युक्तम् अधुना च तस्य तां करुणावाचामित्युच्यते तत्र सर्वत्रैव हरिमन्तर्यामितया सम्पश्यन्निति चेत् जीवदृष्ट्याभावेन करुणेयं तेषु विरुध्यते तस्मात्तं सर्वत्र परमकारुणिकतयैव सम्पश्यंस्तद्भावेन स्पृहमानः करुणायत इति वक्ष्यते अत एव ब्रह्मशिवाभ्यां तादृशगुणभक्ताभ्यां सह तदाविर्भावानन्तरं तद्भक्तिरेव फलिता वक्ष्यते "वासुदेवे भगवति भक्त्या चक्रे मनः परम्" इति केवलजीवकारुण्यं खलु विघ्नाय भवति भरतवत् तस्माद्य कामय इत्यादिना यो मोक्षानादरः सोपि तत्कारुण्यविभावनमयभक्तिकृत एवेति नायुक्तः स्यादिति ज्ञेयम् ॥ ७—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकविंशे पूरुवंश्यरन्तिदेवकथोच्यते ।

यस्य स्वौदार्यधैर्याभ्यां व्यधीशास्तोषमाययुः ॥

वितथो भरद्वाजः स च ब्राह्मणोपि भरतस्य पुत्रस्तस्मात् मन्युः ॥ १—२ ॥

वियतो गगनादिव उद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य तत्रापि लब्धं ददतः बुभुक्षमाणस्यापि ॥ ३—६ ॥

विभक्तस्य विभक्तवतोमहीपतेरन्योऽतिथिरागतः ततश्च कुटुम्बार्थं विभक्तमेवान्नं तस्मै व्यभजत् विभज्य ददौ ॥ ७—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकविंशे भरतस्य रन्तिदेवादिकीर्तिसंयुतान् वितथस्य

इति प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥ १४ ॥
तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयाञ्चक्रु (१) माया विष्णुविनिर्मिताः ॥ १५ ॥
स वै तेभ्यो नमस्कृत्य निस्सङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्येवं प्रभाष्य ॥ १४ ॥

त्रिभुवनाधीशा ब्रह्मादयः मायास्तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीताः सन्त इत्यर्थः ॥ १५ ॥

परं केवलं वासुदेवे भक्त्या मनश्चक्रे न तु तान् किमपि याचितवान् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स विभू रन्तिदेवो यदातिथ्यावशिष्टमन्नं तत् बहुमानपुरस्कृतं यथा तथा दत्त्वा श्वभ्यः शुनां पत्ये च तस्मै नमश्चक्रे भगवद्भावेनेति शेषः ॥ ९ ॥

अथोच्छेषमवशिष्टं पानीयमात्रं तदप्येकपरितर्पणं एकपुरुषमात्रतृप्तिकरं पास्यतस्तस्य कश्चित्पुल्कस अशुभाय नीचाय मह्यमपः पानीयं जलं देहीति वदन्नभ्यागच्छत् ॥ १० ॥

तस्यापि पुल्कसस्यापि कृपणाः दीनाः विपुलः श्रमो याभ्यां ऽवगम्यते ता वाचः आकर्ण्य कृपया नितरां सन्तप्तो रन्तिदेव इदं कृपणानाममृततुल्यं वच आह ॥ ११ ॥

तदेव दर्शयति—न कामय इति द्वाभ्याम् । अष्टर्द्धियुक्ताम् अणिमाद्यैश्वर्ययुक्ताम् ईश्वराणां ब्रह्मादीनां गतिं प्राप्तिम् अहं न कामये नेच्छामि नाप्यपुनर्भवं मोक्षं वा कामये किन्त्वखिलानां देहभाजां देहिनां क्षुत्पिपासार्दितानां अन्तःस्थितामार्तिं दुःखं प्रपद्य प्राप्नुयामिति कामये सर्वेषां दुःखमहमेक एवानुभवेय—मित्याशय इत्यर्थः । किमेवं विधकामनयेत्यत आह—येन भवन्त्यदुःखा इति । येन दुःखभोक्त्रा मया हेतुभूतेन सर्वे देहभाजो निर्दुःखा भवन्ति येनाहमदनुभवेनेति वा ॥ १२ ॥

ननु, दुःखमिति प्रार्थयसे परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तिरित्याह—क्षुत्तृडिति । कृपणस्य दीनस्य जीवितमिच्छोः जन्तोर्जीवस्य जलार्पणेन जीवनहेतोर्जलस्यार्पणेनैव सर्वे क्षुत्तृडादयो निवृत्ता भवेयुरिति शेषः । जीवकलार्पणेनेतिपाठे ऽयमर्थः । जिजीविषोर्जन्तोर्मे जीवकलार्पणेनात्मप्राणदानेन क्षुधादयो निवृत्ताः स्युः मम प्राणानपि दद्यामित्यर्थः ॥ १३ ॥

स्वयं पिपासया म्रियमाणोऽपि एवम्प्रभाष्य धीरो निसर्गकरुणः निरुपाधिककृपावान् नृपो रन्तिदेवः पुल्कसाय तदेकपरितर्पणं पानीयं ददौ ॥ १४ ॥

फलमर्थकामादिरूपमिच्छतां कामयमानानां जनानां फलदास्त्रिभुवनस्याधीशाः ब्रह्मादयस्तस्य रन्तिदेवस्यात्मानं दर्शयाञ्चक्रुः प्रसन्ना बभूवुः विष्णुना विनिर्मितां मायां च दर्शयाञ्चक्रुः माया प्रकृतिः विष्णुविनिर्मितामित्युक्तत्वात् कार्यरूपा प्रकृतिः विवक्षिता, प्रकृत्यात्मविवेकज्ञानं ददुरित्यर्थः । यद्वा, तन्मनः परीक्षार्थं वृषलादिमायारूपमात्मानं दर्शयाञ्चक्रुरित्यर्थः ॥ १५ ॥

ततः स वै रन्तिदेवः तेभ्यः त्रिभुवनाधीशेभ्यो मायारूपेभ्यो वा नमस्कृत्य निस्सङ्गः देहतदनुबन्धिषु अहङ्कारममतारहितः विगतैहिकामुष्मिकफललिप्सुः परं केवलं वासुदेवे मनश्चक्रे ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

घृतादिकं दत्त्वा पानीयमात्रमुच्छेषमवशिष्टं तदपि एकपरितर्पणम् एकस्य तृप्तिकरं न तु बहूनां पास्यतः पातुकामस्य पुल्कसो गोमांसभक्षकः ॥ १० ॥ ११ ॥

अष्टर्द्धियुक्ताम् अणिमादिसमृद्धिसम्पन्नां योगेश्वराणां गतिमणिमादिलक्षणां महरादिलोकं वा न कामये न वाञ्छामि अपुनर्भवं मोक्षं वा, तर्हि कस्मिन् काङ्क्षा? इति तत्राह—आर्तिमिति । येन देहभाजो मयार्पितजलपानादिना क्षुधादिनिमित्तदुःखरहिता भवन्ति ये तेन तेषामन्तःस्थितामार्तिमहं प्रपद्ये इत्यन्वयः । येन जलेनाऽदुःखाः तेभ्यो दत्त्वा तदार्तिमथाऽहं प्रपद्य इति वा ॥ १२ ॥

एवं भाषणमात्रेण किं फलमिति तत्राह—क्षुत्तृडिति । कृपणस्य जन्तोर्जीवस्य जलार्पणेन जीवनप्रदजलदानेन सर्वेषां सुखं स्यात् तदार्तिमिमां स्वितीति जिजीविषोर्जीवितुमिच्छतः पुंसः क्षुत्तृडादयो निवृत्ता भवन्तीत्यन्वयः । अनेन क्षुधादिमतः पुंसो जलादिदानेन दातुरपि तन्निवृत्तिस्तदभावे तदनिवृत्तिरित्यन्वयव्यतिरेकौ द्रष्टव्यौ ॥ १३ ॥

पिपासया म्रियमाणः ॥ १४ ॥

आत्मानं मायां महिमोपेतं महिम्नापि भगवदनुग्रहविजृम्भित इत्याह विधित्वाति ॥ १५ ॥ १६ ॥

(१) मायां विष्णुविनिर्मिताम् इति वीर० विज०

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निसर्गकरुणा इति च निसर्गेण श्रीभगवत्करुणास्फूर्तिमयस्वभावेन करुणाः ॥ १४ ॥

यत एव तस्येति यतः सामान्यतः फलमिच्छतां फलदाः यत एवार्हमप्रभूनयो विष्णुना भगवता स्वयमेव मायाः मायिकवृषलादिरूपेण निर्मिताः प्रत्यायिता इत्यर्थः । अतस्ते पुनरात्मानं यथार्थरूपं दर्शयाञ्चक्रुः । स वै स तु निःसङ्गः तद्-योगं विना फलान्तरभोगरहितः तत्र विगतस्पृहश्च भवान् तद्भक्तेषु च समपूज्यत्वबुद्ध्या नमस्कारमविशेषेणैव चक्रे तथापि परं श्रेष्ठं यथास्यात्तथा वासुदेवे भगवति मनश्चक्रे तत्र हेतुः भक्त्या तयोरपि तत्र सप्रेम महाभक्तिदृष्टेत्यर्थः ॥ १५—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उच्छेषमुर्वरितम् एकमेव तृप्तीकरोति न तु उभावित्ति स्वार्थे विभागोऽनर्हमिति भावः ॥ १० ॥

अमृतं वच इति तस्य केवलं वचो येन सश्रद्धं कर्णाभ्यां पीयते सोऽपि न म्रियते तेन देहेनैव सिद्ध्यति किं पुनस्तत्कर्मा-ऽनुतिष्ठन्नुरीति भावः ॥ ११ ॥

अन्तःस्थितः सन् प्रार्ति प्रपद्ये तैर्भोक्तव्यं दुःखमहमेव भुञ्जे सर्वजीवानामपि समुदितं दुःखमहमेक एव भोक्तुमलमिति तद्दुःखं सह्यं परदुःखदर्शनं त्वसह्यमिति भावः ॥ १२ ॥

मरणतिपिपासार्तोऽसि किञ्चिदवशिष्टं जलं स्वयं च पिबेत्यत आह—क्षुत्तृडिति । कृपणस्याऽस्य जन्तोर्जीवनहेतो-र्जलस्यार्पणान्मम क्षुत्तृडादयो निवृत्ता एव ॥ १३—१४ ॥

त्रिभुवनाधीशा विष्णुब्रह्मरुद्राः तस्य धैर्यपरीक्षार्थं प्रथमं माया ब्राह्मणवृषलश्वपतीन् तत आत्मानं स्वस्वरूपं च ॥ १५ ॥

मनः परं श्रेष्ठं भगवद्रूपगुणादिध्यायित्वात् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टर्द्धियुक्तामणिमाद्यैश्वर्ययुक्तां गतिम् अपुनर्भवं चेत्यक्षरूपप्राप्तिं किम्बहुना परां परब्रह्मभावात्सालवृत्तामपि अहं न कामये अखिलदेहभाजामार्तिं दुःखं अन्तःस्थितो ज्ञानव्याप्त्या तेषामन्तः प्रविष्टः प्रपद्ये प्राप्नुयामिति कामये येन सर्वार्तिमोक्षो हेतु-भूतेन मया अखिलदेहभाजो अदुःखा भवन्ति ॥ १२ ॥

किञ्चिन्मात्रपरदुःखनिराकरणेन मम विविधदुःखनिवृत्ति र्भवतीत्याह—क्षुदिति । जीवजलार्पणात् जीवनार्थजलदानात् ॥ १३ ॥ १४ ॥

त्रिभुवनाधीशाः ब्रह्मादयः तस्य रन्तिदेवस्य आत्मानं दर्शयाञ्चक्रुः दर्शयामासुः माया च यया अनादितो जीवो बद्धः सा विष्णुना विनिर्मिता प्रवर्तिता बहुवचनपाठे मायया महदादिरू-

पेण बहुत्वात् ब्रह्मादिजीवान् वासुदेवं सर्वजीवमोहिनीं मा[या]

च स ददर्शेत्यर्थः ॥ १५ ॥

सर्वेभ्यस्त्रयो मायिकपदार्थेषु निःस्पृहो ब्रह्मादीन्नमस्कृ[त्य]

वासुदेवे चित्तं नियोजितवान् तस्यानादितो बन्धनभूता मा[या]

निवृत्ताऽभूदित्याह—स इति द्वाभ्याम् ॥ १[६] ॥

---

भाषा-टीका ।

बड़े समर्थ राजा रन्तिदेव ने बड़े बहुमान पूर्वक देक[र]

भी हरि की भावनासे उनश्वानों को और स्वामी के पा[स]

को नमस्कार किया ॥ ९ ॥

अब केवल पीने को जल अवशिष्ट बाकी रहगया व[ह]

भी एक ही के तृप्ति लायक रहा, जब उसको पीने ल[गे]

इतने ही में एक पुल्कस (नीचजाति का कोईमनुष्य अभ्य[ा]

गत चलाआया और बोला कि मो मझुभ को जलदो ॥ १०

रन्तिदेवजी ने उस की बड़े श्रम युक्त और अति दी[न]

ऐसी वाणी को सुनकर कृपा से अति तृप्त होकर इ[स]

अमृत वाणी को बोलते हुए ॥ ११ ॥

रन्तिदेव महाराज बोले कि मैं ईश्वर से अपनी अ[ष्ट]

ऋद्धियों से युक्त उत्कृष्ट गति को नहीं चाहता हूं औ[र]

अपुनर्भव जो मोक्ष है उस को भी नहीं चाहता हूं औ[र]

किन्तु हे ईश्वर ? सब देहधारियों के भीतर स्थित होक[र]

सबों की पीड़ा को मैं ही प्राप्त होऊं कि जिस में सर्व

प्राणिमात्र निर्दुःखहो जांय ॥ १२ ॥

यदि कहो कि दुःख क्यों मांगते हो ? इस समय इस

जीने की इच्छा वाले दीन प्राणी के जल देने से मे[री]

क्षुधा, तृषा, श्रम, गात्र का परिश्रम, दीनता, ग्लानि, शोक

विषाद, और मोह ये सब ही दुःख निवृत्त होगये ॥ १३ ॥

इस प्रकार वचन बोलकर, आप स्वयं पिपासा से म[र]

रहे हैं तौ भी उस पुल्कस को परम धैर्य स्वाभाविक

करुणा से रन्तिदेव महाराज ने जलदिया ॥ १४ ॥

शुक मुनि कहते हैं कि राजा रन्तिदेव की पहिले

तो वृषलादि रूप अपनी माया से धैर्य की परीक्षा करी

पश्चात् वे ही फल की इच्छावालों को फल देने वाले त्रि-

भुवन के अधीश विष्णु के विनिर्मित माया ब्रह्मादिक अपना

दर्शन देते हुए ॥ १५ ॥

रन्तिदेव महाराज ने उनको नमस्कार कर लिया और

सर्व सङ्गों को तथा स्पृहाओं को छोड़कर केवल एक भग-

वान् वासुदेव के विषे भक्ति से मन को लगाते

हुए ॥ १६ ॥

---

ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः ।
माया गुणमयी राजन् ! स्वप्नवत्प्रत्यलीयत ॥ १७ ॥
तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्त्तिनः ।
अभवन् योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥
गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत ।
दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः १९ ॥
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ।
(१)बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम् ॥ २० ॥
अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ।
अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥
अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।
बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ २२ ॥
तत्सुतो विशदस्तस्य सेनजित्समजायत ।
रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥
रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः ।
पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनन्यराधस ईश्वरातिरिक्तफलान्तरानपेक्षस्य प्रत्यलीयताऽऽत्मन्येव लीना बभूव ॥ १७—१८ ॥

मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्यैव गर्गस्य वंशमाह, गर्गादिति । महावीर्यस्य वंशमाह—दुरितक्षयस्तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः ॥ १९ ॥

कथम्भूताः ये अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गताः । मन्युपुत्राणां पञ्चानां ज्येष्ठस्य वंशमाह—बृहत्क्षत्रस्येति यत् येन हस्तिनापुरं कृतमित्यर्थः ॥ २० ॥

अजमीढादयस्त्रयो हस्तिनः पुत्राः ॥ २१ ॥

अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाऽभवत् ॥ २२—२३ ॥

पारस्य तनयो नीपः नीपस्य पुत्रशतम् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ईश्वरेति । अनन्यराधसा अनन्यप्रयोजनेन भावेन चित्तमीशालम्बनं वासुदेवनिष्ठं कुर्वतस्तस्य रन्तिदेवस्य हे राजन् ! त्रिगुणात्मिका माया स्वप्नवत्प्रलीयत न्यवर्त्तत स प्रकृतिसम्बन्धान्मुक्तो बभूवेत्यर्थः ॥ १७ ॥

किमुत तस्य रन्तिदेवस्य यः प्रसङ्गस्तद्दयानुभावेन प्रभावेन हेतुना रन्तिदेवमनुवर्त्तमानाः सर्वेऽपि योगिनः, योगित्वमेवाह, नारायणपरायणा बभूवुः ॥ १८ ॥

एवं नरस्य वंश उपवर्णितः, अथ गर्गस्य वंशमाह—गर्गादिति । गर्गाच्छिनो जज्ञे शिनिरिति पाठान्तरं तस्मात्तु गार्ग्यः तत्र ततो गार्ग्याद्ब्रह्म ब्रह्मकुलमवर्तत पुत्रादिपरम्परया प्रावर्त्ततेत्यर्थः । अथ महावीर्यस्यान्वयमाह—महावीर्यात् दुरितक्षयो जज्ञे तस्य दुरितक्षयस्य त्रय्यारुणिः कविः ॥ १९ ॥

पुष्करारुणिश्चेति त्रयः पुत्राः, कथम्भूताः ? येऽत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गताः प्राप्ताः अथ ज्येष्ठस्य बृहत्क्षत्रस्य वंशमाह—बृहत्क्षत्रस्य पुत्रोऽभूदित्यादिना । बृहत्क्षत्रस्य पुत्रो हस्ती बभूव यत् येन हास्तिनं पुरं कृतमिति शेषः । स हस्ती बभूवेत्यर्थः ॥ २० ॥

हस्तिनस्सुता अजमीढादयः त्रयः पुत्राः तत्र अजमीढस्य वंश्याः, वंशजाः प्रियमेधादयो द्विजा बभूवुः ॥ २१ ॥

अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाभवत् तस्य बृहदिषोः सुतो बृहद्धनुः तस्य सुतो बृहत्कायः तस्य बृहद्रथः पुत्र आसीत् ॥ २२ ॥

तत्सुतो बृहद्रथसुतः विशदः तस्य विशदस्य तस्मादिति पाठे विशदात्फेनजित् समजायत तत्सुताः फेनजित्सुताः रुचिराश्वादयश्चत्वारः ॥ २३ ॥

(१) बृहत्क्षत्रात्सुहोत्र इति विज० धीर० ॥

स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ।
(१)स योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् ॥ २५ ॥
जैगीषव्योपदेशेन योगतन्त्रं चकार ह ।
उदक्स्वनस्ततस्तस्माद्भल्लादो बार्हदीशवाः ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र रुचिराश्वस्य सुतः प्राज्ञः तदात्मजः प्राज्ञसुतः पृथुसेनः तदात्मजः पृथुसेनतनयः पारः तत्तनयः पारतनयः नीपस्तस्य नीपस्य पुत्रशतमभूत् ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईश्वराश्रयं श्रीनारायणविषयम् अनन्यराधसः भगवत्सिद्धिमन्तरेणान्यसिद्धिशून्यस्य तदेकनिष्ठस्येत्यर्थः । अन्यस्मात्राधः सिद्धिर्मुक्तिः तया रहितस्य भगवन् एवापेक्षिताऽशेषपुरुषार्थवतः प्रत्यलीयत नष्टाऽभूत् माया संसाराख्या ॥ १७ ॥

तस्य रन्तिदेवस्य प्रसङ्गः कथाश्रवणः तस्यानुभावेन भावसूचकेन "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" इति यादवः ॥ १८ ॥

अत्र ब्राह्मणकुलं नाम्ना दुरितक्षयः तस्य त्रैय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्रा ये ते अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गताः भरतप्रपौत्रस्य बृहत्क्षत्रस्य वंशान्तरमाह, बृहत्क्षत्रस्येति । नाम्ना हस्ती यत् येन हस्तिनापुरं कृतमिति शेषः ॥ १९—२७ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनन्यराधस इति "प्राप्ति प्रपद्येऽखिलदेहभाजाम" इति च मिथः पूर्वयुक्त्यैव सङ्कल्पने प्रत्यलीयत ततोऽन्तर्हितवती "ऋतेऽर्थं यत् प्रतीयेत" इति न्यायेन ॥ १७ ॥

तादृशीं भगवद्भक्तिं कैमुत्येन प्रशंसति तत् प्रसङ्गेति ॥१८-२४॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेवाऽऽह—ईश्वरेति । अनन्यराधसः अन्यदेवाद्याराधनशून्यस्य स्वप्नवत् स्वप्नो यथा स्वप्न एव लीयते तथैवेत्यर्थः ॥ १७ ॥ १८ ॥

मन्युसुतस्य नरस्य वंशमुक्त्वा तद्भ्रातॄणां गर्गादीनां वंशमाह—गर्गादिति ॥ १९—२४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वप्नवत् स्वप्न एव माया प्रत्यलीयत स मुक्तो बभूवेत्यर्थः नहो अत्यद्भुतं सर्वत्र हरिदर्शनमाहात्म्यमिति प्रकरणार्थः ॥ १७ ॥ १८ ॥

गर्गान्मन्युपुत्रात् क्षत्रान्मन्युपुत्रात् महावीर्यान्मन्युपुत्रात् ॥१९॥ बृहत्क्षत्रस्य मन्युपुत्रस्य ॥ २०—२४ ॥

———

भाषा टीका ।

हे राजन् ! श्री हरि के अतिरिक्त और फल की इच्छा नहीं करने वाले, और सदा ईश्वर में चित्त लगाने वाले, रन्तिदेव जी को त्रिगुण मयी माया स्वप्न सरी की लीन हो गई ॥ १७ ॥

और उन रन्तिदेव के प्रसङ्ग के प्रभाव से रन्तिदेव के अनुवर्ती लोग सब योगी और नारायण परायण हो गये ॥१८॥

अब, मन्यु के पुत्र गर्ग का वंश कहते हैं । गर्ग से शिनि हुए, तिन से गार्ग्य हुए, क्षत्र से ब्रह्म कुल वर्तता हुआ और मन्यु के पुत्र महावीर्य के दुरितक्षय हुए तिन के त्रय्यारुणि, कवि, पुष्करारुणि, ये तीन पुत्र हुए, जो कि—तीन पुत्र इस क्षत्रिय वंश में ब्राह्मण रूपता को प्राप्त होते हुए, और मन्यु के ज्येष्ठ पुत्र बृहत्क्षत्र हुए तिन के पुत्र हस्ती होते भये जिन ने हस्तिना पुर बसाया ॥ १९ ॥ २० ॥

राजा हस्ती के पुत्र अजमीढ, द्विमीढ और पुरुमीढ हुए, अजमीढ के वंश में प्रियमेधादिक द्विज हुए ॥२१॥

अजमीढ से बृहदिषु हुए, तिन के पुत्र बृहद्धनु हुए, तिन से बृहत्काय पुत्र हुए, तिन के पुत्र जयद्रथ होते हुए॥२२॥

जयद्रथ के सुत विशद हुए तिन के सेनजित्पुत्र उत्पन्न हुए, सेनजित के रुचिराश्व, दृढधनु, काश्य, और वत्स, ये पुत्र हुए ॥ २३ ॥

रुचिराश्व के सुत पार हुए, तिन के आत्मज पृथुसेन हुए, और पार के पुत्र नीप हुए तिन के सौ (१००) पुत्र होते भये ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स एव कृत्व्यां कृत्वीसंज्ञायां शुककन्यायां ब्रह्मदत्तं जनयामास, तदुक्तं हरिवंशादिषु—

"पराशरकुलोत्पन्नः शुको नाम महायशाः ।
व्यासादरण्यां सम्भूतो विधूमोऽग्निरिवोज्ज्वलन् ॥
स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति ।
कृष्णं गौरप्रभं शम्भुं तथा भूरिश्रुतं जयम् ॥
कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ।

(१) योगीशो गवि इति वीर० विज० ।

यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ।
नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥ २७ ॥
सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः ।
कृती हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥ २८ ॥
संहिताः [1] प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ।
तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ॥ २९ ॥
ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ।
नलिन्यामजमीढस्य नीलः शान्तिः सुतस्ततः ॥ ३० ॥
शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ।
भर्म्याश्वस्तनयस्तस्य पञ्चासन् मुद्गलादयः ॥ ३१ ॥
यवीनरो बृहदिषुः काम्पिल्यः सञ्जयः सुताः ।
भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च" ॥ इति

यद्यपि शुक उत्पत्त्यैव विमुक्तसङ्गो निर्गतस्तथाऽपि विरहातुरं व्यासमनुयान्तं दृष्ट्वा छायाशुकं निर्माय गतवांस्तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्यविरोधः स ब्रह्मदत्तो योगी गवि-नाचि सरस्वत्याम् ॥ २५ ॥

स एव योगतन्त्रं चकार बार्हदीषवा बृहदिषोर्वंश्या इमे दीर्घत्वमार्षम् ॥ २६ ॥

सुपार्श्वकृत्सुपार्श्वस्य पिता ॥ २७ ॥

प्राच्यसाम्नां षट् संहिता जगौ विभज्याध्यापितवान् ॥२८-२९॥

अजमीढस्य वंश्याः प्रियमेधादयः केचिद् ब्राह्मणा बभूवुर्बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम् । तस्यैव वंशान्तरमाह, नलिन्यामिति यावत्समाप्ति ॥ ३०—३१ ॥

मुद्गल एकः यवीनरादयश्चत्वार इत्येवं पञ्च ॥ ३२—३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स नीप एव शुककन्यायां श्रीशुकस्य कन्यायां दुहितरि कृतिसंज्ञायां ब्रह्मदत्ताख्यं सुतमजीजनत् जनयामास अत्र तस्य पुत्रशतमन्तवद्भिरित्यस्यानन्तरं क्वचित् "अणुहो नाम बस्तेषां ज्येष्ठः सत्यरथो नृप" इति पठ्यते, तत्र हे नृप ! तेषां पुत्राणां मध्ये यो ज्येष्ठः सोऽणुहः स एव सत्यरथापरनामधेय इत्यर्थः । शुककन्यायामित्यनेन शुकस्याप्यत्र सन्तान उक्तः । तथा चोक्तं हरिवंशादिष्वपि—

"पाराशरसुतो धीमान् शुको नाम महायशाः ।
व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् ॥
स तस्यां पितृकन्यायामिरियां जनयिष्यति ।
कृष्णं गौरं प्रभुं शम्भुं तथा भूतश्रुतं जयम् ॥
कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ।
ब्रह्मदत्तस्य जननीं मानुषीम्" इत्यादि—

यद्यपि शुक उत्पत्तेरारभ्य विमुक्तसङ्गो निर्गतस्तथापि विरहातुरं व्यासम् अनुयान्तं दृष्ट्वा छायाशुकं निर्माय गतवान् तदभिप्रायेणैवायं गार्हस्थ्यादिव्यवहार इत्यविरोध इत्याचक्षते स च ब्रह्मदत्तः गवि सरस्वत्यां भार्यायां विष्वक्सेनाख्यं सुतमगात् प्राप्तवान् अजीजनदिति यावत् ॥ २५ ॥

स एव जैगीषव्यस्योपदेशेन योगतन्त्रं योगशास्त्रं चकार ततो विष्वक्सेनादुदक्सेनस्तस्मादुदक्सेनात् भल्लाटः बार्हदीषवः इमे उक्तास्सर्वे बृहदिषोरजमीढसुतस्य वंशजा इत्यर्थः । दीर्घत्वमार्षम् ॥ २६ ॥

अथ द्विमीढस्य वंशमाह—द्विमीढस्य सुतो यवीनरः तत्सुतो यवीनरसुतः धृतिमान् ततो धृतिमतः सत्यधृतिस्तस्मात्सत्यधृतेः दृढनेमिः स च सुपार्श्वकृत् सुपार्श्वस्य पितेत्यर्थः । तत्पुत्रः सुपार्श्व इति यावत् ॥ २७ ॥

सुपार्श्वात् सुमतिः तस्य सुमतेः पुत्रः सन्नतिमान् ततः सन्नतिमतः कृतिः, तं विशिनष्टि—यः कृतिर्हिरण्यनाभात् योगं साम्नां षट् संहिताश्च प्राप्य जगौ अध्यापितवान् तस्य कृतेः सुत उग्रायुधः तस्योग्रायुधस्य सुतः क्षेम्यः अथ क्षेम्यात्सुवीरस्तस्य सुतो रिपुञ्जयः ॥ २८ ॥ २९ ॥

ततो रिपुञ्जयात् बहुरथो नाम जज्ञे एवमजमीढद्विमीढयोर्वंशावभिधाय पुरुमीढस्त्वपुत्रोऽभवदित्याह—पुरुमीढोऽप्रजोऽभवदिति । अजमीढस्य वंश्याः प्रियमेधादयः केचिद्ब्राह्मणा बभूवुः बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तं तस्यैवेदानीं वंशान्तर-

---

(१) प्राप्य इति वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आह—नलिन्यामिति यावत्समाप्ति । अजमीढस्य नलिन्यां भार्यायां नीलः तत्सुतो नीलसुतस्तु ॥ ३० ॥

शान्तपुत्रः सुशान्तिः तत्पुत्रः पुरुजः पुरुजादर्कः तत्सुतोऽर्कसुतो भर्म्याश्वः तस्य भर्म्याश्वस्य पुत्रः मुद्गल एकः ॥ ३१ ॥

यवीनरादयश्चत्वारश्चेति पञ्चाऽऽसन् जज्ञिरे तेषां पञ्चालसंज्ञितत्वं वक्तुं नामनिमित्तं पितुर्वचोरूपमाह—भर्म्याश्व इति । भर्म्याश्वः प्राह पुत्रानिति शेषः । किमिति ? हे पुत्राः ! मे मम पञ्चानां विषयाणां शब्दादीनां देशानां वा रक्षणाय इमे यूयमलं प्रभव इति. यत एवं पित्रोक्ता अतस्ते पञ्चालसंज्ञिताः पञ्चालेति संज्ञा एषां सञ्जातेति तथा तारकादित्वादितच् तत्र मुद्गलात् ब्रह्मगोत्रं ब्राह्मणकुलं निवृत्तमुत्पन्नं तदाख्यानपि मौद्गल्यसंज्ञितमिति ॥३२॥३३॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्राच्यसाम्नां द्वादशसंहिताः जगौ ॥ २९—३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नीपस्यैव बहुकालव्यवधानेन व्यूढायां शुककन्यायां वंशान्तरमाह—स कृत्व्यामिति । शुककन्यायामित्यत्र न तु मम कन्यायामित्युक्तमिति स्वस्मादन्योऽसौ शुक इति बोधयति—तच्च युक्तं ब्रह्मवैवर्त्तवर्णितस्वयंश्रीभगवन्महानुग्रहपात्रत्वात्तस्य एव विष्णुरातभक्तराकान्तिपरब्रह्मणा दर्शनेन तद्ब्रह्मरातत्वसम्भवात्तस्यैव श्रीभागवतवक्तृत्वं सम्भवति नाऽन्यस्य कल्पभेदव्यवस्थया भारतादिवर्णितस्याऽरणिसम्भवस्य किमुत छायाशुककल्पितस्येति । अत्र ब्रह्मवैवर्तेतिहासोऽयं किञ्चित् किञ्चित् प्रोच्यते—

"प्राप्ते कलियुगे व्यासश्चक्रे यो जगतः कृते ।
महाभारतमाख्यानं सर्ववेदार्थसंग्रहम्" ॥

इत्यादि. तथा—

"ब्रह्मचर्यं परिभ्रंशो मातृवाक्यानुपस्थिते ।
स्वयं पितृऋणाख्यानं श्रुपवत् सोढुमक्षमः ॥
विचिन्त्य मनसा चक्रे भार्यां जाबालिकन्यकाम् ।
वीटिकाख्यां ददौ तस्मै सोऽपि वैखानसाश्रमी ॥
चक्रे तया सह तप ऋतुगामी तदेच्छया ।
अथ गर्भोऽभवत्तस्यास्तस्यां स ववृधे शनैः ॥
कलाभिः शुक्लपक्षस्थ हिमद्युतिरिव द्विज ! ।
द्वादशाब्दानि जातानि न प्रसूतेस्म सा तदा ॥
कृष्णद्वैपायनप्रोक्तं वेदवेदार्थसंग्रहम् ।
पुराणं भारतं धर्मशास्त्रं तदश्रृणोद् द्विज ॥
तत् सर्वं प्रज्ञया गर्भश्चक्रे हृदि पपाठ च ॥
गर्भसंस्थोऽपि कुरुते न तु निष्क्रमणे मतिम् ।
सा च गर्भमहाक्लेश्या" ॥

इत्यादि—

"अथ द्वादशमे वर्षे कृष्णद्वैपायनो मुनिः ।
उपविश्य कृतस्नानो गर्भमामन्त्र्य सामभिः ॥
सम्बोधयामास तदा वचोभिर्युक्तिभावितैः ।

॥ व्यास उवाच ॥

यत् त्वं मदीयगृहिणीमधुनाऽतिकाल—
माविश्य पीडयसि गर्भतया यथार्थम् ।
तद्ब्रूहि निष्क्रमसि नाम कथं न ? मूढ ! ।
किं मारयिष्यसि विरुद्धकरस्त्वमेताम् ॥

गर्भ उवाच ॥

रक्षोऽहमस्मि सुरपक्षेत्यादि—

भ्रान्तोऽहं तेषु सर्वेषु कोऽहं त्वाद्य ब्रवीमि किम् ।
साम्प्रतं मानुषो भूत्वा जठरेऽस्या व्यवस्थितः ॥
तद्व्यास ! न करिष्यामि गर्भान्निष्क्रमणं बहिः ।
नात्मानं चर्षयिष्यामि दीनचित्तोऽजमायया ।

इत्यादि;

॥ व्यास उवाच ॥

यद्येव मस्त्यभिमतं तव तर्हि निर्यात्-
निष्क्रम्य तुल्यनरकादिह गर्भवासात् ॥
सम्यक् ममाश्रय महोदयहेतुभक्तं—
श्रीप्राणनाथभुजयोः कुरु वा विमर्शम् ॥

॥ गर्भ उवाच ॥

ज्ञानं विवेकभवमस्ति च तावदेव-
वैराग्यमप्यनघसंस्मरणाञ्च तावत् ॥
यावन्न निष्क्रमति जन्तुरितो नियन्तु-
र्देवस्य चित्तनिलयस्य न मायया स्यात् ॥

इत्यादि;

॥ व्यास उवाच ॥

माया भविष्यति न ते पुरुषोत्तमस्य ।
वक्त्रं प्रदर्शय निजं मम वत्स ! शीघ्रम् ॥

इत्यादि;

॥ गर्भ उवाच ॥

यद्यस्य मे स भविता प्रति भूर्मुरारि—
र्मायामहाग्निविषये यदुवंशनाथः ॥
गर्भं विहाय तदहं बहिरस्मि भावी ।
नैवान्यथा कथमपीति विनिश्चयो मे ॥

इत्यादि;

॥ सूत उवाच ॥

इत्थं तदीय वचनं द्विज शुश्रुवान् सः—
व्यासोऽति दुःखितमना प्रययौ तदानीम्
नारायणं द्वारवतीनिलयं हि तस्य हेतो—
रानेतुमीपवनिवृत्तमतिर्भवाब्धेः ॥
तत्र त्रिलोकमहितेन कृतप्रणामः—
कृष्णेन विश्वसुहृदा द्विजवत्सलेन ॥
प्राप्तार्हणो निखिलमात्ममहद्वृत्तमस्मै—
व्यासो न्यवेदयदसावपि तत् प्रपेदे ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कर्त्तव्यमेतदिह नाम कियन्मदीयं—
गेहं पवित्रयितुमद्य तवागतस्य ॥
तीर्थस्य जङ्गमगतेर्ननु धन्यमेतद्
जंघालयोरुचरणपटोऽस्तीति चाह वाचम् ॥
नारायणांशपरिनिर्भाजनमेवमेव—
भूत्वा ययौ द्विजवरः सह कृष्णयुक्तः ॥
प्राह प्रविश्य पुनरेव स कान्दिशीकः—
किञ्चित् परानुभवबाधितगर्भशङ्की ॥

व्यास उवाच ॥

प्रयमंस्त्वागतो गर्भ ! द्वारवत्या जनाश्रयः ।
गृहीत्वैनं प्रतिभुवं निष्क्रमं कुरु पुत्रक ! ।

गर्भ उवाच ॥

त्वं ब्रूहि माधव ! जगज्जिगडोपमेय—
मायाऽखिलस्य न विलङ्घ्यतमा त्वदीया ॥
बध्नाति मां न यदि गर्भमिमं विहाय—
यास्यामि सम्प्रति बहिः प्रतिभूस्त्वमत्र ॥
आब्रह्म विश्वमखिलं तव माययैव—
बद्धं त्वयैव भवदुःखहरस्त्वमेव ॥

इत्यादि ;

॥ सूत उवाच ॥

इत्थं तदीय वचसा भगवान् प्रतीतः—
प्राह प्रहस्य शनकैरिति वाचमीशः ॥
मन्मायया न भविता तव सम्प्रयोगो—
योगावृताङ्ग ! कुरु निष्क्रमणं विशङ्कम् ॥
गन्तासि मोक्षमधुनैव मम प्रसादात्—
जीवन्नवाप्स्यति महोदयसौख्यमङ्ग ॥
यं तं वदन्ति मुनयो बहु दुःख योग—
बुद्धिर्वियोगमवियोगकरं मया यत् ॥
वाक्यावसान मनुविश्य ततस्तु गर्भा-
त्तस्या झटित्यथ विनिर्गत एव योगी ॥
स द्वादशाब्दमितवेषवयाः प्रणम्य—
व्यासं हरिं स्वजननीमथ सम्प्रतस्थे ॥

ततश्च पितापुत्रसम्वादानन्तरम्—

॥ श्रीभगवानुवाच ॥

व्यासेति ! त्वदीयतनयः शुकवन्मनोज्ञे जूने—
वचो भवतु तच्छुक एव नाम्ना ॥
दुःखय वत्स्यति तथापि न माययायं—
स्पृष्टो यतो मम कृपा हृदि मास्तु शोकम् ।
यामो गृहं वयमपि प्रकुरुष्व वाक्यं—
यत् त्वामयं परमभागवतोऽप्युवाच ॥ इति.
इत्थं जगत्त्रयगुरुः पुरुषोत्तमस्तं—
सम्बोध्यबोधनिधिमाशुरथाधिरूढः ।
आमन्त्र्य भारत ! काचि द्विजवर्यमुख्ये-
स्तां द्वारकां सुरपुरीं द्रुतमाजगाम ॥

इति ॥ २५ ॥ २६ ॥ २७ ॥

योगं प्राप्स्यतीति तत्प्रभावादेव जगौ ॥ २८ ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स एव नीपः पुनरपि कृत्वीसंज्ञायां शुककन्यायामिति शुकोऽयं व्यासादरण्यां सम्भूतोऽन्य एव । तदुक्तं हरिवंशादिषु

"पराशरकुलोत्पन्नः शुको नाममहायशाः ।
व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् ॥
स तस्यां पितृकन्यायां पीवर्य्यां जनयिष्यति ।
कृष्णं गौरं प्रभुं शम्भुं तथा भूरिश्रुतं जयम् ॥
कन्यां कीर्त्तिमतीं षष्ठीं योगिनीं योगमातरम् ।
ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च" ॥ इति ।

श्रीभागवतवक्ता शुकस्तु व्यासस्य प्रथमः पुत्रोऽरणिसम्भूतादन्यः । यदुक्तं ब्रह्मवैवर्त्ते—

"प्राप्ते कलियुगे व्यासश्चक्रे यो जगतः कृते" ।

महाभागवतम्—

इत्याद्यनन्तरम्

"ब्रह्मचर्य्यपरिभ्रंशे मातृवाक्यादुपस्थिते ।
अयं पितृऋणाल्लाभं द्विपवत् सोढुमक्षमः ॥
विचिन्त्य मनसा चक्रे भार्यां जाबालिकन्यकाम् ।
वीटिकाख्यां ददौ तस्मै सोऽपि वैखानसाश्रमी ॥

ततश्च व्यासस्तया सह बहुकालं तपस्तेपे तदन्ते तस्यां वीर्य्यमाधत्त साच गर्भवती एकादशसु वर्षेषु व्यतीतेष्वपि न प्रसूतेस्म । अथ द्वादशे वर्षे व्यासः कदाचिद्गर्भस्थं पुत्रमाह—भोः पुत्र ! किं स्वमातरं पीडयसि गर्भान्निःसरेति । सचाह, गर्भान्निःसृतं मायामामभिभविष्यति तस्मादत्रैव भगवन्तं ध्यायामीति व्यास आह, माया न त्वामभिभविष्यतीति. मद्वचनमेव प्रमाणीकृत्य गर्भान्निःसर स्वमुखं मां दर्शय मत्पत्नीं मा पीडयेति. स आह, पत्नीपुत्राद्यासक्तत्वेन त्वामपि माययाभिभूतं जानाम्यत-स्त्वद्वचनं न प्रमाणीकरोमि । व्यास आह, तर्हि कस्य वाक्यं प्रमाणी कुरुषे । स आह—यस्य मायेति । व्यास आह-तर्हि तमत्रैवाऽऽनयामीत्युक्त्वा द्वारकां गत्वा निवेदितसर्ववृत्तान्तं भगवन्तं स्वपर्णशालाऽभ्यन्तरमानीय व्यासः पुनराह-भोःपुत्र ! मायातोऽयं भगवानिति, ततः स आह—

"त्वं ब्रूहि माधव ! जगन्निगडोपमा सा—
मायाऽखिलस्य न विलङ्घ्यतमा त्वदीया ॥
बध्नाति मां न यदि गर्भमिमं विहाय—
यास्यामि सम्प्रति बहिः प्रतिभूस्त्वमत्र " ॥

इति भगवानाह—

"मन्मायया न भविता तव सम्प्रयोगो—
गन्तासि मोक्षमधुनैव मम प्रसादात् " ॥ इति ।

ततो गर्भान्निःसृत्य प्रणम्य बहुस्तुवानन्तं दृष्ट्वा भगवानाह—

व्यास ! त्वदीयतनयः शुकवन्मनोज्ञं—
ब्रूते वचो भवतु तच्छुक एव नाम्ना ॥

इति व्यासमामन्त्र्य रथमारुह्य द्वारकां प्रतस्थे—— शुकोऽपि प्रवव्राज व्यासस्तमनुजगामेति । भिक्षामिच्छरण्यास्तु अरणीसम्भूतः शुक एव विरहातुरं पितरमनुव्रजन्तमालक्ष्य छायाशुकं निर्माय प्रवव्राज छायाशुकस्यैव गार्हस्थ्यव्यवहार इत्याहुः । स ब्रह्मदत्तो गवि सरस्वत्याम् ॥ २५ ॥

विषयाणामलमिमे इति पञ्चालसंज्ञिताः ।
मुद्गलाद्ब्रह्मनिर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥ ३३ ॥
मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ।
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥ ३४ ॥
तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ।
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥
शरस्तम्बे ऽपतद्रेतो मिथुनं तदभूच्छुभम् ।
तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां नवमस्कन्धे
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स एव योगतन्त्रं चकार इमे बार्हदीषवा बृहदिषोर्वंश्याः दीर्घत्वमार्षम् ॥ २६ ॥

सुपार्श्वकृत् सुपार्श्वजनकः ॥ २७—२९ ॥

अजमीढस्य वंशान्तरमाह—नलिन्यामिति ॥ ३०—३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुककन्यायां छायाशुकस्य दुहितरि स ब्रह्मदत्तः गवि भार्यायां विष्वक्सेनं सुतमध्यगात् प्राप्तवान् ॥ २५ ॥

स एव योगतन्त्रं चकार ततो विष्वक्सेनात् बार्हदीषवा बृहदिषोरजमीढसुतस्य वंश्याः दीर्घत्वमार्षम् ॥ २६ ॥

हस्तिपुत्रस्य द्विमीढस्य वंशमाह—यवीनर इत्यादिना । सुपार्श्वकृत् तस्य पुत्रः सुपार्श्व इत्यर्थः ॥ २७ ॥

प्राच्यसाम्नां षट्संहिताः जगौ विभज्याध्यापयामास ॥ २८ ॥ २९ ॥

पुरुमीढो हस्तिपुत्रोऽप्रजोऽभवत् हस्तिपुत्रस्याजमीढस्य वंश्याः प्रियमेधादयः केचित् द्विजाः बभूवुः तेभ्योऽन्ये बृहदिषुवंश्याश्चेति वंशद्वयमुक्तम् तस्यैव सिंहावलोकन्यायेन वंशान्तरमाह—नलिन्यामित्यादिना ॥ ३० ॥

अर्कतनयो भार्म्याश्वः तस्य मुद्गलादयः पञ्च ॥ ३१—३३ ॥

भाषा टीका ।

कालान्तर में वही राजा नीप, कृत्वी ऐसे नामवाली शुक की कन्या में ब्रह्मदत्त (शुक) को उत्पन्न करते हुए, वह शुक (छायाशुक) योगी गौ (सरस्वती) नामक भार्या के विषें विष्वक्सेन पुत्रको धारण करते हुए ॥ २५ ॥

और जैगीषव्य के उपदेश निमित्त योगतन्त्र को करते हुए, तदनन्तर उनसे उदक्स्वन पुत्र हुए, तिन से भल्लाद हुए, ये सब बृहदिषु के वंश के हुए ॥ २६ ॥

द्विमीढ के पुत्र यवीनर हुए, तिन के सुत कृतिमान् कहाये तिन के पुत्र नाम से सत्यधृति हुए, तिनके पुत्र दृढनेमि हुए, और दृढनेमि से सुपार्श्व हुए ॥ २७ ॥

सुपार्श्व से सुमति हुए, तिन के पुत्र संनतिमान् होते हुए, तिनसे कृती जो हिरण्यनाभ से योग को प्राप्त करके प्राच्य साम की षट संहिताओं को पढाते हुए, तिन से नीप हुए तिन के क्षम्य हुए, तिनसे सुवीर हुए सुवीर के पुत्र रिपुंजय हुए ॥ २८ ॥ २९ ॥

तिनसे बहुरथ हुए, पुरुमीढ के सन्तान नहीं भई । अब अजमीढ का वंशान्तर कहते हैं, अजमीढ के नलिनी भार्या में नील पुत्र हुए, तिन से शान्ति हुए ॥ ३० ॥

शान्ति के सुशान्ति हुए, तिनके पुत्र पुरुज हुए, तिनके अर्क हुए, तिनके तनय भर्म्याश्व हुए, तिनके मुद्गलादिक पांच पुत्र होते हुए ॥ ३१ ॥

मुद्गल, यवीनर, बृहदिषु, काम्पिल्य, और सञ्जय ये पांच पुत्र हुए, अपने पुत्रों को देखकर सन्तुष्ट होकर एक समय भर्म्याश्व बोलते हुए, कि— ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भार्म्याद्भर्म्याश्वपुत्रात् मिथुनं चाभूत् तदेवाऽऽह—दिवोदासः पुमानहल्या च कन्यकेति ॥ ३४—३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव सङ्क्षेपेण दर्शयति—मिथुनमिति । भार्म्यात् भर्म्याश्वसुतात् मुद्गलात् मिथुनं स्त्रीपुंसमभूत् तत्र पुमान् दिवोदासः कन्यकात्वहल्या, तां निशामय । यस्यामहल्यायां गौतमाद् भर्तुः शतानन्दो जज्ञे ॥ ३४ ॥

तस्य शतानन्दस्य पुत्रः सत्यधृतिः स च धनुर्वेदविशारदः तत्सुतः सत्यधृतिसुतः शरद्वान् तं विशिंषन् तन्नाम-निमित्तं तद्वंशमाह—एतमादित्यादिना याबत्समाप्ति । उर्वश्या अप्सरसो दर्शनात् हेतोर्यस्मात् शरद्वतो रेतः शरस्तम्बे अश्ववालस्तम्बे न्यपतत् अतः स शरद्वान्नामा बभूवेति भावः । तच्च पतितं रेतः शिवं शुभाकारं मिथुनं स्त्रीपुंसमभूत् शन्तनुः राजा यदृच्छया मृगयां चरन् तन्मिथुनं दृष्ट्वा कृपया अगृह्णात् गृहीत्वा ररक्षेत्यर्थः । तत्र मिथुने कुमारः कृपः कृपाचार्यः कन्या तु कृपी सा च द्रोणाचार्यस्य पत्नी ॥ ३५ ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।
एकविंशोऽध्यायः ॥ २१ ॥
( विजयध्वजरीत्या अष्टादशः । )

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकविंशोऽध्यायः ॥ २१ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भार्म्यात् भार्म्याश्वपुत्रान्मुद्गलात् ॥ ३४—३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमस्यैकविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २१ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भार्म्याश्च भर्म्याश्वपुत्रात् ॥ ३४—३६ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाऽध्यायार्थप्रकाशः ॥ २१ ॥

———

भाषाटीका ।

हमारे पांचों पुत्र पांचों देशों की रक्षा करने को अलं ( समर्थ ) हैं । इसी कारण से उनके देश का नाम पांचाल पड़ गया । मुद्गल से ब्राह्मणों का मौद्गलसंज्ञक गोत्र चल पड़ा ॥ ३३ ॥

भर्म्याश्वके पुत्र मुद्गल से मिथुन ( स्त्रीपुरुष ) उत्पन्न भया, तिस में दिवोदास पुरुष हुए, और अहिल्या कन्या भई जिसमें गौतम से शतानन्द हुए ॥ ३४ ॥

तिन दिवोदास के धनुर्वेद विशारद शतधृति नामके पुत्र हुए तिनके पुत्र शरद्वान् हुए, जिन से उर्वशी अप्सरा के दर्शन से शरस्तम्ब ( मुंज के पुंज ) में बहुत सुन्दर मिथुन ( स्त्री पुरुष का युगल ) उत्पन्न हुआ, शन्तनु महाराज सिकार खेलने गये रहे, उस पुत्र और कन्या को देखकर कृपाकर घरले आये उनमें जो कुमार रहा सो कृपाचार्य हुए, और कन्या जो रही सो द्रोणाचार्य की पत्नी कृपी भई ॥ ३५ ॥ ३६ ॥

इति श्री मद्भागवत नवमस्कन्ध में एकविंश अध्यायकी
श्री वृन्दावनस्थ पं० भागवताचार्य कृत
भाषा टीका समाप्त ॥ २१ ॥

———

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

—○:*:○—

## ॥ द्वाविंशोऽध्यायः ॥

———○:o:○———

### श्रीशुक उवाच ।

मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ! ।
सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥
तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः ।
द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥
धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पञ्चालका इमे ।
योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ।
परिक्षित्सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥ ४ ॥
सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥
(१)कुशाम्बमत्स्यप्रत्यग्रचेदिपाद्याश्च चेदिपाः ।
बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥
जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ।
अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत्सुतः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिताः ।
कुरुवंशे जरासन्धपार्थदुर्योधनादयः ॥

॥ १ ॥

तस्य सोमकस्य पुत्राणां शतं बभूव तेषां जन्तुर्ज्येष्ठो यवीयान् पृषतः ॥ २ ॥

अजमीढस्यैव वंशान्तरमाह-य इति । ततः संवरणात्कुरुः ॥ ॥ ३—४ ॥

तस्य कृतिनः उपरिचरो वसुः. ततो वसोः बृहद्रथो मुखमादिर्येषाम् ॥५ ॥

तानेवाह—कुशाम्बेति । तत्सुतः पुष्पवान् जहुः तस्यापत्यं सत्यहित इति योज्यम् ॥ ६—७ ॥

जरया राक्षस्या ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुद्गलस्य दुहितृसन्तानमभिधायाथ पुत्रसन्तानमीह—मित्रायुश्चेति । दिवोदासात् मौद्गल्यात् मित्रायुर्जज्ञे तत्सुता मित्रायुसुताः हे नृप, । च्यवनादयश्चत्वारः तत्र , सोमकः कनीयान् स च जन्तोः जन्म कृतवानिति तथा सोमकस्य सुतो जन्तुरित्यर्थः ॥ १ ॥

---

(१) कशुम्भमत्स्य इति वीर०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं जन्तुरेव तस्य पुत्रः अपि तु जन्तुज्येष्ठं शतमित्याह—तस्येति । तस्य सोमकस्य पुत्रशतमभूत् तेषां पृषतः कनीयान् जन्तुस्तु ज्येष्ठ इति शेषः । पृषतात्तु द्रुपदः तस्य द्रुपदस्य सुताः धृष्टद्युम्नादयः ॥ २ ॥

इमे धृष्टद्युम्नादयः पञ्चालकाः पञ्चालसंज्ञिकमुद्गलवंशप्रसूतत्वात्पाञ्चालकाः अजमीढस्य पुनर्वंशान्तरमाह—च इति । अजमीढस्याऽन्यो यः सुतः ऋक्षाख्यस्ततः ऋक्षात्संवरणः ॥ ३ ॥

संवरणाच्च तपत्याख्यायां सूर्यकन्यायां कुरुर्जज्ञे स च कुरुक्षेत्रस्य पतिः कुरोः सुतास्तु परीक्षिदादयः ॥ ४ ॥

तत्र सुधनुषः सुतः सुहोत्रोऽभूत् अथ सुहोत्राच्च्यवनः ततः च्यवनात्कृतिः तस्य कृतेरुपरिचरो वसुः उपरिचरवसुः कृतीति पाठान्तरं तदा तस्य कृतिनः ततः उपरिचरवसोः बृहद्रथो मुख्यमादिर्येषां ते जज्ञिरे ॥ ५ ॥

तानाह—कुशाम्बेति । एते चेदिपाः चेदिजनपदाधिपाः तत्र बृहद्रथात् कुशाश्वो बभूव कुशाग्रोऽभूदिति पाठान्तरं तत्सुतः कुशाग्रसुतः ऋषभः स्मृतः प्रसिद्धः तत्सुतः ऋषभसुतः पुष्पवान् तस्य हितः हिताख्यः अपत्यं पुत्रो जह्नु इत्यन्वयः । तत्सुतो हितसुतः जह्नुः जतुरिति पाठान्तरम् एवं बृहद्रथस्यैको वंश उक्तः अथान्यस्यामपि भार्यायां बृहद्रथात् द्वे शकले जज्ञाते ॥ ६ ॥ ७ ॥

ते च मात्रा बहिरुत्सृष्टे त्यक्ते तत्र क्रीडन्त्या जरया राक्षस्या जीव जीवेति भाषमाणया अभिसन्धिते जरया सन्धितत्वाज्जरासन्धः सुतो ऽभवत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुद्गलस्य सन्ततिं प्रोच्य दिवोदाससन्ततिं कथयति—मित्रायुरिति ॥ १ ॥ २ ॥

अजमीढसुतो योऽन्यो बृहदिषोरिति शेषः । अन्यस्यां भार्यायां जातः नाम्ना ऋक्षः ऋक्षाज्जातः संवरणो नाम ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥

जरया राक्षस्या ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—१४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वाविंशे ऽभूद्दिवोदासवंशे द्रौपद्यथाऽ भवत् ।
ऋक्षवंशे जरासन्धार्जुनयुधिष्ठिरादयः ॥

॥ १ ॥

तस्य सोमकस्य शतं पुत्रास्तेषां जन्तुर्ज्येष्ठः कनिष्ठः पृषतः मध्यगो द्रुपदः ॥ २—५ ॥

बृहद्रथमुख्यानेवाऽऽह—कुशाम्बेत्यादि ॥ ६—७ ॥

जरया राक्षस्या ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिवोदासवंशम अजमीढपुत्रान्तरस्य ऋक्षस्य वंशञ्चाह, मित्रायुरिति द्वाविंशेन । कथम्भूतः ? सोमकः जन्तुजन्मकृत जन्तुपिता ॥ १ ॥

तस्य सोमकस्य पुत्रशतं तत्र जन्तुर्ज्येष्ठः पृषतश्चोपयवीयान् पृषतस्य द्रुपदस्तस्य द्रौपदी कृपात् धृष्टद्युम्नादयः सुताश्च, तथाह श्रीपराशरः "दिवोदासस्य मित्रायुर्मित्रायोश्च्यवनो नाम राजा च्यवनात्सुदासस्तस्य सहदेवस्तस्यापि सोमकस्ततो जन्तुः शतपुत्रज्येष्ठोऽभवत् तेषां यवीयान् पृषतः पृषतात् द्रुपदः ततो धृष्टद्युम्न इति यद्यपि श्रीमद्भागवते अजमीढस्ततः नीलस्ततः शान्तिस्ततः सुशान्तिस्ततः पुरुजस्ततोऽर्कस्ततो भर्म्याश्वस्ततो मुद्गलस्ततो दिवोदासादिक्रमेण धृष्टद्युम्नोत्पत्तिस्तथापि अजमीढात् नलिन्यां सुशान्तिरुपपद्यत" इत्युक्त्वा तदनन्तरं सुशान्तिः पुरुजातिस्ततो भार्म्याश्वस्ततः सृञ्जयस्ततः पञ्चजनस्ततः सोमदत्तस्ततः सहदेवस्ततः सोमकस्ततः पृषतस्ततो द्रुपदः तस्य पुत्रो धृष्टद्युम्नः" इति हरिवंशोक्तक्रमाभिप्रायेण "तदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु" इत्यत्र धृष्टद्युम्नस्य सृञ्जयवंश्यत्वं स्वीकृतमिति बोध्यम् ॥ २—४ ॥

बृहद्रथो मुख्यम् आदिर्येषाम् ॥ ५ ॥

तानेवाह—कुशाम्बेति । बृहद्रथात्कुशाग्रः तस्य ऋषभः तत्सुतः ऋषभस्सुतः पुष्पवान् जज्ञे तस्य अपत्यं सत्यहितः तत्सुतो जह्नुरित्यन्वयः ॥ ६ ॥ ७ ॥

जरया राक्षस्या ॥ ८ ॥

---

भाषा टीका ।

हे नृप ! दिवोदास के पुत्र मित्रेयु उनके च्यवन हुए, तिनके सुदास हुए, तिनके सहदेव हुए, तिन के सोमक हुए, तिनसे जंतु नामक पुत्र होते भये ॥ १ ॥

उनके सौ पुत्र हुए उन सबों में पृषत छोटे हुए, पृषत के द्रुपद पुत्र हुए, तिनसे द्रौपदी पुत्री और धृष्टद्युम्न आदिक पुत्र उत्पन्न भये ॥ २ ॥

धृष्टद्युम्न के पुत्र धृष्टकेतु हुए ये सब राजा भार्म्यवंशी पंचाल देश के अधिष्ठाता हुए । और जो अजमीढ के अन्य पुत्र ऋक्ष हुए उनके संवरण हुए ॥ ३ ॥

और संवरण से सूर्य की कन्या तपती में कुरुक्षेत्र के पति कुरु महाराज उत्पन्न हुए, और उनके परीक्षित, सुधनु, जह्नु, निषध, अश्व, इतने पुत्र उत्पन्न भये ॥ ४ ॥

सुधनुष के पुत्र सुहोत्र भये, उनके च्यवन, उनके कृती, उनके उपरिचर वसु, और वसु के बृहद्रथादिक पुत्र उत्पन्न हुए ॥ ५ ॥

अर्थात् बृहद्रथ, कुशांब मत्स्य प्रत्यग्र चेदिपादिक भये, ये सब चंदेरी के राजा हुए, बृहद्रथ के कुशाग्र उनके ऋषभ हुए ॥ ६ ॥

ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ।
परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥ ९ ॥
ततो विदूरथस्तस्मात्सार्वभौमस्ततोऽभवत् ।
जयसेनस्तत्तनयो राधिकोऽतोऽयुतो ह्यभूत् ॥ १० ॥
ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ।
ऋष्यस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः ॥ ११ ॥
देवापिः शन्तनुस्तस्य बाह्लीक इति चात्मजाः ।
पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥ १२ ॥
अभवच्छन्तनू राजा प्राङ्महाभिषसंज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।
समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥ १४ ॥
शन्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक् ।
राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥
एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥ १६ ॥

भाषा टीका ।

उन ऋषभ के पुष्पवान् तिनसे सत्यहित पुत्र उत्पन्न हुए और बृहद्रथ की अन्यभार्या से पुत्र के दो खंड उत्पन्न भये ॥ ७ ॥

उन दोनों टुकडों को माता ने बाहर पटक दिये फिर जरा नामक राक्षसी ने उन दोनो आधे २ टुकडों को उठाकर जोडकर जीव २ ऐसे बोलकर खेलती हुई ने जोड दिये तब वह जी उठा इसी से उसका जरासंध नाम हुआ ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यस्मात्सोमापिः श्रुतश्रवाः कुरोः पुत्रः परीक्षिदनपत्यः जाह्नवो जह्नोः पुत्रः ॥ ९ ॥

अतो राधिकादयुतोऽभूदित्यर्थः ॥ १०—११ ॥

तस्य प्रतीपस्य देवापिशन्तनुबाह्लीकाः ॥ १२ ॥

प्राक् पूर्वजन्मनि महाभिष इति संज्ञा यस्य सः ॥ १३ ॥

यदा देवो न ववर्ष तदा शन्तनुस्तत्र कारणं ब्राह्मणान् पप्रच्छ ॥ १४ ॥

ब्राह्मणैश्चैवमुक्तः "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति स्मृतेर्योऽग्रभुक् पूर्वमग्रतो भुनक्ति अयं त्वादृशोऽपि परिवेत्तैव भवति अतः तद्दोषपरिहाराय राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्येवमुक्तः शन्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास राज्ञः प्रजापालनादिः परो धर्मोऽतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततः पूर्वमेव तस्य मन्त्रिणा अश्मरातनाम्ना देवापिं पाषण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशितः सन् वेदवादस्यातिवादान्निन्दावचनानि सोऽब्रवीत् ततस्तस्य पातित्येन राज्याऽनर्हत्वे जाते शन्तनोर्दोषाभावाद्देवो ववर्षेत्यर्थः । ॥ १५—१७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो जरासन्धात् सहदेवः यत् यस्मात्सहदेवात् सोमापि श्रुतश्रवाश्च जातौ स सहदेव इत्यन्वयः । कुरोः पुत्रः परीक्षिदनपत्यः अथ जह्नोः कुरुसुतस्य सुतो जाह्नवः स च नाम्ना सुरथ इति प्रसिद्धः ॥ ९ ॥

ततः सुरथाद्विदूरथस्तस्मात्सार्वभौमः ततो जयसेनस्तत्तनयो जयसेनतनयः, राधिकः अतो राधिकात् द्युमानभूत् अतोऽयुतो ऽभवत् इति पाठान्तरम् ॥ १० ॥

ततश्च द्युमतः क्रोधनः तस्मात् क्रोधनात् देवातिथिः अमुष्य देवातिथेः, ऋष्यस्तस्मादृष्याद्दिलीपः तस्य दिलीपस्यात्मजः प्रतीप.

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"ऋक्षोऽस्य भीमसेनोऽभूत् प्रतीपस्तस्य चात्मजः, इति पाठान्तरम् ॥ ११ ॥

तस्य प्रतीपस्य देवापिः शान्तनुर्बाह्लीकश्चेति त्रयः सुताः तत्र देवापिः पितृराज्यं त्यक्त्वा वनं गतः अधुना अपुत्रश्चेति भावः ॥ १२ ॥

शान्तनुस्तु राजा ऽभिषिक्तराज्यामनः प्राक् पूर्वजन्मनि महाभिषसंज्ञितः महाभिष इति संज्ञाऽस्य सञ्जातेति तथाभूतः तस्य तस्मिन् जन्मनि शान्तनुनामप्रवृत्तौ निमित्तमाह—यं यमिति । सोऽस्मिन् जन्मनि कराभ्यां य यं जीर्णं जरठं स्पृशति स सर्वोऽपि यौवनमेति प्राप्नोति अग्र्यां मुख्यां शान्तिं चाप्नोति यतस्ततोऽनेन कर्मणा यौवनशान्त्यापादनरूपेण कर्मणा निमित्तेन शान्तनुरिति प्रसिद्धः शं सुखं तनुते यौवनशान्त्योरापादनेनेति शान्तनुरिति निरुक्तिरभिप्रेता तस्य शान्तनोः राष्ट्रे यदा द्वादश समाः वर्षाणि विभुः पर्जन्यो न ववर्ष ॥ १३ ॥ १४ ॥

तदा शान्तनुः तत्र निमित्तं ब्राह्मणान् पप्रच्छ ब्राह्मणैस्त्वेवमुक्तः-

"दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ इतिस्मृतेः

योऽग्रभुक् भुवमग्रतो भुनक्त्येवं त्वादृशोऽपि परिवेत्तैव भवति अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्येवमुक्तः पुरराष्ट्रयोर्विवृद्धिर्यस्मात् वर्षात्तस्मै वर्षार्थमित्यर्थः ॥ १५ ॥

ततः शान्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास राज्ञः प्रजापालनादिः परमो धर्मस्ततस्त्वं राज्यं स्वीकुर्विति प्रार्थयाञ्चक्रे ततः पूर्वमेव तस्य मन्त्रिणा अश्मरातसंज्ञकेन देवापिं पाषण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिताः विप्रास्तैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशितस्सन् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जाह्नवः जह्नोः पुत्रः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

स्वपत्नुरमास्तप्ताङ्ग्याः त्वा एकेनाकृतेषु च्छन्दांसि विवक्तीत्यतः शान्तनुशब्द निरुक्ति—यंयमिति । यस्य संस्पर्शो तनोति कराभ्यामितिशेषः । शान्तनुं सुतनुं युवानं नयतीति शान्तनुं शन्तं शान्तं नयति प्रापयतीति वा ॥ १३ ॥ १४ ॥

दाराग्निहोत्रादियोगं यः कुरुतेऽग्रजे स्थिते सति स परिवेत्ता । तदुक्तं "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स उच्यते परिवित्तिस्तु पूर्वजः" इति. अयं शान्तनुरग्रभुक् अग्रजस्य देवापेरग्रतो राज्यं भुङ्क्ते इति दोषेणावर्षणमिति विज्ञायाग्रजायास्तु राज्यं देहीत्युक्तम् ॥ १५ ॥

छन्दयामास प्रसादयामास शान्तनोः कश्चिन्मन्त्री अश्मकः तिमान् त्वयुक्त अयं देवापिर्यथा वेदमार्गाद्विभ्रंशितो भवति तथा कर्तव्यमिति तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितैः 'स देवापिः वेदवादातिवादान् वेदार्थनिन्दालक्षणान् दोषान् गिराऽब्रवीदित्यन्वयः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दाराग्निहोत्रसंयोगमित्यस्य प्रथमानधिकारित्वतात्पर्यमित्यभिप्रेत्याह—अग्रभुगिति ॥ १५ ॥

एवमिति, सार्द्धकम् । तन्मन्त्रिभिरित्यत्र तद्धि निन्दुर्यति ज्ञेयम् ॥ १६—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यत् यस्य सोमापेः परीक्षित् कुरुपुत्रः जाह्नवः कुरुपुत्रस्य जह्नोः पुत्रः सुरथः ॥ ९ ॥

ततो राधिकात्त्रयुतायुरभूत् ॥ १०—१२ ॥

प्राक् पूर्वजन्मनि यं जीर्णं वृद्धं स जीर्णः यौवनम् एति प्राप्नोति ॥ १३ ॥

विभुरिन्द्रः "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति स्मृतेः त्वमग्रज देवापौ वर्तमानेऽपि अग्रभुक् कृतदारो राज्यभोक्ता परिवेत्तैवासि दोषादिन्द्रो न ववर्ष तस्माद्राज्यमित्यादि ॥ १४ ॥ १५ ॥

छन्दयामास त्वं राज्यं कुर्विति प्रार्थितवान् ततः स वेदवादान् वेदस्यातिवादान् वेदनिन्दावाक्यानि अब्रवीत् तत्र हेतुः तस्य शान्तनोर्मन्त्रिणा अश्मसारसंज्ञेन शान्तनुप्रार्थनात् पूर्वमेव देवापिं पाषण्डीकृत्य राज्यानर्हं कर्तुं शान्तनुप्रभृत्यलक्षितं ये प्रहिता विप्रास्तैः पाषण्डमताऽऽश्रयया गिरा वेदाद्विभ्रंशितः ततश्च तस्य पातित्येनैव तस्य राज्यानर्हत्वे जाते शान्तनो दोषाभावात् देवो ववर्षेत्यर्थः ॥ १६—१९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यतः सोमापिः श्रुतश्रवाः पुत्रः परीक्षित्तु कुरुपुत्रोऽनपत्योऽभूत् जाह्नवः जह्नोः पुत्रः ॥ ९ ॥

ततो राधिकादयुतः ॥ १०—१२ ॥

प्राक् पूर्वजन्मनि महाभिष इति संज्ञा सञ्जाताऽस्येति तथा सः ॥ १३ ॥

तस्य राज्ये विभुः पर्जन्यः द्वादश समाः सम्वत्सरान् यदा न ववर्ष ॥ १४ ॥

तदा पुरराष्ट्रयोर्विवृद्धिर्यस्मात्तस्मै वर्षार्थम् ब्राह्मणैः शान्तनुः योऽग्रभुक् भुवमग्रे भुनक्त्येवं त्वादृशोऽपि परिवेत्तैव भवति तस्मात्तद्दोषनिवृत्तये राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्युक्तः परिवेतृलक्षणं स्मृत्योक्तम् "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे सति । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति ॥ १५ ॥

एवं द्विजरुक्तः शान्तनुः वनं गत्वा राज्ञः प्रजापालनादिः परो धर्मोऽतस्त्वं राज्यं स्वीकुर्विति ज्येष्ठं छन्दयामास ततः

वेदवादातिवादान्वै तदा देवो ववर्ष ह ।
देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ।
बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥
शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् ।
सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ १९ ॥
वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ।
शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः ॥ २० ॥
विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः ।
यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥ २१ ॥
वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ।
हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः ॥ २२ ॥
मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ।
विचित्रवीर्योऽथोवाह काशिराजसुते बलात् ॥ २३ ॥
स्वयंवरादुपानीते अम्बिकाम्बालिके उभे ।
तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वमेव तन्मन्त्रिणा अश्मरातानामकेन देवापिं पाषण्डीकृत्य प्रजापालनादिधर्मानर्हं कर्तुं प्रहितैः प्रेषितैर्विप्रैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशितस्सन् ॥ १६ ॥

---

भाषा टीका ।

जरासंध के पुत्र सहदेव उनके सोमापि और उनके श्रुतश्रवा पुत्र हुए, और परीक्षित अनपत्य हुए, सुरथ जन्हु के पुत्र हुए ॥ ९ ॥

उनके विदूरथ उनसे सार्वभौम पुत्र हुए, सार्वभौम के जयसेन उनके राधिक और राधिक के अयुत पुत्र होते भये ॥ १० ॥

उनसे क्रोधन, और क्रोधन के देवातिथि, उनके पुत्र ऋष्य हुए, तिनके दिलीप, उन के पुत्र प्रतीप हुए ॥ ११ ॥

और प्रतीप के देवापि शंतनु बाल्हीक इतने पुत्र हुए, पिता के राज्य को छोडकर देवापि वन में गये ॥ १२ ॥

उनके पीछे शंतनु राजा हुए, पूर्व जन्म में महाभिष इनका नाम रहा, इनका ऐसा प्रभाव रहा कि जिसके २ शरीर पर हाथ रक्खें वह वृद्ध जीर्ण शरीर वाला भी होय तो भी युवा हो जावे ॥ १३ ॥

और उनके हाथ के स्पर्श होने से उत्तम शान्ति प्राप्त होती रही इससे उनका नाम शंतनु हुआ, जिस समय इनके राज्य में बारह वर्ष वर्षा (वृष्टि) नहीं हुई ॥ १४ ॥

तब शंतनु ने ब्राह्मणों से पूछा कि हमारे राज्य में वृष्टि क्यों नहीं होती है? तब ब्राह्मणों ने कहा कि-तुम परिवेत्ता (बडे भाई के रहते विवाह और राज्य करते) हो इससे तुम अपने राज्य वृद्धि के लिये बडे भाई को राज्य दो ॥ १५ ॥

जब ब्राह्मणों ने ऐसा कहा तब शंतनु ने देवापि के पास वन में जाकर प्रार्थना करी इसके पहिले ही इनके अश्मरात नामक मंत्रि ने देवापि को पाखंडी बनाकर राज्य के अयोग्य करने के लिये ब्राह्मणों को भेजा रहा उन लोगों ने पाखंड मताश्रय वाक्यों से देवापि को वेद से भ्रष्ट कर दिया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः सोमदत्ताद्भूरिर्भूरिश्रवाः शलश्चेति त्रयः ॥ १८ ॥ १९ ॥

रामो जामदग्न्यः दाशकन्यायामिति उपरिचरस्य वसोर्वीर्यजा मत्स्यगर्भादुत्पन्ना दाशैः कैवर्तैः पालिता इतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नाम्ना तत्समाननाम्ना चित्राङ्गदेन गन्धर्वेण युद्धे हतः यस्यां सत्यवत्यां शन्तनुपरिग्रहात्पूर्वमेव ॥ २१ ॥

वेदा गुप्ता येन यतोऽहं जात इदं भागवतं चाध्ययनमधिगतवानस्मि ॥ २२ ॥ २३ ॥

स्वयम्वराद्भीष्मेण बलादुपानीते ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

वेदवादस्यातिवादात् निन्दावचनानि स देवापिरब्रवीत् ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शन्तनोः दोषाभावात् देवो ववर्ष देवापिर्योगमाश्रित्य कलापग्राममाश्रितस्सन् ॥ १७ ॥

कलौ सोमवंशे नष्टे सति पुनः कृतयुगस्यादौ स्थापयिष्यति सोमवंशं प्रतिवर्तयिष्यति बाह्लीकात् प्रतीपात्मजात् सोमदत्तो जज्ञे ततः सोमदत्तात् भूरिः भूरिश्रवाश्शलश्चेति त्रयः सुताः जज्ञिरे शन्तनोस्तु ब्रह्मशापान्मानुषीत्वं प्राप्य स्वयंवरेणागतायां गङ्गायां भार्यायां भीष्मो जातस्तं विशिनष्टि आत्मवान् ब्रह्मवित् सर्वेषां धर्मविदां श्रेष्ठः महाभागवतः कविर्विद्वान् ॥ १८ ॥ १९ ॥

वीराणां सैन्यस्य नायकः येन भीष्मेण रामो जामदग्न्योऽपि युधि संग्रामे तोषितः ततो गङ्गायामन्तर्हितायां शन्तनोर्दाशकन्यायां दाशैः कैवर्तैः पालितायामुपरिचरवसोर्वीर्यं भक्षितवत्या मत्स्याः उदराद्दाशैरुद्धृतायाः पालितायां मत्स्यगन्धियोजनगन्धिसत्यवत्याख्यायामित्यर्थः। चित्राङ्गदः सुतस्तस्य कनीयान् विचित्रवीर्यश्चेति द्वौ सुतौ जज्ञाते इत्यर्थः। तत्र चित्राङ्गदो नाम्ना तत्समनाम्ना चित्राङ्गदाख्येन गन्धर्वेण युद्धे हतः दाशकन्यां विशिनष्टि—यस्यामिति। यस्यां दाशकन्यायां शन्तनोः परिग्रहात्पूर्वमेव पराशराद्भगवतः कला अवतारः श्रीव्यासरूपेणाभूदिति शेषः। तस्यां दाशकन्यायां शन्तनोः चित्राङ्गदो जज्ञे इति पूर्वेणान्वयः ॥२०॥२१॥

हरेः कलावतारं विशिनष्टि—वेदगुप्त इति। वेदा गुप्ता येन स वेदगुप्तः कृष्णः कृष्णद्वैपायनाख्यो मुनिः यस्मादहं शुको जातस्सन्निदं श्रीभागवतमध्यगाम अहमेव इदं श्रीभागवतं तस्मादधीतवानस्मीत्यर्थः। तदेवोपपादयति—हित्वेति। भगवान् बादरायणः पाराशर्यः सत्यवतीसुतः पैलादीन् स्वशिष्यान् हित्वा तेभ्य अनुपदिश्येत्यर्थः ॥ २२ ॥

प्रशान्तायेति हेतुगर्भं प्रशान्तत्वात् मह्यमेवेदं परं गुह्यं पुराणं श्रीभागवतं जगावुपदिदेशेत्यर्थः। विचित्रवीर्यः शान्तनवः काशिराजस्य सुते बलाद्भीष्मेण स्वयंवरादुपनीते अम्बिकाम्बालिकाख्ये द्वे उवाह उपयेमे ततस्तयोरम्बिकाम्बालिकयोरासक्तं हृदयं यस्य स विचित्रवीर्यः यक्ष्मणा क्षयरोगेण मृतः ॥ २३ ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ततः देवापौ विभ्रष्टे सति अनन्तरमिन्द्रदेवो वृष्टवान् योगं भगवद्ध्यानम् ॥ १७–१९ ॥

राम: परशुरामः दाशकन्यायां सत्यवत्याम् ॥ २० ॥

नाम्ना, निमित्तेन हतः गन्धर्वेणेति शेषः। यस्यां दाशकन्यायाम् ॥ २१ ॥

कृष्णो व्यासः यतः कृष्णादिदं श्रीभागवतं अध्यगामधीतवानस्मि श्रीभागवतं स्तौति हित्वेति ॥ २२ ॥

काशिराजसुते ते अम्बिकाम्बालिके बलाद्भीष्मेणानीते ॥२३॥

यक्ष्मणा क्षयरोगेण अग्रजस्य भ्रातुर्विचित्रवीर्यस्य विदुरं भुजिष्यायां जनयामास ॥ ॥ २४—२९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

शान्ताय ब्रह्मनिष्ठाय ॥ २२—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

दाशकन्यायामिति उपरिचरवसोर्वीर्येण मत्स्यगर्भादुत्पन्ना कन्या दाशैः कैवर्तैः पालिता अतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥ २० ॥

नाम्ना तत्समाननाम्ना चित्राङ्गदेन गन्धर्वेण युद्धे हतः यस्यां सत्यवत्यां शन्तनुपरिग्रहात् पूर्वमेव हरेःकला व्यासः ॥२१॥

वेदा गुप्ता येन सः ॥ २२ ॥

इदं श्रीभागवतम् स्वयम्वराद्भीष्मेण बलादुपानीते ॥२३॥२४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वेदवादस्य अतिवादात् स देवापिः अब्रवीत् ततस्तस्य पतितत्वेन प्रजापालनादिधर्मानर्हतायां जातायां शन्तनोर्दोषाभावाद्देवो ववर्ष इत्यर्थः ॥ १७ ॥

कृतादौ स्थापयिष्यति सोमवंशमिति शेषः। ततः सोमदत्तात् भूरिप्रभृतयस्त्रयः ॥ १८ ॥ १९ ॥

रामः परशुरामः दाशकन्यायां दाशैः कैवर्तैः पालितायां वासव्याम् ॥ २० ॥

चित्राङ्गदः नाम्ना स्वसमाननाम्ना चित्राङ्गदेन युद्धे हतः यस्यां वासव्याम ॥ २१ ॥

वेदा गुप्ता रक्षिता येन सः इदं श्रीमद्भागवतं अध्यगाम अधीतवानस्मि श्रीमद्भागवतस्य सर्वोत्तमत्वं दर्शयन् तदेवाह—स्वशिष्यान् पैलादीन् ऋग्वेदाद्याचार्यानपि हित्वा यतः परः सर्ववेदेतिहासादिसारत्वात्सर्वशास्त्रेभ्य उत्कृष्टम् एव गुह्यं मह्यं जगौ उपदिदेशेत्यर्थः ॥ २२—२४ ॥

---

भाषा टीका।

अब उनने वेद की निंदा की तब शांतनु के राज्य में देव ने वर्षा करी और देवापि योग सिद्ध होकर कलाप ग्राम में स्थित हैं ॥ १७ ॥

कलियुग के नष्ट होने पर कृत युग के आदि में चन्द्र-

चित्रेऽप्रजेस्य वै भ्रातुर्मात्रोक्तो बादरायणः ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥
गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ! ।
तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥
शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥
नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते ऽपितरोऽभवन् ॥ २८ ॥
युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥
सहदेवसुतो राजन् ! श्रुतकर्मा तथाऽपरे ।
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥
भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः ।
सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥
करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ।
इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ।
(१)मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥

भाषा टीका ।

वंश की स्थापना करेंगे बाल्हीक से सोमदत्त पुत्र हुए उनसे भूरि, भूरिश्रवा, ॥ १८ ॥

और शल, ये तीन पुत्र हुए । शंतनु से गंगा में बडे प्रतापी ज्ञानी भीष्म उत्पन्न हुए, सर्वधर्मों के जानने वालों में श्रेष्ठ और महा भगवद्भक्त विद्वान् कवि हुए ॥ १९ ॥

वीरों के यूथों में अग्रगण्य हुए जिन भीष्म ने परशुराम को भी युद्ध मे संतुष्ट कर दिया, शंतनु से दाश कन्या में (उपरिचरवसु के वीर्य से मत्स्यी के गर्भ से उत्पन्न हुई कैवर्तों ने पाली इससे दाश कन्या ऐसी प्रसिद्ध हुई ) तिस सत्यवती में चित्रांगद नाम से पुत्र उत्पन्न हुए ॥ २० ॥

विचित्र वीर्य छोटे पुत्र हुए चित्रांगद को चित्रांगद-गन्धर्व ने युद्ध मे मारडाला, यह वही सत्यवती है, कि--जिसमें पराशर से साक्षात् श्री हरि के कला व्यासजी उत्पन्न हुए ॥ २१ ॥

श्री शुकदेवजी कहनेलगे, कि--उन का वेदगुप्त और कृष्णमुनि ये भी नाम हुआ, जिन से मैं यह श्रीमद्भागवत पढाहूं । वैशम्पायनादिक सब शिष्यों को छोडकर हमारे पिता भगवान बादरायण ने ॥ २२ ॥

हमें शान्त पुत्र देखकर यह अति गोपनीय श्रीमद्भागवत हमें पढाई । विचित्र वीर्य ने काशिराज के दो पुत्रियों से विवाह किया ॥ २३ ॥

अम्बिका और अम्बालिका दोनों स्त्रियों को स्वयम्वर से बलात्कार भीष्म सब वीरों को जीतकर ले आये, उन दोनों में आसक्त हृदय होने से क्षय रोग से पीडित होकर चित्रांगद मरगया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मात्रा सत्यवत्योक्त इति निषेधाभावमाह "अपतिरपत्यलिप्सु-र्देवराद्गुरुप्रयुक्ता न तु ऋतुमतीयात्" इत्यादिवचनात् ॥ २५ ॥

दुःशला नाम कन्या च यते ॥ २६ ॥

अरण्ये मृगशापान्मैथुनेन रुद्धस्य प्रतिबद्धस्य ॥ २७ ॥

नासत्यदस्राभ्यामश्विनीकुमाराभ्याम् पञ्चभ्यो युधिष्ठिरादिभ्यः पञ्चाऽभवन् ॥ २८ ॥ २९ ॥

तथाऽपरे भार्यान्तरेषु ॥ ३० ॥

काली नाम्या भीमस्य भार्या तस्यां ततो भीमसेनात्सर्वगतोनाम पुत्रोऽभवदित्यर्थः ॥ ३१ ॥

(१) मणलूरपतेः इति वीर०

श्रीधरस्वामिकृतभावार्थदीपिका।

उलूप्यां नागकन्यायाम् मणिपूरपतेः सुतायां पुत्रिकाधर्मेण दत्तायां, बभ्रुवाहनमसूत अतस्तत्पुत्रः सन्नपि स पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२-३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततो मात्रा सत्यवत्या उक्त आदिष्टो भगवान् बादरायणः अग्रजस्याऽपुत्रस्य भ्रातुर्विचित्रवीर्यस्य क्षेत्रे अम्बिकाम्बालिका रूपे कलत्रद्वये तद्दास्यां च धृतराष्ट्रं ज्येष्ठं तस्य कनीयांसं पाण्डुं विदुरं चाजीजनत् जनयामास तत्राम्बिकायां धृतराष्ट्रम् अम्बालिकायां पाण्डुं दास्यां तु विदुरमिति विवेकः ॥ २५ ॥

तत्र धृतराष्ट्रस्य गान्धार्यां पुत्रशतं जज्ञे। हे नृप! तेषां शतसङ्ख्याकानां धार्तराष्ट्राणां दुर्योधनो ज्येष्ठः दुःशला नाम कन्या च धृतराष्ट्राद्गान्धार्यां जज्ञे इत्यर्थः ॥ २६ ॥

अरण्ये मृगरूपिणोरमाणयोः ऋष्योः शापाद्धेतोर्मैथुने कर्मणि प्रतिरुद्धस्य पाण्डोर्भार्यायां कुन्त्यां धर्मानिलेन्द्रेभ्यो युधिष्ठिरः मुखमादिर्येषां ते युधिष्ठिरभीमार्जुनास्त्रयो जाताः ॥ २७ ॥

तथाऽन्यस्यां पाण्डोर्भार्यायां माद्र्यां नासत्यदस्रयोरश्विनोः सकाशात् नकुलः सहदेवश्चेति द्वौ सुतौ जातौ. पञ्चभ्यो युधिष्ठिरादिभ्यो द्रौपद्याख्यभार्यायां पञ्च पुत्रा अभवन् ते च अपितरः न कथञ्चित्पितरः अपुत्रा एव सन्तो द्रौणिना हता इत्यर्थः ॥ २८ ॥

अथ युधिष्ठिरात्प्रातिविन्ध्यभार्यायां प्रतिविन्ध्यो जातः वृकोदरात् भीमात् श्रुतसेनः अर्जुनात्तु श्रुतकीर्तिः नाकुलिः नकुलसुतस्तु शतानीकः ॥ २९ ॥

हे राजन्! सहदेवसुतः श्रुतकर्मा तथा अपरे च भार्यान्तरे युधिष्ठिरादिभ्यो जाता इत्यर्थः। तानेव दर्शयति; युधिष्ठिरात्तु पौरव्यां देवको जातः भीमसेनात्तु हिडिम्बायां घटोत्कचो जातः काली चान्या भीमस्य भार्या तस्यां ततो भीमात् सर्वगतो नाम पुत्रोऽभवत्। पार्वती पर्वतस्य पुत्री विजया नाम सहदेवात् सुहोत्रमसूत ॥ ३० ॥ ३१ ॥

नकुलः करेणुमत्यां नरमित्रं जनयामास निरमित्रमिति पाठान्तरम् तथा ऽर्जुनोऽपि इरावत्यामिरावन्तं मणिपूरपतेः सुतायामुलूप्याम् चः

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" ॥—

इत्युक्तविश्वासावहनरूपपुत्रिकाधर्मेण दत्तायां बभ्रुवाहनं चासूत अतस्तत्पुत्रोऽर्जुनपुत्रस्सन्नपि स बभ्रुवाहनस्तु पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मुनिशापान्मैथुनरुद्धस्य मैथुने मरणाख्यशापविघ्नवतः ॥ २७ ॥

पञ्च पुत्राः पूर्वजन्मनि पितरः ॥ २८ ॥

विविच्याह-युधिष्ठिरादिति। नाकुलिर्नकुलपुत्रः ॥ २९-३० ॥

शार्वगतं सर्वगतम् ॥ ३१ ॥

मणिपूरपतेः सुतायां मापि बभ्रुवाहनोऽपि पुत्रिकासुतः तस्य मणिपूरपतेः पुत्रोऽभूदिति शेषः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अग्रजस्य विचित्रवीर्यस्य मात्रा सत्यवत्या उक्त इति "अपत्यं निरपत्यायां द्वितीयं देवरात्स्यात् नियुक्तायां तु ऋतुमतीयायां" इति वचनबलात् ॥ २५—२६ ॥

अरण्ये मृगशापान्मैथुने रुद्धस्य नासत्यदस्राभ्याम् अश्विभ्याम् ॥ २७—३० ॥

काली चान्या भीमस्य भार्या तस्यां सर्वगतः, पार्वती पर्वतकन्या ॥ ३१ ॥

उलूप्यां नागकन्यायां मणिपूरपतेः सुतायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनमसूत अतस्तत्पुत्रस्सन्नपि पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२—३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मात्रा वासव्या ॥ २५ ॥

दुःशला कन्यका च जज्ञे अपि शब्दात् वैश्यायां युयुत्सुर्जज्ञे इति ज्ञेयम् ॥ २६ ॥

अरण्ये मृगरूपब्राह्मणीब्राह्मणयोः रममाणयोर्मध्ये शरेण ब्राह्मणं हतवतः पाण्डोः एवं मैथुने तवापि मृत्युर्भविष्यतीति ब्राह्मणीशापात् मैथुने रुद्धस्येत्यर्थः ॥ २७ ॥ २८ ॥

तथा ऽपरे भार्यान्तरेषु च जाता इति शेषः। तानेवाह, युधिष्ठिरादित्यादिना ॥ २९—३० ॥

काल्यां ततो भीमादेव सर्वगतः पुत्रोऽभूत् ॥ ३१ ॥

नकुलः करेणुमत्यां निरमित्रं जनयामास उलूप्यां नागकन्यायां इरावन्तम् अर्जुनो जनयामास "अभ्रातृकां प्रदास्यामि तुभ्य कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इति पुत्रिकाधर्मेण दत्तायां मणिपूरपतेः सुतायां चित्राङ्गदायां बभ्रुवाहनं च अर्जुनो जनयामास अतस्तत्पुत्रस्सन्नपि सः, पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२ ॥ ३६ ॥

---

भाषाटीका।

संतान रहित चित्रांगद के मरने पर माता सत्यवती ने उनके भाई बादरायण से संतान वृद्धि के लिये जब कहा तब धृतराष्ट्र वा पांडु और माता के नियोग से दृष्टि मात्र से उत्पन्न किये ॥ २५ ॥

धृतराष्ट्र से गांधारी से सौ पुत्र उत्पन्न हुए, हे राजन्! उन सब पुत्रों में ज्येष्ठ दुर्योधन हुआ और दुःशला एक पुत्री उत्पन्न हुई ॥ २६ ॥

यहां ऐसी कथा है कि वन में मृगा मृगी दोनों के मैथुन के समय पांडु ने उन दोनों में एक को मार डाला तब मृग ने शाप दिया कि तुम मैथुन करोगे तो मरजाओगे इस कारण

तव तातः सुभद्रायामभिमन्युरजायत ।
सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥
परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ।
त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥ ३४ ॥
तवेमे तनयास्तात ! जनमेजयपूर्वकाः ।
श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥
जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ।
सर्पान्वै सर्पयागाग्नौ स होष्यति रुषान्वितः ॥ ३६ ॥
कावषेयं पुरोधाय तुरं तुरगमेधयाट् ।
समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥
तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन् ।
अस्त्रज्ञानं (१)क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥
सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ।
असीमकृष्णस्तस्यापि(२) निमिचक्रस्तु तत्सुतः ॥ ३९ ॥
गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ।
उक्तस्ततश्चित्ररथस्तस्मा(३)त्कविरथः सुतः ॥ ४० ॥

भाषा टीका ।

पांडु महाराज मैथुन से रुक गये तब कुंती ने धर्म, वायु, और इन्द्र के तेज से तीन पुत्र बड़े बड़े महारथी उत्पन्न किये ॥२७॥

नकुल सहदेव माद्री में अश्विनी कुमार से दो पुत्र उत्पन्न हुए । और हे राजन् ! द्रौपदी में पांच पतियों से पांच पुत्र तुम्हारे पितृ लोग उत्पन्न हुये ॥ २८ ॥

युधिष्ठिर से प्रतिविंध्य भीम से श्रुतसेन अर्जुन से श्रुतकीर्ति और नकुल से शतानीक ॥ २९ ॥

सहदेव के श्रुतकर्मा अन्य भार्याओं से और भी पुत्र हुए युधिष्ठिर से पौरवी भार्या में देवक पुत्र हुआ भीमसेन से हेडम्बा में घटोत्कच हुआ और अन्य भार्या काली में सर्वगत पुत्र उत्पन्न भया सहदेव से विजया में सुहोत्र पुत्र उत्पन्न भया ॥ ३०—३१ ॥

और नकुल से करेणु मति में निरमित्र पुत्र भया अर्जुन से नाग कन्या उलूपी में इरावंत पुत्र उत्पन्न हुआ मणिपूरपति की सुता चित्रांगदा पुत्रिका धर्म से दी गई उसमें अर्जुन से बभ्रुवाहन पुत्र उत्पन्न हुआ इससे पुत्रिका सुत भया अर्थात् नाना का पुत्र हुआ ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तुरमंधं पुरोहितं कृत्वा ॥ ३७ ॥

भविष्यानाह—तस्य पुत्र इति यावत्समाप्ति । याज्ञवल्क्यात् क्रियाज्ञानं परं चात्मानं शौनकात्प्राप्स्यत्यस्त्रज्ञानं च कृपाचार्यादिति प्रकृतम याज्ञवल्क्यात्त्रयीमधीत्य कृपादस्त्राण्यवाप्स्यतीति मैत्रेयोक्तेः । कश्चित्तु अस्त्रज्ञानं कृपाचार्यादित्येव पाठः ॥ ३८—४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तव परीक्षितः तातः पिता अभिमन्युरर्जुनात्सुभद्राया-मजायतेति राजानं प्रति शुकोक्तिवाक्यशेषयुक्तया, अभिमन्युं विशिनष्टि सर्वातिरथान् जितवानिति तथा वीरः ततः अभि-मन्योरुत्तरायां भवान् त्वं जातोऽसि ॥ ३३ ॥

कुरुषु दुर्योधनादिषु निहतेषु सत्सु कुरुकस्य द्रौणेरश्वत्थाम्नो ब्रह्मास्त्रतेजसा तत्प्रयुक्तब्रह्मास्त्रतेजसा दग्धोऽसीति शेषः । त्वं कृष्णस्य भगवतोऽनुभावेन सजीवः सप्राणोऽन्तकान्मृत्योर्मोचि-तोऽसि ॥ ३४ ॥

हे तात राजन् ! तव तनयास्तु इमे जनमेजयः पूर्वो ज्येष्ठो येषां ते श्रुतसेनो भीमसेनो उग्रसेनश्चेति चत्वारः ॥३५॥

(१) परं ज्ञानम् इति वीर० । (२) निमिचक्रः इति च० । (३) शुचिरथ इति वीर० विजि० ।

तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ।
सुनीथस्तस्य भविता नृचक्षुर्यत्सुखी नलः ॥ ४१ ॥
परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ।
नृपञ्जयस्ततो (१) दूर्वस्तिमिस्तस्माज्जनिष्यति ॥ ४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्र जनमेजयादीनां भाविनं वृत्तान्तं वंशञ्चाह—जनमेजय-इत्यत्यादिना चाध्यायसमाप्ति । त्वां तक्षकाद्निधनं प्राप्तं विदित्वा स त्वत्पुत्रो जनमेजयः रुषा क्रुद्धः सर्पयागसम्बन्धिनि अग्नौ सर्पान् होष्यति ॥ ३६ ॥

किङ्कृत्वा ? कावषेयन्तुरन्तुरसंज्ञं पुरोधाय पुरोहितं कृत्वा तु तया तुरगमेधैरश्वमेधैः यक्ष्यतीति तथा भविता, कथं यष्टा ? इत्याह—सर्वतः पृथिवीं सर्वान् नृपान् जित्वा ऽश्वमेधैर्यक्ष्यति ॥ ३७ ॥

तस्य जनमेजयस्य पुत्रः शतानीको भविता स च याज्ञवल्क्यात् त्रयीं वेदान् पठन् अधीयानः कृपात् कृपाचार्यात् अस्त्रज्ञानं शौनकात्तु परं ज्ञानम् आत्मपरमात्मज्ञानम् एष्यति प्राप्स्यति क्रियाज्ञानमितिपाठे शौनकादस्त्रज्ञानादित्रयं लप्स्यत इत्यर्थः । तत्र क्रियाज्ञानं, यज्ञादिकर्मानुष्ठानोपयुक्तं ज्ञानम् ॥ ३८ ॥

तत्पुत्रः शतानीकपुत्रः सहस्रानीकः तस्मात् अश्वमेधजः तस्याप्यश्वमेधजस्यापि असीमकृष्णो भविता तत्सुतः असीमकृष्णसुतः निम्नकुः ॥ ३९ ॥

तस्य तत्रामि निमित्तमाह—गजाह्वये हस्तिनापुरे नद्या गङ्गया हृते नाशिते सति ततो निम्नकुः कौशाम्ब्यां साधु यथा तथा वत्स्यति वासं करिष्यति ततो निम्नकोरुक्तः तत उक्ताच्चित्ररथः तस्माच्छुचिरथः 'उक्तस्ततो रथस्तस्मात्तस्माच्चित्ररथः सुतः' इति पाठान्तरम् ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव तातः तव पिता ॥ ३३—३५ ॥

निधनं तक्षकाद्वधं सर्पयागाविषयाग्नौ होष्यति होमङ्करिष्यति ॥ ३६ ॥

तुरगमेधया अश्वमेधया अश्वमेधयज्ञेन ॥ ३७ ॥

परं पूर्णम् ॥ ३८—३९ ॥

कौशाम्ब्यां पुर्यां वत्स्यति वासं करिष्यति ॥ ४०—४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तुरं तुरसंज्ञम् ॥ ३७—४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कावषेयं तुरं तुरसंज्ञं पुरोधाय पुरोहितं कृत्वा ॥ ३७ ॥

तस्य जनमेजयस्य पुत्रः शतानीको भविष्यति स च याज्ञवल्क्यात्त्रयीं वेदत्रयीं पठन् कृपादस्त्रज्ञानं परं परब्रह्मज्ञानं शौनकाच्च एष्यति प्राप्स्यति ॥ ३८—४१ ॥

भाषा टीका ।

हे राजन् ! सबै अति रथियों को जीतने वाले वीर तुम्हारे पिता अभिमन्यु सुभद्रा से उत्पन्न भये तिन से उत्तरा के गर्भ में तुम उत्पन्न भये ॥ ३३ ॥

सब कुरुवंशियों के क्षय होने पर अश्वत्थामा के ब्रह्मास्त्र के तेज से तुम भी दग्ध होगये परन्तु श्रीकृष्ण भगवान की कृपा वा महिमा से उस काल दंड से तुमारा प्राण बचा ॥३४॥

हेतात ! जनमेजयादिक श्रुतसेन भीमसेन उग्रसेन पराक्रमी ये सब तुमारे पुत्र हैं ॥ ३५ ॥

तुमको तक्षक से मृत्यु प्राप्त सुनकर जनमेजय क्रोधित होकर सर्पयाग से सबसर्पों को अग्नि में जरावेंगे ॥ ३६ ॥

कावषेय तुर नाम के ऋषि को पुरोधा ( पुरोहित ) बनाकर अश्वमेध यज्ञ करके सम्पूर्ण पृथिवी को जीतकर यज्ञों से परमात्मा को यजन करेंगे ॥ ३७ ॥

उनके पुत्र शतानीक याज्ञवल्क्य ऋषि से वेदत्रयी को पढ कर क्रिया ज्ञान, और कृपाचार्य से अस्त्रज्ञान, और शौनक से आत्म ज्ञान प्राप्त करेंगे ॥ ३८ ॥

शतानीक के पुत्र सहस्रानीक उनसे अश्वमेधज और उनके असीमकृष्ण पुत्र होगा असीमकृष्ण के पुत्र निमिचक्र होगा ॥ ३९ ॥

हस्तिनापुर को नदी जब डुबो देगी तब कौशाम्बी में जाकर बसेगा उससे चित्ररथ और चित्ररथ के कविरथ पुत्र होगा ॥४०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यस्मात्सुखीनलः पुत्रः ॥ ४१ ॥

तस्मात्परिप्लवात्सुनयस्तस्यात्मजो मेधावीत्यर्थः ॥ ४२ ॥

तस्मात्सुदासस्ततः शतानीक इत्यर्थः ॥ ४३-४५ ॥

(१) दूर्वो निमिस्तस्मात् इति वीर०

तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ।
शतानीकाद्दुर्दमनस्तस्यापत्यं बहीनरः ॥ ४३ ॥
दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ।
ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।
अथ मागधराजानो भवितारो वदामि ते ॥ ४५ ॥
भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ।
ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बृहद्रथस्य जरासन्धस्तस्य सहदेवस्तस्य मार्जारिः यस्मात् मार्जारेः श्रुतश्रवाः ॥ ४६–४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माच्चित्ररथात् दृष्टिमान् तस्मात् दृष्टिमतः सुषेणो महीपतिः सुतो भविता तस्य सुषेणस्य सुनीथो भविता तस्य च नृचक्षुः यत् यस्मान्नृचक्षोः सुखीनलो भविता ॥ ४१ ॥

स च पारिप्लवः सुतो यस्य तथाभूतः तस्मात्पारिप्लवात् मेधावी स च सुनय आत्मजो यस्य तथाभूतः । यद्वा, पारिप्लवात्सुनयः तस्यात्मजो मेधावीत्यर्थः । तस्मान्नृपञ्जयः तस्माच्च दूर्वस्ततश्च तिमिर्जनिष्यति ॥ ४२ ॥

तिमेर्बृहद्रथः तस्मात् बृहद्रथात् शतानीकः सुदासजः बृहद्रथात्सुदासस्तस्मात् शतानीको जनिष्यत इत्यर्थः । शतानीकात् दुर्दमनस्तस्य दुर्दमनस्यापत्यं पुत्रस्तु बिहीनरः ॥ ४३ ॥

तस्य दण्डपाणिस्तस्य तु निमिः तस्य निमेः क्षेमको नृपो भविता तदेवं ब्रह्मक्षत्रस्य ब्रह्मक्षत्रकुलयोर्योनिः कारणभूतो वंशः सोमवंशः देवैः ऋषिभिश्च सत्कृतः अनुगृहीतः ॥ ४४ ॥

कलौ युगे क्षेमकं राजानं प्राप्य क्षेमकपर्यन्तमनुप्रवृत्त इत्यर्थः ततः संस्थां समाप्तिं प्राप्स्यति अजमीढपौत्रस्य संवरणस्य सुतः कुरुः तस्य परीक्षिदादयः चत्वारः तत्र परीक्षिदनपत्य उक्तः सुधनुर्जह्नुर्वंशावुक्तौ निषधस्त्वनुक्त एव तत्रैव सुधनुर्वंश्यस्य बृहद्रथस्यैको वंशो जगुरन्त उक्तः अन्यस्तु श्रुतश्रवपर्यन्तः इदानीं श्रुतश्रवः पितामहात् सहदेवात् मगधाधिपतेर्भविष्यतो वंशान् वक्तुं प्रतिजानीते–अथेति । मगधराजानः मगधदेशाधिपतीन् भाविनस्ते तुभ्यं वदामि ॥ ४५ ॥

सहदेवस्य जरासन्धसुतस्य मार्जालेयः भविता भविष्यति ततो मार्जालेयाच्छ्रुतश्रवाः ततः श्रुतश्रवसः अयुतायुस्तस्यापि निरमित्रः तत्सुतः निरमित्रसुतः सुनक्षत्रः ततः सुनक्षत्रात्तु बृहत्सेनो भविता अथ बृहत्सेनात्कर्मजित् ततः कर्मजितः श्रुतञ्जयः तस्य शुचिर्नाम विप्रो भविष्यति ॥ ४६—४७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संस्थामवसानम् ॥ ४५—४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृचक्षुर्यत्सुखीबल इति । नृचक्षुस्तस्यापि सुखीबलः ततः परिप्लवः तस्माच्च सुनयः तस्यापि मेधावीति विष्णुपुराणगद्यम् ॥ ४१—४३ ॥

देवर्षिसत्कृत इति देवैः ऋषिभिश्च सत्कृतः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यद्यतः सुखीनलनामा ॥ ४१ ॥

तस्मात् परिप्लवः तस्य सुनयः तस्यात्मजो मेधावीत्यर्थः ॥ ४२ ॥

तस्मात्सुदासः ततः शतानीक इत्यर्थः ॥ ४३ ॥

देवैर्ऋषिभिश्च सत्कृतः ॥ ४४ ॥ ४५ ॥

सहदेवस्य जरासन्धपुत्रस्य ॥ ४६—४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मात्पारिप्लवात्सुनयात्मजः सुनयपुत्रद्वारा जातो मेधावी पौत्रः ॥ ४२ ॥

तस्माद्बृहद्रथात् सुदासजः सुदासात् पुत्राज्जातः शतानीकः पौत्रः ॥ ४३ ॥ ४४ ॥

अथ भविष्यान् मगधाधिपान् वक्तुं प्रतिजानीते—अथेति ॥ ४५ ॥

बृहद्रथस्य जरासन्धस्तस्य सहदेवस्तस्य मार्जारिः यस्मान्मार्जारेः श्रुतश्रवाः ॥ ४६—४८ ॥

सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित् ।
ततः सुतञ्जयाद्विप्रः शुचिस्तस्य भविष्यति ॥ ४७ ॥
क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः शमस्ततः ।
द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ४८ ॥
सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुञ्जयः ।
बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
पारमहंस्यां संहितायां वैयासिक्याम् शान्तनुवंशकीर्तनं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

भाषा टीका ।

कर्मजित् के पुत्र द्युमिमान् उनके सुषेण पृथ्वी के पति होंगे उनके पुत्र सुनीथ उनसे नृचक्षु तिनसे सुखीनल पुत्र होंगे ॥ ४१ ॥

और सुखीनल के परिप्लव उनसे सुनय उनसे मेधावी पुत्र होंगे उनसे नृपंजय, तिनसे दूर्व, और दूर्व से तिमि राजा पुत्र होंगे ॥ ४२ ॥

तिमि के बृहद्रथ, तिनके सुदास, तिनके शतानीक, शतानीक से दुर्दमन तिनसे वहीनर पुत्र उत्पन्न होगा ॥ ४३ ॥

दण्डपाणि दंडधारी निमि पुत्र होगा उससे क्षेमक राजा होंगे। हे राजन्! देवता ऋषियों से सत्कृत ब्राह्मण क्षत्रिय दोनों का वंश मैंने तुमसे कहा ॥ ४४ ॥

कलि में क्षेमक राजा तक यह वंश चलेगा पीछे नष्ट होजायगा। हे राजन्! अब मगध देश के राजाओंकी सन्तति में तुमसे कहता हूं सो सुनो ॥ ४५ ॥

सहदेव के मार्जारि पुत्र होगा तिससे श्रुतश्रवा और श्रुतश्रवा का अयुतायु तिससे निरमित्र पुत्र होगा ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सहस्रसम्वत्सरमेते भाव्या भूपालास्ततःपरं भाव्यान् द्वादशस्कन्धे वक्ष्यति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य शुचेः क्षेमो नाम राजन्यः अथ क्षेमात्सुव्रतः तस्मात् सुव्रताद्धर्मनेत्रः श्रुतः प्रख्यातः ततो धर्मनेत्राद् दृढसेनः अथ दृढसेनात्सुमतिस्ततस्सुमतेः सुबलो जनिता जनिष्यतेः॥ ४८ ॥ ततः सुनीथः अथ सुनीथात् सत्यजित् तस्माद्विश्वजित् तस्माच्च पुरञ्जयः त एते सर्वे बार्हद्रथाः बृहद्रथवंश्याः सहस्रवत्सरान्त भाव्या भाविनः ततः पश्चाद्बार्हद्रथो वंशः संस्थामेष्यतीति भावः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्यस्माद्रिपुञ्जयो भविता ॥ ४९ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥
( विजयध्वजरीत्या एकोऽनविंशः )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जरासन्धात्सहस्रवत्सरपर्य्यन्तं भविष्यन्तः ततः परन्तु भाव्यान् द्वादशस्कन्धे वक्ष्यति ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्याम् भक्तचेतसाम् ।
द्वाविंशो नवमस्यायं सङ्गतः सङ्गतः सताम् ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सहस्रवत्सरमेते बार्हद्रथाः भूपाला भाव्यास्ततःपरं भावि-
न् द्वादशे स्कन्धे वक्ष्यति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

भाषाटीका ।

उससे सुनक्षत्र, तिससे बृहत्सेन, और बृहत्सेन के कर्मजित, तिससे श्रुतंजय, तिससे विप्र, तिसका पुत्र शुचि होगा ॥ ४७ ॥

तिससे क्षेम, उससे सुव्रत, तिसके धर्मसूत्र, तिससे शम तिससे द्युमत्सेन, तिससे सुमति, और सुमति का सुबल पुत्र होगा ॥ ४८ ॥

उससे सुनीथ, तिससे सत्यजित, तिससे विश्वजित, उसके रिपुञ्जय पुत्र होगा । हे राजन् ! बृहद्रथ के वंश में इतने राजा हजार वर्ष तक कलि में होंगे ॥ ४९ ॥

इति श्रीमद्भागवत नवम स्कन्ध में द्वाविंश अध्याय की
श्रीवृन्दावनस्थ पं० भगवताचार्यकृत
भाषा टीका समाप्ता ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## ॥ त्रयोविंशोऽध्यायः ॥

—o:o:o—

श्रीशुक उवाच ।

अनोः सभानरश्चक्षुः परोक्षश्च सुतास्त्रयः ।
सभानरात्कालनरः सृञ्जयस्तत्सुतस्ततः ॥ १ ॥
जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ।
उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥
शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ।
वृषादर्भः सुवीरश्च मद्रः कैकेय आत्मजाः ॥ ३ ॥
शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ।
ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥
अङ्गवङ्गकलिङ्गाद्याः सिंहपुण्ड्रान्ध्रसंज्ञिताः ।
जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥
चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकांश्च ते ।
खनपानोऽङ्गतो जज्ञे तस्माद्दिविरथस्ततः ॥ ६ ॥
सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ।
रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥ ७ ॥
शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग उवाह ताम् ।
देवे वर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे स्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ।
यदोश्च वंशोऽनुक्रान्तो यावज्ज्यामघसम्भवः ॥ १ ॥

तदेवं ययातेः पुत्राणां पञ्चमस्य पूरोर्वंशोऽनुक्रान्तः, इदानीं चतुर्थस्य वंशमनुक्रामति—अनोरिति कर्णस्य जगतीपतेरित्यन्तेन ॥ १ ॥

तस्य जनमेजयस्य महाशीलः महामनाः ॥ २ ॥
चत्वार उशीनरात्मजाः स्पष्टार्थः ॥ ३-१७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं ययातेः पुत्राणां पञ्चमस्य पुरोर्वंशोऽभ्यायसवेणानुक्रान्तः इदानीं चतुर्थस्य वंशमनुक्रामति—अनोरिति कर्णस्य जगतीपतेरित्यन्तेन । अनोर्ययातिपुत्रस्य चतुर्थस्य सभानरादयः त्रयः सुता जज्ञिरे तत्र सभानरात्कालनाभः तत्सुतः कालनाभसुतः सञ्जयस्ततः ॥ १ ॥

जनमेजयः तत्पुत्रो जनमेजयस्य पुत्रो महाशीलः तस्य महामनाः तस्य तु उशीनरस्तितिक्षुश्चेति द्वावात्मजौ ॥ २ ॥

तत्रोशीनरस्यात्मजाः शिबिप्रभृतयः चत्वारः तत्र शिबेः वृषदर्भादयः चत्वारः पुत्रात्मजा बभूवुः ॥ ३ ॥

तितिक्षोरुशीनरस्यानुजस्य तु रुशद्रथः ततो रुशद्रथाद्धेमः अथ हेमात्सुतपाः सुतपसस्तु बलिः ॥ ४ ॥

तस्य बलेः क्षेत्रे कलत्रे दीर्घतमसा हेतुना अङ्गादिसंज्ञकाः सिंहादिसंज्ञकाश्च महीक्षितो भूपा जज्ञिरे ॥ ५ ॥

तस्मादङ्गतः अङ्गात्खनपानो जज्ञे तस्माद्दिविरथः ॥ ६ ॥

नाटयसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः।
स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥ ९ ॥
प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः।
चतुरङ्गो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥ १० ॥
बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः।
आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्य सुतो धर्मरतो जज्ञे यस्य धर्मरतस्य चित्ररथो जातः स चाप्रजोऽनपत्यः स एव चित्ररथो रोमपाद इति ख्यातः प्रसिद्धः तस्मै रोमपादायाप्रजाय तस्य सखा दशरथः शान्तां नाम स्वस्य कन्यां प्रायच्छत् ददौ। तां च कन्यामृष्यशृङ्ग उवाह उपयेमे, कोऽसावृष्यशृङ्गः? इत्यपेक्षायां तं विशिनष्टि—यं हरिण्याः सुतं विभाण्डकात्तुत्पन्नं देवे पर्जन्ये न वर्षति सति वृष्ट्यर्थं रामा गणिकाः नाट्यादिभिरुपायैरानिन्युः स ऋष्यशृङ्ग इत्यर्थः ॥ ७ ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ययातिपुत्रस्यानोर्वंशं निधिनष्टि—अनोरिति ॥ १—४ ॥

अङ्गादयो बलेः पुत्राः अङ्गादिविषयसमाना इति ख्यायन्ते क्षेत्रे भार्यायां महीक्षित इत्यनेन ब्राह्मणाकुलं व्यावर्तयति ॥ ५ ॥

प्राच्यकान् प्राचीविषयान् इह भुवि खनपानो नाम ॥६॥७॥

अवर्षति सति यमृष्यशृङ्गं हरिण्यासुतमिति अनेन ऋष्यस्य सारङ्गस्य शृंगमिव शृङ्गं यस्य स तथा तमिति विग्रहं सूचयति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

१—१४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अनोर्द्रुह्योस्तुर्वसोश्च यदोर्वंशोऽपि कीर्त्यते।
ज्यामघान्तस्त्रयोविंशे कार्तवीर्योऽत्र कीर्तिमान् ॥

ययातेः पञ्चमस्य पुत्रस्य पूरोर्वंशमुक्त्वा चतुर्थादीनां पुत्राणां वंशमाह—अनोरिति ॥ १ ॥ २ ॥

चत्वार उशीनरात्मजाः ॥ ३ ॥ ४ ॥

बलेः क्षेत्रे भार्यायां दीर्घतमस उतथ्यपुत्रात्सकाशात् अङ्गादयो जज्ञिरे ॥ ५ ॥

विषयान् देशान् प्राच्यकान् भारतवर्षस्य पूर्वदिग्वर्त्तिनः ॥८॥९॥१०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं ययातेः पुत्रस्य पूरोर्वंश उक्तः अथानोर्द्रुह्योस्तुर्वसोश्च वंशं यदुवंशञ्च ज्यामघपर्यन्तमाह— अनोरिति त्रयोविंशेन ॥ १ ॥

तस्य जनमेजयस्तस्य महाशालः तस्य महामनाः ॥ २ ॥

चत्वार इत्यग्रगुण्य आर्षः ॥ ३—१९ ॥

---

भाषा टीका।

बाईस के अध्याय तक पांचवें पुत्र पूरु के वंश का वर्णन कर चुके, अब चौथे अनु के वंश का वर्णन करते हैं ॥ अनु के सभानर, चक्षु, परोक्ष, ये तीन पुत्र उत्पन्न हुए, सभानर से कालनर तिससे सृंजय ॥ १ ॥

तिनसे जनमेजय तिससे महाशाल तिनसे महामना पुत्र हुए महामना के उशीनर और तितिक्षु दो पुत्र हुए ॥ २ ॥

और शिबि, वन, शमि, दक्ष, ये चार पुत्र उशीनर के हुए वृषदर्भ, सुवीर, मद्र, ये कैकेय के पुत्र हुए ॥ ३ ॥

शिबि के चार पुत्र भये तितिक्षु से रुशद्रथ उत्पन्न हुए तिनसे हेम, उससे सुतपा और सुतपा के पुत्र बलि उत्पन्न भये ॥ ४ ॥

और बलि के क्षेत्र में दीर्घतम ने अंग, बंग, कलिंगादिक और सिंह पुंड्र अंध्र नाम वाले ये सब पुत्र उत्पन्न हुए ॥ ५ ॥

इन सब छवों राजाओं ने अपने अपने नाम से छवों देशों का नाम रखा, अंग के पुत्र खनपान हुए, तिन से दिविरथ भये ॥ ६ ॥

उनके पुत्र धर्मरथ तिनसे चित्ररथ पुत्र संतान रहित हुए इनका नाम रोमपाद भी प्रसिद्ध रहा, जिनके मित्र दशरथ महाराज हुए और शांता नामक अपनी कन्या को रोमपाद को पुत्री करके देते हुये उस शांता को ऋष्यशृंग ने बिवाही जब इनके राज्य में देव ने वृष्टि नहीं करी, तब दुर्भिक्ष के दुःख से हरिणी पुत्र ऋष्यशृंग को लाने के लिये वरांगनाओं से राजा ने कहा तब वे सब बन में जाकर इनको लुभाकर ले आईं ॥ ७—८ ॥

---

विजयस्तस्य सम्भूत्यां ततो धृतिरजायत ।
ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ १२ ॥
योऽसौ गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ।
कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत्सुतम् ॥ १३ ॥
वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः ।
द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ १४ ॥
आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः ।
धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम् ॥ १५ ॥
म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ।
तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं दशरथः स्वकन्यामदादित्यत्राह—सखेति । स तु दशरथः मरुत्वतः इष्टिं मरुत्वद्देवताकामिष्टिं निरूप्यानपत्यस्य राज्ञो रोमपादस्य सखिपादेतोः स्वां कन्यां शान्तां नामादात् येन दशरथदत्तेन शान्तारूपेणापत्येन अप्रजोऽपि रोमपादः प्रजां लेभे सुप्रजा बभूवेत्यर्थः । रोमपादात्तु चतुरङ्गः तत्सुतश्चतुरङ्ग-सुतः पृथुलाक्षः ॥ ९-१० ॥

तत्सुताः पृथुलाक्षसुताः बृहद्रथादयस्त्रयः तत्राद्यात् बृहद्रथात् बृहन्मनाः तस्मात् बृहन्मनसः जयद्रथ उदाहृतः ॥ ११ ॥

तस्य जयद्रथस्य संभूत्यां भार्यायां विजयः ततो विजयात् धृतिः अजायत ततो धृतेर्धृतव्रतः तस्य धृतव्रतस्य सत्य-कर्मा ततः सत्यकर्मणो रथः ॥ १२ ॥

तं विशिनष्टि—योऽसौ रथः कुन्त्या बाल्येऽभार्यया कानीनं कन्यावस्थायामेवास्याः जातमपविद्धं त्यक्तं मञ्जूषायां निक्षिप्येति शेषः । शिशुं मञ्जूषान्तर्गतं पेटिकायां स्थितं कर्णाख्यं गङ्गातटे क्रीडन् / अनपत्यस्सन् सुतमकरोत्स रथ इत्यर्थः ॥ १३ ॥

तस्य रथेन स्वीकृतस्य कर्णाख्यस्य जगतीपतेर्भूपालस्य सुतो वृषसेनः । अथ ययातेस्तृतीयस्य सुतस्य द्रुह्योर्वंशमनुक्रामति, द्रुह्योश्चेति द्वाभ्याम् । द्रुह्योर्बभ्रुः तस्य बभ्रोरात्मजः सेतुः ॥ १४ ॥

ततः सेतोरारब्धः तस्य तु गान्धारस्तस्य गान्धारस्य धर्मः सुतः ततो धर्मात् धृतो जज्ञे धृतस्य सुतो दुर्मनास्तस्माद्दुर्मनसः प्रचेताः जज्ञे प्रचेतसस्सुतास्तु शतं ते उदीचीं दिशमाश्रितास्सन्तो म्लेच्छानामधिपतयो बभूवुः । अथ ययातिसुतस्य द्वितीयस्यान्वय-मनुक्रामति—तुर्वसोरिति द्वाभ्याम् । तुर्वसोः सुतो वह्निः वह्नेस्तु भर्गः अथ भर्गाद्भानुमान् ॥ १५ ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरूप्य विधिवत्स्य मरुत्वतः इष्टिं इन्द्रविषयामिष्टिम् ॥ ९ ॥
येन इष्टिविशेषेण ॥ १०—१२ ॥
अपविद्धम् अज्ञातवद्विसृष्टं कानीनं कन्यायां जातम् ॥ १३ ॥
ययातिपुत्रस्य द्रुह्योर्वंशं निरूपयति—द्रुह्योश्चेति ॥ १४ ॥ १५ ॥
ययातिपुत्रस्य तुर्वसोर्वंशं कथयति—तुर्वसोरिति ॥ १६ ॥ १७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राचेत इत्यत्र प्रचेतस इति वा पाठः ॥ १५—२८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आद्याद् बृहद्रथात् ॥ ११—१२ ॥
अपविद्धं लज्जया त्यक्तम् ॥ १३ ॥
द्रुह्योर्ययातिपुत्रस्य ॥ १४—१५ ॥
तुर्वसोर्ययातिपुत्रस्य ॥ १६ ॥

भाषा टीका ।

नाट्य सुंदरगीत और अनेक प्रकार के बाजाओं को बजाकर भृकुटियों के चेष्टाओं से आलिंगन और पूजाओं से अनेक प्रकार के चेष्टाओं से वे सब लुभाकर लाई ऋष्यशृंग ने भी राजा को पुत्रवान् करने के लिये मरुतों की इष्टि करी ॥ ९ ॥

और इष्टि करके राजा दशरथ को संतान दीनी जिस से निपुत्री दशरथ संतान को प्राप्त हुए ॥ हां राजा रोम पाद से चतुरंग हुए तिनके पुत्र पृथुलाक्ष हुए ॥ १० ॥

पृथुलाक्ष के बृहद्रथ, बृहत्कर्मा, और बृहद्भानु ये पुत्र भये, बृहद्रथ के पुत्र बृहन्मना हुए, तिनसे जयद्रथ हुए, ॥ ११ ॥

त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ।
मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥
दुष्मन्तः स पुनर्भेजे स्वं वंशं राज्यकामुकः ।
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ! ॥ १८ ॥
वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ।
यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥
यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ।
यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः ॥ २० ॥
चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः ।
महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥
धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ।
सोहञ्जिरभवत्कुन्तेर्महिष्मान् भद्रसेनकः ॥ २२ ॥
दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ।
कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २३ ॥
अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।
दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः ॥ २४ ॥

### भाषा टीका ।

तिनके विजय हुए, तिनसे संभूति भार्या में धृति हुए, तिनसे धृतव्रत, तिनसे सत्कर्मा, तिनसे अधिरथ हुए ॥ १२ ॥

उन अधिरथ ने गंगा तट पर खेलने में एक संदूक के भीतर बालक पाया, जिसको कुंती ने कन्या पने में होने के कारण त्याग किया रहा। राजा अधिरथ के पुत्र न रहा इस से उसी को पुत्र स्वीकार कर लिया ॥ १३ ॥

वही कर्ण दानी हुए, उन राजा कर्ण के वृषसेन पुत्र हुए, ॥ द्रुह्यु के पुत्र बभ्रु हुए, और उनके पुत्र सेतु हुए ॥ १४ ॥

तिन से आरब्ध तिनके गांधार, तिनसे धर्म, तिनसे धृत हुए, धृत के दुर्मना, तिनके प्रचेता, प्रचेता के सौ पुत्र भये ॥१५॥

वे सब उत्तर दिशा में म्लेच्छों के राजा होते हुए । तुर्वसु के पुत्र वह्नि हुए, तिनके भर्ग हुए, तिनसे राजा भानुमान् पुत्र हुए,॥१६॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स दुष्यन्तः स्वं वंशं पौरवं वंशम् ॥ १८-२० ॥

प्रथमस्य सहस्रजित आत्मजः ॥ २१ ॥

कुन्तेः सोहञ्जिः सोहञ्जेर्महिष्मान् महिष्मतो भद्रसेनकः ॥२२॥

भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ कृतवीर्यस्य जनकः कृतवीर्यादयश्चत्वारो धनकस्यात्मजा इत्यर्थः २३—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्सुतो वह्निसुतः सुभानुः अस्यापि सुभानोरपि करन्धमः स च उदारा धीर्यस्य तथाभूतः तत्सुतः करन्धमसुतः मरुतः स चापुत्रस्सन् पौरवं पुरोर्वंशे जातं दुष्यन्तं पुत्रमन्वभूत् प्राप्तवान् तं स्वीकृतवान् इत्यर्थः ॥ १७ ॥

स च दुष्यन्तः राज्यकामुकस्सन् स्ववंशं जनकवंशमेव भेजेऽन्ववर्तत । अथ यदोर्वंशं वक्तुं प्रतिजानन् तत्र शुश्रूषामुत्पादयति–ययातेरिति द्वाभ्याम् । हे नरर्षभ ! ययातेर्यो ज्येष्ठः पुत्रस्तस्य यदोर्वंशं वर्णयामि अनुक्रमिष्यामि, कथम्भूतम् ? महापुण्यं वक्तॄणां श्रोतॄणाञ्च नृणां पुण्यावहं पापहरञ्च तस्य पापहरत्वमेव सहेतुकमुपपादयति, यदोर्वंशं श्रुत्वा नरः सर्वैः पापैः प्रमुच्यते निर्मुक्तो भवति यत्र यदोर्वंशे भगवान् षाड्गुण्यपूर्णः परमात्मा नरस्याकृतिरिवाऽऽकृतिराकारो यस्य तथाभूतोऽवतीर्णः श्रीकृष्णरूपेणेति भावः । यदोः सूनवः सुताः सहस्रजिदादयश्चत्वारः श्रुताः विश्रुताः ॥१८–२०॥

तत्र चतुर्णां मध्ये प्रथमात्मजः प्रथमस्य सहस्रजितः आत्मजः शतजित् तत्सुताः शतजित्सुताः महाहयादयः त्रयः तत्र हैहयस्य सुतो धर्मः ततो धर्मान्नेत्रो जज्ञे स च कुन्तेः पिता सोऽपि कुन्तिरिति प्रसिद्ध इति भावः । कुन्तेर्नेत्रापरनामधेयात् सोऽहञ्जिरभूत् ततो माहिष्मान् ततश्च भद्रसेनकः ॥ २१ ॥ २२ ॥

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २५ ॥
पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ।
अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २६ ॥
तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ।
जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भद्रसेनकस्य तु दुर्मदो धनकश्चेति द्वौ पुत्रौ, तत्र धनकः कृतवीर्यसूः कृतवीर्यं सुषुवे इति तथा कृतवीर्यस्य पितेत्यर्थः । न केवलं कृतवीर्यसूरेव, किन्तु कृताग्न्यादयोऽपि त्रयस्तदात्मजाः धनकस्यात्मजाः कृतवीर्यादयश्चत्वारो धनकस्यात्मजा इत्यर्थः । तत्र कृतवीर्यसुतोऽर्जुनः कार्तवीर्य इति प्रसिद्धः स च सप्तानां द्वीपानामीश्वरोऽधिपतिर्बभूव, तं विशिनष्टि—हरेरंशावतारात्रूपाद्दत्तात्रेयात्प्राप्तो योगः गुणा अणिमादयश्च येन सः ॥ २३—२४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सूचीकटाहन्यायेन द्रुह्यादीनां पुत्राणां वंशं कथयित्वा यदुस्थाद्विशेषपुण्यहेतुत्वाच्च ज्येष्ठपुत्रस्य यदोर्वंशं कथयति—ययातेरिति ॥ १८-२५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपुत्रः सन् एव पौरवं पूरुवंश्यं दुष्मन्तमेव पुत्रम् अन्वभूत् अमन्यत ॥ १७ ॥

स च दुष्मन्तःस्ववंशं पौरववंशमेव भेजे न तु तुर्वसुवंशं यतो राज्यकामुकः पुरुवंश्यानामेव नृपासनाधिकारात् ॥ १८-१९ ॥

नराकृतिर्नररूपो नरजातिर्वेत्याकृतिशब्दस्य स्वरूपवाचित्वे जातिवाचित्वे वा परमात्मनो नरत्वस्य न तादर्थ्यं किन्तु स्वरूपत्वमेवेति ज्ञापितम् "गूढं परमब्रह्म मनुष्यलिङ्गम्" इत्यनेन ज्ञापितम् अग्रेऽपि ज्ञापयिष्यते सोहञ्जिर्महिष्मान् महिष्मतो भद्रसेनकः ॥ २०—२२ ॥

भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ तत्र धनकः कृतवीर्यसूरिति धनकस्य कृतवीर्यः पुत्रः तथा कृताग्न्यादयश्चत्वार इति चत्वारः पुत्राः ॥ २३ ॥

ननु, ययातिशापात् स यदुवंशः कथं सप्तद्वीपेश्वरस्तत्राह, दत्तेति ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पौरवं पूरुवंश्यं दुष्यन्तं पुत्रमन्वभूत् स्वीकृतवान् स दुष्यन्तः राज्यकामुकः स्ववंशं पौरवं वंशं पुनर्भेजे ॥ १७—१९ ॥

प्रथमस्य सहस्रजितः आत्मजः ॥ २०—२१ ॥

कुन्तेः सोहञ्जिरभवत् सोहञ्जेर्महिष्मान् महिष्मतो भद्रसेनकः ॥ २२ ॥

भद्रसेनस्य दुर्मदो धनकश्चेति पुत्रद्वयम्, कथम्भूतो धनकः ? कृतवीर्यसूः कृतवीर्यं सुषुवे इति स तथा धनकस्य कृतवीर्यादयश्चत्वारः पुत्रा इत्यर्थः ॥ २३—२५ ॥

भाषा टीका ।

श्रीशुक उवाच

तिनके भी त्रिभानु हुए, त्रिभानु के भी करंधम बड़े उदार बुद्धि हुए, तिनके पुत्र मरुत हुए, वे मरुत निपुत्री हुए, और उन्होंने पुरुवंशी दुष्यंत को पुत्र मान लिया ॥ १७ ॥

राज्य की कामना वाले दुष्यंत ने मरुत का राज्य ग्रहण कर फिर भी अपने पुरुवंश में होगये ॥ हे नरश्रेष्ठ ! अब हम ययाति के ज्येष्ठ पुत्र यदु के बड़े पुण्य रूप वंश को वर्णन करते हैं । जो कि—मनुष्यों के सर्व पापों को दूर करने वाला है । यदु के वंश को मनुष्य सुनकर सर्व पापों से छूट जाता है ॥ १८-१९ ॥

क्योंकि—जिस वंशमें परात् पर परमात्मा साक्षात् भगवान् नराकृति हो अवतार लेते हुए । यदु के सहस्रजित्, क्रोष्टा, नल, रिपु, ये चार हुए ॥ २० ॥

तिन में सहस्रजित् के पुत्र शतजित् हुए, और शतजित के महाहय, वेणुहय, हैहय, ये तीन पुत्र हुए, ॥ २१ ॥

हैहय के पुत्र धर्म हुए, तिनके नेत्र, तिनके कुन्ति, तिन के सोहञ्जि, तिनके महिष्मान, तिनके भद्रसेनक, हुए ॥ २२ ॥

भद्रसेन के दो पुत्र हुए, दुर्मद और धनिक, धनक के कृतवीर्य, कृताग्नि, कृतवर्मा, और कृतौजा, ये चार आत्मज हुए ॥ २३ ॥

कृतवीर्य के पुत्र कार्तवीर्य अर्जुन सप्त द्वीपों के पति हुए, जिनने हरि के अंश श्रीदत्तात्रेय से महा योग रूप गुण प्राप्त किया ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य सः अक्षय्यं षड्वसु षडिन्द्रियविषयं बुभुजे ॥ २६ ॥ २७ ॥

जयध्वजात्तालजङ्घस्तस्य पुत्रशतं त्वभूत् ।
क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् ॥ २८ ॥
तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ।
तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं यतः कुलम् ॥ २९ ॥
माधवा वृष्णयो राजन् ! यादवाश्चेति संज्ञिताः ।
यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ ३० ॥
श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः ।
शशबिन्दुर्महायोगी महाभोजो महानभूत् ॥ ३१ ॥
चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ।
तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

और्वस्य तेजसा सगरेणोपसंहृतमित्यर्थः ॥ २८ ॥

तेषां तालजङ्घपुत्राणां ज्येष्ठः तस्य मधोः पुत्रशतम् वृष्णिज्येष्ठो यस्मिन् यतो मधोर्वृष्णेर्यदोश्च हेतोरिदं कुलम् ॥ २९–३१ ॥

चतुर्दशमहारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः तानि च मार्कण्डेयपुराणे वर्णितानि—

"गजवाजिरथस्त्रीषु निधिमाल्याम्बरद्रुमाः ।
शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" ॥ इति

दशानां पत्नीसहस्राणां भार्यायुतस्य प्रत्येकं लक्षं लक्षमेवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं बहुना सर्वे पार्थिवाः संभूयापि यज्ञादिभिः श्रुतादिभिश्च कार्तवीर्यस्य गतिं प्रकारं साम्यं नूनं ध्रुवं न यास्यन्ति किञ्चाऽव्याहतं बलं यस्य सोऽर्जुनः पञ्चाशीतिसहस्राणि समाः वर्षाणि राज्यमकरोत्, कथंभूतः ? हरिं दत्तात्रेयमनुस्मरन् किञ्च अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य तथा यस्य स्मरणान्नष्टमपि वित्तं पुनर्लभ्यते तथाभूत इत्यर्थः । अक्षय्यं षड्वर्गं षडिन्द्रियविषयसुखम् ॥ २५—२६ ॥

तस्य कार्तवीर्यस्य यत्पुत्राणां सहस्रं तस्य तत्र जयध्वजादयः पञ्चैवावशिष्टा मृधे युधि अवशेषिताः इतरे तु भार्गवरामेण हता इत्यर्थः । तत्र जयध्वजात्तालजङ्घः तस्य तालजङ्घस्य तु पुत्रशतमभूत् यच्छतसंख्याकं तालजङ्घाख्यं क्षत्रं क्षत्रियाः और्वस्य ऋषेस्तेजसोपबृंहितेन सगरेणेत्यर्थः । उपसंहृतं विनाशितम् ॥ २७ ॥ २८ ॥

तेषां तालजङ्घपुत्राणां ज्येष्ठो वीतिहोत्रस्तस्य सुतो मधुः स्मृतः प्रख्यातः मधोस्सुतस्तु वृष्णिः प्रख्यातः न केवलं वृष्णेरेवाऽपि तु वृष्णिर्ज्येष्ठो यस्मिन् तत्पुत्राणां शतं तस्य मधोः आसीदित्यर्थः । वृष्णिः पुत्रो मधोः स्मृतः इति पाठान्तरं तदा तेषां तालजङ्घपुत्राणां ज्येष्ठः सुतो वीतिहोत्रः तस्य तु मधुस्तस्य च वृष्णिरित्यन्वयः । इतरत्पूर्ववत् यतो मधोः कुलं माधवाख्यं यत्रकुलं प्रवृत्तं यस्य मधोर्वृष्णिज्येष्ठं शतमभूदित्यर्थः वृष्णिज्येष्ठमित्यनेन पुत्रशतस्यापि वृष्णवाख्यत्वमभिप्रेतं यदुवंशजत्वाद्यादवाख्यत्वञ्च ॥ २९ ॥

तदेवाह—माधवा इति । मधोः पुत्राः सर्वे माधवाः माधवनामानः मधोः प्रसूतत्वादिति भावः । वृष्णयः वृष्णिज्येष्ठत्वादिति भावः हे राजन् ! यादवाश्च यदुवंशजत्वादिति भावः । एवं यदोर्ज्येष्ठपुत्रस्य वंश उक्तः । अथ द्वितीयस्य वंशमनुक्रामति—यदुपुत्रस्येत्यादिना । यदुपुत्रस्य क्रोष्टोः पुत्रो वृजिनवान् ततः ॥ ३० ॥

वृजिनवतः श्वाहिः अतः श्वाहितात् उरुशङ्कुः अभिभूस्तत्कुशङ्कुर्वा इति पाठान्तरं तदा तस्मादभिभुवः कुशङ्कुरित्यर्थः । तस्य तु चित्ररथः तस्माच्चित्ररथात शशबिन्दुरभूत् तं विशिनष्टि, महायोगी महान् भोगो यस्य सः महान् गुणैरिति शेषः ॥ ३१ ॥

चतुर्दशमहारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः तानि च मार्कण्डेयपुराणे दर्शितानि—

"गजवाजिरथस्त्रीषु निधिमाल्याम्बरद्रुमाः ।
शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" इति.

चक्रवर्ती सप्तद्वीपाधिपतिः अपराजितः जयी तस्य शशबिन्दोः सम्बन्धिनां पत्नीसहस्राणां दशानां भार्यायुतस्येत्यर्थः तेषां प्रत्येकं लक्षलक्षमित्येवं तासु महायशाः शशबिन्दुः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनष्टम् अविच्छिन्नं विष्णुस्मरणं यस्य स तथा सन्ततविष्णुस्मरणोपेतः षडंश वसु षड्वसु षड्भ्यो गुणेभ्यो लब्धं षड्वसु तत् षड्गसु वा ॥ २१–२४ ॥

और्वमुनेः तेजसोपसंहृतम् ॥ २९–३५ ॥

दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ।
तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ ३३ ॥
धर्मो नामोशनास्तस्य हयमेधशतस्य याट् ।
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ॥ ३४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तेषामिति मार्कण्डेयम्। ते च माधवा इत्यादि संज्ञिता इत्यर्थः। ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

॥ २५ ॥

न नष्टं भवति वित्तं स्मरणाद्यस्य सः अक्षय्यं षट्सु षडिन्द्रियविषयं बुभुजे ॥ २६ ॥

मृधे परशुरामयुद्धे और्वस्य तेजसा सगरेणोपसंहृतमित्यर्थः ॥ २७-२८ ॥

तेषां तालजङ्घपुत्राणां ज्येष्ठः मधोरर्जुनपुत्रस्य तस्य मधोः पुत्रशतं वृष्णिज्येष्ठं यस्मिन् यतो मधोः वृष्णेर्यदोश्च हेतोरिदं कुलम्। माधवा इति यदुमधुवृष्णाय एते त्रयः कुलप्रवर्त्तकाः यदुवंशो मधुवंशो वृष्णिवंश इति प्रसिद्धेः ॥ ३० ॥ ३१ ॥

चतुर्दशमहारत्नानि गजाश्वादिश्रेष्ठानि यस्य सः तानि च

"गजवाजिरथस्त्रीषुनिधिमाल्याम्बरद्रुमाः ।
शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" ॥

इति मार्कण्डेयोक्तानि ज्ञेयानि ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अव्याहतं बलं यस्य पञ्चाशीतिसहस्राणि समाः वर्षाणि अक्षय्यं षट्सु अक्षयं षडिन्द्रियविषयं बुभुजे, कथम्भूतः? अनष्टं नष्टमपि पुनर्लब्धं वित्तं येन तथाविधं स्मरणं यस्य सः तथोक्तं "हैहयानां महाराजः कार्त्तवीर्येति विश्रुतः । यस्य स्मरणमात्रेण हृतं नष्टं च लभ्यते" ॥ २६—२७॥

और्वतेजोपसंहृतम् और्वतेजसा सगरेण विनाशितम् ॥ २८ ॥

तेषां तालजङ्घपुत्राणां ज्येष्ठो वीतिहोत्रः मधोः पुत्रो वृष्णिः स्मृतः तत् मधोः वृष्णिः ज्येष्ठो यस्मिन् , तत् पुत्रशतमासीत् अत्रेदं बोध्यं तालजङ्घसुतो भरतो भरतस्य वृषो वृषस्य मधुस्तस्य वृष्णिप्रमुखं पुत्रशतमित्यर्थः। तथाह भगवान् पराशरः तालजङ्घस्य तालजङ्घाख्यं पुत्रशतमासीत् येषां ज्येष्ठो वीतिहोत्रस्तथान्यो भरतो भरताद्वृषस्सुजातो मधुरभवत् तस्यापि वृष्णिप्रमुखं पुत्रशतमासीदिति यतो मधोर्वृष्णेर्यदोश्चेदं कुलम् ॥ २९-३०॥

महान् भोजो भोगो यस्य सः ॥ ३१॥

चतुर्दशमहारत्नानि गजाश्वादिश्रेष्ठानि यस्य सः तानि मार्कण्डेयपुराणे दर्शितानि-

"गजवाजिरथस्त्रीषु निधिमाल्याम्बरद्रुमाः।
शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" ॥ इति

तस्य शशबिन्दोः पत्नीसहस्राणां दशानां भार्यासुत्पत्स्यर्थः प्रत्येकं लक्षं लक्षमित्यत्र तासु महायशाः शशबिन्दुः पुत्राणां दशलक्षसहस्राण्यजीजनत् पृथुश्रवाः पृथुकीर्त्तिः पृथुयशाः इत्यादयः षट् प्रधानाः मुख्याः येषां षट्प्रधानानां मध्ये पृथुश्रवसः आत्मजः ॥३३॥

भाषा टीका।

अन्यराजा लोग यज्ञ, दान, तप, योग, श्रुत, वीर्य और जय, आदि गुणों से निश्चय कर कार्त्तवीर्य के महत्व को नहीं प्राप्त हो सकेंगे ॥ २५ ॥

क्योंकि-जिसने पचासी ( ८५ ) हजार वर्षों तक अव्याहत ( अनष्ट ) पौरुष और अनष्ट वित्त स्मरण वाला होकर अक्षय षट् इन्द्रियों के भोगों को भोगे ॥ २६ ॥

तिन के हजारहों पुत्रों में से संग्राम में पांच ही अवशिष्ट रहे, जयध्वज, शूरसेन, वृषभ, मधु, और उर्जित ॥ २७ ॥

जयध्वज से तालजंघ हुए, तिनके सौ पुत्र हुए, तालजंघ क्षत्रियकुल को सगर राजा ने अपने गुरू और्व ऋषि के तेज से नष्ट कर दिया ॥ २८ ॥

तिनके बिषै ज्येष्ठ वीतिहोत्र रहे, । और मधु के पुत्र वृष्णि हुए तिन मधु के सौ ( १०० ) पुत्र हुए तिनमें बड़े यही वृष्णि हुए, जिनों से यह कुल चला ॥ २९ ॥

हे राजन् ! मधु, वृष्णि, और यदु, से यह कुल बढ़ा इसी से इस कुल के राजा लोग माधव ( मधुवंशी ) वृष्णिवंशी, और यादव ( यदुवंशी ) ऐसे नाम से प्रसिद्ध हुए। और यदु के पुत्र क्रोष्टा के वृजिनवान् पुत्र हुए, ॥ ३० ॥

तिन से स्वाहि, तिन से रुशेकु, तिनके चित्ररथ, तिन से महायोगी शशबिन्दु हुए, तिनके महाभोज हुए ये बड़े प्रतापी हुए ॥ ३१ ॥

इन महाभोज के समीप चतुर्दश महारत्न रहे, और ये चक्रवर्ती हुए, । कोई भी इनको जीत नहीं सका रहा और इनके दश हजार रानियें रहीं ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पृथुश्रवाः मधुकीर्तिः पृथुयशा इत्यादयः षट् प्रधानाः श्रेष्ठा येषां तेषां मध्ये ॥ ३३ ॥

पञ्च आत्मजा आसन्नात् शृणु ॥ ३४ ॥

पुरुजिद्रुक्मरुक्मेषुपृथुज्या[1]मघसंज्ञिताः ।
ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ ३५ ॥
नाविन्दच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ।
रथस्थां तां निरीक्ष्याऽऽह शैब्या पतिममर्षिता ॥ ३६ ॥
केयं कुहक ! मत्स्थानं[2] रथमारोपितेति वै ।
स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥ ३७ ॥
अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ।
जनयिष्यसि यं राज्ञि ! तस्येयमुपयुज्यते ॥ ३८ ॥
अन्वमोदन्त तद्विश्वेदेवाः पितर एव च ।
शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् ।
स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां
संहितायां वैयासिक्यां नवमस्कन्धे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानेवाह—पुरुजिदिति । भार्याभयादेवैकभार्यस्य वन्ध्यापतेर्ज्यामघस्यापुत्रस्य तद्भयमेव पुत्रप्रदमभवदिति दर्शयन्नाह-ज्यामघस्त्विति ॥ ३५ ॥ ३६ ॥ ३७ ॥

यदि मे सपत्नी स्यात्तर्हि स्नुषेयं युज्येतापि न त्वेतदस्तीत्याह—असपत्नी चेति । प्रतिभयव्याकुल आह—जनयिष्यसीति ॥ ३८ ॥

भार्याभयप्रकम्पमानाखिलसर्वाङ्गस्य राज्ञः प्रायासक्लिष्टभावोक्त्यानुकम्पितास्तेन पूर्वं बहुकालमाराधिताश्च विश्वेदेवाः पितरश्च तद्वत्यन्वमोदन्त. ततश्च देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तगुणेन च निवृत्तरजस्काऽपि शैब्या गर्भमधात् तस्य च महिमा पराशरादिभिरुक्तः । यथोक्तम्—

"भार्यावश्यास्तु ये के चिद्भविष्यन्त्यथ वा मृताः ।
तेषां तु ज्यामघः श्रेष्ठः शैब्यापतिरभून्नृपः" ॥

इति ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुत्राणां दशायुतसहस्राणि जनयामास पृथुश्रवाः पृथुकीर्तिः पृथुयशा इत्यादयः षट् प्रधानाः श्रेष्ठाः येषां तेषां मध्ये यो धर्मो नाम तस्य धर्मस्य उशना सुतः स च हयमेधशतस्य याट् यष्टा तत्सुतः उशनस्सुतो रुचकस्तस्य पञ्चात्मजा आसन् तान् शृणु ॥ ३३ ॥ ३४ ॥

तानेवाह—पुरुजिच्च रुक्मश्च रुक्मेषुश्च पृथुश्च ज्यामघश्चेति संज्ञिनः तत्र ज्यामघः शैब्यायाः पतिः अप्रजः अपुत्रस्सन् भर्यांभयात् अन्यां भार्याम् ॥ ३५ ॥

नाविन्दत् न लेभे एवं स्थिते स कदाचिच्छत्रून् विजित्य तेषां भवनात्काञ्चित् कन्यां भोज्यां भुजिष्यामुपभार्यां मतिं यावत् आहर्षीत्तानीय तो रथे स्थितां कन्यामालोक्य शैब्याऽमर्षिता सती पतिं ज्यामघमाह-किमिति ? हे कुहक वञ्चक ! मत्स्थानं मदुपवेशयोग्यं स्थानमियं कथमारोपिता? इति. ततस्तस्या भयाज्ज्यामघः तव स्नुषेयमानीतेत्युक्ते सति पतिं स्मयन्ती सती शैब्योवाच ॥ ३६ ॥ ३७ ॥

किमिति ? अहं वन्ध्या असपत्नी अविद्यमाना सपत्नी यस्यास्तथाभूता च अतो मे मम स्नुषा कथं युज्येत उपपद्येत; इति. ततस्तां ज्यामघ आह, हे राज्ञि ! त्वं यं पुत्रं जनयिष्यसि, तस्येयं भार्या सती उपपत्स्यते तव स्नुषा भविष्यतीति. ततः सा शैब्या अन्वमोदत तथेत्यङ्गीचकार तदा भार्याभयप्रकम्पमान-

---

(१) भ्रमः। (२) कथम् इति च वी०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विदर्भसर्वाङ्गस्य राज्ञः प्रागामकुट्टमालोकयानुकम्पितात्तेन पूर्वं बहुकालमाराधिताः विश्वेदेवाः पितरश्च तथास्त्वित्यन्वमोदन्त ततश्च देवताप्रसादेन जनयिष्यसीति वचनमुहूर्तसंसर्गेण निवृत्तरजस्कापि शैव्या गर्भमधात् धृतवती ततः सा प्राप्तकाले शुभलक्षणं कुमारं सुषुवे स च कुमारो विदर्भ इति प्रोक्तः प्रख्यातः ततः शैव्या स्नुषाम् उपयेमे उपयमयामास ज्याममघस्य महिमा तु पराशरादिभिरुक्तः यथोक्तं—

"भार्यावश्यास्तु ये केचिद्भविष्यन्ति तथा मृताः ।
तेषां वै ज्यामघश्रेष्ठः शैव्यापतिरभून्नृपः"

इति ॥ ३८ ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

युधि अग्रहाम ॥ ३६ ॥ ३७ ॥
असपत्नी सपत्नीरहिता ॥ ३८ ॥
स्नुषाम् पूर्वं स्नुषेत्यभिहिताम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥
( विजयध्वजरीत्या विंशः । )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

षट् प्रधानानि येषां "क्लीबे प्रधानम्" इत्यमरः ॥ ३३—३९ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दशलक्षसहस्राणीति तासु प्रत्येकमेकैकलक्षपुत्रोद्भवात् ॥३३॥
तस्य धर्मस्य उशनाः ॥ ३४—३७ ॥

असपत्नी मम काचित् सपत्न्यपि नास्ति अतिभयव्याकुल आह-जनयिष्यसीति । भाव्यर्थप्रकाशितसिद्धसर्वाङ्गस्य यस्य राज्ञः प्राप्तसङ्कटमालक्ष्य तदेव वचनं कृपया अन्वमोदन्त सत्यं चक्रुः विश्वेदेवाः पूर्वं तेन बहुधा आराधिता इति भावः निवृत्तरजस्कापि शैव्या तेषां कृपया गर्भमधात्,

"भार्यावश्यास्तु ये केचिद्भविष्यन्त्यथवा मृताः ।
तेषां तु ज्यामघः श्रेष्ठः शैव्यापतिरभून्नृपः" इति

पराशरादय आहुः ॥ ३८—३९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
नवमस्य त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धर्मो नाम तस्योशना हयमेधशतस्य याट् यष्टा तस्य सुतो रुचकस्तस्य आत्मजाः पञ्च आसन् ॥ ३४ ॥

तानाह-पुरुजिदिति । शैव्याख्यायाः वन्ध्यायाः पतिः तस्या एव भयात् ॥ ३५ ॥

अन्यां भार्यां नाविन्दत् स कचित् शत्रोर्युधि पराजितस्य भवनात् भोज्यां कन्याम् अहार्षीत् आनीतवान् ॥ ३६—३७ ॥

अहं वन्ध्या असपत्नी च अतः, पुत्राभावात् इयं स्नुषा कथं युज्यते ? भार्याभयात् व्याकुल आह—जनयिष्यसीति ॥ ३८ ॥

तदा विश्वेदेवाः पितरश्च तथेत्यन्वमोदन्त ततो देवपितृप्रसादतः शैव्या गर्भमधात् ॥ ३९ ॥

इतिश्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाऽध्यायार्थप्रकाशः ॥ २३ ॥

भाषा टीका ।

उन रानियों में महायशस्वी ने दश लाख हजार पुत्र उत्पन्न किये जिनमें छै पुत्र प्रधान हुए, तिनमें पृथुश्रवा के धर्म नामक पुत्र हुए, तिन धर्म के उशना पुत्र हुए, जिनोंने सौ अश्वमेध यज्ञ किये, जिनके सुत रुचक हुए, तिनके आत्मज पांच हुए तिन को श्रवण करो ॥ ३३—३४ ॥

पुरुजित, रुक्म, रुक्मेषु, पृथु, और ज्यामघ, ऐसे नाम वाले हुए। शैव्या रानी के पति ज्यामघ, राजा के जब संतान न हुई तब उनों को रानी शैव्या के डर से दूसरी भार्या तो न मिली ॥ ३५ ॥

परन्तु शत्रु के भवन से एक भोज्या नामक कन्या को हरलाये, रथ में बैठी हुई उस कन्या को शैव्या रानी ने देखकर असहन होकर पति से कहा कि— ॥ ३६ ॥

हे कपटी ! यह कौन है जिसको तूंने मेरी जगह पर रथ में बैठाई है,तब राजा डर कर बोला, कि-यह तुमारी बेटा की बहू है, तब फिर रानी हंस कर पति से बोली, कि— ३७ ॥

मैं वंध्या ( बांझ ) हूं और दूसरी कोई मेरी सपत्नी ( सौत ) है नहीं, फिर यह मेरी बेटाकी बहू कैसे हुई ? तब राजा बोला,कि-हे रानी जू ! जिस पुत्र को तुम उत्पन्न करोगी यह कन्या उसके उपयोग में आवेगी ॥ ३८ ॥

भाषा टीका ।

इस राजा की बात को विश्वे देवताओं ने और पितृ लोगों ने सुनकर अनुमोदन किया, तब तो शैब्या ने गर्भ धारण किया, और समय पर शुभ पुत्र को उत्पन्न किया, उस का नाम विदर्भ भया, उसने उस सती । स्नुषा ( बहू ) को व्याही ॥ पराशर ऋषि ने इस विषय में एक श्लोक उदाहरण दिया है कि- जितने आजतक इस पृथवी में अपनी भार्या के वश में रहने वाले मनुष्य आगे होवेंगे और पश्चात् ( पीछे ) होचुके हैं, उन सबों के मध्य में शैब्या रानी के पति राजा ज्यामघ सब से श्रेष्ठ हुए, इन के बराबर इस जगत में स्त्री से डरने वाला कोई हुआ न होगा—ऐसी इनकी बड़ाई ऋषिने करी है ॥ ३९

इति श्री मद्भागवत नवमस्कन्ध में त्रयोविंश अध्यायकी

श्री वृन्दावनस्थ पं० भागवताचार्य कृत

भाषा टीका समाप्त ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥



## ॥ चतुर्विंशोऽध्यायः ॥

श्रीशुक उवाच ।

तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ ।
तृतीयं रोमपादञ्च विदर्भकुलनन्दनम् ॥ १ ॥
रोमपादसुतो बभ्रुर्बभ्रोः(१)कृतिरजायत ।
उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृप ! ॥ २ ॥
क्रथस्य कुन्तिः पुत्रोऽभू(२)द्वृष्टिस्तस्याऽथ निर्वृतिः ।
ततो दशार्हो नाम्नाऽभूत्तस्य व्योमः सुतस्ततः ॥ ३ ॥
जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ।
ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥
करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ।
देवक्षत्रस्ततस्तस्य मधुः(३) कुरुवशादनुः ॥ ५ ॥
पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ।
भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ ६ ॥
सात्वतस्य सुताः सप्त महाभोजश्च मारिष ! ।
भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च ॥ ७ ॥
एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ।
शताजिच्च सहस्राजिदयुताजिदिति प्रभो ! ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ।
वंशा नानामुखाः प्रोक्ता रामकृष्णोद्भवावधि ॥ १ ॥

॥ १ ॥
चैद्यादयो दमघोषादयः ॥ २ ॥ ३ ॥
ततो दशरथाच्छकुनिः पुराणान्तरादेवमादिविशेषो- द्रष्टव्यः ॥४॥
ततः कुरुवंशादनुः अनोः पुत्रः पुरुहोत्रः ॥ ५ ॥ ६ ॥
महाभोजश्चेत्येवं सप्त मारिष ! हे आर्य ! ॥ ७-८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्यां शैब्यया विवाहितायां कन्यायां विदर्भो नाम्ना कुशः क्रथश्चेति द्वौ पुत्रावजनयत् ततस्तृतीयं रोमपादाख्यञ्च तस्यामेवाजनयत्, कथम्भूतम् ? वैदर्भकुलं नन्दयतीति तथाभूतम् ॥ १ ॥

रोमपादस्य सुतो बभ्रुः तस्मात्तु कृतुरजायत तत्सुतः कुशिकः तस्माच्छैशिकादिः ततश्चेदिः चैद्यादयः दमघोषादयो नृपा जज्ञिरे ॥ २ ॥

क्रथस्य विदर्भसुतस्य तु पुत्रः कुन्तिरभूत्तस्य कुन्तेर्वृष्णिः अथ तस्मान्निर्वृतिः विधृतिरिति पाठान्तरं ततो निर्वृतेर्दशार्हाख्यः तस्य दशार्हस्य तु सुतो व्योमः ततो व्योमाज्जीमूतः तस्य जीमूतस्य विकृतिः यस्य विकृतेस्सुतस्तीमरथः ततस्तीमरथात् नवरथः पुत्रो जातः ततो नवरथाद्दशरथः ॥ ३ ॥ ४ ॥

ततो दशरथात् शकुनिः ततः करम्भ इत्यर्थः । तदात्मजः करम्भात्मजः देवरातः तस्य देवरातस्य सुतो देवक्षत्रः ततो मधुः ततश्च कुकुरकः ॥ ५ ॥

ततः कुकुरकात् पुरुहोत्रः तस्य सात्वतः पुत्रो बभूव

(१) कृतुः इति । (२) वृष्णिः । कुकुरकस्ततः ।

बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू ।
यथैव शृणुमो दूरात्सम्पश्यामस्तथाऽन्तिकात् ॥ ९ ॥
बभ्रुः श्रेष्ठो मनुष्याणां (१) देवदेवावृधः समः ।
पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च ॥ १० ॥
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ।
महाभोजोऽपि धर्मात्मा भोजा आसन् तदन्वये ॥ ११ ॥
वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप ! ।
शिनिस्तस्यानामित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सात्वतस्य तु भजमानश्च भजिश्च दिव्यश्च वृष्णिश्च देवावृधश्च अन्धकश्च महाभोजश्चेति सप्त सुताः, हे मारिष ! परीक्षित एव मारिष इति नामान्तरं तत्र भजमानस्यैकस्याञ्च पत्न्यां निम्लोचादयस्त्रयः अन्यस्याञ्च पत्न्यां शताजिदादयस्त्रय एव सुताः हे प्रभो ! ॥ ६—८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १ ॥
यतश्चेदेः ॥ २—१३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—१० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्विंशे प्रकीर्त्यन्ते वंशे नानामुखे यदोः ।
देवकीवसुदेवाद्याः पितरौ रामकृष्णयोः ॥
॥ १ ॥
चैद्यादयः दमघोषादयः ॥ २ ॥
क्रथस्य विदर्भपुत्रस्य ॥ ३ ॥ ४ ॥
तस्य मधुः कुरुवंशश्च तत्र कुरुवंशादनुः ॥ ५—८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चतुर्विंशे विदर्भवंशं तत्र भगवदाविर्भावं च वर्णयति ॥ १ ॥
चैद्यादयो दमघोषादयः ॥ २—३ ॥
ततो दशरथात् ॥ ४ ॥
शकुनिः शकुनेः करम्भिः पुत्रः तदात्मजो देवरातः ततः देवक्षत्रः तस्य कुरुवशः कुरुवशात् अनुः ॥ ५ ॥ ६ ॥

हे मारिष ! आर्य ॥ ७—१० ॥

भाषा टीका

श्रीरुक्मिणीशपदपङ्कजमाश्रयामि ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि रानी शैव्या के पुत्र ज्यामघनन्दन जो विदर्भ हुए तिनने उसी भोज्याकन्या के विषे नाम से कुश और क्रथ ये दोपुत्र उत्पन्न किये और विदर्भ कुल के आनन्द दायक ऐसे रोमपाद को भी उत्पन्न किये, ॥ १ ॥

रोमपाद के सुत बभ्रु हुए, तिन बभ्रु के कृति उत्पन्न हुए, तिन से उशिक इस नाम के सुत हुए, तिनसे चेदि तिन से चैद्य (दमघोष) इत्यादिक चंदेरी के राजा हुए ॥ २ ॥

क्रथ के पुत्र कुन्ति हुए, तिन के धृष्टि, तिन के निर्वृति, तिने दशार्ह पुत्र हुए, तिन के व्योम होते हुए ॥ ३ ॥

व्योम से जीमूत पुत्र हुए, तिनसे विकृति तिनके भीमरथ पुत्र हुए, तिनके नवरथ पुत्र हुए, तिनके दशरथ पुत्र होते हुए ॥ ४ ॥

तिनके शकुनि, तिन के करम्भि पुत्र हुए, तिन के आत्मज देवरात हुए, तिन के पुत्र देवक्षत्र हुए, तिनके मधु हुए, तिन से कुरुवश हुए, तिनके अनु हुए ॥ ५ ॥

अनु के पुत्र पुरुहोत्र हुए, तिनके आयु, तिनके सात्वत हुए, सात्वत के भजमान, भजि, दिव्य, वृष्णि, देवावृध, अन्धक, और महाभोज, ये सात पुत्र हुए, हे राजन् ! भजमान के भी एक भार्या में निम्लोचि, किंकण, और धृष्णि, ये तीन पुत्र हुए, और हे प्रभो ! दूसरी भार्या में शताजित्, सहस्राजित, और अयुताजित ये तीन पुत्र होते भये ॥ ६—८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततस्तदुपदेशेन ये पञ्चषष्ट्यादिसङ्ख्याः पुरुषास्तेऽमृतत्वं मोक्षं प्राप्ताः ॥ १० ॥ ११ ॥

(१) देवैर्देवावृधः इति वीर० ।

सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ।
अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः ॥ १३ ॥
युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ।
युगन्धरोऽनमित्रस्य [१]वृष्णिः पुत्रोऽपरस्ततः ॥ १४ ॥
श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः ।
अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥ १५ ॥
आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ।
[२]धर्मवृद्धः सकर्मा च क्षत्रोपेक्षोऽरिमर्दनः १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य युधाजितः शिनिरनमित्रश्च तस्य सत्यकः ॥ १२ ॥ १३ ॥

सात्यकिः सत्यकस्य पुत्रो युयुधानस्तस्य जयस्तस्य कुणिस्ततः कुणेर्युगन्धरः अनमित्रस्यैवापरो वृष्णिर्नाम पुत्रः ॥ १४ ॥

अक्रूरः प्रमुखो येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ १५ ॥

अतोऽक्रूरातिरिक्तान् द्वादश दर्शयति-आसङ्ग इति ॥ १६ ॥१७॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवावृधस्य सात्वतेः सुतस्तु बभ्रुः तयोः पितृपुत्रयोः देवावृधबभ्र्वोः श्लोकौ माहात्म्यसूचकौ इमौ श्लोकौ पठन्त्यार्याः इति शेषः श्लोकावेव दर्शयति, यथैवेति. यथैव दूरात् शृणुमः श्रवणगुणविशिष्टौ देवावृधबभ्रू दूरात् शृणुमः श्रुतवन्तो वयमन्तिकात्समीपेऽपि तादृशावेव तौ पश्याम इत्यार्याणामुक्तिः ॥ ९ ॥

कीदृशावित्याह:-बभ्रुरिति । मनुष्याणां मध्ये बभ्रुः श्रेष्ठः देवावृधस्तु देवैस्तुल्यः, श्रेष्ठयमेव दर्शयन्ति, पुरुषा इति. बभ्रोर्देवावृधादप्यनु पश्चात् तद्वंशजाः पुरुषाः पञ्चषष्ट्यधिकचतुर्दशसहस्रसङ्ख्याकास्ते सर्वे तयोः प्रभावादमृतत्वं मुक्तिं प्राप्ता इत्यर्थः । महाभोजः सात्वतिस्तु अतिधर्मात्मा तस्य महाभोजस्यान्वये वंशे भोजा भोजाख्या नृपाः आसन् जज्ञिरे॥१०॥११॥

वृष्णेस्तु पुत्रः सुमित्रोऽभूत् युधाजिच्च वृष्णेः पुत्रो बभूव ह परन्तप! तस्य युधाजितः शिनिः अनमित्रश्चेति द्वौ पुत्रौ जातौ तत्रानमित्रात् निघ्नोऽभवत् ॥ १२ ॥

अथ निघ्नस्य सत्राजितः प्रसेनश्चेति द्वौ सुतावासतुः सम्बभूवतुः तथाऽन्यस्यां भार्यायाम् अनमित्रस्यैव योऽन्यः सुतः शिनिर्नाम तस्य सुतः सत्यकः ॥ १३ ॥

सात्यकिः सत्यकसुतस्तु युयुधानः तस्य युयुधानस्य जयः ततो जयात्कुणिः ततो युगन्धरः तथा अनमित्रस्यैवान्यस्यां पुत्रः पृश्निः वृजिनवानिति पाठान्तरम् ततः पृश्नेः गान्दिन्यां भार्यायां श्वफल्कश्चित्रकश्चेति द्वौ सुतौ तत्र श्वफल्कात् गान्दिन्यां भार्यायां द्वादश सुताः अक्रूराद्यधी विश्रुताः प्रख्याताः बभूवुः अक्रूरः प्रमुखा येषामिति अतद्गुणसंविज्ञानबहुव्रीहिः ॥ १४ ॥ १५ ॥

ततोऽक्रूरातिरिक्ता द्वादश, तान् दर्शयति-आसङ्ग इति ॥१६॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाम्ना युयुधानः सात्यकिरिति गुणनाम ॥ १४—२३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बभ्रोरित्यर्द्धकं श्लोकं पठन्त्यमुमिति कश्चित् एतन्मतेतूत्तरश्लोकः श्रीशुकवाक्यमेव ॥ ११—२९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सात्वतपुत्रस्य देवावृधस्य सुतो बभ्रुः तयोः पितापुत्रयोः ॥९-१०॥

अमृतत्वं मोक्षं च बभ्रोरिति बभ्रुदेवावृधयोः सङ्गप्रभावादित्यर्थः ॥ ११ ॥

वृष्णेः सात्वतपुत्रस्य ॥ १२—१३ ॥

सात्यकिः सत्यकस्य पुत्रो युयुधानः अनमित्रस्यैवाऽपरो वृष्णिर्नामपुत्रः अक्रूरप्रमुखा येषामासङ्गादीनामित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ १४—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अमृतत्वं मोक्षम् ॥ ११ ॥

वृष्णेः सुमित्रो युधाजिच्च तस्य युधाजितः शिनिरनमित्रश्च ॥ १२ ॥ १३ ॥

सात्यकिः सत्यकस्य पुत्रः युयुधानः तस्य जयस्तस्य कुणिस्ततः कुणेर्युगन्धरः ॥ १४ ॥

अक्रूरः प्रमुखो येषामिति स्वलागरमानयेतिवदतद्गुणसंविज्ञानो बहुव्रीहिः अत एकः अक्रूरः आसङ्गादयो द्वादश ॥ १५ ॥ १६ ॥ १७ ॥

(१) पृश्निः ॥ धर्मवृद्ध भृष्टधर्मश्च इति वीर०।

शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश ।
तेषां स्वसा सुचीराख्या द्वावक्रूरसुतावपि ॥ १७ ॥
देववानुपदेवश्च तथा चित्ररथात्मजाः ।
पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः ॥ १८ ॥
कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ।
कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥ १९ ॥
कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ।
अन्धको दुन्दुभिस्तस्मादरिद्योतः पुनर्वसुः ॥ २० ॥
तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ।
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥
देववानुपदेवश्च सुदेवो देववर्द्धनः ।
तेषां स्वसारः सप्ताऽऽसन् धृतदेवादयो नृप ! ॥ २२ ॥
शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ॥
सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥
कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा ।
राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥

भाषा टीका ।

देवावृध के पुत्र बभ्रु हुए, इन दोनो पिता पुत्रों की कीर्ति के दो श्लोक गाये जाते हैं, कि—जैसे दूर से सुनते रहे देवावृध और बभ्रु को निकट में वैसे ही देखे ॥ यह बात भी बहुत भारी है, कि–जैसा सुनाजाय वैसाही देखने में आवे इसी बात की दुर्लभता में लोग कहा करते हैं, कि—"दूरस्था भूधरारम्याः" "दूर के ढोल सुहावने" ऐसे ये राजा नहीं रहे ॥ ९ ॥

बभ्रु मनुष्यों में श्रेष्ठ हैं और देवावृध देवताओं के समान हैं। बभ्रु और देवावृध से छै हजार और तिहत्तर पुरुषों को अमृतत्व (मोक्ष) प्राप्त हुआ ॥ सात्वत के सातवें पुत्र महाभोज बडे धर्मात्मा हुए, जिनके वंश में भोज नामक कुल चला ॥ १०—११ ॥

वृष्णि के पुत्र सुमित्र हुए, तिनके युधाजित हुए, हे परंतप ! तिनके शिनि हुए, तिनके अनिमित्र हुए, और अनिमित्र से निम्न हुए ॥ १२ ॥

निम्न के सत्राजित और प्रसेन दो पुत्र हुए, और अनिमित्र का दूसरा पुत्र शिनि हुआ, तिनका सत्यक पुत्र हुआ ॥ १३ ॥

सत्यक के पुत्र युयुधान हुए, तिनके जय, तिनके कुणि, तिनके युगंधर हुए, अनमित्र के एक और पुत्र वृष्णि हुए ॥ १४ ॥

तिनसे श्वफल्क चित्ररथ हुए, और श्वफल्क से गांदिनी के विषे अक्रूर प्रभृति द्वादश विख्यात पुत्र हुए ॥ १५ ॥

उन के नाम हैं—आसंग, सारमेय, मृदुर, मृदुविद्, गिरि, धर्मवृद्ध, सुकर्मा, क्षेत्रोपेक्ष, और अरिमर्दन ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पृथुरेकः विदूरथाद्या अन्ये च बहवः विपृथुधामाद्या इति पाठे आद्यशब्देन विदूरथोऽप्युक्तस्ततश्च शूरो विदूरथाद्यासीदिति वक्ष्यमाणनिर्देशोपपत्तिः ॥ १८ ॥

कुकुरादयश्चत्वारोऽन्धकस्य सुता इति ज्ञेयम् । तथा च पराशरः "कुकुरभजमानशुचिकम्बलबर्हिषाख्याश्चत्वारोऽन्धकस्य पुत्राः" इति ॥ १९ ॥

अतोऽन्धकोऽन्धकात् दुन्दुभिरित्यपि तद्वचनादेव ज्ञेयम् ॥ २०-२१ ॥

धृतदेवा आदिर्यासां शान्तिदेवादीनां षण्णाम् ताः सप्त ॥ २२ ॥

ताः सप्त ॥ २३ ॥

औग्रसेनय उग्रसेनस्य सुताः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषामासङ्गादीनां स्वसा सुचीरा सुचीराख्या यस्याः सा तत्राक्रूरस्य पुत्रौ देववानुपदेवश्चेति द्वावेव एवं चित्ररथस्य शिशिरबिन्दोराद्यस्पृत्योऽन्वय उक्तः । अथान्वयान्तरमाह—तथा चित्र-

कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका ।
उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥
शूरो विदूरथादासीद्भजमानः सुतस्ततः ।
शिनिस्तस्मात्स्वयंभोजो हृदीकस्तत्सुतो मतः ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

रथात्मजा इति । यथा शशिबिन्दुश्चित्ररथस्यात्मजस्तथाऽन्येऽपि चित्ररथस्यात्मजाः पृथुश्च विदूरथ आद्यो येषां ते च बहवो बभूवुः सात्वतसुतस्य वृष्णेर्वंशमनुक्रामति—वृष्णिनन्दना इत्यादि ॥ १७ ॥ १८ ॥

कुकुरादयो वृष्णिनन्दनाः तत्र वृष्णेः सुतस्येति शेषः कुकुरस्य तनयो विलोमा ॥ १९ ॥

ततो विलोम्नः कपोतरोमा अभूत् यस्य च कपोतरोम्णः तुम्बुरुः सखा बभूव स कपोतरोमा ऽभवदित्यर्थः । अथान्धकस्य सात्वतसुतस्यान्वयमाह-अन्धकादिति । अन्धकाद् नृभिः अन्धका इति प्रथमान्तपाठस्तूचितः तत्र तथा चित्ररथात्मजा इत्यस्य शशिबिन्दोरारभ्यैते उक्ताः सर्वे चित्ररथवंशजा इत्यर्थः। पृथ्वादयस्तु वृष्णिनन्दनाः तत्र पृथुर्विपृथुधन्याद्या इति पाठे आदिशब्देन विदूरथोऽप्युक्तः अत एव ततः शूरो विदूरथादिति वक्ष्यमाणनिर्देशोपपत्तिः कुकुरादयश्चत्वारः सान्वया अन्धकसुता इत्यर्थः। तथाचाह पराशरः "कुकुरभजमानशुचिकम्बलबर्हिषाद्यास्तथा न्धकस्य पुत्राः" इति. तस्य कपोतरोम्णो तुम्बुरुभिरित्यर्थः। तस्य दारिद्योतः तस्मात्पुनर्वसुः तस्य पुनर्वसोराहुकः आहुकी नाम कन्या च आहुकस्यात्मजौ तु देवकश्चोग्रसेनश्चेति द्वौ तत्र देवकस्यात्मजाः ॥ २० ॥ २१ ॥

देववदादयश्चत्वारः तेषां चतुर्णां स्वसारो भगिन्यः धृतदेवा आदिर्यासां ताः-शान्तिदेवादयः धृतदेवया सह सप्त बभूवुः ताश्च कन्याः वसुदेव उपयेमे ॥ २२ ॥ २३ ॥

औग्रसेनयः उग्रसेनस्य सुताः कंसादयो नव ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

औग्रसेनयः उग्रसेनपुत्राः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चित्ररथस्यसफल्कभ्रातुरात्मजाः ॥ १८ ॥

कृष्णोरनमित्रपुत्रस्य नन्दनीः कुकुराद्याः विष्णुपुराणे त्वन्धकत्राः कुकुराद्या इष्टाः अन्धकात् सात्वतपुत्रात् ॥ १९—२३ ॥

औग्रसेनयः उग्रसेनस्य पुत्राः कंसादयः ॥ २४—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चित्ररथस्य तु आत्मजाः पृथुसहिताः विदूरथाद्याः बहवः॥१८॥

सात्वतपुत्रस्यान्धकस्य वंशमाह—कुकुर इत्यादिना । "कुकुरभजमानशुचिकम्बलबर्हिषाद्यास्तथान्धकस्य पुत्राः" इति श्रीपराशरवचनात् ॥ १९ ॥

कथम्भूतः ? अनुः यस्य सखा तुम्बुरुः तस्यानोरन्धकस्तस्य दुन्दुभिः ॥ २०—२५ ॥

---

भाषा टीका ।

तथा शत्रुघ्न, गंधमाद, प्रतिबाहु, ये सब द्वादश हुए, इन सबों की बहिन सुचीरा नाम वाली हुई, और अक्रूर के दो पुत्र भी हुए, ॥ १७ ॥

तिनका नाम देववान् और उपदेव हुआ, ॥ और चित्ररथ के आत्मज पृथु, विदूरथ, इत्यादिक बहुत वृष्णि कुलनन्दन हुए ॥ १८ ॥

और कुकुर, भजमान, शुचि, कंबलबर्हिष, ये चार पुत्र अंधक के जानना, । कुकुर के पुत्र वह्नि हुए, तिनका पुत्र बिलोमा हुआ ॥ १९ ॥

तिनके कपोतरोमा हुए, तिनके अनु हुए, जिन अनुका सखा तुम्बुरु गन्धर्व हुआ, तिन अनुके अंधक हुए, तिनसे दुंदुभि, तिनसे अरिद्योत, तिनसे पुनर्वसु हुए ॥ २० ॥

तिनके आहुक पुत्र और आहुकी कन्या हुई । आहुक के पुत्र देवक, और उग्रसेन हुए, देवक के पुत्र चार हुए ॥ २१ ॥

देववान् उपदेव, सुदेव और देववर्द्धन, हे राजन् ! इनकी सात बहिने धृतदेवा से आदि लेकर हुई ॥ २२ ॥

धृतदेवा, शांतिदेवा, उपदेवा, श्रीदेवा, देवरक्षिता, सहदेवा, और देवकी, इन सातों को वसुदेवजी ने व्याहीं ॥ २३ ॥

और कंस, सुनामा, न्यग्रोध, कंक, शंकु, सुहु, राष्ट्रपाल, सृष्टि, और तुष्टिमान् ये उग्रसेन के पुत्र हुए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वसुदेवस्य ये अनुजा देवभागादयस्तेषां स्त्रियो भार्याः ॥ २५ ॥

अन्धकसुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तः, द्वितीयस्य भजमानस्य वंशमाह—शूरो विदूरथादिति । "भजमानाच्च विदूरथः पुत्रोऽभूद्विदूरथाच्च शूरः" इति पराशरादिवचनात् यद्वा, पृथुर्विदूरथाद्याश्चेति पूर्वोक्ताच्चित्ररथात्मजाद्विदूरथात् ॥२६॥

देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ।
देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥
तस्यां स जनयामास दशपुत्रानकल्मषान् ।
वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥
सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम् ।
देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥
वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ।
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥
राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः ।
कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥
साऽऽप दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ।
तस्या वीर्यपरीक्षार्थमाजुहाव रविं[1] शुचिम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवमीढस्य यः शूरो नाम पुत्रस्तस्य देवमीढो हृदीकस्यैव सुतः, यथाह—पराशरः "तस्यापि कृतवर्मशतधनुर्देवमीढुषाद्याः पुत्रा बभूवुः देवमीढुषस्य शूरस्यापि मारिषा नाम पत्न्यभवत्तस्याञ्चासौ दश पुत्रानजनयद्वसुदेवपूर्वान्" इति॥२७॥२८॥

आनकाश्च नेदुः ॥ २९ ॥

हरेः प्रादुर्भावस्य स्थानम् ॥ ३० ॥

पृथायाः कन्यकावस्थायां कर्णोत्पत्तिप्रकारमाह—कुन्तेरिति पञ्चभिः ॥ ३१ ॥

कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास ततश्च सा तस्माद्देवहूतीं देवाह्वानहेतुं विद्यामवाप तदाह, साऽऽपेति ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कंसाप्रभृतयश्चतस्रश्च औग्रसेनाः उग्रसेनाज्जाताः दुहितरः ताश्च वसुदेवानुजानां देवभागादीनां वक्ष्यमाणानां स्त्रियो भार्याः ॥२५॥

विदूरथाच्चित्ररथात्मजात् वृष्णिसुताद्वा विदूरथात् शूरो जज्ञे तत्सुतः शूरसुतस्तु भजमानः ततो भजमानात् शिनिस्तस्मात् शिनेः स्वयम्भोजः तत्सुतः स्वयम्भोजसुतः हृदीकस्तत्सुताः हृदीकसुताः देवबाह्वादयः त्रयः अयमेकः शूरस्यान्वय उक्तः । अथ वंशान्तरमाह-, देवमीढस्येति । देवमीढसुतस्य शूरस्य मारिषा नाम पत्नी बभूव अत्र देवमीढस्येति विशेषणबलात् शूरो विदूरथादासीदिति प्राक्तनग्रन्थे विदूरथाद्देवमीढस्तस्मात् शूरो जात इति क्रमोऽवगन्तव्यः "कृतवर्मेति तत्सुता" इत्यनन्तरग्रन्थे इति शब्दः प्रभृत्यर्थकः ततश्च तत्र देवमीढस्यापि संग्रहः तस्य देवमीढस्य देवमीढसुतस्य शूरस्येत्यर्थः । अयञ्च शूरः विदूरथवंशजादन्यः, तथा चाह भगवान् पराशरः "तस्यापि कृतवर्मा शतधनुर्देवमीढाद्याः पुत्रा बभूवुः देवमीढस्य शूरस्य तस्यापि मारिषानाम पत्न्यभूत् तस्यां चासौ दश पुत्रानजनयद्वसुदेवपूर्वान्" इति अतः तस्यापीति वैष्णववचनस्य हृदीकस्यापीत्यर्थः ॥ २६ ॥ २७ ॥

तस्यां मारिषायां देवमीढसुतः शूरोऽकल्मषान् विशुद्धान् वसुदेवादीन् पुत्रानजनयत् वसुदेवस्यानकदुन्दुभिनाम निर्वचन निमित्तमाह-यतः देवदुन्दुभयः आनकाश्च यस्य वसुदेवस्य जन्मनि प्रादुर्भावकाले नेदुः दध्वनुः ततस्तं वसुदेवमानकदुन्दुभिरिति वदन्ति ॥ २८ ॥ २९ ॥

आनकादीनां नादे हेतुं वदन् तं विशिनष्टि-हरेः श्रीकृष्णस्यावतरिष्यमाणस्य स्थानमवतरणस्थानभूतं, पृथेति । एतेषां वसुदेवादीनां पृथाप्रभृतयः पञ्च कन्यका भगिन्यः स्वसारः तत्र पृथायाः कन्यावस्थायां कर्णोत्पत्तिप्रकारमाह-कुन्तेरिति पञ्चभिः । अत्रायमितिहासः कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास ततश्च सा तस्माद्विद्यां देवाह्वानसमर्थामवाप्य परीक्षयामास ततश्च सा रविमाजुहाव तेनइचागतं रविमालोक्य विस्मितायां तस्यां गर्भमाधाय रविर्ययौ ततस्तस्याः कर्णो जज्ञे इति सोऽयमत्रोच्यते [illegible] वसुदेवपृथादीनां पिता शूरः पृथां दुहितरं सख्युरपुत्रस्य कुन्तेः कुन्तिभोजस्यादात् दुहितृत्वेन ददौ, सख्युरपुत्रस्येति विशेषणद्वयं दानहेतुपरं यतः कुन्तिभोजाय दत्ताऽत एव पृथा कुन्तीति नामान्तरं लेभे ॥ ३० ॥ ३१ ॥

ततः सा पृथा कदाचित् प्रतोषितात् दुर्वाससः देवहूतिं देवाहूयतेऽनयेति तथा तां विद्यामापेति शेषः । तस्या विद्यायाः वीर्यपरीक्षार्थं सामर्थ्यपरीक्षार्थं रविं सूर्यं शुच्यम्आजुहाव ॥ ३२ ॥

(१) शुचिः इति वि०।

तदैवोपागतं देवं वीक्ष्य विस्मितमानसा ।
प्रत्ययार्थं प्रयुक्ता मे याहि देव ! क्षमस्व मे ॥ ३३ ॥
अमोघं दर्शनं देवि ! आधत्ते त्वयि चात्मजम् ।
योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ! ॥ ३४ ॥
इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ।
सद्यः कुमारः सञ्जज्ञे द्वितीय इव भास्करः ॥ ३५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वसुदेवस्यानुजानां देवभागादीनां स्त्रियो भार्याः ॥२५॥२६॥

तस्य हृदिकस्य सुताः ॥ २७ ॥ २८ ॥

यस्य वसुदेवस्य जननसमये दुन्दुभ्यानकवाद्यनदनाद्वसुदेवस्य नामान्तरमस्तीत्याह–वसुदेवमिति । स्थानमवतारस्य ॥ २९ ॥ ३० ॥

एतेषां वसुदेवादीनां शूरस्य सख्युः पुत्रस्य कुन्तेः ॥ ३१ ॥

देवहूतीं देवा हूयन्तेऽनयेति देवहूती देवाह्वानकरीत्यर्थः । तां विद्यां दुर्वाससः प्रलभतेति शेषः । तस्याः विद्यायाः शुचिः ऋतुस्नाता ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वसुदेवं हरेः स्थानमिति "सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः" इति श्रीशिवोक्तदिशा विशुद्धसत्त्वमेव वसुदेवाख्यं ततस्तदवतारमेवैतमानकदुन्दुभिं वदन्तीत्यर्थः । अत्र विशेषजिज्ञासायां भगवत्सन्दर्भो दृश्यः ॥ ३० ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विदूरथाच्चित्ररथपुत्रात् ॥ २६ ॥

हृदीकस्य सुतो देवमीढस्तस्य शूरस्तस्य मारिषा ॥ २७–२९ ॥

हरेः स्थानं हरिर्यत्र प्रादुर्भवतीत्यर्थः ॥ ३० ॥

तासु मध्ये पृथां शूरस्तत्पितैव तवैषा कन्या भवत्विति कुन्तेः कुन्तये प्रदात् ॥ ३१ ॥

सा च पृथा कदाचिद्गृहमागतात्परिचर्य्यया प्रतोषितात् दुर्वाससः सकाशात् देवहूतीं देवाह्वानहेतुविद्यामं आप ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विदूरथात्पूर्वोक्तात् चित्ररथपुत्रात् ॥ २६ ॥

तस्य हृदीकस्य सुताः देवबाहुः शतधनुः कृतवर्मा देवमीढाद्याश्च ज्ञेयाः "तस्यापि कृतवर्मशतधनुर्देवमीढाद्याः पुत्रा बभूवुः" इति श्रीपराशरवचनात्, देवमीढस्य शूरस्तस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥

स तस्यां दश पुत्रान् जनयामास, तानाह—वसुदेवमिति ॥२८॥

यस्य जन्मनि जन्मसमये देवदुन्दुभयः आनकाश्च नेदुः ॥२९॥

अतो हरेः प्रादुर्भावस्य स्थानं वसुदेवम् आनकदुन्दुभिं च वदन्ति ॥ ३० ॥

वसुदेवभगिनीनां पुत्रानाह—कुन्तेरित्यादिना । शूरः स्वसख्युः कुन्तेः कुन्तिभोजाय चतुर्थ्यर्थे षष्ठी पृथामदात् अतः कुन्तिपुत्रिकात्वेन पृथा कुन्तीति विख्याता । तथोक्तं हरिवंशे "शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ । तस्मात्कुन्तीति विख्याता कुन्तीभोजात्मजा पृथा" इति ॥ ३१ ॥

तत्र कुन्तिभोजगृहे तपसा धामो भगवान् दुर्वासाः कंचित्कालं वासं कृतवान् अश्वनदीसमीपगदेशे इति शेषं । तदा तेन राज्ञा स्वकन्या पृथा तदाराधने नियुक्ता सती प्रतोषितात् दुर्वाससः सकाशाद्देवहूतीं विद्यामवापेत्यर्थः ॥ ३२—३६ ॥

भाषा टीका ।

कंसा, कंसवती, कंका, सुरभू, राष्ट्रपालिका, ये उग्रसेन की बेटी सब वसुदेव जी के छोटे भ्राताओं की पत्नी होती भई ॥ २५ ॥

भजमान के विदूरथ हुए, तिन विदूरथ के शूर हुए, तिन के शिन हुए, तिनके स्वयंभोज, तिनके हृदीक हुए ॥ २६ ॥

हृदीक के देवबाहु शतधनु, कृतवर्मा, और देवमीढ ये पुत्र हुए, देवमीढ के शूर हुए तिनकी मारिषा नाम वाली पत्नी हुई ॥ २७ ॥

तिन पत्नी में शूर ने पाप रहित दश पुत्र उत्पन्न किये वसुदेव, देवभाग, देवश्रवस, आनक, ॥ २८ ॥

सृंजय, श्यामक, कंक, शमीक, वत्सक, और वृक, जिन के जन्मकाल में देवताओं की दुंदुभि और आनक बजते हुए, ॥२९॥

हरि के स्थान उन वसुदेव का आनक दुंदुभि ऐसा भी नाम कहते हैं ॥ पृथा, श्रुतदेवा, श्रुतकीर्त्ति, श्रुतश्रवा ॥ ३० ॥

और राजाधिदेवी, ये पांच वसुदेवादिकों की बहिने हुई, इनके पिता शूर ने अपुत्री अपने कुंति नामक सखा को पृथा कन्या देदी ॥ ३१ ॥

उस पृथा ने दुर्वासा ऋषि को प्रसन्न कर देवताओं के बुलाने की विद्या प्राप्त करी, और उस विद्या के प्रभाव की परीक्षा के लिये एक दिन सूर्य को बुलाती हुई ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवमुपागतं वीक्ष्य सा प्राह—प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता न तु त्वया किञ्चित्कार्यमित्यभिसन्धिनाऽतो याहीति॥ ३३॥

तं सा व्यत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ।
प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥
श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ।
यस्यामभूद्दन्तवक्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥
कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ।
सन्तर्दनादयस्तस्यां पञ्चाऽऽसन् कैकयाः सुताः ॥ ३८ ॥
राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह ।
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥
शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः ।
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमुक्तो रविरुवाच—अमोघं दर्शनमिति । कन्याऽहमिति चेत्तत्राऽऽह—यथा योनिर्न दुष्येत तथाऽहं कर्ता करिष्यामि ॥ ३४—३८ ॥

आवन्त्यौ विन्दानुविन्दौ ॥ ३९ ॥

तदेवं वसुदेवस्य भगिनीनामपतीन् पुत्रांश्चोक्त्वा तद्भ्रातृणां नवानां पत्नीः पुत्रांश्चाऽऽह—देवभागस्येति नवभिः श्लोकार्धैः ॥ ४०—४४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदैवोपगतमागतं देवं रविं वीक्ष्य विस्मितं मानसं यस्याः सा, सूर्यमाह—किमिति ? हे देव ! मे मया प्रत्ययार्थं प्रत्यभिज्ञानार्थं वीर्यपरीक्षार्थमिति यावत् इयं विद्या प्रयुक्ता अतस्त्वं याहि मां क्षमस्व मदपराधं क्षमस्वेति ॥ ३३ ॥

ततो रविराह—देवस-दर्शं देवतुल्यम् अमोघमात्मजं त्वयि आधित्से उत्पादयितुमिच्छामि आधत्स इति स्वपपाठः रूपाऽसिद्धेः यद्वा देवसन्दर्शो देवस्य मम दर्शनं क्लीबत्वमार्षममोघं फलाविनाभूतमतस्त्वय्यात्मजमाधित्स इत्यर्थः । कन्याऽहमित्यत्राह—तव योनिर्यथा न दुष्येत तथाऽहं हे सुमध्यमे कर्ता करिष्यामीति ॥ ३४ ॥

इतीत्यमुक्त्वा तस्यां पृथायां गर्भं समाधाय सूर्यो दिवं गतः ततः सद्य एव कुमारो जज्ञे स च द्वितीय इव भास्करः भास्करतुल्यः ॥ ३५ ॥

सा पृथा लोकस्य लोकाद्बिभ्यती सती कृच्छ्रात् दुःखात् नदीतोये तं कुमारमत्यजत् तां पृथां तव प्रपितामहः सत्यविक्रमः पाण्डुरुवाह उपयेमे ॥ ३६ ॥

श्रुतदेवां पृथानुजां करूषजो वृद्धशर्मा समग्रहीदुपयेमे । वृद्धशर्मेति पाठान्तरं श्रुतकीर्तिस्तु दितेः सुतः विप्रशप्तः कैकयश्च धृष्टकेतुश्च अविन्दत दूषिताङ्गतयान्तः सौन्दर्या सञ्जग्मुरित्यर्थः प्रत्येकाभिप्रायमेकवचनं तस्यामिन्दितायाः श्रुतकीर्तेः सन्तर्दनादयः पञ्च सुताः कैकयाज्जाता बभूवुः ॥ ३७ ॥ ३८ ॥

राजाधिदेव्यां तु आवन्त्यः अवन्तेः सुतः तस्मादवन्तेः सकाशादित्यर्थः । जयत्सेनाख्यः सुतोऽजनिष्ट जज्ञे श्रुतश्रवसं तु चेदिराजो दमघोषाख्यः समग्रहीत् उपयेमे इत्यर्थः ॥ ३९ ॥

तस्याः श्रुतश्रवसः सुतः शिशुपालः तस्य शिशुपालस्य सम्भवः उत्पत्तिप्रकारः कथितः सप्तमस्कन्धे इति शेषः तदेवं वसुदेवस्य भगिनीनां पतीन् पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाह—देवभागस्येति नवभिः श्लोकार्धैः । देवभागस्य कंसायां भार्यायां चित्रकेतुश्च बृहद्बलश्चेत्येतौ सुतौ जातौ तथा देवश्रवसः कङ्कवत्यां भार्यायां सुवीर इषुमांश्चेति द्वौ सुतौ जज्ञाते कङ्कस्तु तद्भार्यायां कङ्कायां बकः सत्यजित् पुरुजित् त्रयो जाताः ॥ ४० ॥ ४१ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रत्ययार्थं विश्वासार्थं प्रयुक्ताया विद्याया माहात्म्यं च । भो देव ! क्षमस्व याहीति ॥ ३३ ॥

कुन्त्याभिहितो रविः कुन्तीमाह—अमोघमिति । देवसन्दर्शनममोघं सफलं जानीहीति शेषः । कर्तव्यमाह—आधास्य इति । मैथुनयोगवतारूपयादर्शनाच्छिन्नयोनिर्दुष्टा स्यामिति पृथाया मनोगतशङ्कापरिहारार्थमाह—योनिरिति । तथा कर्ता लोकस्याऽपवादादिति शेषः ॥ ३४ ॥ ३५ ॥

तव प्रपितामहः पाण्डुः ॥ ३६ ॥

वसुदेवभगिनीनां श्रुतदेव्यादीनां विवाहं कथयति—श्रुतदेवामित्यादिना । इतिशब्दो दितेः सुतः पूर्वं दितेः सुत इति शब्दो यस्य विजयस्य स दितेः सुत इतिशब्दः सनकादिभिरेवं शप्तो विजयः प्रागदितेः सुतोऽभूत् पश्चाद्धिरण्यक इति स एवाऽधुना दन्तवक्र इति जात इति भावः ॥ ३७ ॥

कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ।
(१) कङ्कायामानकाज्जातः सत्यजित् पुरुजित्तथा ॥ ४१ ॥
सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ।
हरिकेशहिरण्याक्षौ शूरभूम्याश्च श्यामकः ॥ ४२ ॥
मिश्रकेश्यामप्सरसि (२) वृकादीन् वत्सकस्तथा ।
तक्षपुष्कर (३) शालादीन् दुर्वाक्ष्यां वृक आदधे ॥ ४३ ॥
सुमित्रार्जुनपालादीन् शमीकात्तु सुदामिनी ।
(४) कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाम्ना धृष्टकेतुः केकयविषयाधिपतित्वात् केकयशब्दश्च शब्दः पूर्वेण समुच्चीयते ॥ ३८ ॥

आवन्त्यौ विन्दाऽनुविन्दौ मजनिष्ट जनयामास ॥ ३९ ॥

वसुदेवभ्रातॄणां वंशं कथयति--देवभागस्येत्यादिना ॥ ४०-४५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऋषिशाप इत्यत्र इतिशब्दः इति पाठः सम्बन्धोक्तौ स पूर्वजन्मनि दितेः सुत आसीत् इतिशब्दः किंवदन्तीति व्याख्यानात् ॥ ३७—५४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवं सूर्यं अत्यथार्थं परीक्षार्थं मया विद्या प्रयुक्ताऽतः क्षमस्व सम्प्रत्यहं कन्याऽस्मि त्वया न किमपि कार्यं याहि ॥ ३३ ॥

सूर्य उवाच-अमोघमित्यादि । ननु, तर्हि योनिदुष्टां कन्यां मां कः परिणयेदिति चेत्तत्राह—योनिरिति । कर्ता करिष्यामि ॥ ३४—३८ ॥

आवन्त्यौ विन्दाऽनुविन्दौ ॥ ३९ ॥

वसुदेवस्य भगिनीनां पतीन् पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाह-देवभागस्येति, नवभिःश्लोकैः । कौशल्या नाम्नी ॥ ४०—५४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आवन्त्यौ विन्दाऽनुविन्दसंज्ञौ ॥ ३९ ॥

वसुदेवभ्रातॄणां पुत्रानाह—देवभागस्येत्यादिना ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

भाषा टीका ।

आये हुए सूर्य को देखकर मन में विस्मय कर कुंती बोली, कि—हे देव ! मैंने ! विद्या की प्रतीति के लिये परीक्षा लीनी है, आप पधारो और मेरा अपराध क्षमा करो ॥ ३३ ॥

तब सूर्य बोले, कि-हे देवि ! हमारे देव लोगों के दर्शन अमोघ होते हैं, इस कारण हम तुमारे विषे पुत्र उत्पन्न करेंगे, और हे सुमध्यमे ! यदि तुम कहो, कि- मैं कन्या हूं तो जिस प्रकार तुमारी योनि दूषित न होवे तैसें हम करेंगे ॥ ३४ ॥

इस प्रकार सूर्य कह कर उस पृथा कन्या के विषे गर्भ धारण कर आकाश को गये, बस उसी समय दूसरे सूर्य सदृश एक कुमार उत्पन्न हुआ ॥ ३५ ॥

उस पुत्र को पृथा ने लोक के अपवाद के डर से नदी के जल में डाल दिया । हेराजन् ! उसपृथाको तुमारे प्रपितामह (परदादे ) सत्यपराक्रम वाले पाण्डु महाराज ने ब्याही ॥ ३६ ॥

करूष देश का राजा वृद्धशर्मा, श्रुतदेवा को ब्याहता हुआ, जिसके विषें सनकादिकों के शाप से प्रथम जन्म में जो दिति का पुत्र भया सो दन्तवक्र नाम से हुआ ॥ ३७ ॥

केकय देश के धृतकेतु राजाने श्रुतकीर्तिको ब्याही । जिसके विषे सन्तर्दन आदिक पांच केकय के पुत्र हुए, ॥ ३८ ॥

अवन्ती ( उज्जैन ) के राजा जयसेन ने राजाधिदेवी को ब्याह के उसमें विन्द, और अनुविन्द, दो पुत्र उत्पन्न किये और चेदि ( चन्देरी ) के राजा दमघोष ने श्रुतश्रवा को ब्याही ॥ ३९ ॥

तिसका पुत्र शिशुपाल भया जिसकी उत्पत्ति पहिले कह चुके वसुदेवजी की बहिनें और उनके पुत्रों का वर्णन कर चुके ॥ अब वसुदेव जी के नौ (९) भ्राताओं की पत्नी और पुत्रों को कहते हैं, । देवभाग की कंसा भार्या में चित्रकेतु और बृहद्बल पुत्र हुए, ॥ ४० ॥

---

(१) अकः कङ्कीसुकङ्कायाम । (२) बकादीन् । (३) साल्वादीन् । (४) आनकः इति च वीर०पाठाः ।

पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकीप्रमुखाश्चासन् पत्न्य आनकदुन्दुभेः ॥ ४५ ॥
बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥ ४६ ॥
सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च ।
पौरव्यास्तनया ह्येते भूताद्या द्वादशाऽभवन् ॥ ४७ ॥
नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ।
कौशल्या केशिनं त्वेकमसूत कुलनन्दनम् ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वसुदेवस्य पत्नीः पुत्रांश्चाऽऽह—पौरवीत्येकादशभिः ॥ ४५ ॥ ४६ ॥ ४७ ॥

कौशल्या भद्रा ॥ ४८—५४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

राष्ट्रपाल्यां भार्यायां सृञ्जयो वृषादीन् जनयामास. श्यामकस्तु शूरभूम्यां भार्यायां शूरभूम्यामिति पाठान्तरं हरिकेशहिरण्याक्षौ जनयामास ॥ ४२ ॥

तथा वत्सकोऽपि मिश्रकेश्यामप्सरसि वृकादीन् सुतान् नयाजीजनत् वृकस्तु दूर्वाक्ष्यां भार्यायां पुष्करसालमादीन् सुतानात्मधे उत्पादयामास ॥ ४३ ॥

शमीकस्तु सुदामनि भार्यायां सुमित्रादीन् सुतानादधे आनकस्तु कर्णिकायां पत्न्याम् ऋतधामजयौ सुतावादधे ॥ ४४ ॥

अथ वसुदेवस्य पत्नीः पुत्रांश्चाह—पौरवीत्येकादशभिः । देवकी प्रमुखं प्रधानं यासां ताः पूर्वोक्ताः पौरव्यादयश्च आनकदुन्दुभेः वसुदेवस्य पत्न्यः आसन् बभूवुः ॥ ४५ ॥

तत्र रोहिण्यां पत्न्यां बलादीन् कृतादीन् सुतानुदपादयत् जनयामास तत्र बलो बलरामः कृत आदिर्ज्येष्ठो येषां तान् बलादीनित्यर्थः । बलादीन् कृतादींश्चेति वा आदिशब्देनानुक्ता अन्ये ग्राह्याः एवमग्रेपि ॥ ४६ ॥

भूत आदिर्येषां ते एते सुभद्रादयो द्वादश पौरव्यास्तनयाः आदिशब्दग्राह्यैरुक्तसङ्ख्यापूर्त्तिः ॥ ४७ ॥

तथा शूराद्यानन्दादयो मदिराया आत्मजाः कौसल्या भद्रा तु केशिनमेकमेव सुतमसूत, कथम्भूतम् ? कुलं नन्दयतीति तथा ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उदपादयत् उत्पादयामास ॥ ४६–५६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीवसुदेवस्य पत्नीः पुत्रांश्चाह—पौरवीत्यादिना ॥ ४५–४७ ॥
कौशल्या कोशलदेशजा भद्रा ॥ ४८—५४ ॥

भाषा टीका ।

कंसवती में देवश्रवा से सुवीर और इषुमान् हुए, कङ्कामें आनक से सत्यजित् और पुरुजित् पुत्र हुए ॥ ४१ ॥

सृञ्जय ने राष्ट्रपाली में वृष दुर्मर्षणादिकन को उत्पन्न किये और श्यामक ने शूरभूमि के विषें हरिकेश और हिरण्याक्ष को उत्पन्न किये ॥ ४२ ॥

वत्सक ने मिश्रकेशी अप्सराके विषें वृकादिकन को उत्पन्न किये, और वृक ने दुर्वाक्षी के विषें तक्ष, पुष्कर, शाल, आदिकन को पैदा किये ॥ ४३ ॥

और शमीक से सुदामनीजी सुमित्र, अर्जुन, पाल, आदिकन को उत्पन्न करती भई, और कङ्कमें कर्णिकामें ऋतधाम, और जय, हुए ॥ ४४ ॥

पौरवी, रोहिणी, भद्रा, मदिरा, रोचना, इला, और देवकी से आदि लेकर वसुदेव जी की पत्नी होतीं हुई ॥ ४५ ॥

वसुदेवजी ने रोहिणी में बल, गद, सारण, दुर्मद, विपुल, ध्रुव, और कृतादिक पुत्रों को उत्पन्न किये ॥ ४६ ॥

सुभद्र, भद्रबाहु, दुर्मद, भद्र और भूतादिक ये द्वादश पुत्र पौरवी के उत्पन्न हुए, ॥ ४७ ॥

नन्द, उपनन्द कृतक और शूरादिक मदिरा के आत्मज हुए, और कौशल्या ने तो कुलनन्दक एक केशी को ही उत्पन्न किया ॥ ४८ ॥

रोचनायामतो जाता हस्तहेमाङ्गदादयः ।
इलायामुरुवल्कादीन् यदुमुख्यानजीजनत् ॥ ४९ ॥
(१)विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः ।
शान्तिदेवात्मजा राजन् ! श्रमप्रतिश्रुतादयः ॥ ५० ॥
राजानः कल्पवर्षाद्या उपदेवासुता दश ।
वसुहंस(२)सुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥
देवरक्षितया लब्धा नव चात्र गदादयः ।
वसुदेवः सुतानष्टावादधे सह देवया ॥ ५२ ॥
पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ।
वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ॥
कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ।
ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५४ ॥
अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल ।
सुभद्रा च महाभागा तव राजन् ! पितामही ॥ ५५ ॥
यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः ।
तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमस्तु स्वयमेवाऽऽसीत् न तु कर्मादिना हेतुना ताभ्यां जनितो वा यतोऽसौ हरिः ॥ ५५ ॥

तदेवोपपादयति—यदेति त्रिभिः ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो वसुदेवाद्रोचनायां हस्तहेमाङ्गदादयो जाताः इलायान्तु उरुवल्कादीन् यदुमुख्यान् यादवश्रेष्ठान् सुतानजीजनत् । वसुदेव इति शेषः ॥ ४९ ॥

देवकीप्रमुखा आसन् पत्न्य इत्यनेनोक्ताभ्यः अन्या अपि पत्न्यः आनकदुन्दुभेरासन्निति सूचितम् । देवकीप्रसेनयोः अन्तर्वसुदेव उपदेवे इति चोक्तम् पुरस्तात्, इदानीं तास्तत्पुत्रांश्चाह—त्रिपृष्ठ इत्यादिना । आनकदुन्दुभेर्वसुदेवस्य धृतदेवायां भार्यायां त्रिपृष्ठ एक एव जज्ञे श्रमप्रतिश्रुतादयस्तु शान्तिदेवाया आत्मजाः ॥ ५० ॥

कल्पवर्षादिविषयान्ते राजानस्तु दश उपदेवायाः सुताः वसुहंसश्च सुवन्याद्याः सुतौ श्रीदेवायाः, सुतास्तु षट् देवरक्षितया वसुदेवस्य भार्यया गदादयो नव सुता लब्धाः प्रसूता इत्यर्थः । वसुदेवः सहदेवया भार्यया साधनभूतया अष्टौ सुतान् पौरवः श्रुतश्च मुख्यो येषां तानादधे अजीजनत् धर्मो यथा साक्षाद्वसूनष्टावादधे तद्वत् देवक्यामपि वसुदेवोऽष्टौ कीर्तिमदादीन् पुत्रान् अजीजनत् ॥ ५१ ॥ ५२ ॥ ५३ ॥

महीश्वरं नागेन्द्रमिति संकर्षणविशेषणम्, उदारधीरिति वसुदेवविशेषणम् एवञ्चैते कीर्तिमदादयः सप्त ॥ ५४ ॥

अष्टमं सुतमाह—अष्टमस्तु इति । तयोर्वसुदेवदेवक्योरष्टमः सुतस्तु स्वयं हरिरेव श्रीकृष्णरूपेणाऽऽसीत् अवततार तथा सुभद्रा नामैका कन्या तयोर्जज्ञे सा च महाभागा महाभागवताग्रणीः हे राजन् ! तव पितामही पितामहस्यार्जुनस्य भार्या ॥ ५५ ॥

अष्टमस्तु सुतो हरिरेवासीदित्युक्तम्. तत्र कोऽसौ हरेरवतारकालः किं तस्य जन्मनिमित्तम् ? किञ्चाऽस्य जन्मप्रयोजनम् ? इत्यादि प्रश्नान् परिहरन् संप्रेक्ष्य तत्परिहारमाह—यदेत्यादिना यावत्समाप्ति यदा हि यस्मिन् काले हि धर्मस्य क्षयः पाप्मनोऽधर्मस्याऽभ्युत्थानमित्यर्थः । भवति तदा तु तस्मिन् काले तु भगवानीशो हरिरात्मानं सृजते अवतारयति तदा हीत्यादिना यदाहीत्यन्तेन अवतारकाल उक्तः । हरिरित्यनेन आश्रितार्तिहरत्वमुक्तं तदेवावतारस्य मुख्यप्रयोजनमिति सूचितं भगवानात्मानं सृजत इत्यनेनावतारदशायामपि षाड्गुण्यपूर्तिरुक्ता ईश इत्यनेनाकर्मवश्यत्वरूपं स्वातन्त्र्यमुक्तम् ॥ ५६ ॥

(१) त्रिपृष्ठः इति विज० वीर० । (२) सुवन्याद्याः इति विज० वीर० ।

न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ! ।
आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥
यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ।
अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥
अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ।
भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥
कर्माण्यपरिमेयानि मनसाऽपि सुरेश्वरैः ।
सह सङ्कर्षणश्चक्रे भगवान् मधुसूदनः ॥ ६० ॥
कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।
अनुग्रहाय भक्तानां (१)सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अष्टमस्त्विति। हरति आकर्षति वशीकरोति सर्वमिति हरिः पूर्णो भगवान् स एव स्वयमासीत् नत्वाविर्भावान्तरेण किन्त्विति "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति प्रसिद्धं निर्दिशतीति ॥ ५५ ॥

तत्र भगवदवतारमात्रस्य सामान्यतः कारणमाह–यदेति। श्रीगीतासु चैवं'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत'इत्यादि॥५६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स्वयमेव न त्वंशेन ॥ ५५ ॥

तत्र,भगवदवतारमात्रस्य सामान्यतः कारणमाह–यदेति ॥५६॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तयोः देवकीवसुदेवयोः पुत्रः स्वयं हरिः आसीत् सुभद्रा कन्या च तयोरासीत् इयं पुराणान्तरे कथाऽस्ति काचिद्देवकन्या मुनिशापाद्रोहिण्यां जाता पुनर्निःशापा सती भगवल्लीलानुभवार्थं श्रीदेवक्यां जातेति हरिवंशेऽपि "चित्रां नाम कुमारीं च रोहिणीतनया दशा" इति रोहिण्याः पुत्रान् कन्यां चोक्त्वा चित्रा सुभद्रेति पुनर्विख्याता हे कुरुनन्दन ! वसुदेवाच्च देवक्यां जज्ञे इत्युक्तम् ॥ ५५ ॥

आविर्भावप्रयोजनमाह—यदेति। सृजते आविष्करोति ॥ ५६ ॥

भाषा टीका।

और रोचना के विषे वसुदेवजी से हस्त हेमाङ्गद, से आदि लेकर पुत्र हुए, और इला के विषे, यदुलोगों में मुख्य ऐसे वल्कलादिकों को उत्पन्न किये ॥ ४९ ॥

धृतदेवा के विषे आनकदुन्दुभि (वसुदेव) के एक विपृष्ठ उत्पन्न भया! हे राजन्! शान्तिदेव के पुत्र श्रम, प्रतिश्रुतादिक हुए ॥ ५० ॥

उपदेव के पुत्र कल्प, वर्ष, आदिक दश राजा हुए, और श्रीदेवा के वसुहंस सुवंश आदिक छे पुत्र हुए ॥५१॥

देवरक्षिता के गदादिक नौ पुत्र हुए और वसुदेवजी ने पुरु विश्रुत, प्रभृति आठ पुत्रों को सहदेवा नामक पत्नी में उत्पन्न किये, धर्म ने साक्षात् वसु लोगों को जैसे उत्पन्न किये ॥५२॥५३॥

कीर्तिमान सुषेण, उदार बुद्धिवाले भद्रसेन, ऋजु, सम्मर्दन, भद्र, और साक्षात् महीश्वर शेष जी श्री संकर्षण, ये छः पुत्र हुए ॥ ५४ ॥

और आठमें गर्भ में तो स्वयं साक्षात् श्रीहरि ही होते हुए, हे राजन्! और एक कन्या बड़ी भाग्यवती तुमारी पितामही (दादी) उत्पन्न भई ॥ ५५ ॥

इस लोक में जिस २ समय में धर्म का क्षय और पाप की वृद्धि होती है, उसी २ समय भगवान् ईश श्रीहरि अवतार को धारण करते हैं ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ईशस्य मायानियन्तुः परस्याऽसङ्गस्य द्रष्टुः साक्षिणः आत्मनः सर्वगस्य न ह्येवम्भूतस्य मायाविनोदं विना जन्मनः कर्मणो वा हेतुः सम्भवतीत्यर्थः ॥ ५७ ॥

किञ्च यस्य मायाचेष्टितं पुंसो जीवस्याऽनुग्रहस्तस्य जीवाऽनुग्राहकस्य कुतः कर्मादिपारतन्त्र्येण जन्मादिसम्भवः? अनुग्रहमेवाऽऽह—हि यस्मात्तदेव स्थित्यादयं इष्यते प्रलये लीनोपाधेर्जीवस्य धर्माद्यसम्भवादुपाधिसृष्ट्यादिना धर्मादिसम्पादनेनानुग्रहः तथाऽऽत्मलाभाय मोक्षाय चेष्यते तत्र हेतुः तेनैव भूयगायेन तस्य निमित्तस्य निवृत्तेः ॥ ५८ ॥

(१) सुपुण्यम् इति वीर०।

यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ।
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥
भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ।
श्लाघनीयेहितः शश्वत्कुरुसृञ्जयपाण्डुभिः ॥ ६३ ॥
(१)स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ।
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य चेष्टितं भूमेरनुग्रह इत्याह—अक्षौहिणीनामिति द्वाभ्याम् । अभाराय भारपरिहाराय ॥ ५९ ॥

सुरेश्वरैरपि मनसाप्यपरिमेयानि अवितर्क्याणि सङ्कर्षणसहितश्चक्रे ॥ ६० ॥

सङ्कल्पमात्रेण भूभारहरणसमर्थस्यापि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह—कलाविति द्वाभ्याम् । दुःखशोकतमांसि नुदतीति तथा तद्यशो व्यतनोत् ॥ ६१ ॥

यस्मिन् सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवाञ्जलिः पानसाधनं यस्य स पुरुषः सकृदप्युपस्पृश्याऽऽचमनमात्रं कृत्वा तत्सौन्दर्याकृष्टचित्तः कर्मवासनां धुनुते ॥ ६२ ॥

तदेवाऽऽह—द्वाभ्याम् । भोजादिभिः श्लाघनीयमीहितं यस्य ॥ ६३ ॥

सर्वैरङ्गै रम्यया मूर्त्या च ॥ ६४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव व्यनक्ति—महीति । अस्य भगवतः जन्मनः कर्मणः देवमनुष्यादिसजातीयचेष्टाया वा आत्ममायां विना स्वसङ्कल्पं विना अन्यो हेतुः पुण्यापुण्यादिरूपो न विद्यते हे महीपते ! अनेन जन्मकारणं स्वसङ्कल्प एव, न तु जीवस्येव पुण्यापुण्यादिकमित्युक्तम् . अत्र हेतुं वदन् विशिनष्टि—ईशस्य प्रकृतिपुरुषयोर्नियन्तुः ननु भृत्यादीन्नियमयन्नपि राजादिः कर्मवश्य एव दृष्ट इत्यतो विशिनष्टि, द्रष्टुरिति. पुण्यापुण्यादिकर्तॄन् क्षेत्रज्ञान् पश्यत एव न तु पुण्यापुण्यादिकं कुर्वत इत्यर्थः । तत्कर्तुर्हि तद्वश्यतेति भावः । कथम् एकः सर्वान् क्षेत्रज्ञान् पश्यति? इत्यतो विशिनष्टि परस्यात्मनः इति परमात्मन इत्यर्थः । चिदचिदात्मकं लोकत्रयमप्यन्तःप्रविश्य व्याप्य तद्गतैर्धर्मैरस्पृष्टस्सन् योऽन्तरात्मतया बिभर्ति स परमात्मा, तथा गीतं भगवता "परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति. अस्यामत्राधारकत्वेन चिदचिद्वस्तुनोः कर्मानुगुणं प्रेरणम् ॥ ५७ ॥

ननु, अवतारदशायां देवमनुष्यादिसजातीयचेष्टां कुर्वन्नप्ययं केवलं द्रष्टैव न तु कर्तेति कथमुच्यते? इत्यत आह—यन्मायेति । यस्य भगवतो माया चेष्टितं स्वसङ्कल्पैकहेतुकं चेष्टितं तत्पुंसो जीवस्य सर्गाद्यर्थमेव कांश्चिदुत्पादयितुं कांश्चित्पातुं कांश्चित् संहर्तुमेव, न तु स्वस्य पुण्यापुण्यफलादिरूपार्थमिति भावः । अन्ययो लयः, तर्हि किं जीवसर्गाद्यर्थेन मायाचेष्टितेन प्रयोजनम्? प्रत्युतान्यानर्थकारिणा चेष्टितेन स्वस्याप्यनर्थमापद्येतेत्यत्राह, अनुग्रह इति. माया चेष्टितरूपो व्यापारोऽनुग्रहः अनुग्रहरूप एव, जीवाननुग्रहीतुमेव चेष्टत इति यावत्. चेष्टितस्यानुग्रहरूपतामेव दर्शयति—तन्निवृत्तेरात्मलाभाय चेष्यत इति. स च मायाचेष्टितरूपो व्यापारस्तन्निवृत्तेः सर्गादिनिवृत्तेः पश्चात् आत्मलाभाय मोक्षाय चाऽवधारणार्थः आत्मलाभायेवेष्यते रामकृष्णादिरूपेणावतीर्णेन भगवता ये स्पृष्टाः पालिताः संहृताश्च ते सर्वे तद्दिव्यमङ्गलविग्रहसम्बन्धसहशय्यासनभोजनसन्दर्शनादिभिर्देहावसाने मुक्ता भवेयुरित्येवमर्थमेव भगवान् चेष्टत इत्यर्थः । यद्वा, तच्चेष्टितमनुग्रहरूप एव निवृत्तेरात्मलाभाय निवृत्तिधर्मपूर्वकात्मलाभायैव इष्यते सृष्ट्यादिसमर्थं मामवलोक्य मत्प्राप्तिसाधनं निवृत्तिधर्मं मद्भक्तिरूपमनुष्ठाय मुच्येरन् इत्येवमर्थं चेष्टत इत्यर्थः ॥ ५८ ॥

अवतारप्रयोजनं हरिशब्देन सूचितं व्यनक्ति—अक्षौहिणीनामिति । नृपाणामिव लाञ्छनानि येषां तैर्नृपवद्भासमानैः इत्यर्थः असुरैरासुरसंपत्त्या जातैरनेकाक्षौहिणीसंख्यानां सेनानां पतिभिश्चैद्यादिभिराक्रम्यमाणाया भुवः पृथ्व्याः अभाराय भाराभावायोद्यमः अवताररूपः कृतः येन स भुवो भारापहरणायावतीर्ण इति भावः ॥ ५९ ॥

तथैव चाकरोदित्याह—कर्माणीति । सुरेश्वरैः ब्रह्मादिभिरपि मनसाऽप्यपरिमेयानि अवितर्क्याणि कर्माणि सङ्कर्षणसहितो भगवान् मधुसूदनः श्रीकृष्णश्चक्रे पूतनाशकटयमलार्जुनकेशिकुवलयापीडचाणूरमुष्टिकतोसलकंसचैद्यादिसंहाररूपाणि कर्माणीति भावः ॥ ६० ॥

प्रधानं प्रयोजनं दर्शयति—कलाविति । कलौ युगे जनिष्यमाणानां भक्तानामनुग्रहाय तेषां दुःखादिकं नुदत्यपनयतीति तदिति तत्सुपुण्यं वदतां शृण्वतां च पुण्यावहं यशो व्यतनोत् भूभारहरणस्य संकल्पमात्रेणापि सिद्धेरिदमेवावतारस्य मुख्यं प्रयोजनमिति भावः ॥ ६१ ॥

यशोवितानस्य भक्तानुग्रहरूपतां दर्शयितुं यशो विशिनष्टि—यस्मिन्निति । सतां साधूनां कर्णयोः श्रोत्रयोः पीयूषे अमृततुल्ये यस्मिन् यशोरूपे तीर्थश्रेष्ठे श्रोत्रमेवाञ्जलिः पानसाधनं यस्य सः पुरुषः सकृदप्युपस्पृश्याचम्य कर्मवासनाः धुनुते

(१) स्निग्धस्मितेक्षणोदारैर्वाक्यैर्विभ्रमलीलया ॥ इति वीर० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्सौन्दर्यादिगुणाकृष्टचित्तः कर्मवासनाः क्षपयति मुक्तो भवतीत्यर्थः ॥ ६२ ॥

तदेवाह, द्वाभ्याम्—भोजादिभिः कुर्वादिभिश्च श्लाघनीयमीहितं चेष्टितं यस्य सः स्निग्धैः सानुरागैर्हासितैः सस्मितैः अवलोकनैः धीरैर्गम्भीरैः वाक्यैर्वचोभिश्च विक्रमलीलया विक्रमः पादविक्षेपः तद्रूपया लीलया च सर्वाङ्गरम्यया मूर्त्या च नृलोकं रमयामास ॥ ६३—६४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, यदि श्रीनारायणो जीववज्जन्मकर्माणि भजते तर्हि संसारनिवृत्तये तत्सेवा व्यर्थेति तत्राह—नहीति । विषमो दृष्टान्तः, तथा हि; जीवस्य जन्मादिकारणे पुण्यपापे कारणं विधिबद्धत्वात् सदानिरवद्यस्येश्वरस्य न हि ते स्तः । न हि कार्यमकारणमिति न्यायात् कारणं वक्तव्यं चेत् लोकानुग्रहादुःखात्मेच्छैवेति ब्रूमः । अनुग्रहाख्यकारणस्यापि धर्मपाप्मनोः स्वयमुक्तिदर्शनमित्युक्तम्, अतस्तत्सेवा न व्यर्थेत्यर्थः । हरेरविधिबद्धत्वेऽपि जन्मादिदर्शनात् अतर्कितत्वेन पुण्यादिलेपित्वेन दुःखित्वं स्यादिति । तत्राह—ईशस्येति । ईशस्य कश्चिच्च न दुःखित्वं स्यादिति तन्निवारणसमर्थत्वादन्यस्य तदभावात् जीव एव ईशः किं न स्यात् ? इति तत्राह; परस्येति । ननु, किं तद्वैलक्षण्यम् ? येनेशादन्यो जीवः स्यादिति तत्राह—द्रष्टुरिति । "यः सर्वज्ञः सर्ववित्" इति श्रुतेः । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इत्यादेश्च सार्वज्ञ्यं जीवाद्भिन्नत्वेन मुख्यं लक्षणं सार्वज्ञ्यं स्वाभाविकं न तु नैमित्तिकमित्याशयेनाह—आत्मन इति । एवंविधः क इत्यतो वाह—आत्मन इति । "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति यादवः ॥ ५७ ॥

ननु, जीवव्यावर्तकं लक्षणं अमत्कर्तृत्वादिकं तत्प्रकृतेरतः सार्वज्ञ्यमात्रेण कथमीश्वरो जीवाद्व्यावर्त्यः ? विशेषणस्य "सर्वज्ञाखिलपुराणकर्ताब्जभवः" इत्यादावन्यविषयत्वेन व्यभिचारित्वादुक्तदोषाऽनिस्तार इत्यत्राह—यन्मायेत्यादि । यस्येश्वरस्याधीनायाः मायायाः प्रकृतेश्चेष्टितं परिमाणलक्षणं पुंस इत्युपलक्षणम् प्रपञ्चस्य स्थित्युत्पत्तिसंहाराय भवति स्थित्यादिहेतुर्भवतीत्यर्थः । तदेकविषयत्वद्योतनाय चतुर्थीयम् एकवद्भावादेकवचनं "प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः" इति स्मृतिं हिशब्देन दर्शयति । यदनुग्रहः प्रकृतिचेष्टायाः निवृत्ते हेतुः निवृत्तिश्चात्मलाभाय सच्चिदानन्दस्वरूपाविर्भावाय "बलमानन्द ओजश्च" इत्यादिश्रुत्येष्यते निरूप्यते हरेः प्रपञ्चनिर्माणादिकं तत्तत्पदार्थविशेषज्ञानं विना न युज्यते तद्भवादपोहितुं न पार्यते प्रामाणिकत्वादतो निरुपमचरितं सार्वज्ञ्यं हरेरेवाऽन्यस्यौपचारिकमित्यतो जीवव्यावृत्तिलक्षणसङ्ग्रहादुक्तेति भावः ॥ ५८ ॥

ननु, कीदृशोऽनुग्रहो येन तन्निवृत्तिः स्यादिति तत्राह—मनीषिणामिति । भुवां भारायमाणानां असुराणामभावाय नाशाय ॥ ५९ ॥

अपरिमेयानि परिमातुमशक्यानि ॥ ६० ॥

यशोलक्षणं पराक्रमं दुःखशोकतमांसि नुदतीति दुःखशोकतमोनुत् ॥ ६१ ॥

तत्फलमाह—यस्मिन्निति । सत्कर्मपीयूषे प्रशस्तजनकर्णामृते यशस्तीर्थवरे यशोलक्षणाख्यपावनजलश्रेष्ठे श्रोत्रं एवाञ्जलिपर्यन्तं न तथा उपस्पृश्य स्नानपानाचमनानि कृत्वा स्वपकर्मवासनाः पापकर्मकरणश्रद्धालक्षणाः ॥ ६२ ॥

श्लाघनीयं हितं पूज्यमानचरितः ॥ ६३ ॥

स्निग्धस्मितेक्षितोदारैर्मनोहरैः विक्रमलीलया विक्रमविलासेन सर्वाङ्गसुन्दरया मूर्त्या च नृलोकं मनुष्यजनं "नृ नये" इति धातोर्नयति भक्तिपूर्वकं तत्त्वं जानातीति नृलोको ज्ञानिसमूहस्तमिति वा ॥ ६४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्स्वस्य जन्मकर्मणोर्हेतुः प्राचीनकर्मैव स्यात् तस्य च हेतुर्माया श्रीभगवतस्तु किं स्यात् ? इत्याशङ्क्याह—न ह्यस्येति । "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति न्यायेनात्माऽभिन्नत्वेन सम्मतेषु साधुषु या माया कृपा तां विना तत्र हेतवः ईशस्येत्यादयः ॥ ५७ ॥

कृपामेव कैमुत्येन दर्शयति—स्थित्याद्यर्थं यन्मायायाः प्रकृतेः चेष्टितं मीक्षणरूपं तदपि जीवेष्वनुग्रह एव पर्यवस्यते बुद्धीन्द्रियादिसम्पादनात् अत एवाऽनुग्रहस्तस्य स्थित्यादेर्निवृत्तेर्हेतोः जीवानामात्मनो भगवतो लाभाय चेष्यते किमुत धर्मादेः तथा च वक्ष्यते "बुद्धीन्द्रियमनःप्राणान्" इत्यादि ॥ ५८ ॥

सम्प्रति स्वभक्तजनाश्रयत्वरूपायां परमभक्तायां पृथिव्यां परिव्यक्तयैव कृपयैव स्वयमवतारेत्याह—मनीषिणामिति युग्मकेन ॥ ५९—६० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, जीवस्य जन्मकर्मणोर्हेतुः प्राचीनं कर्मैव स्यात् तस्य च हेतुर्माया, श्रीभगवतस्तु किं स्यात् ? इत्यत आह—न ह्यस्येति । आत्मनः स्वस्य आत्मसु जीवेषु वा मायां कृपां विना दम्भश्लोके अनुग्रह इति मायार्थविवरणात् "माया दम्भे कृपायां च" इति विश्वप्रकाशात् मायाशब्देनात्र कृपैवोक्ता कृपाया फलमभिव्यञ्जयति—ईशस्य जन्मकर्मभ्यां दर्शिताभ्यां सर्वजीवोद्धारसमर्थस्येत्यर्थः । सामर्थ्ये हेतुः परस्य सर्वोत्कृष्टस्य कृपायां हेतुः आत्मनो जीवान् द्रष्टुः संसारदुःखाब्धौ पतितान् विलोकयितुः ॥ ५७ ॥

कृपाया एव हेतुत्वं कैमुत्येन दर्शयति—यावेति । पुंसः प्रकृतीक्षणकर्तुः मायायां यच्चेष्टितमीक्षणादिकं कर्म जीवानां स्थित्याद्यर्थं हि निश्चितं तदपि अनुग्रहः अनुग्रहादेव हेतोः किमुत मायागन्धमपि रहितं गोवर्धनधारणादि चेष्टितमिति भावः । बुद्धीन्द्रियादिकं प्राप्य जीवा विषयभोगादिकं प्राप्नुवन्त्विति या कृपा तत एव मायायां चेष्टितमित्यर्थः । ननु, विषयभोगादिहेतुभ्यः स्थित्यादिभ्यः पुनः संसारदुःखमेव स्यादिति कोऽयमनुग्रहस्तत्राह-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तन्निवृत्तेस्तेषां स्थित्यादीनां भक्तिज्ञानवैराग्यैर्निवृत्तेरात्मनो भगवतो यो लाभस्तदर्थं चेष्यते बुद्धीन्द्रियादिकं विना भक्तिज्ञानाद्यपि न सिद्ध्येदिति जीवमात्रेषु कृपैव हेतुरित्यर्थः । यदुक्तं "बुद्धीन्द्रियमनः प्राणान् जनानामसृजत् प्रभुः । मात्रार्थं च भवार्थं च आत्मने कल्पनाय च" इति ॥ ५८ ॥

श्रीकृष्णस्य तु जन्मकर्मणोर्हेतुः स्वप्रेमैव पृथिव्यां पृथिवीस्थजनेषु साधकसिद्धभक्तेष्वपि कृपैव दृश्यत इत्याह--अक्षौहिणीनामिति सप्तभिः । भुवो भारहरणात् असुराणामपि वधेन संसारहरणात् कृपोक्ता ॥ ५९—६० ॥

भुवि स्थितेषु कृपामुक्त्वा भुविस्थास्यत्स्वपि कृपामाह--कलाविति । तमोऽविद्या ॥ ६१ ॥

ननु, सुपुण्यैरित्युक्त्वा यशः श्रवणं जनकमवगम्यते तत्र नैवमित्याह--यस्मिन्निति । सद्भिः कर्णापेयपीयूषमये यशोरूपे तीर्थवरे श्रोत्रमेवाञ्जलिः पानसाधनं यस्य स उपस्पृश्य आचमनमात्रं कृत्वा किं पुनरापीय सकृदेकवारमपि किम्पुनर्बहुशः कर्मवासनामविद्यां यस्य परोक्षवर्तिनोऽपि यत् किञ्चिद्यशः श्रवणमात्रेणैव संसारं तरन्तीत्यर्थः ॥ ६२ ॥

तत्समकालमवस्थेनापरोक्षवर्तिनस्तल्लीलापरिकरास्त्वगण्यमहिमानः परममान्या एवेत्याह--भोजेत्यादि ॥ ६३ ॥

ये तु तस्याऽतिप्रेमविषयीभूता नेत्राञ्जलिभ्यां तद्रूपमाधुर्यपानासक्ताः भोजादीनपि सफलयन्ति ते स्वतिधन्या इत्याह, स्निग्धं स्मितं यत्र तथाभूतं यदीक्षितमवलोकनं तेनोदारैर्मनोवाञ्छापूरकैः कदाचित्क्रिकमलस्य समधुरवचनविन्यासस्य वीररसव्यञ्जकस्य विक्रीडितस्य वा लीलया नृलोकं मनुष्यजातिं स्वप्रियजनसमूहम् ॥ ६४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, धर्मत्राणाय पापनिराकरणाय वास्य प्रादुर्भावस्तर्हि अस्यापि जन्मकर्मणोर्हेतुरुपादेयत्वेन धर्मफलं पुण्यानुष्ठानतो निराकरणीयत्वेन पापफलं चास्तीत्यत्राह--नहीति । हे महीपते ! ईदृशस्य चेतनाचेतननियन्तुः परस्य पूर्णानन्दस्य प्रभुः सर्वसाक्षिणः आत्मनः सर्वात्मनोऽन्तर्यामिणो हरेः देवक्यां जातस्य आत्मसु जीवेषु या माया "माया दम्भे कृपायां च" इति कोशात् तां विना जीवानुग्रहं विनेत्यर्थः । अन्यो हेतुर्जन्मनः कर्मणो वा नास्तीत्यन्वयः ॥ ५७ ॥

ननु, "ममैवांशो जीवलोके जीवभूतः सनातनः । क्षेत्रज्ञं चापि मां विद्धि" इति भगवद्वचनात् जीवस्य भगवदात्मकत्वेन कृतार्थत्वात् उक्तानुग्रहस्य किं प्रयोजनमित्यत्र अनादिमायावश्यस्य सृष्टिसंहारप्रवाहपतितस्य भगवत्पराङ्मुखस्य जीवस्य सृष्टिसंहारनिवृत्तये भगवत्प्राप्तये च तदनुग्रह इष्यत इत्याह--यन्मायेति । "देवात्मशक्तिं स्वगुणैर्निगूढाम्" "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययापहृतज्ञाना आसुरं भावमाश्रिताः । मम माया दुरत्यया" इत्यादिश्रुतिस्मृतिप्रसिद्धायाः यस्य मायायाः जीवविमोहिन्याः चेष्टितं पुंसो जीवस्य स्थित्युत्पत्त्यप्ययाय भवति तस्य अनुग्रहः स्थित्यादेर्निवृत्तये आत्मलाभाय परमात्मप्राप्तये च इष्यते इत्यन्वयः ॥ ५८ ॥

तस्य जीवानुग्रहार्थं भगवतः प्रादुर्भावादिकमित्याह--अक्षौहिणीनामित्यादिभिस्सप्तभिः । अमाराय भारनिराकरणाय उद्यमः प्रादुर्भावः ॥ ५९ ॥

सुराणामीश्वरैर्ब्रह्मशिवादिभिरपि मनसाऽपि श्रीप्रद्युम्नबलदेवाभ्यां करणोनाऽपि अपरिमेयाणि परिमातुमनर्हाणि ॥ ६० ॥

दुःखानि आध्यात्मिकादीनि शोकं मरणादिभयं अतः अमा-अज्ञानं नुदतीति तथा ॥ ६१ ॥

कीदृशं यशो वितनोदित्याह--यस्मिन् सतां साधूनां कर्णपीयूषे यशस्तीर्थवरे यश एव तीर्थवरं तस्मिन् श्रोत्रमेवाञ्जलिः पानपात्रं यस्य स पुरुषः सकृदपि उपस्पृश्य आचमनमात्रं कृत्वा एकवारं किञ्चिदप्याश्राय तत्परायणः सन् कर्मवासनां धुनुते ॥ ६२ ॥

भोजादिभिः श्लाघनीयमीहितं यस्य सः वसुः सामान्यतः सर्वैः श्लाघनीयेहितः भोजादिभिः सह नृलोकं रमयामासेत्युत्तरेणान्वयः ॥ ६३ ॥

विविधक्रमं लीलया च सर्वाङ्गैः रम्यया मूर्त्या च नृलोकं रमयामास ॥ ६४ ॥

———

भाषा टीका ।

हे महीपते ! इन श्रीहरि के जन्म और कर्म का कारण आपको इच्छा के बिना और कुछ भी नहीं है, क्योंकि ? आप नियंता हैं पर हैं द्रष्टा हैं और आत्मा है इसी से आपके जन्म कर्म सिद्ध हैं ॥ ५७ ॥

जिन श्रीहरी की माया का चेष्टित ही इस पुरुष ( जीव ) के करण कलेवरादि प्रदान द्वारा उत्पत्ति स्थिति नाश का हेतु है, अर्थात् संसार में जन्म लेना, स्थित रहना और मरना इसका कारण है । और जिनका अनुग्रह ही इस सांसारिक जन्मादि निवृत्ति का और मोक्ष प्राप्ति का कारण है ॥ ५८ ॥

नृप चिन्ह धारण करने वाले अक्षौहिणियों के पति असुरों से भूमि देवी को आक्रांत देखकर इसी के भार हरने के लिये आप प्रभुने उद्यम किया ॥ ५९ ॥

बड़े २ सुरेश्वरों के मन में और विचार में भी न आ सकें ऐसे अपरिमेय कर्मों को भगवान् श्रीमधुसूदन बलदेवजी के सहित करते हुए ॥ ६० ॥

और कलियुग के विषै उत्पन्न होने वाले भक्तों के अनुग्रहार्थ उनके दुःख, शोक, और अज्ञान को नाश करने वाले ऐसे पुण्य यश को विस्तार करते हुए ॥ ६१ ॥

महात्माजनों के कर्णों को अमृत रूप, ऐसे जिनके यश रूप तीर्थ सरोवर में पुरुष श्रोत्र रूप अंजुलि से एक बार आचमन करके अर्थात् कर्णों से एकबार ही आपके चरितामृत को उनके कर्मों की वासनाओं को छोड़देता है ॥ ६२ ॥

यस्याऽऽननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम्।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥
जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून् सुतशतानि कृतोरुदारः।
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥
पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणामन्तःसमुत्थकलिना युधि भूपचम्वः।
दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात् स्वधाम ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्याम् अष्टादशसहस्रिकायां संहितायाम्
वैयासिक्यां नवमस्कन्धे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशानुकीर्तनं नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥
समाप्तश्चाऽयं नवमः स्कन्धः ॥ ९ ॥
॥ श्रीकृष्णार्पणमस्तु ॥

भाषा टीका।

भोज, वृष्णि, अंधक, मधु, शूरसेन, दशार्ह, ये सब लोग जिनकी सदाश्लाघा करते, और कुरु, सृंजय, पांडुलोग अर्थात् इनके वंश सदा जिनकी लीलाओं को गाते रहे ॥ ६३ ॥

उन श्रीकृष्ण की स्नेह युक्त मंदमुसक्यान पूर्वक चितवन से, और उदार वचनों से तथा अतिमानुष लोकोत्तर पराक्रमों से और दिव्यरस मयी लीलाओं से, तथा सर्वांग सुंदर परमरमणीय अपनी श्रीमूर्त्ति से इस मनुष्य लोक को रमाते हुए ॥ ६४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्प्रदर्शनार्थं मुखशोभामाह—यस्याऽऽननं दृशिभिर्नेत्रैः पिबन्त्यो नार्यो नराश्च न ततृपुर्न तृप्ताः निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिताश्च बभूवुः, कथम्भूतमाननम्? मकरकुण्डलाभ्यां चारू कर्णौ भ्राजन्तौ कपोलौ च तैः सुभगम् सविलासो हासो यस्मिन् नित्यम् उत्सवो यस्मिन् ॥ ६५ ॥

श्रीकृष्णस्य चरितं समासतो वर्णयति—जात इति द्वाभ्याम्। जातो निजेन रूपेण पश्चात्पुरुषो मनुष्याकारस्सन् व्रजं गतः व्रजवासिनमेधिता अर्था येन तेषु दारेषु सुतानां शतान्युत्पाद्य आत्मनिगमं स्वकीयं वेदमार्गम् ॥ ६६ ॥

अन्तः समुत्थेन कलिना निमित्तेन गुरुभारं क्षपयन् दृष्ट्यैव भूपचमूर्विधूय विजये अर्जुनेन जितमित्येवमुद्घोषं कृत्वा परं तत्त्वमुद्धवायोपदिश्य स्वधाम सम्यक् स्वेनैव रूपेण जगामेति ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥
समाप्तश्चायं नवमः स्कन्धः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मूर्तेः सर्वाङ्गरम्यत्वं सूचयितुं दृष्टान्तपुरःकन्यायेन तावन्मुखशोभामाह—यस्येति। यस्य श्रीकृष्णस्याननं दृशिभिर्नेत्रैः पिबन्त्यो ऽतितृष्णया पश्यन्त्यो मुदिता नार्यो नराश्च न ततृपुः न तृप्ताः निमेषोन्मेषमात्रव्यवधानमप्यसहमानाः निमेषोन्मेषकर्तुर्निमेः कुपिताश्च बभूवुः इक्ष्वाकुतनयस्य निमेः [illegible] तच्चरित्रं प्रोक्तं पुरस्तात्, कथंभूतमाननम्? मकरकुण्डलाभ्यां चारू कर्णौ कपोलौ च तैः सुभगं सविलासो हासो यस्मिन् नित्यमुत्सवशोभातिशयो यस्मिन् ॥ ६५ ॥

श्रीकृष्णचरितं समासतो वर्णयति—जात इति द्वाभ्याम्। जातस्तावन्निजेन रूपेण जातः पुरुषः पश्चान्मनुष्याकारस्सन् पितृगृहात् कारागृहाद्व्रजं गतः व्रजवासिनामेधिता वर्धिता अर्थाः पुरुषार्थाः येन, रिपून् पूतनाशकटादीन् हत्वा कृताः पाणिना गृहीता उरवः षोडशसहस्रसङ्ख्याकाः; अष्टौ च रुक्मिण्यादयः दाराः कलत्राणि यस्य सः तेषु दारेषु सुतानां शतान्युत्पाद्यात्मनिगममात्मनो नियोगरूपं वेदं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जनेषु प्रथयन् प्रथयितुमिति भावः । क्रतुभिः सर्वैः स्वात्मानमेव समीजे समाराधितवान् ॥ ६६ ॥

स एवं भगवान् कुरूणामन्तः परस्परं समुत्थेन कलिना कलहेन निमित्तेन पृथ्व्या उरु अधिकं भरं क्षपयन् युधि संग्रामे भूपानां चक्रं सैन्यं दृष्ट्यैवाभिभूय विजयेऽर्जुने जयमुद्घोष्य सर्वान् जितो ऽयमर्ज्जुन इत्येवंविधमुद्घोषं कारयित्वा परं तत्त्वमुद्धवाय प्रोच्योपदिश्य स्वं धाम स्थानं वैकुण्ठाख्यमगात् तेनैव रूपेण ययावित्यर्थः ॥ ६७ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवात्स्यवीरराघवार्यविदुषा कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥
श्रीमते रामानुजाय नमः ॥
समाप्तश्चायं नवमस्कन्धः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रतिकरणप्रकारं दर्शयति-यस्येति । मकराकारकुण्डलाभ्यां चारू कर्णौ ताभ्यां भ्राजत्कपोलाभ्यां सुभगं सुन्दरं विलासेन सहितो हासो यस्य स तथा तं नित्यम् उत्सवो यस्य स तथा तं तत्स्वरूपानन्दजनकमित्यर्थः । न ततृपुः नालम्बुद्धिमापन्नाः निमेःपर्वनिमेषस्येति षष्ठी द्वितीयार्थे निमेषं प्रति कुपिताः दर्शनाविरोधित्वात् ॥ ६५ ॥

तेषु दारेषु आत्मनिगमम् आत्मज्ञानं स्वगुणप्रतिपादकवेदलक्षणशास्त्रं वा प्रथयन् प्रख्यापयन् ॥ ६६ ॥

स कृष्णः स्वधाम स्वमूलरूपं समगात् स गतवानित्यभिप्रायः । "पूर्णमदः पूर्णमिदम्" इत्याद्युपनिषद्भ्यः इत्यनेन सूचयति, पृथ्व्याः गुरुभरमसुरलक्षणं भूपचक्रं भूपसमूहलक्षणं चक्रं विधूय संहृत्य उद्घुष्य डिण्डिमघोषं कारयित्वा परं परमार्थज्ञानं प्रोच्य विस्तरेणोपदिश्य इति ॥ ६७ ॥

नानावर्णाक्षरवसुन्धरासुरमहावंशावलीमन्दिरम्—
व्याख्याव्याजविनोदतोऽत्र नवमस्कन्धो मयाऽऽर्चितः ॥
सर्वज्ञो विजयध्वजाय यतये मह्यं महाभूतिदो—
हारिहारमनोहरो हरिहरः प्रीतोऽस्तु विश्वम्भरः ॥ १ ॥
पदरत्नावलिर्भूयान्नवमस्कन्ध अर्पिता ।
तुलसीवद्धरेः पादद्वन्द्वे द्वन्द्वापहारिणी ॥ २ ॥

श्रीमदिन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थस्य कृतौ पदरत्नावल्यां श्रीमद्भागवतव्याख्यायां नवमस्कन्धे
चतुर्विंशोऽध्यायः ॥ २४ ॥
( विजयध्वजतीर्थपाठेन. एकविंशोऽध्यायः )
समाप्तश्चायं नवमस्कन्धः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ सर्वमेव युगपत्स्फुरितं तच्चरितमापाततो निजोत्कण्ठाकुलतया च समासेन वर्णयति—जात इति । पितृगृहात् श्रीवसुदेवभवनाज्जातः प्रादुर्भूतः तस्मादेव व्रजं गतः तद्वृत्तकथनानुरूपेण प्रोच्योच्यपरितुष्यन्नाह; एधितार्थ इति. ततश्च एधिताः पूर्वतोऽपि समेधिताः अर्थाः श्रीमन्नन्दादौ पितृत्वादिरूपा येन सः स्थापितश्च श्रीकृष्णसन्दर्भे दर्शयिष्यते च श्रीदशमस्य क्रमसन्दर्भे "पुत्रीभूते जनार्दने" "नन्दस्त्वात्मज उत्पन्ने" "नन्दः किमकरोद्ब्रह्मन्" इत्यादौ । ननु, क्रतुषु तास्ता देवता एवेज्यन्ते कथमात्मानमीज इति तत्राह-पुरुष इति । पूर्षु देवतादिदेहेषु शेते अन्तर्याम्यंशेन निश्चलं तिष्ठतीति स तथा तत्रैव पर्यवसानादिति भावः । ननु, तेन वा कियान् लाभः स्यात् तस्य परमपूर्णस्य तत्राह-आत्मनिगममिति । तत्तल्लक्षणेनैव तत्तदेव मुख्यं प्रयोजनमिति भावः । शाब्दत्वेनाव्यवहितत्वेनचार्थनिगमे सति किमर्थमध्याहारव्यवधाने सह्ये तत्रैव सह्ये यदि विरुद्धे अपि न स्यातामिति तस्मात् पुरुषशब्दोऽतिव्यवहितो गत इत्यत्र न योज्यः । उक्तं हि नराकृतेः परमत्वं "नचान्तर्न बहिर्यस्य न पूर्वं नापिचापरम्" इत्यादिभिः ॥ ६६ ॥

"अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम्" इत्येतत्पर्यवसानपरं प्रोच्य स्वधाम स्वस्वरूपं निजनित्यलोकं सम्यक् तत्तत्परिकरादिभिः साकमेवागादिति ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे नवमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्विंशोऽध्यायः ॥ २४ ॥
समाप्तश्चायं नवमस्कन्धः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेष्वपि व्रजवासिनस्तेष्वपि गोप्यस्तत्प्रियनर्मसखायश्च तन्माधुर्यपानप्रवराः परमधन्यतमा इत्याह-यस्येति । सर्वेष्वपि [illegible] मधुरमाननं तदाननमप्युर्ध्वाधोभागाभ्यां द्विधा विभक्तं [illegible] मर्थात. तत्रापि सर्वमहामाधुर्याणां चक्रवर्ती हासाऽमृत [illegible] राधरभागमध्ये निवसतीत्यधरभागं वर्णयति, म[illegible] चारु देदीप्यमानौ यौ कर्णौ ताभ्यां भ्राजन्तौ यौ कपो[illegible] सुभगं व्रजजनमनोहरं विलासैर्हर्षोत्सुक्यचापलादिभि[illegible] सहितो हासो यत्र तत् यद्वा मकरकुण्डलाभ्यां सकाशा[illegible] कर्णौ "भूषणभूषणाङ्गम्" इत्युक्तेस्तयोरपि शोभावर्[illegible] मकरकुण्डलाभ्यां ताभ्यां सकाशादपि भ्राजन्तौ [illegible] वर्तिचर्व्यमाणताम्बूलस्य पार्श्वस्थयोर्हासकुण्डलयो[illegible] ताम्बूलहेतुकदरोत्तुङ्गमवदेकतरत्वादतिस्वच्छत्वाद[illegible] अर्थात् मकरकुण्डलाभ्यां ताभ्यां सकाशादपि स[illegible] बिम्बाधरदशनसृक्कणीशोभानुरञ्जितत्वात् सर्वमाधु[illegible] वर्तित्वात् स्वज्योत्स्नाप्रवाहनिर्धापितमृ[illegible]सन्तापश्च [illegible] मक्तचेतश्चकोरार्तलोभनीयत्वात् युवतिजनकामाम[illegible] व्रजकृतयत्नाकुलजानिधानि गं[illegible]मकमहाप्रमादप्रवर्त[illegible]

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यस्यामृत यत्र तत् दृशिभिर्नेत्राञ्जलिभिः पिबन्त्योपि न तद्वपुः निमे-षोन्मेषयोरन्तरव्यवधानमक्षमसहमानास्ततत्कर्तुर्निमेः कुपिता वभूवु-रिति निमेषासहत्वेन रूढमहाभावलक्षणेनात्र स्त्रियो गोप्य एव नान्याः नराः कृष्णप्रियनर्मसखास्सुबलादयः नान्ये ज्ञेयाः गोपीः प्रियनर्मसखांश्च विनारूढमावस्यान्यत्रोदयसम्भवाभावात् यदुक्त-मुज्ज्वलनीलमणौ-

"मोदा प्रेमान्तिकां तत्रानुरागां तां समश्नुता।
रतिर्भावान्तिमां सीमां समयैव प्रपद्यते॥
रतिर्निमेषस्यानामनुरागान्तिमांस्थितिम्।
तेष्वेव सुबलादीनां भावान्तामेव गच्छति"

इति॥ ६५॥

अथ के ते जन्मकर्मणी इत्यपेक्षायां सर्वमेव युगपत्स्फुरितं तच्चरितमापाततो निजोत्कण्ठाकुण्ठनेच्छयाराजोत्कण्ठावर्द्धनेच्छया च समासेन वर्णयति-जात इति द्वाभ्याम्। पितुर्वसुदेवस्य गृहात् व्रजं गतः किमर्थम् एधितः प्रकटीकृत्य वर्धितः वृद्धिसीमां प्रापितोऽर्थः सर्वपुरुषार्थशिरोमणिः प्रेमा येन सः प्रेमप्रख्या-पनस्यैवावतारमुख्यप्रयोजनत्वात् प्रेम्णश्च व्रज एव वृद्धिसीमा-प्राप्तत्वाच्च रिपून् हत्वेति रिपुभ्यो मोक्षप्रदानमप्येकं प्रयोजन-मिति तेषु दारेषु सुतशतान्युत्पाद्यत्यादिना वर्णाश्रमधर्मस्थापनं च दर्शितं नराकृतिपरब्रह्मत्वात् पुरुषः आत्मानं समीजे इज्य-मानस्यान्यस्याभावात् किमर्थं समीजे तत्राह—आत्मनिगमम् आत्मानुगतं स्वकीयं वेदमार्गम्॥ ६६॥

भूभारहरणं प्रयोजनमाह-पृथ्व्या इति। भूपचम्वः भूपचमूः दृष्ट्यैव विधूय तत्प्रयोजनमाह, विजये अर्जुने जयम् उत्कर्षेण विघोष्य अर्जुनेन जितमिति जनेषु ख्यापयित्वेत्यर्थः। भक्तिज्ञान-वैराग्यप्रख्यापनमप्येकं प्रयोजनं तदाह—प्रोच्येति। स्वधाम द्वारकां समन्तात् सङ्गतः प्राप्तो बभूव प्रपञ्चगोचरतां परित्यज्येति भावः नारायणस्वरूपेण स्वधाम वैकुण्ठं चागात्॥ ६७॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
नवमस्य चतुर्विंशः सङ्गतः सङ्गतः सताम्॥ २४॥
मन्तुसिन्धौ निमज्जन्तमन्तः सन्तापसन्दितम्।
करुणादृष्टि वृष्ट्यैव सन्तः कर्षन्तु मां ततः।
वैशाखशुक्लपञ्चम्यां राधाकुण्डासरस्तटे।
नवमस्कन्धटीकेयमवाप परिपूर्णताम्॥
नवमस्कन्धीय टीक श्लोकाङ्का (९५०)
ओंनमो भगवते वासुदेवाय।
श्रीगोपालो विजयते॥
समाप्तोऽयं नवमस्कन्धः॥ ९॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यत् तनं दृशिभिः पिबन्त्यो नार्यो नराश्च पिबन्तः न तृप्यन्ति तल्लोकं रमयाद् इति पूर्वेणान्वयः, कथम्भूताः? दृक्-निमेषोन्मेषकर्तुर्निमेः तं प्रति कुपिताः दृक्निमेषोन्मेषव्यवधानमप्य-सहमाना इत्यर्थः। तद्दर्शनसुखेन मुदिताश्च कीदृशमाननं मकर-कुण्डलाभ्यां चारू कर्णौ भ्राजन्तौ कपोलौ च तैः सुभगं सविलासो हासो यस्मिन् नित्योत्सवो यस्मिंस्तत्॥ ६५॥

भगवच्चरितं सङ्क्षेपतो वर्णयति—जात इति, श्लोकद्वयेन। पुरुषः "पुरुषान्न परं किञ्चित्" इत्यादिश्रुतिवेद्यः परमेश्वरो जातः स्वेच्छया निजरूपेण वसुदेवगृहे आविर्बभूव तस्माद्व्रजं नन्दव्रजं गतः तत्र महतामेधिता अर्थाः पुरुषार्था येन सः रिपून् हत्वा कृतोद्धारः तेषु दारेषु पुत्रानुत्पाद्य आत्मनिगमं वेदमार्गं जनेषु प्रथयन् आत्मानमीजे॥ ६६॥

कुरूणां दुर्योधनभीमादीनामन्तःसमुत्थेन कलिना हेतुभूतेन पृथ्व्याः भरमेवं क्षपयन् युधि भूपचम्वः दृष्ट्या विधूय विजये अर्जुने जयं विघुष्य परं तत्त्वं पूर्वमर्जुनाय युद्धारम्भे उद्धवाय च स्वधामारोहणवेलायामुपादिश्य सम्यक्तेनैव रूपेण स्वधाम निजं लोकं जगाम॥ ६७॥

इति श्रीसनकसम्प्रदायप्रवर्तकाचार्य-
श्रीभगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते
श्रीमद्भागवतसिद्धान्तप्रदीपे नवमस्कन्धीये
चतुर्विंशाध्यायार्थप्रकाशः॥ २४॥
समाप्तोऽयं नवमस्कन्धः॥ ९॥

———

भाषा टीका।

पहिले जो कही कि—सर्वांग सुंदर मूर्त्ति से लोक को रमाते भये सो अब उस सर्वांग सौंदर्य के उपलक्षक (जानने वाली) आपके श्री मुखकी शोभा का कुछ वर्णन करते हैं। कैसा आप का आनन (मुख) है, कि—मकराकृत कुंडलों से शोभा वाले सुन्दर कर्ण और कुंडलों की झलकन से शोभायमान सुन्दर कपोल जिसमें, और बहुत ही सुन्दर सौभाग्य युक्त विलास पूर्वक मन्दहास जिसमें, और दर्शन करने वालों को नित्य उत्सव जिसमें, ऐसे सौन्दर्य, सौकुमार्य, माधुर्य, मंदहास विलासादि विशिष्ट श्री मुखारविन्द को नारी और नर नेत्रों से सदा पान करते हुए भी तृप्ति को नहीं प्राप्त होते हुए, और दर्शन करके बड़े मोद को प्राप्त होते। परंच जब बीच में दर्शन के विरोधी पलक माड़े आजाते तब तो निमि राजा पर बड़े कुपित होते और सदा ही चाहते, कि—पलक न लगें और सदा इस मुखको निरखते ही रहें॥ ६५॥

अब उस मुखकमल के ध्यान को शुकदेवजी ... में आने से, एक विषयक ज्ञान अपने दूसरे सम्बन्धिका स्मरण करा देता है। सो श्रीविग्रह के ध्यान से समग्र लीलाओं का स्मरण हो आया, इसी से संक्षेप से दो श्लोकों में श्री कृष्ण चरित्रों का वर्णन करते हैं। श्रीमथुरा में श्रीवसुदेव की पत्नी श्रीदेवकी देवी में अपने परत्व सूचक निज रूप से प्रकट होकर फिर अपने पिता के गृह से नन्द के व्रज को गये, और वहां जाकर व्रज वासियों के सब अर्थ बढ़ाय और अपने [आश्रितों के] शत्रुओं का नाश कर द्वारका में श्रीरुक्मिणी प्रभृति बहुत राजकन्याओं के साथ विवाह कर बहुत सी पत्नी बनाई। और उनके विषे सैकड़ों पुत्रों को उत्पादन कर, अपने वेदमार्ग को इस जगत में प्रख्यात करने

भाषा टीका ।

के लिये अखिलेश्वर होकर भी आप अपने आत्मा ही को यज्ञों से यजन करते हुए ॥ ६६ ॥

और पृथिवी के बडे भारी भार को उतारने के लिये कौरवन के विषे कलह रूप अग्नि को प्रकट करा कर युद्ध के विषे आये हुए राजा लोगों की सेनाओं को अपनी दृष्टि से विधूनन कर के अर्जुन की जीतका डङ्का बजवा कर उद्धव को अपने परम तत्त्व का उपदेश कर अपने परम पद नित्य निजधाम को पधारे ॥ ६७ ॥

नवमस्कन्धभाषार्थबोधिनी भक्तिपोषिणी ।
भाषाभागवताचार्यकृता भूयात् सतां मुदे ॥ १ ॥
इति श्रीमद्भागवत नवमस्कन्ध में चतुर्विंश अध्याय की,
द्रमवेदान्ताचार्य—श्रीमत्सुदर्शनाचार्यान्तेवासि-
श्रीबलरामस्वामिचरणाश्रित-
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त॥ २४ ॥
नवमस्कन्ध भी समाप्त भया, ॥ ९ ॥
श्रीरुक्मिणीरमणो जयति ।

इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तोऽयं नवमस्कन्धः ॥ ९ ॥

॥ हरि ओम् तत् सत् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

संशोधकोऽस्य ग्रन्थरत्नस्य काशीमण्डलान्तर्वर्ति 'कान्तूर' पं० श्रीरङ्गाचार्य—'श्रीवृन्दावनस्थ' पं० भागवताचार्यो ॥